श्रीमदानन्दवर्धनाचार्यप्रणीत

# ध्वन्यालोकः

लीला संस्कृत-हिन्दीव्याख्याद्वयोपेतः



आचार्य लोकमणि दाहालः

भारतीय विद्या प्रकाशन
दिल्ली-वाराणसी

श्रीमदानन्दवर्धनाचार्यप्रणीत्

# ध्वन्यालोकः

## लीला संस्कृत-हिन्दीव्याख्याद्वयोपेतः




## आचार्य लोकमणि दाहालः



भारतीय विधा प्रकाशन
दिल्ली-वाराणसी

श्रीमदानन्दवर्धनाचार्यप्रणीतः

# ध्वन्यालोकः

'लीला' संस्कृत-हिन्दीव्याख्याद्वयोपेतः

सम्पूर्णः

व्याख्याकारः
आचार्यलोकमणिदाहालः

भारतीय विद्या प्रकाशन
दिल्ली वाराणसी

## व्याख्यातृविषये किञ्चित्

### ध्वन्यालोकस्य प्रस्तुताया लीलाख्याया विवृत्याः प्रणेता

☆ दाहालोपनामा लोकमणिपदाभिधः,

☆ परमशैवः, सनातनधर्मावलम्बी
वत्सगोत्रीयो ब्राह्मणः,

☆ नोपालाभिजनो वृत्यर्थं काशीमाश्रितः,

☆ आचार्य, एम० ए०, बी० एड० प्रभृत्युपाधिविभूषितः,

☆ विष्णुमायागर्भोद्भवः परशुरामतनयः

☆ रसाङ्काङ्केन्दुमितवैक्रमवत्सरे वैशाख
शुक्लद्वितीयातिथौ, शुक्रवासरे भरणीनक्षत्रे
लब्धजन्मा,

☆ वाराणसीस्थे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयसम्बद्धे
श्रीनेपाली संस्कृतमहाविद्यालयाख्यप्रतिष्ठाने
वृत्त्यर्थमाधुनिकविषयकसहप्राध्यापकपदे कार्यरतः,

☆ प्राचीनराजशास्त्रार्थशास्त्रदर्शन–कसलाक्षी–साहित्यशास्त्रीयनिबन्ध–सूर्यमहिम्नस्तोत्र–
देवीमहिमस्तोत्र– शिवपञ्चमुखस्तोत्रप्रभृतिमौलिकग्रन्थप्रणेता,

☆ चम्पूरामायण–मध्यमव्यायोग–कुमारसम्भव–हरविजय–शृङ्गारसदन–शिवमहिमस्तोत्र–
प्रभृतिलक्ष्यग्रन्थेषु कृतविवृतिः।

☆ माध्यन्दिनीशाखान्तर्गतशुक्लयजुर्वेदाध्यायी।

☆ केदारनाथार्चनपरायणो लब्धतीर्थप्रसादप्रसादः।

# ''प्रस्तुतग्रन्थविषये किञ्चित्''

संस्कृतकाव्यजगत: शास्त्रीयपरम्परायां ध्वन्यालोकस्य मूर्धन्यं स्थानं निर्विवादमेव। काव्यसम्बन्धिमान्यतासु समन्वयोऽस्य वैशिष्ट्येष्वन्यतमं सर्वोत्कृष्टञ्च। काव्यानाट्ययो: सामञ्जस्यमप्यस्योल्लेखनीयं वैशिष्ट्यम्। ग्रन्थेऽस्मिंस्त्रयो भागा: कारिका-वृत्तिरुदाहरणानि तत्र लक्षणसंयोजनञ्च। अयं चतुर्षूद्द्योतेषु विभक्तो यत्र प्रथमे मूलतो व्यङ्ग्यदृष्ट्या ध्वनिप्रस्थापनं, द्वितीये ध्वनिभेदनिरूपणं, तृतीये व्यञ्जकदृष्ट्या ध्वनिनिरूपणं व्यङ्ग्यस्य गुणीभावविवेचनां, च, चतुर्थे व्यङ्ग्यसमाश्रयेण काव्यार्थानामानन्त्यनिरूपणं कविशिक्षा चेति।

अत्र कारिकाकारवृत्तिकृद्विषयमादाय विपश्चितो विवदन्ते। केचिदुभे एवानन्दवर्धनस्य कृती मन्यन्तेऽपरे तु कारिकाकारं वृत्तिकारात्पृथगेव मन्यन्ते किन्तु तत्कर्तुनाम तु नैव तेऽपि निर्देष्टुं प्रभवन्ति। वृत्तिकृत्तु राजानकानन्दवर्धनाचार्य एवेति निश्चेतुं शक्यते तस्यान्तर्बाह्यसाक्ष्यादेव आनन्दवर्धन' इति प्रथिताभिधान: इति वृत्त्युपसंहारे वृत्तिकारेणैवोक्तत्वात् 'आनन्दवर्धनविवेकविकासिकाव्यालोकार्थतत्त्वघटनादनुमेयसारम्' इति लोचनकारवचनाच्च। ग्रन्थोऽयं 'ध्वन्यालोक' इति वृत्तिनाम्नैव प्रसिद्ध:। अस्य कारिकाभावस्य तु काव्यालोक इति व्यपदेश: 'काव्यालोकलोचने' ति लोचनसमाप्तिवाक्यादन्यान्यप्रमाणाच्च।

ग्रन्थस्यास्य प्रधानत्वेन प्रपिपाद्यो विषयस्तु व्यङ्ग्यमेव न तु केवलो ध्वनि:। यथोक्तं वृत्तिकारेणैव रसादिरूपव्यङ्ग्यतात्पर्यमेवैषां युक्तमिति यत्नोऽस्माभिरारब्धो न ध्वनिप्रतिपादनमात्राभिनिवेशेनेति। व्यङ्ग्यस्य प्राधान्येन विवक्षायां ध्वनिर्भवति। स च वात्वलङ्काररसादिगतत्वेन त्रिविधोऽपि वस्तुतो रसादिरूप एक एव पूर्वयो: पश्चिमपरकत्वेनैवोपादेयत्वात्। तस्यैव वाच्यपरकत्वेन विवक्षायां गुणीभाव: व्यङ्ग्यस्य विवक्षायां काव्यस्य चित्रत्वमेव। वाच्यस्य तावदेवोपादेयत्वं यावत्तद्व्यङ्ग्यपरं भवति।

तदेतत्स्थितं ग्रन्थोऽयं काव्यालोको नाम ध्वन्यालोकोऽस्य वृत्तिभाग:' व्यङ्ग्यमस्य प्रतिपाद्यो विषय:। ग्रन्थेऽस्मिन् चन्द्रिकालोचने प्राचीने व्याख्ये। चन्द्रिकायां मूलरूपं तु नैवाधुनोपलभ्यते न च तत्कर्तुर्नाम ज्ञायते। 'चन्द्रिकाकारस्तु पठितमनुपठतीति न्यायेन गजनिमीलिकया व्याचचक्षे 'आधिकारिकत्वेन तु शान्तो रसो न निबद्धव्य:' इति चन्द्रिकाकार:' किं लोचनं विना लोको भाति चन्द्रिकयाऽपि हि 'इत्यादिलोचनकारवचनादेव तस्या अवस्थितिर्ज्ञायते। तथापि चन्द्रिकाकारो लब्धप्रतिष्ठ समालोचक आसीदिति तु 'इत्यलं पूर्ववश्यै: सह विवादेन' इति लोचनकारवचनाज्ज्ञायते। लोचनं तु सर्वविदितमेव श्रीमदभिनवगुप्तकृतित्वेन। तत्पश्चाद्वर्तिन: सर्वेऽपि व्याख्याकृतस्तमेवानुजीवन्ति। लोचनमनुप्रामाणिक व्याख्यारूपेण दीधितिष्टीका दृश्यते।

सा च ख्याता पण्डितप्रवरबदरीनाथशर्माणो मैथिलस्य कृतित्वेन। साऽपि लोचनमेव बहुधाऽनुसरति यत्र कुत्र तदाक्षिपति च। दीधित्यनन्तरं चण्डिकाप्रसादाभिधस्य बुध ावरस्य दीपशिखेति ध्वन्यालोकव्याख्या दृश्यते या सर्वतोभावेन दीधितिमेवानुधावति। एतदन्तरे चालोकदीपिकाख्या द्वितीयोद्द्योतव्यापिनी प्रतिपद व्याख्याऽपि दृश्यते श्रीमतीऽलक्ष्य देवस्य कृतिः। अत्र च रामसागरस्य तारावती' ध्वन्यालोकस्य विश्वकोश एव। सा चेत्संस्कृतमाश्रित्य निबद्धाऽभविष्यत्तदा सुवर्णे सुगन्ध एवाभविष्यत्। तथैवानन्ददीपिकाया विश्वेश्वराचार्यकृते।

प्रस्तुता लीलाख्या व्याख्या लोकमणिदाहालपदाभिधस्य विपश्चितः कृतिलोचनमनुसरन्त्यपि यथासम्भवं दीधितिबालप्रियादिव्याख्यौघमप्याहृत्यैव चलति। विषयस्य पूर्वापरसम्बन्धयोजनं लोचनमनुवृत्य प्रतिपदव्याख्यानं प्रतिप्रकरणं सारविवेचनं यथाप्रयोजनं व्याकरणादिनिरूपणं यथावश्यकं काव्याचार्याणां ध्वन्यालोकव्याख्यातृणाञ्च तुलनात्मकदृष्ट्या मतविमतसमालोचनं चेत्यादीन्यस्या वैशिष्ट्यानि। नितान्तसरलतया ध्वन्यालोकसदृशगहनतमग्रन्थस्य व्याख्यानमेवास्या सर्वातिशायिवैशिष्टयम्। आशास्यते यदियं सरला पूर्णा च विवृतिः पाठकानामत्यन्तोषकारिणी छात्रमित्रा च सिध्यतीति शम्।

श्री:

## प्रास्ताविकं किञ्चित्

नत्वा शब्दमयीं देवीं देवमर्थमयं मृडम्।
शब्दार्थबोध्यं तं वन्दे परमेशानमव्ययम्।। १।।
अपारे खलु संसारे कविरेको प्रजापति:।
यथाऽस्मै रोचते विश्वं तथेदं परिवर्तते।। २।।
तथापि कविशिक्षार्थं काव्यात् काव्यस्य लक्षणम्।
कविभिर्लक्षितं यत्तत्सारमुन्मीलयाम्यहम्।। ३।।
निर्दोषा लक्षणवती सरीतिर्गुणभूषिता।
सालङ्काररसानेकवृत्तिर्वाक्काव्यनामभाक्।। ४।।
ध्वनिरात्मा हि काव्यस्य शब्दार्थौ सहितौ वपु:।
रीतयश्चाङ्गसंस्थानं माधुर्याद्या गुणा यथा।। ५।।
अलङ्कारा: कुण्डलवद्रसाश्च द्रववस्तुवत्।
दोषा: काणत्ववद् वृत्तिर्गतिर्लक्षणमाकृति:।। ६।।
प्रसिद्धार्थातिरिक्तो यस्तदाक्षिप्त: प्रतीयते।
अभीष्टार्थ: कवे: सोऽयं ध्वनिर्लावण्यवत्स्त्रिया:।। ७।।
स ध्वनिर्वस्त्वलङ्काररसानामाश्रयात् पुन:।
तत्राद्यो यत्र काव्यादौ वस्तुना वस्तु व्यज्यते।। ८।।
विधेर्विधिनिषेधो वा निषेधात् स्वयं विधिश्च वा।
अलङ्कारध्वनिर्यत्रालङ्कारो ध्वन्यते परै:।। ९।।
तृतीयस्तु रसादि स्यादसंलक्ष्यक्रमो ध्वनि:।
शब्दाक्षिप्तोऽभिधा मूलो ह्यर्थाक्षिप्तश्च लाक्षण:।। १०।।
वाच्यार्थोऽभिधया बाच्यो लक्ष्यो लक्षणया पुन:।
व्यङ्ग्यो व्यञ्जनया सोऽसौ गूढत्वे हि ध्वनिर्मत:।। ११।।
उत्तमं जायते काव्यं वाच्याद् व्यङ्ग्येऽतिशायिनि।
वाच्यव्यङ्ग्यार्थयो: साम्ये कामं भवति मध्यमम्।। १२।।
निकृष्टं कथितं व्यङ्ग्याद् वाच्ये यत्र चमत्कृति:।
अव्यङ्ग्यं चित्रमेव स्यादयं च्छाब्दं वार्थमयं पुन:।। १३।।
स ध्वनिर्यत्र काव्यार्थो व्यङ्ग्यार्थे पर्यवस्यति।
समापनात्तु वाच्यार्थे गौणभावाय कल्पते।। १४।।

।प्राधान्ये गुणभावे वा प्राधान्यं हि चमत्कृते:।
अचमत्कारिवाक्यं तु व्यर्थ हि भित्तिचित्रवत्।। १५।।
तदेव ध्वनियोगेन काव्यत्वं लभते पुन:।
कीटोऽपि सुमन: संगादारोहति सतां शिर: ।। १६।।
रसादिर्वा रसे पर्यवसायी यो ध्वनिर्भवेत्।
स एवात्मा हि काव्यस्य तत्र सर्वे ह्यनुष्ठिता:।। १७।।
यथा हि नीरसं योज्य काव्यपोषाय नो भवेत्।
तथैव नीरसं वाक्यं काव्यपोषाय नैव हि।। १८।।
विग्रहं वस्तु काव्यस्य रसो ह्यात्मा गुणात्मक:।
अलङ्कारा ह्यवयवा त्रिभिर्वाक् काव्यनामभाक्।। १९।।
तेनात्यन्तरसादवस्तु विच्छेत्तव्यं कदाचन।
रसं वा न विरोदध्याद् वस्त्वलङ्कारलक्षणै:।। २०।।
उभौ तलौ हि सेयोज्यौ करतालस्य वादने।
रसालङ्कारवस्तूनि साधनं काव्यसाधने।। २१।।
वक्तारो बहवो लोके वाक्यानि विविधसानि च।
काव्यं तु जायते जातु कस्माचित्प्रतिभावत:।। २२।।
प्रतिभैव श्रुताभ्यासयुक्ता काव्ये हि कारणम्।
तदभावे कथं काव्यं क्षीरं नैव गलस्तनात्।। २३।।
प्रज्ञा नवनवोन्मदषशालिनी प्रतिभा मता।
श्रुतं हि काव्याध्ययनमभ्यास: पुनरुद्यम:।। २४।।
सारस्वतो हि व्यौत्पत्त: कविराभ्यासिकस्त्रिधा।
आद्यो हि कालिदासादिरपरे चरमे स्मृता:।। २५।।
शास्त्रेशब्दप्रधानत्वमितिहासे च निष्ठता।
काव्ये वर्णनचातुर्य प्रधाना व्यञ्जना यत:।। २६।।
लोके हि दुर्लभा विद्या कवित्वं तत्र दुर्लभम्।
तत्रापि काव्यनिर्माणं शक्तिस्तत्र सुदुर्लभा।। २७।।
वेदो लोकश्च शास्त्रस्य योनि: स्यात् कविकर्मण:।
काव्यस्य तु कवेर्दृप्तप्रतिभाक्लृप्तकल्पना।।२८।।
भाषा चतुर्विधा काव्ये कथापात्रानुसारत:।
संस्कृत प्राकृतञ्चैवापभ्रंशश्चैव देशजा।। २९।।
संस्कृतं देवयोनीनां त्रिविधं प्राकृतं नृणाम्।
सात्त्विको संस्कृतेऽभिष्टा कथा काव्ये तु राजसी।
संस्कृते प्राकृते चैव प्राकृतेष्वेव तामसी।। ३०।।

गद्यं पद्यं च मिश्रञ्च त्रिविधः काव्यविग्रहः।
वृत्तगन्धोज्झितं गद्यं पद्यं वृत्तेषु गुम्फितम्।
पद्यगद्यमयं मिश्रं काव्यं कविषु पुष्पितम्।। ३१।।
प्रबन्धो मुक्तकञ्चैव विमुक्तकमिति त्रिधा।
रचना वाक्यसङ्गतः प्रबन्धः पूर्णचित्रवान्।। ३२।।
तस्यैकैकं भवेदङ्गं मुक्तकं पूर्वसङ्गतः।
विमुक्तकं भवेत् काव्यं. पूर्वापरवियोगतः।। ३३।।
अपदः पदन्तानो गद्यं तत्स्यात् त्रिरूपकम्।
चूर्णकोत्कलिकावृत्तगन्धिभेदात् समासतः।। ३४।।
अल्पाल्पविग्रहं हृद्यं चूर्णकं मृदु भाषितम्।
भवेद् दीर्घसमासा योत्कलिकौजोगुणान्विता।
तयोश्च मध्यगं वृत्तक्लृप्तं स्याद् वृन्तगन्धिकम्।। ३५।।
कथास्वरूपतो गद्यकाव्यं भवति पञ्चधा।
आख्यायिका कथा खण्डकथा परिकथा तथा।। ३६।।
कथानिका च तत्राद्या पूर्णवृत्ता सचूर्णका।
रसरीत्यादयो दृप्ता या चोच्छ्वासैर्विभज्यते।। ३७।।
यत्र गद्येन वर्ण्यन्ते कविवंशप्रशंसना।
कन्याहरणसङ्ग्रामविप्रलम्भविपत्तयः।। ३८।।
पञ्चैव सन्धयो यत्र कथा स्यात् कविकल्पिता।
यथा कादम्बरी भट्टबाणस्य परिकल्पिता।। ३९।।
कथान्तराणांबाहुल्यमामुखं वृत्तवर्णितम्।
अविभक्तलम्बकैर्वा विभक्तं स्यात् कथाभिधम्।। ४०।।
गर्भं चतुष्पदी यद्वद् गुणाढ्यस्य बृहत्कथा।।
कथाख्यायिकयोर्मिश्रभावात्परिकथा भवेत।। ४१।।
सैव खण्डकथा यत्रामात्यादिर्नायको भवेत्
श्रोतृन्विधाय सोत्कण्ठान् या मध्ये विरमेत वा।
भयानकरसा क्लृप्ता गर्भे च करुणात्मिका।
अद्भुतान्ता सुक्लृप्तार्था ह्यखण्डा स्यात् कथानिका।। ४२।।
पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा।
वृत्तमक्षरसङ्ख्येयमपरं मात्रिकं विदुः।। ४३।।
महाकाव्यं कलापश्च पर्याबन्धो विशेषकम्।
कुलकं मुक्तकं कोष इति पद्यकुटुम्बकम्।। ४४।।

महाकाव्यं सर्गबद्धं पूर्णवृत्तं वृहत्कथम्।
पञ्चसन्ध्यन्वितं यत्र वर्ण्यते प्रकृतिः क्रमात्।। ४५।।
रीतिवृत्तिरसाः सर्वे प्राधान्यं वीरशान्तयोः।
अङ्गान्यन्ये यथायोगं तत्प्रणेता महाकविः।। ४६।।
महाकाव्यानि द्वित्राणि कुमारसम्भवं यथा।
किरातार्जुनसम्बद्धं शिशुपालवधं तथा।। ४७।।
द्वित्रा हि कवयस्तत्र कालिदासश्च भारविः।
माघो रत्नाकरो भट्टिः श्रीहर्षो विह्लणस्तथा।। ४८।।
कलापस्तु वियोगान्तः कैशिकीवृत्तिसंयुतः।
महाकाव्यस्यैकदेशी भीतिबीभ्त्सवर्जितः।। ४९।।
पर्याबबन्धो भवेत् सैव कथान्तरविभाजितः।
विशोषक प्राप्तियुक्तं संस्कृतेनेतरेण वा।। ५०।।
पद्यैरनेकैः कुलकंमेकैकेन च युक्तकम्।
विमुक्तकं तु यत्रैकश्लोकेऽन्वेति चमत्कृतिः।
सूक्तिसम्भावितः कोषो मिश्रणेन च मिश्रकम्।। ५१।।
यत्रैकः पूर्णवाक्यार्थमाधत्ते स हि मुक्तकम्।
द्विश्लोकैः यमकं सन्दानितकं त्रिभिरुच्यते।। ५२।।
चतुर्भिः कुलकं सर्वैः प्रबन्धोऽन्योन्यसङ्गतैः।
विमुक्तकमसङ्गैः स्यादितीत्थं काव्यविग्रहः।। ५३।।
श्रव्याभिनेये सङ्कीर्णमिति कावयं पुनस्त्रिधा।
श्रव्यं पाठ्यं ततो दृश्यमुभयोस्तु प्रकीर्णकम्।। ५४।।
दृश्यं हि द्विविधं तत्र रसभावात्पुनः पुनः।
रसाश्रयं तु नाट्यादि भावाश्रयमथेतरत्।। ५५।।
आद्यं दशविधं तच्च नाट्यं रूपकमेव च।
नटनान्नाट्यमित्युक्तं रूपयोगाच्च रूपकम्।। ५६।।
नाट्यं रसाश्रयं प्रोक्तं नृत्यं भावाश्रयं तथा।
प्रकीर्णमुभयोर्योगान्नृत्तं तूर्यलयाश्रितम्।। ५७।।
रूपकं दशधा भिन्नं वस्तुनेतृरसैः पुनः।
मुख्यं प्रासङ्गिकञ्चेति नाट्यवस्तु भवेद् द्विधा।
फलान्वितं भवेन्मुख्यमितरन्तत्सहायकम्।। ५८।।
तच्चैतिहासिकं वाऽथो वृत्तं स्यात् कविकल्पितम्।
उभयोर्मिश्रणान्मिश्रं प्रायेणैतत्प्रयुज्यते।। ५९।।
केवलं वस्तुमात्रेण तद्भवेदितिहासकः।
केवलं कल्पनावेशाद्भवेत् परिकथा पुनः।। ६०।।

तदैतिहासिके वृत्ते कल्पनासन्निवेशनात्।
काव्याङ्गं जायते वृत्ते चतुर्वर्गफलाय तत्।। ६१।।
तच्च दिव्यमदिव्यं वा दिव्यादिव्यमिति त्रिधा।
दिव्यादिव्यं पयं योगादादर्शव्यवहारयो:।। ६२।।
नेताऽधिकारी भवति फले स्वाम्याच्चतुर्विध:।
उदात्तोद्धतललितशान्ताख्यो धीरसंज्ञित:।। ६३।।
सदादर्शपरश्चाद्यो व्यवहारपरोऽपर:।
शृङ्गारी ललितो ज्ञेय: शान्तत्यक्तसुखस्पृह:।। ६४।।
धीरोदात्तो दाशरथि': शान्तो जीमूतवाहन:।
वत्सराजश्च ललितो दुष्यन्त उद्धत: स्मृत:।।
तथैव नायिकाभेदास्तत्सहायास्ततोऽवरा।। ६५।।
रसो दशविध: प्रोक्त: शृङ्गारादि: कथानके।
वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।। ६६।।
रसनाद्रस इत्याहुर्यो वा रसयति स्फुटम्।
रसवत्तैव काव्यस्य जीवितं न तु भाषितम्।। ६७।।
न नामतो रसो नाम रसकल्पनया न वा।
रसनादेव रसता रससंज्ञस्य सिध्यति।। ६८।।
रसमद्धि सदा काव्यं स्वद नाप्यवस्तुकम्।
उभाभ्यामेव काव्यत्वं काव्यं स्याद्रसवस्तुनो:।। ६९।।
न चातिरसत: क्वापि वस्तु विच्छिन्नता नयेत्।
रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणै:।। ७०।।
वस्तुनोऽनुभवात्सद्यश्चित्ते या विकृतिर्भवेत्।
सा चित्तवृत्तिर्विज्ञेया नानारूपा भवेद्धि सा।।
सैव काव्येषु भाव: स्यात् प्राधान्यात् ते दश स्मृता:।
चित्तं स्पृहयते विस्मयते शोचति शाम्यति।।
बिभेत्युत्सहते क्रुध्यत्यथो स्निह्यति हृष्यति।
पलायते च भजते विद्वेष्टि प्रीयतेऽथवा।
उदास्ते वाऽपि तेनैव भावा: सन्ति दशाधिका:।।७१,७३।।
रतिविस्मयशोकौ च शमो भीतिरथोत्सह:।
क्रोध: स्नेहश्च हासश्च जुगुप्सा भक्तिरेव च।।
ईर्ष्या वात्सल्यमित्येते भावा: प्राधान्यत: स्मृता:।
संलग्ने मनसि त्वेते ह्यसंलग्ने न किञ्चन।। ७४, ७५।।
भावो नितान्तसम्पुष्ट: स्वदते यद्रसो हि स:।
अधिरुह्य परां काष्ठां क्रोधो रौद्रात्मतां गत:।। ७६।।

रसावस्था भवेत् सा हि यत्र वृत्यन्तरास्थितिः।
अविरुद्धैविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयन्नन्यान् स स्थायी रसतामियात्।। ७७।।
निर्विकारं मनः स्वस्थं सत्त्वमित्युच्यते बुधैः।
तदेव विकृतिं प्राप्तं भावाद्भावं प्रयाति च।। ७८।।
भावस्योद्बोधने हेतुर्विभाव इति कथ्यते।
आलम्बनोद्दीपनाख्यौ तस्य भेदावुभै स्मृतौ।। ७९।।
आलम्बनो यमालम्ब्य भावस्योद्बोधनं भवेत्।
विभावास्ते रसादीनां विशेषेण विभावनात्
उद्दीपकास्त एव स्युर्भावमुद्ददीपयन्ति ये।। ८०।।
तदनन्तरकार्याणि अनुभावाः प्रकीर्तिताः।
भावोद्बोधनचिह्नानि आहार्यसात्त्विकानि च।। ८१।।
स्तम्भः स्वेदोऽथ रोमाञ्च स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलयोऽनुभावाः सात्त्विका मताः।
आहार्याणि त्वनेकानि चेष्टितानीङ्गितानि च।। ८२।।
रसोऽनुभूयते यैस्तेऽनुभावा भावबोधकाः।
विभावमनु सञ्जाता अनुभावास्तु ते स्मृताः।। ८३।।
भावा. सञ्चारिणो ये स्युः स्थायिनः सहचारिणः।
अम्बुधेरिव कल्लोलाः स्मृतास्ते व्यभिचारिणः।। ८४।।
एषामानन्त्यमेभिर्हि व्याप्तचित्तं तथापि ते।
त्रयस्त्रिंशद्धि सङ्ख्याताः प्राधान्येन विशेषतः।। ८५।।
भावोद्बोधानन्तरं ये भावा जाग्रति शेरते।
व्यभिचारपरत्वात्तेऽस्थायित्वाद् व्यभिचारिणः।। ८६।।
सैवावस्था हि काव्यादौ समृता भावस्थितिः पुनः।
अस्थायित्वे भवेद्भावः स्थायित्वे तु रसस्थितिः।। ८७।।
स्थायित्वमत्र विज्ञेयमितरापेक्षयैव हि।
रसास्वादनपर्यन्तं स्थायित्वात् स्थायिनो मताः।।
यथा समुद्रः सुस्वादु स्रोतोऽम्बु लवणायते।
तथा स्थायीतरान् भावानात्मसात् कुरुतेऽन्ततः।। ८८,८९।।
न विरुद्धैश्छिद्यतेऽसौ न च स्वीयैः प्रभाव्यते।
तिष्ठत्यात्मस्वाभावेनानुकूलीकृत्य तानपि।। ९०।।
स विभावानुभावाभ्यां बोधितः साधु पोषितः।
सञ्चारिभिः परां कोटीमुत्कृष्टामधिरोपितः।।

वृत्त्यन्तरमहाशून्यस्थितिकः स्थायिसञ्चरः।
रसतामेति भावोऽयं हृद्यत्वेन सचेतसाम्।। ९१,९२।।
भावान्तरविहीनं हि यत्र चेतोऽवतिष्ठते।
रसत्वं तद्रसानां तत्स्वदते करुणोऽपि च।। ९३।।
आत्मन्यारोप्य पात्राणि पात्रेष्वात्मानमेव च।
सर्व साधारणीकृत्य काव्याद्रसविभावनम्।। ९४।।
दुष्यन्तो युवसामान्यः सामान्या च य शकुन्तला।
सामान्यीकरणेनैव तत्प्रेम स्वदते परान्।। ९५।।
विभावेनानुभावेन भावितो व्यभिचारिभिः।
रसतामेति भावोऽयं भावनाद्भाव ईरितः।। ९६।।
नोत्पादका न गमका भोजका नैव व्यञ्जकाः।
विभावाद्या रसादीनां ते हि तेषां हि भावकाः।। ९७।।
प्रत्याययन्ति संयुक्ता भावयित्वा रसान् हि ते।
अतस्ते भावकाः प्रोक्ताः सन्नद्धाश्च परस्परम्।। ९८।।
न नटे नानुकार्ये च रसानां स्थितिसम्भवः।
ते तु सामाजिकेष्वेवानुकूल्यादुद्भवन्ति हि।। ९९।।
उद्भवस्त्विह चास्वादस्थितिः प्राग्वर्तिनामपि।
अनुकूलननियोगेनास्वादनाय हि जाग्रताम्।। १००।।
भावान्तरनिरोधेनैकमयत्वं हि चेतसः।
आस्वाद्यत्वं रसानां हि न तु भोजनचर्वणे।। १०१।
न चोत्पत्तिर्नानुमितिर्न भुक्तिर्नाभिव्यक्तिकः।
किन्तु सुप्तस्य भावस्य ह्यास्वाद्यत्वेन जागृतिः।। १०२।।
संयोगो हि विभावादेः संयुक्तबोधनक्रिया।
निष्पत्तिरत्रास्वाद्यत्वकरणं तस्य भावनाः।। १०३।।
व्यञ्जकत्वं विभावादे रसानां भावनं हि तत्।
रसतात्पर्यसिक्तस्यास्वाद्यो भवति नान्यथा।। १०४।।
व्यञ्जकत्वं मतं तेषां यतो वाचकबोधनात्।
न तथा स्वदते काव्यं यथा तात्पर्यबोधनात्।। १०५।।
रसतात्पर्यसिक्तस्य वचसः काव्यमिष्यते।
अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा।। १०६।।
भावत्वं तस्य भावस्य भावने रससम्पदः।
ते हि रत्यादयः प्रोक्ताः प्राधान्यात् त्रिदश स्मृताः।। १०७।।

आस्थाबन्धात्मिका यूनोरन्योन्यं सा रतिर्भवेत्।
हासश्चेतोविकासश्च वैधुर्यं शोक एव च।।
क्रोधस्तस्यैव तीक्ष्णत्वमुत्साहो वैक्लवं पुनः।
भयं सङ्कोचनं तस्य जुगुप्सा तस्य विस्तरात्।।
प्रहर्षणं विस्मयश्च सर्वतृष्णाक्षयः शमः।
स्नेहः क्लेदनमेतस्य ईर्ष्या काठिन्यमुच्यते।।
भक्तिः समर्पकत्वं च वात्सल्यं ग्रहणं हृदः।
एता अवस्थाः प्राधान्याद् गृह्यन्ते भावशब्दतः।। १०८-१११।।

रतेरेव परा काष्ठा शृङ्गारो रस उच्यते।
हासस्य हास्यः शोकस्य करुणो रस ईरितः।।
क्रोधस्य रौद्रो विज्ञेयो वीर उत्साहसम्पदः।
जुगुप्सायास्तु बीभत्सो भयस्य हि भयानकः।।
विस्मयस्याद्‌भुतो ज्ञेयः शान्तश्च शमसम्पदः।
प्रेयान् स्नेहस्य सम्पुष्टो वात्सल्यस्य च वत्सलः।।
भक्तेर्भक्तिरसो ज्ञेय ईर्ष्यायाश्चैव मत्सरः।
एते त्रयोदश ज्ञेयाः प्राधान्येन रसाभिधाः।। ११२-११५।।

रतिः समाने वयसि यूनोःस्त्रीसंपुंसयोः सदा।
समलिङ्गे भवेत् स्नेहोऽनुकूले समवृत्तिके।।
प्रतिकूले भवेदीर्ष्या क्रोधोत्साहौ न चेन्मतौ।
अधिके तु भवेद्भक्तिर्न्यूने वात्सल्यमेव च।।
अस्वाभाविकवेषादौ भवेद्धासो विकासकृत्।
दयनीये भवेच्छोकः उत्साहः प्रतिस्पर्द्धने।।
विकृतस्वरसंश्रावदर्शनाद्भय एव च।
अहृद्यदर्शनादिभ्यो जुगुप्सा जायते हृदि।।
लौकिकेतरवस्तूनां दर्शनाद्विस्मयो भवेत्।
संसारासारताज्ञानाद्वैराग्याच्छम एव च।।
स्वस्यावमाननात् क्रोधः इति भावास्त्रयोदश।
भावाभिनयसम्बद्धान् इति भावास्त्रयोदश।
भावाभिनयसम्बद्धान् भावयन्ति रसानिमे।। ११६-१२१।।

धृतिस्मृतिमतिव्रीडाविषादमदचापलाः।
निद्रौत्सुक्यावहित्थाश्च जाड्यव्याधिसुसुप्तयः।
शङ्कासूया तथालस्यहर्षगवौग्र्यबोधनम्।
ग्लानिदैन्यश्रमोन्मादमोहचिन्तावितर्कनम्।

त्रासापस्मारनिर्वेदावेगामर्षमृतिस्तथा।
त्रयस्त्रिंशदमी भावा रसानां व्यभिचारिणः॥
भावात्वसङ्ख्या हृदये प्राधान्याद् गणिता हि ते।
केचिदेकोनपञ्चाशद्भावान् गृह्णन्ति सङ्ख्यया॥१२२—२५॥

धृतिः सन्तोष इत्युक्तो ह्यतीतस्मरणं स्मृतिः।
(मतिस्तात्कालिकी मेधा प्रज्ञा भाव्यर्थदर्शिनी।)
स्याद् व्रीडा चित्तसङ्कोचो जाड्यमर्थाप्रतीतिकृत्॥
विषादस्तु मनःपीडा मदो मोहोऽविवेकजः।
भवेद् व्याधिर्मनस्तापो निद्रा सम्मीलनं हृदः॥
सुषुप्तिर्गाढनिद्रा स्याद् विनिद्रत्वं प्रबोधनम्।
कालाक्षमत्वमौत्सुक्यमुन्मादश्चित्तविक्लवः॥
अवहित्थाऽऽकारगुप्तिर्मोहो मूढत्वमेव च।
अनिष्टोत्प्रेक्षणा शङ्का निर्वेदः स्वावमाननम्॥
स्याच्चेतसोऽनवस्थानं चापलं भयहर्षजम्।
श्रमः खेदस्तथाऽऽलस्यं पुरुषार्थेष्वनादरः॥
हर्षश्चेतप्रसादश्च औग्र्यं स्याच्चण्डता पुनः।
परावज्ञा भवेद् गर्वो ग्लानिस्तु बलहीनता॥
अनौजस्यं भवेद्! दैन्य चिन्ता ध्यानं प्रियस्य वै।
अमर्षः प्रतिकारेच्छा त्रासश्चित्तचमत्कृतिः॥
आवेशः स्यादपस्कार आवेगः सम्भ्रमः पुनः।
सम्भावना वितर्कः स्यादसूया ह्यक्षमा मता॥
स्यान्मृतिर्मरणावस्था न साक्षान्मरणं पुनः।
भावस्य शान्तिरुदयः सन्धिः शबलता तथा।
स्थितिः प्रशम इत्येते धर्माः सञ्चारिणां मताः॥ १२५—३४॥
अनुकूला यस्य ये स्युस्तत्र तेषां निबन्धनम्।
प्रतिकूलसमो योगाद्रसहानिः प्रजायते॥ १३५॥
यामिनीवेन्दुना युक्ता नारीव रमणं विना।
लक्ष्मीरिव ऋते त्यागान्न वाणी भाति नीरसा॥ १३६॥
स्वादुपाकेऽप्यनास्वाद्यं भोज्यं निर्वपणं यथा।
तथैव नीरसं काव्यं काव्यस्यात्मा रसो यतः॥ १३७॥
रसापकर्षका दोषास्ते हेयाः काव्यसिद्धये।
रसोत्कर्षे कारणानि गुणालङ्काररीतयः॥ १३८॥
दोष स एव यो हन्ति काव्यस्य रमणीयता।
गुणः स एव येन स्यात्प्रवृत्ता रमणीयता॥ १३९॥

अलङ्कारस्त्वसौ यस्माद् वर्धते रमणीयता।
रीतिश्च सा यया स्थिरीक्रियते रमणीयता।। १४०।।
नहि जात्या गुण: कश्चिन्न दोषो नाप्यलङ्कृति:।
कार्यादेव हि जायन्ते ते तु काव्ये प्रतिष्ठिता:।। १४१।।
भवेच्छ्रुतिकटुर्दोष:शृङ्गारे वीररौद्रयो:।
स एव गुणतां याति तत्प्रकृत्यनुसारत:।। १४२।।
ओजो गुणोऽस्ति वीरादौ शृङ्गारे स हि दूषणम्।
अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।। १४३।।
दोषा: सामान्यतो हेया गुणा ग्राह्या विशेषत:।
प्रकृतानुपयोगी य: स दोषो ह्यन्यथा गुण:।। १४४।।
असाधुत्वाप्रयुक्तत्वे दोषावेतौ पदस्य हि।
भवेदस्पष्टतार्थत्वं वाक्यदोषोऽन्यथा गुण:।। १४५।।
अनर्थकं श्रुतिकटुर्व्याहतार्थमलक्षणम्।
स्वसङ्केतप्रक्लृप्तार्थमप्रसिद्धमलक्षणम्।
ग्राम्यञ्च दोष: सामान्याद् हेया इत्युच्यते बुधै:।। १४६।।
ओज: प्रसादो माधुर्यमित्येव गुणास्त्रय:।
रसोत्कर्षाधायकत्वं गुणस्य गुणता मता।। १४७।।
शृङ्गारादौ हि माधुर्यमोज: स्याद्वीररौद्रयो:।
सर्वत्रग: प्रसाद: स्यादिति सामान्यत: स्थिति:।। १४८।।
मनोद्रुतिर्हि माधुर्यं दीप्तिरोजो विकासनम्।
भवेत्प्रसाद: सर्वत्र ते रसापेक्षया स्थिता:।। १४९।।
खलकृतमपि प्रीत्यै न कावयं निर्गुणं भवेत्।
निर्गुणे विग्रहे स्त्रीणां हारो भारायते परम्।। १५०।।
शब्दालङ्काररहिता विरूपैव सरस्वती।
अर्थालङ्कारहीना तु विधवैव सरस्वती।। १५१।।
श्लेषवक्रोक्तियमकानुप्रासा शब्दगा इमे।
अर्थगास्तु ह्यसङ्ख्येया अलङ्कारा भवन्त्युत।। १५२।।
उपमामूलका: केचित् केचिदारोपमूलका:।
अध्यवसायमूलाश्च गम्यमानतया पुन:।।
सादृश्यमूलका: केचिद् भेदमूलास्तथैव च।
विशेषणादिवैचित्र्यमूलका केचिदेव हि।।
विरोधमूलका केचित् केचिच्च तर्कमूलका:।
न्यायमूलास्तथा केचित् वृत्तोपन्यासमूलका:।।
गूढार्थव्यक्तिमूलाश्च रससम्बन्धमूलका:।
एवं द्वादशधा ह्यर्थालङ्कारा हि मता बुधै:।। १५३–१६।।

काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।
ते चाद्यापि विकल्प्यन्ते कस्तान् कात्स्र्न्येन वक्ष्यति।। १५७।।
उपमा रूपकं जातिरावृत्तिर्दीपकं तथा।
आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना।।
अत्युक्तिर्हेतुरुत्प्रेक्षा व्याजस्तुतिनिदर्शने।
उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता।।
विरोधोऽप्रस्तुताशंसा पर्यायोक्तं समाहितम्।
सहोक्तिः परिवृत्याशीः सङ्कीर्णं भाविकं तथा।
प्रेयो रसवदूर्जस्वि ह्यलङ्काराः प्रधानतः।
शब्दार्थोभयगत्वाच्च तेषां त्रैविध्यमुच्यते।। १५८—९६१।।
पदसंङ्घटना रीतिश्चतुर्धा सा प्रकीर्तिता।
पाञ्चाली गौडदेशीयां वैदर्भी लाटजा तथा।। १६२।।
उपचारयुता मृद्वी पाञ्चाली ह्रस्वविग्रहा।
अनवस्थितसन्दर्भा गौडीया दीर्घविग्रहा।।
उपचारैर्न बहुभिरुपचारैर्विवर्जिता।
नातिकोमलसन्दर्भा वैदर्भी मुक्तविग्रहा।।
लाटीया स्फुटसन्दर्भा नातिविस्फुटविग्रहा।।
परित्यक्ताऽपि भूयोभिरुपचारैरुदाहृता।।१६३—१६५।।
क्रियास्वविषमा वृत्तिः सा चतुर्धैव सम्मता।
भारत्यारभटी चैव कैशिकी सात्त्वती तथा।।
भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः।
स्त्रीपात्रे प्राकृतोक्तिः स्याद्भरतेन समीरिता।
श्लक्ष्णनेपथ्यसंयुक्ता स्त्रीप्राया गीतमण्डिता।
कैशिकी सा हि मधुरा कोमला स्वल्पविग्रहा।
भवेदारभटी दीर्घविग्रहा परुषात्मिका।
सप्रसादा तयोर्मध्ये सात्त्वती मध्यविग्रहा।। १६६—६९।।
प्रवृत्तिर्वेषविन्यासक्रमो देशानुसारतः।
वृत्तिर्विलासविन्यासक्रमो देशानुसारतः।
रीतिर्वचनविन्यासक्रमो देशानुसारतः।
बहुत्वेऽपि हि देशानां चतस्रो मुख्यतो मताः।।१७०—७१।।
यस्य देशस्य यो जन्तुरानुकूल्येन तस्य वै।
प्रवृत्तिवृत्ती संयोज्ये व्यत्यये नैव सिद्धिदा।। १७२।।
लक्षणानि च षट्त्रिशंद् भूषणाद्या मता बुधैः।
तानि पात्रानुसारेण प्रयोज्यानि भवन्ति हि।। १७३।।

अन्वितिश्च भवेत् काव्ये देशकालक्रियात्मिका।
क्रिया प्रतिक्रिया चैव चरमश्चावरोहणम्।
उपसंहार इत्येता अवस्था वस्तुत: स्मृता:।। १७४।।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमा:।
अवस्था: पञ्च कार्यस्य वस्त्ववस्थात्मिका: स्मृता:।। १७५।।
बीजं विन्दु: पताका च प्रकरी कार्यमेव च।
अर्थप्रकृतय: पञ्च क्रमेणैता भवन्ति हि।। १७६।।
अर्थ प्रकृतय: पञ्च कार्यावस्थाऽन्वितिप्लुता:।
क्रमेण सन्धय: पञ्च कथावस्तुविभाजका:।। १७७।।
अवान्तरार्थविच्छेदे सन्धिरेकान्वये सति।
मुखं प्रतिमुखं गर्भो विमर्श उपसंहृति:।। १७८।।
मुखे बीजक्रियारम्भा: विन्दुयत्नप्रतिक्रिया:।
तथा प्रतिमुखे गर्भ: प्राप्त्याशाचरमात्मिक:।।
अवरोहश्च प्रकरी नियताप्तिर्विमर्शके।
चरमे उपसंहार: कार्यञ्चैव फलागम:।
सन्ध्यङ्गानि चतु:षष्ठि योजनीयानि यत्नत:।। १७९,८०।।
सन्धिसन्ध्यङ्गनिर्वाहो भवेद्वस्त्वनुरोधत:।
न केवलं शास्त्रमात्रनिर्वाहाय भवेदसौ।। १८१।।
तत्राप्यवस्था निर्वाह्या सदैवं वस्तुकार्ययो:।
तथैवान्वितियोगोऽपि परमावश्यक: सदा।। १८२।।
अनन्वितं कथावस्तु नैव काव्यत्वमर्हति।
अनवस्थं न काव्यार्हं काव्यत्वं हि सुवस्तुता।। १८३।।
वाक्यौचित्यं रसौचित्यालङ्कारौचित्य एव च।
रीत्यौचित्यं गुणैचित्यं पात्रौचित्यं वचोऽनुगम्।।
अवस्थादेशकालादिस्वभावौचित्यमेव च।
पदलिङ्गोपसर्गादिकरणौचित्यमेव च।
वृत्त्यौचित्यं क्रियौचित्यं प्रवृत्त्यौचित्यमेव च।
एतत्काव्यगतौचित्यं काव्ये योज्यं प्रयत्नत:।। १८४–१८६।।
वस्तुप्रसङ्गसम्बद्धं स्पष्टार्थं च क्रियानुगम्।
सिद्धं कवेरभिप्रायानुकूलं च पदं भवेत्।। १८७।।
यो यो यस्यानुकूल: स्यात्तस्य तत्र प्रयोजनम्।
औचित्यं जायते काव्येऽनौचित्यं काव्यहृद्रद:।। १८८।।
शब्दप्रधानं शास्त्रं स्यात् काव्येऽर्थस्य प्रधानता।
सोऽपि सिध्यति वक्रोक्त्या स्वभावोक्तिस्तु भाषितम्।। १८९।।

दृष्टपूर्वा अपि ह्यर्थाः काव्ये वक्रोक्तिसङ्गमात्।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः।। १९०।।
न स्वभावोक्तिमात्रेण जायते काव्यता गिराम्।
वक्त्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः।। १९१।।
काव्यासवो हि वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।। १९२।।
गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षतते।। १९३।।
स्वभावोक्तेर्न काव्यत्वं वक्त्रौचित्यं न चेद्यदि।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।। १९४।।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः।
इत्यादौ न स्वभावोक्तिर्वक्त्रौचित्यं तदेव हि।
स्वभावोक्तेः कथं काव्यं दैवरक्ता हि किंशुकाः।। १९५।।
पदवाक्यप्रकरणप्रबन्धादिषु वक्रता।
काव्येऽभीष्टा सुकाव्याय शास्त्रालोकावुपेयुषी।। १९६।।
न लोक एव विषयः शास्त्रमात्रं न वा कवेः।
मर्यादामुभयोः स्मृत्वा ते हि भङ्ग्यंतराद्वदेत्।। १९७।।
अर्थो नवीनतां याति भङ्ग्यन्तरसमाश्रयात्।
सुकविः सिद्धिमाप्नोति तेन वक्रोक्तिमाश्रयेत्।। १९८।।
काव्यस्य लक्ष्यमानन्दः कविपाठकयोः समः।
स वक्रोक्त्याश्रयेणैव स्वभावे का चमत्कृतिः।। १९९।।
कान्तं कामयमाना सा सन्निधावुपसर्पति।
इत्यत्र कश्चमत्कारो ज्ञायते यदि नेक्षणैः।। २००।।
सौशब्द्यञ्चैव सामर्थ्यं काव्यपूरुषाविग्रहः।
शब्दोभिधेयबाहुल्येऽपीष्टार्थद्योतनक्षमः।
सौशब्द्याय भवेत् सिद्धः क्रमवर्ती सुखश्रुतिः।। २०१।।
तस्यैवार्थस्य सावर्थ्यं यो हि स्वस्पन्दसुन्दरः।
प्रतीतियोग्यो वक्रोक्त्यचाऽक्लेशाद् गूढः प्रसङ्गगः।। २०२।।
अर्थप्रतीतये गीतः शब्द इत्यभिधीयते।
अर्थस्तु शब्दाभिप्रायो येन किञ्चिन्निवेद्यते।। २०३।।
क्रमागतः श्रुतिसुखः शब्दोऽर्थ्यो युज्यते सदा।
अतिशेते ह्यलङ्कारमन्यं व्यञ्जनचारुता।। २०४।।

शब्दस्य हि यदा वृत्त्या प्रपन्नार्थो विबुध्यते।
सा हि शब्दस्य शक्तिः स्यात् सा चतुर्धा प्रकाशिता।
अभिधा लक्षणा चैव तात्पर्याख्याऽथ व्यञ्जना।। २०५।।
तद्वच्छब्दो वाचकोऽथ मतो लाक्षणिकस्तथा।
तात्पर्याख्यो व्यञ्जकश्च शब्दो ज्ञेयश्चतुर्विधः।। २०६।।
एवं वाच्योऽथ लक्ष्यश्च तात्पर्यो व्यङ्ग्य एव च।
शब्दशक्तिप्रकाश्यत्वादर्थोऽपि स्याच्चतुर्विधः।। २०७।।
तत्रसङ्केतितं ह्यर्थं या बोधयतिसाऽभिधा।
शब्दश्च वाचकस्तत्र वाच्योऽर्थः 'परिकीर्तितः।। २०८।।
सङ्केतो हि भवेज्जातौ गुणद्रव्यक्रियासु च।
तत्र जातिर्निराकारा साकारो व्यक्तिरेव हि।
तेन व्यक्तौ न वै जातौ सङ्केतग्रह इष्यते।। २०९।।
तथापि व्यक्तेरानन्त्यात्तत्समष्टितया स्थिता।
जातिर्ग्राह्येति जातौ हि सङ्केतग्रह इष्यते।। २१०।।
जातिर्गौ हि गुणः शुक्लः द्रव्यं स्वर्णं क्रिया चलः।
तस्य व्याकरणात्कोषादुपमानाद्भवेद् ग्रहः।। २११।।
व्यवहारादाप्तवाक्याद्वाक्यशेषान्यसन्निधेः।
अर्थस्य हि तदाऽर्थत्वं यदा वाक्ये तदन्वयः।। २१२।।
वाक्ये प्रसङ्गाद्वाच्यार्थेऽभिधेयेऽनान्विते सति।
प्रयोजनेन रूढ्या वा याऽर्थो बोध्यते परः।
अभिधेयेन सम्बद्धः सा शक्तिर्लक्षण मता।। २१३।।
शब्दो हि यौगिको रूढो योगरूढस्तथैव च।
तथा यौगिकरूढश्च तथैवार्थोऽपि सम्मतः।। २१४।।
धातोः प्रत्यययोगेन धात्वर्थस्य निवाहकः।
शब्दो हि यौगिको नाम यौगिकोऽर्थश्च सम्भवः।। १२५।।
यः शब्दो बोधयत्यर्थं व्युत्पत्तेरनपेक्षया।
यथा प्रचलितं लोके भवेद्रूढसंज्ञक':।। २१६।।
योगरूढो यौगिकं च रूढं पक्षेण तिष्ठति।
तथा यौगिकरूढः स्याद्रूढ्या योगेन वा पुनः।। २१७।।
अव्यक्तयोगनिर्योगयोगाभासैस्त्रिधाऽऽदिमः।
शुद्धतन्मूलसम्भिन्नाप्रभेदैर्यौगिकास्त्रिधा।।२१८।।
यदा हि लक्षणा शक्ती रूढिमाश्रित्य तिष्ठति।
तदा वाच्यस्य सामीप्यात्सारूप्यात्समवायतः।
वैपरीत्यात् क्रियायोगात् पञ्चधा हि प्रवर्तते।। २१९।।

यदा प्रयोजनं धृत्वा लक्षणा सम्प्रवर्तते।
तदा वक्त्रीप्सितं ह्यर्थं सा बोधयति चाञ्जसा।। २२०।।
यया लाक्षणकेऽप्यर्थे काव्यार्थो न प्रतिष्ठितः।
तदा तात्पर्यमादाय तात्पर्याख्या प्रवर्तते।। २२१।।
तात्पर्यार्थस्य यत्किञ्चिद् गूढमन्यप्रयोजनम्।
यया निर्दिश्यत साऽसौ व्यञ्जना शक्तिरीरिता।
एकेषां हि ममते त्वित्थमन्ये तु व्यञ्जनैव सा।। २२२।।
साऽभिधालक्षणामूला द्विविधा व्यञ्जना मता।
पूर्वा शब्दी परार्था च तयोरन्यत्र विस्तरः।। २२३।।
एके चिदभिधामेव मन्यन्ते दीर्घवृत्तिकाम्।
तेन तेषां मते नैव लक्षणा नैव व्यञ्जना।। २२४।।
परे विरम्य व्यापाराभावं हि वृत्तिकर्मणाम्।
मत्त्वा समर्थयन्तीत्थं लक्षणां व्यञ्जनामपि।। २२५।।
वस्तुस्त्वेव शक्तेर्हि पुनर्व्यापारकल्पना।
बालक्रीडा कथं नु स्याद्विरम्य पुनरावृत्तिः।। २२६।।
सङ्केतितार्थाभावाद्धि तत्र वर्तेत नाभिधा।
हेतोरभावात् तत्रैव लक्षणा न प्रवर्तते।। २२७।।
विना वृत्तिञ्च शब्दार्थो न सिध्यति तथा पुनः।
न चावसानमर्थस्य व्यञ्जना तेन निश्चिता।। २२८।।
गङ्गायां घोष इत्यत्र घोषस्यासम्भवाज्जले।
मुख्यार्धबाधात्सामीप्यात्तटं दिशति लक्षणा।।
नैतावता विरमते काव्यार्थस्तत्प्रयोजनम्।।
शीतत्वं पावनत्वञ्च ह्यनिर्दिश्य सुगोपितम्।।
शीतत्वे घोषब्दस्यासङ्केतादभिधा कथम्।
तेन काव्यार्थसम्पूर्त्यै व्यञ्जनावश्यकी मता।। २२९–२३१।।
कथं नाम प्रवर्तेत लक्षणाऽप्यभिधां विना।
व्यञ्जनैव ध्वनेर्योनिः काव्यात्मत्वेन यो मतः।
व्यङ्ग्यव्यञ्जकभावेन तत्र शब्दार्थयोः स्थितिः।। २३२।।
न तत्र लक्षणा तस्याः स्थितिर्मुख्यार्थबाधने।
ध्वनौ तु स्वं च व्यङ्ग्यञ्च काशतो वाच्यवाच्यको।।
अभिधालक्षणामूला द्विविधा व्यञ्जना मता।
व्यञ्जना ह्यभिधामूला स्वाभीष्टार्थे नियन्त्रिते।
अनेकार्थस्य शब्दस्य संयोगेन वियोगतः।
साहचर्यविरोधाभ्यामर्थप्रकरणादिभिः।
लिङ्गेन देशकालाभ्यां स्वरेण स्वनियोगतः।। २३३–२३४।।

अविवक्षितवाच्योऽन्यपरत्वेन विवक्षितः।
वाच्य इत्येव द्वौ भेदौ ध्वनेः पुनरुदाहृतौ।। २३५।।
अविवक्षितवाच्यो हि लक्षणामूल ईरितः।
तत्र वाच्यं भवेद् द्वेधा लक्षणामूला ईरितः। .
तत्र वाच्यं भवेद् द्वेधा ध्वनिलक्ष्यप्रसिद्धये।
अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम्।। २३६।।
विवक्षितं चान्यपरं वाच्यं यत्र भवेत्तु सः।
ध्वनिः स्यादभिधामूलो लक्ष्यालक्ष्यक्रमात्मकः।। २३७।।
वाच्यव्यङ्ग्यार्थयोर्यत्र लयते द्योतनक्रमः।
स संलक्ष्यक्रमो ज्ञेयो वस्त्वपलङ्कारररूपकः।। २३८।।
तत्र स्याच्छब्दशक्त्युथश्चार्थशक्त्युत्थ एव च
शब्दार्थोभयशक्त्युत्थोः व्यंग्योऽनुरणनात्मकः।। २३९।।
क्रमो नो लक्ष्यते यत्र झगित्येवावभासनात्।
असंलक्ष्यक्रमो ज्ञेयो रसभावात्मको हि सः।। २४०।।
स्फुटीषत्स्फुटं वाथोऽस्फुटं व्यंम्यं भवेत् त्रिधा।
गूढमेवं भवेदीषदद्गूढं वा विवृतं पुनः।। २४१।।
स्फुटं गूढं च यद्व्यङ्ग्यं तदेव ध्वनिरुच्यते।
शेषं व्यङ्ग्यं गुणीभूतं भवेद् ध्वन्यवरं हि तत्।। २४२।।
वाच्यवाचकभावेन लक्ष्यलक्षकभावतः।
व्यङ्ग्यव्यञ्जकभावेन गतिः स्यादर्थशब्दयोः।। २४३।।
शब्दोऽर्थं यत्र चार्थोऽर्थ व्यङ्क्तः स्वार्थोपसर्जनात।
स एव ध्वनिरित्युक्तः काव्यञ्चोत्तमभेदवत्।। २४४।।
शास्त्रान्तरे प्रवेशाय सुकोलधियामपि।
येनैवोद्घाट्यते द्वारं काव्यं तच्च निरूपितम्।। २४५।।
अनेन प्रीयतां देवौ गिरिजाशङ्करौ सदा।
शब्दार्थमयकाव्यौ तौ शब्दार्थप्रतिपत्तये।। २४६।।
श्रीपर्शुरामपुत्रेण महामाहेश्वरेण वै।
सञ्चिता लोकमणिना द्विजेन काव्यपुष्पिका।। २४७।।
वरदचरणयोस्ते वाक्यपुष्पोहार—
मिति विचलितचित्तेनेदमासङ्गृहीतम्।

इतीत्थं वेदस्य सप्तमाङ्गत्वेन स्थितं विद्यासु पञ्चमीत्वेन मतं काव्यशास्त्रं कदा प्रभृति प्रवर्तितमिति तु नाद्यापि साधु ज्ञातम्। काव्यचार्येषु प्राचीनत्वेन काव्यमीमांसायां श्रीकण्ठः स्मृतः किन्तु तद्विषये तदतिरिक्तं न किमप्यधुना ज्ञातम् प्रजापतेर्नियोगादेव काव्यपुरुषोऽष्टादश प्रकरणीं साहित्यविद्यां तावद्भ्य एव शिष्येभ्यः प्रोवाच यत्र

कवि रहस्य-औक्तिक-रीति-वैनोदिक-रूपक-रस-दोषगुणशब्दार्थालङ्कारप्रभृति-विषया आसन्। तेषु सहस्राक्षः कविरहस्यं रूपकनिरूपणं भरतः रसाधिकारं नन्दिकेश्वरः औक्तिकमुक्तिगर्भः रीतिनिर्णयं सुवर्णनाभः दोषाधिकारं धिषणः, गुणौ पादानिकमुपमन्युः, आनुप्रासिकं प्रचेताः, यमकं यमः, चित्रं चित्राङ्गदः, शब्दश्लेषं, शेषः, वास्तवं पुलस्त्यः, औपम्यमौपकायनः, अतिशयं पराशरः,

अर्थश्लेषमुतथ्यः, उपमालङ्कारिकं कुबेरः औपनिषदिकं कुचुमारश्च समाम्नासिषुः पृथक्पृथक् स्वशास्त्राणि विरचयाञ्चक्रुरिति। किन्तु तेषु हि सम्प्रति भरतस्य नाट्यशास्त्रं विहाय न किञ्चिदपि समुपलभ्यते, नैवञ्च तद्विषयं यथार्थतः किञ्चिदपि ज्ञायते च। वात्स्यायनकामसूत्रप्रवर्तितरीत्यनुसारि राजशेखरवाक्यमिदं गतानुगतिकत्वातिरिक्तं न किमपि स्पष्टतः तद्विषये प्रकाशमापातयति। नन्दिकेश्वरो रसाधिकारिकं समाम्नासीदिति ग्रन्थान्तरेऽपि दृश्यते नाट्यशास्त्रेऽपि तत्स्मृतमस्ति। तेन नन्दिकेश्वरस्य भरतपूर्ववर्तित्वं तु सिध्यति किन्तु कियत्पूर्वमिति तु नैव स्पष्टम्। भरतस्यैव समयोऽपि नाज्ञातः सम्प्रत्यपि स्पष्टरूपेण। अग्निपुराणे हि—

'भरतेन प्रणीतत्वाद्भारती वृत्तिरुच्यते' (३४०। ६) इति कथनेन भरताचार्यः, इति कथनेन मेधावी रुद्रश्च स्मर्यन्ते। भामहश्च मेधाविनं स्मरति।

'हीनताऽसम्भवो लिङ्गवचोभेदौ विपर्ययः।
उपमानाधिकत्वञ्च तेनासदृशताऽपि च।
त एते उपमादोषाः सप्त मेधाविनोदिता।
सोदाहरणलक्ष्माणो वर्ण्यन्तेऽत्र च ते पृथक्।।' (२—२९—४०।।) इति।

यथासङ्ख्यमथोत्प्रेक्षामलङ्कारद्वयं विदुः।
सङ्ख्यानामिति मेधाविनोत्प्रेक्षाऽभिहिता क्वचित्।। (२। ८८) इत्युक्त्वा च

एतेन भामहात्पूर्वमेव नन्दिकेश्वरभरतमेधाविरुद्रप्रभृतय आसन्नित्येव सिध्यति, किन्तु भामहस्य समयोऽपि नैव सम्प्रत्यपि निश्चितः। केचिद्भामहं दण्डिनः पूर्ववर्तिनं मन्यन्तेऽपरे तु तदवरकालीनमपि। दण्डी च स्वयमवन्ती सुन्दरीकथायां बाणभट्टं मयूरञ्च स्मरति, बाणभट्टश्च श्रीहर्षस्य सभासद्, श्रीहर्षस्तु विक्रमानन्तरं सप्तमे शतके स्थित आसीदिति दण्डिनः पूर्वसीमा। तथैव वामनो हि दण्डिनमनुसरति वामनाश्च जयापीडस्य मन्त्री जयादित्यस्य स्थितिकालश्च ८३६-८७० मि वैक्रमाब्द आसीदितिं इति स एव समयो दण्डिनोऽवरसीमा। भामहदण्डिनोः पूर्वापरवर्तित्वसमस्या सर्वानिवास्मान् खेदयति आलङ्कारिकक्रमनिर्द्धारणाय। भामहो हि कालिदासादवरकालवर्त्तीति तस्य हि—

'अयुक्तिमद् यथा दूता जलभृन्मारुतेन्दवः।
तथा भ्रमरहारीतचक्रवाकशुकादयः।
अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः।
कथं दूत्यं प्रवर्तेरन्निति युक्त्या न युज्यते।
यदि चोत्कण्ठया यत्तदुन्मत्त इव भासते।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयुज्यते।।' (१४२—४४)

कथनाज्ज्ञायते इति केषाञ्चिन्मतम्। मतमिदं हि मेघदूतमवलम्ब्य प्रवर्तितं दृश्यते, तत्र 'इत्यौत्सुक्यशदपरिणयन्! गृह्यकस्तज ययाचे' इति कथनात्। किन्तु घटनमिदं काकतालीयमपि सम्भवति। यतो भामहस्येयमेव परम्परा दृश्यते यत्स स्वयमेव स्मरति तं नामत एवोद्धरति यथा रामशर्माणम्। तद्विपरीतं दण्डी बहुशो बहुभ्य आदायापि नामतो न कमपि स्मरति। यदि हि भामहेन तथा कथने कालिदास एव स्मृतः अभविष्यत् तदा हि स नामत एव 'सुमेधोभि':' इत्यस्य स्थाने 'कालिदासैः' इत्युक्तोऽभविष्यद्वाऽन्यथाऽपि। अपरञ्च यदि जलभृच्छब्देन मेघदूतं स्मर्यते यदा मरुतेन्दुभ्रमरहारीतचक्रवाकशुकादीनां दौत्यविषये किं कथ्यते ? यदि तथापि मन्यते तदा कालिदासेनापि कुतः इदं ज्ञातं मन्यते। वस्तुतस्तु मेघादीनां दूत्यपरम्परा नितान्तप्राचीना। ऋग्वेदे हि—

'असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्द्धमाना।

तां गूहत तमसाऽपव्रतेन यथाऽमी अन्यो, अन्ये न जानन्।।' (अप्रतिरथसूक्ते)

इत्युक्त्वा वायोश्चेतनधर्मित्वं स्वीकृतमस्ति। पारावतकाकादीनामपि दूत्यं प्रसिद्धमेव। 'उत्कण्ठया' इति पदमपि तथैव। उत्कण्ठित एव उन्मत्तो भवति। कालिदासपूर्ववर्तिभिः पाणिनि-व्याडि-वररुचि-पतञ्जलिभिरपि महाकाव्यं प्रणीतमिति प्रमाणशताज्ज्ञायते। सम्भवति तैरपि तथाऽचेनानां दूत्यं वर्णितं स्यात्। तेन नैतावन्मात्रेण भामहस्य कालिदासापरवर्तित्वं सिध्यति। यदि हि भामहः कालिदाससमज्ञास्यत्तदा तस्यैकोऽपि श्लोक उद्धृतः स्यद्यया रामशर्मणः कृतः। भामहो रामशर्मणः परवर्तीति निश्चितमेव किन्तु कोऽसौ रामशर्मा ? इत्यपि अनिश्चितमेव। कथ्यते हि रामशर्मा दण्डिनो मित्रमासीदिति किन्त्वेतदपि कपोलकल्पनैव। दण्डी अपि तं स्वपूर्ववर्तित्वेन स्मरति अवन्तिसुन्दरीकथायाम्। भामहोद्धणेन स हि कविः कृष्णसम्बद्धं काव्यं प्रणीतवानित्येव ज्ञायते। तदा हि स ख्यातयशस्कः कविरासीत्।

भामहस्य—

'विजिगीषुमुपन्यस्य वत्सेशं वृद्धदर्शनम्।'

इति पद्यमादाय तच्च भासस्य प्रतिज्ञायौगन्धरायणसम्बद्धं वा गुणाढ्यस्य बृहत्कथासम्बद्धं वृहत्कथामञ्जरीसम्बद्धं सा सोमदेवस्य कथासरित्सागरसम्बद्धमपि यथेच्छं कल्पयन्ति समालोचकाः। प्रमाणत्वेन गृह्णन्ति च तद्भामहस्य भासपरवर्तित्वस्य। किन्तु उदयनकथा तु नितान्तप्राचीना। यदि हि भामहेन तत्प्रतिज्ञायौगन्धरायणाद् गृहीतं मन्यते तदा भासेन तद् गुणाढ्यतो गृहीतमपि मन्यत एव। गुणाढ्येन तत्कुतो गृहीतमित्यस्य तु न कोऽप्युत्तरयितुं प्रभवति। लोककथा हि कालापरिच्छेद्या। कालिदासोऽपि—

'प्राप्यावन्तीमुदयनकथाकोविदग्रामवृद्धान्'।

इति लोककथाधारेणैव स्मरति।

एवमेव भामहस्य—

''शिष्टप्रयोगमात्रेण न्यासकारमतेन वा।

तृचा समस्तषष्ठीकं न कथञ्चिदुदाहरत्।।'' (६-३६।।

इति वचनमवलम्ब्य भामहं न्यासकारजिनेन्द्रबुद्धेः परवर्तिनं मन्यन्ते केचित्। नैतदपि परं प्रमाणं यतो जिनेन्द्रबुद्धेः प्रागपि सन्त्यनेके न्यासग्रन्थाः प्रणीताः। न्यासपदं हि व्याकरणस्य व्याख्याग्रन्थनिमित्तं प्रयुज्यते सर्वत्र। सायणो हि माधवीयधातुवृत्तौ क्षेमेन्द्रन्यास-न्यासोद्द्योत-बौधिन्यास-शाकटायनन्यासप्र-भृत्यनेकन्यासग्रन्थानुल्लि-खति। बाणभट्टोऽपि 'कृतगुरुपदन्यासा' इति कथनेन न्यासग्रन्थं स्मरति हर्षचरितं। न्यासे हि वृत्तिविवरणमेव। यदि हि न्यासपदं काशिकाविवरणकारेण जिनेन्द्रबुद्धिनैव सम्बद्धं मन्यते तदा तस्य बाणभट्टपूर्ववर्तित्वं सिद्ध्येद् येन स काशिकाकारादपि पूर्ववर्ती' भवेत्। यथार्थतः तु तद्विपरीतमेव। भामह उक्तवचनेन व्याडिप्रणीतं वृत्तिविवरणं स्मरति इति तर्कः साधुः।

भामहदण्डिनोः पूर्वापरवर्तित्वं तु समालोचकानां शिरोवेदनैव। तथैव भट्टिभाम-हयोरपि। भामहस्य—

'काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः।।' (२—२०) इति पद्यं
'व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्।
हता दुर्मेधरुश्चास्मिन् विद्वत्प्रियतया मया।।' (२२।३४)

इति भट्टिकाव्यगतपद्यस्यानुवादि इति मत्त्वा केचन भामहं भट्टितोऽपि परवर्तिनं मन्यन्ते। किन्तु दुर्भाग्यमेवेदं पण्डितानां यो पूर्वापरपक्षं नैव विचिन्तयन्ति। भामहस्य पद्यमिदं निश्चयमेव रामशर्मण अच्युतोत्तरकाव्यमाधृत्य प्रणीतमिति तत्पूर्ववर्तिनः:-

'नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी।
प्रहेलिका सा ह्युदिता रामशर्माच्युतोत्तरे।।' (२ । १९)

इति पद्यात्स्पष्टमेव ज्ञायते। तेन भट्टिर्हि तथाकथने भामहमनुवदतीति स्पष्टमेव। अपरञ्च व्याख्यागम्यं हि काव्यं केवलं भट्टिनैव प्रणीतमिति न शक्यते निश्चेतुम्। तादृशान्येव काव्यानि पाणिनिव्याडिवररुचिपतञ्जलिप्रभृतिभिरपि प्रणीतान्यासन्निति प्रमाणश तैर्ज्ञायते। भामहस्तु स्पष्टमेव रामशर्मणः अच्युतोत्तरकाव्यं समालोचयतीति तत्पूर्वप्रसङ्गतः स्पष्टमेव।

अथान्ते समालोचकानां शिरोवेदनाभूतभामहदण्डिपौर्वापर्यविवेचना। भामहद-ण्डिनौ हि अनेकेषु विषयेषु संवादिनौ किन्तु तयोर्न कोऽपि परस्परं नाम्ना स्मरति। भामहः—

रूपकादिरलङ्कारस्तथान्यैर्बहुधोदितः। (१।१३)
रूपकादिमलङ्कारं बाह्यमाचक्षते परे। (१।१४)
वैदर्भमन्यदस्तीति मन्यन्ते सुधियोऽपरे। (१।३१।।
'अनुप्रासः सयमको रूपकं दीपकोपमे।
इति वाचामलङ्काराः पञ्चैवान्यैरुदाहृताः।।' (२।४)
यदुक्तं त्रिप्रकारत्वं तस्याः कैश्चिन्महात्मभिः।
निन्दाप्रशंसाचिरत्यासाभेदात्राभिधीयते।।' (२।३७।।

स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षते। (२।९३।।

यदभिन्नार्थमन्योन्यं तदेकार्थं प्रचक्षते।
पुनरुक्तमिदं प्राहुरन्ये शब्दार्थभेदत:।। (४।१२)

इत्यादिवाक्येषु यं कमपि स्वपूर्ववर्तिनं तु स्मरत्येव। स हि मेधाविनं तु नामत एव स्मरति। तदितर: को नाम वा के नाम यं वा यान् भामहस्तथा स्मरति प्रामाणिकाचार्यत्वेन। तथैव दण्डी अपि—

पूर्वशास्त्राणि संहृत्य प्रयोगानुपलक्ष्य च।। (१।१२)
अत: प्रजानां व्युत्पत्तिमभिधाय सूरय:।
वाचां विचित्रमार्गाणां निबबन्धु: क्रियाविधिम्। (१।९)
तै: शरीरञ्च काव्यानामलङ्काराश्च दर्शिता: (१।१०)
किन्तु बीजविकल्पानां पूर्वाचार्यै: प्रकल्पितम्।
तदेव परिसंस्कर्तुमयमस्मत्परिश्रम:।। (२।२)
इति वाचामलङ्कारा दर्शिता: पूर्वसरिभि:। (२।७)
एता षोडश निर्दिष्टा पूर्वाचार्यै: प्रहेलिका। (२।१०६)

इत्यादिवाक्येषु कं सङ्केतयति यदि हि भामहोऽपि तत्परवर्ती। अपरंच दण्डी यस्मात्कस्मादपि वस्तु तु गृहणाति मेधाविरुद्र आसीद्येन हि सर्वाङ्गपूर्णालङ्कारशास्त्रं प्रणीतमासीदिति तु भामहकृतोद्धरणाज्ज्ञायते। तेनोभावेव भामहदण्डिनौ स्वपूर्ववर्तिन आचार्यानुद्धरत:। विषयेऽस्मिन् किमपि इदमित्त्यन्या वक्तुं दु:शकमेव यदि नाप्यसम्भवम्। इदं तु यथार्थसंवादि यद्भामह: कश्मीरको दण्डी तु दाक्षिणात्यो विशेषेण वैदर्भ:। किन्तु नैतावता एतत्सिध्यति यत्काव्यस्य वैदर्भीगौडमार्गौ तेनैवाविष्कृताविति। अग्निपुराणेऽपि तदेव लभ्यते। यदि हि अग्निपुराणस्य स्थिति: दण्डिनोऽपि परवर्तिनी मन्यते तदा तत्तु सङ्गच्छते किन्तु तस्य पुराणत्वमेव हीयते। प्राय: सर्वेष्वेव पुराणेषु तस्योल्लेखो दृश्यते। पुराणानि हि मूलतोऽर्वाचीनान्यपि विक्रमानन्तरसङ्गृहीतानि तु नैव सम्भवन्ति। यदि तावानेवांश: क्षेपको मन्येत तदाऽपि मूलक्षेपकांशानिर्णये सर्वत्रैवाव्यवस्थोत्पद्येत। तत्र हि भरतमेधाविरुद्रयो: स्मरणान्न केवलमग्निपुराणस्य ताभ्यामर्वाचीनत्वं सिद्‌यत्श्यपितु तयोरपि प्राचीनतमत्वं सिध्यति। तेन हि ये हि भरतं विक्रमसमालिकं वा तस्माददूरपूर्ववर्तिनं मन्यन्ते तेषां विचारो नैव नि:शङ्कं स्वीकर्तुं सुशक:। भरतेन हि द्वादशसाहस्त्रीक्रियाविधे: प्रणीताऽऽसीदिति ग्रन्थान्तरेषु तत्स्मरणाज्ज्ञायते। षट्साहस्त्री तु सम्प्रति समुपलभ्यते, किन्तु तस्योत्तरभाग: सम्प्रति दुलर्भ एव। तेन तत्र किं विवेचितं स्यादिति न शक्यते इदमित्थन्तया वक्तुम्। एतावदेवानुमीयते। यत्तस्या अपरभागो नूनमेव काव्यसामान्यसम्बद्ध आसीदिति। कास्यस्य हि द्वौ भेदौ दृश्यं श्रव्यञ्च। दृश्यं पूर्वषट्साहस्त्रथां प्रतिपादितं श्रव्यं त्वपरं षट्साहस्त्र्यामिति किन्त्वत्रास्माकमनुमानमेव प्रमाणं न तु प्रत्यक्षतस्तथा स्मृतं दृश्यते। अपरञ्च एतदन्तरालेऽन्येषामप्याचार्याणामवस्थितिरपि सम्भवति ये खलु कालेन विस्मृता: आनन्दवर्धन व्याख्यातध्वन्यालोकाकरिकायामेव—

'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः
तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।'

इत्येतदुक्तमस्ति यत्सूचयति यत् कारिकाप्रणयनकालात्पूर्वमेव ध्वनिः बहुशश्चर्चित आसीदित। यदि कारिकाकारेण स्वमतसिद्धये प्राचीना अग्रेसारिता इति मन्यते तदपि न तथा समीचीनं प्रतिभाति यत्तग्दृशी विभूतिस्तथा कुर्यादिति। तर्हि यथार्थस्य काऽऽकृतिरिति तु चिन्त्यमेव काव्यप्रकाशकारिकाकारोऽपि 'ध्वनिरिति बुधैः कथितः' इति कथयति यत्र व्याख्याकृन्मम्मटाचार्यः बुधैर्वैयाकरणैरिति सरलतया व्याख्याति। तत्रापि वृत्त्यारम्भे 'ग्रन्थकृत्परामृशति' इत्यत्र ग्रन्थकृत्पदं हि कारिकाभागस्य मम्मटातिरिक्तप्रणेतृत्वं सूचयति यदि नाम मम्मटो वृत्तिकत्। तर्हि कोऽसौ तादृशमहर्घ्यकारिकाकृदित्यपि सम्प्रत्यप्यनिर्णीतमेव। विद्यानाथमहेश्वरप्रभृतिगौडीयाः काव्यप्रकाशकारिकाभागं भरतमुनिप्रणीतं मन्यन्ते यदा अपरे तु तामपि मम्मटकृतिमेवामनन्ति।

आलङ्कारिकेषु वामन एव दण्डिनमनुसरति 'अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्' इत्येतत् मार्गपदेनैवानूद्य। अपरे उद्भट-प्रतिहारेन्दुराज-रुद्रटआनन्दवर्धन-वाग्भट-रुय्यक-जयरथप्रभृतयो हि काव्यशास्त्राचार्या व्याख्यातारश्च भामहमेव सश्रद्धं स्मरन्ति उद्धरन्ति च। महामाहेश्वरोऽभिनवगुप्तश्च भामहमेव सश्रद्धमुद्धरति। तत्र भामहस्यौदीच्यत्वाद् दण्डिनश्च दाक्षिणात्यत्वेन काश्मीरकैः स नैव स्मृत इति केषाञ्चित्तर्कस्तु अपाङ्ग एव। विज्जकां हि विजयनगरपट्टराज्ञी 'तथैव दण्डिना प्रोक्ता सर्वशुक्ला सरस्वती' इत्युक्त्वा तं स्मरति। अनेनैतावदेव सिध्याते यत्तदा दण्डिनः काव्यादर्शस्य दक्षिणस्यां हि पाठः प्रचलित आसीत्। सन्ति तत्राप्यनेकानि कारणानि तथाभवनस्य। भामहस्य काव्यालङ्कारो हि प्रसङ्गमपेक्ष्यैव प्रणीतोऽस्ति विज्ञविषयः। दण्डिनः काव्यादर्शस्तु व्यवस्थितपाठः पाठकविषयः। भामहस्य समासशैली दृश्यते यदा दण्डिनो व्यासरूपा। विज्जकयाऽपि स्वाध्ययने सरलतया काव्यादर्श एव गृहीतः। अतः शैलीविषयवस्तुसंरचनादिदृष्ट्या तु भामहस्यैव दण्डिनः पूर्ववर्तित्वं सिध्यति। नमिसाधुर्हि रुद्रटकाव्यालङ्कारटीकायां दण्डिभामहमेधाविरुद्रप्रभृतय इति कथनेन दण्डिनं पूर्ववर्तित्वेन गृह्णाति किन्तु न तत्र क्रमापेक्षा दृश्यते मेधाविरुद्रस्य भामहानन्तरोल्लेखाद्यदा हि भामहं मेधाविनं नामतः स्मरति। अन्ये तु भामहदण्डिनौ क्रमेणैव स्मरन्ति।

मतेऽपि भामहस्य दण्डिपूर्ववर्तित्वे सिद्धेऽपि तस्य आदिकाव्याचार्यत्वे तस्य स्थितिकालस्तु सम्प्रत्यपि अनिर्णीत एव तिष्ठति। केचित्तं विक्रमानन्तरपञ्चमशतकभवं मन्यन्तेऽपरे तु विक्रमसमकालिकं परे तु विक्रमपूर्ववर्तिनमपि। किन्तु सर्वमप्येतदनुमानाधीनमेव न तु यथार्थस्पर्शि। भामहो हि रक्रिलगोमिनः सुत इति तु तस्य—

''अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म।
सुजनावगमनायभामहेन ग्रथितं रक्रिलगोमिसूनुनेदम्।।'' (६।८४)

इति कथनाज्ज्ञायते। अत्र हि सत्कवीनामिति पदं कान् सङ्केतयति तथैव राजमित्रं (३।१०व,२।४५), रत्नाहरणं (३।८) च कस्य कृती ये भामहः समुद्धरति

च निर्णेतव्यमेव। स हि शाखवर्धनमपि नामतः स्मरति। (२।४७) किन्तु तद्विषयेऽपि वयमनभिज्ञा एवं तदधिकम्। स हि सालातुरीयमतभेदादनुक्रमेण। (६।६२)

इति पाणिनीयमतमनुसरति तथैव—

'सूत्रकृत्पादकारेष्टप्रयोगाद्योऽन्यथा भवेत्।' (४।२२)। सूत्रकारं पादकारं च स्मरति तथैव—

'चाणक्यो नक्तमुपसान्मन्दक्रीड़ागृहं यथा' (३।१३)। इति चाणक्यं स्मरति, तेनास्येयमेव पूर्वसीमा। तथैव ध्वन्यालोककार—

'दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः।।' (४)

इत्येतस्य व्याख्याने— 'धरणीधारणायाधुनात्वं शेषः' इत्यस्य प्राचीनार्थोदाहरणाय भामहोऽयं—

'शेषो हिमगिरिस्त्वञ्च महान्तो गुरवः स्थिताः।
यदतश्चितमर्यादाश्चलन्तीं विभृथ क्षितिम्।।' (३।२८।।

इति पद्यमुद्धृतमस्ति। अनेन हि भामहस्य बाणनपूर्ववर्तित्वं सिध्यति। इममेव तस्यावरसीमा।

भामहो हि—

स हि 'हेतुस्त्रिलक्षणो ज्ञेयः' इति। (५।२१)

इति कथने धर्मकीर्तिमनुसरति इति तस्य धर्मकीर्तेः परवर्तित्वं समर्थ्यते कैश्चित्किन्तु स तु तथाकथने कणभक्षकर्थात् कणादमेवानुसरति इति प्रसङ्गाज्ज्ञायते। नापि तथा, हेतोस्त्रैलक्षण्यं न धर्मकीर्तेरेव शपथः। तत्पूर्वमपि मतमिदं प्रणीतं सम्भवति। सम्भवति च भामहाद्र्मकीर्तिना गृहीतं स्यात्। किञ्च तेन प्रतिज्ञातमेव—

'स्वयं कृतैरेव निदर्शनैरियम्' (२।९६) इति।

गोमिनां समयः काश्मीरकस्याभिमन्योः स्थितिकालमभितः। तदा चन्द्रगोमिना महाभाष्यस्योद्धारः कृत आसीत्। सम्भवति रक्रिलगोमि अपि तदानीन्तन एव स्यात्। अपरञ्च कालिदासस्य—

'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।'

इति कथनं भामहस्य।

'शब्दार्थो सहितौ काव्यम्।'

इति कथनस्य प्रभावोऽपि सम्भवति। नवाऽपि स्यात्तत्, एतत्तु निश्चितप्रायमेव यद्भामहो दण्डिनः पूर्ववर्ती। शैलीदृष्ट्या त्वयं भाससौमिल्लकादिसमकालीन इव दृश्यते। वस्तुतस्त्वत्र सम्प्रत्यपि बहु अन्वेष्टव्यमस्ति।

भामहस्य काव्यालङ्कारः षडध्यायेषु विभक्तोऽस्ति। तत्रैव अवसानपद्ये। उक्तम्—

'षष्ठ्या शरीरं निर्णीतं शतषष्ठ्या त्वलङ्कृतिः।
पञ्चाशता दोषदृष्टिः सप्तत्या न्यायनिर्णयः।

शष्ठ्या शब्दस्य शुद्धिः स्यादित्येवं वस्तुपञ्चकम्।
उक्तं षड्भिः परिच्छेदैर्भामहेन क्रमेण वः।। इति।

भामहमतेन हि सालङ्कृती शब्दार्थौ सहितौ काव्यम्। काव्यस्य फलञ्च धर्मार्थकाममोक्षेषु वैचक्षण्यं कलास्वपि। प्रतिभैव काव्यस्य हेतुः। यथोक्तम्—

'गुरूपदेशादध्येतु शास्त्रं जडधियोऽप्यलम्।
काव्यं तु जायते जातु कस्यचित्प्रतिभावतः।।' (१।५) इति।

यातेऽपि शरीरं काव्यशरीरं तु निरातङ्कमेव तिष्ठति। काव्यसाधनानि शब्दछन्दः प्रसिद्धकथा लोकयुक्ति-कलाश्च। शब्दज्ञानं काव्यज्ञोपासना-काव्याभ्यासश्चेति काव्य-सिद्धिहेतवः। तेन हि काव्यसाधकेन—

'सर्वथा पदमप्येकं न निगाद्यमवद्यवत्।
विलक्ष्मणा हि काव्येन दुःसुतेनेव निन्द्यते।। (१।११)

तमेवार्थमनुवदति दण्डी—

'गौगौः कामदुघां सम्यक् प्रयुक्ता स्मर्यते बुधैः।
दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति।।
तदल्पमपि नोपेक्ष्यं काव्यं दुष्टं कथञ्चन।
स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्।।' (१।६७)

यद्यकवित्वं व्याधये वा दण्डनाय भवति तदा कुकवित्वं तु साक्षन्मरणमेव। निरलङ्कृतं हि काव्यं निर्भूषं वनितामुखमिव। तेन रूपकादिः काव्यालङ्कारः इति केषाञ्चिन्मतम्। अपरे तु रूपकाद्यलङ्कारान् वाह्यान्मत्वा सुपतिङादिव्युत्पत्तिमेव वाचामलङ्कृतिं मन्यन्ते। तेषां मते हि सौशब्द्यमेव काव्यं भवति। भामहमते तु द्वयमेवावश्यकं 'काव्याय। तनैव शब्दाभिधेयालङ्कारयुक्तौ शब्दार्थो सहितौ काव्यम्। तच्च गद्यपद्यभेदेन द्विधा भवति। तद् द्विविधमपि काव्यं पुनः संस्कृत-प्राकृत-अपभ्रंशभेदात् त्रिविधिम्। देवादिवृत्ताश्रयम्, उत्पाद्यवस्त्वाश्रयं कलाश्रयं शास्त्राश्रयञ्चेति तत्पुनश्चतुर्विधम्। तदपि पुनः सर्गबन्धः, अभिनेयार्थम्, आख्यायिका, कथा, अनिब-द्धञ्चेति पञ्चविधम्। तत्र सर्गबन्धो महाकाव्यं महाफलयुक्तं, अभिनेयं नाट्यं, गद्येन युक्तोदात्तार्थो सोच्छ्वासा उत्तमपुरुषोक्ता आख्यायिका, संस्कृतापभ्रंशनिबद्धा वक्त्रापरवक्त्रहीना अन्यपुरुषोक्ता कथा, गाथाश्लेकमात्रादिवियुक्तकमनिबद्धमिति। एतदेव सर्वं वक्रस्यभावोक्त्या युक्तं शोभते न तु केवलं स्वभांवोक्त्यैव वैदर्भगौड-प्रभृतिमार्गविभाजनं तु अमेधसामेव विषयः। अप्रष्टार्थ वक्रोक्तिहीनं कोमलं श्रुतिपेशलं वैदर्भमपि गेयंपदमेव किन्तु सालङ्कारमग्राम्यमर्थ्यं न्याय्यंमनाकुलं गौडीयमपि साधीयः। संज्ञा त्विच्छाश्रितैव। किन्तु नितान्तादिमात्रेण गिरां चारुता नैव जायते किन्तु वक्राभिधेयशब्दोक्तिरेव वाचामलङ्कृतिस्तद्युक्तमेव गिरां चारुता नैव जायते वक्राभिधेयशब्दोक्तिरेव वाचामलङ्कृतिस्तद्युक्तमेव पदं काव्यनामभाक्। नेयार्थं क्लिष्टम्, अयुक्तिमत्, गूढशब्दाभिधानञ्च पदं कविभिर्न प्रयोज्यम्।

यस्यार्थो बलादेव नेयो भवति तन्नेयार्थं, व्यवहिताभीष्टार्थं क्लिष्टम्,

अनभीष्टार्थेन प्रभावितमन्यार्थं, वाच्यार्थे साक्षाद्रूढमवाचकं, लोकयुक्तिविपरीत-मयुक्तिमद् यथा मेघ-मारुत-चन्द्र-पारावत काक-भ्रमर-हारीत-चक्रवाक-शुकादीनाम-वाचां दूत्यवर्णनं, तत्रापि नितान्तोत्कण्ठयोन्मत्तवद्भाषणे न दोषः। गूढ़शब्दाभिधानं च न विदुषामप्युपकाराय यथा असितर्त्तितुगद्रिच्छित्-इत्यादि तथैव गोगजवाहनो मयूर इति एते पददोषाः। श्रुतिदुष्टं वाक्काटवं श्रवणेऽश्रद्धेयं विड्वान्तादि, असभ्य वस्तुनोऽपि विषयत्वमर्थदुष्टत्वं, पदद्वयस्य सन्धानेऽनिष्टं कल्पनादुष्टं यथा संशौर्या-भरणः, अजिह्वदित्यादि श्रुतिकष्टम्। सन्निवेशविशेषाद् दुरुक्तमपि शोभते लोचनन्यस्तं कज्जलमिव। आपाण्डुगण्डमित्यत्र पाण्डुयोगेन गण्डशब्दः। तच्च—

'मालाकारो रचयति यदा साधु विज्ञाय मालां
योज्यं काव्येष्ववहितधिया तद्वदेवाऽभिधानम्।'

माधुर्य-प्रसाद-ओजस्त्रयो हि काव्यगुणाः। अनुप्रासयमकौ रूपक-दीपक-उपमाश्च पञ्च वाचामलङ्काराः। तत्र नानाधात्वर्थगम्भीरा यमकव्यपदेशिनी प्रहेलिका, यथा रामशर्मणः अच्युतोत्तरे। भामहस्य सा नेष्टा। तेनैव स कथयति—

'काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्।
उत्सवः सुधियामेव हन्त दुर्मेधसो हताः।।' इति (२।२०)

एवमेव आक्षेप-अर्थान्तरन्यास-व्यतिरेक-विभावना-समासोक्ति अतिशयोक्त्यो-ऽन्ये षडलङ्काराः। यथासङ्ख्यमपेक्षा च। केषाञ्चिन्मते स्वभावोक्तिश्च। दण्डी तु—

'नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा।।' (२।८) इति।

किन्तु नैतच्चिन्त्यं यद्भामहो दण्डिमतमुद्धरतीति यतो दण्डी स्वयमेव तां पूर्वशास्त्रेभ्यो गृह्णाति— 'इति वाचामलङ्कारा दर्शिताः पूर्वसूरिभिः' (२।७) इति कथनेन।

तथैव प्रेयो रसवदूर्जस्वि, पर्यायोक्तं, समाहितम्, उदात्तः, अपह्नुतिः विशेषोक्तिः, तुल्ययोगिता, अप्रस्तुतप्रशंसा, व्याजस्तुतिः, निदर्शना, उपमारूपकम्, उपमेयोपमा, सहोक्तिः, परिवृत्तिः, अनन्वयः, ससन्देहः, उत्प्रेक्षावयव संसृष्टं, भाविकं चालङ्काराः। केषाञ्चिन्मते आशीरपि। भामहमते हि उदात्तं हि आर्यशीलवत्त्वम्। अपरे तु नानारत्नादियुक्तं यत्तत्किलोदात्तमुच्यते। (३।१२)। दण्डिमते तु—

'आशयस्य विनूतेर्वा यन्महत्त्वमनुत्तमम्।
उदात्तमिति..............................।।' (२।३००)

तेनात्रापि भामहस्य सङ्केतो न दण्डिनं प्रति।

भामहो हि उपमारूपकम्, अनन्वयससन्देहम्, उत्प्रेक्षावयवञ्च केषाञ्चिन्मते पृथगेवालङ्कारान्निर्दिशति—

'उपमारूपकं चान्यदुपमेयोपमामपि।
सहोक्तिपरिवृत्ती च ससन्देहमनन्वयम्।
उत्प्रेक्षावयवयं चान्ये संसृष्टमपि चापरे।'
भाविकत्वञ्च निजगुरलङ्कारान् मनीषिणः।।' (३।३-४) इति। दण्डी तु—

'अनन्वयससन्देहावुपमास्वेव दर्शितौ।
उपमारूपकञ्चापि रूपकेष्वेव दर्शितम्।
उत्प्रेक्षाभेद एवासावुत्प्रेक्षावयवोऽपि च।। (२।३५८–५९)

इति वदन् स्पष्टमेव भामहोक्तं खण्डयति।

एवमेव काव्ये अपार्थं, व्यर्थम्, एकार्थं, संशयः, अपक्रमम्, शब्दहीनं, यति भ्रष्टं, भिन्नवृत्तं, विसन्धि, देशकालकलालोकन्यायागमविरोधि, प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टञ्च नेष्यते। तत्र पदस्य वाक्यस्य वा अपेतार्थत्वमपार्थ समुदायार्थशून्यं, पूर्वापरार्थव्याघाताद्विपर्ययकरं व्यर्थम्, अन्योन्याभिनवार्थमेकार्थम्, अन्ये पुनरुक्तमपि, दण्डी अपि एकार्थमेव वदति न तु पुनरुक्तम्। अप्रतिष्ठितं ज्ञानं संशयस्तेन युक्तं ससंशयम्, क्रमविपर्यासोऽमक्रमम्, सूत्रवार्तिककारविरुद्धप्रयोगः शब्दहीनं, छन्दोभङ्गो यतिभ्रष्टं, गुरुलघ्वोर्न्यूनाधिकता भिन्नवृत्तं, सन्धिहीनत्वं बिसन्धिः शास्त्राद्धि दुर्बोधतयाऽल्पमेधसो बिभ्यन्ति। तेन–

'स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते।
प्रथमालीढमधवः पिबन्ति कटुकौषधम्।।

सर्वोऽपि शब्दविषयः काव्याङ्गत्वमुपैति–

''न स शब्दो न तद्वाच्यं न स न्यायो न सा कला।
जायते यत्र काव्याङ्गमहो भारो महान् कवेः।।''
''पदमेकं परं साधु नार्वाचीनं निबन्धनम्।''
''वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते।''

अर्थप्रयुक्तये गोत एव शब्दः। यतोऽर्थेषु प्रतीतिः स शब्दः।

''ईयन्त ईदृशा वर्णा ईदृगर्थविधायिनः।
व्यवहाराय लोकस्य प्रागित्थं समयः कृतः।।'
स कूटस्थोऽनपायी च नादादन्यश्च कथ्यते।
मन्दाः साङ्केतितानर्थान् मन्यन्ते पारमार्थिकान्।।
नाप्रयुक्तं प्रयुञ्जीत चेतः सम्मोहकारणम्।
तुल्यार्थत्वेऽपि हि ब्रूयात् को हन्ति गतिवाचिनम्।।''

इत्थं हि कविशिक्षात्मकः काव्यालङ्कारो भामहस्य काव्यालंकारजगतः प्रथमो ग्रन्थः। ग्रन्थस्यास्य विक्रमानन्तरनवमशतकभवेन उद्भटेन भामहविवरणाख्या व्याख्या कृताऽऽसीदिति उद्भटस्य काव्यालङ्कारसारसङ्ग्रहस्य टीकायां टीकाकृत प्रतिहारेन्दु-राजस्य-विशेषोक्तिलक्षणे भामहविवरणे भट्टोद्भटेन इति वचनाज्ज्ञायते। क्रमेऽस्मिन् अपरो विचिन्तकोऽस्मज्ज्ञातो दण्डी। स हि वैदर्भ इति तु पूर्वमेवोक्तम्। स हि अवन्तीसुन्दरीकथायां बाणभट्टं मयूरञ्च स्मरति, आत्मानञ्च किरातार्जुनीयकारस्य भारवे प्रपौत्रमुद्घोषयतीति इयमेव दण्डिनः पूर्वसीमा। अभिनवगुप्तस्तं नामतः स्मरतीति इयमेव तस्यावरसीमा। स हि नामतो राजवर्माणं काञ्चीनरेशं गृह्णातीत्ययमेव तस्य स्थितिकालः। तेनैव दण्डी हि वैक्रमाष्टशतकोत्तरार्द्धभव इति विशैर्निश्चित्रमस्ति।

सामान्यत: ७१५-७९० मित वैक्रमाब्दानभितस्तस्य स्थितिकालोऽनुमित:। तस्य हि समाश्रयदाता राजवर्मोपाधिधारी नरसिंहवर्मा ७३७–७७९ मितवैक्रमाब्देषु सिहासनारूढ आसीत्।

दण्डिनो हि त्रयो ग्रन्था: प्रसिद्धा येष्वेक: काव्यादर्श: द्वितीयो दशकुमारचरितम्, तृतीयश्च, अवन्तीसुन्दरीकथा। केचित्तु अवन्तीसुन्दरीस्थाने छन्दोविति:। कलापरिच्छेदमपि गृह्णन्ति। स्याद्वा तद्वा। तेषां प्रणयन: क्रमस्तु दशकुमारचरितम् (७४७ वै०) च। अवन्तीसुन्दरीकथा (७७२ वै०) च। केचित्तु द्विसन्धानकाव्यमपि दण्डिन एव कृतिं मन्यन्ते।

दण्डिन: काव्यादर्श: काव्यंसिद्धान्तानां व्यवस्थितरूपेण सङ्ग्रहक: प्रथमो ग्रन्थ:। यद्यपि तत्पूर्वमपि मेधाविरुद्रभामहादिभिरपि काव्यशास्त्रग्रन्था: प्रणीता: किन्तु काव्यसिद्धान्तानां व्यवस्थित: सङ्ग्रहस्तु प्रथमं दण्डिनैव प्रारब्ध:। स स्वयमेव कथयति–

''पूर्वशास्त्राणि संहत्य प्रयोगानुपलभ्य च।
यथासामर्थ्यमस्मामि: क्रियते काव्यलक्षणम्।।'' इति। (१।२)

ग्रन्थोऽयं सम्प्रति त्रिपरिच्छेदात्मको लभ्यते। तदनुसारेण इष्टार्थव्यवच्छिन्ना पदावली काव्यस्य शरीरम्। तच्च गद्य-पद्यमिश्रभेदात् त्रिविधम्।

काव्ये हि चतुर्विधं संस्कृत-प्राकृत-अपभ्रंश-मिश्रभेदात्। संस्कृतं हि दैवी वाक्। तत्सम-तद्भव-देशीतिबहुविध: प्राकृतक्रम:। महाराष्ट्री-शौरसेनी-गौडी-लाटी च प्राकृतानि। आभीरगिरोऽपभ्रंश:। संस्कृतादन्यदपभ्रंशतया शास्त्रेषूदितम्। संस्कृतं हि सर्गबन्धादि, प्राकृतं स्कन्धकादिकम्, आसारादिरपभ्रंशं नाटकादि तु मिश्रकम्। कथा हि सर्वास्वेव भाषसु बध्यते। भूतभाषामयी अद्भुतार्था बृहत्कथा।

गिरामनेको मार्ग:। तत्र हि परस्परं सूक्ष्मभेद:। तत्रापि प्रस्फुटान्तरौ वैदर्भगौडीयौ। वैदर्भमार्गस्य श्लेषादयो दश गुणा:। गौडीये तेषां विपर्ययोऽपि।

नैसर्गिकी प्रतिभा, बहुनिर्मलं, श्रुतं अमन्दोऽभियोगश्च काव्यसम्पद: कारणम्। काव्यशोभकरा धर्मा अलङ्कारा:। तें च–

स्वभावाख्यानमुपमा रूपकं दीपकाहती।
आक्षेपोऽर्थान्तरन्यासो व्यतिरेको विभावना।
समासातिशयोत्प्रेक्षा हेतु': सूक्ष्मो लव: क्रम:।
प्रेयो रसवदूर्जस्वि पर्यायोक्तं समाहितम्।
उदात्तापह्नुतिश्लेषविशेषास्तुल्ययोगिता।
विरोधाप्रस्तुतस्तोत्रे व्याजस्तुतिनिदर्शने।
सहोक्ति: परिवृत्याशी: सङ्कीर्णमथ भाविकम्।
इति वाचामलङ्कारा: दर्शिता: पूर्वसूरिभि:।

एवमेव यमादय: शब्दालङ्कारा: तत्र यथावसरं निरूपिता: सन्ति।

रीतिवभागो दण्डिनो मौलिकं चिन्तनमिति केचिकमथयन्ति किन्तु तद्यथार्थबाह्यमेव। दण्डी हि तत्र नापि भामहमग्निपुराणमनुसरति। अग्निपुराणे हि चतस्रो रीतयो निरूपिता: सन्तीति प्रागुक्तमेव।

यथा हि भामहस्य काव्यालङ्कार उदग्भावो बहुधा प्रयुक्तस्तथैव दण्डिन: काव्यादर्शो दक्षिणदिग्भागे प्रचलित आसीत्। अस्य हि तिब्बतीभाषायामपि कृतोऽस्त्यनुवाद:। अधुनाऽपि तिब्बतीयसम्प्रदायसम्बद्धमठेषु काव्यादर्शो हि पाठ्यपुस्तकत्वेन पठ्यते।

काव्यादर्शस्य सन्ति दशाधिका: प्राचीना अर्वाचीनाश्च टीकाग्रन्था:। तत्र रत्नश्रीज्ञानस्य रत्नश्रीटीका प्रकाशिकाऽऽख्या, दार्दिजङ्गालकृता टीका, हरिनाथकृता मार्जना टीका, मल्लिनाथस्य वैमल्यविधायिनी, त्रिभुवनचन्द्रस्य टीका, त्रिशरणतटभीमस्य चन्द्रिका, नरसिंहस्य दण्ड्यर्थमुक्तावली, विश्वनाथस्य रसिकरञ्जनी, भगीरथस्य टीका, विनयानन्दस्य टीका, यामुनेयस्य टीका, कृष्णकिङ्करतर्कवागीशस्य विवृति: धर्मवाचस्पतेर्वाचस्पत्याख्या टीका, प्रेमचन्द्रतर्कवागीशस्य मालिन्यप्रोञ्छनी, जीवानन्दविद्यासागरस्य विवृति':, नृसिंहदेवस्य कुसुमप्रतिमा रङ्गाचार्यस्य प्रभा, रामचन्द्रमिश्रस्य प्रकाश:, धर्मेन्द्रकुमारगुप्तस्य सुदर्शनाऽऽख्या व्याख्या च ज्ञाता:। धर्मकीतिरपिकाव्यालङ्कारग्रन्थं प्रणीतवानासीदिति 'अलङ्कारो नाम धर्मकीर्तिकृतो ग्रन्थविशेष:' इति शिवराममलिखितावतरणतो ज्ञायते। सम्प्रति तस्य न कोऽपि तादृशो ग्रन्थो लभ्यते।

आलङ्कारिकसूच्यां वामनस्य महत्त्वपूर्णं स्थानम्। तस्य हि काव्यालङ्कारसूत्राणि विषयप्रतिपादनदृष्ट्या महर्घ्याणि। स हि रीतिसम्प्रदायाचार्य:। स. हि काश्मीरकस्य राज्ञो जयापीडस्य (८३६–८७० वै०) मन्त्री आसीदिति 'वामनाद्याश्च मन्त्रिण:' इति राजतरङ्गिणीकारो वामनस्तु तस्माद्भिन्न: प्राचीनश्च। ग्रन्थोऽयं पञ्चस्वधिकरणेषु विभक्त:।। तत्र शारीर–दोषदर्शन–गुणविवेचन–आलङ्कारिकप्रायोगिकना मान्यधिकरणानि। ग्रन्थस्यास्य त्रयो भागा: सूत्राणि वृत्तिरुदाहरणानि च यत्र कुत्र प्रत्युदाहरणान्यपि। अस्योपरि गोपेन्द्रभूपालस्य कामधेनुसंहिता, महेश्वरस्य सहदेवस्य च टीकाग्रन्था: सन्ति। स अर्वाचीनो लोकमणिदाहालस्य कलाऽऽख्याऽस्य व्याख्या प्रकाशिताऽस्ति। अस्य वृत्तिभागश्च सूत्रकर्ता स्वयमेव प्रणीत:।उदाहरणेषु कानिचित्तु स्वयमेव वृत्तिकारेण प्रणीतानि, कानिचित्तु कुमारसम्भव–रघुवंश–मेघदूत–विक्रमोर्वशीय–अभिज्ञान शाकुन्तलम–किरातार्जुनीय–मृच्छकटिक–अमरुशतक–उत्तररामचरित–महावीरचरित वेणीसंहार–कादम्बरी–हर्षचरित प्रभृति ग्रन्थेभ्योऽपि गृहीतानि सन्तिं। वामनमतानुसारेण गुणालंकारसंस्कृतौ शब्दार्थौ काव्यम्। ग्राह्यं भवति काव्यमलंकारदेवा अलंकृतिरलंकार:। करणव्युत्पत्त्या तु पुनरलंकारशब्दोऽयमुपमादिषु वर्तते। अलङ्करणञ्च दोषहानेन गुणालङ्कारादानेन च। तच्च शास्त्रादेव भवति न तु स्वेच्छया। काव्यं हि दृष्टार्थ सद्य: प्रीतिकरत्वात्। तददृष्टार्थञ्च कीर्तिहेतुत्वात्, तेनानन्द: कीर्तिश्च काव्यस्य प्रयोजनम्। कवयो द्विधा अरोचकिन: सतृणाभ्यहारिणश्च। अरोचकिन: शिष्या भवन्ति विवेकित्वात्। नेतरे विवेकशून्यत्वात्। काव्यस्यात्मा रीति:। रीतिश्च विशिष्टपदरचना। विशेषस्तु गुणात्मा। रीतिस्त्रिधा वैद र्भी वैदर्भी गौडी पाञ्चाली च। तत्र समग्रगुणा वैदर्भी। ओज: कान्तिमती गौडीया। माधुर्यसौकुमार्योपपन्ना पाञ्चाली। गुणसाकल्याद्वैदर्भी ग्राह्या इतरद्वयापेक्षया। लोको विद्या प्रकीर्णञ्च काव्याङ्गानि। कवित्वबीजं प्रतिभानम्। काव्यं द्विविधं गद्यं पद्यञ्च गुणविपर्ययात्मानो दोषा:।असाधु, कष्टं ग्राम्यम्, अप्रतीतमनर्थकञ्च पददोषा:। तत्र व्याकरणविरुद्धमसाधु। श्रुतिविरसं कष्टम्। लोकमात्रप्रयुक्तं ग्राम्यम्,

शास्त्रमात्रप्रयुक्तमप्रतीतम्। पूरणार्थप्रयक्तमनर्थकम्। अन्यार्थनेयगूढार्थाश्लीलक्लिष्टानि पदार्थदोषाः। अत्र रूढित्यागेन यौगिकमात्रार्थोपादानमन्यार्थम्। स्वयं प्रकल्पितार्थं नेयार्थम्। अप्रसिद्धार्थप्रयुक्तं गूढार्थम्। असभ्यार्थान्तरमसभ्यस्मृतिहेतुश्चाश्लीलम्। व्यवहितार्थप्रत्ययं क्लिष्टम्। भिन्नवृत्तयतिभ्रंशविसन्धयो वाक्यदोषाः। व्यर्थैकार्थसन्दिग्धाप्रयुक्तापक्रमलोकविद्या विरुद्धानि वाक्यार्थदोषाः। काव्याशोभायाः कर्तारो धर्मा गुणाः। काव्यशोभातिशयहेतवोऽलङ्काराः। गुणा नित्यास्तदभावेन काव्यत्वासिद्धेः। ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः। त एवार्थगुणाः। यमकोऽनुप्रासश्च शब्दालङ्कारौ। उपमादयोऽर्थालङ्काराः। उपमा द्विविधा पूर्णा लुप्ता च। हीनत्वाधिकत्वलिङ्गवचनभेदासादृश्यासम्भवा उपमादोषाः। प्रतिवस्तु-प्रभृतिरूपमाप्रपञ्चः। ते च प्रतिवस्तु-समासोक्ति-अप्रस्तुतप्रशंसा- अपह्नुति-रूपक-श्लेष-वक्रोक्ति-परिवृत्ति-दीपक-निदर्शन-अर्थान्तरन्यास-व्यतिरेक-विशेषोक्ति-व्याजस्तुति-व्याजोक्ति-तुल्ययोगिता-आक्षेपसहोक्ति-समाहित-संसृष्टिप्रभृतयः। नैकं पदं द्विः प्रयोज्यं प्रायेण। अतिप्रयुक्तं देशभाषापदमपि प्रयोज्यम्। तथैव लक्षणा शब्दाः।

वामनप्रणीतं शास्त्रमिदं लुप्तप्रायं मुकुलभट्टेन समुद्धृतमिति काव्यालङ्कारटीकायां सहदेववचनाज्ज्ञायते।

उद्भटस्य काव्यालङ्कारसारसङ्ग्रहोऽपि काव्यालङ्कारशास्त्रपरम्परायां सगौरवं स्थानं गृह्णाति। भट्टोद्भटो हि जयापीडस्य राज्ञः सभापतिरासीदिति—

'विद्वान् दीनारलक्ष्यणे प्रत्यहं कृतवेतनः।
भट्टोऽभूदुद्भटस्तस्य भूमिभर्तुः सभापतिः।।' (४।९५)

इति राजतरङ्गिणीकारवचनाज्ज्ञायते। तेन हि भट्टोद्भटोऽपि वामनसमकालिको वा तस्मात्किञ्चिज्ज्येष्ठः। उद्भटस्य हि त्रयो ग्रन्थाः प्रसिद्धाः भामहकविवरणम्, कुमारसम्भवकाव्यम्, काव्यालङ्कारसारसङ्ग्रहश्च। भामहविवरणं हि भामहस्य काव्यालङ्कारस्य टीका। यद्यपि सा सम्प्रति नैवोपलभ्यते किन्तु यत्र तत्र सश्रद्धं स्मृता दृश्यते। विशेषतः प्रतिहारेन्दुराजप्रणीतकाव्यालङ्कारसारसङ्ग्रहलघुवृत्तौ। तथैवोद्भटेन भरतनाट्यशास्त्रस्य व्याख्या कृताऽऽसीदिति—

'व्याख्यातारो भारतीये लोल्लटोद्भटशङ्कुकाः।
भट्टाभिनवगुप्तश्च श्रीमत्कीर्तिधरोऽपरः।।'

इति सङ्गीतरत्नाकरे शार्ङ्गधरवचनाज्ज्ञायते। किन्तु साऽपि सम्प्रति लुप्तैव। उद्भटस्य कुमारसम्भवमपि काव्यं काव्यालङ्कारसारसङ्ग्रहे उदाहृतं भागमात्रं लभ्यते। तेन सम्प्रति भट्टोद्भटस्य एक एव ग्रन्थो लभ्यते काव्यालङ्कारसारसङ्ग्रहो नाम।

ग्रन्थोऽयं षट्सु वर्गेषु अलङ्कारान् विभज्य पठति यत्र ७९ कारिकाः सन्ति। प्रथमे हि वर्गे पुनरुक्तवदाभास-छेकानुप्रास-अनुप्रास-लाटानुप्रास रूपक-उपमादीपक-प्रतिवस्तूपमा निरूपिताः। द्वितीये वर्गे आक्षेप-अर्थान्तरन्यास-व्यतिरेक-विभावना-समासोक्ति-अतिशयोक्तयो निरूपिताः। तृतीये वर्गे यथासङ्ख्यउत्प्रेक्षा-स्वभावोक्तयः। चतुर्थे तु प्रेयो-रसवद्-ऊर्जस्वि-पर्यायोक्त-समाहित-उदात्तश्लिष्टाः। पञ्चमे तु अपह्नुति-विशेषोक्ति-परिवृत्तयः। षष्ठे तु अनन्वयससन्देहसंसृष्टि-भाविकानि निरूपितानि।

ग्रन्थेऽस्मिन् कोङ्कणेन प्रतिहारेन्दुराजेन लघुविवृत्ति नाम्नी वृत्तिः प्रणीताऽस्ति। तस्या अयं पुष्पिकापद्यम्—

'मीमांसासारमेघात्पदजलधिविधोस्तर्कमाणिक्यकोशात्।
साहित्यश्रीमुरारेर्बुधकुसुममधोः सौरिपादाब्जभृङ्गात्।।
श्रुत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात्कीर्तिबल्यालबालात्,
काव्यालङ्कारसारे लघुविवृतिमधात्कोङ्कणः श्रीन्दुराजः।। इति।

प्रतिहारेन्दुराजस्य स्थितिकालो विक्रमानन्तरं दशमशतकपूर्वार्द्धमितः।

एतदतिरिक्तं ग्रन्थेऽस्मिन् राजानकतिलकस्यापि व्याख्याऽसीदिति श्रूयते। उद्भटेन हि पुनरुक्तवदाभास-काव्यलिङ्ग-छेकानुप्रास-दृष्टान्त-सङ्करा इति पञ्चालङ्कारा नवीनतयोद्भाविता। स हि दण्डिसम्मतान् लेशसूक्ष्महेत्वलङ्कारान् नैव गृह्णाति। स हि रसवदाद्यलङ्कारान् साधु व्याख्याति। इत्येतावदेव तस्य वैशिष्ट्यम्। तन्मते गुणालङ्कारौ काव्यस्य नित्यधर्मौ काव्यशोभाधायकौ।

रुद्रटस्य काव्यालङ्कारः काव्यशास्त्रपरम्परायामपरः प्रकाशः। रुद्रटो हि काश्मीरः। काव्यालङ्कारस्य हि ११२५ मितवैक्रमाब्दे नमिसाधुना टीका प्रणीतेति तस्यैव—

''पञ्चविंशतिसंयुक्तैरेकादशसमाशतैः।
विक्रमात्समतिक्रान्तैः प्रावृषीदं समर्थितम्।।''

इति कथनेन ज्ञायते। तेनेयमेव रुद्रटस्य परसीमा। तञ्च राजशेखरः काकुवक्रोक्तिर्नाम शब्दालङ्कारोऽयमिति रुद्रटः इति स्मरति। स च ९७७ मित वैक्रमाब्दमभितः स्थितिमानिति तत्पूर्ववर्तित्वात् रुद्रटः ९०७ मितवैक्रमाब्दमभितः स्थितिमानित्यनुमितः। स हि वामनमनुजीवतीति वामनस्थितिकाल एव तस्य पूर्वसीमा। अस्य हि पिता शतानन्दापराख्यः भट्टवामुकः।

रुद्रटस्य काव्यालङ्कारे षोडशाध्यायाः प्रतिप्रकरणं तेन प्रकरणान्यपि षोडशैव। ग्रन्थस्यास्य नाम काव्यालङ्कारः। सम्बन्धश्चास्य काव्यस्वरूपविवेचना। प्रयोजनश्चास्य कविशिक्षा। काव्यस्य प्रयोजनं यशः। ततश्च—

'अर्थमनर्थोपशमं शमसममथवा मतं यदेवास्य।
विरचितरुचिरसुरस्तुतिरखिलं लभते तदेव कविः।।' (१।८)।

काव्यस्य हेतुः शक्तिर्व्युत्पत्तिरभ्यासश्च। तत्र—

मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः।। (१।१५)

सा द्विविधा सहजा उत्पाद्या च। सहजा प्रतिभाऽऽख्या। उत्पाद्या उपार्जनीया। एवमेव—

'छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात्।
युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन'।। (१।१८)

सुजनसङ्गाऽज्ञानोपार्जनमभ्यासः।

शब्दार्थौ काव्यम्। अर्थवद्वर्णसमुदायः शब्दः। स च नामाख्यातोपसर्गनिपा-

तकर्मप्रवचनीयभेदेन पञ्चविध:। मेधाविरुद्रेण चत्वार एवोक्तास्तेन कर्मपवचनीयो नोक्त':। नाम्नां द्वेधा वृत्ति: समासासमासभेदेन। समासवृत्त्या वृत्तेस्तिस्रो रीतय: पाञ्चाली लाटीया गौडीया च क्रमेण लघुमध्यायतविरचनसमासा। द्वित्रिपदा पाञ्चाली, पञ्च सप्त वा लाटीया, यथाशक्तिसमासा गौडीया। असमासा तु वैदर्भी। पञ्चविधस्य शब्दस्य वाक्ये उपयोग:। परस्परं सव्यपेक्षवृत्तीनामेकपराणां शब्दानामनाकाङ्क्ष: समुदायो वाक्यम्। अन्येनाधिकवाचकमुक्तमदुष्टार्थशब्दचारुपदं क्षौमक्षममक्षूणं वाक्यं प्रयुञ्जीत। वाक्यं, द्वेधा भवति गद्यं छन्दोगतञ्च। भाषाभेदात् षोढा ताश्च प्राकृत-संस्कृत-मागध-पिशाचशूरसेनी-अपभ्रंशा:। वक्रोक्त्यनुप्रासयम-कश्लेषचित्राणि शब्दालङ्कार:। मधुराप्रौढा-परुषा-ललिता-भद्रेति पञ्च वृत्तय:। असमर्थमप्रतीतं विसन्धि विपरीतकल्पनं ग्राम्यम् अव्युत्पत्तिं देश्यं च पदं दुष्टं भ्वेत्। अर्थ: पुनरभिधावान् प्रवर्तते अस्य वाचक: शब्द:। तस्य च द्रव्यं गुण: जाति: क्रियेति भेदा:। मूर्तिमद्द्रव्यम्। द्रव्यादपृथग्भूतो द्रव्यसमवायी गुण:। स च सहज-आहार्य-आवस्थिकभेदात् त्रिविध:। नित्यं क्रियाऽनुमेया द्रव्यविकारेण भवति धात्वर्थ:। कारकसाध्या द्वेधा सकर्मिकाकर्मिका चेति। भिन्नक्रियागुणेष्वपि बहुषु द्रव्येषु चित्रगात्रेषु एकाकार बुद्धिर्भवति यत: सा भवेज्जाति:। वास्तवमौपम्यमतिशय: श्लेषश्च अर्थालङ्कारा:। वस्तुस्वरूपमात्रकथनं वास्तवम्। तस्य सहोक्ति-समुच्चय- जाति-यथासङ्ख्य-भाव-पर्याय-विषम-अनुमान-दीपक-परिकर-परिवृत्ति- परिसङ्ख्या-हेतुकारणमाला-व्यतिरेक-अन्योन्य-उत्तर-सार-सूक्ष्म-लेश-अवसर- मीलित-एकावल्यश्च भेदा:। समानमिति वस्त्वन्तरामिधान-मौपम्यम्। तस्य च उपमा-उत्प्रेक्षा-रूपक-अपह्नुति-संशय-समासोक्ति-मत-उत्तर-अन्योक्ति-प्रतीप-अर्थान्तरन्यास-उभयन्यास-भ्रान्तिमद्- आक्षेप-प्रत्यनीक-दृष्टान्त-पूर्व-सहोक्ति-समुच्चय-साम्य-स्मरणानीतिभेदा एकविंशति:। यत्रार्थधर्मनियम: प्रसिद्ध-बाधाद्विपर्ययं याति।कश्चित्क्वचिदतिलोकं स स्यादतिशयस्तस्य। तस्य च पूर्वविशे-षोत्प्रेक्षाविभावनातद्गुणाधिकविरोधविषमासङ्गतिपिहितव्याघातहेतवो भेदा:। यत्रैकार्थ-मनेकार्थैर्वाक्यं रचितं पदैरनेकस्मिन्। अर्थे कुरुते निश्चयमर्थश्लेष: स विज्ञेय:। तस्य च अविशेषविरोधाधिकवक्रव्याजोक्त्यवयवा:। अर्थस्य दोषास्तु—

अपहेतुरप्रतीतो निरगमो वाधयनासम्बद्ध:।
ग्राम्यो विरसस्तद्वानतिमात्रश्चेति दुष्टोऽर्थ:।।

काव्याद्धि सरसानां चतुर्वर्गे सुखेनावगम:। तेन तत्सरसं स्यात्। नीरसं हि न कस्यचिदपि प्रवृत्ति:। रसाश्च काव्ये श्रृङ्गारवीरकरुण बीभत्सभयानकाद्भुता हास्यो रौद्र: शान्त: प्रयानिति दश।

रसनाद्रसत्वमेषां मधुरादीनामिवोक्तमाचार्यै:।
·निर्वेदादिष्वप तक्ति कादयस्तीति तेऽपि रसा:।।

कथा हि द्विविधा उत्पाद्याऽनुत्पाद्या च। ते महान्तो येषु चतुर्वर्ग: चतुर्वर्गेष्वन्यतमो येषु ते लघव:। कथायां शास्त्रलोकमर्यादा नोल्लंघनीया।

इत्थं हि काव्यशास्त्रस्य विशदरूपेण विवेचकस्य शास्त्रग्रन्थस्य नमिसाधुना

(११२५ वैक्रमाब्दे) टिप्पण प्रणीतमस्ति। तत्पूर्वमपि ग्रन्थस्यास्य वृत्तिग्रन्थः प्रणीत आसीदिति नमिसाधोरेव—

पूर्वमहामतिविरचितवृत्त्यनुसारेण किमपि रचयामि।
संक्षिप्ततरं रुद्रटकाव्यालङ्कारटिप्पणकम्।।

इति वचनाज्ज्ञायते। स च वृत्तिकृन्महामतिः सम्भवति रुद्रट एव स्यादिति।

केचित्तु शृङ्गारतिलकमपि रुद्रटकृतं मन्यन्ते किन्तु दुर्गाप्रसादटिप्पणानुसारेण तु तद्रुद्रभट्टकृतिर्न तु रुद्रटस्य। रुद्रटस्य काव्यालङ्कारो हि आर्यासु निबद्धः। तत्र दशमरसत्वेन प्रेयोरसस्य कल्पना, नायकनायिकाया वैशद्येन वर्णनम्, अलङ्काराणां नवीनपद्धत्या विभाजनं, (वास्तव-औपम्य-अतिशय-श्लेषभेदात्, मूलतश्चतुर्धाऽलङ्काराणां विभागस्तेषाञ्च प्रत्येकं भेदप्रतिपादनम्।), मतसाम्यपिहितभावाख्यानां चतुर्णामलङ्काराणां नवीनानामुद्भावनं, कतिपयेषां प्राचीनालङ्काराणां नवीनतया नामकरणं यथा व्याजस्तुतेर्व्याजश्लेष इति, स्वभावोक्तेर्जातिः उदात्तस्यावसर इति च।

ग्रन्थस्यास्य काश्मीरकवल्लभदेवप्रणीतटीकाऽऽदिति श्रूयते। सम्भवति नमिसाधुनाऽस्या एव संक्षिप्तं रूपं प्रस्तुतं स्यात्।

रुद्रभट्टस्य शृङ्गारतिलकें रसपक्षपाती काव्यलक्षणग्रन्थः।अत्र हि त्रयः परिच्छेदाः। प्रथमे हि परिच्छेदे नवानां रसानां भावानां नायकनायिकाभेदसामान्यस्य च वर्णनमस्ति। द्वितीये विशेषतो विप्रलम्भशृङ्गारः सप्रपञ्चं विवेचितोऽस्ति। तृतीये हि इतररसानां वृत्तीनाञ्च वर्णनं दृश्यते।

यद्यपि-रुद्रटो समानव्यक्तित्वेनैव बहुशो गृहीतौ प्राचीनग्रन्थेषु तथापि काव्यालङ्कारशृङ्गारतिलकयोः रचनावैषम्यान्न तथा प्रतिभाति। यथा प्रथमो हि अलङ्कारं विशदयति अपरो रसम्। प्रथमो हि दशरसान् विवेचयति अपरो हि नवानेव। आद्यो हि मधुरादिपञ्चवृत्तीः पठति अपरस्तु कैशिकीप्रभृतिचतस्र एव। आद्यो हि संक्षेपेण नायकनायिकादि प्रस्तौति अपरस्तु विशदरूपेण। रुद्रभट्टस्यापि स्थितिकालस्तु स एव भवः।

काव्यलक्षणजाति आनन्दवर्धनस्य ध्वन्यालोकस्य प्रवेशः सुमहत् सौभाग्यमादत्ते। ध्वनिशास्त्रस्य, व्याख्यातृत्वेन आनन्दवर्धनो हि सर्वनिवाचायनतिशेते। तद्विषयेऽनुपदं किञ्चिदभिधास्यते।

आनन्दवर्धनो यद्यपि स्वपूर्ववर्तिषु भामहभट्टोद्भट्टातिरिक्तं न कमपि नामतो गृह्णाति तथापि तस्य—

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः।। ५।४)

इति राजतरङ्गिणिकारवचनात्। स्थितिकालो वैक्रमदशमशतकमितः। अवन्तिवर्मा हि ९१०-९४१ मितवैक्रमाब्दानभितः सिंहासनासीन आसीत्।

आनन्दवर्धनस्यैव समकालिकस्य वा किञ्चिदवरकालिकस्य हि मुकुलभट्टस्य भट्टकल्लणपुत्रस्य अभिधावृत्तिमातृका अपि प्रकरणेऽस्मिन् स्मर्तव्या। ग्रन्थेऽस्मिन् चतुर्दश कारिकाः सन्ति कारिकाकारेणैव व्याख्याताः। तत्र हि मुख्यार्थविचारः, मुख्यार्थविभागः,

लक्षणाभेदा:, लक्षणापेक्षणीयानां विचार:, लक्षणाकक्षविभाग:, वाच्यस्यात्यन्ततिरस्कारादित्रियस्य विषयविभाग इत्येवं प्राधान्येन विवेच्यविषय:। तत्रोक्तम्—

शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते ।। इत्यादि।

यद्यपि भट्टनायकस्य हृदयदर्पण: सम्प्रति नैवोपलभ्यते तथापि तस्य महत्त्वं तु यथावज्जीवितमेव। स हि ध्वनिविरोधी आचार्य आसीत्। तस्य मतञ्चाभिनवगुप्तेन दूषितमिति आनन्दवर्धनाभिनवगुप्तयोरन्तरालवर्ती स आचार्य:। स हि ध्वनिं निराकरोति किन्तु रसवत्त्वं काव्यस्य मन्यते। अतएव तमुपहसन्नभिनवगुप्तपाद: कथयति—

"वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहक: समर्थ्यत इति सुष्ठुतरां ध्वनिध्वंसोऽयम्" इति।

रुय्यकप्रणीतालङ्कारसर्वस्वटीकायामलङ्कारविमर्षिण्यां जयरथ: कथयति— "भट्टनायकेन तु व्यङ्ग्यव्यापारस्य प्रौढोक्त्याभ्युपगतस्य काव्यांशत्वं ब्रुवता न्यग्भावितश शब्दार्थस्वरूपस्य व्यापारस्यैव प्राधान्यमुक्तम्। तत्राऽपि अभिधाभावकत्वलक्षणव्यापारद्वयोत्तीर्णो रसचर्वणात्मा भोगापरपर्यायो व्यापार: प्राधान्येन विश्रान्तिस्थानतयाङ्गीकृत:।" इति।

भट्टनायको हि रसोत्पत्तिविषये नवीनं दृष्टिकोणमादत्ते। स हि शब्दस्य त्रिविधं व्यापारं मन्यते। अभिधाव्यापारेण काव्यस्य सामान्योऽर्थ उपस्थितो भवति। भावकत्वव्यापारेण सीतारामादीनां विशेषस्वरूपमपहृत्य तान् साधारणीकरोति। भोजकत्वव्यापारेण च सामाजिकान् रसानुभवं कारयति। यथोक्तम्—

'अथभिधा भावना चान्या तद् भोगीकृतिरेव च।
अभिधाधामतां याते, शब्दार्थालङ्कृती तत:।।
भावनाभाव्य एषोऽपि श‍ृङ्गारादिगणो मत:।
तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नर:।।' इति।

काव्यानुशासनविवेके हेमचन्द्र: स्मरति—

'भट्टनायकस्त्वाह-रसो न प्रतीयते नोत्पद्यते नाभिव्यज्यते। स्वगतत्वेन हि प्रतीतौ करुणे दु:खित्वं स्यात्। न च सा प्रतीतिर्युक्ता सीतादेरविभावत्वात् स्वकान्तास्मृत्यसंवेदनात्। देवतादौ साधारणीकरणायोग्यत्वात्। समुद्रोल्लङ्घनादेरसाधारण्यात्। न च तत्त्वतो रामस्य स्मृतिरनुपलब्धत्वात्। न च शब्दानुमानादिभ्यस्तत्प्रतीतौ ताटस्थ्यमेव भवेत्तत्प्रतीतिरनुभवस्मृत्यादिरूपा रसस्य युक्ता। इति।

हृदयदर्पणस्यानुपलब्धिर्हि काव्यजगति क्षतिरपूरणीया।

यद्यपि महामाहेश्वरस्याभिनवगुप्तस्य न कोऽपि मौलिको ग्रन्थ एतद्विषयको लभ्यते सम्प्रति किन्तु तत्पर्यग्रहणं विना ग्रन्थसमीक्षैवापूर्णा भवति। स हि अत्रिगुप्तस्य वंशे जातस्य नरसिंहगुप्तस्य पुत्र: १०७१ मितवैक्रमाब्दमभित: स्थितिमान्। तस्य हि नाट्यशास्त्रस्य टीका अभिनवभारती, ध्वन्यालोकस्य टीका लोचनं, नाट्यालोचनञ्च प्रसिद्धा एतद्विषयकग्रन्था:। तस्य हि अभिनवभारती नाट्यशास्त्रस्य विश्वकोश एव। अभिनवगुप्तस्य विषयेऽनुपदं किञ्चिदभिधास्यते।

ततश्चोदेति राजशेखरो यायावरीय:। स हि विदर्भाभिजनकान्यकुब्जवास्तव्यो राज्ञो महेन्द्रपालस्य तत्सूनोर्महीपालस्य च सदसि प्राप्तप्रधानासन:। तस्य पिता दुर्दुाख्यो माता च शीलवत्याख्या, प्रपितामहश्च अकालजलद:। बालरामायणप्रस्तावनायां स स्वयमेव कथयति—

'समूर्तो यत्राऽऽसीद् गुणगण इवाकालजलद:
सुरानन्द: सोऽपि श्रवणपुटपेयेन वचसा।
न चान्ये गण्यन्ते तरलकविराजप्रभृतयो
महाभागस्तस्मिन्नयमजनि यायावरकुले'।।

स हि उपाध्यायस्तेन ब्राह्मण:। तस्य पत्नी अवन्तिसुन्दर्याख्या। सा हि चौहान-वंशजेति तस्या: क्षत्रियकुलोत्पन्नत्वं प्रकल्प्य केचिद्राजशेखरमपि क्षत्रियमेव मन्यन्ते। किन्तु तन्मन्दम्। क्षत्रियो न कदाऽप्यात्मानमुपाध्यायशब्देन सङ्केतयति कामं ब्राह्मण: क्षत्रियकन्यामुपयन्तुमधिकृत:। यथोक्तं महाभारते—

'भार्याश्चितस्रो विप्रस्य द्वयोरात्मा प्रजायते।
आनुपूर्व्याद् द्वयोर्हीनौ मातृजात्यौ प्रसूयत:।।' इति।

तेन हि क्षत्रियकन्यापरिणयनमात्रेण न कस्यापि क्षत्रियत्वं सिद्ध्यति। अपरञ्च 'चाहुआनकूलं' न हि निर्विवादत्वेन चह्वानकुलमेव न च चह्वानत्वं क्षत्रियमात्रस्य लक्षणम्। ब्रह्मक्षत्रप्रसूतेऽस्मिन्नार्यवंशवृक्षे बहव उपाधिविशेषा उभावेव ब्राह्मणक्षत्रियौ सङ्केतयन्ति। नैव च क्षत्रियकन्यापरिणयनमात्रेण ब्राह्मणस्य क्षत्रियत्वमेव सिध्यति। स हि आत्मानमुपाध्याय इति स्पष्टमेव कथयति, तेन तस्य ब्राह्मणत्वं निर्विवादमेव। स हि महेन्द्रपालस्य कान्यकुब्जेश्वरस्य सभापण्डित इति तस्य स्थितिकाल: ९३७-९७७ मितवैक्रमाब्दान्तरालवर्तीति निश्चित:। यतो महेन्द्रपाल: ९६० मितवैक्रमाब्दं यावन् महीपालश्च ९०४ मितवैक्रमाब्दं यावत् कान्यकुब्जभुवं शशासेति निश्चितमेव। स हि काव्यमीमांसायां वाक्पतिराजोद्भटानन्दवर्धनादीन् स्मरति। तेषु हि वाक्पतिराजोद्भटबै काश्मीरकस्य जयापीडस्य समकालिकौ यो हि ८३६-८७० मितवैक्रमाब्दानभित: स्थितिमान्। तथैवानन्दवर्धनोऽवन्तिवर्मण: सभापण्डितो यस्य हि ९१४-९४१ वैक्रमाब्दानभित: स्थितिकाल:। यशस्तिलकचम्पूकार: सोमदेवस्तं स्मरतीति तस्य सोमदेवपूर्ववर्तित्वं तु निश्चप्रचमेव। तेन स हि आनन्दवर्धनादर्वाक् सोमदेवाद् प्राक् स्थितिमानिति। तस्य स्वाभिजनो विदर्भेषु वत्सगुल्मग्रामो यत्र स काव्यपुरुषस्य साहित्यविद्यया बध्वा सह परिणयं कथयति। काव्यमीमांसा हि साहित्यविद्याया अष्टादशस्वधिकरणेषु प्रथमाधिकरणेन कविरहस्याख्येन सह सम्बद्धा। तत्र हि अष्टादशैवाध्याया: यत्र शास्त्रसङ्ग्रहशास्त्रनिर्देश-काव्यपुरुषोत्पत्ति-शिष्यप्रतिभा-व्युत्पत्तिकविपाक-पदवाक्यविवेकवाक्यविधि-काकुप्रकार-पाठप्रतिष्ठा-काव्यार्थयोनि-अर्थानुशासन-कविचर्या-राजचर्या-शब्दार्थहरणोपायकविविशेष-कविसमय-देशकाल-विभाग-भुवनकोशा वर्णिता: क्रमेण। अयं हि ग्रन्थ: काव्यविद्याया विश्वकोश एव। साहित्यविद्याया: संक्षेपेण सर्वाङ्गविवेचको ग्रन्थोऽयं सर्वत्र समादृत:। केचिदिदं काव्यविद्याया: सम्प्रदायान्तरवत् कविशिक्षासम्प्रदायप्रवर्तनं मन्यन्ते। तत्साध्वपि। तस्य

हि एतदतिरिक्तं बालरामायण-बालभारत-विद्धशालभञ्जिका-कपूर्रमञ्जरीति चत्वारो नाट्यग्रन्थाश्च। तत्र कर्पूरमञ्जरी हि सट्टकम्। ग्रन्थस्यास्य मधुसूदनमिश्रप्रणीता मधुसूदनी विवृतिर्लभ्यते।

काव्यशास्त्रपरम्परायां धनञ्जयस्य प्रवेशस्तत्र मौलिकचिन्तनपुनरावर्तनं द्योतयति। तस्य हि दशरूपकं यद्यपि नाट्यशास्त्रसम्बद्धः तथापि रसविवेचने मौलिकं चिन्तनं प्रस्तौति।

धनञ्जयो हि विष्णुनाम्नः सुतो धनिकस्याग्रजः स हि मुञ्जसमकालिकः। मुञ्जश्च भोजस्य धारानगरीशस्य पितृव्यः १०३१-१०५१ मितवैक्रमाब्दानभितः स्थितिमान्।

दशरूपकस्य हि धनिकस्य अवलोकाख्या वृत्तिलर्जभ्यते। एतदतिरिक्तं नृसिंहभट्टस्य टीका, देवपाणेर्व्याख्या, कुरविरामस्य विवृतिः, बहुरूपमिश्रस्य टीका, वेणीधरमिश्रस्य टीका लोकमणिदाहालस्य कलाख्या टीका च समुल्लेखनीयाः। सुदर्शनस्य पाञ्चनदस्य प्रभाख्या विवृतिश्च प्रसिद्धा। तासु हि लोकमणिदाहालस्य कलाख्या टीका नाट्यविषये तुलनात्मकमध्ययनमपि प्रस्तुवन्ती सम्बद्धविषयस्य विश्वकोश एव।

ग्रन्थस्यास्योपजीव्यग्रन्थो भरप्रणीतं नाट्यशास्त्रमेव किन्तु संरचनादृष्ट्या अयं भिन्नरूपेणोपतिष्ठते। अत्र—

'नानावश्यकविस्तारः प्रस्तुतिः क्रमबद्धता।
वस्तुनेतृरसादीनां संक्षेपात् पूर्णचिन्तनम्।।
पूर्वाचार्यमतोल्लेखोऽस्वीकार्ये तस्य खण्डनम्।
स्वमतस्थापना चैव वैशिष्ट्यं दशरूपके।।
नाट्ये शमविरोधोऽथ त्रिभेदा नायिका तथा।
शृङ्गारस्य त्रयो भेदा दशरूपविशेषता।।
यथेच्छशब्दनिर्वाहछन्दोगौरवकारणात्।
लघुदीर्घसमासानां व्यत्ययो नवकल्पना।।
अनेकरूपविन्यासश्शब्दानां सूत्रधृद् यथा।
पारिभाषिकशब्दानां बाहुल्यात् विनियोजनम्।।
निद्रार्थे स्वापशब्दस्य व्याध्यर्थे आर्तिरूपतः।
मूलमात्रं समस्तस्य समस्तो मूलरूपके।।
यथेच्छमुपसर्गस्य संयोगविप्रयोजनम्।
उपसर्गान्तरञ्चैव अवमर्शविमर्शकौ।।
प्रत्ययानेकसंयोगो भाषार्थे भाषणं यथा।
पदसङ्घटनाश्लिष्टवैशिष्ट्यं दशरूपके।।'

अत्र हि ३०० कारिका सन्ति सुसन्नद्धाः! ग्रन्थोऽयं चतुर्षुप्रकाशेषु विभक्तः। प्रथमे हि प्रकाशे ग्रन्थप्रयोजनं नाट्यलक्षणं पञ्चसन्धयः अर्थोपक्षेपकाश्च सप्रपञ्चं निरूपिताः। द्वितीये हि नायिकानायकभेदवृत्त्यादीनां निरूपणञ्च। तृतीये हि नाटकलक्षणं

तत्स्वरूपञ्च सप्रपञ्चं निरूपितम्। चतुर्थो हि प्रकाशो रसविवेचकः। धनञ्जयमते रसो हि सामाजिके एवोत्पद्यते। स च विभावादिभिः स्वाद्यत्वमानीयते। रामादिगतधीरोदात्ताद्यवस्थाः परित्यक्तविशेषाः सत्यो रसहेतवो भवन्ति। काव्यार्थभेदादात्मानन्दसमुद्भवः स्वादः। स च चेतसो विकासविस्तरक्षोभविक्षेपरूपेण चतुर्विधः। ग्रन्थस्यास्य विषये एतदधिकं ज्ञानाय ग्रन्थस्य कलाटीकायां भूमिकाभागो द्रष्टव्यः।

राजानककुन्तकः काव्यशास्त्रजगति वक्रोक्तिसम्प्रदायप्रवर्तकः। तस्य हि वक्रोक्तिजीवितं काव्यालङ्कारग्रन्थेषु महनीयम्। स हि आनन्दवर्धनमतं खण्डयति इति तस्य स्थितिकालस्य पूर्वसीमा। महिमभट्टो हि तं नामत एव गृह्णाति इति तस्यावरसमा। तेन कुन्तको हि काश्मीरो वैक्रमदशमशतकोत्तरार्द्धभवः। राजशेखरस्तं नैव स्मरतीति कुन्तकस्य तत्परवर्तित्वं स्पष्टमेव।

कुन्तको हि वक्रोक्तिमेव काव्यसर्वस्वं मन्यते। तन्मते स्वभावोक्तिर्नैवालङ्कारः। तत्र हि चत्वार उन्मेषाः। प्रथमे हि काव्यस्वरूपविचारो वक्रताप्रकारनिरूपणञ्च, कविमार्गनिरूपणं तत्तद्गुणविश्लेषणञ्च। द्वितीये वर्णविन्यास पदवक्रतायाः भेदोपभेदेन सह विवेकः। तृतीये वाक्यवक्रतास्वरूपनिर्द्धारणम्। चतुर्थे प्रकरणप्रबन्धगतवक्रताप्रतिपादनमिति।

वैदग्ध्यभङ्गिभणितिरेव वक्रोक्तिः सा च षड्विधा वर्णविन्यासवक्रता-पदपूर्वार्द्धवक्रता-प्रत्ययाश्रयवक्रता-वाक्यवक्रता-प्रकरणवक्रता-प्रबन्धवक्रताभेदात्। काव्यमार्गस्त्रिविधः सुकुमार-मध्यम-विचित्रभेदात्।

ग्रन्थस्यास्य परमेश्वरदीनस्य सुधाख्या लोकमणिदाहालस्य कलाऽख्या च प्रथमौन्ष्व्यापिनौ टीकाग्रन्थौ लभ्यते। एतदधिकज्ञानार्थं कलाटीकाया भूमिका द्रष्टव्या।

भट्टनायकवत् ध्वनिविरोध्याचार्यत्वेन महिमभट्टोऽपि स्मृतः। तस्य हि व्यक्तिविवेकः प्रसिद्धो ग्रन्थः। अयं हि श्रीधैर्याख्यस्य पुत्रः श्यामलाख्यस्य शिष्यः। महिमभट्टो हि काश्मीर इति तस्य राजनकोपाधिधारित्वेन 'प्रणम्य परां वाचम्' इति कथनेन च सिध्यति। स च कुन्तकं वक्रोतिकारं— 'काव्यकाञ्चनकषाश्यमानिना कुन्तकेन निजकाव्यलक्ष्मणि' इति स्मरति, तेन कुन्तकस्थितकाल एव तस्यापि स्थितिकालस्य पूर्वसीमा। एवमेव हेमचन्द्रो हि स्वप्रणीतकाव्यानुशासनस्य स्वोपज्ञविवृतौ व्यक्तिविवेकं पङ्क्तिशोऽक्षरशश्च समुद्धरति। इयमेव महिमभट्टस्य स्थितिकालस्यावरसीमा। हेमचन्द्रो हि १२०० मितवैक्रमाब्दमभितः स्थितिमान्। एवमेव श्रीहर्षः कान्यकुब्जेश्वरस्य जयचन्द्रस्य सभापण्डितो व्यक्तिविवेकं नामत एव स्मरति—

'दोषं व्यक्तिविवेकेऽमुं कविलोकविलोचने।
काव्यमीमांसिषु प्राप्तमहिमा महिमाऽऽदृतः।।'

इति कथनेन। ग्रन्थस्यैतस्य टीकाकृद् राजानको हि रुय्यकः। स हि श्रीकण्ठचरितप्रणेतुर्मङ्खकस्य गुरुः। तेन हि तस्य स्थितिकालो विक्रमानन्तरद्वादशशतकपूर्वार्द्धमिति। अतो हि महिमभट्टस्य स्थितिकालो विक्रमानन्तरं ११००-११८० मिताब्दानभित आपततीति विपश्चितां मतम्।

ग्रन्थस्यास्य प्रयोजनं ध्वनेरनुमानेऽन्तर्भावनम्। स स्वयमेव कथयति–

'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।।' इति।

ध्वनिव्याख्यानानन्तरं बहवो हि ध्वनिविरोधिन आचार्या अपि अभूवन्, येषु हि मुकुलभट्टधनञ्जयभट्टनायककुन्तकमहिमभट्टा अप्यासन्। तेष्वपि मुकुलभट्टभट्टनायकौ मीमासकौ अभिधाप्राधान्यवादिनौ। मीमांसाशास्त्रे हि व्यञ्जनाया ध्वनेश्च न किमपि स्थानम्। महिमभट्टो हि नैयायिको यतो हि स प्रमेयभूतं ध्वनिं तु साधारणरूपेण किन्तु प्रमाणभूतान्युदाहरणानि विशेषरूपेणानुमानेऽन्तर्भावनाय प्रयतते।

व्यक्तिविवेके त्रयो विमर्शाः। तत्र हि प्रथमे विमर्शे ध्वनिलक्षणं सन्दूषितमस्ति। द्वितीये हि विमर्शे शब्दानौचित्यविचारो निरूपितो यत्र तृतीये ध्वनेरनुमानेऽन्तर्भावोपदर्शनम्। ग्रन्थस्यास्य रुय्यकेन व्याख्यानं प्रणीतमस्ति। एतदतिरिक्तं मधुसूदनस्य विवृतिरपि लभ्यते। एतदतिरिक्तं महिमभट्टस्य तत्त्वोक्तिकोशाख्यो ग्रन्थोऽपि आसीद्यत्र प्रतिभातत्त्वं सन्निरूपितमासीत्, किन्तु स सम्प्रति नैवोपलभ्यते।

यथा हि आनन्दवर्धनोदयेन काव्ये हि ध्वनिसम्प्रदाय उदितो, यथा वा वामनागमनेन रीतिसम्प्रदायो, यथा वा कुन्तमकप्रयासेन वक्रोक्तिसम्प्रदायो राजशेखराभ्युदयेन कविशिक्षासम्प्रदायश्च, तथैव क्षेमेन्द्रस्य प्रवेशेन औचित्यविचारसम्प्रदायः काव्यशास्त्रे समारब्धः। क्षेमेन्द्रो हि अभिनवगुप्तपादाचार्यस्य शिष्यः काश्मीरः। तस्य पिता प्रकाशेन्द्रः सिन्धुश्च माता। क्षेमेन्द्रप्रणीतत्वेन बहवो ग्रन्था निर्दिष्टाः सन्ति, येषु हि औचित्यविचारचर्चा, सुवृत्ततिलकं कविकण्ठाभरणञ्चेति ग्रन्थत्रयी काव्यशास्त्रसम्बद्धा। स हि काश्मीरकानन्तराजसमकालिक इति तस्यैव–

'तस्य श्रीमदनन्तराजनृपतेः काले किलायं कृतः।'

इति औचित्यविचारचर्चायां कथनाज्ज्ञायते। अनन्तराजो हि १०८५-११२० मितवैक्रमाब्देषु काश्मीरभुवं शशसेति राजतरङ्गिणीतो ज्ञायते। तस्य हि पुत्रः कलशाख्यः ११२० विक्रमाब्दादेव राज्येऽधिकृत आसीद्यद्यपि अनन्तराजः ११६८ मितवैक्रमाब्दपर्यन्तं जीवित आसीत्। तेन क्षेमेन्द्रस्यापि तावानेव स्थितिकालोऽर्थात् १०६०-११५० मितवैक्रमाब्दान्तराले हि स्थितिमान् सः।

औचित्यविचारचर्चायां हि औचित्यं हि काव्यस्य जीवितं मतम्। तत्र पदवाक्य-प्रबन्ध-अर्थ-गुण-अलङ्कार-रस-क्रिया-कारक-लिङ्गवचन-विशेषण-उपसर्ग-निपात-काल-देश-कुल-व्रत-तत्त्व-सत्त्व-अभिप्राय-स्वभाव-सारसङ्ग्रह-प्रतिभा-अवस्था-विचार-नाम-आशीः प्रभृतिकाव्याङ्गेषु औचित्यं निर्दिष्टमस्ति। यद्यपि औचित्यं तत्पूर्ववर्तिभिराचार्यैरपि सिद्धान्तितमेव निरौचित्यस्य काव्यत्वं न कोऽपि मन्यते तथापि तस्य काव्यजीवितत्वेन तु क्षेमेन्द्रेण निर्दिष्टमिति तस्यौचित्यसम्प्रदाय प्रवर्तकत्वम्।

कविकण्ठाभरणे हि कवित्वप्राप्ति-कविशिक्षाकथन-चमत्कारकथन-गुणदोष-विभाग-परिचयप्राप्त्याख्याः पञ्च सन्धयः।

सुवृत्ततिलके हि वृत्तावचय-गुणदोषकथन-वृत्तविनियोगाख्यास्त्रयो विन्यासाः।

औध्चत्यविचारचर्चाया रमाख्या रमाशङ्करत्रिपाठिप्रणीता प्रतिपदव्याख्या लोकमणिदाहालप्रणीता लीलाविवृतिश्च ज्ञाताष्टीकाः।

यथोक्तं लीलाख्यविवृत्याः प्रारम्भवाक्ये—

मेधाविनं भामहदण्डिरुद्रान् क्षेमेन्द्रमादौ मनसा प्रणम्य।

मृंडार्चको लोकमणिर्दहालो व्याख्याम्यथौचित्यविचारचर्चाम्।। इति।

भोजराजस्य सरस्वतीकण्ठाभरणं हि काव्यशास्त्रेतिहासाकाशे ध्रुवनक्षत्रम्। भोजो हि धारानगरीशः सरस्वतीलक्ष्मीभूमीनां समान एवाश्रय आसीत्। पट्टमहिषीमादाय तस्य हि चतस्रो राज्ञ्यो मताः। यथा हि केनचिद्रूपकितम्—

'स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजश्वसुः।

द्यूते रात्रिरियं कृता कमलया देवी प्रसाद्याधुना।।' इति।

भोजो हि मालवेशः काश्मीरकानन्तराजसमकालिक इति—

'स च भोजनरेन्द्रश्च दानोत्कर्षेण विश्रुतौ।

सूरी तस्मिन् क्षणे तुल्यं द्वावास्तां कविबान्धवौ।।' (७।२५९)

इति राजतरङ्गिणीवचनाज्ज्ञायते। स चेति अनन्तराजः कलशपिता। अनन्तराजश्च १०२०-११५८ मितवैक्रमाब्दानभितः स्थितिमानिति राजतरङ्गिणीतो ज्ञायते। एतदतिरिक्तं १०७८ वैक्रमाब्दे कृतं भोजस्य दानपत्रमपि लभ्यत इति तस्यापि स्थितिकालः १०३०-१११० मितवैक्रमाब्दान्तरालवर्तीति समनुमीयते।

भोजराजस्य सरस्वतीकण्ठाभरणं शृङ्गारप्रकाशश्च काव्यसम्बद्धग्रन्थौ। सरस्वतीकण्ठाभरणे हि पञ्च परिच्छेदाः, यत्र प्रथमे दोषगुणयोर्विवेचनं, तत्र पदगता षोडश वाक्यगता षोडश वाक्यार्थगता षोडशेति अष्टाचत्वारिंशद् दोषाः विवेचिताः। एवमेव शब्दगताश्चतुर्विंशतिरर्थगताश्चतुर्विंशतिरिति अष्टाचत्वारिंशद् गुणा निरूपिताः सन्ति। द्वितीये हि परिच्छेदे चतुर्विंशतिः शब्दालङ्काराः तृतीयेऽर्था लङ्काराः, चतुर्थे उभयालङ्काराः पञ्चमे हि रस-भाव-सन्धिवृत्तीनां निरूपणम्। तत्र हि—

'ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम्।

यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे।।' (१।१)

षोडश पदगतदोषाः—

'असाधु चाप्रयुक्तञ्च कष्टं चानर्थकं च यत्।

अन्यार्थकमपुष्टार्थमसमर्थं तथैव च।।

अप्रतीतमथ क्लिष्टं गूढं नेयार्थमेव च।

सन्दिग्धञ्च विरुद्धञ्च प्रोक्तं यच्चाप्रयोजकम्।

देश्यं ग्राम्यमिति स्पष्टाः दोषाः स्युः पदसंश्रयाः।। (१।४—५)

षोडश वाक्यदोषाः—

शब्दहीनं क्रमभ्रष्टं विसन्धि पुनरुक्तिमत्।

व्याकीर्णं वाक्यसङ्कीर्णमपदं वाक्यगर्भितम्।।

द्वे भिन्नलिङ्गवचने द्वे च न्यूनाधिकोपमे।
भग्नच्छन्दो यती च द्वे अशरीरमरीतिमत्।। (१।१८–१९)

वाक्यार्थदोषा यथा–

अपार्थं व्यर्थमेकार्थमसंशयमपक्रमम्।
खिन्नं चैवाभिमात्रञ्च परुषं विरसं तथा।।
हीनोपमं भवेच्चान्यदधिकोपममेव च।
असदृक्षोपमं चान्यदप्रसिद्धोपमं तथा।
निरलङ्कारमश्लीलं विरुद्धमिति षोडश।। (१।४५–४७)
एवं पदानां वाक्यानां वाक्यार्थानाञ्च यः कविः।
दोषानहेयतयावेत्ति स:काव्यं कर्तुमर्हति।। (१।५८)

त्रिविधाश्च गुणाः काव्ये बाह्या आभ्यन्तरा वैशेषिकाश्च। बाह्या शब्दगुणाः, आभ्यान्तरा अर्थगुणाः, वैशेषिकास्तु दोषत्वेऽपि ये गुणाः।

अलङ्कृतमपि श्रव्यं न काव्यं गुणवर्जितम्।
गुणयोगस्तयोर्मुख्यो गुणालङ्कारयोगयोः।। (१।५६)
चतुर्बिंशतिराख्यातास्तेषु ये शब्दसंश्रयाः।

ते च यथा–

श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदारता।।
ओजस्तथान्यदौर्नित्यं प्रेयानथ सुशब्दता।
तद्वत्समाधिः सौक्ष्म्यञ्च गाम्भीर्यमथ बिस्तरः।।
सङ्क्षेपः सम्मिततत्त्वञ्च भाविकत्वं गतिस्तथा।
रीतिरुक्तिस्तथा प्रौढिः...................।। (१।६३–६५)

त एव वाक्यार्थगुणाः। दोषा अपि प्रकरणवशाद् गुणा भवन्ति–

किञ्चिदाश्रयसम्बद्धाद् धत्ते शोभामसाध्वपि।
कान्ताविलोचनन्यस्तं मलीमसमिवाञ्जनम्।। (१।१०६)

ये हि शब्दमलङ्कर्तुं क्षमास्ते शब्दालङ्काराश्चतुर्विंशतिः। ते च-जाति-गति-रीति-वृत्ति-छाया-मुद्रा-उक्ति-युक्ति-भणिति-गुम्फना-शय्या-पणिति-यमक-श्लेष-अनुप्रास-चित्र-वाकोवाक्य-प्रहेलिका-गूढ-प्रश्न-उत्तर-आध्येय-श्रव्य-प्रेक्ष्य-अभिनी-तयश्च। अर्थालङ्काराश्च जाति-विभावना-हेतु-अहेतु-सूक्ष्म-उत्तर-विरोध-सम्भवा-अन्योन्य-परिवृत्ति-निदर्शना-भेद-समाहित-भ्रान्ति-वितर्क-मीलित-स्मृति-भावाः प्रत्यक्ष-उपमान-अनुमान-शब्द-अर्थापत्ति अभावाश्च। एवञ्च–

शब्देभ्यो यः पदार्थेभ्य उपमादिः प्रतीयते।
विशिष्टोऽर्थः कवीनां ता उभयालङ्क्रियाः प्रियाः।। (४।१)

ते च उपमा-रूपक-साम्य-संशयोक्ति-अपह्नुति-समाध्युक्ति-समासोक्ति-

उत्प्रेक्षा-अप्रस्तुतप्रस्तुति-तुल्ययोगिता-उल्लेख-सहोक्ति-समुच्चय-साक्षेप-अर्थान्तरन्यास-विशेषपरिष्कृति-दीपक-क्रम-पर्याय-अतिशय-श्लेष-भाविक-संसृष्टयश्च-तुर्विंशति:। एवं हि रसविषयेऽपि भोजस्य दृष्टिर्विलक्षणैव। यथा-

नवोऽर्थ: सूक्तिरग्राम्या श्रव्यो बन्ध: स्फुटा श्रुति:।
अलौकिकार्था युक्तिश्च रसमाहर्तुमीशते।।
वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्चवाङ्मयम्।
सर्वासु ग्राहिणीं तासु रसोक्तिं प्रतिजानते।। (५।७—८)
चतुर्विंशतिरित्युक्ता रसान्वयविभूतय:।
स्वरूपमासां यो वेद स काव्यं कर्तुमर्हति।। इति। (५।१२)

सरस्वतीकण्ठाभरणस्य रत्नेश्वरेण (१५०० वै०) प्रणीता रत्नदर्पणाख्या व्याख्या लभ्यते तृतीयपरिच्छेदान्ता। चतुर्थस्य हि परिच्छेदस्य जगद्धरविरचिता टीका, चतुर्थपञ्चमयो: जीवानन्दप्रणीता व्याख्या च लभ्यन्ते।

शृङ्गारप्रकाशश्चास्यापरो ग्रन्थ:। अत्र हि षट्त्रिंशत्प्रकाशा:। तत्र हि आद्याष्ट-प्रकाशेषु शब्दार्थविषयकवैयाकरणमतानि निरूपितानि। नवमे गुणा: दशमे दोषा: एकादशे महाकाव्यं द्वादशे नाट्यच्च सप्रपञ्चं निरूपितानि। शेषेषु चतुर्विंशतिप्रकाशेषु साङ्गोपाङ्गं रसा विवेचिता:। भोजमते तु शृङ्गार एव सर्वरसेश्वर: सर्वरसानां रसश्च। यथोक्तम्—

शृङ्गारवीरकरुणाद्भुतरौद्रहास्यबीभत्सवत्सलभयानकशान्तनाम्न:।
आम्नासिषुर्दशरसान् सुधियो वयं तु शृङ्गारमेव रसनाद्रसनामनाम्।। इति।

किन्तु तन्मते य: शृङ्गार: स न केवलं यूनो: परस्पराकाङ्क्षात्मापितु धर्मार्थकाम-मोक्षाख्यचतुर्विधभेदात्मक:। काव्यशास्त्रकानने हि शृङ्गारप्रकाश: सर्वाधिकदीर्घकायं पुष्पं सर्वोत्कृष्टञ्च।

मम्मटाचार्यस्य काव्यप्रकाश: काव्यशास्त्रजगति तरुणभास्कर एव। स हि काव्यशास्त्रस्य सहस्राब्धर्जितानुभवं संगृह्णाति। यद्यपि ग्रन्थस्यास्य कारिकाभागस्य प्रणेतृविषये सम्प्रत्यपि विवादो विद्यत एव तथापि महत्त्वमेतस्य न तेन कदापि हीयते। अस्य कारिकाभागकारविषयमवलम्ब्य त्रय: सम्प्रदाया: प्रचलिता: सन्ति। केचिदस्य कारिकाभागं भरतमुनिप्रणीतं मन्यन्ते। तेषु हि प्रायो गौडीया विचक्षणा: सन्ति, येषु साहित्यकौमुदीकारो विद्याभूषण: आदर्शाख्यटीकाकारो महेश्वरश्च समुल्लेखनीयौ। ते हि मम्मटाल्लटौ वृत्तिकारावेव मन्यन्ते।

अपरे तत्परिकरावधि कारिकावृत्तिभागौ मम्मटप्रणीतौ तदनन्तरभागश्चाल्लटप्रणीत इति कथयन्ति। तेषु हि काव्यप्रकाशनिदर्शनाऽऽख्यव्याख्याकृद् राजानक आनन्दो मुख्य:।

इतरे तु समग्रस्यैव ग्रन्थस्य युग्मकर्तृत्वं मन्यनते। तेषु हि अमरुकशतकव्याख्या-कृदर्जुनदेव: काव्यप्रकाशस्य सङ्केतटीकाकृद् रुचकश्चोल्लेखनीयौ।

विद्याभूषणो हि साहित्यकौमुदीकार: स्पष्टमेव काव्यप्रकाशस्य कारिकाभागस्य भरतप्रणीतत्वं वृत्तिभागस्य तु मम्मटाल्लटकर्तृत्वं कथयति। यथोक्तम्—

सूत्राणां भरतमुनीशवर्णितानां वृतीनां मितवपुषां कृतौ ममास्याम्। लक्ष्माणां हरिगुणशालिनाञ्च सत्त्वात् कुर्वन्तु प्रगुणधियो वतावधानम्। स हि परिशिष्टात्मकत्वेन एकादशतमं परिच्छेदमपि पठति। एवमेव—

'मम्मटाद्युक्तिमाश्रित्य मितां साहित्यकौमुदीम्।
वृत्तिं भरतसूत्राणां श्रीविद्याभूषणो व्यधात्।।' इति।

पुष्पिकावाक्यञ्च यथा—

'इति श्रीभरतसूत्रवृत्तौ साहित्यकौमुद्यामर्थालङ्कारनिरूपणं नाम दशमः परिच्छेदः' इति।

साहित्यकौमुद्याः कृष्णानन्दिनीव्याख्याकारोऽपि—

'सद्भिः पद्यैः कारिका भारतीयैः शुद्धिं निन्ये तुच्छपद्यैरनच्छाः।
साहित्याम्भोजन्मसच्चञ्चरीकः सोऽयं विद्याभूषणोऽस्मात् पुनीताम्।।'

काव्यरसास्वादनाय वह्निपुराणादिदृष्टां साहित्यप्रक्रियां भरतः संक्षिप्ताभिः कारिकाभिर्निबबन्ध। कारिकास्ता व्याचिख्यासुर्वृत्तिकृन्मङ्गलमाचरति....इति।

एवमेव काव्यप्रकाशस्यादर्शटीकाकृन्महेश्वरोऽपि मन्यते।

काव्यप्रकाशस्य कारिकावृत्तिभागभिन्नकर्तृत्ववादिनः स्वमतसमर्थनाय प्रायस्तिस्रो युक्तीः समुपस्थापयन्ति। कतिपया हि कारिका विशेषतो रससम्बद्धा भरतप्रणीत-नाट्यशास्त्रे यथावदुपलभ्यन्ते, यदि हि मम्मटः आसां प्रणेता तदा तेषामपि निबन्धनं स्वसम्पादितमेव स्यात्। एवमेव वृत्तिप्रारम्भवाक्ये परामृशति इत्यत्रान्यपुरुषप्रयोगोऽपि तदेव समर्थयति। एवञ्च 'तद्रूपकमभेदो य उपमानोपमेययोः। समस्तवस्तुविषयं श्रोता आरोपिता यदा' इत्यस्य व्याख्याने 'बहुवचनमविवक्षितम्' इति वृत्तावुक्तम्। स्वप्रणीतत्वे तु तस्य कारिकासमालोचनस्य नैवावश्यकतोदेति इति च कारिकावृत्तिभागयोर्भिन्नकत्वं सिध्यतीति।

तदनुमोदकास्तुतेषां मते न किमपि सारं पश्यन्ति। तदनुसारेण रससम्बद्धानि त्रीणि सूत्राणि तु भरतनाट्यशास्त्रे समुपलभ्यन्ते किन्तु शेषाणां तत्रानुपलभ्यतया न हि सर्वासामेव भरतकर्तृकत्वं सम्भवति।

प्रथमपुरुषप्रयोगस्तु अनौद्धत्यप्रवर्तनाय तथा शिष्टाचार एव 'नागेशः कुरुते सुधी' इत्यादाविव। यच्च 'बहुवचनमविवक्षितम्' इति कथितं तदपि न कारिकास-मालोचनायापितु आरोप्यद्वयस्थले नाव्याप्तिरिति प्रदर्शनायेवैति।

किन्तु प्रत्यालोचनायामपि न तथा पुष्टिदं तत्थ्यमुपतिष्ठते यतो भरतेन हि द्वादशसाहस्री संहिता प्रणीताऽऽसीदिति तु सर्वैः स्वीक्रियते एव। सम्प्रति षट्साहस्री एव समुपलभ्यते। तेन भरतशास्त्रे शेषसूत्राणामभाव इति तु निरर्थकमेव कथनम्। अपरतथ्येऽपि परामृशति इति तु अनौद्धत्यप्रदर्शनाय सर्वैरुपयुज्यत एव किन्तु तत्र प्रयुक्तो 'ग्रन्थकृत्' शब्दः पूर्वपक्षमेव पुष्णाति। अन्यत्र तथाप्रयोगादर्शनात् 'ग्रन्थकृत्प-रामृशति' इति तु व्यक्तमेव कारिकाभागस्य कर्ता पृथगेवेति सूचयति। अपरञ्च मम्मटाचार्यप्रणीतो हि शब्दव्यापारविचारो नाम ग्रन्थः समुपलभ्यते सम्प्रति। तत्र हि सप्त कारिकाः सन्ति यासु हि प्रथमपञ्चमषष्ठसप्तमकारिकाः काव्यप्रकाशगत

सम्बद्धकारिकाभिः तह नैव संवदन्ते केवलं द्वितीयतृतीयचतुर्थ्य एव संवदन्ते। यदि उभयोरेव ग्रन्थयोः समानग्रन्थकारकर्तृत्वं स्यात्तदा समाने हि विषये कारिकाग्रथनवैषम्यं नैव सम्भवेत्। तेन काव्यप्रकाशकारिकाया मम्मटकर्तत्वं नैव निर्विवादम्। असिद्धेऽपि भरतकर्तृकत्वेऽज्ञातकर्तृकत्वं कामं सम्भवं किन्तु मम्मटकर्तृकत्वं तु चिन्त्यमेव प्रतिभाति। यच्च माला तु पूर्ववत्' इत्युक्तं मालोपमा तु वृत्तावेवोक्तमिति यदुक्तं तदपि न तथा संसारे यतो हि एतावत्त्य एव कारिका इति तु न कुत्रापि ज्ञाता राजाज्ञा। सम्भवति वृत्तिकर्त्रा मालोपमाविवेचककारिकोपेक्षिता वा स्वयमेव कालविपाकेन प्रणष्टाऽपि स्यात्। यदि तथा सिध्यति तदा तु स्पष्टमेव कारिकाभागस्यान्यकर्तृकत्वं सिध्यति। विषयेऽस्मिन्-गौडीयविचक्षणानां चिन्तनं न तथा निस्सारं यथा चिन्त्यते।

कारिकाभार्गस्य मम्मटकर्तृकत्वे मतेऽपि तत्र द्वे सम्मती दृश्येते। प्रथमा च परिकरावधिर्ग्रन्थभागो मम्मटप्रणीतस्तदनन्तरभागस्तु अल्लटप्रणीत इति। द्वितीया तु समग्रस्यैव ग्रन्थस्य युग्मकर्तृकत्वं मन्यते। काव्यप्रकाशनिदर्शनाकार आनन्दः। कथयति—

'कृतः श्रीमम्मटाचार्यवर्यैः परिकरावधिः।
ग्रन्थः सम्पूरितः शेषं विधायाल्लटसूरिणा।।' इति।

स एवेदमपि कथयति—

अन्येनाप्युक्तम्—

'काव्यप्रकाशदशकेऽपि निबन्धकृद्भ्ययां,
द्वाभ्यां कृतेऽपि कृतिना रसवत्त्वलाभः। इति।

तथ्यमिदं वृत्तिपुष्पिकावाक्येऽपि कथितमेव—

इत्येष मार्गो विदुषा विभिन्नोऽप्यभिन्नरूपः प्रतिभासते यत्।
न तद् विचित्रं यदमुत्र सम्यग्विनिर्मिता सङ्घटनैव हेतुः।। इति।

अत्र माणिक्यचन्द्रः काव्यप्रकाशस्याद्यव्याख्याता यथा नानाग्रन्थगतत्वेन पार्थक्येन स्थितोऽपि यदेकरूपो भाति तत्र सङ्घटना विसंस्थुलस्य सुखबोधयैकत्र सङ्ग्रहणं हेतुः। ग्रन्थाः सर्वेऽप्यत्रान्तर्माविता इत्यर्थः। अथ चाऽयं ग्रन्थोऽन्येन आरब्धोऽपरेण च समर्थित इति द्विखण्डोऽपि सङ्घटनावशादखण्डायते। सुघटं ह्यलक्ष्यसन्धि स्यादित्यर्थ इति। अर्जुनवर्मदेवस्तु अमरुकस्य 'भवतु विदितम्' इति पद्ये 'प्रकृतितरले का नः पीडा गते हतजीविते' इत्यत्र मम्मटालकाभ्यां यथोदाहृतं दोषनिर्णये— इत्युक्त्वा काव्यप्रकाशस्य ससग्रस्यैव युग्मकर्तृकत्वं मन्यते।

भोजमनु मम्मट एवोदेति सर्वमान्यालङ्कारिकरूपेण। स हि दशमोल्लासे उदात्तालङ्कारोदाहरणे—

'यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्।'

इति प्रस्तौति। तेनास्य स्थितिकालस्य पूर्वसीमा तु भोजसमय एव अर्थात् १०२०-१११० मितवैक्रमाब्दअभितः। तेन हि सामान्यतः १०५०-११३० मितवैक्रमाब्दानभितो मम्मटस्य स्थितिकालः सिध्यति। स हि प्रायो भोजसमकालिको वा किञ्चिन्मात्रोत्तरकालवर्ती।

मम्मटस्य पिता जैयटाख्य: उव्वटकैयटौ तु तस्य भ्रातराविति सुधासागरकारेण भीमसेनोक्तं किन्तु उव्वटस्तु आत्मानं वज्रटाख्यस्य पुत्रं मन्यते तेन स हि तस्य पितृव्यपुत्र: सम्भवति। जैयटवज्रटौ हि भ्रातरौ ययो: प्रथमस्य मम्मटकैयटावपरस्य उव्वट: पुत्र:। मम्मटस्य पुत्रो हि अल्लट इति केषाञ्चिन्मतम्। अपरेषां मते तु भ्राताऽपि।

काव्यप्रकाशो हि काव्यालङ्कारग्रन्थ:। असौ हि तावत्पर्यन्तानुभूतकाव्यसम्बद्धसिद्धान्तानां सारसङ्ग्रह:। अत्र हि अनेके काव्यशास्त्रसम्बद्धसिद्धान्ता निरूपिता:। कवेर्निर्मिति' काव्यम्। तच्च यशसेऽर्थकृते शिवेतरक्षतये सद्य: परनिर्वृत्तये च भवति। अदोषौ सगुणौ प्राय: सालङ्कारौ शब्दार्थौ' काव्यम्। शक्तिर्व्युत्पत्तिरभ्यासो हि काव्यहेतु:। इदं वाच्याद् व्यङ्ग्येतिशायिनी उत्तम् उभयोस्तुल्यप्राधान्ये वा व्यङ्ग्यस्य वाच्या न्यूनप्राधान्ये गुणीभूतव्यङ्ग्यत्वेन मध्यममन्यत्त्ववरं शब्दचित्रं वाच्यचित्रञ्च। शब्दो हि त्रिविधो वाचकलक्षकवयञ्जकभेदात्। तदर्था वाच्यादय:। केषाञ्चिन्मते तात्पर्यार्थोऽपि। सङ्केतितार्थबोधको वाचक:। सा च शक्तिरभिधाख्या। सङ्केतितार्थश्चतुर्विधो जातिद्रव्यगुणक्रियारूपो वा जातिरेव। मुख्यार्थबाधे सति रूढि वा प्रयोजनमाश्रित्य ययाऽन्यर्थो बोध्यते सा लक्षणा। सा च षड्विधा। यन्निमित्तं लक्षणावलम्ब्यते सोऽर्थो यया बोध्यते सा व्यञ्जना। सा द्विविधा अभिधामूला लक्षणामूला च। शब्दार्थौ' हि अर्थव्यञ्जकौ। व्यञ्जनाविषयो ध्वनि:। स द्विविधोऽभिधामूलो लक्षणमूलश्च। लक्षणामूलो हि द्विविधोऽर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च। अभिधामूलो हि विवक्षितान्यपरवाच्यो ध्वनि:। स च अलक्ष्यक्रमलक्ष्यक्रमभेदाद् द्विविध:। आद्यो रसादि रपरो वस्त्वलङ्काररूप:। विभावानुभावव्यभिचारिभि: कार्यकारणसहकारिभूतैर्व्यक्त: स्थायिभावो रस:। नाट्येऽष्टावेव रसा: शृङ्गाराद्या:। निर्वेदस्थायिभावात्मक: शान्तो नवमो रस:। अनौचित्यप्रवर्तिता रसाभास भावाभासाश्च। संलक्ष्यक्रमव्यङ्ग्योऽअनुरणनरूपध्वनिस्त्रिविध: शब्दार्थोभयशक्त्युत्थ:। एवमेव गुणीभूतव्यङ्ग्यनिरूपणं दोषविचार:, गुणविवेक:, शब्दालङ्कारविचार:, अर्थालङ्कारविवेकश्चेति ग्रन्थस्यास्य विवेचनीयविषया:। ग्रन्थस्यास्य शताधिकाष्टीकाग्रन्था: सन्ति। कथ्यते हि प्रतिदशकं काव्यप्रकाशस्य नवीना टीका प्रणीयते इति। अस्य हि माणिक्यचन्द्रेण १२१६ वैक्रमाब्दे वैशाखे मासि प्रणीता सङ्केताख्या टीका आद्या। ततश्च सरस्वतीतीर्थस्य नालचित्तानुरञ्जनी, (१२९८ वै०), भट्टसोमेश्वरस्य काव्यादर्श:, विश्वनाथस्य दर्पण:, परमानन्दभट्टाचार्यस्य विस्तारिका, श्रीवत्सलाञ्छनस्य सारबोधिनि, भीमसेनस्य सुधा सागर:, गोविन्दस्य प्रदीप:, चण्डीदासस्य टीका, रवेर्मधुमती टीका, वामनाचार्यकृता बालचित्तानुरञ्जनी (१८०४वै), भट्टगोपालस्य साहित्यचूडामणि:, गोकुलनाथस्य गोकुलनाथीयविवरणी, हरिशङ्करस्य नागेश्वरी, नैपालकशिवराजस्य हेमवती, मधुसूदनस्य मधुसूदनी च प्रसिद्धा केचन टीकाग्रन्था:। श्रीशेषराजशमरिग्मीमहाभागेनापि काव्यप्रकाशस्य गुणवतीनम्नी विवृत्ति: प्रणीताऽऽसीदिति तत्सम्बद्धसङ्ग्रहे समुपलब्धहस्तलेखाज्ज्ञायते। विवृतिरियं विषयविमर्शिनी न तु प्रतिपदव्याख्या। यथोक्तं तत्र—

य: श्रीमम्मटभट्टविज्ञरचित: काव्यप्रकाशाभिधो
ग्रन्थस्तस्य सुबोधिनी गुणवती श्रीशेषराजेन या।

प्रारब्धा विकृतिर्बुधेन गुरुणा पूर्णेहलीलेन सा
पूर्णैषा क्रियतेऽत्र लोकमणिना तच्छिष्यसंज्ञार्थिना।।
ग्रन्थेऽस्मिन् बहवोऽर्थबोधनपराः प्राज्ञोत्तमैर्गुम्फिता–
ष्टीका सन्ति परश्शता अपि तथा श्रीमद्गुरोराज्ञया।
व्याख्यैषेह वितन्यते न च मदात्र ज्ञानदर्पेण वा
तद्विद्या निखिला स्फुरन्तु हृदये मे श्रीगुरोराशिषा।। इति।

सर्वाङ्गपूर्णालङ्कारशास्त्रप्रणयने हि मम्मटाचार्यः प्रथम आचार्यः। तत्र हि क्रमेण काव्यहेतु–काव्यलक्षण–काव्यफल–काव्यभेद–शब्दशक्ति–ध्वनिविवेक–गुणीभूतव्यङ्ग्य–काव्यगुण–शब्दार्थालङ्काराः निरूपिता दशसूल्लासेषुं। परिमितशब्दावल्या सुविस्तृतविषयप्रतिपादनमेव मम्मटस्य वैशिष्ट्यम्।

सागरनन्दिनो 'नाटकलक्षणरत्नकोषः' नाट्यविषयप्रतिपादकः। धनञ्जयस्य (वै० १००००–१०८०) दशरूपकप्रणयनस्यैकशताब्द्यनन्तरं पणीतौऽसौ ग्रन्थः। नन्दिवंशोद्भवः सागरो राजशेखरस्य विद्धशालभञ्जिकामुद्धरतीति तस्य राजशेखरस्थितिकाल एव पूर्वसीमा। राजशेखरो हि वैक्रमदशमशतकोत्तरार्द्धभवः समुपलब्धप्रमाणतो हि सागरनन्दिनः स्थितिकालो विक्रमानन्तरद्वादशशतकोत्तरार्द्धा– ऽनुमीयते। अत्र हि नाटकलक्षणं कथावस्तुनः स्वरूपं तस्यावस्थार्थप्रकृतिसन्धिसन्ध्यङ्ग– सन्ध्यन्तर–पताका–स्थानक–वृत्ति–लक्षण–भूषण–गुण–रसभावादि–भाषाविधानपात्रविवेक–नायकनिरूपण–नायिकाविवेक–रूपकोपभेदप्रभृतिविषयाः सप्रपञ्चं निरूपिताः सन्ति। ग्रन्थोऽयं नाट्यविद्यायाः समग्रमवयवं तु नैव प्रस्तौति तथापि यदेव निरूपितं तत्सटीकं निरूपितमस्ति।

राजानकरुय्यकस्य 'अलङ्कारसर्वस्वस्य काव्यशास्त्रजगति प्रवेशोऽपि महत्त्वमावहति। रुय्यको हि काश्मीरः काव्यप्रकशस्य सङ्केताख्यटीकां प्राणैषीदिति स्पष्टमेव तस्य मम्मटानन्तरवर्तितत्वम्। तथैव सः १२०२ मितवैक्रमाब्दमभितः प्रणीतात् मङ्खकस्य श्रीकण्ठचरिताच्छ्लोकानुद्धरतीति तस्य मङ्खकसमकालिकत्वम्। मङ्खको हि तस्य शिष्य इत्यपि प्रसिद्धिः। तेन हि रुय्यकस्य स्थितिकालो विक्रमानन्तरद्वादशशतकपूर्वार्द्ध इत्यसंशयमेव। तस्य हि काव्यप्रकाशस्य सङ्केतटीका, व्यक्तिविवेकस्य टीका, सहृदयलीला, अलङ्कारसर्वस्वञ्च प्रसिद्धा ग्रन्थाः।

अलङ्कारसर्वस्वे हि एकादशशब्दालङ्काराः अशीतिमितार्थालङ्काराश्च निरूपिताः सन्ति। अस्य हि सन्ति तिस्रः प्रकाशिता अप्रकाशितास्ततोऽप्यधिकाष्टीकाः। तासु हि श्रीविद्याचक्रवर्तिनः सञ्जीवनी समुद्रबन्धस्य विवरणं, जयरथस्य विमर्शिनी च ज्ञाताः। श्रूयतेऽस्य अलंकप्रणीता टीकाऽपि।

हेमचन्द्राचार्यस्य काव्यानुशासनं स्वविषये सर्वाङ्गपूर्णो ग्रन्थः। सामान्यतो भोजीयं सरस्वतीकण्ठाभरणं विशेषतो मम्मटं काव्यप्रकाशमुपजीव्यति। ग्रन्थेऽस्मिन् काव्यप्रयोजन–कारण—स्वरूप–गुण–दोष–अलङ्कार–रस–शब्दार्थस्वरूप–भेद–पदवाक्यार्थ–दोष—नायकादि–काव्यभेदाश्च प्रपञ्चं निरूपिताः सन्ति।

हेमचन्द्रो हि ११४५ मितवैक्रमाब्दे जनिं लब्ध्वा १२२९ मितवैक्रमाब्दे निर्वाणमाप्तवान्। स हि अनहिलपट्टनस्य चालुक्यवंशस्य राज्ञः सिद्धराजस्य

(११५०-१२००वै०) सभापण्डितस्तत्पुत्रस्य कुमारपालस्य च गुरुः। तत्प्रणीताः सन्त्यनेके ग्रन्थाः येषु सिद्धहेमशब्दानुशासनं व्याकरणसम्बद्धं काव्यानुशासनं काव्यशास्त्रीयञ्च प्रसिद्धौ। काव्यानुशासनस्य स्वोपज्ञा अलङ्कारचूडामणिसंज्ञिता वृत्तिरस्ति। अष्टस्वध्ययायेषु प्रविभक्तोऽयं ग्रन्थः स्वपूर्ववर्तिमतान्तरं साधु सङ्गृह्णाति। सवृत्तिकस्यैव ग्रन्थस्य काव्यानुशासनं नाम न तु मूलमात्रस्य। तस्य च विवेकाख्या स्वोपज्ञव्याख्याऽपि लभ्यते। बृहत्कलेवरेऽपि ग्रन्थेऽस्मिन् न किमपि नवीनं वस्तु।

रामचन्द्रगुणचन्द्रप्रणीतो नाट्यदर्पणः काव्यशास्त्रेऽपरो ग्रन्थः। ग्रन्थोऽयं नाट्यविषयसम्बद्धः प्रायेण दशरूपकानुसारी। ग्रन्थेऽस्मिन् चत्वारो विवेकाः। तत्र प्रथमे हि विवेके नाट्यनिर्णयः द्वितीये प्रकरणाद्येकादशरूपनिर्णयः तृतीये वृत्तिरसभावाभिनयविचारः चतुर्थे तु सर्वरूपकसाधारणलक्षणविचारश्च विषयाः। शान्तस्य नाट्येऽपि नवमरसत्वसाधनं ग्रन्थस्यास्य वैशिष्ट्यम्। यथोक्तं तत्र—

संसारभयवैराग्यतत्त्वशास्त्रविमर्शनैः।
शान्तोऽभिनयनं तस्य क्षमाध्यानोपकारतः।। (३।२०)

युग्मकर्तृकस्य ग्रन्थस्यास्य ग्रन्थकाराभ्यामेव प्रणीता वृत्तिर्लभ्यते।

गुणचन्द्रस्य तु पृथग्ग्रन्थो नैवोपलभ्यते किन्तु रामचन्द्रस्य हि १९० मिता ग्रन्था आसन्निति कथ्यते। तौ हि हेमचन्द्रस्य साक्षाच्छिष्यावास्तामिति। तेन हि तयोः स्थितिकालः ११५०-१२३१ मितवैक्रमाब्दान्तरालवर्ती। कथ्यते हि रामचन्द्रोऽजयपालेन १२३१ तमे वैक्रमाब्दे मृत्युदण्डेन घातित इति।

काव्यशास्त्रेतिहासे वाग्भट्टस्य प्रवेशः स्वकीयं वैशिष्ट्यमादधाति। अस्य हि वाग्भटालङ्कारसंज्ञको ग्रन्थः काव्यशास्त्रीयः। केचित्तु काव्यानुशासन-अष्टाङ्गहृदयप्रभृतिग्रन्थानां प्रणेतृत्वेनामुमेव गृह्णन्ति किन्तु यथार्थतस्तु न तथा। काव्यानुशासनकारो हि गुणनिरूपणप्रसङ्गे स्वयमेव इति 'दण्डिवामनवाग्भटादि प्रणीता दशकाव्यगुणाः वयन्तु माधुर्योजःप्रसादलक्षणांस्त्रीनेव गुणान्मन्यामहे। शेषास्तेष्वन्तर्भवन्ति।' इति। कथयति पुनश्च स तत्रैव 'यदाह-माधुर्यौ' जःप्रसादाख्यास्त्रयस्ते पुनर्दश......' इत्यादिकाव्यप्रकाशकारिकामुद्धरति। एतेन स्पष्टमेवेदं यद् वाग्भटालङ्कारस्य प्रणेता वाग्भटः, काव्यानुशासनकृतोऽन्य एव पूर्ववर्ती च असौ हि सोमाख्यस्य पुत्रः। तस्य हि स्थितिकालः ११३०—१२३० मितवैक्रमाब्दानभितोऽनुमितः। स हि ११५०—१२११ मितवैक्रमाब्दानभितः सिंहासनासीनस्य जयसिंहस्य मुख्यामात्यो गुरुश्च। अष्टाङ्गहृदयकृद् वाग्भट्टस्तु सिंहगुप्तसूनुः, वाग्भटालङ्कारकृतोऽन्य एव। काव्यानुशासनकृद् वाग्भटस्तु नेमिकुमारस्य सुत इति ग्रन्थकारस्यैव स्वोपज्ञातवृत्तितो ज्ञायते। सिंहगुप्तस्य पिताऽपि वाग्भटाख्य एवाऽऽसीदिति—

'भिषग्वरो वाग्भट इत्यभून्मे पितामहो नामधरोऽस्मिन् यस्य।
सुतोऽभवत्तस्य च सिंहगुप्तस्तस्याऽप्यहं सिन्धुषु लब्धजन्मा।।

(अष्टाङ्गसङ्ग्रहे ५०।१३२)

इति कथनाज्ज्ञायते। ते न हि चत्वारो वाग्भटनामधारिणो विचक्षणा दृश्यन्ते। एको वाग्भटालङ्कारस्य प्रणेता सोमाख्यस्य सूनुर्जयसिंहस्य गुरुः ११३०—१२३०

मितवैक्रमाब्दानभित: स्थितिमान्, द्वितीयस्तु काव्यानुशासनस्य प्रणेता नेमिकुमारसूनुः महाकविर्नलोकपुरवास्तव्यः, तृतीयो हि अष्टाङ्गहृदयस्य प्रणेता अष्टाङ्गसङ्ग्रस्य च कर्ता सिंहगुप्तसूनुः सिन्धुवास्तव्यश्चतुर्थतस्यैव पितामहश्च।

वाग्भटालङ्कारो हि काव्यशास्त्रसम्बद्धो ग्रन्थः। अत्र हि पञ्च परिच्छेदाः। अत्र हि काव्यशास्त्रस्य सर्वेऽपि विषयाः साररूपेण निरूपिताः। अस्य हि जिनवर्धनप्रणीता, सिंहसिंहदेवगणिप्रणीता, क्षेमगणिप्रणीता, अनन्तभट्टसुतगणेशप्रणीता राजहंसोपाध्याय-प्रणीता चेति पञ्च व्याख्याः सन्ति।

अरिसिंह-अमरचन्द्राभ्याञ्च प्रणीता 'काव्यकल्पलता' हि कावयशास्त्रेतिहासे प्राप्तस्पदा। उभये जिनदत्तसूरिणः शिष्यौ। काव्यकल्पलतावृत्तौ हि चत्वारि प्रतानानि-छन्दः, सिद्धिः, शब्दसिद्धिः, श्लेषसिद्धिः, अर्थसिद्धिश्चेति। अनयोर्हि स्थितिकालो विक्रमानन्तरत्रयोदशशतकपूर्वार्द्ध' इत्यनुमितः।

देवेश्वरस्य कविकल्पलताऽपि प्रसङ्गेऽस्मिन् स्मरणीया। अस्य हि स्थितिकालो वैक्रमचतुर्दशशतकमितः। असौ हि काव्यकल्पलताया एवच्छाया।

वाग्भटस्य हि नेमिकुमारसूनोः काव्यानुशासनं काव्यशास्त्रसम्बद्धं विषयं संक्षेपेण वर्णयति। अस्य स्थितिकालो विक्रमानन्तरत्रयोदशशतकोत्तरार्द्धमितः। ग्रन्थोऽयं हेमच-न्द्रानुसारी। ग्रन्थस्यास्य ग्रन्थकर्तुरिव स्वोपज्ञा वृत्तिर्लभ्यते। अत्र हि पञ्चाध्यायाः। तत्र प्रथमे हि काव्यसमय-काव्यस्वरूप-भाषाभेदादिविवेचनं, द्वितीये शब्दार्थदोषनिरूपणं गुणविवेचनञ्च, तृतीये हि अर्थालङ्कारविवेकः चतुर्थे हि शब्दालङ्कारविचारः पञ्चमे तु रसनिरूपणमिति।

जयदेवस्य चन्द्रालोको नितरां निरूपणीयो ग्रन्थः। यद्यपि जयदेवस्य देशका-लविषये सम्प्रत्यपि विवाद एव पण्डितानां तथापि एतावत्तु निर्णीतमेवं यच्चन्द्रालोकस्य प्रसन्नराघवस्य च प्रणेता एक एव जयदेवो महादेवस्य तनयः सुमित्राकुक्षिजः। गीतगोविन्दकारस्तु भोजदेवाख्यस्य सुतो राधादेवीगर्भजः। चन्द्रालोककारो जयदेवो हि रुय्यकपरवर्तित्वं विश्वनाथो हि प्रसन्नराघवस्य 'कदली कदली करभः करभः करिराजकरः करिराजकरः' इत्यादिपद्यम् अर्थान्तरसङ्क्रमितवाच्यस्योदाहरणे समुद्ध-रतीति तस्य तत्पूर्ववर्तित्वञ्च। रुय्यकस्य स्थितिकालो द्वादशशतकपूर्वाद्धमितो विश्वनाथस्य च पञ्चदशशतकपूर्वार्द्ध इति तयोरन्तरालवर्तिनो जयदेवस्य पीयूषवर्षस्य स्थितिकालः १२६०-१३४० मितवैक्रमाब्दानभित आपतति। चन्द्रालोके हि दश मयूखाः। तत्र प्रथमे ग्रन्थप्रयोजनं, काव्यकारणं, काव्यस्वरूपकथनं, शब्दत्रैविध्यकथनं, द्वितीये दोषनिरूपणं, तृतीये लक्षणनिरूपणं, चतुर्थे गुणविवेकः, पञ्चमेऽलङ्कार-निरूपणम्, षष्ठे रसनिरूपणं, सप्तमे व्यञ्जनाया ध्वनेश्च निरूपणं, अष्टमे गुणीभूतव्य-ङ्ग्यनिरूपणं, नवमे लक्षणनिरूपणं, दशमेऽभिधाविवेक इति। ग्रन्थस्यास्य प्रद्योतनस्य शरदागमः वैद्यनाथस्य रमा, गंगाभट्टस्य राका, नन्दकिशोरशर्मणः, पौर्णमासौ, विरूपाक्षस्य शारदशर्वरी, तथैव चन्द्रालोकदीपिका, निगूढार्थदीपिका, बालचन्द्रचन्द्रिका, एवमेव कृष्णमणेर्विमलाख्या, हरेकान्तमिश्रस्य इन्दुश्रीसंज्ञिता, गौरीनाथपाठकस्य चन्द्रिका च ज्ञाता केचन व्याख्याग्रन्थाः।

विद्याधरस्य एकावली काव्यशास्त्रे स्तुतिसाहित्यं प्रवेशयति। स हि १३३७-१३७१ मितवैक्रमाब्दानभितः स्थितिमत उत्कलाधिपतेर्नरसिंहदेवस्य सभापण्डित आसीत्। तेन स एव तस्य स्थितिकालोऽपि। ग्रन्थेऽस्मिन्नष्टावुन्मेषा काव्यस्वरूपवृत्तिविचार-ध्वनिभेद-गुणीभूतव्यङ्ग्यगुणरीतिदोषशब्दालङ्कारार्थालङ्काराख्याः। ग्रन्थोऽयं काव्यप्रकाशमलङ्कारसर्वस्वञ्चोपजीवति। अत्र नरसिंहदेवस्य उत्कलनरेशस्य ग्रन्थकर्त्रा स्वयम्प्रणीतानि स्तुतिपद्यानि उदाहृतानि सन्ति। स स्वयमेव कथयति—

'एष विद्याधरस्तेषु कान्तासम्मितलक्षणम्।
करोमि नरसिंहस्य चाटुश्लोकानुदाहरन्।।'

ग्रन्थस्यास्य मल्लिनाथप्रणीता तरलाटीका लभ्यते।

विद्यानाथस्य प्रतापरुद्रयशोभूषणमपि एकावलीमेवानुसरति। ग्रन्थोऽयं आन्ध्रप्रदेशस्य काकतीयवंशस्य राज्ञः प्रतापरुद्रस्य प्रशंसायां ग्रन्थकर्त्रैव प्रणीतानि पद्यान्युदाहरणत्वेनोपस्थापितानि सन्ति। तस्य च स्थितिकालः १३५५-१३७४ मितवैक्रमाब्दानभितः,, स एव विद्यानाथस्यापि स्थितिकालः। अत्र हि नायकप्रकरणं काव्यप्रकरणं, नाटकप्रकरणं, रसप्रकरणं, दोषप्रकरणं, गुणप्रकरणं, अलङ्कारप्रकरणञ्चेति सप्त प्रकरणानि। नायकप्रकरणे नायकगुणा नायकस्वरूपं, नायकविशेषाः शृङ्गारनायकाः पीठमर्दादयः, शृङ्गारनायिका, अलङ्कार्यालङ्कारभावस्य तथा रसप्राधान्य-अलङ्कारप्राधान्यवस्तुप्राधान्यादीनां च विवेचनं काव्यप्रकरणे काव्यस्वरूपंशब्दत्रैविध्यं, वृत्तयः, रीतयः, काव्यविशेषाः, महाकाव्यादिलक्षणं, शुद्रबन्धनिरूपणं नाटकप्रकरणे, नाट्यस्वरूपं, पञ्चसन्धयः, आमुखं, वीथ्यङ्गानि नाटकलक्षणं, नाटकोदाहरणं सप्रपञ्चं निरूपितानि। ग्रन्थस्यास्य मल्लिनाथसुतस्य कुमारस्वामिनो रत्नापणाख्या टीका लभ्यते।

कविराजविश्वनाथस्य साहित्यदर्पणो हि काव्यशास्त्रस्य विश्वकोश एव। विश्वनाथो हि कलिङ्गदेश्यो महासान्धिविग्रहिकः। स हि—

सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः।
अलावुद्दीननृपतौ न सन्धिं न च विग्रहः।। (४।१४)

इति १३५३-१३७३ मितवैक्रमाब्दानभितः स्थितिमन्तं तदाख्यं देहलीशासकं स्मरति येन हि समाक्रम्य एकशिलाऽवलुण्ठिताऽऽसीत् १३६५ मिते वैक्रमाब्दे तेन हि विश्वनाथेन तदनन्तरवर्तिना भाव्यमिति तस्य पूर्वसीमा स्थितिकालस्य। काश्मीरेषु हि जम्मूप्रदेशस्थपुस्तकालये १४४० मितवैक्रमाब्दे पुनर्लिखिता साहित्यदर्पणस्य प्रतिर्लभ्यते इति नूनमेव तेन तत्पूर्ववर्तिना भाव्यमित तस्यावरसीमा स्थितिकालस्य। तेन हि १३६५-१४४० मितवैक्रमाब्दान्तरालवर्ती सः। तत्रापि प्रचार पुनलेर्खननिमित्तं न्यूनमपि त्रिंशद्वर्षमितसमयं परिकल्प्य १३३०-१४१० मितवैक्रमाब्दसमयो विश्वनाथस्थितिकालस्य।

विश्वनाथस्य हि कृतयः साहित्यदर्पणः काव्यप्रकाशदर्पणः, राघवविलासमहाकाव्यं, कुवलयाश्वचरितकाव्यं, प्रभावतीपरिणयनाटिका, चन्द्रकलानाटिका, नरसिंहविजयकाव्यं, प्रशस्तिरत्नावली चेति।

साहित्यदर्पणो हि काव्यशास्त्ररत्नभूतो ग्रन्थः। अत्र हि दश परिच्छैदाः सन्तिं,

यत्र प्रथमे काव्यविवेक:, द्वितीये शब्दशक्तय: तृतीये रसनिरूपणम्, चतुर्थे ध्वनिविवेक:, पञ्चमे व्यञ्जनावृत्तिनिरूपणं, षष्ठे काव्यविभाग:, सप्तमे दोषप्रपञ्च: अष्टमे गुणनिरूपणं, नवमे रीतिनिरूपणं, दशमे शब्दालङ्कारविचार इति विवेच्यविषया:।

काव्यशस्त्रविषये वस्तुतस्तु विश्वनाथो मम्मटमेवानुसरति किन्तु मम्मटं यत्र तत्र दूषयत्यपि। विशेषत: काव्यप्रकाशसम्मतकाव्यपरिभाषां स सर्वात्मना दोषयति स्थापयति च स्वसम्मतं लक्षणं 'वाक्यं' रसात्मकं काव्यम्' इति।

साहित्यदर्पणस्य हि सन्त्यनेकाष्टीका, यासु गन्थकारस्यैवात्मजस्य अनन्तदासस्य लोचनाख्या व्याख्या, महेश्वराख्यस्य विज्ञप्रिया टीका, रामचरणतर्कवागीशस्य विवृति:, जीवानन्दविद्यासागरस्य विमला, गुरुनाथविद्यानिधिभट्टाचार्यस्य मूलविवृत्तिसंस्कृति:, शिवदत्तस्य रुचिरा, हरिदाससिद्धान्तवागीशस्य कुसुमप्रतिमा, कृष्णमोहनस्य लक्ष्मी: शेषराजशमरिग्मीमहाभागस्य चन्द्रकला, लोकमणिदाहालस्य कलाख्या च ज्ञाता:।

साहित्यदर्पणस्य परवर्तिग्रन्थेषु प्रभाव: सुतरां स्पष्ट:। रसविवेचनेऽलङ्कारनिरूपणे काव्यभेदविवेके च तत्पश्चाद्वर्तिन: साहित्यदर्पणमेवोपजीवन्ति इति नात्युक्ति:।

शारदातनयस्य भावप्रकाशनमपि प्रसङ्गेऽस्मिन् समुल्लेखनीयम्। स हि दशरूपक-शृङ्गारप्रकाश-काव्यप्रकाशादिस्थकारिका यथास्वरूपमुद्धरति, तेन स तस्य भावप्रकाशनं स्मरतीति तस्य परसीमा स्थितिकालस्येयमेव। तेन हि शारदातनयस्य स्थितिकालो विक्रमानन्तरचतुर्दशशतकपूर्वार्द्धमित:। भावप्रकाशनं हि नाट्यविषय-सम्बद्धम्। अत्र हि भावा:, रसस्वरूपं, रसभेदा:, नायकनायिका विवेक:, नायिकाभेदा:, शब्दार्थसम्बन्ध:, दशरूपकं, नृत्यभेदा:, नाट्यप्रयोगवर्णनञ्च क्रमेण विवेचितविषया:।

आन्ध्रमण्डलगृहीतजनुषो विक्रमानन्तरचतुर्दशशतकमितस्थितिकालवत: शिङ्गभू-पालस्य रसार्णवसुधाकरो हि नाट्यविषयको ग्रन्थ:। तत्र हि रञ्जकरसकिभावाख्यास्त्रय उल्लासा:।

मैथिलस्य गणेश्वरपुत्रस्य वैक्रमपञ्चदशशतकस्थितिमतो भानुदत्तस्य रसमञ्जरी अप्येतद्विषयको ग्रन्थ:। अत्र हि रससम्बन्धविषयो निरूपितो विशेषत आलम्बनमाधृत्य ग्रन्थस्यास्य एकादशाधिकाष्टीका लभ्यन्ते यत्र गोपालचार्यस्य (१४५८ वै०) विमलाख्या टीका प्रसिद्धा। शेषास्तु अनन्तपण्डितस्य व्यङ्ग्यार्थकौमुदी, नागेशभट्टस्य प्रकाश:, शेषचिन्तामणे:, परिमल:, गोपालभट्टस्य रसिकरञ्जनी, विश्वेश्वरपर्वतीयस्य समञ्जसा, रङ्गशायिन आमोद:, आनन्दशर्मणो व्यङ्ग्यार्थदीपिका, महादेवस्य भानुभावप्रकाश:, व्रजराजस्य रसिकरञ्जनम् अज्ञातकर्तुकं स्थूलतात्पर्यार्थविवेक:, बदरीनाथस्य सुरभिश्च।

चैतन्यमहाप्रभुशिष्यस्य वृन्दावनवासिनो रूपगोस्वामिन: १५४७-१६१० मितवैक्रमाब्दमभित: स्थितिमतो वङ्गाभिजनस्य नाटकचन्द्रिका, उज्ज्वलनीलमणिश्च नाट्यविषयकग्रन्थौ। नाटकचन्द्रिकायां हि नाटकसम्बद्धलक्षणनायकसन्धिसन्ध्यङ्गानां सम्यग्विवेचनमस्ति, उदाहरणानि च ललितमाधवाद् गृहीतानि। अस्य हि बलदेवविद्या-भूषणस्य विश्वनाथभट्टाचार्यस्य व्याख्ये स्त इति श्रूयते।

उज्ज्वलनीलमणिस्तु रससम्बद्धो ग्रन्थ:। अत्र हि नायकभेदतत्सहाय भेदा:

हरिप्रियाप्रकरणं, राधाप्रकरणं, नायिकाभेदाः, यूथेश्वरीभेदाः, दूतीभेदाः, सखीप्रकरणम्, उद्दीपनविभावाः, अनुभावाः, सात्त्विकभावाः, व्यभिचारिभावाः, स्थायिभावाः, शृङ्गार-विषयञ्चेति प्रतिपादितविषया। अस्य हि जीवगोस्वामिनो लोचनरोचनी, विश्वनाथस्य उज्ज्वलनीलमणिकिरणश्च ज्ञातव्याख्याग्रन्थौ।

उभावेव ग्रन्थौ भरतमनुसरतो न तु विश्वनाथं विशेषतः गोपीकृष्णसम्बन्धे। विश्वनाथस्तत्र रसाभासमेव मन्यते गोपीनामन्यनायिकात्वेन। किन्तु रूपस्तु तन्न मन्यते। यथोक्तम्—

'यत्परोदोपपत्योस्तु गौणत्वं कथितं बुधैः।
तत्तु कृष्णञ्च गोपीश्च विनेति प्रतिपाद्यताम्।।'

एतदतिरिक्तं हि रूपगोस्वामिनः सन्त्यन्ये पञ्चदशग्रन्थाः।

केशवमिश्रस्य अलङ्कारशेखरो हि अलङ्कारसम्प्रदायस्यान्यतमो ग्रन्थः। ग्रन्थोऽयं कारिकारूपेण निबद्धः। अत्र हि काव्यलक्षणं रीतिः, शब्दशक्तिः, अष्टविधपददोषाः, अष्टादशविधवाक्यदोषाः, अष्टविधार्थदोषाः, पञ्चविधशब्दगुणाः चतुर्विधार्थगुणाः दोषाणां गुणभावं, अलङ्काराः रूपकाणि च विवेचितानि। ग्रन्थोऽयमष्टासु रत्नाख्ये-ष्वध्यायेषु विभक्तः। तस्य हि ग्रन्थकारस्यैव स्वोपज्ञावृत्तिर्लभ्यते। स हि शौद्धोदनिप्रणीतमलङ्कारशास्त्रं स्मरति किन्तु तत्सम्प्रति नैवोपलभ्यते।

केशवमिश्रो हि १६२० मितवैक्रमाब्दमभितः वङ्गाभिजनस्य कर्णपूरस्य अलङ्कार-कौस्तुभः काव्यशास्त्रपरम्परायामन्यतमो ग्रन्थः। अत्र हि दश किरणाख्या अध्यायाः। अत्र हि काव्यलक्षण-ध्वनि-गुणीभूतव्यङ्ग्य-रसभाव-गुण-शब्दार्थालङ्कार-दोष-रीतयः सप्रपञ्चं निरूपिताः सन्ति।

कर्णपूरात्मजस्य कविचन्द्रस्य 'काव्यचन्द्रिका' षोडशप्रकाशेषु विभक्ता।

शोभाकरमित्रस्य अलङ्काररत्नाकरः सूत्रशैल्यां निबद्धः। अत्र हि भामहोक्त दिशैव षट् शब्दालङ्काराः शताधिका अर्थालङ्काराश्च निरूपिताः। अस्य हि ग्रन्थकारेणैव व्याख्याऽपि प्रणीता। अस्य स्थितिकालस्तु चतुर्दशशतकमितवैक्रमाब्दानभितः।

अप्पयदीक्षितस्योदयः काव्यशास्त्रेऽपि चमत्कारातिशयं पुष्णाति। तस्य हि चतुरधिकशतमिता ग्रन्थाः सन्तीति ज्ञायते। तेषु हि चित्रमीमांसा कुवलयानन्द वृत्तिवार्तिकञ्च काव्यशास्त्रसम्बद्धग्रन्थाः।

अप्पयदीक्षितो हि दाक्षिणात्य इति तु प्रसिद्धमेव। तस्य च स्थितिकालो वैक्रमसप्तदशशतमभितोऽनुमितः। असौ हि द्रविडो भारद्वाजगोत्रीयो रङ्गनाथस्यात्मजः। वेङ्कटेशस्तस्य पोषकः। अस्य हि जन्म केचित् १५७७ तमे, अपरे तु १६०७ तमे, केचित् १५११ तमे, केचित् १६२५ तमे वैक्रमाब्दे मन्यते। एतावत्तु निश्चितमेव यदप्यदीक्षितो द्विसप्ततितमेऽब्दे शिवसायुज्यमाप्तवानिति। स हि ४७३८ मितकलि-गताब्दपर्यन्तं जीवित एवासीदिति नीलकण्ठविजयाज्ज्ञायते। स च कालः १६९६ वैक्रमाब्दसमः। तेन हि तस्य जनिः १६२५ मित वैक्रमाब्दमभित् एव सम्भवति इति वायुनन्दनपाण्डेयस्य विवेचना साध्वी दृश्यते। कुवलयानन्दो हि तस्य प्रस्तुतवि-षयसम्बद्धा प्रथमा रचना, ततश्च चित्रमीमांसा ततो हि वृत्तिवार्तिकमिति।

कुवलयानन्दो हि अर्थालङ्कसारसम्बद्धो ग्रन्थोऽर्थादर्थचित्रमीमांसेयम्। अत्र हि १२३ अलङ्कारा निरूपिता यत्र षण्णवतिस्तु जयदेवस्य चन्द्रालोकाद्यथावदेव गृहीताः, शेषा सप्तदश स्वयमेवोद्भाविता वाऽन्येभ्यो गृहीताः। ते च प्रस्तुताअल्प-कारकदीपक-मित्याध्यवसिति—ललित-अनुज्ञा-मुद्रा-रत्नावली-विशेषक-गूढोक्ति-विवृतोक्तियुक्ति-लोकोक्ति-छेकोक्ति- निरुक्ति-प्रतिषेध—विधयः।

ग्रन्थस्यास्य गङ्गाधरस्य रसिकरञ्जनी (१७५० वै०), तत्सदुपाह्ववैद्यनाथस्य अलङ्कारचन्द्रिका, आशाधरस्य अलङ्कारदीपिका, नागेशभट्टस्य, अलङ्कारसुधा विषमपदव्याख्यानषट्पदानन्दश्चं, न्यायवागीशभट्टाचार्यस्य काव्यमञ्जरी, मथुरानाथस्य कुवलयानन्दटीका, कुरवीरामस्य कुवलयानन्दटिप्पणम्, देवीदत्तस्य लघ्वलङ्कारचन्द्रिका, वेङ्गलसूरेः बुधरञ्जनी च व्याख्याग्रन्थाः।

चित्रमीमांसा हि अप्पयदीक्षितस्य द्वितीया कृतिः। ग्रन्थोऽयमर्थालङ्कारसम्बद्धः। तत्र प्रसङ्गात्काव्येभेदोऽपि वर्णितः। अत्र हि उपमा-उपमेयोपमा-अनन्वयस्मरण-रूपक-परिणाम-सन्देह-भ्रान्तिमद्-उल्लेखं-अपह्नुति-उत्प्रेक्षा-अतिशयोक्ति-संज्ञिता द्वादशैवालङ्कारा निरूपिताः। गन्थस्यास्य धरानन्दस्य सुधाख्या, बालकृष्णस्यं गूढार्थप्रकाशिका, अज्ञातकर्तुकश्चित्रलोकः लोकमणिदाहालप्रणीता लीलाख्या च व्याख्या-ग्रन्थाः। चित्रकाव्यविवेचकोऽर्थ गन्थः स्वप्रकृतौ सर्वोत्कृष्टः। गन्थोऽसावपूर्ण एव स्थितः।

वृत्तिवार्तिकमस्य तृतीयो ग्रन्थः प्रकरणसम्बद्धः। अत्र हि द्वावेव परिच्छेदौ यत्र प्रथमे मुख्यशक्तिनिर्णयो द्वितीये तु लक्षणाशक्तिनिर्णयः कृतः। ग्रन्थोऽयमपि अपूर्ण एव दृश्यते।

इतः पूर्वमेव सम्भवतो विक्रमानन्तरैकादशोत्तरार्द्धे एव स्थितिमता धर्मदास सूरिणा विदग्धमुखमण्डनं परिकल्प्य शब्दचित्रमीमांसा प्रणीताऽऽसीत्। गन्थोऽसौ चतुर्षु परिच्छेदेषु विभक्तः। अत्र हि प्रहेलिकास्तथाऽनुक्रमेण व्यस्तजातिः भेद्यभेदकजातिः, चित्रजातिः, प्रहेलिकाजातिः, कर्तृगुप्तं, कर्मगुप्तं करणगुप्तं, सम्प्रदागुप्तमपादानगुप्तं, सम्बन्धगुप्त-मध्किरणगुप्तं मात्राच्युतकमित्यादयः काव्यप्रकाराः वर्णितः सन्ति। गन्थस्यास्य सन्त्यनेकाष्टीकाः। यासु जिनप्रभस्य टीका, स्वात्मारामस्य टीका, ताराचन्द्रस्य विद्वन्मनोहरा, नरहरिभट्टस्य श्रवणभूषणं, गौरीकान्तस्य वीटिका, त्रिलोचनस्य सुबोधिनी, दुर्गादासस्य व्याख्या, शिवचन्द्रस्य विवृतिः परमेश्वरानन्दस्य व्याख्या, शेषराजश-मरिग्मीमहाभागस्य चन्द्रकलाख्या च प्रसिद्धाः कतिपयास्तु तत्रापि नामतः श्रुता एव। विश्वेश्वर पण्डितस्य कवीन्द्रकर्णाभरणं परम्परामेवेमामनुसरति।

जगन्नाथस्य पण्डितराजस्याऽभ्युदयः काव्यशास्त्रे नव्यपरम्परोद्द्योतकः। तस्य हि रसगङ्गाधरः काव्यसिद्धान्तान् नव्यन्यायपरम्परया व्याख्याति। पण्डितराजस्य स्थिति-कालोऽपि नैव विवादवाह्यः। स हि शाहजहानस्य सभापण्डित आसीदिति तस्य शाहजहानसमकालिकत्वं शाहजहानश्च १६८५ मितवैक्रमाब्दे राज्यमवाप च्यावितश्च राज्यात् १७१५ मितवैक्रमाब्दे इति पण्डितराजस्य वैक्रमसप्तदशशतकोद्भवत्वं प्रतीयते। १६९८ मितवै

इति कथयति इति मुगलप्रासादप्रवेशकाले स न्यूनमपि त्रिंशद्वर्षवयस्कस्तु आसीदेव। तत्र तेन पञ्चदशवर्षाणि व्यतीतानि। तेन यदा स देहलीं त्यक्तवांस्तदा स पञ्चचत्वारिंशद्वर्षवयस्क आसीदिति तस्य जन्म १६५५ मितवैक्रमाब्दमभितोऽनुमातुं शक्यते। १७०० मितवैक्रमाब्दमभितोऽप्यदीक्षितस्तनुं तत्याजेति तयोरपि समकालिकत्वं सिध्यति। पण्डितराजो हि १७२० मितवैक्रमाब्दपर्यन्तं जीवित एवाऽऽसीदिति तस्य आसफविलासतो ज्ञायते।

पण्डितराजो हि तैलङ्गो ब्राह्मणः। पिताऽस्य पेरुभट्टो च लक्ष्मीदेवीमाता। अस्यानेके ग्रन्था ज्ञाताः सन्ति यत्र रसगङ्गाधरः काव्यशास्त्रसम्बद्धो ग्रन्थः। गन्थेऽस्मिन् द्वे एव आनने दृश्येते, ग्रन्थश्चायमपूर्ण एव। अत्र हि काव्यस्वरूपं काव्यभेदाः रसविवेकः, शब्दगुणानां लक्षणम्, अर्थगुणानां लक्षणं, भावलक्षणं, ध्वनिविवेकः, शक्तिविवेकः अलङ्कारनिरूपणं च प्रतिपादितविषयः।

गन्थस्यास्य नागेशभट्टस्य गुरुमर्मप्रकाशः मञ्जुनाथस्य सरला, बदरीनाथस्य चन्द्रिका, केदारनाथओझामहाभागस्य रसचन्द्रिका, मधुसूदनस्य मधुसूदनी च ज्ञाताष्टीकाः। गन्थस्यास्य टीकाल्पत्वेऽस्य दुरूहतैव कारणम्। नागेशस्य मर्मप्रकाशो दूषितो मञ्जूनाथेन। तस्यैव मर्मोद्घाटनं कृतं जगगूवेङ्कटाचार्येण। हरिनाथेन च तस्य कण्टकोद्धारः कृत इति।

आशाधरभट्टस्य अलङ्कारशास्त्रसम्बद्धास्त्रयो ग्रन्थाः प्रसिद्धाः कोविदानन्दः त्रिवेणिका अलङ्कारदीपिका च। तत्र कोविदानन्दो हि कविशिक्षाविषयकः, त्रिवेगिका तु अभिधालक्षणाव्यञ्जनेति त्रिविधशक्तिनिरूपिका। यथोक्तं—

"शक्तिं भजन्ति सरला लक्षणां चतुराः जनाः।
व्यञ्जनां नर्ममर्मज्ञाः कवयः कमना जनाः।।"

अलङ्कारदीपिका तु त्रिविधप्रकरणात्मिका यत्र प्रथमे हि प्रकरणे कुवलयानन्द-कारिकाव्याख्या, द्वितीये हि रसवदाद्यलङ्काराः सलक्षणं निरूपिताः। परिशिष्टालङ्कारः सङ्करसंसृष्टादयो निरूपिताः। इति हि तत्र १२५ अलङ्कारा निरूपिताः। असौ हि अप्पयदीक्षितमुपजीवतीति तस्य स्थितिकालो विक्रमानन्तराष्टादशशतकमभित इत्यनुमीयते।

नरसिंहस्य नञ्जराजयशोभूषणं विद्यानाथस्य प्रतापरुद्रयशोभूषणशैल्या प्रणीतो-ऽलङ्कारग्रन्थः। नञ्जराजो हि वैक्रमाष्टादशशतकस्थितिमान् मैसूरराज्ये प्रधानामात्यः। अत्र हि सप्त विलासाख्या अध्याया येषु नायक-काव्य-ध्वनि-रस-दोष-नाटक-अलङ्कारा': क्रमेण विवेचिताः।

शिवरामत्रिपाठिनो रसरत्नहारः काव्यस्य रसविषयं विवेचयति। असौ हि गन्थो दशरूपकमुपजीवति। अत्र हि—

रसाश्व नायिकाभेदावस्थाग्नसखीगुणाः।
नायकास्तत्सहायाश्चालङ्काराः सत्त्वजास्तथा।।
सञ्चारिणः सात्त्विकाश्च भावा रीती रसाश्रिते।
दसदृष्टय इत्येवं स्तवका हरिगुम्फने।। इति।

ग्रन्थस्यास्य स्वोपज्ञा लक्ष्मीविहाराख्या टीका लोकमणिदाहालप्रणीता कलाव्याख्या वच लभ्येते। गन्थकारो हि त्रिलोकचन्द्रस्य पौत्रः कृष्णरामस्य पुत्रः। स हि नागेशं स्मरतीति तस्य वैक्रमाष्टादशशतकोत्पन्नत्वं सिध्यति। अस्येव नक्षत्रमालाऽख्योऽपरकाव्यशास्त्रसम्बद्धग्रन्थः।

लक्ष्नीधरतनुजनुषस्य कूर्माचलदेशीयस्य पाण्डेयकुलभूषणस्य वैक्रमाष्टादशशतकान्तिमपादे स्थितिमतः पण्डितवरस्य विश्वेश्वरस्य सन्त्यलङ्कारसम्बद्धाः पञ्च गन्था अलङ्कारकौस्तुभः, अलङ्कारमुक्तावली, अलङ्कारप्रदीपः, रसचन्द्रिका, कवीन्द्रकण्ठाभरणञ्च।

अलङ्कारकौस्तुभे हि एकषष्ट्यर्थालङ्कारा उपमादयो नाथशैल्या सप्रपञ्चं विवेचिताः। अस्य हि गन्थकारस्यैव स्वोपज्ञा व्याख्या लभ्यते। गन्थोऽयं निर्णयसागरमुद्रणालयतो मुद्रितोऽपि दुर्लभप्राय एव पुनर्मुद्रितश्चौखम्बासुरभारतीप्रकाशनात्।

अलङ्कारमुक्तावली अलङ्कारकौस्तुभस्यैव लघुरूपम्। यथोक्तं तस्यैव प्रस्तावनायां—

''नानापक्षविभावनकुतुकमलङ्कारकौस्तुभं कृत्वा।
सुखबोधाय शिशूनां क्रियते मुक्तावली तेषाम्।।'' इति।

अलङ्कारप्रदीपश्चास्यापरा कृतिः। कुवलयानन्दशैल्यामस्य गुम्फनम्। अत्र हि मूलत १३० अलङ्कारास्तद्भेदाश्च वर्णिताः।

रसचन्द्रिका हि रसविवेचिका। अत्र हि रससम्बद्धो विषयः सप्रपञ्चं निरूपितोऽस्ति। अस्यैव कृतिनः रसमञ्जरीटीकाऽपि समुपलभ्यते इति ज्ञायते।

कवीन्द्रकर्णाभरणं हि शब्दचित्रसम्बद्धो गन्थ। अत्र हि चत्वारः परिच्छेदाः। अत्र हि अष्टपञ्चाशन्मिता वृत्तजातय उपवर्णिताः। विदग्धमुखमण्डनप्रारब्धा हि परम्परैवानेन संरक्षिता दृश्यते। यथोक्तं प्रणाय वाच्यं जननीमपर्गा कवीन्द्रकर्णाभरणं स्वकीयम्। विना प्रयासं प्रतिपत्तिहेतोर्विश्वेश्वरेण क्रियते स्फुटार्थम्।।' इति।

एवञ्च पण्डितवरशिवदत्तप्रणीतं काव्यरसायनं पूर्णचन्द्रविद्यारत्नस्य काव्यदीपिका, जग्गूवेङ्कटाचार्यस्य अलङ्कारतत्त्वं, चन्द्रिकाचकोरश्च, मलयजपण्डितस्य साहित्यसार (१२२७ वै०) राजराजस्य राजराजीयं, विश्वनाथस्य साहित्यसुधाविघुः, सुखलालस्य अलङ्कारमञ्जरी, वेमभूपालस्य साहित्यचिन्तामणिः, अनुख्यमण्डनस्य जल्पकल्पलता मुग्धमेधाकरश्च, पुञ्जरजस्य ध्वनिप्रबोधः, कृष्णसुधियः काव्यकलानिधिः, कृष्णशर्मणो मन्दारमण्डपचम्पूः प्रभाकरस्य रसप्रदीपः, बलदेवविद्याभूषणस्य साहित्यकौमुदी, काव्यकौस्तुभश्च, राजशेखरस्य (१९ श० वै०) साहित्यकल्पद्रुमः, रत्नभूषणस्य काव्यकौमुदी, नरसिंहाचार्यस्य अलङ्कारेन्दुशेखरः, रामसुब्रह्मण्यशास्त्रिणोऽलङ्कारशास्त्रविलासः, नरसिंहाचार्यस्य काव्यसूत्रवृत्तिः, काव्योपोद्घातः काव्यप्रयोगविधिः अलङ्कारमाला च, धर्मसुधियः साहित्यरत्नाकरः, शठकोपाचार्यस्य अलङ्कारपरिचयः, सुधीन्द्रयोगिनः अलङ्कारविकासः वीरनारायणस्य साहित्यचूडामणिः, श्रीकृष्णाचार्यस्य अलङ्कारमणिहारः मुरारिदानस्य यशवन्तयशोभूषणम् च काव्यालङ्कारसम्बद्धाः गन्थाः।

एते ज्ञाताश्चान्येऽज्ञाताश्च शतशः ग्रन्थाः काव्यशास्त्रप्रणाली स्वस्वमनीषया

व्याख्यान्ति। तेषु हि मुख्यतः गन्थाः दृश्यन्ते काव्यसर्वाङ्गविवेचकाः, काव्यालङ्कारमात्रविवेचकाः ध्वनिविवेचकाः रसमात्रविवेचका नाट्यविवेकाश्च। भामहस्य काव्यालङ्कारः, दण्डिनः काव्यादर्शः, वामनस्य काव्यालङ्कारसूत्रवृत्तीः रुद्रटस्य काव्यालङ्कारः, सरस्वतीकण्ठाभरणं कुन्तकस्य वक्रोक्तिजीवितं मम्मटस्य काव्यप्रकाशः हेमचन्द्रस्य काव्यानुशासनं वाग्भटस्य वाग्भटालङ्कारः, वाग्भटस्य काव्यानुशासनम्, मलयजपण्डितस्य साहित्यसारः, जयदेवस्य चन्द्रालोकः, विश्वनाथस्य साहित्यदर्पणः, जगन्नाथस्यरसगङ्गाधरः काव्यसर्वाङ्गविवेचकाः।

उद्भटस्य काव्यालङ्कारसारसङ्ग्रहः, अजितसेनस्य अलङ्कारचूडामणिः, राजराजस्य राजराजीयं, धर्मदासस्य विदग्धमुखमण्डनं, शोभाकरस्य अलङ्काररत्नाकरः, अप्पयदीक्षितस्य कुवलयानदाश्चित्रमीमांसा च, विश्वेश्वरस्य अलङ्कारकौस्तुभः, अलङ्काप्रदीपः, अलङ्कारमुक्तावली च, नरसिंहाचार्यस्य अलङ्कारेन्दुशेखरः, केशवस्य अलङ्कारशेखरश्चालङ्कारमात्रसम्बद्धग्रन्थाः।

आनन्दवर्धनस्य ध्वन्यालोकः, पुञ्जराजस्य ध्वनिप्रदीपः, मम्मटस्य शब्दव्यापार विचारः, अप्पदीक्षितस्य वृत्तिवार्तिकञ्वेति ध्वनिसम्बद्धग्रन्थाः। भट्टनायकस्य हृदयदर्पणः, महिमभट्टस्य व्यक्तिविवेकः, मुकुलभट्टस्याभिधावृत्तिमातृका च ध्वनिपरिहारग्रन्थाः।

रुद्रभट्टस्य शृङ्गारतिलकं, भानुदत्तस्य रसमञ्जरी, रसतरङ्गिणी च, शिवरामत्रिपाठिनो रसरत्नहारश्च रसमात्रसम्बद्धग्रन्थाः।

भरतस्य नाट्यशास्त्रं, धनञ्जयस्य दशरूपकं, सागरनन्दिनो नाटकलक्षणरत्नकोशः, रामचन्द्रगुणचन्द्रयोर्नाट्यदर्पणः, विद्यानाथस्य प्रतापरुद्रयशोभूषणं, शारदातनयस्य भावप्रकाशनम्, रूपगोस्वामिनो नाटकचन्द्रिका, च नाट्यसम्बद्धग्रन्थाः।

रुद्रटस्य सहृदयलीला, क्षेमेन्द्रस्य कविकण्ठाभरणं, सुवृत्ततिलकमौचित्यविचारचर्चा च, राजशेखरस्य काव्यमीमांसा, अरिसिंहामरचन्द्रयोः काव्यकल्पलता, विश्वेश्वरस्य कवीन्द्रकर्णाभरणं रामानन्दस्य रसिकजीवनं च विचारग्रन्थाः।

एवमेव रस-अलङ्कार-रीति-ध्वनि-वक्रोक्ति-औचित्याख्याः षट् काव्यशास्त्रसम्प्रदायाः क्रमेण भरत-भामह-वामन-आनन्दवर्धन-कुन्तक-क्षेमेन्द्रसमर्थिताः। तत्र रससम्प्रदायो हि काव्ये इतरतत्त्वोपेक्षयाऽपि रससिद्धिं वाञ्छति। वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् इत्यस्य मार्गः। यद्यपि कमनीयमपि वपुः श्वित्रेणैकेन दुर्भगं भवति तथापि गुणसन्निपाते स्वल्पो दोषो न सङ्ख्यानाय भवति। सत्यपि सौन्दर्ये सर्वेषामेवाङ्गनां संयुक्तशक्तौ यथा तत्र वदनस्यैव प्राधान्यं तथैव काव्यं हि रसगुणालङ्काररीतिप्रभृतिसंस्कृतशब्दार्थयोरेव भवति किन्तु तत्र जीवतत्त्वं तु रस एव। गुणा हि रसस्यैव धर्मा अलङ्कारा अपि तस्यैव शोभातिशयहेतवः। रीतयोऽपि तस्यैव साधिकाः।

अलङ्कारसम्प्रदायानुसारेण अलङ्कृतावेव शब्दार्थौ' काव्यं न तु तद्धीनौ। न कान्तमपि निर्भूषं विभाति कामिनीमुखम्। निरलङ्कृतशब्दार्थयोः काव्यत्वमनुष्णस्यानलत्वमिव।

रीतिवादिनो हि पदरचनाकौशलमेव काव्यस्य जीवतत्वं मन्यन्ते, विशिष्टपदरचना रीतिः। वैशिष्ट्यच्च गुणात्मकतया।

ध्वनिप्राधान्यवादिनां मते ध्वनिरेव काव्यस्यात्मा। तस्य हि शब्दार्थौ शरीरं गुणा हि काव्यात्मनो ध्वनेर्धर्मा अलङ्कारास्तु भूषणान्येव, रीतिरपि तस्यैव निर्वाहिका।

वक्रोक्तिवादिनां मते वैचित्र्यभङ्गिभणितिरेव काव्यस्यात्मा। इतराणि तु तस्याङ्गान्येव।

औचित्यवादिमते सर्वेषामेव समन्वितमौचित्यमेव काव्यस्य साधकं भवति। अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।

वस्तुतस्तु विभागोऽयं न पारमार्थिकोऽपितु केवलमौपाधिक एव। रसत्वं काव्यात्मकत्वं न हि कोऽपि परिजिहीर्षति। रस एव काव्यस्य जीवितं गुणालङ्काररीतयस्तु तदुत्कर्षहेतव एव। अलङ्कारा अपि रसमेवालङ्कुर्वन्ति। किञ्चात्मैवालङ्कार्यो भवति। रीतिवादिनां मतेऽपि पदरचनाया वैशिष्ट्यं गुणात्मकतयैव। गुणाश्च रसस्यैव धर्मा इति रससाधकस्यैव रचनाविशेषस्य काव्यत्वं भवति। वक्रोक्तिरपि साध्यं तु रस एव। ध्वनिरपि यद्यपि वस्त्वलङ्काररूपोऽपि भवति तथापि तस्य काव्यात्मत्वं रसापेक्षयैव भवति। तेन हि पर्यवसायितया रसादिध्वनेरेव काव्यात्मत्वं सिध्यति। नितान्तौचित्ये हि न रससिद्धिः। अत एव सम्प्रदायविभागः केवलमौपाधिकरसो हि काव्यस्यात्मा। स एवालङ्कार्यतया स्थितः। आत्मनः शौर्यादय इव रसस्य माधुर्यौजःप्रसादाः यत्र चित्तद्रवीभावमयो प्रसादो माधुर्य चेतसो विकसनमोजो विस्तारश्च। गुणानां शब्दार्थयोः स्थितिस्तु गुणवृत्यैव। अलङ्कारा बाह्यधर्माः शरीरस्य कटककुण्डलादिवतो शब्दार्थोरस्थिरा धर्माः येषां प्रत्यक्षतो रससम्बद्धताः शरीरस्याङ्गसंस्थानमिव शब्दार्थयोःसङ्घटनप्रकारो रीतिः। स च गुणव्यञ्जकत्वेन रसादीनामुपकर्त्र्येव न तु साक्षाद्रससम्बद्धा। यत्र यत्र गुणवत्ता तत्र तत्र रसवत्ता। तेन हि लोकोत्तरं सरसं वाक्यं काव्यम्। वाक्यार्थ एव काव्यार्थः। तस्य च प्रयोजनमानन्दः। आनन्दो हि मनसो विषयान्तराभावावस्था। सा च रसद्वारैव भवतीति नीरसस्य न काव्यत्वम्। रसस्यापकर्षकत्वं दोषत्वं शरीरस्य काणत्वखञ्जत्वादिवत्। तेन हि काव्ये रस एव राजधर्मः। स एव काव्यात्मत्वेन सर्वमान्यः। स च रसो नैव स्वशब्देन वाच्य इति सर्वेषामेकमत्याय। स यदि हि नैव चित्रशब्देन वाच्यस्तदा कथं स साधयितव्य इति प्रश्ने सर्वेषामेकमेवोत्तरं रसो हि व्यङ्ग्यविषयः कामं तत्तात्पर्यशब्देनाभिहितं स्यात्। ननु—

> शृङ्गारी गिरिजानने संकरुणो रत्यां प्रवीरः स्मरे
> बीभत्सोऽस्थिभिरुत्फणी चं नयकृन्मूर्त्याद्भुतस्तुङ्गया।
> रौद्रो दक्षविमर्दने च हसकृन्नानः प्रशान्तश्चिरा—
> दित्थं सर्वरसाश्रयः पशुपतिर्भूयात् सतां भूतये।।

इत्यत्र कथं सर्वेषामेव रसानां स्वशब्दवाच्यता इति चेदित्थम्। न तत्र शृङ्गारशब्देन शृङ्गाररसोद्भावनम्। तत्तु गिरिजाननेनालम्बनभूतेनोद्बोधितस्तत्चेष्टया कटाक्षादिनाऽनु- भावितो हर्षौत्सुक्यादिसहकारिभिरद्धितो रतिस्थायिभाव एव शृङ्गारतां प्राप्तोऽस्ति

अवयवग्रहणेन समूहस्यैव ग्रहणमिति न्यायात्। यद्यपि क्वचित्सञ्चारिणां स्वशब्दवाच्यता न दोषाय मता यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुबधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वा ये वरमात्रसाध्वसरसा गौरी नवे सङ्गमे।
संरोहत्पुलकाहरेण हता श्लिष्टा शिवायास्तु वः।

इत्यादौ, तथापि तत्र औसुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् इति शास्त्रिणां मतम्। तेन स्थितमेतद्रसो वै न वाच्यो नैव लक्ष्यस्तत्र चारुत्वपर्यवसानाभावात्। रसो हि केवलं व्यङ्ग्य एवार्थः। स एव ध्वनिर्वा वक्रोक्तिः। संज्ञा तु यादृच्छिकी भवति।

यद्यपि ध्वन्यालोकेऽपि—

''काव्यस्यात्मा ध्वनिरिति बुधैर्य ममाम्नातपूर्व
तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।''

इत्युंक्त्वा ध्वेनेस्तमादपि प्राचीनतरत्वं तस्य भावाभावविषयश्चालेन्वितपूर्व इति ज्ञाप्यते किन्तु तद्व्यवहारिग्रन्थस्तु सम्प्रत्यपि नैवोपलब्धो ध्वन्यालोकपूर्ववर्ती। वृत्तिकारसमयेऽपि न कश्चिदपरो ध्वनिविवेचक ग्रन्थ उपलब्ध आसीद् यतो हि स परम्परया समाम्नातः' इति व्याख्याति। तस्यैव व्याख्यातुरभिनवगुतस्यापि तादृशो न कश्चिदितरग्रन्थो ज्ञात आसीद्यतो हि सोऽपि अविच्छिन्नैव प्रवाहेण तैरेतदुक्तम्। विनाऽपि विशिष्टपुस्तकेषु विवेचनादित्यभिप्राय इति श्रुतः किन्तु सम्भाव्यदूषयिष्यन्ते। अतः परोक्षत्वम्। न च भविष्यद्वस्तु दूषयितुं शक्यमनुपपन्नत्वादेव। तदपि बुद्ध्यारोपितं दूष्यत इति चेत् बुद्ध्यारोपितत्वादेव भविष्यत्वहानिः। अतो भूतकालोन्मेषात्परोक्षाद् विशिष्टाद्यतनत्वप्रतिभानाभावाच्च लिटः प्रयोगः कृतः जगदुरीति इत्यपि स निर्दिशति, तेनैव ध्वन्यालोककारिकाभाग एवास्मज्ज्ञाने प्राचीनतमो ध्वनिविवेचकग्रन्थः। केचिद्धि काव्यस्यात्मत्वेन ध्वनिं गृहणन्ति। अपरे तु ध्वनेरभावं मन्यन्ते। अन्ये तदनिर्वच-नीयमामनन्ति। सहृदयश्लाघ्योऽर्थ एव काव्यात्मा। तस्य वाच्यः प्रतीयमान श्चेति द्वौ भेदौ। प्रतीयमानार्थाक्षेपकत्वेनैव वाच्यार्थस्य काव्यात्मत्वम्। प्रतीयमानोर्थो वाच्याद्भिन्नोऽपि तदाक्षिप्तो ललनाया प्रसिद्धावयवातिरिक्तलावण्यमिव। स च वस्तुरूपोऽलङ्कारूपो रसरूपश्च। पूर्वयोर्द्वयोः काव्यात्मत्वलाभस्तृतीयसान्निध्यादेव। तेनैव वस्तुतो रसादिध्वनेरेव काव्यात्मत्वं पर्यवसायित्वेन। स च प्रतीयमानोऽर्थो विधिरूपवाच्ये प्रतिषेधरूपः प्रतिषेधरूपवाच्ये विधिरूपः, विधिरूपवाच्येऽनुभयरूपः प्रतिषेधरूपवाच्येऽनुभयरूपः, वाच्याद्भिन्नविषयो वाच्यसामर्थ्यमात्राक्षिप्तश्च। त्रयो ह्यर्थाः मुख्यलक्ष्यव्यङ्ग्यभेदात्। साक्षात्सङ्केतितविषयो मुख्यः मुख्यार्थसम्बद्धस्तत्वेन लक्ष्यमाणो लक्ष्यः मुख्यव्यतिरिक्तः प्रतीयमानो व्यङ्ग्यः। तस्य हि प्राधान्ये वा चारुत्वपर्यवसायित्वे ध्वनिर्गौणत्वे गुणीभूतव्यङ्ग्यः व्यङ्ग्यार्थो हि प्रयोजनरूपस्तेनैव केचित्तं तात्पर्यमपि वदन्ति। किन्तु तात्पर्यं हि वाच्यस्य साक्षाद्भवति व्यंग्यस्तु तदाक्षिप्तमात्र एव। यो हि निषेधे विधिरूपः, विधौ विध्यन्तररूपः, निषेधे निषेधान्तररूपः, अविधिनिषेधे विधिरूपः, अविधिनिषेधे निषेधरूपः, विधिनिषेधयोर्विध्यन्तररूपः,

विधिनिषेधयोर्निषेधान्तररूप:, विधावनुभयरूप:, निषेधेऽनुभयरूप:, विधिनिषेधयो: निषेधयोर्निषेधान्तररूप:, विधावनुभयरूप:, निषेधेऽनुभयरूप:, विधिनिषेधयोरनुरूप:, अविधिनिषेधेऽनुभयरूप:, इतिप्रभृतिविभिन्नरूपो वाक्याद्विभिन्नविषयत्वेन व्यवस्थितश्च। तस्य हि शब्दार्थाभ्यां सह व्यङ्ग्यव्यञ्जकभावसम्बन्ध:। तेन हि शब्दार्थौ तस्य व्यञ्जकौ। उपसर्जनीकृतस्वार्थ: शब्द: समर्पितस्वात्माऽर्थश्च व्यङ्ग्यार्थस्य व्यञ्जकौ। वक्त्रादिवैशिष्ट्यादर्थस्यापि व्यञ्जकत्वम्। तच्च वक्तृबोद्धव्य-काकु-वाक्यविशेष-काव्यविशेष-अन्यासक्ति-प्रस्ताव-देश-काल-चेष्टादिभिस्तेषां द्विकयोगेन, त्रिकादियोगेन चार्थस्यापि व्यञ्जकत्वं सिध्यति। तथैव न केवलं मुख्यस्यैवार्थस्यापितु लक्ष्यव्यङ्ग्यार्थयोरपि। तेन हि व्यङ्ग्योऽसौ शब्दार्थशक्तिमूल:। स चानेकार्थस्य शब्दस्य संयोगादिभिनियन्त्रितऽर्थ एकार्थबोधरूप: शब्दशक्तिमूल:। स हि पदगतो वाक्यगतश्च। संयोगादयश्च यथोक्ताभर्तृहरिणा—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थ: प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधि:।।
सामर्थ्यमौचिती देश: कालो व्यक्ति: स्वरादय:।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहतेव:।।

तथैव अभिनयोपदेशनिर्देशसंज्ञेङ्गिताकाराश्च। एवमेव वस्त्वलङ्कारयोस्तद्व्यञ्जकत्वेऽर्थशक्तिमूल: पदवाक्यप्रबन्धगत:। तत्र वस्तुना वस्तु व्यज्यतेऽलङ्कारश्च। एवमेवालङ्कारेण वस्तु व्यज्यतेऽलङ्कारश्च। रसादयश्चार्थशक्तिमूला:। काव्यस्य वाक्यार्थ एव ध्वनि:। वाच्यार्थस्तु तत्साधनमेव। यथोक्तं—

'आलोकार्थी यथा दीपशिखायां यत्नवाञ्जन:।
तदुपायतया तद्वदर्थे वाच्ये तदादृत:।।' इति।

यथा हि पदार्थद्वारा वाक्यार्थप्रतीतिस्तथैव व्यङ्ग्यस्यार्थस्यापि वाच्यार्थपूर्विका प्रतीति:। वाच्यार्थप्रतीतिपूर्वकत्वेऽपि व्यङ्ग्यस्यार्थस्य प्राधान्यं न विलुप्यते। यत्र हि शब्दोऽर्थो वा स्वार्थमुपसर्जनीकृत्य व्यङ्ग्यार्थं व्यङ्क्त: स काव्यविशेषो ध्वनि:। तेन गुणीकृतात्मा गुणीकृताभिधेयश्च शब्दो यत्रार्थान्तरमभिव्यनक्ति स ध्वनि:। व्यङ्ग्यप्राधान्ये ध्वनिर्गौणत्वे गुणीभूतव्यङ्ग्यत्वम्।

ननु यत्र प्रतीयमानार्थस्य वैशद्येनाप्रतीति: स नाम मा भूद् ध्वनेर्विषय:। यत्र तु प्रतीतिरस्ति यथा समासोक्ति-आक्षेप-अनुक्तनिमित्त-विशेषोक्ति-पर्यायोक्त-अपह्नुति-दीपक-सङ्करालङ्कारादौ तु ध्वनेर्विषयत्वं कथं निवार्यतेति दु:शङ्कैव। समासोक्तयादौ सत्यपि व्यङ्ग्ये नैव तस्य प्राधान्यमिति तेषां ध्वनेर्विषयबाह्यत्वम्। तेषु तेषु हि व्यङ्ग्यस्य वाच्यानुयायित्वं प्रसिद्धमेव। यत्रापि वाच्यस्योपसर्जनभावेन व्यङ्ग्यस्य प्राधान्यं तदा तस्य ध्वनिविषयत्वमलङ्कारस्यापततिं किन्तु न तु स एव ध्वनिरिति वक्तुं शक्यम् ध्वनेर्हि महाविषयत्वात्। तेन हि समासोक्त्यादयो वाच्यालङ्कृतय एव यत:—

''व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते।।

तत्परावेव शब्दार्थो यत्र व्यङ्ग्यं प्रति स्थितौ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः।'' इति।

अतो न ध्वनेरन्यत्रान्तर्भावो न चान्येषां ध्वनौ। गुणालङ्कारवृत्तयो हि काव्याङ्गिनो ध्वनेरङ्गानि।

स च ध्वनिर्विवक्षितवाच्योऽविवक्षितवाच्यभेदेन मूलतो द्विविधः। ध्वनिर्हि रूपभेदाद् भक्त्या नैकत्वं बिभर्ति यतः—

अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया।
किञ्च—उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद ध्वन्युक्तेर्विषयी भवेत्।

वाचकत्वाश्रयेण व्यवस्थिता गुणवृत्तिर्व्यञ्जकत्वैकमूलस्य ध्वनेर्लक्षणं न सम्भवति। मुख्यार्थबाधेन भक्ति': प्रवर्तते यदा मुख्यार्थाक्षिप्तत्वेन ध्वनिस्तेन तयोर्भिन्न एव विषयः। भक्तिस्तु कस्यचिद्ध्वनिभेदस्योपलक्षणं सम्भवति न तु तयैव ध्वनिरुपलक्ष्यते।

अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विविधं भवति अर्थान्तरे सङ्क्रमितमत्यन्ततिरस्कृतञ्च। विवक्षितवाच्यस्य तु असंलक्ष्यक्रमः संलक्ष्यक्रमश्च द्वौ भेदौ। रस-रसाभास-भाव-भावाभास-भावशान्त्यादिरसंलक्ष्यक्रमः। रसादिरर्थो हि सहेव वाच्येनावभासते। स चाङ्गित्वेनावभासमानो ध्वनेरात्मा। किञ्च—

वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्।
रसादिपरता यत्र स ध्वनेर्विषयो मतः।। इति।

यत्र च वाक्यार्थस्य प्राधान्यं रसादीनामङ्गत्वमेव तत्र रसादिरलङ्कार एव। रसादिरलङ्कारः, शुद्धसङ्कीर्णभेदाद् द्विविधः। रसभावादितात्पर्येणविनिवेशनमेव अलङ्काराणामलङ्कारत्वम्। अङ्गिभूतं रसादि ये खलु धर्मा अवलम्बन्ते तु गुणाः अङ्गाश्रितास्त्वलङ्काराः। ते च गुणाः प्राधान्येन त्रयो माधुर्यौजःप्रसादाख्याः। विप्रलम्भशृङ्गारे करुणे च माधुर्यस्य क्रमशः प्रकर्षः। रौद्रादिषु ओजसो व्यवस्थापनम्। प्रसादस्य तु सर्वत्रैव। श्रुतिदुष्टादयो दोषा ध्वन्यात्मनि शृङ्गारे हेया न तु ओजस्यपि। ध्वनौ स एवालङ्कारोऽभीष्टो यस्य रसाक्षिप्ततया बन्धः शक्यक्रियो भवति। एवञ्च—

'आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः।।'

तद्विपरीतं यथार्थः। स्वसामर्थ्यादर्थान्तरमभिव्यनक्ति शब्दव्यापारं विनैव सोऽर्थशक्त्युद्भवो ध्वनिरनुस्वानोपमव्यङ्ग्यः। प्रौढोक्तिनिष्पन्नः स्वतः सम्भवी च द्विविधोऽर्थशक्त्युद्भवो ध्वनिः। तेषु तेष्वपि—

'सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम्।
यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षम्।।'

अविवक्षितवाच्यो हि ध्वनिः पदेन वाक्येन च प्रकाश्यो भवति। असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्विवक्षितान्यपरवाच्यो वर्णपदवाक्यसंघटनाप्रबन्धेषु च दीप्यते इति

तेषां तद्व्यञ्जकत्वम्। वर्णानामनर्थकत्वात्कथं तेषां ध्वनेर्द्योतकत्वमिति नाशङ्क्य यतो हि ये खलु वर्णाः शृङ्गारे विरोधिनस्त एव बीभत्सादौ दीपकाः। तेन वर्णानामपि द्योतकत्वम्। असमासा मध्यसमासा दीर्घसमासेति त्रिविधा सङ्घटना। सा च माधुर्यादिगुणानाश्रित्य रसान् व्यनक्ति। अतस्तस्या व्यञ्जकत्वम्। तन्नियमे वक्तृवाच्ययोरौचित्यं हेतुर्विषयौचित्यञ्च। एवमेव प्रबन्धोऽपि व्यञ्जकौ ध्वनेः यत्र विभावाद्यनुकूलं कथाविधानम्, इष्टरसोचितकथोन्नयः, रसाभिव्यक्त्यपेक्षया सन्धिसन्ध्यङ्गानां घटनं, रसस्य यथावसरमुद्दीपनप्रशमने अङ्गिनो रसस्यसमाप्तेन-रनुसन्धानं, शक्तावपि अलङ्काराणामानुरूप्येणैव योजनञ्च। स च सुप्तिङ्वचनसम्बन्ध ाकारकशक्तिकृत्तद्धितसमासैश्च द्योत्यो भवति। अनौचित्यमेव रसभङ्गस्य कारणं भवति। प्रबन्धे रसविरोधश्च परिहर्तव्यः। विरोधिरससम्बन्धिविभावादिग्रहान्वितेतरवस्तुविन्या-साकाण्डविच्छत्ति-अकाण्डप्रकाशन-परिपुष्टपुनः-प्रकाशनादिः रसाबिरोधः। तत्रापि—

'वाच्यानां वाचकानाञ्च यदौचित्येन योजनम्।
रसादिविषयेणैतत्कर्म मुख्यं महाकवेः।।' इति।

एवमेव—

'रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।
औचित्यवान् यस्ता एता वृत्तयो विविधाः स्मृताः।।' इत्यपि।

गुणीभूतव्यङ्ग्यः काव्यस्यान्यः प्रकारो यत्र व्यङ्ग्यान्वये सति वाक्यचारुत्वं प्रकर्षवद्भवति। स च प्रसन्नगम्भीरपदेषु काव्यबन्धेषु योज्यः। अनेन नैतदवधेयं यद् गुणीभूतव्यङ्ग्योऽपि काव्यस्यात्मा भवतीति। वस्तुतस्तु व्यङ्ग्योपस्कृतत्वेन प्रकर्षद्वाक्यार्थोऽपि पुनः ध्वनौ पर्यवस्यतीत्येव तस्य ग्राह्यत्वम्।

'प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते।
विचातव्या सहृदयैर्न तत्र ध्वनियोजना।।'

इति कथनस्यायमेवाशयो यद्यत्र व्यङ्ग्यस्य गुणभावेनैव काव्यार्थस्य प्रकर्षत्वं भवति तत्र स एवोन्नेयोऽवसाने तु सोऽपि वाच्यार्थो ध्वनेर्विषयतामापद्यत एव।

व्यङ्ग्यस्य प्रधानगुणाभावाभ्यामुत्तममध्यमाख्ये काव्ये भवस्ततोऽन्यच्चित्रमेव। चित्रमपि शब्दवाच्यभेदेन द्विविधम् रसभावादिविषयविवक्षाविरहे योऽलङ्कारनिबन्धनः स एव चित्रविषयः। उक्तमेव—

''ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः।
अनेनानन्त्यमायाति कवीनां प्रतिभागुणः।।
अतो ह्यन्यतमेनापि प्रकारेण विभूषिता।
बाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि।।''
दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसप्रतिग्रहात्।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः।।
व्यङ्ग्यव्यञ्जकभावेऽस्मिन् विविधे सम्भवत्यपि।
रसादिमम एकस्मिन् कविः स्यादवधानवान्।।''

ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात्।
न काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभागुण:।।''

इत्थं हि ध्वनितत्त्वस्य साङ्गोपाङ्गविवेचकस्य ग्रन्थस्य सन्ति त्रयो भागा: कारिका: वृत्तिरुदाहरणानि च। तत्र वृत्तिभागस्य प्रणेता तु श्रीमानन्दवर्धन इति तु तस्या:—

''सत्काव्यतत्वविषयं स्फुरितप्रसुप्त—
कल्पं मन:सु परिपक्वधियां यदासीत्।
तद्व्याकरोत्सहृदयोदयलाभहेतो—
रानन्दवर्धन इति प्रथिताभिधान:।।''

इति पुष्पिकाद्याज्ज्ञायते। किन्तु कारिकाभागस्य क: प्रणेतेति विषयमादाय बुधा नैकमत्यं भजन्ते। केचित्तु कारिकाकृत्त्वेन वृत्तिकारमानन्दवर्धनमेवोपस्थापयन्ति। अपरे तु कारिकाकारं वृत्तिकारञ्च पृथगेव मन्यन्ते।

उत्तरवर्तिग्रन्थेषु ध्वनिकाररूपेणानन्दवर्धन एव गृहीतो दृश्यते।

जह्लणसङ्कलितसूक्तिमुक्तावलौ राजशेखरनाम्ना समुद्धृते पद्ये—

ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना।
आनन्दवर्धन: कस्य नासीदानन्दवर्धन:।

इति कथितमस्ति। एतद्धि आनन्दवर्धनस्यैव कारिकाकर्तृतां सूचयति। तथैव—यत्न: कार्य: सुमतिना परिहारे विरोधिनाम्' इति कारिकार्थव्याख्याने—

'अत एव चेतिवृत्तमात्रवर्णनप्राधान्येऽङ्गाङ्गिभावरहितरसभावनिबन्धनेन च कवीनामेवंविधानि स्खलितानि भवन्तीति रसादिरूपव्यङ्ग्यतात्पर्यमेवैषां युक्तमिति यत्नोऽस्माभिरारब्धो न ध्वनिप्रतिपादनमात्राभिनिवेशेन'

इति कथनेनापि कारिकावृत्तिकृतोरैक्यं सिध्यति।

कारिकाकारो वृत्तिकारो वा तद्भिन्न एव किं न स्यात्किन्तु स—

'अस्फुटस्फुरितं काव्यतत्त्वमेतद्यथोदितम्।
अशक्नुवद्भिर्व्याकर्तुं रीतय: सम्प्रवर्तिता:।।'' (३।४६)

इति कथनेन ''विशिष्टपदरचना रीति:। विशेषो गुणात्म'' इति कथयन्तं वामनं स्मरतीति तस्य वामनपरवर्तित्वं सिध्यति। वामनानन्दवर्धनयोरन्तराले न हि कश्चित्तादृश: प्रौढमस्तिष्क: श्रुतो वा ज्ञातो यं वयं कारिकाकृत्त्वेन परिकल्पयाम:।

यच्च कारिकाकार: 'काव्यस्यात्मा ध्वनिरिति बुधैर्य: समाम्नातपूर्वम्' (१।१) इत्यादौ लक्षणेऽन्यै: कृते चास्य पक्षसंसिद्धिरेव न:' (१।२२) इत्यादिकथनेन स्वपूर्ववर्तिनो बहुशो विपश्चित: स्मरति। तादृशी स्थितिस्तु आनन्दवर्धनस्यैव सम्भवति। तर्हि के ते बुधा इत्यपेक्षायां कथयितुं यत्ते हि भरतमेधावि-भामहदण्डिवामनप्रभृतय:। यद्यपि तै: प्रत्यक्षमेव ध्वनिसिद्धान्तो नैव व्याख्यातस्तथापि भरतेन हि—

'योऽर्थो हृदयसंवादी तस्य भावो रसोद्भव:।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना।।''

अत्राह—यदाऽन्योन्यार्थसंश्रितैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशद्भावैः सामान्य-गुणयोगेनाभिनिष्पद्यन्ते रसाः.......।

'ननाभावोपहिता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति।'

नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः।

इत्यादिकथनेन रसस्य व्यङ्ग्यत्वं स्पष्टमेव। निर्दिष्टम्। कथमस्य ध्वनिसिद्धान्तेन सम्बन्ध इति चेदुच्यते। ध्वनिसिद्धान्तो हि न कश्चिन्नवीनप्रयोगोऽपितु नाट्यसम्बद्धत्वेन परिगणितानां रसानां काव्यसामान्ये प्रयोजक एव। इदं हि पूर्वोद्धृताद् अत एव-इत्यादिकथनत एव सिध्यति। साधितेऽपि त्रिविधे ध्वनी सारतस्तु रसध्वनिवेष्टो यतो हि वस्त्वलङ्कारध्वन्योस्तु रसादिसमन्वयेनैव काव्यात्मत्वं न तु स्वत एव। तेनैव ध्वनिसिद्धान्तो रससिद्धानतस्यैवाभिवृद्धं रूपम्। रसस्तु सदैव ध्वन्यत एव न तु अभि-धीयते। इममेव रससिद्धान्तमवलम्ब्य ध्वनिसिद्धान्तो व्याकृतः। तथैव भामहोऽपि—

'सेषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽल्कारोऽनया विना। (२।८५)।
युक्तं वक्रस्वभावोक्त्या सर्वमेवैतदिष्यते। (१।३०)।
पर्यायोक्तं यदल्पेन प्रकारोणाभिधीयते। (३।८)।

इत्यादिकथनेन काव्यार्थस्य व्यङ्ग्यत्वं प्रकारान्तरेण समर्थयति। एवमेव दण्डी च—

प्राक्प्रीतिदर्शना सेयं रतिः शृङ्गारतां गता। (२।२८१)
इत्यारुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः (२।२८३)।
इत्युत्साहः प्रकृष्टात्मा तिष्ठन् वीररसात्मना (२।२८५)।
'अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये।
यत्प्रकारान्तराख्यानं पर्यायोक्तं तदिष्यते।। (२।२९५)।

इत्यादिकथनैः रसस्य व्यङ्ग्यत्वं व्यङ्ग्यार्थस्यास्तित्वञ्च वदत्येव

तस्यैव प्रतीयमानत्वेन सम्मतस्य रसस्य नाट्यातिरिक्तकाव्यभेदेऽपि प्रयोजको ध्वनिसिद्धान्तो भरतादीन् स्मरति इति न किमप्याश्चर्यं तत्र।

अनेन तु व्याख्यानेन वृत्तिकारस्यैव कारिकाकर्तृत्वं सिध्यति। किन्तु सन्त्येतादृशानि प्रमाणानि यानि कारिकाकारवृत्तिकारभेदं समर्थयन्ति।

सर्वप्रथमत्वेन तु लोचनकारवचनान्येव तथा सूचयन्ति। स हि स्पष्टतः आनन्दवर्धनं वृत्तिकारं मन्यते कारिकाकारश्च तद्भिन्नमेव। यथा—

'अत एव मूलकारिका तन्निराकरणार्था न श्रूयते। वृत्तिकृत्तु निराकृतमपि प्रमेयसंख्यापूरणाय कण्ठेन तत्परमनूद्य निराकरोति येऽपीत्यादिना।'

(१।२२ कारिकावृत्तिव्याख्याने)

'प्ररमेश्वरसाम्मुख्यं करोति वृत्तिकारः'। (वृत्तिममङ्गलाचरणपद्योपोद्घाते) 'न चैतन्ययोक्तमपितु कारिकाकाराभिप्रायेणेत्याह'। (२।१) कारिका उपोद्घाते)

एतत्तावत् त्रिभेदत्वं न कारिकाकारेण कृत, वृत्तिकारेण तु दर्शितम्।

(३।१) कारिकावृत्तिव्याख्यायाम्)

इत्यादिभिर्वाक्यैः कारिकाकर्तृर्वृत्तिकारो भिन्न एवेति स्पष्टमेव प्रतीयते। अपरश्च कारिकायां (२।२५) अर्थशक्त्युद्भवार्थस्य स्पष्टमेव द्वैविध्यमुक्तमस्ति वृत्तौ तु प्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थस्य द्वौ विभागौ कृत्वा त्रैविध्यमुदाहृतमस्ति। समानत्वे तु कारिकावृत्तिकृतोः कारिकायामेव त्रैविध्यमुक्तं भवेत्तस्य। एवमेव 'रसाद्यनुगुणत्वेन' (३।३३) इति कारिकाया वृत्तिभागो यावान् सुविस्तृतो यत्तत्रत्यानि बहूनि तथ्यानि कारिकारूपेणैवोपस्थाप्यान्यपि सन्ति। यदि हि नाम कारिकाकार एव वृत्तिकारोऽभविष्यत् तदा तथाकृतमभविष्यत्। कारिकाकारस्तु ध्वनेर्विभागं द्वितीये एवोद्द्योते करोति किन्तु वृत्तिकारस्तु तथा प्रथमे एवोद्द्योते करोति। समाने सति कारिकावृतिकृति तत्रैव ध्वनिविभागोऽपि निर्दिष्टः स्यात्। किन्तु न तथेत्यादिविभिन्नप्रमाणैः कारिकाकारवृत्तिकारयोः पार्थक्यं दृश्यते। कारिकावसानात्पृथगेव वृत्त्यवसानसंसूचनादपि तदेव सिध्यति। वृत्त्यवसानपद्ये 'तद्व्याकरोद' इतिपदमपि आनन्दवर्धनस्य वृत्तिमात्रकर्तृत्वं साधयति। समाने सति कारिकावृत्तिनिबन्धके न हि कदाचित्पृथगवसानपद्यसम्भावना। तेन हि कारिकाभागोऽयं काव्यालोकसंज्ञितोऽनिर्णीतकर्तृकः, वृत्तिभागस्तु ध्वन्यालोकसंज्ञित आनन्दवर्धनप्रणीतः। ध्वन्यालोकस्य हि अज्ञातकर्तृका चन्द्रिकाख्या टीकायां हि लोचनकारः 'चन्द्रिकाकारस्तु पठितमनुपठतीति न्यायेन गजनिमीलिकया व्याचचक्षे' (३।३३) इति च स्मरति, अभिनवगुप्तपादस्य लोचनाख्या व्याख्या—

'किं लोचनं विना लोको भाति चन्द्रिकयाऽपि हि।'

इति तत्कृतैव प्रशंसिता, मधुसूदनमिश्रस्यावधानाख्या व्याख्या, बदरीनाथशर्मणो दीधितिसंज्ञिता, चण्डिकाप्रसादशुक्लस्य दीपशिखाऽख्या, अलखदेवस्य प्रकाशिकाऽऽख्या द्वितीयोद्द्योतव्यापिनी टीका च ज्ञाताः। व्याख्यानपरम्परायां लीलायाः स्थानं तु पाठका एव निरूपयिष्यन्ति।

ध्वन्यालोककृदानन्दवर्धनस्तु काश्मीरकस्य राज्ञोऽवन्तिवर्मणः सभापण्डित आसीदिति।

मुक्तकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः।। (५।३४)।

इति राजतरङ्गिणीतो ज्ञायते। तेन हि तस्य वैक्रमदशमशतकपूर्वार्द्धमितः स्थितिकालोऽनुमीयते। स हि ध्वन्यालोके भट्टोद्भटं स्मरति। भट्टोद्भटश्च काव्यालङ्कारसारसंग्रहकृत् जयापीडस्य सभाध्यक्षः ८७० मितवैक्रमाब्दमभितः स्थितिमान्। तेनायमेव कालस्तस्य पूर्वसीमा। ध्वन्यालोकं च १०५० मितवैक्रमाब्दमभितः स्थितिमान् अभिनवगुप्तो व्याख्याति। ततश्च पूर्ववर्ती कुन्तकस्तस्य मङ्गलाचरणपद्यमुद्धरति इति तस्य कुन्तककाल एव स्थितिकालस्यापरसीमा या १००५ मितवैक्रमाब्दमभित आपतति। सामान्यत आनन्दवर्धनाभिनवगुप्तयोः १५० वर्षमितकालस्यान्तरालमनुमीयते। आनन्दो हि काश्मीरको नोणाख्यस्य पुत्रः। अभिनवगुप्तो हि काश्मीर एवं वराहगुप्तस्य पौत्रः, चुखलाख्यस्य पुत्रः।

तदस्यास्य महिममण्डितस्य ग्रन्थस्य मयाऽपि लीलाख्या प्रतिपदव्यापिनी सारग्राहिणी च व्याख्या प्रणीताऽस्ति समसामयिकाश्वकतामङ्गीकृत्य। सा चेयं पाठकानां पुरतोऽस्ति। अस्यां हि द्वौ भागौ प्रतिपदव्याख्या सारसङ्क्षेपश्च। पूर्वभागे हि अन्वयादिपुरस्सरमेव कारिकाभागो वृत्तिभागश्च व्याख्यातौ स्त:। उत्तरभागे हि विषयस्य पूर्वापरप्रसङ्गसन्दर्भसंयोजनपूर्वकं सारसङ्क्षेप: कथनस्योपस्थापितोऽस्ति। स्वप्रयासे हि व्याख्येयं कियत्सफलेति तु पाठका एव प्रमाणम्। व्याख्याया अस्या: प्रणयने मया हि स्वपूर्ववर्तिभ्यो यथेष्टं सामग्री गृहीता। तेन तत्कृते मान्येभ्यस्तेभ्य: सादरं विहिताञ्जलिरस्मि। व्याख्याकाले हि ये पुरत: अभिनवगुप्तस्य लोचनं तस्य च विवृति: बालप्रिया सहृदयतिलकरामपारकस्य, बदरीनाथस्य दीधिति:, अलखदेवस्य प्रकाशिका, चण्डिकाप्रसादस्य दीपशिखा चेति संस्कृतनिबद्धा रामसागरस्य तारावती, विश्वेश्वरस्य आलोकदीपिका, जगन्नाथपाठकस्य प्रकाशश्चेतिहिन्दीभाषायां निबद्धाश्च व्याख्या आसन्। यास्वहं लोचनबालप्रिये तु गुरुग्रन्थत्वेनैवापश्यं, दीधितिप्रकाशिके च स्थाने स्थानेऽवालोकयं, दीपशिखां, यदा कदाऽस्पृशम्। तारावतीं प्रायोऽध्ययि। आलोकदीपिकां प्रकाशञ्च। तेन तत्तत्कृद्भ्यो मान्यजनेभ्यो मे नमांसि। कस्मात्कियदुपकृतोऽभवमिति तु पाठका एव विवेचयन्तु।

व्याख्याया अस्या प्रणयनेऽयने द्वे व्यतीते। अस्या हि पुनर्लेखनपुस्तकसङ्कलनान्यविधसहयोगप्रदानेन मां बहुधोपकृतवती मे तनया प्रमिता साधुवादार्हा। सन्तु मे तस्यै शतश: शुभाशिष:। तथैव आवासभोजनादिविविधसहयोगप्रदानेन मामेतदर्थमुपकृतवत: श्रीकेदारेश्वरतीर्थपुरोहितवरस्य पण्डितमूर्धन्यस्य श्रीमतस्तीर्थप्रसादवाजप्रेयिनो लमगौण्डीवास्तव्यस्य सदाधमर्णतां स्वीकुर्वन् तं साधुवादै: संयुनज्मि। तदतिरिक्तं किमिव सम्भवति मादृशाद् भिक्षुकजनात्। तीर्थप्रसादो हि मे मान्यजन:। तं बहुवचनेन शतश: श्रद्दधामि। तथैवैतन्निर्मित्तं प्रेरको हि महोत्साहो राकेशजैनो भारतीयविद्याप्रकाशनस्य प्रबन्धक: साधुवादार्ह:। अन्येभ्यश्च येभ्योऽहमेतन्नमित्तमुपकृतोऽभवं नमो नम:।

अन्ते च—

'ये नाम केचिदिह न: प्रथयन्त्यवज्ञां जानन्तु ते किमपि तान् प्रति नैष यत्न:'। तर्हि किन्निमित्तमिति चेत्।

यत्नस्त्वयं खलु कृतेऽल्पधियां जनानां काव्यामृतारसनलोलुपमानसानाम्।।

किन्त्वनेन कथनेन नैतदवधेयं यदत्र नास्ति कश्चिदवकाश: संशोधनस्येति। गच्छत: स्खलनं स्वाभाविकमेव। प्रमादजन्यत्रुटिसंशोधनाय तत्संसूचनाय च विवृतेन हृदयेनामन्त्र्यन्ते विचक्षणा:।

काशी
विवाह पञ्चमी २०४५

विदुषां विधेय:
लोकमणिदाहाल:
नेपालाभिजन:



# आनन्दवर्धन और उनका ध्वन्यालोक

## प्राक्कथन

संस्कृत साहित्य के समालोचकों में से आनन्दवर्धन मूर्धन्य माने जाते हैं। उनकी कृति ध्वन्यालोक काव्य समीक्षा में अद्वितीय ग्रन्थ है। जिसको पश्चाद्वर्ती मम्मट, विश्वनाथ, जगन्नाथ आदि विद्वान् अक्षरशः अनुसरण करते हैं।

## आनन्द वर्धन का देश

कवि आनन्दवर्धन काश्मीर मण्डल में उत्पन्न हुए थे, इस बात का प्रमाण कल्हण की राजरङ्गिणी के निम्नलिखित पद्य से मिलता है–

''मुक्ताकण: शिवस्वामी कविरानन्दवर्धन:।
प्रथां रत्नाकरश्तागात् साम्राज्येऽवन्चिवर्मण:।।'' (५।३०)

अर्थात् मुक्ताकण, शिवस्वामी, आनन्दवर्धन और रत्नाकर आदि समालोचक एवं कवि सम्राट् अवन्तिवमा (खि. सं. ९१२-९३०) के राज्य में प्रसिद्धि को प्राप्त हुए। इसके अतिरिक्त आनन्दवर्धन के 'राजानक' उपाधि धारण करना भी उनके कश्मीरी होने का एक और प्रमाण है; क्योंकि राजानक उपाधि काश्मीर के राजाओं के आश्रित कवियों को मिला करती थी। अधिकतर संस्कृत के कवि जैसे अभिनव गुप्त, कुन्तक, महिम भट्ट आदि भी उनके काश्मीरी होने का प्रमाण सूचित करते हैं।

## स्थितिकाल

वैसे तो कवि आनन्दवर्धन ने अपने स्थितकाल के विषय में कोई उल्लेख नहीं किया है अत: अन्त:साक्ष्य के आधार पर उनके समय का निर्धारण करना कठिन है तथापि बाह्यसाक्ष्य के आधार पर समालोचकों ने विक्रम की नौवीं शताब्दी के उत्तरार्द्ध को उनका स्थितिकाल माना है। इस प्रसङ्ग में दो बातें उल्लेखनीय हैं। एक तो यह है कि देवीशतकम् में स्वयं आनन्दवर्धन ने चिप्पड जयादित्य का उल्लेख किया है जिसका स्थितिकाल काश्मीर के इतिहास के अनुसार अवन्तिवर्मा से ठीक पहले पड़ता है अर्थात् वह कर्कोटक वंश का अन्तिम राजा था। दूसरी बात राज तरङ्गिणीकार के अनुसार आनन्दवर्धन रत्नाकर आदि के साथ-साथ अवन्तिवर्मा के साम्राज्य में प्रसिद्धि को प्राप्त हुए थे। अवन्तिवर्मा का समय विक्रम संवत् ९१२ से ९३० माना गया है। इन दोनों बातों से यह निष्कर्ष निकलता है कि आनन्दवर्धन अवन्तिवर्मा के समय तक वृद्ध हो चुके थे। जिनकी प्रसिद्धि दूर-दूर तक फैली हुई

थी। इनको प्रसिद्धि पाने के लिए समदेशिक होने पर भी पचास वर्ष का समय तो लगेगा ही। अतः यह अनुमान किया जा सकता है कि विक्रम संवत् ८७० के लगभग आनन्दवर्धन का जन्म हुआ होगा। ये बहुत वृद्ध होने तक जीते रहे, कमसे कम ९० वर्ष तक। काव्य मीमांसाकार राजशेखर भी इसी तथ्य कीर ओर इंगित करते हैं। इनके समालोचक महिम भट्ट के समय तक इनकी बहुत प्रसिद्धि हो चुकी थी इसका प्रमाण व्यक्ति विवेक के–

इह सम्प्रतिपत्तितोऽन्यथा वा ध्वनिकारस्य वचोविवेचनं नः।
नियतं यशसे प्रपत्स्यते यन्महतां संस्तव एव गौरवाय।। (१।३)

इस कथन से भी सिद्ध होता है।

## पारिवारिक परिचय

आनन्दवर्धन के परिवार के सम्बन्ध में उतना उल्लेख नहीं मिलता है केवल देवीशतकम् में और हेमचन्द्र के काव्यानुशासनम्' में इतना ही उल्लेख मिलता है कि उनके पिता का नाम 'नोण' था जो कि काश्मीरी परम्परा का संकेतक है।

## व्यतिक्तत्व

आनन्दवर्धन के व्यक्तित्व के सम्बन्ध में कहीं कुछ भी उल्लेख नहीं मिलता है तथापि ध्वन्यालोक की भाषा एवं उदाहरण के रूप में लिये गये पद्यों से यह पता चलता है कि वे श्रृंगार प्रिय, मृदुभाषी एवं कोमल हृदय थे। जैसे कि 'जाम्बवतीहरणम्' से यह उद्धरण लेते है–

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः।
अहौ दैवगतिश्चित्रा तथापि न समागमः।।

वे पण्डितों का बहुत आदर किया करते थे लेकिन सच्चाई से कत्तई हटते नहीं थे। यह बात उनके 'द्वित्रा एव कवयः'' तथा 'द्वित्राण्येव काथनि' कथन से पुष्ट होता है। निरभिमानिता इनका स्वाभाविक गुण था, क्योंकि इन्होंने 'आनन्दवर्धन इति प्रथिताभिधानः' कहकर यह बात दिखायी है।

## रचनाएँ

आनन्दवर्धन के नाम से पांच रचनाएँ प्रसिद्ध हैं–

(१) देवीशतकम्
(२) अर्जुनचरितम्
(३) विषमबाणलीला
(४) तथ्यालोकः
(५) ध्वन्यालोकः

इनके अतिरिक्त एक बौद्ध ग्रन्थ की टीका भी इन्होंने की थी। इनमें से देवीशतकम् या ध्वन्यालोकः को छोड़कर शेष ग्रन्थ नितान्त अनुपलब्ध हैं।

## (१) देवीशतकम्

यह ग्रन्थ सौ पद्यों में निबद्ध है जिनमें देवी की महिमा गायी गयी है। इस ग्रन्थ की यह भी विशेषता है कि इसी में कवि ने अपने पिता का नाम और आश्रयदाता के रूप में चिप्पड जयादित्य के नाम का उल्लेख किया है। इसीलिए लगता है कि यह इनकी चरम कृति होनी चाहिए।

## (२) अर्जुनचरितम्

अर्जुनचरितम् कवि की वीररसपूर्ण रचना मानी जाती है। इसका कथानक किरातार्जुनीयम् के कथानक से ही मिलता-जुलता रहा होगा। ध्वन्यालोक में उद्धृत किये गये अंशों से पता चलता है कि यह एक महाकाव्य था जिसका पर्यवसान अर्जुन विजय से हुआ था।

## (३) विषमबाणलीला

विषमबाणलीला आनन्दवर्धन की अन्यतम कृति मानी जाती है। इसमें कवि और काव्यकार के लिए उपयुक्त कुछ विषय दिये हुए हैं ऐसा ध्वन्यालोक में उद्धृत इसके कुछ अंशों स पता चलता है। जैसे कि—

"ण अ ताण धडइ ओहीण अ ते दोसन्नि कह वि पुनरुत्ता।
जे विव्यत्रा पिआणं अत्था वा सुकइवागिणम्।।"
(न थ तेषां सरनेऽवधिर्न य ते दृश्यन्ते कदापि पुनरुक्ताः।
ये विभ्रमाः प्रियाणामर्था वा सुकविकणोनाम्।।)

यह ग्रंथ प्राकृत भाषा में विरचित था। इसमें काम विषयक विभ्रमों का बढ़ा-चढ़ा कर वर्णन किया गया है।

## (४) ध्वन्यालोक

'ध्वन्यालोकः' आनन्दवर्धन की प्रौढ़तम रचना है। लगता है कि यह उनके जीवन के उत्तरार्ध में लिखा गया होगा। वैसे भी कवि अपने को जगह-जगह पर सहृदय कहने और काव्य की परख करने वाला भी कहते हैं और "सत्काव्यतत्त्व विषयं स्फुरिताप्रसुप्तकल्पं मनःसु परिपक्वधियां यदासीत्।

'तद्व्याकरोत्सहृदयोदयलाभ हेतोरानन्दवर्धन इति प्रथिताभिधानः।।'

कहकर अपने प्रसिद्धि का संकेत भी करते हैं।

सामान्यतः ध्वन्यालोक नाम से तीन विषय समझ में आते हैं— (१) कारिकाभाग (२) वृत्तिभाग और (३) उदाहरण भाग। इन तीनों के प्रणेता के विषय में समालोचकों में मत वैभिन्य पाया जाता है। अभिनव गुप्त आदि अनेक आचार्य ध्वन्यालोक के कारिकाभाग के रचयिता के रूप में किसी दूसरे को मानकर आनन्दवर्धन को वृत्तिभाग का रचयिता मानते हैं। दूसरी ओर महिम भट्ट, कुन्तक आदि आचार्य आनन्दवर्धन

को ही कारिकाभाग का रचयिता मानते हैं। इस विषय के पाश्चात्त्य विद्वान् मतवैभिन्य रखते हैं। कोई आनन्दवर्धन को ही सम्पूर्ण ग्रन्थ का रचयिता मानते हैं तो कोई वृत्तिभाग मात्र का। स्वयं आनन्दवर्धन वृत्ति से प्रारम्भ कर वृत्ति में ही ग्रन्थ का अवसान करते हैं। इसीलिए आनन्दवर्धन को वृत्तिभाग अर्थात् ध्वन्यालोक का रचयिता मानना तो अनुचित नहीं है। जैसा कि 'लोचन' के प्रारम्भ के 'अभिनव गुप्ताचार्य आनन्दवर्धन को वृत्तिकार ही कहते हैं—

''स्वयमविच्छन्न परमेश्वरनमस्कारसक्पत्तिचरितार्थोऽपि व्याख्यातृश्रोतृणामविध्नेनाभीष्टव्याख्याश्रवणलक्षणपुप्यसम्पत्तये समुचिताशी: प्रकटनं द्वारेण परमेश्वर सारम्मुख्यं करोति वृत्तिकार:— स्वेच्छेति—।''

इस पक्ष में ध्वन्यालोक के कारिकाभाग को काव्यालोक, सहृदयालोक इत्यादि क्रमों से भी पुकारा जाता है। अभिनवगुप्त कारिका भाग को काव्यालोक कहते हैं और इस पक्ष में वे तर्क यह भी देते हैं वृत्तिकार ही कारिकाकार होते हैं तो तृतीय उद्योत में मूलकारिका से असबद्ध इतनी लम्बी कृति न बनायी गयी होती और वृत्तिभाग की आवश्यकतानुसार कारिकाभाग में बढ़ जाता। लेकिन ऐसा न होकर वृत्तिभाग में भी कारिकाभाग की तरह मूल तत्त्व को उठाया गया है और यह भी है कि वृत्तिभाग में—

''स्वेच्छा केसरिण: स्वच्छस्वच्छायायासितेन्दव:।<br>
त्रायन्तां वो मधुरिणो: प्रपन्नार्तिछिदो नखा:।।''

पद्य में आशीर्वादरूप मङ्गलाचरण किया गया है लेकिन कारिकाभाग में—

''काव्यस्यात्मा ध्वनिरिति बुधैर्य: समास्नातपूर्व—<br>
तस्याभावं जगदुरपरे भाक्तमाहस्तमन्ये।<br>
केचिद्वाचां स्थितमविषये तत्त्वमूचुतदीयं।।''<br>
तेन ब्रूम: सहृदयमन: प्रीतये तत्स्वरूपम्।।''

कहकर विषय निर्देशक ही ग्रन्थ का प्रारम्भ किया गया है। अगर 'स्वेच्छा केसारिण:' पद्य के ही कारिकाभाग का प्रारम्भ मान लिया गया होता तो उसकी व्याख्या वृत्ति में की गयी होती लेकिन ऐसा नहीं है और ध्यान देने योग्य बात यह है कि यदि आनन्दवर्धन ही कारिकाभाग के रचयिता होते तो'' सत्काव्यतत्त्वविषयम्' वाली वृत्ति का अवसान पद्य कारिकाभाग का अवसान पद्य होता, किन्तु ऐसा नहीं है।

यहाँ हम किस भाग का रचयिता कौन है इसके पचडे में न पड़कर कारिका ओर वृत्ति दोनों भागों को समाहित करते हुए गुण—दोष और विषय का वृत्ति का विवेचन करेंगे।

## ध्वन्यालोक का वर्ण्यविषय

वैसे तो नाम के अनुसार तो ध्वन्यालोक का वर्ण्य विषय ध्वनि ही होता है। 'ध्वने: आलोक: ध्वन्यालोक:' अथवा 'ध्वनि: आलोक्यते यस्मिन्निति ध्वन्यालोक:।'' दोनों पक्षों में दर्शनार्थक लोक' धातु से अधिकरण अर्थ में घञ् प्रत्यय हुआ है। प्रथम पक्ष में

'ध्वन्यालोक: अस्ति अस्मिन्निति' अर्श आदि अच्' करना पडेगा। विस्तृत रूप में तो ध्वनि ध्वन्यालोक का वर्ण्य विषय ध्वनि के साथ-साथ इससे सम्बन्धित अन्य पक्ष भी आ ज़ाते हैं। इस तरह ध्वन्यालोक का वर्ण्यविषय निम्नलिखित है—

(१) विभिन्न मतोल्लेख का खण्डन करके ध्वनि की प्रस्थापना।

(२) वाच्य एवं प्रतीयमान अर्थ।

(३) ध्वनि के व्यञ्जकों का विवरण।

(४) व्यञ्जक के लिए व्यञ्जनावृत्ति को अपनाना।

(५) गुणीभूत व्यङ्ग्य ध्वनि

(६) सहृदय श्लाघ्य वाच्य अर्थ और

(७) रस ध्वनि का महत्त्व एवं रसों का तालमेल।

इन विषयों में ऊपर नीचे करके सविषयक वर्णन ध्वन्यालोक में किया गया है। प्रतीयमान अर्थ, व्यञ्जनावृत्ति की अपना, गुणीभूतव्यङ्ग्य— यो तीन विषय ध्वन्यालोक कीं एकदम नयी देन हैं। इसीलिए ही आनन्दवर्धन को ध्वनि प्रस्थापन परमाचार्य भी कहा गया है। अब नीचे हम इन विषयों का सविस्तार वर्णन करेंगे।

## ध्वनि प्रस्थापना

ध्वनि के विषय में कहा गया है कि—

'काव्यस्यात्मा ध्वनिरिति बुधैर्य: समाम्नातपूर्वं—
तस्याभावं जगदुरदपतम भाक्तमाहुस्तमन्ये
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूम: सहृदयमन: प्रीतये तत्स्वरूपम्।।'

अर्थात् ध्वनि को काव्य की आत्मा मानकर जो प्राचीन विद्वानों ने सिद्धान्त का प्रतिपादन किया था, उसके विषय में विभिन्न प्रकार के भ्रम प्रचलित हैं। जैसे कि कोई कहता है कि ध्वनि नाम की कोई वस्तु है ही नहीं। अब तक के कवियों के द्वारा पता लगाये गये सुन्दर-सुन्दर अलंकार वाद में भी अविष्कृत हो सकने वाले सुन्दरतम अलंकार रीतियां, माधुर्यादि गुण, लक्षण, वृत्तियाँ आदि ही काव्य के अनिवार्य तत्त्व हैं और यह ध्वनि नाम की कोई चीज है ही नहीं। यदि बलपूर्वक आप ध्वनि को मान भी लेते हैं तो भी समसोक्ति, विशेषोक्ति, परिकर आदि अलंकारों में ही ध्वनि का अन्तर्भाव हो जाता है। ऐसे-ऐसे सुन्दर अलंकारों से अलंकृत सरस काव्य में यह ध्वनि नाम का नीरस बोझ डालने से क्या लाभ ? दूसरे लोग कहते हैं कि हम ध्वनि के अस्तित्व को तो मान सकते हैं लेकिन इसको अलग मानने की कोई आवश्यकता नहीं है। इसका भक्ति अर्थात् लक्षणा में ही अन्तर्भाव हो जाता है। तीसरे प्रकार के लोग कहते हैं कि ध्वनि का विषय तो काव्य में मात्र जाना सकता है, लेकिन यह इतना अनिर्वचनीय है, जिसका स्वरूप इदमित्थन्तया कहा नहीं जा सकता है; क्योंकि ध्वनि कहीं भी हो सकती है और कहीं भी इसका प्रयोग बहुतायत से किया जा सकता है। ध्वनि के विषय में इन विभिन्न

पक्षों-अभाववादियों, लक्षणवादियों एवं अनर्विचनीयता वादियो के मत का निरास करके सहृदयों के हृदयों को खुश करने के लिए ध्वनि के स्वरूप का विशेष प्रकार से यहाँ उल्लेख किया जाता है। जैसे वैयाकरणों के मत में 'परा' और 'पश्यन्ती' से होकर निकलने वाली 'मध्यमा' वाक् ही स्फोट का आलंकारिक रूप बना लेती है और वही अर्थबोधक स्फोट कहा भी जाता है, जो कि वैखरी से होकर श्रवणगोचर होता है, उसी तरह ध्वनि ही शब्द का लाक्षणिक अर्थ या लक्ष्य होता है, इसे साहित्यिक स्फोट भी कहा जा सकता है।

'यत्रार्थ: शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौं।
व्यंक्त: काव्यविशेष: स ध्वनिरिति सूरिभि: कथित:।।'

अर्थात् जहाँ शब्द अथवा अर्थ अपने-अपने अर्थ को छोड़कर किसी दूसरे प्रतीयमान अर्थ को अभिव्यक्त करते हैं वहीं ध्वनि होती है। यह स्थिति किसी भी अलंकार में नहीं रहती है। इसीलिए भले ही व्यङ्ग्य की प्रधानता हो लेकिन उसमें ध्वनि का सम्पूर्ण अवयव समा नहीं जाता है। अत: अलंकारों में ध्वनि का अन्तर्भाव नहीं होता है।

## भक्ति (लक्षणा) में ध्वनि का अन्तर्भाव मानने वालो के मत का खण्डन

दूसरे आलोचक ध्वनि का अस्तित्व तो मानते हैं, लेकिन उसको भक्ति अर्थात् लक्षण में ही अन्तर्भूत मानकर प्रतीयमान अर्थ को ही व्यञ्जना वृत्ति का विषय नहीं मानते हैं। लेकिन यह मत भी समीचीन नहीं है; क्योंकि मुख्यार्थ के सापेक्ष रहने पर ही गुणों के सादृश्य के कारण भक्ति अर्थात् लक्षणा होती है और प्रतीयमान अर्थ तो मुख्यार्थ बाध के सापेक्ष या निरपेक्ष भी होता है। जैसा कि कहा गया है–

"भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनि:।"

अर्थात् यह ध्वनि स्वरूप में भेद और विषय में छोटा-बड़ा होने के कारण भक्ति से एकरूपता नहीं रखती है। भक्ति का विषय छोटा होता है, क्योंकि उसका सम्बन्ध वाच्यार्थ से एकदम नहीं छूटता है, किन्तु ध्वनि का विषय अपेक्षाकृत बड़ा होता है और यह वाच्यार्थ में विल्कुल सम्बद्ध नहीं होता है। और एक वाच्यार्थ के होने पर वक्तृ बोद्धव्य आदि के भेद से अनेकों प्रतीयमान अर्थ हो सकते हैं। जैसा कि कहा गया है–

"वाच्यव्यतिरिक्तरूपोर्थस्य वाच्यवाचकाभ्यां तात्पर्येणार्थप्रकाशनं यत्र व्यङ्ग्य प्राधान्ये स ध्वनि:। उपचारमात्रं तु भक्ति:।"

यहाँ भी कहा गया है–

"अति व्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया।।"

इस प्रकार ध्वनि विरोधियों के मतों का युक्तिपूर्वक खण्डन कर ध्वनि का प्रस्थापन किया गया है ध्वन्यालोक में।

## अनिर्वचनीयतावादियों के मत का खण्डन

कुछ लोगों का कहना है कि ध्वनि का अस्तित्व तो है लेकिन वह अनिर्वचनीय है एवं उसके स्वरूप का वर्णन यथार्थ रूप से नहीं किया जा सकता है लेकिन आनन्दवर्धन के मत में ध्वनि अनिर्वचनीय तो जरूर है, क्योंकि इसी में चमत्कार का पर्यवसान होता है, और यह सामान्य जन के लिए समझने योग्य भी नहीं है, फिर भी इसे सहृदय लोग समझ ही पाते हैं। हम भी सहृदय हैं इसलिए ध्वनि के स्वरूप को ठीक-ठीक से समझ पाते हैं।। जो समझ नहीं पाये उन्हीं लोगों ने ही रीतिवादियों का आश्रय लिया। जैसा कि कहा गया है—

'अस्फुटस्फुरितं काव्यतत्त्वमेतसभोक्तिम्।
अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः।३।४७।।'

अर्थात् अव्यक्त अवस्था में ही स्फुरित इस काव्य तत्त्व को समझ न पाने वालों मैने रीति आदि का प्रवर्तन किया। अगर सामान्य जन भी, उसे समझ पायें तो ध्वनि का ध्वनित्व ही नहीं रहेगा; क्योंकि रस अवस्था में ध्वनि या तो गुणीभूत हो जाती है, या तो चमत्कार पर्यवसायि नहीं होती हैं। इसे समझने के लिए एक क्रम होता है जिसे समझ लेना आवश्यक है। उसीका वर्णन इस नचे कर रहे हैं।

## काव्य का स्वरूप

कारिकाकार कहते हैं—

'अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्य प्रतीयमाख्यौ तस्य भेदावुभौ स्मृतौ।। १।२।।'

अर्थात् सहृदयों के द्वारा प्रशंसित जो अर्थ है, वही काव्य की आत्मा है और उस अर्थ के दो भेद हैं—वाच्य और प्रतीयमान। इस कथन से यह निष्कर्ष निकलता है कि काव्य का शरीर शब्द है और अर्थ है आत्मा। जैसे विना आत्मा का शरीर और विना शरीर की आत्मा कार्य योग्य नहीं होती है उसी तरह शब्द और अर्थ की भी अवस्थिति है, अतः ''काव्यं श्रुतम्' अर्थों नावगतः'' ऐसे प्रयोग सम्भव होते हैं। ध्वन्यालोक के इस मत को लगता है कि अचार्य मम्मट ने भी ठीक से समझने का प्रयास नहीं किया, क्योंकि यदि वे वाच्यार्थ को भी काव्य की आत्मा मानते तो उसे अवर काव्य' नहीं कहते। वस्तुतः चमत्कार का पर्यवसान जिसमें होंता है, वही काव्य की आत्मा होती है। ध्वनि में पर्यवसान हो तो उसे ध्वनि काव्य उत्तम काव्य और ध्वनि के स्फुट रहते हुए वाच्यार्थ में पर्यवसान हो तो वह गुणीभूत काव्य अथवा मध्यम काव्य और वाच्यार्थ में ही चमत्कार का पर्यवसान हो तो उसे काव्य सामान्य की संज्ञा दी गयी है। साहित्य दर्पण के रचयिता विश्वनाथ या तो ध्वनिकार के इस मत को समझ नहीं पाये, या तो समझकर भी स्वभाववश उन्होंने उसकी अन्यथा प्रस्तुति की। जैसा कि उन्होंने कहा कि रसध्वनि ही काव्य की आत्मा होती है और अलंकार ध्वनि और वस्तुध्वनि भी रसवन्ता में पर्यवसायि होने पर उनकी

काव्यात्मकता सिद्ध होती है। विश्वनाथ वाच्यार्थ को काव्यात्मा नहीं मानते हैं हो सकता है कि अपनी परिभाषा की प्रस्तुति के लिए उससे पूर्व की गयी परिभाषाओं के कुछ-ना-कुछ दोष दिखाना पड़ता होगा। क्योंकि मम्मट की परिभाषा के भी उन्होंने तीन दोष निकाले हैं। ध्वनिकार के मत में वाच्य एवं प्रतीयमान दोनों काव्य की आत्मा होती है। प्रतीयमान अर्थ की काव्यात्मकता तो सर्वप्रसिद्ध ही है— वाच्यार्थ की काव्यात्मकता भी मानी जाती है। जैसे कि ध्वनिकार ने कहा है—

'दृष्टपूर्वा अपि ह्यर्था: काव्ये रसपरिग्रहात्।'

अर्थात् पहले से ज्ञात अर्थ की काव्य में रस के सन्धान से नये लगते हैं और उसी में चमत्कार का पर्यवसान होता है, जैसे वही पुराने वृक्ष की वसन्तमें नये पल्लवों के सम्पर्क से नये एवं आकर्षक लगते हैं। इस तरह ध्वनिकार ध्वनिकाव्य, वाच्यकाव्य एवं मिश्राकाव्य करके काव्य के तीन भेद मानते हैं।

## प्रतीयमान अर्थ अर्थात् ध्वनि काव्य

ध्वनिकार ने कहा है—

''प्रतीयमानं पुनरन्यदेव वस्त्वस्ति बाणीषु महाकवीनाम।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।१।४।।''

अर्थात् प्रतीयमान अर्थ कोई दूसरा ही है, जो कि महाकवियों की वाणी से निकलता है। यह प्रसिद्ध अर्थ से भिन्न है। जैसे कि अंगनाओं में प्रसिद्ध अंगों के अतिरिक्त उनके सामूहिक परिणाम स्वरूप एक पृथक् ही सौन्दर्य झलकता है। ध्वनिकार के इसी मत को इन शब्दों में अलंकारिक पोप (पाश्चात्य समालोचक अठारहवीं शती कहते हैं—

"In wit as water what effects our hearts.
It is no ra lip nor eya that we beauty colled,
Bat the joint force and full rresul of all."

प्रतीयमान अर्थ संकेतित नहीं होगा अत: यह अभिधाका विषय नहीं बन सकता है और इसमें मुख्यार्थ वाबाधादि हेतुओं के न रहने से लक्षणा का विषय भी नहीं बन सकता है। अत: यह व्यञ्जना का विषय ही बन सकता है। वाच्यार्थ के विधिरूप रहने से व्यङ्ग्यार्थ निषेधात्मक भी होता है और वाच्यार्थ निषंधरूप रहने से प्रतीयमान अर्थ विधिरूप भी रह सकता है। इसी प्रतीयमानता को ही ध्वनि कहा गया है।

## ध्वनि के भेद

सामान्यतया ध्वनिकार के मत में ध्वनि के ३६ भेद होते हैं और काव्य प्रकाणकार मूल ध्वनि के ५१ भेद मानते हैं।

जो अविवक्षित वाच्य ध्वनि (लक्षणामूला ध्वनि) के वह अर्थान्तर संक्रमित वाच्य एवं अत्यन्त तिरस्कृतवाच्य दो प्रकार का माना गया है। जो विवक्षित वाच्य

ध्वनि है उसके संलक्ष्यक्रम व्यङ्ग्य और असंलक्ष्यक्रमव्यङ्ग्य के नाम से मूलतः दो भेद माने गये हैं। असंलक्ष्यक्रमव्यङ्ग्य ध्वनि रस, भाव आदि हैं, जिनका क्रम होते हुए भी क्रम दिखलाई नहीं पड़ता है। यही रस ध्वनि के नाम से काव्य में प्रसिद्ध है। जो संलक्रमव्यङ्ग्य है उसके शब्द शक्तिमूल और अर्थशक्ति मूल करके मूलतः, दो भेद हैं। शब्द शक्तिमूल की भी वस्तु से अलंकार और अलंकार से वस्तु के आक्षेप से दो प्रकार का होता है। अर्थशक्ति मूल ध्वनि स्वतः सम्भवी कविप्रौढोविर्तासिद्धा, एवं कविनिवद्ध प्रौढोक्ति सिद्ध करके तीन प्रकार का होता है। इनमें से प्रत्येक वस्तु से वस्तु, वस्तु से अलंकार, अलंकार से अलंकार अलंकार से वस्तु के आक्षेप होने से चार प्रकार का होता है और शब्दार्थोमयशक्त्युत्थ ध्वनि उससे अलग होता है। इस प्रकार प्रबन्धगत, पदगत, वाक्यगत इत्यादि अनेक भेदों से ध्वनि अनगिनत बन जाती है।

## व्यञ्जक एवं ध्वनि

ध्वनि के व्यञ्जक के रूप में बहुत से उपादानों का वर्णन किया गया है— प्रबन्ध, प्रकरण, वाक्य, पद, पदांश, वर्ण, निपात, उपसर्ग इत्यादि अनेक अवयव ध्वनि के व्यञ्जक हो सकते हैं जिनको जानने के लिए ग्रन्थ का ही अध्ययन आवश्यक है।

## गुणीभूतव्यङ्ग्यकाव्य

जहाँ ध्वनि की उपस्थिति तो है और उसके प्रति कवि की तत्परकता हैं, इतना होने पर भी व्यङ्ग्यार्थ की अपेक्षा वाक्यार्थ अधिक चमत्कार पर्यवसायि हो तो उसे गुणीभूतव्यंग्य काव्य मानते हैं। इसके आठ भेद बताये गये हैं— अगूढ़ अपरव्यङ्ग, वाच्य सिद्‌यङ्ग, अस्फुट, सन्दिग्ध, तुल्यप्राधान्य, काक्वाक्षिप्त व असुन्दर। ध्वनिकार ने कहा है—

'प्रकारोऽय गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धते रसादितात्पर्यपर्यालोचनया पुनः।।'' ३।४१।।

यह गुणीभूत व्यङ्ग्य भी ध्वनि में ही पर्यवसायि होने से इसकी भी ध्वनिरूपता मानी गयी है।

## रसध्वनि का महत्व एवं रसों का तालमेल

काव्य में तीन प्रकार की ध्वनियाँ मानी गयी हैं— रस ध्वनि अलंकारध्वनि, एवं वस्तुध्वनि। जहाँ पहले अलंकार वाच्य था अब वहाँ अलंकार वाच्य न होकर व्यङ्ग्य हो गया है तो वहाँ अलंकार ध्वनि होती है, इसी प्रकार वस्तु वाच्य न होकर व्यङ्ग्य हो जाने से वस्तु ध्वनि होती है और ये दोनों ध्वनियाँ ठीक रस ध्वनि के ही पर्यवसायिनी होने के कारण इनको भी रस ध्वनि के समकक्ष माना गया है। कुमारसम्भव में सम्भोग

शृङ्गार, रामायण में करुण, और महाभारत में शान्त आदि रस ध्वनियाँ हैं। रसों के तालमेल के सम्बन्ध में ध्वन्यालोक में बहुत विस्तार से कहा गया है और उनके उन्नययन कवि के कवित्व शक्ति पर निर्भर माना गया है। जैसा कि कहा गया है—

अव्युत्पत्तिकृतो दोष: शक्त्या संव्रियते स्वे:।
यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते।।

रससिद्धि के सम्बन्ध में कहा गया है कि अनुचितता ही रस यंग का कारण होती है। मेल रखने वाले सजातीय रसों को एक क्रम में रखना विरोधी रसों को अलग करके रखना, पूरे प्रबन्ध में एक ही अङ्गी रस का होना इत्यादि रस सिद्धि के उपाय बताये गये हैं।

इस तरह ध्वन्यालोक में ध्वनि का साङ्गोपाङ्ग वर्णन किया गया है और ध्वनिकार का यह पद्य—

''विमतिविषयो य: आसीन्मनीषिणां सततमविदितसतत्व:।
ध्वनिसंञ्ज्ञित: प्रकार: काव्यस्य व्यञ्जित: सोऽयम्।।''

अर्थात् ध्वनि एक ऐसा विपय रहा कि जिसके भाव एवं अभाव के पक्ष में विभिन्न विद्वानों का मत-मतान्तर रहा है। अब ध्वनि सम्यक् प्रतिष्ठान से यह विवाद निर्णीत हो गया कि काव्य की आत्मा ध्वनि है जो स्पष्टत: ध्वनि नहीं है वह भी ध्वनि में हो पर्यवसायि होकर ध्वनि का वैशिष्ट्य बढाता है जो सुन्दर है, जो-जो चमत्कारपूर्ण है अथवा जिसमें चमत्कार का पर्यवसान होता है वह ध्वनि है और उसमें भी र-स-ध्व-नि।

।। इति शिवम् ।।



# लीलाऽऽख्यलोकमणीयविवृतिसमुपेतः
# सध्वन्यालोककाव्यालोकस्थविषयाणां
# सूची
## प्रथम उद्योतः

## द्वितीय उद्योत

## तृतीय उद्योत

## चतुर्थ उद्योतः

●●●

।।श्री:।।

श्रीमदानन्दवर्धनाचार्यप्रणीत:

# ध्वन्यालोक:

आचार्यलोकमणिदाहालप्रणीत

## 'लीला' संस्कृत-हिन्दीव्याख्याद्वयोपेत:

## प्रथम उद्योत:

ध्वन्या०— स्वेच्छाकेसरिण: स्वच्छस्वच्छायायासितेन्दव:।
त्रायन्तां वो मधुरिपो: प्रपन्नार्तिच्छिदो नखा:।।

लीला— शक्तिस्पन्द: सृजति भुवनं लीलया यस्य नेतु-
र्भासा यस्य त्रिभुवनमिदं भासते भासकस्य।
ब्रह्माण्डं यत्परमगहनं केवलं यस्य बिम्बं
तस्मै धाम्ने नम इति महत्तत्त्वनाम्ने शिवाय।। १।।

लोकालोकोऽचरचरमयश्चेतनश्चित्स्वरूप:
क्ष्मान्योतिर्वार्य्विग्निगगनर्क्षेशसूर्यात्मरूप:।
मन्त्रस्त्र्यक्षस्त्रिगुणपरकस्त्र्यम्बको निर्गुणात्मा
णिध्वानेन प्रमुदितमना शङ्कर: शन्तनोतु।। २।।

नेपालाभिजनोऽपि वृत्तिविषयच्छेदं निरस्तस्तत:
शुद्धान्तस्करणोऽप्यनन्यगतिको वाराणसीमाश्रित:।
जीवन्नुच्छशिलं श्वसन्नविरलं सोष्म श्ववृत्तिञ्चरन्
हृत्तुष्ट्यायनवाप्य साध्यमपरं प्रज्ञानुरूपं स्वगम्।
व्यायामं बहुधा विधाय विविधेऽलङ्कारशास्त्रे श्रमात्
तांस्तां मग्नधिया विलोड्य कठिनादादाय सारं तत:।
ध्वन्यालोकमिमं सलोचनमपि व्याख्यामि सद्बुद्धये
सोऽहं लोकमणि: समाहितमना: श्रीपर्शुरामा त्मज:।। ३।।

योऽभ्यासो विहितो विहाय चपला: क्रीडा हि बाल्ये मया
तारुण्ये निगमागमादिषु तथोऽज्झित्वा सुखं यौवनम्।
सर्वे सम्प्रति ते फलन्तु नितरामानन्दविज्ञकृते:
ध्वन्यालोकनिबन्धनस्य विवृतिर्लध्वी समारभ्यते ।। ५।।

यद्यन्नैगममामृतं विलसितं यच्चागमं नैष्ठिकं
यत्साहित्यसुधामयं प्रकटितं दृक्छोत्रपेयं रसम्।
गूढं भावरसध्वनिप्रगुणितं मां पाययित्वाऽखिलं
प्रज्ञाशालिनि शारदे मम मतौ लीलायमाना भव।। ६।।
मीमांसा नियमेन सेवित्तपदा साङ्ख्यं समाराधितं
न्यायो न्यायपथाऽऽदृतः सुमनसा वेदान्त उद्घाटितः।
योगश्चित्तधृतो विशेषनियमाद्वैशेषिको यो वृतः
सर्वे चित्ततले स्फुरन्तु विषयव्युत्पत्तये ते मम।। ७।।

आनन्दवर्धनकलानिपुणं बुधं त–
मानन्दवर्धनमहं रसिकाग्रगण्यम्।
उन्नायकं ध्वनिमतस्य हि काव्यशास्त्रे
राजानकं गुरुगुरुं प्रणमामि मूर्ध्ना।। ८।।

यो लोचनमदात्सर्वं ध्वन्यालोकस्य संस्कृतम्।
नमोऽभिनवगुप्ताय तस्मै सत्प्रतिपत्तये।। ९।।
व्याख्यातृभ्यश्च सततं ये ये मत्पूर्ववर्तिनः।
ये हि प्रतिपदं व्याख्यान् ध्वन्यालोकं सुदुस्तरम्।। १०।।
नमः काव्यात्मभूताय ध्वनये स्फोटरूपिणे।
यं विना नैव संसिध्येत् कला-प्रतिकलामतिः।। ११।।

लीला— अथ तत्रभवान् ध्वनिप्रस्थापनपरमाचार्यः शारदावरदनन्दन आनन्दवर्धनो राजानकः प्रारिप्सितकाव्यालोकवृत्तिर्विघ्नपरिसमाप्तिकामनया ग्रन्थारम्भे स्वाभीष्टदेवतासंस्मरणात्मकं समुचिताशीः प्रकटनद्वारेण कृतं मङ्गलं शिष्यशिक्षायै ग्रन्थे निबध्नाति स्वेच्छेत्यादिना।

स्वेच्छाकेसरिणः मधुरिपोः स्वच्छस्वच्छायायासितेन्दवः प्रपन्नार्तिच्छिदः नखाः वः त्रायन्ताम्, इति पदव्यवस्था।

स्वेच्छाकेसरिणः— स्वस्य आत्मन एव न तु कस्याऽप्यन्यस्य इच्छा ईहा तया यः केसरी सिंहः नृसिंह इत्याशयः तथाप्रसिद्धेः, 'तृतीया तत्कृतार्थेन गुणवचनेन' इति समासः, तस्य स्वयं धृतनरसिंहरूपस्य न तु कर्मवशतः परप्रेरणया वा स सर्वयोनित्वात्, मधुरिपोःमधोस्तदाख्यदैत्यस्य रिपुः शत्रुः संहारकस्तस्य, षष्ठो तत्पुरुषः, अनेन तस्य दुष्टनिग्रहपरत्वं व्यज्यते विष्णोरित्याग्रहःपुरा किल नारायणो नरसिहरूपं गृहीत्वा हिरण्यकशिपुं ददारेति पुराणादौ श्रूयते, स्वलीलयैव धृतनृहरिविग्रहस्य विष्णोः, स्वच्छस्वच्छायायासितेन्दवः स्वच्छा निर्मला या स्वेषामात्मनामेव, न तु परतो लब्धाः, अनेन चन्द्रमसो या कान्तिः सा रवि किरणतो लब्धेति ध्वन्यते ''महोशणास्त्रांस्त्वत्तो द्विजपतिरथो,

प्राप्य नियतान्। स पीयूषं वर्षत्यमृतकर इन्दुः प्रतिनिशम्।।'' इत्युक्तेः। या छाया कान्तिः ''छाया त्वनातपे कान्तौ'' इति वैजयन्ती, तया 'विशेषणं विशेष्येण बहुलमि'ति कर्मधारयः, यद्वा स्वच्छेन नैर्मल्येन स्वच्छायया वक्रहृद्यरूपया आकृत्या आयासितः खेदितः स्वलाघवहेतुकदुःखेन इन्दुश्चन्द्रमा यैस्ते तादृशाः, समानाधिकरणबहुव्रीहिसमासः, अत्र नखकान्तेः नितान्तस्वच्छताकथनं चन्द्रस्य सकलङ्कत्वद्योतनाय, आयासितशब्देन चन्द्रमसो बालत्वमपि ध्वन्यतेऽपरिपूर्णवयस्कस्यैव सद्य आयासनसम्भवात्, आयासनञ्च समानेऽपि कान्तिमत्वकुटिलाकारयोगे नखानां प्रणतार्तिनिवारणसामर्थ्यादात्मनस्तदभावात्तेषां दंशविग्रहत्वादात्मन एकतनुत्वात्तदुदयेनात्मन असाधारणवैशद्यलोपभयाच्च, प्रपन्नार्तिच्छिदःप्रपन्नानां शरणागतानां या आर्तयः कष्टानि तान् छिन्दन्ति नाशयन्ति तच्छीलाः 'सत्सूद्विष' इति क्विप् उपपदसमासश्च, अत्र 'प्रपन्नार्तिच्छिदः' इत्यस्य षष्ठ्यन्तं रूपं कल्पयित्वा मधुरिपोविशेषणत्वेनाऽपि व्यवहृतं दृश्यते, तत्पक्षें प्रपन्नानामर्तिं छिनत्ति तच्छीलस्तस्येति, नखाःअङ्गुल्यग्रभागस्थकण्टकानि, वःयुष्मान् व्याख्यातृश्रोतृप्रभृतीन् तेषामेव सम्बोधनयोग्यत्वात्, सम्बोधनसारो हि युष्मच्छब्दस्तेन न ह्यसम्बोध्यो युष्मदा व्यपदिश्यते, त्रायन्तांसर्वविधाहितेभ्योऽवन्तु, इति। वृत्तमत्रारनुष्टुप्। 'श्लोके षष्ठं गुरुर्ज्ञेयमि'त्यादि तल्लक्षणम्।

अत्र वंस्त्वलङ्काररसरूपस्त्रिविधो ध्वनिरूपस्थापितोऽस्ति। तत्र नखानां करणभूतानामपि त्राणकार्यकर्तृत्वेनोपस्थापनात्तेषां परमसामर्थ्यं ध्वनितं तेनैव परमेश्वरस्य कार्यसिद्ध्यर्थं पृथक्साधनापेक्षाभावत्वञ्च सूचितं, मधुरिपोरित्यनेन दुर्जनजन्यकष्टनिवारणपरायणता व्यञ्जिता, नखानां स्वच्छेत्यादि विशेषणोपन्यासेनार्थशक्त्यनुरणनमूलेन ध्वनिना चन्द्रमसो बालत्वं ध्वनितमिति वस्तुध्वनिः, स्वेच्छाकेसरिणः मधुरिपोः प्रपन्नार्तिच्छिदः इति पदैर्हिरण्यकशिपुप्रभृतिदुष्टवधविषयकोत्साहस्य व्यञ्जनया वीररसो ध्वन्यते, यत्र 'रसस्य विभावदिषु चतुर्ष्वङ्गेषु व्यक्तेनैकेनाऽपि शेषाण्यङ्गन्याक्षिप्यन्ते' इति नियमाद् व्यक्तेन सततंत्राणपरायणतारूपभगवदुत्साहेनाक्षिप्तैर्मधुप्रभृतिदुष्टैरालम्बनैस्तेषां साहसशौर्यादिभिरुद्दीपनैस्तदवहेलनादिभिरनुभावैः गर्वादिभिः सञ्चारिभिः परिपुष्टेनोत्साह स्थायिभावेन पानकरसन्यायेन वीराख्यरसो ध्वन्यत इति रसध्वनिः। उक्तमेव—

सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।
झटित्यन्यसामाक्षेपे तदा दोषो न विद्यते।। इति।

अत्र केचितु रतिभावध्वनि मन्यन्ते। तदनुसारेण लेखकस्य भगवद्विषयकरतिरेवाङ्गी, अभिव्यज्यमानवीररसस्तु तदङ्गत्वादपराङ्गगुणीभूतस्योदाहरणमेव। अपरे तु पद्ये भक्तानामाशीर्वादमात्रनिबद्धत्वाल्लेखकस्य भगवद्विषयकरतिर्नैव

व्यंज्यते। तेन वीर एवाङ्गीति। इतरे तु आशीर्वादेऽपि भगवद्विषयकभक्तिस्तु सन्निहितैव भवति किञ्च नाभक्तस्तथा कर्तुं प्रयतते। अतोऽत्र भगवद्विषय-करतिभावध्वनिरेवाङ्गी भवति, वीरस्तु अङ्गमेवेति प्रतिपादयन्ति। एवमेव तुल्येऽपि कान्तिमत्त्ववक्रत्वहृद्यत्वादियोगे प्रपन्नार्तिच्छेदकत्वेन नखानां वैशिष्ट्यप्रतिपादनाद् व्यतिरेकालङ्कारो व्यङ्ग्यः। 'उपमानादुपमेयस्याधिक्यं व्यतिरेकः' इति तल्लक्ष-णात्। तथैव नखोपस्थित्या चन्द्रमस आत्मसम्मानह्रासोत्प्रेक्षणादुत्प्रेक्षाऽप-ह्नुत्यलङ्कारौ च ध्वन्येते इति केचित्। तत्तु प्रतीयत एवेत्यपरे।

तथैव नखानां कृन्तनं तु प्रसिद्धमेव किन्तु तेषामार्तिकृन्तनन्तु नैव सङ्गच्छते, किन्तु परमेश्वरस्य सर्वशक्तिमत्त्वात्तत्संयोगेन नखानामार्तिच्छेदनमपि समुपपन्नं भवति। सामान्यतस्तु नखानामार्तिकृन्तनव्यापारासम्भवाद्वाक्ये तस्यान्वयासम्भ-वादभिधाया बाधस्तेन प्रयोजनमाधृत्य लक्षणोपतिष्ठते ययाऽर्तिशब्दो हिरण्य-कशिपुमुपस्थापयति, येन व्यज्यते यद्धिरण्यकशिपुरर्तीनां विग्रहमेव तस्य प्रणाशेन पीडानाशादित्यत्रार्थान्तरसङ्क्रमितवाच्यो लक्षणामूलो ध्वनिः।

एवमेवायासस्त्वं तु चेतनधर्मस्तच्च निश्चेतने चन्द्रमसि नैव सम्भवति। अतोऽत्र तात्पर्यानुपपत्या मुख्यार्थबाधस्तेन प्रयोजनमाधृत्यायासशब्दस्यासौन्द-र्यार्थे लक्षणा, यया नखकान्त्यपेक्षया चन्द्रज्योत्स्नाया मलिनत्वं व्यज्यते, इति लक्ष्यार्थ उपपद्यते। लक्षणायाः प्रयोजनमप्यत्रासौन्दर्याधिक्यबोधनमेव यद्व्य-ञ्जनया सम्भवति। तेनात्रायासस्य मुख्यार्थस्य सर्वथा परित्यागादविवक्षितवा-च्यत्वेनात्यन्ततिरस्कृतवाच्यध्वनिः।

तथा चात्र नखानां सकललोकप्रसिद्धच्छेदनव्यापारव्यतिरेकि किमप्यपूर्वमेव प्रपन्नार्तिच्छेदनलक्षणं क्रियावैचित्र्यमुपनिबद्धमिति वक्रोक्तिकारः।

लीलया धृतनरहरिरूपस्य मधुप्रभृतिदुष्टसंहारकस्य भगवतो निजनिर्मल-कान्त्या खेदितनिशाकराः शरणागतकष्टनिवारणशीला नखा युष्मानवन्तु इति।

'स्व' शब्दस्य तु प्रधानक्रियया सहैवान्वयो भवति। अत्र तु 'स्वेच्छा' शब्दस्य 'केसरी' इत्यनेन संज्ञाशब्देन सहान्वयादभवन्मतसम्बन्धदोषः प्रतीयते इति केषाञ्चिन्मतम्। किन्तु स्वेच्छाशब्दस्तु विशेषरूपेण व्यञ्जकत्वात्तस्य परिहारः। 'स्वच्छाया' इत्येतस्य 'विभाषा सेनासुराच्छायाशालानिशानाम्' इति सूत्रेण नपुंसकत्वस्य वैकल्पिकनियमादुभे एव रूपे स्वच्छायं स्वच्छाया वा।

ध्वनिविवेचक ग्रन्थ 'काव्यालोक' की 'ध्वन्यालोक' नामक व्याख्या का प्रारम्भ करते हुए आनन्दवर्धन प्रारिप्सित ग्रन्थ की निर्विघ्न परिसमाप्ति के उद्देश्य से प्रारम्भ में किये गये मङ्गल को शिष्यशिक्षा हेतु निबन्धन करते हैं—

अपनी ही इच्छा से, न कि किसी के कहने से वा अन्य कारणों से, नरसिंह का रूप धारण किये हुए, मधु आदि दुष्टों के नाश करने वाले भगवान् के अपनी

निर्मल कान्ति से चन्द्रमा को भी खिन्न बनाने वाले एवं शरणागत के कष्ट को निवारण कर पाने वाले नाखून आप सबकी रक्षा करें।। १।।

कारिका— काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम्।। १।।

लीला— अथ तत्रभवान् काव्यालोककारिकाकारः— "सिद्धार्थ सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते ! शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।।" इति शिष्टानुशासनं परिपालयन् चिकीर्षितस्य ग्रन्थस्याभिधेयसम्बन्धप्रयोजनाधिकारि-रूपमनुबन्धचतुष्टयं विवृणोति—काव्यस्यात्मेत्यादिना।

बुधैः काव्यस्य आत्मा ध्वनिः इति यः समाम्नातपूर्वः अपरे तस्य अभावम् जगदुः, अन्ये तम् भाक्तम् आहुः, केचित् तदीयम् तत्त्वम् वाचाम् अविषये स्थितम् इति ऊचुः, तेन सहृदयमनः प्रीतये तत्स्वरूपम् ब्रूमः, इति पदव्यवस्था।

बुधैः= काव्यविचक्षणैः, काव्यस्य= उक्तिवैचित्र्यविशिष्टकविकृतेः आत्मा= सारतत्त्वं, ध्वनिः= ध्वन्यतेऽसाविति ध्वनिः सहृदयसंवेद्यो विशिष्टोऽर्थः अर्थशब्दो-पायादुपसर्जनीकृतस्वार्थो वाक्यार्थावगतेरनन्तरमनुनादरूपमप्रतिशब्दरूपं वाऽभि-व्यञ्जयति तद्ध्वनिरूपमिति व्याख्यातः, इति= इत्थं, यः= यादृशः, समाम्ना-तपूर्वः= प्रतिपत्तिपूर्वकमाख्यातः परम्पराक्रमेण संनिरूपितः यथोक्तम्—

शब्दप्रधानमाश्रित्य तत्र शास्त्रं पृथग्विदुः।
अर्थे तत्त्वेन युक्ते तु वदन्त्याख्यानमेतयोः।।
द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यगीर्भवेत्।। इति।

द्वयोरिति शब्दार्थयोः गुणत्वं गौणीभावः व्यापारस्य वाच्यप्रतीयमानेतरबो-ध्यक्रियायाः प्राधान्यं मुख्यत्वं यत्र तदेव काव्यमिति भट्टनायकमतम्। अपरे= तदितरे विचक्षणाः, तस्य= तादृशस्य काव्यात्मत्वेन ख्यापितस्य ध्वनेः, अभावं= अविद्यमानतां, जगदुः= प्रोचुः, नास्त्येव ध्वनिरिति प्रतिपादयामासुः, अन्ये= पुनरपरे तु, तं= तादृशं कैश्चित्काव्यात्मत्वेन स्वीकृतं कैश्चितु नितान्तमेवोपेक्षितं ध्वनिं भाक्तं= भज्यते मुख्यार्थबाधेन प्रसिद्धतयोत्प्रेक्ष्यते इति भक्तिर्लक्षणा तत आगतो भाक्तो लाक्षणिकोऽर्थस्तं, आहुः= प्रतिपादयन्ति मुख्यार्थभिन्नो गौणोऽर्थ एव ध्वनिरिति कथयन्ति, केचित्तु= कतिपये विद्वांसस्तु, तदीयं= तस्य काव्यात्मत्वेन अविद्यमानत्वेन गौणार्थत्वेन व्यवहृतस्य ध्वनेः, तत्त्वं= रहस्य यथार्थता, वाचां= वाणीनां, अविषये= क्षेत्रबाह्ये, स्थितं= कृतास्पदं, ऊचुः= प्रतिपादयामासुः—सत्यपि ध्वनौ स वचसा वर्णयितुमशक्यः, अर्थात् अनिर्वचनीय इत्येके, तेन= तथाभूतेन कारणेन ध्वनिविषये इदमित्थमिति सम्यगनिर्णीततया,

सहृदयमनःप्रीतये= सहृदया रसिका ये जनास्तेषां मनः स्वान्त तस्य प्रीतिरानन्दस्तस्यै रसिकामोदहेतवे, तत्स्वरूपं= तस्य तादृशस्य नितान्तमेव विवादविषयमापन्नस्य ध्वनेः स्वरूपमिदमित्थमिति यथार्थं, ब्रूमः= प्रतिपादयाम इति।

कतिपयैः काव्यमर्मज्ञैः ध्वनिरेव काव्यस्यात्मा अर्थात् ध्वनिवत्त्वं काव्यत्वमिति प्रतिपादितम्। अपरे केचन तु ध्वनेरस्तित्वमेव नैव स्वीकुर्वन्ति। तदितरे लक्ष्यार्थमर्थाद्गौणार्थमेव ध्वनित्वेन गृह्णन्ति। कतिपये तु ध्वनिं स्वीकृत्याऽपि तमनिर्वचनीयं मत्वा त नैव व्याकुर्वन्ति। तेनैव ध्वनिस्वरूपमत्र रसिकामोदहेतवे उपस्थाप्यते इति।

संस्कृतकाव्यशास्त्रस्य भामहपूर्ववर्तियुगो यद्यप्यन्धकारनिलीनस्तथापीदमनुमातुं बलात्प्रचोद्यते यद तद्विषये ये केचित्सिद्धान्ताः प्रतिपादिताः सन्ति तेऽपि सर्वे तस्मिन्नेव काले प्रतिपादिता आसन्। अलङ्कारसम्प्रदायस्याद्याचार्यत्वेन प्रसिद्धो भामहः स्वपूर्ववर्तिनोऽलङ्काराचार्यान् स्मरति— "रूपकादिरलङ्कारस्तथान्यैर्वहुधोदितः" "रूपकादिरलङ्कारं बाह्यमाचक्षते परे" इत्याद्युक्त्वा, तथैव "शब्दाभिधेयसम्बन्धभेदादिष्टं द्वयं तु नः" इत्युक्त्वा स्वमतञ्च स्थापयति। दण्डी चेयमेव— "पूर्वशास्त्राणि संहृत्य प्रयोगानुपलक्ष्य च" इति स्वपूर्ववर्तिनः स्मरति। व्याख्यातारश्च भरतकाश्यपवररुचीस्तत्पूर्ववर्तित्वेन स्मरन्ति। भरतस्य सम्प्रति नाट्यशास्त्रमेवोपलब्धम्। तत्र काव्यशास्त्रविषये स्वल्पमात्रमेव निरूपितं दृश्यते। काव्यालोककारश्च ध्वनिविषये स्वपूर्ववर्तिनश्चतुरः सम्प्रदायान् स्मरति। एतत्सूचयति यद्भामहपूर्ववर्तियुगे एव काव्यविषयेऽनेके सिद्धान्ताः प्रतिपादिता आसन्। सम्भवति च कारिकाभागस्तदैव निबद्धः स्यात्।

प्रारम्भपद्येऽस्मिन् कारिकाकारः स्वचिकीर्षितग्रन्थस्यानुबन्धचतुष्टयं निर्दिशति। ग्रन्थस्यास्याभिधेयो वा विषयो ध्वनिस्वरूपमर्थादत्र ध्वनिस्वरूपं निरूप्यते। अस्य प्रयोजनं सहृदयानां ध्वनिरूपज्ञापनमेव। तस्याऽपि प्रयोजनञ्च सहृदयानां मनस्तोषः। सहृदयाश्चास्याधिकारिणः। सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः स चात्र ध्वनिविषये विद्वन्मतविवेचनमेव। अत्र ध्वनिर्विविच्यते। कथमिति चेद्विदुषां मतमुपस्थाप्य। किन्निमितं सहृदयमनस्तोषाय। केषां सहृदयानामेवेति।

वस्तुतस्तु कः कारिकाकार इति नैवाऽधुनापि संज्ञातम्। केचिद्वृत्तिकारमेव कारिकाकारमपि मन्यन्ते। केचितु तद्भिन्नमेव। ये खलु वृत्तिकारमेव कारिकाकारं मन्यन्ते ते कथयन्ति यदियं परम्पराऽन्यत्रापि दृश्यते यत्कारिकाकारः स्वयमेव कारिकाणां वृत्तिमपि करोति। अपरे तु अन्तःसाक्ष्यमाधृत्य तद्दूषयित्वा कारिकाकारं वृत्तिकारात्पृथगेव मन्यन्ते। स्वयमेवाभिनवगुप्त आनन्दवर्धनं कारिकाकाराद्भिन्नं वृत्तिकारमात्रं मन्यते। दिङ्मात्रोद्धरणं यथा— 'परमेश्व-

रसाम्मुख्यं करोति वृत्तिकारः' (पृ० १) 'मया वृत्तिकारेण सतेति भावः। न चैतन्मयोक्तम् अपि तु कारिकाकाराभिप्रायेणेत्याह' (पृ० ७३) 'एतत्तावत् त्रिभेदत्वं न कारिकाकारेण कृतम्, वृत्तिकारेण तु दर्शितम् (पृ० १५०), 'कारिकाकारेण पूर्वं व्यतिरेक उक्तः न च सर्वथा न कर्तव्योऽपि तु बीभत्सादौ पश्चात्कर्तव्य एवेति पश्चादन्वयः। वृत्तिकारेण तु अन्वयपूर्वको व्यतिरेक इति' (पृ० १६०), 'दर्शितमेवेति कारिकाकारेणेति भूतप्रत्ययः।' (पृ० १७०) नैतावन्मात्रं स्वयमेवा-नन्दवर्धनो वृत्त्यन्ते 'तद्व्याकरोत्' इति कथयति। यदि स एव कारिकाकारः स्यात्तदेदं काव्यमयं वाक्यं कारिकान्ते एव कथितं स्यात्। तर्कास्त्वनेके सम्भवन्ति, यथार्थस्तु तद्भिन्नोऽपि। वृत्तेरस्याः संज्ञा यथा ध्वन्यालोकः, तथैव कारिकाभागस्य का संज्ञा ? तदेति प्रश्ने केचित् 'काव्यालोकः' इति, केचित् 'सहृदयोदयः' इति च प्रतिमापयन्ति। लोचनटीकोपसंहारगतं 'काव्यालोकः', इति पद्यं वृत्युप-संहारगतं 'सहृदयोदयलाभहेतोः' इत्यपि कथनञ्च तत्राधाराः।

'काव्य की आत्मा ध्वनि है' कहकर जो विद्वानो ने पहले से ही निरूपित किया था, कुछ लोग उसका अभाव ही मानते है। कुछ तो उसे मुख्य अर्थ से भिन्न, किन्तु उससे सम्बद्ध गौण अर्थ मानते हैं। कुछ उसे अनिर्वचनीय मानते हैं। अतः सहृदय लोगों की प्रीति के लिए हम उस ध्वनि के स्वरूप का निर्धारण करेंगे।। १।।

ध्वन्या०— बुधैः काव्यतत्त्वविद्भिः काव्यस्यात्मा ध्वनिरिति संज्ञितः परम्परया यः समाम्नातः तस्य सहृदयजनमनः प्रकाशमानस्याप्यभावमन्ये जगदुः। तदभाववादिनां चामी विकल्पाः सम्भवन्ति।

लीला— कारिकायां काव्यात्मत्वेन प्रतिष्ठापितस्य ध्वनेः प्रतिपक्षरूपेण येऽभावलाक्षणिकानिर्वचनीयतावादाः समुल्लिखितास्तेषां प्रतिपत्तिविप्रतिपत्तिनि-र्देशपूर्वकं कारिकां विवृणोति वृत्तिकारो बुधैरित्यादिना। बुधैरिति काव्यविद्भिः काव्यं विदन्ति तच्छीला इति तैः काव्यज्ञैः काव्यात्मशब्दसान्निध्येनाऽत्र बुधशब्दः काव्यज्ञपरः'सशंखचक्रो हरिः' इतिवत्, काव्यस्य कवेरुक्तिवैचित्र्यसमाविष्ट-प्रबन्धस्य, आत्मा तत्त्वं सारवस्तु, ध्वनिर्वाच्यप्रतीयमानेतरार्थः इति इत्थं संज्ञितो-ऽभिहितः। परम्परया प्रचलितपद्धत्याऽनवरतधारया, यो यथाविधः, समाम्नातपूर्वः प्रथममेव सम्यग्व्यवस्थापितः, सम्यगिनि आसमन्तात् सर्वत एव, आम्नातः आख्यातः, तस्य तादृशस्य काव्यात्मभूतध्वनेः, सहृदय जनमनप्रकाशमानस्य सहृदया रासिका ये नाः लोकास्तेषां मनसि स्वान्ते प्रकाशमानस्यानुभवगोचरस्य, तादृशस्यापि, अभावमसत्तां, अन्ये अपरे केचनानुपयुक्तपक्षधरत्वादग्राह्यनामानः, जगदुः प्रतिपादनाय प्रयेतिरे। तदभाववादिनां तस्य ध्वनेः अभावमसत्तां वदन्ति समर्थयन्ति तच्छीला इति तेषां ध्वन्यसत्तापक्षधराणां, च, अमी अधोनिर्दिश्यमानाः,

विकल्पाः भ्रान्तयः पक्षाः तस्य नितान्तासम्भवात्, सम्भवन्ति सम्भावनविषया भवन्ति न तु सन्तीति।

विद्वानों अर्थात् काव्य के तत्त्व के जानकारों द्वारा काव्य की आत्मा ध्वनि है, ऐसा निरूपित किया गया है। परम्परा से ही जो प्रतिष्ठापित है, सही ढंग से ठीक से सोच कर माना गया है, उसका रसिक लोगों के मन में प्रकाशित होते हुए भी कुछ लोग अभाव मानते हैं। उन ध्वनि के अभाव मानने वालों के ये पक्ष हो सकते हैं।

काव्य के रहस्य जानने वाले विद्वान ध्वनि को काव्य की आत्मा के रूप में परम्परा से ही व्याख्या करते आए हैं। सहृदयों के मन में प्रकाशमान उस ध्वनि का कुछ लोग अभाव मानते हैं। उन अभाव मानने वालों में कुछ विकल्प सम्भव हो सकते हैं

ध्वन्या०— तत्र केचिदाचक्षीरन्–शब्दार्थशरीरं तावत्काव्यम्। तत्र च शब्दगताश्चारुत्वहेतवोऽनुप्रासादयः प्रसिद्धा एव। अर्थगताश्चोपमादयः। वर्णसंघटनाधर्माश्च ये माधुर्यादयस्तेऽपि प्रतीयन्ते। तदनतिरिक्त वृत्तयो वृत्तयोऽपि याः कैश्चिदुपनागरिकाद्याः प्रकाशिताः, ता अपि गताः श्रवणगोचरम्। रीतयश्च वैदर्भीप्रभृतयः। तद्व्यतिरिक्तः कोऽयं ध्वनिर्नामेति।

लीला— ध्वन्यभाववादिनां प्रथमं सम्भावितपक्षमुपस्थापयति तत्रेत्यादिना। तत्राभाववादिनां मध्ये, केचिदिति प्रथमेऽभाववादिनः, आचक्षीरन् कथयेयुः, सम्भावनायां लिङ् कथयितुं प्रयतेरन्, तावदिति निःसन्देहेन, अत्र न केषामपि समापत्तिः, शब्दार्थशरीरं शब्दो विवक्षितैकार्थवाचकाभिधानम्, च अर्थः स्वसन्दसुन्दराभिधेयस्तावेव शरीरं विग्रहं यस्य तत्तादृशं काव्यं काव्यसंज्ञकं भवति–काव्यस्य शरीरं शब्दार्थौ तु नैव ध्वनिः। अथ च शब्दार्थयोर्यश्चारुत्वहेतुः स ध्वनिरित्युच्यते चेन्नैव। तत्रेति शब्दार्थयोः शब्दगताः शब्दसम्बद्धाः, चारुत्वहेतवः, चारुत्वं शोभाविच्छित्तिस्तस्य हेतवः कारणभूताः, अनुप्रासादयः, अनुप्रासयमकप्रभृतिशब्दालङ्काराः, प्रसिद्धाः प्रख्याताः सर्वैर्ज्ञाताः, एवेत्यवधारणे। यथोक्तम्—

ये व्युत्पत्त्यादिना शब्दमलङ्कर्तुमिह क्षमाः।
शब्दालङ्कारसंज्ञास्ते ज्ञेया जात्यादयो बुधैः।। इति।

अर्थगताः अभिधेयसम्बद्धाः उपमादयः उपमारूपकप्रभृतयः। उक्तं यथा—

अलमर्थमलङ्कर्तुं ये व्युत्पत्त्यादिवर्त्मना।
ज्ञेया जात्यादयः प्राज्ञैरर्थालङ्कारसंज्ञया।। इति।

एते च स्वरूपमात्रनिष्ठाः। वर्णसंघटनाधर्मा वर्णानामक्षराणां संघटना संयोजनं तस्या धर्मागुणाः, माधुर्यादयो माधुर्यौजःप्रसादाः, ते इति प्रसिद्धाः, प्रतीयन्ते ज्ञायन्ते एव। उक्तमेव–विशिष्ट पदरचना रीतिः। विशेषो गुणात्मा।

तदनतिरिक्तवृत्तयस्तैरनुप्रासोपमामाधुर्यादिभ्योऽनतिरिक्ताऽविशिष्टा वृत्तिर्व्यापारो यासां तास्तथा तत्समव्यापारा एव तेषामेव दीप्तमसृणमध्यमवर्णनीयोपयोगितया, वृत्तयः परुषत्वललितत्वमध्यमत्वस्वरूपा वर्गत्रयसम्पादनार्थाः—

माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकेष्यते।
ओजः प्रकाशकैस्तैस्तु परुषा कोमला परैः।।

इत्युक्ता वर्णसंघटनस्वभावाः, अपि च, या यादृशाः, कैश्चित्कतिपयैः- भामहादीनामसम्मतत्वात्कैश्चिदित्युक्तं भवति। वृत्तयस्तु उद्भटादिप्रतिपादिताः पश्चान्मम्मटोऽपि ता उद्धरति, ताः तादृशाः अपि च, श्रवणगोचरं गताःश्रुताए-वकिन्तु अतथार्हत्वाद हृदयपथं नैवावतीर्णाः। तथैव वैदभी-प्रभृतयः पदसंघटना रीतिरङ्गसंस्थाविशेषवत्। उपकर्त्री रसादीनामित्युक्ताः वैदर्भी-गौडी-लाटीपा-ञ्चाली-प्रमुखाः, रीतियो गुम्फनप्रकाराः,चेति तथैव श्रुताः। तद्व्यतिरिक्तः तेभ्यः शब्दार्थालङ्कारः शब्दार्थगुणवृत्तिरीतिभ्यो व्यतिरिक्तो भिन्नः ध्वनिर्नाम ध्वनिरिति संज्ञितः, अयं प्रसङ्गगतः कः कतम इति।

ये खलु ध्वनेरस्तित्वं नैवामनन्ति तेकथयितुं शक्नुवन्ति यत् शब्दार्थश-रीरमेव काव्यं भवति, यच्च सर्वैरभिमतमेव किन्तु तौ शब्दार्थावेव नैव ध्वनिः। अथ तयोश्चारुत्वमेव ध्वनिरिति कथ्यते चेदित्थमाचारुत्वं खलु द्विविधं स्वरूपमा-त्रनिष्ठं संघटनाश्रितञ्च। तत्र स्वरूपमात्रनिष्ठसौन्दर्यविषयाः शब्दगता अनुप्रासाद-योऽलङ्कारा अर्थगताश्च उपमादयोऽर्थालङ्काराः। एवमेव शब्दानां संघटना-श्रितसौन्दर्य शब्दगुणेभ्यो माधुर्यादिभ्योऽर्थानाञ्चार्थगुणेभ्यस्तेभ्य। एव एवञ्च काव्यसौन्दर्याधानाय गुम्फनमधिकृत्य उपनागरिकाद्या वृत्तयो वा वैदर्भीप्रमुखा रीतयश्च प्रसिद्धा एव। ते सर्वे तु नैव ध्वनिसंज्ञिताः। यदि न शरीरं ध्वनिर्नैव च तत्सौन्दर्याधायकत्वं तदा तद्भिन्नो ध्वनिसंज्ञितो नैव कश्चिदिति।

ध्वनि का अभाव बतलाने वाले तीन सम्प्रदाय हैं। उनमें से पहले पक्ष को उपस्थापित करते हैं।

ध्वनि का अभाव मानने वालों में से कुछ ऐसा कह सकते हैं — प्रचलित सीमा के अतिक्रमण करने वाले शब्द एवं अर्थ ही काव्य के शरीर हैं। उनको ध्वनि तो कहा नहीं जाता। तो उनके सौन्दर्याधायक तत्त्व को भी ध्वनि तो कहा नहीं जाता। सौन्दर्य दो प्रकार का होता है-स्वरूपगत एवं संघटनागत। स्वरूपगत सौन्दर्य के आधायक तत्त्व हैं शब्द के अनुप्रास आदि अलंकार एवं अर्थ के उपमा आदि अलङ्कार। इसी तरह संघटना में आश्रित सौन्दर्य के आधायक तत्त्व हैं। शब्द के शब्दगत पदसौकुमार्य आदि गुण एवं अर्थ के उदारता आदि गुण। उनसे ही मिलते जुलते व्यापार वाले उपनागरिका आदि वृत्ति एवं उनके ही दूसरे स्वरूप वैदर्भी आदि रीति हैं, जिनका कि आल ङ्कारिकों ने विशद विवेचन किया हैं। तो फिर उनसे भिन्न यह ध्वनि नाम की कौन-सी चीज हैं ? अर्थात् कोई नहीं।

ध्वन्या— अन्ये ब्रूयू:नास्त्येव ध्वनि:। प्रसिद्धप्रस्थनव्यतिरेकिण: काव्यप्रकारस्य काव्यत्वहाने:। सहृदयाहृदयाह्लादिशष्दार्थमयत्वमेव काव्यलक्षणम्। न चोक्तप्रस्थानातिरेकिणो मार्गस्य तत्सम्भवति। न च तत्समयान्त: पातिन: सहृदयान्कांश्चित्परिकल्प्य तत्प्रसिद्ध्या ध्वनौ काव्यव्यपदेश: प्रवर्तितोऽपि सकलविद्वन्मनोग्राहितामवलम्बते।

लीला— अभाववादिनां द्वितीयं पक्षमुपस्थापयति अन्य इत्यादिना। अन्येऽपरेऽभाववादिन: ब्रूयु: कथयितुं शक्नुयु:-ध्वनिस्तदाख्यकाव्यधर्म:, नास्ति न विद्यते, एवेत्यवधारणे। प्रसिद्धप्रस्थानव्यतिरेकिण: प्रसिद्धं काव्यमर्मज्ञेषु प्रचलितं यत् प्रस्थानं प्रतिष्ठन्ते परम्परया व्यवहरिन्त, येन मार्गेणेति प्रस्थानं काव्यमार्ग: शब्दार्थयो: काव्यशरीरत्वं गुणालङ्कारादीनाञ्च तत्सौन्दर्याधायकत्वं तस्माद् व्यतिरेकिणो भिन्नस्य, काव्यप्रकारस्य काव्यभेदस्य यदि कश्चिद्ब-लादुन्नीयतेऽपि, काव्यत्वहाने: काव्यव्यपदेश्यत्वाभावात् न तदितरं काव्यं भवति शब्दार्थयोरेव काव्यत्वभानात्, किञ्च सहृयहृदयाह्लादिशब्दार्थमयत्वं सहृदयानां रसिकानां—'स्वदन्ते रसिकस्य ते' इत्युक्तत्वात् हृदयानि स्वान्तानि आह्लादयतो रञ्जयतस्तच्छीलौ यौ शब्दार्थौ प्रसिद्धातिरिक्तविच्छित्तिसम्पन्ना-भिधानाभिधेयौ एव तन्मयं तस्य भावस्तत्त्वं, एवेत्यवधारणे नान्यदित्याशय:, काव्यलक्षणं काव्यस्य लोकोत्तरविच्छित्तिसम्पन्नकविकृते: लक्षणं स्वरूपं सम्भव-तीति शेष:। प्राचीनै: काव्यतत्त्वज्ञैर्लोकोत्तरचमत्कारिविशिष्टशब्दार्थयोरेव काव्यत्वस्वीकारात् तद्भिन्नं न किमपि काव्यव्यपदेश्यं भवति, किञ्च सहृदयाह्लादकत्वमेव काव्यतत्त्वं तस्य च तादृशवैशिष्ट्ययुतशब्दार्थयोरेव सम्भवात्। उक्तप्रस्थानातिरेकिण: उक्तं पूर्वप्रतिपादितं यत्प्रस्थानं मार्गस्तस्माद्व्य-चतिरेकिणो भिन्नस्य यस्य कस्याऽपि कामं तद्ध्वनिर्भवेद्वाऽन्यदेव, मार्गस्य पथ: तत्काव्यत्वं, न सम्भवति नैव सम्पद्यते। शब्दार्थतद्गुणालङ्कारभिन्नस्य काव्यत्वमेव न सम्पद्यते। ननु य: खलु प्रसिद्धप्रस्थानभिन्नं किञ्चिदपूर्वमेव काव्यत्वेन जानन्ति त एव सहृदयास्तेषाञ्च यदभिमतं तदेव काव्यं किञ्च सहृदयग्राह्यत्वमेव काव्यत्वं तेन तथापरिकल्पितस्य ध्वनेरपि काव्यत्वं सम्भवत्ये-वेति कथ्यते चेदित्थम् तत्समयान्त: पातिनस्तस्य काव्यात्मत्वेन सम्मतस्य ध्वनेर्य: समय: आचारस्तस्यान्त:पातिन: पक्षधरान्, काँश्चित्कतिपयान् सहृदयां-स्तदास्वादरक्तान् रसिकान्, परिकल्प्योत्रीय, तत्प्रसिद्ध्या तेषु तादृशकल्पित-रसिकेषु प्रसिद्धिप्रख्यापनं वा तस्य ध्वने: प्रसिद्धिर्मान्यता तया, ध्वनौ काव्यात्मसम्मते वाच्यप्रतीयमानेतरार्थे, प्रवर्तित: संस्थापित:, काव्यव्यपदेश: काव्यमिति संज्ञा, सकलविद्वन्मनोग्राहितां सकला अशेषा ये विद्वांस कात्यतत्त्वज्ञा विचक्षणास्तेषां मनोग्राहितां हृदयङ्गमत्वं, न नैव, अवलम्बते समाश्रयतीति।

अपरेऽभाववादिन: कथयितं प्रयतेरन् यन्न विद्यते कश्चिद् ध्वनिर्नाम। किञ्च यत्प्रचलितशब्दार्थतद्‌गुणालङ्कारकाव्यत्वप्रस्थानभिन्नस्य यस्य कस्यापि काव्यत्वमेव नैव सम्भवति, यतो रसिकजनचित्तरञ्जकशब्दार्थयुगलमात्रं काव्यव्यपदेश्यं भवति। तादृशप्रसिद्धप्रस्थानेतरस्य तु सहृदयाह्लादनमेव न सम्भवति। यदि तथा, कि ध्वनिप्रस्थानपक्षधरानेव कतिपयान् सहृदयानादाय तदाह्लादकत्वेन तेषु प्रसिद्धस्य ध्वने: काव्यत्वव्यपदेशो न सम्भवति इति कथ्यते, चेदपि तथाकरणेऽपि तत्सर्वग्राह्यतामवलम्बितुं नैव प्रभवति, अधिकतरविदुषां तत्राप्रवर्तनादिति।

ध्वनि के अभाववादियों में से दूसरे प्रकार के लोगों के मत को उद्धृत करते हैं।

और दूसरे लोग यह भी कह सकते हैं कि ध्वनि नाम की कोई चीज है ही नहीं, क्योंकि शब्द, अर्थ एवं उनके गुण एवं अलङ्कार को ही काव्य मानने वाले प्रसिद्ध प्रस्थान से भिन्न और किसी भी चीज में काव्यत्व हो ही नहीं सकता, क्यों कि रसिक के हृदय को आह्लादित कर पाने वाले शब्द एवं अर्थ मात्र में ही काव्य का लक्षण घट पाता है। उस तथाकथित ध्वनि के अस्तित्व को मानने वाले कुछ लोगों को सहृदय वा रसिक मानकर उनका आह्लादन कर पाने वाले ध्वनि को काव्य मान लिया जाय तो भी यह सभी विद्वानों के हृदय को समा नहीं पायेगा, अत: ऐसा करना भी सम्भव नहीं है।

ध्वन्या— पुनरपरे तस्याभावमन्यथा कथयेयु:— न संभवत्येव ध्वनिर्नामापूर्व: कश्चित्। कामनीयकमनतिवर्तमानस्य तस्योक्तेष्वेव चारुत्वहेतुष्वन्तर्भावत्। तेषामन्यतमस्यैव वाऽपूर्वसमाख्यामात्रकरणे यत्किञ्चन कथनं स्यात्।

किं च वाग्विकल्पनानामानन्त्यात्संभवत्यपि वा कस्मिश्चित्काव्यल-क्षणविधायिभि: प्रसिद्धैरदर्शिते प्रकारलेशे ध्वनिर्ध्वनिरिति तदलीकसहृ-दयत्वभावनामुकुलितलोचनैर्नृत्यते। तत्र हेतुं न विद्म:। सहस्रशो हि महात्मभिरन्यैरलंकारप्रकारा: प्रकाशिता: प्रकाश्यन्ते च। न च तेषामेषा दशा श्रूयते। तस्मात्प्रवादमात्रं ध्वनि: न त्वस्य क्षोदक्षमं तत्त्वं किञ्चिदपि प्रकाशयितुं शक्यम्।

लीला— अभाववादीनां तृतीयमपि पक्षमवतारयति पुनरित्यादिना। तत्र प्रथममतेऽप्रसिद्धितो ध्वनिरपास्त:। द्वितीयमते तु तस्य चारुत्वनिरासेन ध्वनिरस्वीकृत:। अधुना तृतीयमपि पक्षमुपस्थापयति यो ध्वनि प्रसिद्धप्रस्थान एवान्तर्भावयितुं प्रयतेत। पुनरितिपूर्वसम्बन्धद्योतनाय पूर्वोद्धतमतद्वयातिरिक्त-मपीत्यस्याशय:, अपरे इतरे तु, तस्य काव्यात्मत्वव्यपदिष्टस्य ध्वने:, अभावम-विद्यमानताम्, अन्यथेतरप्रकारेण पूर्ववर्णितभिन्नेन, कथयेयुर्विचिन्तयेयु:,

ध्वनिर्नाम ध्वनिरिति संज्ञितः कश्चित्कोऽपि, अपूर्वः पूर्वोक्तशब्दार्थालङ्कारगुणविलक्षणः, न नैव, सम्भवति अवस्थानं लभते, किञ्च कामनीयकं चारुत्वधीहेतुतां शोभातिशायितां, अनतिवर्तमानस्यानतिक्रामतः, तस्य ध्वनेः, उक्तेषु पूर्वकथितेषु, चारुत्वहेतुषु विच्छित्यतिशयकारणभूतेषु गुणालङ्कारादिषु, अन्तर्भावात् सन्निवेशात्। गुणालङ्कारापेक्षया ध्वनेर्विच्छित्याधिक्यासम्भवात् यद्यस्ति कश्चिद् ध्वनिरपि तस्य तेष्वेव सन्निवेशो भवतीति न तस्य पृथगस्तित्वमिति। वा इति पक्षान्तरे तेषां गुणालङ्कारादीनां, एवेत्यवधारणे नान्येषामित्याशयेन, अन्यतमस्य कस्यचिदप्येकस्य, एवेति न कस्यचिदप्यपूर्वस्य तदितरस्य विच्छित्याधानासम्भवात्, अपूर्वसमाख्यामात्रकरणेऽपूर्वा पूर्वमविद्यमाना या समाख्याऽभिधानं तदेव तन्मात्रं तस्य करणे विधाने नवसंज्ञामात्रविधाने तु यत्किञ्चन यथेप्सितमेव किमुत ध्वनिमात्रं कथनमभिधानं स्यात् सम्भवेदेवेति। नास्ति ध्वनिर्नाम कश्चिन्नूतनवस्तु किञ्च यदि विद्यतेऽपि कश्चिद् ध्वनिर्नाम स च काव्यविच्छित्तिमादधाति, चेदपि तस्य पूर्वप्रतिपादितेषु गुणालङ्कारादिष्वेवान्तर्भावो भवत्येव गुणालङ्कारेतरेषु कमनीयताधानशक्यसम्भवात्। यदि ध्वनिः पूर्वप्रतिष्ठापितेषु गुणालङ्कारादिष्वेव कस्यचिदप्येकस्य नवीनमभिधानं तदा तथाकरणे किमपि कथनं सम्भवति ध्वनिर्वेतरो वा।

किञ्चेति हेतुप्रकाशने, वाग्विकल्पानां वाचां वक्तीति वाक् शब्दः उच्यत इति वाक् अर्थः उच्यतेऽनयेति वाक् अभिधाव्यापारस्तेषां शब्दार्थोऽभिधाव्यापाराणां विकल्पः पक्षान्तरमत्र वैचित्र्यप्रकारस्तेषां, आनन्त्यादसीमत्वादेतावदेव वाचां विषय इति परिच्छेत्तुमशक्यत्वात्, वा इति पक्षान्तरे, प्रसिद्धैः ख्यातिमापन्नैराप्तत्वेन सुप्रतिष्ठितैः, काव्यलक्षणविधायिभिः काव्यस्य चारुत्वविशिष्टकविकृतेर्लक्षणं स्वरूपं तद् विदधति निश्चिन्वन्ति तच्छीला इति तैः काव्यस्वरूपनिश्चायिभिः अप्रदर्शिते नितान्तंस्पष्टरूपेणानिर्दिष्टे कश्मिंश्चिदतथामहत्त्वशालिन्यपि, प्रकारलेशे प्रकारस्यान्यतरभेदस्य लेशः कर्णस्तस्मिन् गुणालङ्कारवक्रोक्त्यादिभिन्नतत्त्वकणे, सम्भवति सम्भाविते, अपि च, यद् यदेव, एतत् तुच्छमेव, ध्वनिः ध्वनिः अनादरनिमित्तकसम्भ्रमे वीप्सा, इति इति प्रकारे, अलीकसहृदयत्वभावनामुकुलितलोचनैः अलीका वितथा या सहृदयत्वस्य रसिकत्वस्य भावनया मनःस्थित्या मुकुलितानि सम्मीलितानि लोचनानि नयनानि तैः, मिथ्यारसिकत्वकल्पनापरैरुपेक्षितयथार्थैः, नृत्यते मिथ्याचारः क्रियते, तत्र तथाकरणे, हेतुं निमित्तकारणं, न, विद्मो जानीमः किमर्थं ते तथाऽसम्भवमपि परिकल्प्य यथार्थान्मुखं परावर्त्य तथा कुर्वन्ति तन्नैव ज्ञायते इति। किञ्च वाग्विलासा असंङ्ख्येया एव। तेन प्रतिष्ठापितेतरप्रकारे काव्यविच्छित्तेः काव्यस्वरूपस्य वा सम्भवत्यपि तस्य तथा महत्त्वं तु नैव सम्भवत्येव। तथापि

प्रसिद्धप्रस्थानमनादृत्य मिथ्यारसिकभावनान्धा यद् ध्वनिर्ध्वनिरिति कुर्वन्ति विक्रोशं तस्य न कोऽपि प्रतर्क्यहेतु:, ते व्यर्थमेव तथा कुर्वन्ति। काव्यस्य स्वल्पमात्रोऽप्युपकारलेशो न सम्भवति तस्मात्। अन्यैः प्रसिद्धेतरैः महात्मभिरुदारचेतोभिः काव्यज्ञैः, सहस्रशोऽसंङ्ख्येयाः, अलङ्कारः काव्यगुणातिशयाधायकतत्त्वं– 'काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः' इत्युक्तेः, तस्य प्रकाराः रूपान्तराणि, प्रकाशिता उद्भाविताः, प्रकाश्यन्ते पुनरन्येऽपि प्रकट्यन्ते च। तेषां तादृशानामुद्भावितानामुद्भाव्यमानानाञ्च अलङ्काराणां, एषा ध्वनिरूपा नितान्तमप्रसिद्धा, दशा अवस्था वाऽवस्थानम्, न श्रूयते कुत्रापि कुतश्चिदाकर्ण्यते। तस्मात् तेनैव कारणेन, ध्वनिः ध्वनिसंज्ञकरवः प्रवादमात्रं निरर्थकप्रलाप एव। अस्य ध्वन्याख्यस्य, किञ्चिदपि स्वल्पमात्रमपि, क्षोदक्षमं विचारयोग्यं तत्त्वं सारं, प्रकाशयितुमुन्मीलयितु शक्यं सम्भवि।

ध्वनि के अभाववादियों के दो पक्ष ऊपर उद्धृत किये गये हैं, जिनमें एक अप्रसिद्धि के कारण तथा दूसरा चमत्कृत करने की शक्ति का निरास करके ध्वनि का अभाव मानता है। अब यहाँ तीसरे ऐसे समूह का उल्लेख करते हैं जो ध्वनि को अलङ्कार आदि में ही अन्तर्भूत मानकर उसका पृथक् अस्तित्व नहीं मानता है।

और दूसरे लोग ध्वनि के अभाव को दूसरे प्रकार के द्वारा भी कह सकते है– ध्वनि नाम की कोई अपूर्व वस्तु की सम्भावना ही नहीं हो सकती, क्योंकि काव्य की कमनीयता के आधान में विशेष महत्त्व न रखने वाले उस ध्वनि का, यदि कोई हो भी तो, प्रतिष्ठापित काव्यसौन्दर्य के हेतुभूत गुण, अलङ्कार आदि में ही अन्तर्भाव हो सकता है। यदि काव्य के उन सौन्दर्य के साधनों में से किसी एक का ही नया नाम ध्वनि रखा गया हो तो इस तरह से तो कुछ और भी कहा जा सकता है, ध्वनि ही क्यों ?

वैसे तो वाणी के विकल्प अनन्त हैं और उसके चलते काव्य के लक्षण का निश्चय करने वाले प्रसिद्ध आचार्यों के द्वारा निर्देश किये गये प्रकार से भिन्न किसी की थोड़ी–सी सम्भावना मान भी ली जाय तो भी जो यह ध्वनि–ध्वनि कहके झूठे ही सहृदयत्व की भावना की कल्पना में यथार्थ से आँख मूँदे हुए लोग रट लगाते हैं उसका कोई भी कारण समझ में नहीं आता। और भी अनेक उदार मनीषियों द्वारा काव्यसौन्दर्य के साधनभूत अलङ्कारों के हजार प्रकार बताये गये हैं और बताये जायेंगे भी। किन्तु उनमें से किसी में भी ध्वनि के कथित केवल एक बेतुकी बात मात्र है और न ही इसका थोड़ा–सा भी विचार करने योग्य तत्त्व ही सामने आ सकता है।

ध्वन्या०— तथा चान्येन कृत एवात्र श्लोकः—

यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालंकृति—
व्युत्पन्नै रचितं च नैव वचनैर्वक्रोक्तिशून्यं च यत्।

काव्यं तद्ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो,
नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः।।

लीला— उक्तमेव द्रढयति तथेत्यादिना-तथा च तदानुकूल्येन, अत्र विषयेऽस्मिन्, अन्येन तदितरेण केनाऽपि, श्लोकः पद्यं, कृतो विरचितः एवेति निर्द्धारणे।

श्लोकमवतारयति यस्मिन्नित्यादि। यस्मिन् किञ्चन मनःप्रह्लादि सालङ्कृति वस्तु न अस्ति यद् व्युत्पन्नैः वचनैः च नैव रचितम् यद् च वक्रोक्तिशून्यम् च तत् काव्यम् ध्वनिना समन्वितम् इति प्रीत्या प्रशंसन् जडः सुमतिना ध्वनेः स्वरूपम् पृष्टः किम् अभिदधाति नो विद्मः इति पदव्यवस्था।

यस्मिन्प्रबन्धे, किञ्चन स्वल्पमपि, मनःप्रह्लादि मनो हृदयं प्रह्लादयति विस्तारयति तच्छील इति तत्, वस्तु तत्त्वं, न नैव, अस्ति विद्यते, यत्काव्यसंज्ञितं, व्युत्पन्नैः प्रौढैश्चमत्कारचारुभिः, वचनैर्वाक्यैः, च, नैव, रचितं प्रणीतम्, च, यत् च, वक्रोक्तिशून्यं वक्रोक्तिर्वैदग्ध्यभङ्गीभणितिस्तया शून्यं विरहितं चास्ति, तत्तादृशं, काव्यं प्रबन्धविशेषं, ध्वनिना ध्वन्याख्यकाव्यात्मभूततत्त्वेन, समन्वितं समाविष्टमत एवोत्तमकाव्यमिति, इत्थं,प्रीत्या आदरेण, प्रशंसन् स्तुवन्, जडो मूर्खः काव्यतत्त्वानभिज्ञः, सुमतिना मनीषिणा काव्यतत्त्वविज्ञेन, ध्वनेस्तदाख्यस्य तन्मते काव्यात्मत्वेन गृहीतस्य, स्वरूपं लक्षणं सप्रकृतिकं, पृष्टोऽभियुक्तः, सन् किं किंमात्रं, अभिदधाति व्याख्याति, नो नैव, विद्मो जानीम इति।

यत्र न च स्वल्पमपि हृदयाह्लादकादिसौन्दर्यविशिष्टं तत्त्वं नैव च चमत्कारोत्पादकप्रौढवचनविन्यासो न च वैदग्ध्यभङ्गीभणितिप्रकर्षस्तादृशमपि प्रबन्धकं ध्वनिविषयकत्वादुत्तमं काव्यमिति यो वदति स नान्यो मूर्ख एव यो मनीषिणा ध्वनिलक्षणे पृष्टे नैव किञ्चिदपि व्याख्यातुं प्रभवति किञ्च ध्वन्याख्यस्य स्वरूपमेव नैव किञ्चिदपि विद्यतकामं मूर्खेण पृष्टो यत्किञ्चिदपि ब्रूयात् इत्याशयः।

इसी तरह किसी दूसरे ने इस विषय में एक श्लोक की भी रचना की हैं—

जिस प्रबन्ध में सहृदय के हृदय को आनन्दित कर पाने वाली एवं अलङ्कारों से चमत्कृत थोड़ी—सी भी वस्तु नहीं है, जिसकी रचना प्रौढ एवं प्राञ्जल वाक्यों से नहीं हुई है और जिसमें वक्रोक्ति का लेश तक नहीं है, ऐसे को काव्य मान कर उसमें भी 'ध्वनि से युक्त हो जाने से उत्तम काव्य है' ऐसा मान कर प्रशंसा करनेवाला मूर्ख किसी काव्यमर्मज्ञ विद्वान् के द्वारा ध्वनि के लक्षण पूछे जाने पर क्या कहेगा, हम नहीं जानते हैं।

ध्वन्या०— 'भाक्तमाहुस्तमन्ये'

अन्ये तं ध्वनिसंज्ञितं काव्यात्मानं गुणवृत्तिरित्याहुः।

लीला— पूर्वकाव्ये कारिकागतं 'तस्याभावं जगदुरपरे' इत्येतत्कथनं

व्याख्यातवता वृत्तिकारेण ध्वनेः प्रतिपक्षभूतेषु त्रिषु सम्प्रदायेषु प्रथमस्याभाव-वादिनस्त्रीणि मतानि समुद्धृतानि, येषु प्रसिद्ध्यभावात्सौन्दर्यनिरासेनालङ्कारा-दिष्वन्तर्भावनाच्च ध्वनेरभावप्रदर्शनाय सम्भविप्रयासो वर्णितः। सम्प्रति कारिकागतं 'भाक्तमाहुस्तमन्ये' इति वाक्यं व्याचिख्यासुर्वृत्तिकारो ध्वनिप्रतिप-क्षभूतं भाक्तत्ववादिनां द्वितीयं मत विवृणोति भाक्तमित्यादिना। अन्ये अभाव-वादिभ्य इतरे तु भट्टोद्भटादय इति, तं तथाकाव्यात्मत्वेन बुधैः प्रतिष्ठापितं ध्वनि, भाक्तं भक्तिर्लक्षणा तत आगतं भाक्तं लाक्षणिकं गौणं वा बुधैः आहुः कथयन्ति।

उक्तमेव विवृणोति अन्ये इत्यादिना। तत्र भाक्तविषये किञ्चिदुच्यते। भज्यते सेव्यते पदार्थेन प्रसिद्धतयोत्प्रेक्ष्यत इति भक्तिर्धर्मोऽभिधेयेन सामीप्यादिस्तत आगतो भाक्तो लाक्षणिकोऽर्थः। येन वर्णेन वा तत्संघटनेन कश्चिदपि पदार्थः प्रतीयते स शब्दः। तथैव— "शब्देनोच्चार्यमाणेन यद्वस्तु प्रतिपद्यते। तस्य शब्दस्य तद् वस्तु ज्ञायतामर्थसंज्ञया।।" एवञ्चार्थबोधनं शब्दस्य यया वृत्या सम्पद्यते सा शब्दशक्तिरित्युच्यते। अर्थास्त्रिविधा अवयवार्थो, गौणार्थः, प्रतीयमानार्थश्च। तद्वाचकः शब्दोऽपि त्रिधैव विभज्यते वाचकलक्षक-व्यञ्जक-भेदात्। तत्तच्छब्दात्तत्तदर्थावबोधिका शक्तिश्च अभिधालक्षणाव्यञ्जनाभेदात्त्रि-विधैव। तत्र यया शक्त्या शब्दस्यावयवार्थो बोध्यते साऽभिधा सैव मुख्या शक्तिस्तद्बोधितोऽर्थश्च मुख्यः। यथा गोशब्दस्य सास्नादिमत्पिण्डावबोध-नव्यापारः। मुख्यार्थस्य वाक्येऽन्वयो यदा न सम्भवति तदा तत्सम्बद्धोऽपरोऽर्थो यया बोध्यते सा शक्तिर्लक्षणा, तद्विशिष्टः शाब्दो लाक्षणिकस्तत्प्रतिपादितार्थश्च लक्ष्यार्थः, स एव गौणो भाक्तश्चेति कथ्यते। मुख्यलक्ष्यार्थविरतो ययाऽपरोऽप्यर्थः प्रतीयते सा व्यञ्जना, तद्विशिष्टशब्दो व्यञ्जकस्तत्प्रत्यायितार्थो व्यञ्जकः। तत्र प्रथमा मुख्या शक्तिरभिधा। अस्माच्छब्दादयमर्थो बोद्धव्य इति व्यवस्थैव शक्तिः। व्यवस्था च शब्दस्यार्थेन सह सम्बन्धनिर्द्धारणरूपसङ्केतः। तादृशं संकेतनञ्च व्यवहाराद्भवति तथैव व्याकरणोपमान-कोश-आप्तवाक्यवाक्य-शेषादिभ्यश्च। स च चतुर्विधो जातिद्रव्यगुणक्रियाभेदात्। संकेतग्रहमधिकृत्य विद्वांसो विवदन्ते। केचिज्जातौ संकेतग्रहं मन्यन्तेऽपरे व्यक्तावितरे जातिविशिष्ट-व्यक्तौ च। सामान्यतो व्यवहारस्तु व्यक्तावेव भवति तेन व्यक्तावेव सङ्केतग्रहः सुकरः, किन्तु तथाकरणे आनन्त्यव्यभिचारदोषप्रसङ्गः। यस्य शब्दस्य यस्मिन्नर्थे सङ्केतग्रहो भवति स शब्दस्तमेव प्रत्याययति। सकेतग्रहं विना नैवार्थप्रतीतिः। यदि व्यक्तौ संकेतग्रहोऽवधार्यते तदा यस्मिन् व्यक्तिविशेषे संकेतग्रहोऽवधार्यते तेन शब्देन तस्यैवोपस्थितिः सम्भवति तदितरप्रतीत्यै प्रतिव्यक्ति पृथगेव संकेतग्रहः आवश्यकः। अयमेवानन्त्यदोषः। व्यवहारात्तु तात्कालिकाव्यक्तावेव

संकेतग्रहः सम्भवति देशान्तर-कालान्तरव्यवच्छिन्नव्यक्तौ तु नैव। तत्परिहाराय यदि द्वित्रेषु संकेतग्रहं कृत्वा तदितरेषु संकेतग्रहं विनैव यथार्थबोधोऽनुमीयते तदा व्यभिचारदोषः संकेतग्रहनियमोल्लङ्घनात्। तेन व्यक्तौ नैव संकेतग्रहः सम्भवति। जातौ संकेतग्रहे व्यवहाराधारस्य व्यक्तेरबोधः। स एव दोषः। जातिरूपोऽयं शब्दो व्यवहारौचित्यप्रदातृत्वेन प्राणप्रद इत्यभिधीयते। उक्तमेव यद् गौः स्वरूपेण न गौर्नाप्यगौः गोत्वाभिसम्बन्धाद्गौः। तेन जातिविशिष्टव्यक्तौ वा व्यक्तेरुपाधिभूतेषु जातिद्रव्यगुणक्रियासु संकेतग्रहः सम्मतः यदा संकेतितार्थस्य वाक्येऽन्वयो नैव सिध्यति तदा तत्सम्बद्ध एव गौणोऽर्थो गृह्यते। उक्तमेव "मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्। अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽरोपिता क्रिया।।" इति। सा च पञ्चधा मता। यथोक्तम्—

अभिधेयेन सामीप्यात्सारूप्यात्समवायतः।
वैपरीत्यात्क्रियायोगाल्लक्षणा पञ्चधा मता।। इति।

अभिधेयेन मुख्यार्थेन सामीप्यान्नैकट्यात्, सारूप्यात्समानाकृतित्वात्, समवायतः ससमूहत्वात् वैपरीत्यात्प्रातिकूल्यात्, क्रियायोगात्समानकार्याच्च लक्षणा भवति। सामीप्याद्यथा 'गङ्गायां घोष' इत्यत्र गङ्गाशब्देन तटबोधः। तथैवान्येऽपि। सम्प्रति प्रकृतमनुसर्यते। अन्ये तदितरेऽत्र भट्टोद्भटादयस्तु, तं प्रसिद्धं ध्वनिसंज्ञितं ध्वनिशब्दव्यपदिष्टः काव्यात्मानं काव्यसारतत्त्वगुणवृत्तिः गुणे तद्वर्तिनि धर्मे वृत्तिर्व्यापारो यस्य स, इति इत्थं, आहुः कथयन्ति। भट्टोद्भटादयस्तु योऽसौ ध्वनिरिति कथ्यते स तु शब्दस्य लाक्षणिकोऽर्थ एव यः शब्दस्य मुख्यार्थबाधे तद्गुणमाश्रित्याभिव्यज्यते इति। यथा 'गङ्गायां घोषः' इत्यत्र प्रवाहयुक्तनद्यन्तराले घोषावस्थानासम्भवात् मुख्यार्थस्य वाक्येऽन्वयो नैव सिध्यति तेन गङ्गाशब्दोऽत्रान्वयसिद्धये तत्तटं यद्बोधयति स एव ध्वनिरिति तेषामभिमतम्।

ध्वनि के अभाववादियों के तीनों मतों के उद्धरण के बाद अब क्रम प्राप्त उस मत का उल्लेख करते हैं जो ध्वनि को भक्ति अर्थात् गौणी वृत्ति का कार्य मानते हैं।

दूसरे कुछ विद्वान् उस ध्वनि को भक्ति से निकला मानते हैं। अभाववदियों के अलावा कुछ विद्वान् ऐसे हैं जो कि ध्वनि नामक काव्य की आत्मा को गुण अर्थात् सामीप्य आदि धर्म से व्यापार वाला मानते हैं।

**ध्वन्या०— यद्यपि च ध्वनिशब्दसंकीर्तनेन काव्यलक्षणविधायिभिर्गुणवृत्तिरन्यो वा न कश्चित्प्रकारः प्रकाशितः, तथापि अमुख्यवृत्त्या काव्येषु व्यवहारं दर्शयता ध्वनिमार्गो मनाक्स्पृष्ट इति परिकल्प्यैवमुक्तम्— 'भाक्तमाहुस्तमन्ये' इति।**

लीला— पुनस्तदेव विवेचयति वृत्तिकारः यद्यपित्यादिना। यद्यपि वस्तुतः, ध्वनिशब्दसङ्कीर्तनेन अयं ध्वनिरिति स्पष्टाभिधानेन, काव्यलक्षणविधायिभिः काव्यस्य वैचित्र्यपूर्णकविकृतेर्लक्षणं स्वरूपं विदधति निश्चिन्वन्तीति तच्छीला इति तैः गुणवृत्तिः गुणो मुख्येतरार्थो वृत्तिर्व्यापारो यस्य स तादृशो वाऽथवा अन्यस्तद्भिन्नो वा, कश्चित्कतमोऽपि, प्रकारो भेदः, न नैव, प्रकाशितः उद्घाटितः तथापि तादृशध्वनिसंज्ञितपदार्थनिर्देशे नैव सत्यपि, अमुख्यवृत्या मुख्यादन्योऽमुख्यः सा च या वृत्तिर्व्यापारस्तया लक्षणाख्यशक्त्या, काव्येषु वैदग्ध्य कविकृतिषु, व्यवहारं प्रचारं, दर्शयता प्रतिपादयता, ध्वनिमार्गः, ध्वनिपथः मानक् ईषत् स्वल्प मात्रमपि, स्पृष्टं परिकल्पितः, इति इत्थं, परिकल्प्य विचिन्त्य, एवं पूर्वोक्तप्रकारं, उक्तं कथितं— भाक्तमाहुस्तमन्ये इति।

इतरे ध्वनि लाक्षणिकं मन्यते। यद्यपि काव्यस्वरूपनिश्चायिभिरसौ ध्वनिरिति गौणो वा तदितरः कश्चिदप्यर्थो नैव व्याख्यातस्तथापि काव्ये मुख्येतरवृत्त्युपस्थापनेषदपि ध्वनिवर्त्म स्पृष्टमिति। तन्मतमुपस्थापितं भवति, किञ्च वाच्येतरार्थकल्पनाऽपि ध्वनेः प्रथमः पन्थां। किञ्च ''सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योग-साधना-धिपत्येभ्यो ब्राह्मणबालकराजसक्तुचन्द-नगङ्गाशकटान्नपुरुषेषु अतद्भावेऽपि तदुपचारः'' इति व्यवस्थानुसारं शक्यार्थस्यान्वयानुपपत्तौ लक्षणा भवति। सा च अजहत्स्वार्था जहत्स्वार्था चेति द्विविधा। इमे एवार्थान्तरसङ्क्रमित-अत्यन्ततिरस्कृतध्वनिमूले। गुणवृत्तिरित्येतस्यात्र त्रयोऽर्थाः सम्भवन्ति। गुणः सामीप्यादिधर्मस्तेन वृत्तिर्व्यवहारो यस्येति गुणवृत्तिलक्षकशब्दः, सामीप्यादिभिरुपायैरर्थान्तरे शब्दस्य व्यवहरणं लक्ष्यार्थः, गुणानाश्रित्य व्यवहारो लक्षणाव्यापारश्च। एवमेव ध्वनेरपि ध्वनतीति ध्वनिर्व्यञ्जकः शब्दः, ध्वन्यतेऽसाविति ध्वनिर्व्यङ्ग्योऽर्थः, ध्वन्यतेऽनेनेति व्यञ्जनाव्यापारः, इत्येवं त्रयोऽप्यर्थाः। अतो गुणवृत्तिशब्दतोऽपि ध्वन्यर्था गतार्था भवन्ति। शब्दस्य द्वावेव व्यापारौ मुख्योऽमुख्यश्च। मुख्यवृत्तिरभिधाऽमुख्यवृत्तिर्लक्षणा च। अमुख्यव्यापाराश्रितत्वाद् ध्वनेरपि गुणवृत्तौ सन्निवेशः। सैव भक्तिर्लक्षणा वा। काव्यशास्त्रस्याद्याचार्येण भामहेन काव्यहेतुत्वेनोपस्थापितानां शब्दच्छन्दोऽभिधानकथालोकयुक्तिकलानां व्याख्यानावसरे भट्टोद्भटः शब्दात्पृथगेव गृहीतस्याभिधानशब्दस्य मुख्यगुणवृत्तित्वेन स्मरति। एवमेव वामनश्च 'सादृश्याल्लक्षणा वक्रोक्तिः' इति अलङ्कारप्रसङ्गे निरूपितमस्ति। तेन भामहस्याभिधानशब्दो वामनस्य 'सादृश्याल्लक्षणा' परञ्च ध्वन्यवस्थानं सङ्केतयत्येव।

वैसे तो काव्य स्वरूप को निश्चित करने वाले विद्वानों ने गुणवृत्ति वा अन्य किसी भी प्रकार से किसी भी अर्थ को ध्वनि के नाम से उल्लेख तो नहीं किया है

फिर भी मुख्य से भिन्न वृत्ति से काव्य में प्रयोग दिखाकर थोड़ा–सा ही सही ध्वनि को भक्ति अर्थात् गुणवृत्ति से गम्य मानते हैं।

जब मुख्य वृत्ति से बोध्य अर्थ का वाक्य में अन्वय नहीं बैठता है तब उसे अमुख्य वृत्ति का सहारा लेना पड़ता है। किन्तु अमुख्य वृत्ति भी मुख्य वृत्ति से कुछ–न–कुछ सम्बन्ध तो रखती ही है और उससे बोध्य अर्थ गौण माना जाता है। यह अर्थ मुख्य अर्थ के साथ सामीप्य, सारूप्य, समवाय, वैपरीत्य एवं क्रियायोग आदि से बोधित होता है। अतएव यह ध्वनि का थोड़ा–बहुत ही सही, विषय तो बन ही जाता है।

ध्वन्या०– केचित्पुनर्लक्षणकरणशालीनबुद्धयो ध्वनेस्तत्त्वं गिरामगोचरं सहृदयहृदयसंवेद्यमेव समाख्यातवन्तः।

लीला– एवञ्च ध्वनिप्रतिपक्षभूतानामभाववादिनां त्रीणि मतानि तथा भाक्तवादिनां मतञ्चैकं व्याख्याय कारिकायामुल्लिखितमशक्यवक्तव्यतावादिमतं व्याख्याति केचिदित्यादिना। पुनरिति पूर्ववर्णनसम्बन्धनाय, केचित्कतिपयेऽपरे लक्षणकरणशालीनबुद्धयो लक्षणस्य स्वरूपस्य करणं निश्चयनं निर्द्धारणं तस्मिन् शालीना सुकोमला अप्रगल्भा बुद्धिर्मतिर्येषान्ते तादृशाः, ध्वनेः काव्यात्मत्वेन सम्मतस्य ध्वनिविशेषस्य, तत्त्वं सारं, गिरां वचसां अगोचरमविषयं, सहृदयहृदयसंवेद्य सहृदयानां रसिकानां हृदयानि स्वान्तानि तैः संवेद्यमनुभाव्यं, एवेत्यवधारणे न तस्मादितरत्प्राकाश्यं, समाख्यातवन्तः कथयितवन्तः।

केचित्तु ध्वनेरस्तित्वमवधार्याऽपि तत्स्वरूपनिर्द्धारणे अप्रशस्तमतित्वात् ध्वनि वचसाऽप्रकट्यं मन्वाना रसिकस्वान्तानुभाव्यमात्रं कथयन्ति। अत्र च स्मर्यते पद्यमिदम्–

''कवेरभिप्रायमशब्दगोचरं स्फुरन्तमार्द्रेषु पदेषु केवलम्।
वदद्भिरङ्गैः स्फुटरोमविक्रियैर्जनस्य तूष्णीं भवतोऽयमञ्जलिः।।''

कवेः काव्यकर्तुः अशब्दगोचरं शब्दविषयबाह्यं, आर्द्रेषु सान्द्रेषु, पदेषु' पदसमुदाये, स्फुरन्तं संस्फुटन्तं, अभिप्रायमाशयं, वदद्भिः प्रकटयद्भिः, स्फुटरोमविक्रियैः नितान्तरोमाञ्चितैः, अङ्गैरवयवैः, तूष्णीम्भवतो मौनमाश्रितस्य, जनस्य रसिकस्य, अयं भावपूर्णः, अञ्जलिः श्रद्धापुष्पं समर्प्यत इति।

ध्वनि के प्रतिपक्षभूत पाँच सम्प्रदायों में से अन्तिम अशक्यवक्तव्यतावादियों के मत को उद्धृत करते हैं।

फिर दूसरे ध्वनितत्त्व के स्वरूप निर्द्धारण करने के लिए अक्षयबुद्धि वाले लोग ध्वनि के तत्त्व को शब्दों में व्यक्त हो न पाने के कारण सहृदय के हृदय से अनुभव मात्र किया जाने वाला मानते हैं।

ध्वन्या०– तेनैवंविधासु विमतिषु स्थितासु सहृदयमनःप्रीतये तत्स्वरूपं ब्रूमः। तस्य हि ध्वनेः स्वरूपं सकलसत्कविकाव्योपनिषद्भूत–

मतिरमणीयमणीयसीभिश्चिरंतनकाव्यलक्षणविधायिनां बुद्धिभिरनुत्तोलित-पूर्वम्, अथ च रामायणमहाभारतप्रभृतीनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारं लक्षयतां सहृदयानामानंदो मनसि लभतां प्रतिष्ठामिति प्रकाश्यते।

लीला— विवृतिमुपसंहरति तेनेत्यादिना। तेन हेतुना ध्वनिविषये काव्या-त्मस्वरूपेण विद्यमानस्यापि ध्वनेरभावं मत्त्वा भ्रान्तानां प्रधानमपि ध्वनि गौणं मत्त्वा तत्त्वविषये संशयारूढानां तत्स्वरूपवर्णनाक्षमाणाञ्च तत्त्वबोधनधिया, एवंविधासु नानाप्रकारासु तत्त्वोपेतासु विमतिषु भावस्याप्यभावं प्रधानस्याऽपि गौणं निश्चिततत्त्वस्याप्यनिर्वचनीयतां मत्त्वा सम्भ्रान्तबुद्धिषु, स्थितासु सतीषु, सहृदयमनःप्रीतये सहृदयानां रसिकानां मनांसि चित्तानि तेषां प्रीतिरानन्दस्तस्मै, तत्स्वरूपं तस्य ध्वनेः स्वरूपं यथार्थविवरणं, ब्रूमः उपस्थापयाम इति। केचिन्नितान्तं काव्यात्मत्वेन विद्यमानस्याध्वनेरभावं मन्यन्ते, केचितु तस्यास्तित्वं स्वीकृत्याऽपि प्रधानमपि तं गौणत्वेन गृह्णन्ति, केचित्तु तमनिर्वचनीयंमत्त्वा रसिकहृदयानुभव्यमात्रमामनन्ति। अतस्तेषां भ्रमनिरासाय सहृदयस्वान्तःप्रसादाय च ध्वनेः स्वरूपमुच्यत इति। तदेव पुनर्विवृणोति तस्येत्यादिना। तस्य तादृशस्य काव्यात्मत्वेन प्रतिष्ठापितस्य, ध्वनेर्ध्वन्याख्यतत्त्वस्य, सकलसत्कविकाव्योप-निषद्भूतं सकलानि निखिलानि च तानि सत्कवीनां महाकवीनां काव्यानि वैदग्ध्यभङ्गीभणिृतिसम्मताः कृतयस्तेषामुपनिषद्भूतं परमतत्त्वभूतं, अतिरमणीयं नितान्तहृद्यं, चिरन्तनकाव्यलक्षणविधायिनां चिरन्तनाः प्राक्तना ये काव्यस्य कविकृतेर्लक्षणं स्वरूपं विदधति निश्चन्वन्ति इति तेषां, अणीयसीभिरति सूक्ष्माभिः, बुद्धिभिर्मनीषाभिः, अनुन्मीलितपूर्वमनुद्घाटितपूर्वं, न तु अज्ञातपूर्वं, अथ च तथा, रामायणमहाभारतप्रभृतीनि तत्तदाख्यादीनि, लक्ष्ये ग्रन्थे, सर्वत्रसर्वतोभावेन, प्रसिद्धव्यवहारं प्रख्यातावस्थितिं, स्वरूपं यथार्थतत्त्वं, लक्षयतां निरूपयतां, सहृदयानां रसिकानां, मनसि हृदये, आनन्दः प्रमोदः, प्रतिष्ठां समवस्थितिं, लभतां प्राप्नोतु, इति हेतोः प्रकाश्यते उन्मील्यत इति।

ध्वनिविषयमधिकृत्य विद्यमानस्याप्यभावसमर्थनरूपा प्रधानस्याऽपि गौणत्वप्रतिपादनरूपा लक्षणीयस्याऽप्यनिर्वचनीयचिन्तनरूपा च या भ्रान्तिर्विरुद्ध-मतिर्विद्यते जनानां तन्निरासपूर्वकं रसिकमनोविनोदाय ध्वनिस्वरूपं निर्णीयत इति। तादृशस्य ध्वनेः काव्यव्यापारभूतं नितान्तरामणीयकं प्राक्तनविपश्चिद्भिरप्य-नुद्घाटितरामायणादौ प्रख्यातत्वेन प्राप्तास्पदं स्वरूप सहृदयानन्दाय विविच्यत इति।। १ ।।

अत्रानुद्धाटितपूर्वमिति पदमाधृत्य केचन समालोचका आनन्दवर्धनस्तत्पू-र्ववर्तिनचार्यान्नैव जानाति स्मेति कथयन्ति। तदभ्रमात्मकमेव। वस्तुतस्तु पदस्यास्याशयस्तु आव्याख्यातपूर्वमात्रमेव नत्वज्ञातपूर्वम्। काव्यालोकात्पूर्वमपि

ध्वनिः काव्यात्मत्वेन सुसंस्थापित आसीदेव किन्तु तस्य स्वरूपादिकं यथार्थतो नैव व्याख्यातमासीदित्यस्याशयः।

इस कारण, इस प्रकार से ध्वनि के विषय में अनेक भ्रान्तियाँ होने से उसका निराकरण करते हुए सहृदयों के हृदय को आनन्दित करने के लिए उसके स्वरूप को बतायेंगे।

उस प्रख्यात ध्वनि के सम्पूर्ण महाकवियों के काव्य के सारभूत, अत्यन्त रमणीय, प्राचीन काव्यशास्त्रियों के सूक्ष्म बुद्धि से भी उजागर न किये गये किन्तु रामायण–महाभारत आदि में सर्वत्र व्याप्त स्वरूप का सहृदय के मन में हर्षातिरेक हेतु उजागर किया जाता है।।१।।

तत्र ध्वनेरेव लक्षयितुमारब्धस्य भूमिकां रचयितु मिदमुच्यते–

कारिका०— योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः।
वाच्यप्रतीयमानाख्चयौ तस्य भेदावुभौ स्मृतौ।।२।।

ध्वन्या— काव्यस्य हि ललितोचितसन्निवेशचारुणः शरीरस्येवात्मा साररूपतया स्थितः सहृदयश्लाघ्यो योऽर्थस्तस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ।

लीला— प्रथमकारिकायां ग्रन्थस्यानुबन्धचतुष्टयं प्रतिपाद्य सम्प्रति ध्वनिस्वरूपं ब्रूमः' इति प्रतिज्ञातानुरूपं ध्वनिस्वरूपोपस्थापनाय पूर्वरङ्गभूतमर्थमुपस्थापयति कारिकाकारो योऽर्थ इत्यादिना। तदेव विवृणोति वृत्तिकारस्तत्रत्यादिना। तत्रेति प्रकरणे, लक्षयितुं लक्षणादिद्वारा प्रकाशयितुं आरब्धस्योपक्रान्तस्य, ध्वनेरेव ध्वन्याख्यतत्त्वस्य भूमिकां पूर्वपीठिकां, रचयितुं निर्मातुं, इदं वक्ष्यमाणवचनं, उच्यते कथ्यते इति। ननु प्रथमकारिकायां तु ध्वनेः स्वरूपं ब्रूम इति प्रतिज्ञातमधुना तु किमपि पृथगेवोच्यते, किमिदमिति विप्रतिपत्तिनिरासाय वृत्तिकारः कथयति यत्प्रक्रमस्तु ध्वनेरेव किञ्च वक्ष्यमाणवचनं तस्यैव पूर्वपीठिकामात्रमिति। यथा गृहनिर्माणे पूर्वं भूमिरेव प्रसाध्यते तथैव ध्वनिविवेचनाय अर्थ एव प्रसाध्यते इत्ययं ध्वनेर्भूमिका। वस्तुतस्तु काव्यस्य शब्दार्थौ शरीरम्। तेन शरीरिणः काव्यस्यात्मनाऽपि भाव्यमेवानात्मनो जीवनासम्भवात्। शब्दो नात्मा शरीरस्थानीयत्वात्, नैव चार्थस्तस्य शब्देन सह नित्यसम्बन्धं तस्यापि शरीरस्थानीयंत्वात्तत्सत्तामात्रेणाऽपि काव्यत्वासम्भवात् तथा सति शास्त्रादावपि व्याप्तिः स्यात्। तर्हि कश्चात्मा इत्यपेक्षायां कथ्यते योऽर्थ इत्यादिना।

यः सहृदयश्लाघ्यः अर्थः काव्यात्मा इति व्यवस्थितस्य वाच्यप्रतीयमानाख्यौ उभौ भेदौ स्मृतौ, इति पदव्यवस्था।

यो= यादृशः, सहृदयश्लाघ्यः= सहृदया येषां विशदीभूतेषू चेतस्सु वर्णनीयतन्मयीभवनयोग्यताप्रशस्तास्ते सहृदयास्तैः श्लाघ्यः प्रशंसनीयः, अर्थः=

अभिधेयः, काव्यात्मा= काव्यस्य कविकृतेरात्मा तत्त्वं, इति= इत्थं, व्यवस्थितः= प्रतिष्ठां प्राप्तः, तस्य= तादृशस्य रसिकानुभाव्यस्यार्थस्य, वाच्यप्रतीयमानाख्यौ= वाच्योऽभिधेयः प्रतीयमानो व्यङ्ग्यश्च तथा आख्या संज्ञा ययोस्तौ तथासंज्ञितौ, उभौ= द्वौ, भेदौ= विभागौ, स्मृतौ= कथितविति, काव्यात्मत्वेन रसिकसंवेद्यो योऽर्थो मतस्तस्य वाच्यप्रतीयमानभेदेन द्वौ भेद्वौ भवत इति।

तदेव वृत्तिकारो विवृणोति काव्यस्येत्यादिना। ललितोचितसन्निवेशचारुणो ललितो गुणालङ्कारादिमनोहर उचितो रसाद्यनुकूलो यः सन्निवेशः पदगुम्फनं तेन चारुणो हृद्यस्य, काव्यस्य कविकर्मकृतेः, शरीरस्य वपुषः, आत्मा जीवः, इव यथा, साररूपतया मुख्यतत्त्वत्वेन, जीवनाधायकतया, स्थितो व्याप्तः, सहृदयश्लाघ्यो रसिकग्राह्यः, यो यादृशः, अर्थोऽभिधेयः, तस्य तादृशस्यार्थस्य, वाच्य उच्यते इति सङ्केतितः, प्रतीयमानः प्रतीतिबोध्यश्च, द्वौ द्विसङ्ख्याकौ, भेदो विभागौ, भवत इति।

अलङ्कृतरसाद्यनुकूलपदावलीमनोरमस्य काव्यस्य वपुष आत्मा यथा जीवनाधारत्वेन स्थितस्यार्थस्य वाच्यः प्रतीयमानश्चेति द्वौ भेदौ भवतः। अत्रेदमप्यवधेयं यद्वाच्यार्थस्य लौकिकत्वाल्लोकोत्तरसम्मतस्य काव्यस्यात्मा, तु प्रतीयमानोऽर्थ एव भवितुमर्हति किन्तु प्रतीयमानेऽपि वाच्यार्थस्यापि मिश्रणं भवत्येव। तेनैव काव्यार्थवैशिष्ट्यद्योतनाय सहृदयश्लाघ्य इति विशेषणमत्र प्रयुक्तमुभयोरेवार्थयोरेकताबोधनाय 'अर्थः' इत्येकवचनप्रयोगः। अपरञ्च यदि वाच्यार्थोऽपि सहृदयश्लाघ्यो भवति तदा तस्यापि काव्यात्मत्वं तु नैव निवार्यते यथा चित्रकाव्ये। स्मृताविति पूर्वमान्यताद्योतनाय।। २।।

ध्वनि का स्वरूप बताने के लिए उसकी भूमिका के रूप में यह कहा जाता है—

सहृदयों के द्वारा श्लाघ्य जो अर्थ काव्य की आत्मा के रूप में व्यवस्थित है, उसके वाच्य एवं प्रतीयमान नाम के दो भेद बताये गये हैं।

अलंकृत होने से सुन्दर एवं रसादि के लिए उचित पदावली के सन्निवेश से मनोहर काव्य के, शरीर की आत्मा की तरह, साररूप में स्थित जो सहृदयों से प्रशंसित अर्थ है उसके वाच्य एवं प्रतीयमान दो भेद होते हैं।

कारिका— तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।
बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः।। ३।।

ध्वन्या०— ततो नेह प्रतन्यते केवलमनूद्यते पुनर्यथोपयोगमिति।

लीला— एवं काव्यात्मसम्मतस्य सहृदयश्लाघ्यस्थार्थस्य लक्षणं भेदौ चोक्त्वा सम्प्रति वाच्यार्थं निरूपयति तत्रेत्यादिना।

तत्र वाच्यः प्रसिद्धः यः अन्यैः उपमादिभिः प्रकारैः बहुधा व्याकृत तेन स इह न प्रतन्यते, इति पदव्यवस्था।

तत्र= वाच्यप्रतीयमानार्थयोर्मध्ये, वाच्यः= सङ्केतितो योऽर्थोऽभिधेयः स, प्रसिद्धः= लोके प्रख्यातः सङ्केतसम्बन्धात्, यः= वाच्यार्थः, अन्यैः= अपरकाव्यलक्षणनिर्णायकैः, उपमादिभिः= उपमाप्रभृत्यर्थालङ्कारैरादिपदादर्थग— तगुणैश्च, प्रकारैः= भेदैः, बहुधा= प्रचुरप्रकारैः, व्याकृतः= संवर्णितः, तेन= तेनैव हेतुना परैरनेकशो व्याख्यातत्वात्, सः= वाच्यार्थः, इह= प्रकरणेऽस्मिन्, न= नैव, प्रतन्यते= विस्तार्यते इति। शेषस्तु प्रतन्यत एव प्रकृतोपयोगित्वात्।

वाच्यार्थस्तु प्रसिद्धोऽर्थः संकेतितो व्यवहारबोध्यः। स च पूर्वाचार्यैर्विविधप्रकारैर्गुणालङ्कारवर्णनैर्व्याख्यात एव। तेनात्र स नैव विस्तार्यते प्रकृते न तथोपयोगित्वात्।

कारिकां स्पष्टयति वृत्तिकारः अन्यैरिति। काव्यलक्ष्मविधायिभिः काव्यस्वरूपनिर्द्धारकैः। पुनरिति पूर्वसम्बन्धे, यथोपयोगमावश्यकतानुसारं, केवलमनूद्यते सङ्ख्यया गृह्यते, इति समाप्तौ।

काव्य की आत्मा के रूप में स्थित सहृदयश्लाघ्य अर्थ के जो वाच्य एवं प्रतीयमान दो भेद बताये गये थे उनमें से प्रथम वाच्य अर्थ का लक्षण एवं स्वरूप बताते हैं।

वाच्य प्रसिद्ध अर्थ है। काव्य के लक्षण के निर्द्धारक दूसरे विद्वानों ने उसकी उपमा आदि अलङ्कारों के वर्णन द्वारा बहुत प्रकार से व्याख्या की है। अतः उसका यहाँ विस्तार किया नहीं जाता है। केवल आवश्यकता के अनुसार लिया जाता है।

कारिका— प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।। ४।।

ध्वन्या०— तथा ह्याद्यस्तावत्प्रभेदो वाच्याद् दूरं विभेदवान्। स हि कदाचिद्वाच्ये विधिरूपे प्रतिषेध्यरूपः।

लीला— एव वाच्यं विविच्य सम्प्रति प्रकरणप्राप्तं प्रतीयमानार्थमुपस्थापयति प्रतीयमानमित्यादिना।

पुनः प्रतीयमानम् वस्तु अन्यत् एव अस्ति यत् अङ्गनासु प्रसिद्धावयवातिरिक्तम् लावण्यम् इव महाकवीनाम् वाणीषु विभाति, इति पदव्यवस्था।

पुनः= तद्विपरीतं, प्रतीयमानं= भासमानं न तु प्रत्यक्षतो व्यक्तं, वस्तु= अर्थ आशयः, अन्यत्= अपरम्, एवेत्यवधारणे, अस्ति= विद्यते न तु कष्टेन परिकल्प्यते, यत्= प्रतीयमानवस्तु, अङ्गनासु= सीमन्तिनीषु, प्रसिद्धावयवातिरिक्तं= प्रसिद्धानि प्रख्यातानि सर्वदृश्यानि च तानि अवयवान्यङ्गानि नेत्रकपोलौष्ठदन्तादीनि तेभ्योऽतिरिक्तं भिन्नं, लावण्यं= सौन्दर्यं, इव= यथा, महाकवीनां= महान्तः सर्वतन्त्रस्वतन्त्राश्च ते कवयः काव्यकारास्तेषां कालिदासादीनां, वाणीषु= वचनेषु उपचारात्काव्येषु, विभाति= शोभत इति। यथा

मत्तकाशिनीनां नेत्रकपोलदन्तादिप्रसिद्धाङ्गविशेषातिरिक्तमेव किन्तु तेषामेव संयुक्तफलं सौन्दर्यं भासते तथैव प्रतीयमानोऽर्थोऽपि वाच्यार्थातिरिक्तः, किन्तु तत्सम्बद्धो, महाकाव्येषु विलसति। अर्थात् महाकवीनां वचनेषु प्रसिद्धार्था-तिरिक्तः, किन्तु तत्सम्बद्धो, महाकाव्येषु विलसति। अर्थात् महाकवीनां वचनेषु प्रसिद्धार्थातिरिक्तः सहृदयसंवेद्यो योऽर्थः स एव प्रतीयमानाऽऽख्यः। अत्र स्मर्यते अलेक्ष्येन्द्रपोप— (Alexander Pope)- महोदयः कथयन्—

In Witd as nature, what offects our hearts
Is not Hi exactness of peculiar Parts
Tis not a lip, or eye, we beauty Call
But the joint force and full result of all.

वाच्य अर्थ की विवेचना करने के बाद प्रकरण से प्राप्त प्रतीयमान अर्थ की विवेचना करते हैं—

प्रतीयमान अर्थ वाच्यार्थ से भिन्न दूसरा ही है जो कि सुन्दरियों में प्रसिद्ध नाक आँख आदि अङ्गो से भिन्न सौन्दर्य की तरह महाकवियों की वाणी में प्रसिद्ध अर्थ से सम्बद्ध रहते हुए भी उससे पृथक् रूप में रहता है।। १।।

नारियों में जो सौन्दर्य रहता है वह न नाक है, न आँख है बल्कि उन सबसे निराला किन्तु उन सबका ही संयुक्त परिमाण है जो प्रतीत मात्र होता है। उसी तरह काव्य में भी प्रतीयमान अर्थ रहता है। वह प्रसिद्ध अर्थ से भिन्न होता है लेकिन उससे सम्बन्धित अवश्य होता है जो प्रतीत होता है।

ध्वन्या०— प्रतीयमानं पुनरन्यदेव वाच्याद्वस्त्वस्ति वाणीषुमहाक-वीनाम्। यत्तत्सहृदयहृदयसुप्रसिद्धं प्रसिद्धेभ्योलंकृतेभ्यः प्रतीतेभ्यो वाऽवयवेभ्यो व्यतिरिक्तत्वेन प्रकाशते लावण्यमिवाङ्गनासु। यथा ह्यङ्गनासु लावण्यं पृथङ्निर्वर्ण्यमानं निखिलावयवव्यतिरेकि किमप्यन्यदेव सहृदय-लोचनामृतं तत्त्वान्तरं तद्वदेव सोऽर्थः।

लीला— वाच्यार्थनिरूपणानन्तरं प्रतीयमानार्थविवेचनाय कारिकामवता-रयति वृत्तिकारः प्रतीयमानमित्यादिना। पूनर्वाच्यार्थातिरिक्तमेव, महाकवीनां सिद्धहस्तकाव्यकाराणां, वाणीषु वचनेषु, उपचारात्काव्यप्रबन्धेषु, प्रतीयमानं भासमानं, वस्तु अर्थः, वाच्यात्प्रसिद्धार्थात्, अन्यदपरं, एवेत्यवधारणे, अस्ति विद्यते। यत् प्रतीयमानं वस्तु विद्यते, तत्, सहृदयसुप्रसिद्धं सहृदयेषु रसिकेषु सुप्रसिद्धं ख्यातं तेषामेव विषयत्वात्, प्रसिद्धेभ्यः प्रचलितेभ्यः अलंकृतेभ्यः गुणालङ्कारादिसौन्दर्याधायकतत्त्वसुसज्जितेभ्यः, प्रतीतेभ्यो दृष्टिपथमागतेभ्यः, अवयवेभ्योऽङ्गेभ्यः, व्यतिरिक्तत्वेन तत्सम्बद्धमपि तद्भिन्नत्वेन, अङ्गनासु विलासिनीषु, लावण्यं सौन्दर्यं, इव यथा, प्रकाशते भासते, वेति वाक्यालङ्कारे। यथा यद्वत्, हि इति वाक्यालङ्कार, अङ्गनासु सीमन्तिनीष लावण्ये सौन्दर्ये,

पृथङ्निर्वर्ण्यमानं भिन्नत्वेन विविच्यमानं निखिलावयवव्यतिरेकि समग्राङ्गाधि ाकशोभि किमपि अनिर्वचनीयं, अन्यत् पृथक्, एवेत्यवधारणे, सहृदयलोचनामृतं रसिकनेत्रसुधाभूतं, तत्त्वान्तरमन्यत्तत्त्वं, तद्वत्तथैव, एवेति अवधारणे, सः प्रतीयमानः, अर्थः, वस्तु भवतीति शेषः। यथा युवतिषु भूषणादिभिरलङ्कृ-तेभ्योऽवयवेभ्यो व्यतिरिक्तमेव लावण्यं रसिकामोदि भवति तथैव सत्काव्येष्वपि गुणालङ्काराद्यलङ्कृतेभ्यः शब्देभ्यो यद्बुध्यते तद्व्यतिरिक्तमेव वस्त्वन्तरं यद्भवति स एव प्रतीयमानोऽर्थः। महिमभट्टस्तु अमुमेवार्थमनुमानेऽन्तर्भावयति। यथोक्तम् अर्थो द्विविधौ वाच्योऽनुमेयश्च। तत्र शब्दव्यापारविषयो वाच्यः। स एव मुख्य उच्यते। यदाहुः—

> श्रुतिमात्रेण यत्रास्य तादर्थ्यमवसीयते।
> तं मुख्यंमर्थं मन्यन्ते गौणं यत्नोपपादितम्।। इति।

तत एव तदनुमिताद्वा यदर्थान्तरमनुमीयते सोऽनुमेयः। स त्रिविधो वस्तुमात्र-मलङ्कारा रसादयश्चेति। तत्राद्यौ वाच्यावपि सम्भवतः, अन्यस्त्वनुमेय एवेति। तदेतदुक्तं भवति–सवाच्योऽर्थौ मुख्यः शब्दव्यापारविषयः। अनुमेयश्च गौणोऽनु-मानविषयः। तस्य वस्तु–अलङ्कार रसभेदेषु आद्यौ द्वौ वाच्यावपि तृतीय एवानुमेयः इति। ध्वन्यालोककारस्तु वस्त्वलङ्कारगतावपि प्रतीयमाने एवान्तर्भावयति।

कारिका की व्याख्या करते हैं—

महाकवियों की वाणी में प्रतीयमान वस्तु तो वाच्य से भिन्न कुछ और ही होता है। सहृदयों में प्रसिद्ध यह अर्थ सुसज्जित स्पष्ट रूप में दिखाई देने वाले अङ्गो से भिन्न ही सुन्दरियों में सौन्दर्य की तरह भावित होता है। जैसे कि युवतियों में सौन्दर्य से पृथक् ही वर्णन किया जाने वाला समस्त अङ्गों से भिन्न कुछ और ही, रसिक की आँखो के लिए अमृततत्त्व होता है, उसी तरह ही प्रतीयमान अर्थ होता है।

ध्वन्या०— स ह्यर्थो वाच्यसामर्थ्याक्षिप्तं वस्तुमात्रमलंकारा रसादयश्चेत्यनेकप्रभेदप्रभिन्नो दर्शयिष्यते। सर्वेषु च तेषु प्रकारेषु तस्य वाच्यादन्यत्वम्।

लीला— एवं वाच्याद्भिन्नं प्रतीयमानमर्थं निरूप्य तस्य भेदोपदर्शना-योपक्रमते वृत्तिकारः स ह्यर्थ इत्यादिना। स इति पूर्वमवस्थापितः, प्रतीयमानाख्यः, अर्थो व स्तु, वाच्यसामर्थ्याक्षिप्तं वाच्यस्य मुख्यार्थस्य सामर्थ्यशक्तिस्तेन आक्षिप्तं समुद्भावितं वस्तुमात्रं केवलं वस्तु एव, अलङ्काररसादयः, अलङ्कारा उपमादिका-व्यसौन्दर्यसाधनानि, रसाः शृङ्गारादयश्च, आदिपदाद्भावादयश्च तेऽपि वाच्यसा-मर्थ्यप्रत्यायिता एव इति इत्थं, अनेकभेदप्रभिन्नो बहुविधभेदविभक्त, दर्शयिष्यते उपस्थापयिष्यते। तेषु तत्तदाख्येषु वस्त्वलङ्काररसाख्येषु, सर्वेषु त्रिष्वेव, प्रकारेषु भेदेषु, तस्य प्रतीयमानार्थस्य, वाच्यान्मुख्यार्थात्, अन्यत्वं भिन्नत्वं तदुद्भावितोऽपि

तदितरास्तित्व एव। स च प्रतीयमानोऽर्थः वाच्यार्थशक्त्युद्भावितः सन् वस्त्वलङ्काररसभेदेन बहुधा विभक्तो भवति। सर्वास्वेवावस्थासु स वाच्यार्थाद्भिन्न एव भवति।

तत्र प्रतीयमानार्थस्य द्वौ भेदौ लौकिकः काव्यव्यापारैकगोचरश्च। यस्तु लौकिकः सः स्वशब्दवाच्यतां वाच्यत्वावस्थायामधिशेते। स च विधिनिषेधाद्यनेकप्रकारो वस्तुध्वनिसंज्ञितः संलक्ष्यक्रमव्यङ्ग्याख्यः। सोऽपि पुनर्द्विविधः। तत्र प्रथमः पूर्वानुभूतालङ्कारसंस्कारग्राही अलङ्कारध्वनिः। तद्रूपताभावोपलक्षिता वस्तुमात्रगः। काव्यव्यापारैकमात्रगोचरस्तु रसध्वनिसंज्ञितः न स्वशब्दवाच्यो नैव च लौकिकव्यवहारपतितोऽपि तु रसनीयरूपः। महिमभट्टोऽमुमेवानुमेयं मन्यते।

प्रतीयमान अर्थ के उपस्थापन के बाद उसके भेदों का निर्देश करते हैं—

वह प्रतीयमान अर्थ वाच्यार्थ की शक्ति से प्रत्यायित होकर वस्तु, अलङ्कार एवं रस से सम्बन्धित अनेक भेदों में विभक्त होता है जो कि क्रम में बताया जायेगा। सभी अवस्थाओं में वह वाच्यार्थ से भिन्न होता है।

**ध्वन्या०— यथा तथा ह्याद्यस्तावत्प्रभेदो वाच्याद् दूरं विभेदवान्। स हि कदाचिद्वाच्ये विधिरूपे प्रतिषेधरूपः।**

**भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण।**
**गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण।।**

**(भ्रम धार्मिक ! विश्वस्तः, स शुनकोऽद्य मारितस्तेन। गोदानदीकच्छकुञ्जवासिना दृप्तसिहेन।।)**

लीला— प्रतीयमानमर्थमुपस्थाप्य तद्भेदाँश्चोल्लिख्य सम्प्रति तेषु प्रथमं वस्तुरूपं तं विवृणोति वृत्तिकारस्तथेत्यादिना। तथा एवमेव, हि इति वाक्यालङ्कारे, आद्यः प्रथमो वस्तुभेदरूपः, प्रभेदो भागः, तावत्प्रथमतः वाच्यादभिधेयाद् दूरं विप्रकृष्टं, विभेदवान् विभिन्नः। वस्तुरूपो यः प्रतीयमानार्थस्य भेदः सं वाच्यान्नितान्तं भिन्न एव। स वस्तुरूपो भेदः, हि इत्यवधारणे, कदाचिद् वाच्यत्वावस्थायां, विधिरूपे प्रवर्तनस्वरूपे, वाच्येऽभिधेये, निषेधरूपो निवृत्तिकथनपरः। वाच्यस्तु प्रवृत्तिमुपस्थापयति प्रतीयमानस्तु निवृत्तिमेव। यथा भम इत्यादि।

हे धम्मिअ (धार्मिक) वीसत्थो (विश्रब्धः) भम (भ्रम) अज्ज (अद्य) सो (सः) सुअणो (शुनकः) देण (तेन) गोलाणइकच्छकुडङ्गवासिणा (गोदानदीकच्छकुञ्जवासिना) दरिअसीहेण (दृप्तसिहेन) मारिओ (मारितः), इति पदव्यवस्था।

विधिपक्षे हे धार्मिक ! धर्मात्मन्, विश्रब्धः आश्वस्तः सन्, भ्रम विहर, अद्य दिनेऽस्मिन्, स येन भवतो भ्रमणं बाधितमासीत्, शुनकः श्वा, तेन

प्रसिद्धेन, गोदावरीकच्छकुञ्जवासिना गोदावर्यास्तदाख्यनद्याः कच्छस्तटं तस्मिन्, यत्कुञ्जं लतागृहं तस्य निवासिना वसता, दृप्तसिहेन मत्तहर्यक्षेण, मारितः घातित इति। जघनविपुलाच्छन्दः। लक्षणं तु— संलङ्घ्य गणत्रयमादिमं शकलद्व-योर्भवति पादः। इति। पद्यमिदं हालकविकृतम्। पुष्पावचयार्थ गोदावरीकुञ्जं प्रतिदिनं गच्छता केनचिद्धार्मिकेण बाधिताभिसरणस्थलायाः कुलटाया उक्तिरियम्। अत्र वाच्यपक्षे 'भ्रम' इत्यस्य 'विहर' इत्येवाशयः, किञ्च स भवद्भ्रमणबाधकभूतः श्वाऽद्यैव कुञ्जवासिना दृप्तसिंहेन मारितस्तेन भवत्त्रासहेतुरपास्त इति विधिपक्षप्रपञ्चः। किन्तु तदन्वये नैव सङ्गच्छते किञ्चात्र उत्तारार्द्धोऽस्य बाधकः। तावत्तु साध्वेव यच्छुनको भ्रमणबाधकभूतो मारितः, किन्तु यत्र भ्रमणमभीष्टं तत्रैव सिहवसतेर्वर्णनात्तस्य च दृप्तत्वकथनादत्र महत्तरभयमुपस्थापितमस्ति। यः शुनकममीमरत् स किं धार्मिक धार्मिक इति त्यजते ? एकतस्तु स्वभावत एव सिंहः शुनो भयङ्करो हिंसकः, अपरञ्च सोऽपि दृप्तः, सन् साधुरपि परान्बाधते किमुत जात्यैव हिंसकः, तृतीयञ्च, सोऽपि तत्रैव स्थायिरूपेण वसति यत्र भ्रमणं सम्पादनीयं विद्यते। तेन स्पष्टमेव भ्रमतीत्यस्य विध्यर्थो वाच्यार्थे नैव सङ्गच्छते। अतः सिहभयं प्रदर्श्य तद्भ्रमणवारणायैव कथितमित्यत्र 'भ्रम' इति प्रतिषेधरूपपरमेव। अयं निषेधपरकोऽर्थ एव प्रतीयमानाख्योऽर्थः। अत्र शुनो जातभयस्य धार्मिकस्यं श्वनिवृत्या भ्रमणविधानं वाच्यविषयः, किन्तु तत्रैव दृप्तसिंहनिवासश्रुत्या तद्भ्रमणनिषेधो वस्तुरूपो व्यङ्ग्यः। केचित्त्वत्र 'भ्रम' इत्येतस्य भ्रमणनिषेध एव पर्यवसानात् 'क्वाचित् ख्यातस्य बांधनम्' इत्यनुसृत्य विपरीतलक्षणाया अवसरे कथं ध्वनेरवकाश इत्यपि तर्कयन्ति। किन्त्वत्र मुख्यार्थबाधाभा-वाल्लक्षणाया अवसर एव नैवोत्पद्यते। लक्षणानिमित्तमवस्थात्रयमावश्यकं भवति मुख्यार्थबाधो मुख्यार्थसम्बद्धता, रूढिप्रयोजनान्यमपरता। अत्र प्रथमं तु मुख्या-र्थबाधो नैव 'भ्रम' इत्येतस्य वाक्येऽन्वयसम्भवात्। अपरश्च 'भ्रम' इत्येतस्य निषेधपरकेऽर्थे मुख्यार्थसम्बन्ध एव नैव सम्भवति। तत्रापि भ्रमणनिषेधे एव 'भ्रम' इत्येतस्य पर्यवसानमपि न सम्भवति प्रयोजनशेषात्। अतोऽत्र नैव विपरीतलक्षणाऽपि तु व्यञ्जनैव।

प्रतीयमान अर्थ के वस्तु, अलङ्कार एवं रस के सम्बन्धित क्षेत्र में से पहले प्रथम अर्थात् वस्तुध्वनि की विवेचना करते हैं—

पहला भेद अर्थात् वस्तुध्वनि वाच्य अर्थ से काफी दूर जाने वाले भेद वाला होता है। वह जो कहीं वाच्य के विधिरूप में होने से निषेधपरक होता है। जैसे—

''हे धार्मिक अब आप यहाँ बेफिक्र होकर घूमिए क्योंकि वह कुत्ता (जिससे आप डरते थे) आज ही गोदावरी के तट में स्थित कुञ्ज में रहने वाले उस उन्मत सिंह के द्वारा मारा गया है।''

इसमें विधि अर्थ तो है बेफिक्र घूम लेना, क्योंकि घूमने में रूकावट डालने वाला कुत्ता मार डाला गया है। किन्तु उस कुत्तें को भी मार डालने वाले कुत्तें से भी खतरनाक सिंह की उपस्थिति बता देने से बेफिक्र घूमना सम्भव हो न पाने से 'घूमिए; का अर्थ विधि के विपरीत 'न घूमने' के अर्थ में अन्यपरक हो जाता है। अतः यह वस्तुध्वनि का विषय बन जाता है, जिसका प्रयोजन घूमने के निषेध से है। कोई इसमें 'मत घूमना' में ही अर्थ का पर्यवसान मान कर विपरीतलक्षणा मानते हैं, किन्तु यह ठीक नहीं जँचता, क्योंकि न तो यहाँ मुख्य अर्थ का बाध है, न तो दूसरा अर्थ वाच्य से सम्बन्धित ही है, प्रत्युत एकदम विपरीत है, और 'मत घूमिए' में ही अर्थ का पर्यवसान भी नहीं होता, क्योंकि ऐसा कहने का प्रयोजन अब भी अज्ञात रहता है जो कि स्थान को निर्जन कराने से सम्बन्ध रखता है ताकि निर्बाधरूप से अभिसरण किया जा सके। अगर उस जगह सिंह की उपस्थिति न बताई गई होती तो विधि अर्थ अपना काम करता और वह अभिधा का विषय होता और यदि मुख्य अर्थ का अन्वय वाक्य में न हो पाता तब वह लक्षणा का विषय होता। यहाँ दोनों स्थिति नहीं है, अतः व्यञ्जना का विषय होकर वाच्य का विवक्षित अर्थ अन्यपरक हो जाने से यह वस्तुध्वनि का विषय हुआ।

ध्वन्या०— क्वचिद्वाच्ये प्रतिषेधरूपे विधिरूपो यथा—

अत्ता एत्थ णि मज्जइ एत्थ अहं दिअसअं पलोएहि।
मा पहिए रत्तिअन्धअ सेज्जाए मह ण मज्जहिसि।।
(श्वश्रूरत्र निमज्जति, अत्राहं दिवसकं प्रलोकय।
मा पथिक ! रात्र्यन्धक ! शय्यायामावयोर्माङ्क्षीः।।)

लीला— एवं वस्तुसम्बद्धप्रतीयमानार्थस्य विधौ प्रतिषेधरूपमुक्त्वा सम्प्रति तस्यैव प्रतिषेधे विधिरूपमपरभेदं निर्दिशति वृत्तिकारः क्वचिदित्यादिना। क्वचित्कुत्रचित्तु, प्रतिषेधरूपे निवारणप्रयुक्ते, वाच्ये मुख्यार्थे, विधिरूपः प्रवृत्तिपरकः, भवतीति शेषः। कुत्रचित्तु वाच्यार्थोः निवृत्तिपरको भवति प्रतीयमानार्थस्तु प्रवृत्ति परकः। उदाहरति अत्ता इत्यादिना।

अत्ता (श्वश्रूः) एत्थ (अत्र) णिमज्जइ (निमज्जति) अहं (अहम्) एत्थ (अत्र) दिअसअं (दिवसकम्) पलोएहि (प्रलोकय) हे रत्तिअन्धअ (रात्र्यन्धक) पहिअ (पथिक) महण (आवयोः) सेज्जाए (शय्यायाम्) मा णिमज्जहिसि (निमाङ्क्षी), इति पदव्यवस्था।

श्वश्रूर्मत्पतिजननी अत्रास्मिनस्थले, निमज्जति शेते अहं त्वत्पुरतः स्थिता, अत्रास्मिंस्थले, स्वपिमीति शेषः, दिवसकं दिनकाले एव, प्रलोकय निभालय, हे रात्र्यन्धक ! रात्रौ निशायामन्धको मन्ददृष्टिस्तत्सम्बुद्धौ पथिक पान्थ ! आवयोः श्वश्र्वाः मम च, शय्यायां पर्यङ्के, मा निमाङ्क्षी मा पतेः इति। गाथा वृत्तम्। प्रथमे द्वादशमात्रा द्वितीयेऽष्टादशसुयुक्ता। यथा प्रथमं तथा तृतीयं

पञ्चदशविभूषिता गाथा।। इति तल्लक्षणम्। 'निमज्जति' इत्यनेन श्वश्र्वाः जराजजरितत्वं मृतप्रायत्वेन स्वापश्च सूच्यते। अहमिति आत्मनस्तारूण्यमुपभोगराहित्यञ्च जनयति, दिवसकमिति अल्पे कप्रत्ययकं दिनान्तसमयं सूचयति, यत्र पान्था यात्रां स्थगयित्वा वासमाश्रयन्ति, 'प्रलोकय' इत्यनेन सम्यगवलोकनोपदेशद्वारेण रात्रौ त्वयाऽऽगन्तव्यमिति सूच्यते, 'रात्र्यन्धक' इत्यनेन घनान्धकारं सूच्यते, आवयोरित्यनेन गृहे तृतीयस्यानुपस्थिति श्वश्रूस्वापानन्तर जनसञ्चारशून्यत्वञ्च व्यज्यते, शय्यायां मा निमाङ्क्षीः, इति निःशङ्क पर्यङ्क एवागन्तव्यमित्यपि। अत्र वाक्यार्थस्तु शय्यायां पतननिषेधरूपः, वाक्याशयस्तु तद्विधानरूपस्तेनात्रापि वस्तुध्वनिः। अत्रापि नाभिधा वाक्यार्थस्य क्रियया सह न तथा मेलनात्, नापि लक्षणा मुख्यार्थबाधाभावात्, शय्यापतनरूपस्य विध्यर्थस्य तन्निषेधपरस्य मुख्यार्थेन सह सम्बन्धोऽपि नैव तिष्ठति। अपरञ्च विध्यर्थे एवापि नैव प्रयोजनपर्यवसानं यथेष्टरमणस्यावकाशोद्घाटनशेषात्। तच्च व्यञ्जनयैव सम्भवति। अतोऽत्र विहाराभ्यनुज्ञापनरूपो विधिर्व्यङ्ग्यः।

वस्तुसङ्गत प्रतीयमान अर्थ के विधि में निषेधरूप बताने के बाद उसी के दूसरे भेद का उद्घाटन करते हैं।

कहीं तो वाच्य निषेधरूप होने से प्रतीयमान अर्थ विधिपरक होता है। उदाहरण देते हैं—

''शासु यहाँ गिरती हैं, मैं यहाँ सोती हूँ, दिन में ही सब ठीक से देख लो, रात में आँख से कम सूझने वाले हे बटोही ! हम दोनों की शय्या में मत गिरना।''

यहाँ वाच्यार्थ तो निषेधपरक है, लेकिन 'गिरती है' से निश्चिन्त बेखबर सोना, 'मैं' से अपना नवयौवन , 'ठीक से देख लो' से आने की सूचना, 'रात में कम सूझने' से घना अँधेरा, 'हम दोनों' से तीसरे किसी का न होना, 'शय्या में मत गिरना' से निःसङ्कोच विस्तर पर ही आजाने की सूचना से प्रतीयमान अर्थ तो विधिपरक ही होता है, जिसमें यथेष्ट रमण प्रयोजन है। क्रिया के निषेधपरक अर्थ में अन्य पदों का साथ न रहने से अभिधा काम नहीं करती और मुख्यार्थ बाध का अभाव एवं दूसरे विधिरूप अर्थ के वाच्यार्थ से सम्बन्ध न रहने के कारण एवं विधिरूप क्रिया में भी अर्थ का पर्यवसान न हो पाने से लक्षणा काम नहीं करती। अतः यहाँ भी यथेच्छ रमण के प्रयोजन से विशिष्ट व्यञ्जना काम करती है और निषेध्या में विधिरूप वस्तुध्वनि है।

ध्वन्या०— क्वचिद्वाच्ये विधिरूपोऽनुभयरूपो यथा—

वच्च मह व्विह एक्केइ होन्तु णीसासरोइअव्वाइं।
मा तुज्ज वि तीअ विणा दक्खिणणहअस्त जाअन्तु।।
(व्रज ममैवैकस्या भवन्तु निश्श्वासरोदितव्यानि।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत।।)

लीला— वस्तुपरकस्य प्रतीयमानार्थस्य निषेधे विधिरूपत्वमुक्त्वा सम्प्रति विधिवाक्ये विधिनिषेधेतररूपं भेदं विवृणोति तृतीयं क्वचिदित्यादिना। क्वचित्कुत्रचित्तु, विधिरूपे प्रवृत्तिपरके, वाच्ये मुख्यार्थे, अनुभयरूपः न विद्यते उभयं विधिनिषेधपरकं रूपमवस्था यस्य तत्तादृशो भवतीति शेषः। कुत्रचितु वाच्यार्थस्तु विधिपरको भवति प्रतीयमानार्थस्तु विधिनिषेधोभयभिन्नविलक्षण एव भवति। उदाहरति वच्च इत्यादिना। वच्च (व्रज) मह (मम) एक्केइ (एकस्याः) व्विअ (एव) णीसासरोइअव्वाइं (निश्श्वासरोदितव्यानि) होन्तु (भवन्तु) दक्खिण्णहअस्य (दाक्षिण्यहतस्य) तुज्ज (तव) वि (अपि) तीअ (तया) विणा (वना) णीसासरोइअव्वाइं (निःश्वासरोदितव्यानि) मा जाअन्तु (जनिषत) इति पदव्यवस्था।

व्रज स्वाभीष्टस्त्रीसकाशं गच्छ, मम मन्दभागिन्यास्त्वयात्यक्तायाः, एकस्याः एकाकिन्याः, एव नान्यस्य, निःश्वासरोदितव्यानि दीर्घश्वासरोदनानि, भवन्तु सम्पद्यन्तां, दाक्षिण्यहतकस्य दाक्षिण्यमेकाधिककान्ताजने सर्वत्र समानादरस्तस्मिन् हतकस्य प्रणष्टस्य अपरस्यां प्रेमाधिक्यात्, तव ते नायकस्य, अपि च तया त्वद्धृदयगताया प्रेयस्या, विना ऋते, निःश्वासरोदितव्यानि, मा जनिषत माभूवन् इति। अत्र 'व्रज' इति विधिरूपो वाच्यार्थः। मम एकस्या एव सन्तु रोदनादीनि तद्विरहितस्य तव मा सन्तु इति तव गमनेऽहं रोदिष्यामीति गमननिषेधपरः त्वद्विरहेण तव सा दशा माभूदिति विधिपरश्चेति नो विधिर्नो निषेध इत्यनुभयरूपो विचित्र एव प्रतीयमानार्थो व्यज्यते। अत्र व्रजेति विधिः। न च व्रज्याभावरूपो निषेधो न च विध्यन्तरमेवान्यनिषेधाभावः।

निषेध में विधिरूप प्रतीयमान अर्थ का निरूपण करने के बाद अब विधि मे विधि एवं दोनों से भिन्न प्रतीयमान अर्थ का प्रतिपादन करते हैं।

कहीं तो वाच्य के विधिपरक होने पर प्रतीयमान विधि एवं निषेध दोनों में उदासीन होकर विलक्षण ही होता है। उदाहरण देते हैं—

"जाओ मुझ अभागिन अकेली के ही लम्बी शाँस लेना रोना आदि हो, तुम्हारे भी उसके बिना वैसे ही न हो।"

यहाँ 'जाओ' विधि है। लेकिन 'मुझ अकेली के ही रोदन आदि हों' से यह विधि समर्थित नहीं है और 'तुम्हारे भी वैसे न हों' से विरोधित भी नहीं है। अतः वाच्यार्थ विधिपरक होने पर भी प्रतीयमान अर्थ दोनों में ही उदासीन है।

ध्वन्या०— क्वचिद्वाच्ये प्रतिषेधरूपेऽनुभयो रूपो यथा—

दे आ पसिअ णिवत्तसु मुहससिजोह्णाविलुत्ततमणिवहे।
अहिसारिआणँ विग्धं करासि अण्णाणं विहआसे।।

(प्रार्थये तावत् प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे!
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ?।।)

लीला— विधिपरकवाच्येऽनुभयपरकप्रतीयमानार्थं विविच्याधुना निषेधपरकवाच्येऽनुभयपरकप्रतीयमानार्थं विवृणोति क्वचिदित्यादिना। क्वचित्कुत्रचित्तु वाच्ये मुख्यार्थे, प्रतिषेधरूपे निवृत्तिपरके, अनुभयरूपः विधिनिषेधोभयभिन्नलक्षणः प्रतीयमानार्थो भवतीति। उदाहरति देआ इत्यादिना। मुहससिजोह्नाविलुत्ततमणिवहे (मुखशशिज्योत्स्नाविलुप्ततमोनिवहे) दे (प्रार्थये) आ (तावत्) पसिअ (प्रसीद) णिवत्तसु (निवर्तस्व) हआसे (हताशे) अण्णाणं (अन्यासाम्) वि (अपि) आहेसारिआणं (अभिसारिकाणां) विग्घं (विघ्नं) करोसि (करोषि), इति पदव्यवस्था।

हे मुखशशिज्योस्त्नाविलुप्ततमोनिवहे ! मुखं वदनमेव शशी चन्द्रस्तस्य ज्योत्स्नया चन्द्रिकया विलुप्तोऽपास्तस्मसामन्धकाराणां निवहोः राशिर्यया सा तत्सम्बुद्धौ, प्रार्थये प्रसादये, तावत्प्रथमं, प्रसीद प्रसन्ना भव, निवर्तस्व, परावर्तस्व, हे हताशे ! प्रणष्टाकाङ्क्षे ! अन्यासामितरासाम्, अपि च, अभिसारिकाणां स्वयमेव विहारार्थं संकेतस्थलगामिनीनां, विघ्नं बाधां, करोसि विदधासि इति। अत्राभिसरणं त्यक्तवा परावर्तस्वेति प्रतीतिनिषेधो वाच्यार्थः। प्रतीयमानाश्चानुभयरूपः। अस्माभिरनुभूतं यत्प्रथमे उदाहरणे भ्रमणानुरोधविधिर्वाच्यस्तन्निषेधविधिर्व्यङ्ग्यः, द्वितीयोदाहरणं पथिकस्य शय्यागमननिषेधो विधिस्तदनुमतिर्व्यङ्ग्यः, तृतीये उदाहरणे नायकस्य गमनविधिर्वाच्यो यया रहस्यं ज्ञातमिति खण्डिताकोपो व्यङ्ग्यः, काचिन्नायिकाऽभिसाराय संकेतितं स्थलं प्रति चलिता। तद्विलम्बनोद्विग्नो नायकः संकेतस्थलान्निर्गत्य नायिकागृहं प्रति प्रस्थितः। मार्गे मिलितां तामनुलिलालयिषुर्नायकस्तामपरिचितामिव व्यवहरन् कथयति। तेनात्राभिसारनिषेधो वाच्यार्थो व्यङ्ग्यार्थस्तु तदनुलालनमेव। अत्र तु अभिसारनिषेधो वाच्यस्तदनुलालनाय प्रियस्य चाटुकारिता व्यङ्ग्यः। एषूदाहरणेषु एक एव सहृदयोऽभिधया एकं व्यञ्जनयाऽपरमर्थं गृह्णाति। एभिर्वाच्यव्यङ्ग्ययोः स्वरूपभेदो दर्शितः।

विधिरूप वाच्य में अनुभयरूप अर्थ का विश्लेषण करने के बाद अब प्रकराणगत प्रतिषेधरूप वाच्यार्थ में अनुभयरूप प्रतीयमान अर्थ का विवेचन करते हैं।

कहीं वाच्य प्रतिषेधरूप होने पर प्रतीयमान अर्थ न तो प्रतिषेधपरक ही होता है, न तो विधिपरक ही, बल्कि अनुभयरूप होकर तटस्थ रहते हुए एक विचित्र की अवस्था में रहता है। उदाहरण देते हैं—

''मिन्नत करता हूँ, खुश हो जाओ, हे मुखरूप चन्द्रमा की कान्ति से अन्धकार को हटाने वाली सुन्दरी लौट जाओ, हे कुण्ठित आशा वाली ! अन्य अभिसारिकाओं के अभिसरण कार्य में अन्धकार को दूर कर विध्न डालती हो।''

यहाँ अभिसार का निषेध वाच्य और उसको फुसलाने के लिए की गई चाटुकारिता प्रतीयमान है।

ध्वन्या०— क्वचिद्वाच्याद्विभिन्नविषयत्वेन व्यवस्थापितो यथा—

कस्स व ण होई रोसो दट्ठूणं अहरम्।
सभमरपउमग्घाइणि ! वारिअवामे ! सहसु एह्णिम्।।
(कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम्।)

लीला— इत्थं। वाच्यव्यङ्ग्यो स्वरूपभेदं प्रदर्श्य सम्प्रति विषयभेदात् वाच्यव्यङ्ग्यार्थभेदप्रदर्शनायोपक्रमते क्वचिदित्यादिना। क्वचित्कुत्रचित्तु वाच्यान्मुख्यार्थात्, विभिन्नविषयत्वेन पृथक्पृथग्वस्तुत्वेन, व्यवस्थापितः प्रतिपत्तिमानीतो भवति प्रतीयमानार्थ इति। तत्र वाच्यार्थस्तु कृते एक एव भवति, प्रतीयमानार्थ एव श्रोतृयोग्यतानुसारं परिवर्तते। प्रतीयमानेऽर्थे एव तादृशी परिवर्तनक्षमता निहिता भवति, तेनैव श्रोतारोऽपि तं सुखेन परिवर्तयन्ति। उदाहरति कस्स ब ण हत्यादिना। पियाए (प्रियायाः) सव्वणं (सव्रणम्) अहरं (अधरम्) दट्ठूण (दृष्ट्वा) कस्स (कस्य) व (वा) रोसो (रोष) ण (न) होई (भवति) हे सभमरपउमघाइणि (सभ्रमरपद्मघ्रायिणि) वारिअवामे (वारितवामे) एह्णि (इदानीं) सहसु (सहस्व), इति पदव्यवस्था।

प्रियायाः वल्लभायाः, सव्रणं क्षताङ्कितं, अधरं निम्नोष्ठं, दृष्ट्वा विलोक्य, कस्य कतमस्य, वा इति वाक्यालङ्कारे, रोषः क्रोधः, न, भवति सञ्जायते, अपि तु सर्वस्यापि जायत एव। हे सभ्रमरपद्मघ्रायिणि ! भ्रमरैरलिभिः सहितं यत्पद्मं कमलं तस्य घ्राणं सुगन्धग्रहणं शीलं स्वभावो यस्याः सा तत्सम्बुद्धौ, वारितवामे वारिते प्रतिषेधे, वामा विपरीता तत्सम्बुद्धौ इदानीं सम्प्रति प्रियकोपमिति शेषः, सहस्व मर्षयेति। अत्र त्वया यन्निवारिताऽपि षट्पदाकीर्ण कमलमाघ्रातं, भ्रमरेणाऽपि त्वदधरं सन्दष्टं तद!दृष्ट्वा यत्पतिकोपः परपुरुषदन्तक्षतमिति मत्वा सञ्जातस्तत्सहस्वेति वाच्यार्थः, सर्वेषामेव तथावगम्यः। प्रतीयमानार्थस्तु प्रतिपात्रं भिन्न एव भवति। भ्रमरदंशनजातव्रणेयं नैवान्यथा चिन्तितव्या इति नायकं, प्रति, नायिका नैवाचारातिक्रमणदुष्टातेन तां प्रति पत्युः कोपो नोपयुक्त इति प्रतिवेशिनः, प्रति, सा पत्युस्तथा प्रियतमा यथा प्रतिभ्रमरदशंमपि न सहते 'इति सपत्नीः, नितान्त प्रियत्वात्पत्युः कोपस्तेनोपालम्भोऽपि ते सम्मान एवेति नायिकाम् प्रति, सावधानमुपभुङ्क्ष्व मा इत्थं प्रत्यक्षचिह्नं कोपः, इति उपपतिं प्रति अहं नितान्तनिपुणा या स्वकौशलेन प्रत्यक्षापराधाऽपि गोपिता इति रसिकान्प्रति प्रतीयमानोऽर्थः। एवमेव 'गतोऽस्तमर्कः' इत्यनेन गोपाला गोदोहनकाल इति, छात्राः पाठशाला निवृत्तिकाल इति, ब्राह्मणाः सन्ध्याकाल इति, युवतयो विहारकाल इति, गृहिणी पाककाल इति, पान्था यात्रास्थगनकाल इति प्रतीयमानार्थं गृह्णन्ति।

इस प्रकार वाच्य एवं प्रतीयमान अर्थ का स्वरूपगत भेद का विवेचन करने के बाद अब विषयभेद से भी उनका भेद बताते हैं। विषयगत भेद में वाच्यार्थ तो सभी के लिए एक ही होता है, लेकिन प्रतीयमान अर्थ तो पात्र-पात्र अलग होता है। वह ऐसा ही होता है, अतः सामाजिक भी उसे पृथक्-पृथक् समझ पाते हैं।

कहीं तो वाच्य से भिन्न-भिन्न विषय के रूप में उपस्थित होता है। उदाहरण देते हैं–

''अपनी प्रियतमा के होंठ क्षत से युक्त देखकर किस को क्रोध नहीं आता। हे भ्रमरों से युक्त कमल को सूँघ लेने की आदत वाली, कहे का उलटा करने वाली। अब सह लो।''

नायिका उपपति से भोग कर आयी है। भोग के समय उपपति ने उसके होंठ में दाँत से क्षत कर दिया है। उसी समय उसका पति भी आ गया है और उसके अधर में क्षति देखकर विगड़ रहा है। उससे नायिका को बचाने के लिए उसकी सहेली का यह वचन है। वाच्यार्थ तो सभी के लिए एक ही है कि तुम कहा न मानी और भ्रमर से युक्त कमल सूँघ लिया और भ्रमर ने तुम्हारे होंठ पर काट दिया। प्रियतमा के होंठ पर दूसरे से किया क्षत देखकर सभी को क्रोध आता ही है। अब तुम अपना क्रिया सह लो किन्तु प्रतीयमान अर्थ तो पात्र के अनुसार होता है, जैसे पति के लिए यह कि यह क्षत भ्रमर का किया है, अतः इसमें क्रोध करना ठीक नहीं, सुनने वाले पड़ोसियों के लिए यह कि नायिका अपराध्नी नहीं है, सपत्नियों के लिए यह कि नायिका पति की प्रेयसी है, अतः इस झगड़े से हमें कोई लाभ नहीं, स्वयं नायिका के प्रति यह कि इससे तुम्हारा मान बढ़ा है, अतः चिन्ता मत करो। उपपति के लिए यह कि सावधानी बरतना, नहीं तो अनर्थ हो सकता है, रसिकों के लिए यह कि सखी कितनी चालाक है आदि आदि।

ध्वन्या०— अन्ये चैवं प्रकारा वाच्याद्विभेदिनः प्रतीयमानभेदाः संभवन्ति। तेषा दिङ्मात्रमेतत्प्रदर्शितम्।

लीला— वाच्यप्रतीयमानार्थयोः स्वरूपविषयगतभेदमुपसंहरति अन्ये इत्यादिना। अन्ये इतरे, च अपि, एवं प्रकाराः एवं विधाः, वाच्यान्मुख्यार्थाद्, विभेदिनः पृथग्भाविनः, प्रतीयमानार्थप्रकाराः, सम्भवन्ति सम्भाव्यतामायान्ति, तेषां तादृशवाच्येतरप्रतीयमानार्थानां, दिङ्मात्रं किञ्चन्मात्रमेव, एतत् पूर्वोपस्थापितं, प्रदशितं प्रकटीकृतमिति। स्वरूपं विषयञ्चधिकृत्य वाच्यात्प्रतीयमानार्थे। बहुधा विभज्यते तद् दिङमात्रमत्र वर्णितम्। अग्रिमविवरणाय तु ग्रन्थान्तराणि द्रष्टव्यानि। उक्तं यथा साहित्यदर्पणे–

बोद्धृस्वरूपसंख्यानिमित्त कार्यप्रतीतिकालानाम्।
आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः।।

एवमेव काव्यानुशासनकृद् हेमचन्द्रश्च विधावन्यविधिः, प्रतिषेधेऽपरप्रतिषेधः, अविधिनिषेधे, विधिः अविधिनिषेधे, निषेधः, विधिनिषेधेऽन्यविधिः,

विधिनिषेधेऽन्य प्रतिषेध इत्यादीन् भेदाँश्च वर्णयति। भेदा: कामं सन्त्तवनेके तवैके एव निहितार्थो यद्वाच्यार्थात्प्रतीयमानार्थो नितरामेव भिन्नो भवतीति।

एवं वस्त्वाधिकृत्य वाच्यप्रतीयमानार्थयो: स्वरूपविषयगतभेदानुक्त्वा सम्प्रति अलङ्कारानधिकृत्य तयोर्भेप्रदर्शनस्य भूमिकां विवृणोति द्वितीय इत्यादिना। द्वितीयोऽपरोऽलङ्कारागत:, वाच्याच्छक्यार्थात्, विभिन्न: पृथग्भूत:, प्रभेद: स्वरूपं, सप्रपञ्चं सविवरणं, अग्रे आगामिप्रकरणे, दर्शयष्यिते उपस्थापयिष्यते। अत्रेदमवधेयं यद्यथा वस्त्वधिकृत्य वाच्यार्थात्प्रतीयमानार्थो एव भवति तथैवाल-ङ्कारानाश्रित्यचापि। विधिनिषेधौ संकलघ्य वस्तुगतभेदस्योपस्थापनं सुकरमासी-दतोऽत्रोपस्थापित:। किन्तु अलङ्काराणां वाह्यत्वादत्र सर्वेषामेव तेंषामुपस्थापनं न सम्भवमिति भेदनिर्देशनमात्रमत्र निर्दिष्टं विस्तरस्तु असंलक्ष्यक्रमव्यङ्ग्यनि-रूपणावसरे यथावकाशं निरूपयिष्यते।

एवं वस्त्वलङ्कारश्रितप्रतीयमानार्थमपस्याप्य सम्प्रति क्रमप्राप्तं रसलक्ष-णप्रभेदं निरूपयंस्तत्पूर्वरूपमुपस्थापयति तृतीय इत्यादिना। तृतीयवस्त्वलङ्कार-गतिभन्नोऽपरस्तु रसादिलक्षण:, रसा:शृङ्गारादय, आदिपदाद्भवादीनामपि ग्रहणं तेन भावतदाभासोदयशान्तिसन्धिशवलताद्या: तेषां लक्षण:. स्वरूप:, प्रभेद: स्वरूपं वाच्यसामर्थ्याक्षिप्त: शक्यार्थशक्तिप्रक्षिप्त:, प्रकाशते द्योतते न नैव, साक्षात्प्रत्यक्षमेव, शब्दव्यापारविषय: शब्दव्यापारस्याभिधादिवृत्तेर्विषय: क्षेत्रं इति अनेन हेतुना, वाच्यात् मुख्यार्थाद,विभिन्न: पृथक् एवेत्यधारणे इति। वस्त्वलङ्कारगतापेक्षया रसाश्रितस्य प्रतीयमानार्थस्येदमेव वैशिष्ट्यं यत्तौक्वचत्तु अभिधेयत्वक्षमतामपि आवहन्ति किन्तु रसस्तु नैव कदापि वाच्यो भवितुर्महति। स सर्वदैव व्यङ्ग्य:। तेन वाच्यार्थादस्य भेद: सुस्पष्ट एव। किञ्च रसस्य प्राणा एवास्वादनम्। यत्किञ्चिदपि स्याद्यावत्पर्यन्तं तदास्वादीनयतां नैवायाति तावत्तद्रसत्वं नैवायति। रसो न रसो नाप्यरसो रसत्वमेव रस: आस्वादनीयत्वमेव रसत्वम्। अतो रसोन वाच्येन नैव कदापि भाव्यम्। आनन्दो भवतु इति कथनमात्रेण न केनाऽप्यानन्द: प्राप्यते। आनन्दो नैव पठ्यते भक्ष्यते चर्व्यते गृह्यते क्षिप्यते च। स तु नितान्तमेवानुभवविषय:। अनुभवस्तु प्रतीयमानतयैव भवति न तु वाच्यत्वेन। तेन रसाश्रितप्रतीयमानार्थस्तु वाच्यात्स्पष्टमेव भिन्न:।

इस तरह वाच्यार्थ से भिन्न वस्तु में आश्रित प्रतीयमान अर्थ के अनेक प्रकार के भेद हो सकते हैं। यहाँ पर कुछ ही भेद दूसरे के तौर पर प्रस्तुत किये गये हैं।

इस तरह वस्तुगत रूप में वाच्यार्थ से भिन्न प्रतीयमान अर्थ की विवेचना करने के बाद अलङ्कारगत रूप में वाच्यार्थ से भिन्न प्रतीयमान अर्थ की विवेचना करते है—

दूसरा प्रकार का अर्थात् अलङ्कार से सम्बद्ध वाच्य से पृथक् जो प्रतीयमान

अर्थ है, उसमें कहने के लिए पर्याप्त सामग्री होने के कारण पूरे विवरण के साथ आगे अर्थात् संलक्ष्यक्रमव्यङ्ग्य के प्रकरण में प्रस्तुत किया जायेगा।

इस तरह दूसरे प्रकार के प्रतीयमान अर्थ का जो कि अलङ्कार से सम्बद्ध है निर्देश करने के बाद तीसरे प्रकार से रस से सम्बद्ध प्रतीयमान अर्थ क निर्देश का उपक्रम करते हैं।

तीसरे प्रकार का जो रस भाव आदि के स्वरूप का प्रतीयमान अर्थ का भेद है वह वाच्य की शक्ति से आक्षिप्त होकर प्रकाशित होता है न कि शब्द के व्यापार का प्रत्यक्ष विषय। अत: वह तो वाच्य से एकदम भिन्न है ही।

इसका आशय यह भी समझ लेना चाहिए कि वस्तु एव अलङ्कार में तो कभी-कभी अभिधेय होने की क्षमता भी होती है किन्तु रस कभी भी वाच्य नहीं होता। वह जब भी होता है प्रतीयमान ही होता है। यथावत् रूप में वस्तु वाच्य होता है विधि वाच्य के निषेध आदि अवस्था में प्रतीयमान होता है। इसी तरह प्रत्यक्ष उपस्थित होने पर अलङ्कार वाच्य होता है, संस्कार मात्र रहने से प्रतीयमान। किन्तु रस तो सदा ही प्रतीयमान होता है। 'आनन्द ले लो' कहने से ही कोई आनन्दित नहीं हो सकता। यह तो अनुभव का विषय है और आनन्द ही रस है। अत: इसकी वाच्यता कदापि हो नहीं सकती।

ध्वन्या०— तथा हि वाच्यत्वं तस्य स्वशब्दनिवेदितत्वेन वा स्यात्, विभावादिप्रतिपादनमुखेन वा। पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः। न च सर्वत्र तेषां स्वशब्दनिवेदितत्वम्। यत्राप्यस्ति तत् तत्रापि विशिष्टविभावाप्रतिपादनमुखेनैवैषां प्रतीतिः। स्वशब्देन सा केवलमनूद्यते न तु तत्कृता। विषयान्तरे तथा तस्या अदर्शनात् न हि केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति। यतश्च स्वाभिधानमन्तरेण केवलेभ्यो विभावादिभ्यो विशिष्टेभ्यो रसादीनां प्रतीतिः। केवलाच्च स्वाभिधानादप्रतीतिः। तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्। न त्वभिधेयं कथञ्चित्, इति तृतीयोऽपि प्रभेदो वाच्याद्भिन्न एवेति स्थितम्। वाच्येन त्वस्य सहैव प्रतीतिरित्यग्रे दर्शयिष्यते।

लीला— रसस्य यदशब्दवाच्यत्वमुक्तं तदेव विशदयति तथा हीत्यादिना। तथा हि अतः, तस्य रसस्य शृङ्गारादेरूपचाराद्भावस्याऽपि ग्रहणं किञ्च स एवोद् बुद्धमात्रो भावो भवति परिपुष्टश्च रसः— 'अधिरूह्य परां काष्ठां क्रोधो रौद्रात्मतां गतः' इत्युक्तेः, वाच्यत्वमभिधेयत्वं, स्वशब्दनिवेदितत्वेन स्वशब्देन शृङ्गारस्य शृङ्गार इति शब्देन रतेश्च रतिः इति शब्देन निवेदितत्वभिहितत्वं तेन, 'वा' इति विकल्पे, स्यात् वा विभावादिप्रतिपादनमुखेन विभावादीनां विभावानुभावव्यभिचारादिवाचकशब्दानां प्रतिपादनमुखेन कथनमुखेन; तात्पर्य-

शक्त्या वा भवति। रसस्य वाच्यत्वं तद्वाचकशब्देन विभावादीनां प्रतिपादनमुखेन वा भवतिं पूर्वस्मिन् प्रथमे, पक्षे विभागे रसादीनां स्वशब्दनिवेदितत्वसमर्थनपक्षे, स्वशब्दनिवेदितत्वाभावे वाचकश्चाब्दानुपस्थितौ रसादीनां शृङ्गारादीनां, अप्रतीतिप्रसङ्गः उद्बोधनानवकाशः, भवतीति शेषः। यदि स्वशब्दनिवेदने एव रसस्योद्बोधनं भवेत्तदा तादृशवाचकशब्दाभाववाक्ये तेषामुद्बोधनमेव न स्यात्। न च नैव च, सर्वत्र निखिले एवावसरे, तेषां रसादीनां, स्वशब्दनिवेदितत्वं वाचकशब्दबोध्यत्वं सम्भवतीति शेषः। यत्रापि, तत्स्वशब्दवाच्यता अस्ति रसादीनां, तत्रापि तादृशवाक्येऽपि, विशिष्टविभावादिप्रतिपादनमुखेन विलक्षणविभावादिप्रतिपत्तिद्वारैव, एवेत्यवधारणे, एषां रसादीनां, प्रतीतिरनुभवः। यदि स्वशब्दनिवेदने एव रसप्रतीतिर्मन्यते तदा स्वशब्दनिवेदितभावे प्रतीतिरेव न सम्भवेत्। अपरञ्च सर्वत्र स्वशब्दनिवेदिता नैव सम्भवति तत्रापि रसप्रतीतिस्तु भवत्येव। यत्र तद्वाचकशब्दस्य प्रयोगोऽपि तत्रापि विलक्षणविभावादिप्रतीतिद्वारैव तत्प्रतीतिर्न च स्वशब्दनिवेदितत्वेन। स्वशब्देन स्ववाचकशब्देन तु सा रसादि प्रतीतिः केवलं, अनूद्यते सूच्यते, न तु तत्कृता स्ववाचकशब्दबिहिता, प्रतीतिः। विषयान्तरे तद्विपरीतप्रसङ्गे यत्र वाचकशब्देन नैव निवेद्यते तत्र, तथा वाचकशब्दनिवेद्यता, तस्याः रसादिप्रतीतेः, अदर्शनादभावात्। स्ववाचकवस्तु रसप्रतीति कथयत्येव नैव प्रतिपादयति वाचकशब्दाभावेऽपि तस्याः प्रतीतिर्भवत्येव। वाचकशब्दस्तु केवलं सिद्धमेव साधयति नत्वसिद्धम्। यत्र स्वशब्दवाच्यता दृश्यतेऽपि तत्रापि सा न प्रतीतिकारणं, प्रतीतिस्तु विशिष्टविभावादिद्वारैव। तथा च यत्र न वाचकशब्दवाच्यता तत्रापि तत्प्रतीतिर्दृष्टैव। रसादीनां स्वशब्दवाच्यत्वे स्थापिते 'शून्यं वासगृहं' इत्यादिपद्ये शृङ्गाररसवाचकशब्दाभावाद्रसत्वमेव न स्यात्। तेनेदं सिध्यति यद्रसप्रतीतौ स्ववाचकशब्दभावाभावौ न कारणमपि तु विलक्षण विभावादिप्रतिपादनद्वारैव तत्सम्भव इति। न हि नैव च केवल शृङ्गारादिशब्दमात्रभाजि शृङ्गारादिस्वशब्दमात्रयुते, विभावादिप्रतिपादनरहिते विशिष्टविभावादिद्वारा रसप्रतीतिरहिते, काव्ये कविकृतौ, मनागपि स्वल्पमपि, रसवत्त्वप्रतीतिः रसयुक्तत्वावभासनं, अस्ति विद्यते। यतश्च किञ्च, स्वाभिधानं स्ववाचकशब्दं, अन्तरेण विना, केवलेभ्यः रसादिशब्दसाहित्यरहितेभ्यः, विशिष्टेभ्यो विलक्षणेभ्यः, विभावादिभ्यो विभावानुभावव्यभिचारिभावेभ्यः रसादीनां शृङ्गारादिरसभावानां, प्रतीतिरुद्बोधनं दृश्यत इति शेषः। केवलात् विभावादिप्रतिबोधकसाहित्यरहितात्, च, स्वाभिधानात् स्वचाचकशब्दात्, अप्रतीतिरनुद्भासनं भवतीति शेषः। तस्मात्तेन हेतुना, अन्वयव्यतिरेकाभ्यां तद्भावे तद्भावोऽन्वयस्तदभावे तदभावो व्यतिरेकः विशिष्टविभावादिप्रतिपादनसत्वे रसभावस्तदसत्त्वं रसाद्यभाव इति ताभ्यां, अभिधेयसामर्थ्याक्षिप्तत्व

वाच्यशक्तिप्रेरितता, एवेत्यवधारणे, रसादीनां रसभावादीनां, न तु कथञ्चित्क-स्यामप्यवस्थायां, अभिधेयत्वं वाच्यत्वं, इति इत्थं, तृतीयः रससम्बद्धः अपि, प्रभेदो विभागः, वाच्यान्मुख्यार्थात् भिन्नः पृथक्, एव, इति, स्थित सुनिश्चितम्। अस्य रसस्य, वाच्येन मुख्यार्थेन सह इव असंलक्ष्यक्रमत्वात् प्रतीतिरवभासनं, इति इत्थं, अग्रे आगामिप्रकरणे, दर्शयिष्यत उपस्थापयिष्यते, इति।

यदि रसस्य वाच्यत्वमेव मन्यते तदा किं तत्स्वशब्देनैवाभिधया भवति उत विभावादिप्रतीतिमुखेन तात्पर्यवृत्त्या वा? इति स्वशब्दनिवेदने एव वाच्यत्वं मन्यते तदा यत्र स्ववाचकशब्दाभावस्तदा रसादीनामपि अभाव एव भवेत्। सर्वत्र रसादीनां स्वशब्दनिवेदितवमपि नैव सम्भवति। यत्र कुत्रापि स्वशब्द-विनिवेदितत्वं विद्यतेऽपि तत्रापि तत्प्रतीतिस्तु विशिष्टविभावादिप्रतिपादनद्वारैव भवति न तु शब्दाभिधानेन। शब्दस्तु केवलं सिद्धमुपस्थापयति नत्वभूतं साधयति वाचकशब्दाभावेऽपि रसादिसद्भिभवत्येव, न च रसादीनां विशिष्टविभावादिप्रति-पादनशून्ये केवलस्वशब्दमात्रनिवेदित काव्ये रसत्वसिद्धिः। किन्तु वाचकाभावेऽपि विभावादिप्रतिपादनेन तस्य प्रतीतिरनुभूतैव। केवलादभिधानादेव न रसप्रतीतिः। तेन रसादीनां नैव वाच्यत्वं किन्तु वाच्यशक्त्याक्षिप्तत्वमेव। अतः रसः प्रतीयमानोऽर्थोऽपि वस्त्वलङ्कारसम्बद्धवद्वाच्यचाद्भिन्न एव।। ४।।

रस का जो अपने वाचक शब्द से अवाच्यत्व कहा गया उसीका विस्तार के साथ विवरण देते है।

यदि रस को वाच्य माना जाय तो वह अपने वाचक शब्द के द्वारा होगा या विशिष्ट विभाव आदि के प्रतिपादन के द्वारा (पहले में अभिधा काम करती है दूसरे में तात्पर्यवृत्ति) यदि पहला पक्ष माना जाय तो जहाँ स्वशब्द से बोधित न हो वहाँ रसादि की प्रतिति नहीं होगी। और सभी जगह वाचक शब्द से ही कहा जाना सम्भव भी नहीं है। कहीं वैसे वाचक शब्द हो भी तो वहाँ भी उस वाचक शब्द के द्वारा न होकर विशिष्ट विभाव आदि के प्रतिपादन के द्वारा ही रस की प्रतीति होती है। वाचक शब्द तो केवल विभाव आदि से सिद्ध रस का परिचय कराते है प्रतीति तो कराते नहीं। दूसरे प्रकरण में अर्थात् जहाँ वाचक शब्द न हो वहाँ भी रस की प्रतीति पायी जाती है, वाचक शब्द में रस-प्रतीति का निर्भर होना देखा नहीं गया है। न हि केवल शृङ्गार आदि शब्द मात्र से युक्त, किन्तु विभाव आदि से प्रतिपादन से रहित काव्य में थोड़ी-सी भी रसवत्ता पाई जाती है। उलटे ही वाचक शब्द न रहकर केवल विशिष्ट विभाव आदि से रस की प्रतीति सम्भव होती है, केवल वाचक शब्द मात्र से कभी नहीं। इस कारण अन्वय एवं व्यतिरेक से अर्थात् विशिष्ट विभाव आदि के द्वारा प्रतिपादित होने पर रस की स्थिति और न वैसा होने पर अभाव के द्वारा रस एवं भाव आदि का वाच्यशक्ति से आक्षिप्त होना ही सिद्ध है, न कि वाच्यत्व इस प्रकार प्रतीयमान अर्थ के तीसरे भेद का भी वाच्यार्थ से भिन्न होना प्रमाणित हो जाता है। रस की प्रतीति वाच्यार्थ के साथ जैसी ही

होती है क्योंकि क्रम असंलक्ष्य है। इसका विवरण आगे के प्रकरण में दिया जायेगा।। ४।।

काव्यस्यात्मा स एवार्थस्तथा चादिकवे: पुरा।

क्रौञ्चद्वन्द्ववियोगोत्थ: शोक: श्लोकत्वमागत:।। ५।।

लीला— एवं वाच्याद्‌भिन्नमेव प्रतीयमानार्थं निरूप्य तस्य काव्ये स्थानं निरूपयति कारिकारकार: काव्यस्येत्यादिना।

स एव अर्थ: काव्यस्य आत्मा तथा च आदिकवे: पुरा क्रौञ्चद्वन्द्ववियोगोत्थ: शोक:, श्लोकत्वम् आगत:, इति पदव्यवस्था।

स:= तथाविध: प्रतीयमानत्वेनावबुद्धस्तत्रापि रसध्वनिरूप: केवलं तस्यैव सततप्रतीयमानत्वात्, एवेत्यवधारणे न तु तदितर इत्याशय:, अर्थ:= वस्तु, काव्यस्य= चारुत्वविशिष्टकविकृते:, आत्मा= जीवनं, तथा च किञ्च, आदिकवे:= प्रथमकाव्यकृतो वाल्मीके:, पुरा= पुराकाले, क्रौञ्चद्वन्द्ववियोगोत्थ:= क्रौञ्चयोश्च-क्रवाकयोर्द्वन्द्वं मिथुनं तस्य वियोगात् द्वयोरेकस्य हननजनन्यविरहाद्, उत्थ:= उत्पन्न:, शोक:= करुणरसस्थायिभाव:, श्लोकत्वं= पद्यत्वं—

'मा निषाद प्रतिष्ठां त्वमगम: शाश्वती: समा।

यत्क्रौञ्चमिथुनादेकमवधी: काममोहितम्।।'

इतिरूपं, आगत:= प्राप्त इति।

रसध्वनिरूप:, प्रतीयमानोऽर्थ एव काव्यस्य जीवितम्। तथा हि पुराकाले वाल्मीकेरादिकवेश्चक्रवाकमिथुनवियोगसमुत्थितशोक: प्रथमपद्यत्वेनावतीर्ण आसीदीति। अत्र काव्यात्मत्वेन रसध्वनेर्ग्रहणमादिकावे: शोकस्य श्लोकरूपग्रह-णप्रसङ्गसाहचर्यादेव पर्यवस्यति। इतरावपि प्रतीयमानभेदौ काव्यात्मतां भजेते, यदा तौ रसध्वनिपर्यवसायिनौ भवत:, इति विपश्चितां मतम्। यथार्थता न तथा प्रतिपद्यते। ''काव्यस्यात्मा ध्वनि'' रिति यदुक्तं तथैव ''योऽर्थ: सहृदय-श्लाघ्य: काव्यात्मेति व्यवस्थित:'' इत्यपि यदुक्तं यच्च तस्य वाच्यप्रतीयमा-नभेदावुक्तौ तथा क्रमेण तु त्रिविध एव प्रतीयमानार्थ: काव्यात्मतां भजते, किञ्च ''आलोकार्थी यथा दीपशिखायां यत्नवान् जन:। तदुपायतया तद्वदर्थे वाच्ये तदादृत:।।'' इति वाच्यार्थमपि स्वीकुर्वता कारिकाकारेण वस्त्वलङ्कारध्वनी उपेक्षितौ इति तु नैव सङ्गच्छते तथाऽपि प्राथमिकत्वेन रसध्वनिमेव काव्यात्मत्वेन ग्रहणे नो काऽपि विप्रतिपत्ति:।। ५।।

इस प्रकार प्रतीयमान अर्थ का प्रतिपादन करने के बाद काव्य में उसके स्थान का निरूपण करते हैं।

वही अर्थ काव्य की आत्मा है। पुरा काल में आदिकवि बाल्मीकि का चक्रवाक पक्षी के जोड़े के वियोग से उत्पन्न शोक ही श्लोक के रूप में उभर आया था।

"वही अर्थ" से यहाँ रसध्वनि की ओर संकेत माना गया है, उदाहरण में शोक के श्लोक में परिणत होने की बात के साहचर्य से। किन्तु कारिकागत प्रकरण से ऐसा जाना नहीं जाता। प्रकरणक्रम से तो 'वहीं' का अर्थ प्रतीयमान अर्थ ही है, भले ही उसमें रसध्वनि का प्राधान्य माना जाय।। ५।।

ध्वन्या०— विविधवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्य स एवार्थः सारतः। तथा चादिकवेः वाल्मीकेः निहतसहचरविरहकातरक्रौञ्चा-क्रन्दनजनितः शोक एव श्लोकतया परिणतः। शोके हि करुणस्थायिभावः। प्रतीयमानस्य चान्यभेददर्शनेऽपि रसभावमुखेनैवोपलक्षणप्राधान्यात्।

लीला— कारिकां विवृणोति विविधेत्यादिना। विविधवाच्यवाचकरचना-प्रपञ्चचारुणः विविधेन वाच्यवाचकयोर्वाच्यमर्थो वाचकः शब्दः तयोः रचनाया विन्यासस्य प्रपञ्चः, संयोजना तेन चारुणो मनोहरस्य काव्यस्य कविकृतेः, स प्रतीयमानरूपः, एवेत्यवधारणे, अर्थः सारभूतः आत्मतत्त्वत्वेन स्थितः, तथा च इति प्रसङ्गे, आदिकवेर्वाल्मीकेः, निहत-सहचरी विरहकातरक्रौञ्चाक्रन्दजनितः निहता व्याधेन आदिकवेर्वाल्मीकेः, निहत-सहचरी विरहकातरक्रौञ्चाक्रन्दजनितः निहता व्याधेन मारिता या सहचरी प्रेयसी तस्या विरहेण वियोगेन कातर आतुरो यः क्रौश्चस्तस्याक्रन्दः करुणरोदनं तस्माज्जनित उत्थितः शोक। चित्तसङ्को-चिभावविशेषः, एव श्लोकतया पद्यत्वेन परिणतः पर्यवसन्न इति।

शोकश्चित्तसङ्कोचिभावः, हि इति समर्थने, करुणः स्थायिभावः करुणाख्य-रसस्योद्‌बुद्धावस्था। वस्तुतस्तु व्यभिचारिण्यां चित्तवृत्तौ भावो भवति, स्थायिन्यां तु रसस्तथैव स्वल्पपुष्टो भावः परिपुष्टो रसः। प्रतीयमानस्य प्रतीयमानार्थस्य, च अन्यभेददर्शन वस्त्वलङ्काररूपेतरभेदप्रतिपादने, अपि, रसभावमुखेन रसभाव-प्राधान्येन, एवेति क्रमार्थे, उपलक्षणमवभासनं, प्राधान्यात् मुख्यत्वेन।

कारिका की व्याख्या करते हैं—

अर्थ एवं शब्द के गुम्फन के विचित्र प्रपञ्च से सुन्दर काव्य का वही आत्मा सार रूप में है। जैसा कि आदिकवि वाल्मीकि का मारी गई प्रेयसी के वियोग से आतुर चक्रवाक के करुण—क्रन्दन से उद्‌बुद्ध शोक ही श्लोक के रूप में परिणत हो गया था। शोक जो है वह करुण रस का स्थायी भाव है। प्रतीयभाव अर्थ के अन्य भेदों के भी उल्लेख होने पर भी उनका, रस भाव के द्वारा ही ग्रहण करना है, क्योंकि इसकी ही प्रधानता मानी जाती है।। ५।।

सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।। ६।।

ध्वन्या०— तत् वस्तुतत्त्वं निःष्यन्दमाना महतां कवीनां भारती अलोकसामान्यं प्रतिभाविशेषं परिस्फुरन्तमभिव्यनक्ति। येनास्मिन्नतिवि-

चित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्यते।

लीला— रसविशिष्टप्रतीयमानार्थस्योपलक्षणाद्वस्त्वलङ्कारविशिष्टस्यापि काव्यात्मतां प्रतिपाद्य तस्यैवार्थस्य पुनर्वैशिष्ट्यं प्रतिपादयति सरस्वतीत्यादिना।

स्वादु तद् अर्थवस्तु निष्यन्दमाना महताम् कवीनाम् सरस्वती परिस्फुरन्तम् अलोकसामान्यम् प्रतिभाविशेषम् अभिव्यनक्ति, इति पदव्यवस्था।

स्वादु= मधुरं, चमत्कारविचित्रं, तद्= रसध्वनिमयं, अर्थवस्तु= प्रतीयमानार्थं, निष्यन्दमाना= प्रस्नुवाना, महत्तां= प्रतिभाभाविताना, कवीनां= काव्यकाराणां, सरस्वती= भारती, परिस्फुरन्तं= प्रतिभासमानं, अलोकसामान्यं= लोकोत्तरं, प्रतिभाविशेषं= प्रतिभायाः (नवनवोन्मेषशालिप्रज्ञायाः) विशेषं (महत्त्वं) अभिव्यनक्ति= प्रभासयति इति। तथाविधं विचित्रतामधुरं प्रतीयमानार्थं प्रस्नुवाना महाकवीनां वाणी लोकोत्तरत्वेनावभासमानं नूतनोल्लेखशालिप्रज्ञावैशिष्ट्यं प्रकाशयति इति।

महाकवीनां वाणी तमेव रसभावध्वनिरूपप्रतीयमानार्थं प्रवाहयति। साधारणो जनस्तु वाच्यार्थद्वारेणैव व्यवहरति। कविवाणीषु तु व्यङ्ग्यार्थचमत्कारोऽवभासते येनान्यापेक्षया कवेर्विशिष्टप्रतिभा प्रकटीभवति, या स्वयमेव परिस्फुरिता भवति। कविभारती स्वयमपि दोग्धीर्धेनुर्या रसिकानां रसयिपपासाशान्त्यै स्वयमेव स्वरूपं दुग्धं प्रवाहयति। तत्र स्वयमेव सरस्वती तदर्थवस्तुसङ्घटनां करोति।

करिकां विवृणोति वृत्तिकारस्तदित्यादिना। तत्तादृशं, वस्तुत्तत्वं प्रतीयमानार्थरूपचमत्कारं, निष्यन्दमाना प्रस्नुवाना, महत्तां प्रतिभाशलिनां, कवीनां काव्यकाराणां, भारती वाणी, अलोकसामान्यं लोकोत्तरं, प्रतिभाविशेषमुत्कृष्टप्रज्ञावैशिष्ट्यं, अभिव्यनक्ति प्रकटयति। येन प्रतिभाविशेषेण, अस्मिन्वर्तमाने, अतिविचित्रकविपरम्परावाहिनि नितान्तवैदग्ध्यपूर्णकविगणसनाथिते, संसारे जगति, कालिदासप्रभृतयः कालिदासप्रमुखाः, द्वित्रा द्वौ वा त्रयो वा पञ्चषाः पञ्च वा षड्वा, महाकवयः प्रातिभकाव्यकाराः, गण्यन्ते संख्यायन्त इति।

रसध्वनिमयचमत्कारपूर्णमर्थं स्वयमेव दोग्ध्रीः कविभारती लोकोत्तरत्वेनावभासमानं प्रतिभाविशेषं प्रकटयति। यतः सत्स्वपि विदग्धकविष्वनेकेषु केचन एव महाकवित्वगौरवं भजन्ते इति।। ६।।

काव्य की आत्मा के रूप में रसध्वनि रूप प्रतीयमान अर्थ को जो उपस्थापन किया गया था उसीके महत्त्व को प्रकारान्तर से प्रतिपादित करते हैं।

महाकवियों की उस आस्वादमय रसध्वनिरूप अर्थतत्त्व की परम्परा को

प्रवाहित करने वाली वाणी लोकसाधारण से एकदम भिन्न तथा स्वयं स्फुरित प्रतिभा के चमत्कार को व्यक्त करती है।

वृत्तिकार कारिका की व्याख्या करते हैं—

उस वस्तुतत्त्व को बहाने वाली महाकवियों की वाणी अलौकिक रूप से स्फुरित विशेष प्रतिभा को व्यक्त करती है जिससे विचित्र कवियों की परम्परा से खचित इस संसार में दो-तीन या पाँच-छः ही महाकवि में गिने जाते हैं।। ६।।

ध्वन्या०— इदं चापरं प्रतीयमानस्यार्थस्य सद्भावनसाधनं प्रमाणम्—

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्।। ७।।

लीला— एवञ्च प्रतीयमानार्थस्य वैशिष्ट्यं प्रतिपाद्य तद्ग्राहकसामग्रीसमुपस्थापककारिकाव्याख्यायै पृष्टभूमिं निबध्नाति वृत्तिकारः इदमित्यादिना। इदं वक्ष्यमाणं, चापि अपरं द्वितीयं, प्रतीयमानस्य वाच्येतरत्वेनावभासमानस्य, अर्थस्य व्यङ्ग्यवस्तुनः, सद्भावसाधनं सद्भावस्यास्तित्वस्य परमसत्तायाः साधनं सिद्धप्रमापकं, प्रमाणं बीजं, अस्तीति शेषः।

सिद्धस्यापि प्रतीयमानस्यार्थस्य सत्तासिद्धिनिमित्तप्रमाणत्वेन वाच्यार्थव्यङ्ग्यार्थयोर्ग्राहकभेदमुपस्थापयति कारिकाकारः शब्दार्थेत्यादिना। स हि शब्दार्थशासनज्ञानमात्रेण एव न वेद्यते केवलम् काव्यार्थतत्त्वज्ञैः, एव वेद्यते, इति पदव्यवस्था।

सः= प्रतीयमानार्थः, हि= इति अवधारणे निश्चयेन, शब्दार्थशासनज्ञानमात्रेण= शब्दः (सार्थकवर्णसमूहः) अर्थः (शब्दनिर्दिष्टवस्तु) तयोरनुशासनं (व्युत्पत्तिः) तस्य ज्ञानं (अवधारणं) तदेव तन्मात्रं तेन शब्दार्थव्युत्पादनपरव्याकरणादिशास्त्रावधारणमात्रेण, एवेत्यवधारणे, न= नैव, वेद्यतेऽनुभूयते, स तु केवल, काव्यार्थतत्त्वज्ञैः= काव्य (लोकोत्तरकविकर्म) तस्यार्थः (प्रतीयमानरूपवस्तु) तस्य तत्त्वं (रहस्यं) जानन्ति (आवधारयन्ति) इति ते तैः, एवेत्यवधारणे, वेद्यते= प्रज्ञायते इति।

तादृशो विलक्षणः प्रतीयमानार्थः शब्दार्थशास्त्रज्ञैर्ज्ञातुं न पार्यतेऽपि तु स तु काव्यतत्त्वविचक्षणैरेव प्रत्याय्यते। यथा च शब्दार्थानुशासनज्ञानेन वाच्यार्थोऽवगम्यते तथैव प्रतीयमानार्थः काव्यतत्त्वविद्भिरेव प्रत्याययिषुः पार्यते। यथा च गान्धर्वविद्या पारंगत एव सङ्गीतरहस्यं ज्ञातुं प्रभवति तथैव काव्यतत्त्वविदेन प्रतीयमानमर्थमनुभवितुर्महति नान्यः। तेन न केवलं स्वरूपविषयगतभेदेनैव प्रतीयमानार्थो वाच्याद्विद्यतेऽपि तु ग्राहकगतभेदेनापि। तत्र शब्दार्थानुशासनवेता वाच्यार्थस्य काव्यतत्त्वेत्ता प्रतीयमानार्थस्य ग्राहको भवति। अथवा वाच्यार्थज्ञाने शब्दार्थानुशासनज्ञानमेव कारणं प्रतीयमानार्थज्ञाने तु सहृदयत्वमेव। तेन प्रतीयमानार्थः काव्यमर्मज्ञानामेव विषयः।

यह और तीसरा प्रतीयमान अर्थ के होने का प्रमाण है— इससे पहले वाच्यार्थ एवं प्रतीयमान अर्थ का स्वरूपगत एवं विषयगत रूप से भेद दिखाकर प्रतीयमान अर्थ की स्थापना करने के बाद ग्राहकभेद से भी उसका अस्तित्व प्रमाणित करने के लिए उपक्रम करते हैं—

वह प्रतीयमान अर्थ शब्दार्थानुशासन अर्थात् शब्द एवं अर्थ की व्युत्पति सिखाने वाले व्याकरण आदि के ज्ञान मात्र से जाना नहीं जा सकता। उसकी तो काव्य का तत्त्व को जानने वाले सहृदय को ही प्रतीति हो पाती है।

शब्दार्थ की व्युत्पत्ति से केवल वाच्यार्थ ही जाना जा सकता है और प्रतीयमान अर्थ तो सहृदय ही जान सकते हैं।

इस तरह प्रतीयमान अर्थ वाच्यार्थ से स्वरूप, विषय एवं गाहकभेद से पृथक् ही होता है और वहीं काव्य की आत्मा है।

ध्वन्या०— सोऽर्थो यस्मात्केवलं काव्यार्थतत्त्वज्ञैरेव ज्ञायते। यदि च वाच्यरूप एवासावर्थः स्यात्तद्वाच्यवाचकरूपपरिज्ञानादेव तत्प्रतीतिः स्यात्। अथ च वाच्यवाचकलक्षणमात्रकृतश्रमाणां काव्यतत्त्वार्थभावनाविमुखानां स्वरश्रुत्यादिलक्षणमिवाप्रगीतानां गन्धर्वलक्षणविदामगोचर एवासावर्थः।

लीला— कारिकां विवृणोति वृत्तिकृत् सोऽर्थ इत्यादिना। सः प्रतीयमानरूपः, अर्थः, वस्तु, वाच्यार्थाद्भिन्न एव, यस्माद्यतः, केवलमिति ग्रहाकव्यवच्छेदः, काव्यार्थतत्त्वज्ञैः लोकोत्तरकविकृतेर्वस्तुरहस्यविद्भिः, एवेत्यवधारणे, नान्यैरित्याशयः, ज्ञायते प्रत्याय्यते। यदि च इति पूर्वपक्षप्रस्तुतौ, असौ प्रतीयमान इति स्मृतः, अर्थो वस्तु, वाच्यरूपोऽभिधेयस्वरूपः, एवेत्यवधारणे, स्यात् तदा, तद्वाच्यवाचकपरिज्ञानात् तस्य अर्थस्य यत् वाच्यमभिधेयं वाचकोऽभिधानं तयोः रूपं स्वरूपं तस्य परिज्ञानादवधारणात्, एवेति तदितरपक्षनिषेधे, तत्प्रतीतिः तस्य प्रतीयमानार्थस्य प्रतीतिरवभासनं स्यात्सम्भवेत्। अथ चेति प्रकारान्तरोपस्थापने, वाच्यवाचकलक्षणमात्रकृतश्रमाणां वाच्यमभिधेयं वाचकोऽभिधानं तयोर्लक्षणं स्वरूपं तदेव तन्मात्रं तस्मिन् कृतश्रमाणां विहितोद्योगानां, काव्यतत्त्वार्थभावनाविमुखानां काव्यं लोकोत्तरकविकर्म तस्य रहस्यं तस्यार्थः सारं तस्य भावना प्रतीतिस्तस्यां विमुखानां पराङ्मुखानां, गान्धर्वलक्षणविदां गन्धर्वाणां तदाख्यगायकजातेरिदं गान्धर्वं सङ्गीतशास्त्रं तस्य लक्षणं स्वरूपं तद्विन्दन्ति जानन्ति ये इति तेषां, सङ्गीतशास्त्रसिद्धान्तज्ञानां किन्तु अप्रगीतानां नास्ति प्रकृष्टं गीतं गानकर्म तत्तत्त्वज्ञानं येषां तेषां प्रयोगतः सङ्गीतमनभ्यस्यतां, स्वरश्रुत्यादिलक्षणं स्वरा निषादादयः सप्त ते च निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमाख्याः यथोक्तं—

श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः।
स्वनो रञ्जयति श्रोतु श्चित स स्वर कथ्यते।।

इत्युक्तलक्षणः।

''श्रुतिः प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः।
सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा।।''

इत्युक्तलक्षणः। आदिपदात् जात्यंशकग्रामरागभाषाविभाषान्तरभाषादेशी-यमार्गाणामपि ग्रहणं तेषां लक्षणं स्वरूप, इव यथा, अगोचरोऽननुभव्यः स प्रतीयमानाख्यः अर्थो वस्तु।

प्रतीयमानरूपत्वेन स्थापितोऽर्थो वाच्यार्थात्पृथगेव, यतः केवलं स काव्यमर्मज्ञैरेव ज्ञातुं शक्यते। यदि स वाच्यरूप एव स्यात्तदा वाच्यवाच-करूपज्ञानादेव तस्यानुभवः सम्भवेत्किन्तु परमार्थस्तु न तादृशः। किन्तु ये खलु काव्यतत्त्व न जानन्ति केवलं वाच्यवाचकज्ञाने एव व्यत्यायितजीवनाः गान्धर्वलक्षणज्ञाः किन्तु प्रगीतविमुखाः स्वरश्रुत्यादिस्वरूपं यथा नैव जानन्ति तथैवार्थस्यास्य रहस्यं नैव ज्ञातुं प्रभवन्ति इति।। ७।।

वृत्तिकार कारिका की व्याख्या करते है—

वह यह प्रतीयमान अर्थ वाच्यार्थ से भिन्न ही है क्योंकि यह काव्य के अर्थ तत्त्व के जानने वाले ही समझ पाने योग्य हैं। यदि वह प्रतीयमान अर्थ वाच्यरूप का ही होता तो उसकी प्रतीति वाच्यवाचकस्वरूप के ही ज्ञान से सम्भव होती किन्तु ऐसा नहीं होता। होता तो यह है कि वाच्य एवं वाचक के लक्षण जानने में मात्र संलग्न, किन्तु काव्यतत्त्व को समझने की भावना से विमुख लोगों को यह प्रतीयमान अर्थ समझ में नहीं आता, जैसे कि गान्धर्वविद्या के लक्षण मात्र जानने वाले, किन्तु गीत का रहस्य न जान पाने वाले स्वर एवं श्रुति आदि के स्वरूप को नहीं जान पाते हैं।। ७।।

ध्वन्वा०— एवं वाच्यव्यतिरेकिणो व्यङ्ग्यस्य सद्भावं प्रतिपाद्य प्राधान्यं तस्यैवेति दर्शयति—

सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः।। ८।।

लीला— काव्यतत्त्वेप्सुभिः स एव प्रतीयमानाऽर्थोऽवधेय इत्याशयकका-रिकाऽवतारणाय वृत्तिकृद्भूमिकां निबध्नाति एवमित्यादिना। एवमित्थं वाच्यव्य-तिरेकिणः वाच्याच्छक्यार्थाद्व्यतिरिच्यते पृथगेव भवति तच्छील इति तस्याभि-धेयादुत्कृष्टस्य, व्यङ्ग्यस्य प्रतीयमानार्थस्य, सद्भावं सत्तां प्रतिपाद्य विनिश्चित्य, तस्य प्रतीयमानार्थस्य, एवेत्यवधारणे, प्राधान्यं माहात्म्यं दर्शयति प्रकटयति।

एवं स्वरूपविषयग्राहकादिदृष्ट्या प्रतीयमानार्थस्य वाच्यार्थात् पृथक्स-

त्तामवधार्य सम्प्रति काव्ये तस्यैव प्राधान्यमुपदिशति कारिकाकार: सोऽर्थ इत्यादिना। स अर्थ: तद्व्यक्तिसामर्थ्ययोगी, कश्चन शब्द: च यत्नत: प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवे: एवेति।

स:= तथाभूत:, अर्थ:= प्रतीयमानाख्यवस्तु, तद्व्यक्तिसामर्थ्ययोगी= तस्य प्रतीयमानार्थस्य व्यक्ति:, प्रत्यायनं प्रकटनं तस्य सामर्थ्यं क्षमता तस्मिन् योग: सम्बन्ध: सोऽस्यास्तीति व्यङ्ग्यार्थाभिव्यञ्जनक्षम:= व्यञ्जक इत्यर्थ:, कश्चन कश्चिदेक:, न तु सर्व:, शब्द:= सार्थकवर्णो वा, सार्थकवर्णसमूह:, च अपि, यत्नत:= प्रयासपूर्वकं, प्रत्यभिज्ञेयौ अवगन्तव्यौ, तौ= तादृशौ, शब्दार्थौ= प्रतीयमानार्थावबोधनक्षमशब्दतत्प्रत्यायितस्तु, महाकवे:= प्राकृष्टकाव्यकर्तु: एव भवत इति। यतस्तौ महाकवेरेव भवतो नान्यस्य। यस्तादृशो वाच्याद्भिन्न: प्रतीयमानार्थस्तस्य व्यञ्जक: शब्दोऽपि तादृश एवं विलक्षणो भवति। न च सर्वेऽपि शब्दा: व्यङ्ग्यार्थव्यञ्जनक्षमा:। तादृशशब्दार्थयुगलं तु महाकविप्रबन्धेष्वेव लभ्यते नाऽन्यत्र। कुन्तकोऽप्येतदेव शब्दान्तरेण कथयति। यथा—

शब्दो विवक्षितैकार्थवाचकोऽन्येषु सत्स्वपि।
अर्थ: सहृदयाह्लादकारिस्वस्पन्दसुन्दर:।। इति।

इस प्रकार वाच्य से भिन्न व्यङ्ग्य की सत्ता का प्रतिपादन करके उसकी प्रधानता बताते हैं—

वह प्रतीयमान अर्थ और उसका व्यञ्जक कोई शब्द जो है उसे यत्नपूर्वक समझ लेना चाहिए। वे शब्द एवं अर्थ महाकवि के ही होते हैं। अर्थात् महाकवि के वाक्यों में ही उनका अनुशीलन करना चाहिए, क्योंकि वहीं मिलते हैं अन्यत्र नहीं।

**ध्वन्या०— व्यङ्ग्योऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन, न शब्दमात्रम्। तावेव शब्दार्थौ महाकवे: प्रत्यभिज्ञेयौ। व्यङ्ग्यव्यञ्जकाभ्यामेव सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेण।**

लीला— कारिकां विवृणोति वृत्तिकारो व्यङ्ग्य इत्यादिना व्यङ्ग्य: प्रतीयमान: अर्थ: वस्तु तद्व्यक्तिसामर्थ्ययोगी प्रतीयमानार्थव्यञ्जनक्षमतायुक्त:, शब्द:, च, कश्चन विरल एव न शब्दमात्रं नैव यत्कोऽपि शब्द:। तावेवतादृशावेव न तु अभिधानाभिधेयमात्रौ शब्दार्थौ महाकवे: लोकोत्तरकाव्यकर्तु:, प्रत्यभिज्ञेयौ निरूपितव्यौ। महाकवीनां सिद्धकाव्यकाराणां, सुप्रयुक्ताभ्यां लोकोत्तरचमत्का-रकारित्वेनसमुपन्यस्ताभ्यां, व्यङ्ग्यव्यञ्जकाभ्यां सुप्रयुक्ताभ्यां लोकोत्तरचमत्का-रकारित्वेनसमुपन्यस्ताभ्यां व्यङ्ग्यव्यञ्जकाभ्यां प्रतीयमानार्थतत्प्रतिपादकाभ्यां, एवेति व्यवच्छेदे नान्यथा, महाकवित्वलाभ: महाकविरिति वैशिष्ट्योपलब्धि:, वाच्यवाचकरचनामात्रेण शब्दार्थसंयोजनमात्रेणं, न च कवयोऽपि महाकवित्वेन गण्यन्त इति। उक्तमेव भामहेन— ''काव्यं तु जायते जातु कस्यचित्प्रतिभावत:।''

इति। अत्र महाकवेरित्यत्र 'कर्तरिशेषे च' षष्ठी सम्भवति। कर्तरि षष्ठीपक्षे महाकविभिरित्थं व्यङ्ग्यार्थव्यञ्जकशब्दप्रत्यभिज्ञानं कर्तव्यमिति, शेषषष्ठीपक्षे सहृदयैः महाकवेः तादृशौ शब्दार्थौ प्रत्यभिज्ञेयाविति। अत्र प्रत्यभिज्ञा च ज्ञातपूर्ववस्तुनः संज्ञानम्। स्रष्टाऽपि कविर्व्यङ्ग्यव्यञ्जकशब्दार्थयोर्नैव जनयिता तौ तु स्वतः स्फुर्तौ भवतः अत्र त्रयः पक्षा उपस्थिता दृश्यन्ते-व्यङ्ग्यार्थः व्यञ्जकशब्दः, व्यञ्जनावृत्तिश्च। त्रयाणामेव कृते ध्वनिशब्दप्रयोगः शिष्टः। यथा ध्वन्यतेऽसाविति ध्वनिर्व्यङ्ग्यार्थः, ध्वनति असाविति ध्वनिर्व्यञ्जक शब्दः, ध्वन्यतेऽनयेति ध्वनिर्व्यञ्जनाब्यापारश्च।

कारिका की व्याख्या करते हैं—

वह व्यङ्ग्य अर्थ और उसको अभिव्यक्त करने की क्षमता से युक्त कोई व्यञ्जक, न कि शब्दमात्र। ये ही शब्द एवं अर्थ महाकवियों को जान लेना चाहिए वा महाकवियों को रचना से सहृदयों को जान लेना चाहिए। ठीक ढंग से प्रयुक्त व्यङ्ग्यार्थ एवं व्यञ्जक शब्द से महाकवियों को महाकवित्व की प्राप्ति होती है। केवल वाच्य एवं वाचक शब्दों की रचना मात्र से नहीं।

यहाँ तीन पक्ष उपस्थित होते हैं— व्यङ्ग्य अर्थ, व्यञ्जक शब्द एवं व्यंजना वृत्ति। ये तीनों ध्वनि कहे जाते हैं। जो ध्वनित है वह ब्यङ्ग्य अर्थ, जो ध्वनित करता है वह व्यंजक शब्द और जो ध्वनित कराता है वह व्यंजना शक्ति। ये तीनों ही महाकवि को समझ लेना चाहिए और उनकी रचना से सहृदयों को।

ध्वन्या०— इदानीं व्यङ्ग्यव्यञ्जकयोः प्राधान्येऽपि यद्वाच्यवाचकावेव प्रथमामुपाददते कवयस्तदपि युक्तमेवेत्याह—

आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः।
तदुपायतया, तद्वदर्थे वाच्ये तादादृतः।। ९।।

ध्वन्य०— यथा ह्यालोकार्थी सन्नपि दीपशिखायां यत्नवाञ्जनो भवति तदुपायता। नहि दीपशिखामन्तरेणालोकः संभवति। तद्वद्व्यङ्गमर्थं प्रत्यादृतो जनो वाच्येर्थे यत्नवान्भवति।

लीला— इत्थं प्रतीयमानार्थस्य प्राधान्यं काव्ये संस्थाप्य तत्र वाच्यार्थभूमि-काव्याख्यानायोपस्थितां कारिकां विवृण्वन् वृत्तिकारस्तत्पूर्वपीठिकां निर्दिशति इदानीमित्यादिना। इदानीं सम्प्रति व्यङ्ग्यार्थप्राधान्योपस्थापनानन्तरं, व्यङ्ग्यव्य-ञ्जकयोः प्रतीमानार्थतदवभासकशब्दयोः, प्राध्याान्ये औत्कर्ष्ये, सिद्धे अपि, कवयः काव्यकाराः, यत्, प्रथमं प्रारभ्यत्वेन, वाच्यवाचकौ वाच्योऽभिधेयो वाचकोऽभिधानं तौ, एवेत्यवधारणे न तु व्यङ्ग्यव्यञ्जकौ, उपाददते प्रयुञ्जन्ति, तद् वाच्यवाचकयोः प्रयोगः अपि, युक्तं समुचितं, एव, इति हेतोः तथा प्रतिवादनाय, आह कथयति इति।

काव्ये व्यङ्ग्य-व्यञ्जकयोः प्राधान्यमपरिहार्यत्वञ्च यत्स्थापितं तत् सम्मतमेव। तथाभूते सत्यपि कवयस्तु प्रथमं वाच्यवाचकयोरेव प्रयोगं कर्तुमुत्सहन्ते। किं तदनुपयुक्तमित्याशङ्कानिरासाय काव्ये वाच्यवाचकयोः स्थानं निर्धारयति कारिकाकार आलोकार्थी इत्यादिना। यथा आलोकार्थी जनः तदुपायतया दीपशिखायाम् यत्नवान् भवति तद्वत् तदादृतः वाच्ये अर्थे इति, पदव्यवस्था।

यथा= यद्वत्, आलोकार्थी= अभीष्टवस्तुविलोकननिमित्तं प्रकाशेप्सुः, जनः= लोकः, तदुपायतया= तस्य (आलोकस्य) उपायः (साधनं) तस्य भावस्तत्ता तया, दीपशिखायां= वर्तिकलिकायां, यत्नवान्= कृतप्रयत्नः भवति, तद्वत् तथैव, तदादृतः= तस्मिन् (व्यङ्ग्येऽर्थे) आदृतः (कृतलक्ष्यः) जनः, वाच्ये मुख्ये, अर्थेऽभिधेये, यत्नवान् बद्धश्रद्धो भवतीति।

यथाऽभीष्टवस्तुविलोकनाय जनस्तत्साधनत्वात् दीपकलिकां समाद्रियते तथैव प्रतीयमानार्थाक्षेपाय कविरपि मुख्येऽर्थे श्रद्धां विदधाति। कविर्यत्प्रथमं वाच्यवाचकौ प्रयुनक्ति तद् व्यङ्ग्यार्थाक्षेपायैव। तेन वाच्यवाचकौ उपायौ व्यङ्ग्यार्थश्चोपेयः।

कारिकां विवृणोति वृत्तिकृत् यथेत्यादिना। यथा यद्वत् हि इति अवधारणे, जनो लोकः, आलोकार्थी विलोकनेप्सुः सन् अपि तस्य साध्ये विलोकने सत्यपि, तदुपायता तस्यालोकस्य उपायतया साधनत्वेन, दीपशिखायां वर्तिकलिकायां, यत्नवान् कृतप्रयासः भवति। हि यत, दीपशिखां वर्तिकलिकां, अन्तरेण बिना, आलोको विलोकनं न सम्भवति सम्पद्यते। तद्वत् तथैव, व्यङ्ग्यं, प्रतीयमानं अर्थ वस्तु प्रति, आदृतो बद्धश्रद्धः, जनो रसिकः, वाच्ये शक्ये, अर्थेऽभिधेये, यत्नवान् कृतप्रयासः, भवति। अनेनैंतदुपस्थापनेन हेतुना, प्रतिपादकस्य वाच्यवाचको व्यवहरतः, कवेः काव्यकारस्य, व्यङ्ग्यं प्रतीयमानं, अर्थ वस्तु, प्रति, व्यापारः प्रवर्तन दर्शित उपस्थापितः।

यथा विलोकनं प्रत्युत्सुको जनस्तत्साधनत्वाद्दीपं साधयति तथैव व्यङ्ग्यार्थं प्रति बद्धादरः कविरपि तदुपायत्वेन वाच्यवाचकौ व्यवहरति इति। व्यङ्ग्यार्थाक्षेपकतयैव काव्ये वाच्यार्थप्रयोगः सम्मतः।। ९।।

इस प्रकार काव्य में व्यङ्ग्य अर्थ एवं व्यञ्जक शब्द की प्रधानता स्थापित होने पर कवि जो पहले वाच्य अर्थ एवं वाचक शब्द को ही लेते हैं उसकी उपयुक्तता सिद्ध करने के लिए कहते हैं—

जैसे किसी अभीष्ट वस्तु को देखने में इच्छुक व्यक्ति उसके साधन होने के नाते पहले दीप ही खोजता है, यद्यपि दीप उसका लक्ष्य नहीं है, वैसे ही व्यङ्ग्य अर्थ एवं व्यञ्जक शब्द में आदर वाला कवि भी उसके उपाय होने से पहले वाच्य अर्थ एवं वाचक शब्द का प्रयोग करता है।

जैसे कोई व्यक्ति किसी अभीष्ट वस्तु को देख लेने के लिए इच्छुक होते हुए भी उसके उपाय होने से पहले दीप के लिए ही प्रयास करता है, क्योंकि उसके बिना देखना सम्भव नहीं होता, उसी तरह व्यङ्ग्य अर्थ के प्रति उत्सुक कवि भी उसके उपाय होने के कारण वाच्य अर्थ में प्रयत्न करता है। इससे यह सिद्ध होता है कि वाच्य अर्थ में कवि का जो प्रयास है वह व्यङ्ग्य अर्थ के प्रति का व्यापार ही है।

वैसे तो काव्य में वाच्य अर्थ की कोई उपयोगिता नहीं है और यह तो शास्त्र का विषय है, तथापि उसकी काव्य में उपयोगिता इसलिए है कि वह व्यङ्ग्य अर्थ का उपाय अर्थात् आक्षेपक है।। ९।।

यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।
वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुनः।। १०।।

ध्वन्या०— यथा हि पदार्थद्वारेण वाक्यार्थावागमस्तथा वाच्यार्थप्रतीतिपूर्विका व्यङ्ग्यस्यार्थस्य प्रतिपत्तिः।

लीला— वक्ष्यमाणकारिकायाः प्रयोजनमवधारयितुं वृत्तिकृत्परामृशति प्रतिपाद्यस्येत्यादिना। प्रतिपाद्यस्य सहृदयस्य अपि तं व्यङ्ग्यार्थं प्रमाणयितुं, आह कथयति।

एवं कविदृष्ट्या व्यङ्ग्यार्थस्य प्राधान्यं कविर्व्यङ्ग्यार्थायैव वाच्यार्थमादत्ते किन्तु तस्य चरमलक्षयन्तु व्यंग्यार्थ एवेति कथनेन प्रतिपादनानन्तरं कारिकाकारः सहृदय (श्रोतृ) दृष्ट्याऽपि तदेवार्थमुपस्थापयति यथेत्यादिना। यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते तद्वत् तस्य वस्तुनः वाच्यार्थपूर्विका प्रतिपत् इति।

यथा= यद्वत्, पदार्थद्वारेण= पदस्य सुप्तिङन्तशब्दस्य अर्थोऽभिधेयस्तद्द्वारेण तत्प्रतीतिपूर्वकमेव, वाक्यार्थः= वाक्यस्य (पूर्णार्थावबोधकपदचयस्य सुप्तिङन्तचयो वाक्यं क्रिया वा कारिकान्विता इति परिभाषितस्य) अर्थः= अभिधेयं, सम्प्रतीयते= सम्यगवभासते, तद्वत् तथैव, तस्य= प्रतीयामानस्वरूपस्य, वस्तुनः= अर्थस्य, वाच्यार्थपूर्विका= वाच्यार्थः (अभिधेयः) पूर्वं (प्रथमं) यस्याः सा तादृशी, प्रतिपद्= अवभासनं भवतीति।

यथा पूर्वं पदार्थज्ञानमनन्तरञ्च तद्वशाद्वाक्यार्थज्ञानं भवति तथैव प्रतीयमानस्यार्थस्याऽपि वाच्यार्थज्ञानानन्तरमेव प्रतीतिर्भवति।

कारिकां विवृणोति वृत्तिकारो यथेत्यादिना। यथा यद्वत्, हि इति अवधारणे पदार्थद्वारेण पदार्थप्रतीत्या, वाक्यार्थावगमो वाक्यार्थावबोधनं, भवति, तथा तद्वदेव, व्यङ्ग्यस्य प्रतीयमानस्य, अर्थस्य वस्तुनः, वाक्यार्थप्रतीतिपूर्विका वाक्यार्थावबोधनानन्तराभासिका, प्रतिपत्तिः प्रतीतिः भवतीति शेषः।

प्रसङ्गेऽस्मिन् प्रतिपादकप्रतिपाद्यपदेनैव शब्दार्थपरे यथा सामान्येन भवतः किन्तु यो व्यङ्ग्यार्थं प्रतिपादयति स प्रतिपादकः कविः प्रतिपाद्यते यदर्थमति

प्रतिपाद्यः सहृदय इति। अनेनैतदपि सिध्यति यद्यथा। यावत्पर्यन्तपादार्थो नैव ज्ञायते तावत्पर्यन्तं वाक्यार्थज्ञानं नैव सम्भवति, यदा पदार्थः सम्यग्ज्ञायते तदा वाक्यार्थबोधोऽपि सुकरः। तेन पदार्थवाक्यार्थयोः पौर्वापर्यक्रमोऽवबोधनस्य। किन्तु स्वल्पमतीनामेवैतद्विषयः प्रौढमतीनान्तु समकालमेवोभाववभासेते। यथा स्वल्पज्ञः पदार्थज्ञानानन्तरमेव वाक्यार्थज्ञानं लभते किन्तु प्रौढमतीनां तु पदार्थेन सहैव वाक्यार्थावबोधो भवति क्रममनालोच्यैव तथैव काव्येऽपि येषां खलु सहृदयता नातिप्रौढा तेषां कृते तु क्रमेण प्रथमं वाच्यार्थबोधस्तदनन्तरमेव व्यङ्ग्यार्थबोधो भवति, किन्तु येषां सहृदयता निभृतं प्रौढा तेषां कृते वाच्यर्थमविविच्यैव समकालमेव व्यङ्ग्यार्थावबोधो भवति।। १०।।

इस प्रकार प्रतिपादक अर्थात् कवि की दृष्टि से भी व्यङ्ग्यार्थ की प्रधानता सिद्ध करने के बाद अब प्रतिपाद्य अर्थात् सहृदय की दृष्टि से भी उसकी प्रधानता स्थापित करने वाली कारिका के अवतरण को वृत्तिकार कहते हैं।

प्रतिपाद्य अर्थात् सहृदंय की दृष्टि से भी प्रतीयमान अर्थ की प्रधानता दिखाने के लिए कहते हैं—

जैसे पदों के अर्थ के द्वारा वाक्य का अर्थ समझा जा सकता है वैसे ही उस व्यङ्ग्य अर्थ की प्रतीति पहले वाच्य अर्थ के ज्ञान करके ही होती है।

कारिका की व्याख्या करते हैं वृत्तिकार—

जैसे कि पदार्थ के द्वारा वाक्यार्थ समझ में आता है, उसी तरह व्यङ्ग्य अर्थ की प्रतीति भी वाच्यार्थ की प्रतीति होने के बाद ही होती है।। १०।।

ध्वन्या०— इदानीं वाच्यार्थप्रतीतिपूर्वकत्वेऽपि तत्प्रतीतेर्व्यङ्ग्यस्यार्थस्य प्राधान्यं यथा न व्यालुप्यते तथा दर्शयति—

स्वसामर्थ्यवशेनैव वाक्यार्थं प्रतिपादयन्।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते।।११।।
तद्वत्सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते।। १२।।

ध्वन्या०— यथा स्वसामर्थ्यवशेनैव वाक्यार्थं प्रकाशयन्नपि पदार्थो व्यापारनिष्पत्तौ न विभाव्यते विभक्ततया।

लीला— एवञ्च वाच्याक्षिप्तत्वेऽपि व्यङ्ग्यार्थस्य प्राधान्यसमर्थिकां कारिकामवतारयन् वृत्तिकारस्तन्निर्देशं करोति इदानीमित्यादिना। इदानीं साम्प्रतं, वाच्यार्थप्रतीतिपूर्वकत्वे शक्यार्थावबोधप्राथम्ये, अपि, तत्प्रतीतौ तस्य व्यङ्ग्यार्थस्य प्रतीतिरवभासनं तस्यां, व्यङ्ग्यस्य प्रतीयमानस्य अर्थस्य वस्तुनः प्राधान्यं समुत्कृष्टम्, यथा येन प्रकारेण, न नैव व्यालुप्येत तथा तत्प्रकारेण बोधयति उपस्थापयति।

यदि वाच्यार्थपूर्वको व्यङ्ग्यार्थस्तदा तस्य प्राधान्यं कथं सम्भवति इत्यपेक्षायां कारिकाकारस्तन्निरूपयति स्वसामर्थ्येत्यादिना। सन्दानितकेन प्रथमेन दृष्टान्त-मपरेण दार्ष्टान्तिकम्। यथा स्वसामर्थ्यवशेन एव वाक्यार्थम् प्रतिपादयन् पदार्थः ·व्यापारनिष्पत्तौ न विभाव्यते तद्वत् अर्थः वाच्यार्थविमुखात्मनाम् सचेतसाम् तत्त्वार्थदर्शिन्याम् बुद्धौ झटिति एव अवभासते इति।

यथा= यद्वत्, स्वसामर्थ्यवशेन= स्वस्य निजस्य सामर्थ्यम्। आकांक्षायोग्य-तासन्निधयः, यत्र प्रतीतिपर्यवयसानविरह आकांक्षा, एकपदार्थानुयोगिकाप-रपदार्थप्रतियोगिकः सम्बन्धो योग्यता, अविलम्बेन पदार्थोपस्थितिः सन्निधिः। तस्य वशात् (आधारेण) एवेत्यवधारणे, वाक्यार्थम्= पदोच्चयाभिबोधं, प्रतिपादयन्= प्रकाशयन्, पदार्थः= पदाभिधेयः व्यापारनिष्पत्तौ= व्यापारः (वाक्या-र्थबोधनानुकूलक्रिया) तस्य निष्पत्तौ (सिद्धौ) विभक्ततया= पृयक्त्वेन, न, विभाव्यते= अवधार्यते, तद्वत्= तथैव, सः= पूर्वोक्तलक्षणः प्रतीयमानरूपः अर्थः= वस्तु, वाच्यार्थविमुखात्मनां= वाच्यः (मुख्यः) योऽर्थः (अभिधेयः) तस्मात् विमुखः (असन्तृप्तश्चमत्काररहित्यात्) आत्मा (स्वान्तं) येषां तेषां, सचेतसां= सहृदयानां, तत्त्वार्थदर्शिन्यां= तत्त्वस्य (सारस्य) अर्थः (प्रयोजनं) तं पश्यति (अवलोकयति) तच्छीला इति तस्यां, बुद्धौ= मतौ, झटिति= द्रागेव व्यवध ानराहित्येन, एव अवभासते= प्रतीतिमानयाति।

यथा स्वशक्तिवशाद्वाक्यार्थबोधं प्रयतन्नपि पदार्थो वाक्यार्थावबोधनकाले न तत्पृथक्त्वेनावभासते तथैव प्रतीयमानोऽर्थोऽपि वाच्यार्थात्तृप्तानां रसिकानां तत्त्वावधारणक्षमायां बुद्धौ वाच्यार्थप्रतीतिकाममेवावभासते इति। तत्र क्रमप्रतीतरेभाव एवं व्यङ्ग्यार्थस्य प्रधानत्वे हेतुः।

वस्तुतस्तु वाच्यार्थः कारणं व्यग्यार्थः कार्यम्। कारणापेक्षया कार्यस्यैव प्राधान्यं भजते। तेन व्यङ्ग्यार्थः कार्यं प्रति कायरणत्वात्प्रथमप्रतीतोऽपि वाच्यार्थो नैव प्राधान्यं भजते। कारणं तु कार्यार्थमेव समर्पितं भवत्येव। कारिकां विवृणोति वृत्तिकारः यथेत्यादिना। यथा यद्वत्, स्वसामर्थ्यवशेन निजशक्तिवशाद्, एवं वाक्यार्थ, प्रकाशन्प्रकटयन्, अपि, पदार्थः व्यापारनिष्पत्तौ क्रियासिद्धौ, विभक्ततया पृथक्त्वेन, न, विभाव्यते प्रतीतिमायाति तथैव व्यंग्यार्थमाक्षिपन्नपि वाच्यार्थो व्यंग्यार्थावभासनकाले न पृथक्त्वेन द्योतते। इति।।

अस्यायमेवाशयो यच्छब्दार्थो वाक्यार्थात् वाच्यार्थो व्यंग्यार्थात् पृथग्भूतं नैव प्रतीतौ भवतः किन्तु नायमस्याशयो यद्वाच्यार्थो नैव नितान्तमेवाप्रतीतो भवति। सोऽपि प्रतीयत एव किन्तु पृथक्त्वेन नावभासते इत्येतावन्मात्रम्। अपरञ्च वाच्यार्थप्रतीतिकाले एव व्यङ्ग्यार्थस्य प्रतीतिस्तु भवति तथापि तत्र क्रमस्तु भवत्येव।

ऊपर यह कहा गया कि वाच्यार्थ की प्रतीति पहले होती है और व्यंग्यार्थ की बाद में, तो फिर व्यंग्यार्थ कैसे प्रधान हुआ? इस तरह की आशंका को मिटाने के लिए वृत्तिकार उसी के प्रतिपादक श्लोक-युगलों की अवतारण करते हैं—

अब उसकी प्रतीति वाच्यार्थ की प्रतीतिपूर्वक होने पर भी व्यंग्य अर्थ का प्राधान्य जैसे नहीं लुप्त होता वैसा ही दिखाते हैं— जैसे अपने सामर्थ्य के बल से वाच्यार्थ का प्रतिपादन करने वाला पदार्थ क्रिया की सिद्धि के समय पृथक् अवभासित नहीं होता वैसे ही प्रतीयमान अर्थ वाच्यार्थ से असन्तृप्त सहृदयों के तत्त्व को समक्ष आने वाली बुद्धि में उसी समय अर्थात् वाच्यार्थ के अवबोधन काल में ही अवभासित होता है। उसमें वाच्यार्थ का पृथक् ज्ञान नहीं होता।

अत: पहले रहने पर भी कारण के रूप में रहने वाला वाच्यार्थ कार्यरूप व्यंग्य अर्थ की तुलना में प्रधान नहीं माना जा सकता।। ११-१२।।

ध्वन्या०— एवं वाच्यव्यतिरेकिणो व्यङ्ग्यार्थस्य सद्भावं प्रतिपाद्य प्रकृत उपयोजयन्नाह—

यत्रार्थ: शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्त: काव्यविशेष: स ध्वनिरिति सूरिभि: कथित:।।१३।।

ध्वन्या०— यत्रार्थो वाच्यविशेष: वाचकविशेष: शब्दो वा तमर्थ व्यङ्क्त: स काव्यविशेषो ध्वनिरिति।

लीला— एवं प्रतीयमानार्थस्य सद्भावं साधुभावं (सत्ताप्राधान्यं च) प्रतिपाद्य सम्प्रति तस्योपयोगनिर्द्धारिकां कारिकामवतारयति वृत्तिकार एवमित्यादिना। एवमित्थं पूर्वोक्तप्रकारेण, वाच्यव्यतिरेकिणो व्याच्यात्पृथगवस्थितस्य, व्यंग्यस्य प्रतीयमानस्य, अर्थस्य वस्तुन:, सद्भावं सत्तां प्राधान्यञ्च, प्रतिपाद्य साधयित्वा, तं, प्रकृते सम्बद्धविषये, काव्ये, उपयोजयन्नवधारयन्, आह ब्रूते इति।

वाच्यव्यङ्ग्यार्थयो: स्वरूप-विषयग्राहक-प्रतिपादक-प्रतिपाद्यदृष्ट्या पृथक्त्वं युक्तित: प्रतिपाद्य तस्य प्रकृते उपयोजनाय निर्दिशति यत्रार्थ इत्यादिना। यत्र उपसर्जनीकृतस्वार्थौ अर्थ: शब्दो वा तम् अर्थम् व्यङ्क्त: स: काव्यविशेष: ध्वनि: इति सूरिभि: कथित:, इति पदव्यवस्था।

यत्र= यस्मिन् प्रबन्धे, उपसर्जनीकृतस्वार्थौ= उपसर्जनीकृतौ (त्यक्तस्वार्थौ अत एव गुणीभूतौ) स्वं (आत्मा) अर्थ: (अभिधेय:) च याभ्यां तौ, अर्थो= अभिधेय:, शब्द:= सार्थकवर्ण:, सार्थकवर्णसमूहो वा= अथवा, तम्= व्यङ्ग्यम्, अर्थम्= वस्तु, व्यङ्क्त:= प्रकटीकुरुत:, स:= तादृश:, गुणीभूतवाच्यार्थ: काव्य-विशेष:= कविकृति:, ध्वनि:= ध्वन्यते अस्मिन्निति ध्वनि: तदाख्य:, इति= प्रकारे, सूरिभि:= काव्यतत्त्वविद्भि:, कथित:= निगदित:।

यत्र स्वार्थत्यागेन गुणीभूतौ वाच्यवाचकौ व्यङ्ग्यार्थं प्रकटयत: सं

काव्यविशेषो ध्वनिसंज्ञित इति। यथाऽनुसरति मम्मटोऽपि— 'इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः' इति। तथैव विश्वनाथोऽपि- 'वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम्' इति। वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वनिर्भवति।

कारिकां विवृणोति वृत्तिकृत् यत्रेत्यादिना। यत्र यस्मिन् काव्ये, वाच्यविशेषः वाचकबोध्यत्वेन व्यवहृतः, अर्थोऽभिधेयः, वाचकविशेषः वाच्यार्थावबोधकत्वेन सम्मतः, शब्दः सार्थकवर्णसमूहः वा तं व्यङ्ग्यरूपं, अर्थं वस्तु, व्यङ्क्तः प्रकटयतः स तादृशवाच्यातिशायिव्यङ्ग्यार्थविशिष्टः, काव्यविशेषः कविकृतिः ध्वनिरिति ध्वनिसंज्ञितः।

अत्र 'व्यङ्क्तः' इति द्विवचनप्रयोगः साभिप्रायः। तच्चेत्थम्अविवक्षितवाच्यध्वनौ शब्दाधारेणाभिव्यक्तिर्भवति यत्र तत्रार्थस्य सहकारिताऽप्यपेक्षिताऽन्यथा निरर्थकशब्दादपि ध्वनिः सम्भवेत्। तथैव विविक्षितान्यपरवाच्यध्वनौ यत्र ध्वनिरर्थानुगो भवति तत्र शब्दस्य सहकारिता नितान्तमपेक्षिता किञ्च विशिष्टशब्दाभिहितार्थ एवार्थव्यञ्जनक्षमः। तेन ध्वनिरेव सर्वत्र शब्दार्थसम्मिलितव्यापारः। तर्हि कारिकायां किं निमित्तं 'शब्दार्थौ' इति कथने 'अर्थः शब्दो वा' इति कथितमिति चेदित्थम्। यद्यपि ध्वनिः शब्दार्थयोः संयुक्तव्यापारो नार्थमात्रस्य नैव च केवलमर्थस्य तथापि यत्र यस्य प्राधान्यं तत्र तस्यैव नाम्ना व्यपदेशाय तथोपन्यस्तम्। यथाऽविवक्षितवाच्यध्वनौ शब्दस्य प्रधान्यं तेन स शब्दशक्तिमूलक इति विवक्षितान्यपरवाच्येऽर्थस्य प्राधान्यं तेन सोऽर्थशक्तिमूलक इति व्यपदेशः। यथोक्तं काव्यप्रकाशकारेण— ''शब्दप्रमाणवेद्योऽर्थो व्यनक्त्यर्थान्तरं यतः। अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता''।। इति। उभयशक्त्युद्भव उभयशक्तिमूलकः। इत्थं शब्दशक्त्युद्भव 'अर्थशक्त्युद्भव उभयशक्तिभवश्चेति ध्वनिस्त्रिविधः। तत्र शब्दशक्त्युद्भवो वस्त्वलङ्कारभेदाद् द्विविधः, अर्थशक्त्युद्भवोऽपि द्विविधः, अविवक्षितवाच्यो द्विविधः। विवक्षिताविवक्षितान्यपरवाच्यश्च। अविवक्षितवाच्योऽर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतभेदाद् तान्यपरवाच्यश्च असंलक्ष्यव्यङ्ग्यक्रमसंलक्ष्यव्यङ्ग्यक्रमभेदाद् द्विविधः। उभयशक्त्युद्भवस्त्वेक एवेति साहित्यदर्पणादौ स्पष्टम्।

इस प्रकार वाच्यार्थ से अतिरिक्त व्यंग्यार्थ की सत्ता एवं-प्राधान्य स्थापित करने के बाद उसका उपयोग दिखाते हैं।

जहाँ शब्द और अर्थ अपने मुख्य अर्थ को गौण बनाकर उस प्रतीयमान व्यंग्य अर्थ का उपस्थापन करते हैं, उसी काव्यविशेष को विद्वान् लोग ध्वनि कहते हैं।

जहाँ वाच्यविशेष अर्थ एवं वाचकविशेष शब्द उस प्रतीयमान अर्थ को व्यक्त करते है वह काव्यविशेष ध्वनि होता है।

ध्वन्या०– अनेन वाच्यवाचकचारुत्वहेतुभ्य उपमादिभ्योऽनुप्रासादिभ्यश्च विभक्त ध्वनेर्विषय इति दर्शितम्।

लीला– एवं ध्वनि संस्थाप्य सम्प्रति ध्वन्यभाववादिनां मतं दूषयितुमारभते वृत्तिकारः। तत्र प्रथमं नास्त्येव शब्दार्थतत्सौन्दर्यसाधकगुणालङ्कारेभ्यः पृथक् ध्वनिरिति मतं दूष्यति अनेनेत्यादिना। अनेन वाच्यात्पृथगेव ध्वेनरस्तित्वसाधनेन वाच्यवाचकचारुत्वहेतुभ्यः अभिधेयाभिधानसौन्दर्यसाधनभूतेभ्यः उपमादिभ्य उपमारूपकप्रभृत्यर्थालङ्कारेभ्यः, अनुप्रासादिभ्योऽनुप्रासयमकप्रभृतिशब्दालङ्कारेभ्यश्च, विभक्तः, पृथक्, एव, ध्वनेः, विषयः, क्षेत्रं, इति इति प्रकारे, दर्शितं प्रमाणितम्।

एवं व्यङ्ग्यार्थस्य सत्तां प्राधान्यं ध्वनिरूपञ्च यथार्थेन प्रतिपाद्य संस्थाप्यनिरूप्य, सम्प्रति तत्प्रतिपक्षमतानि विवेच्यन्ते। अभावादिषु प्रथमः पक्षो ध्वनेरस्तित्वमेव नैव स्वीकरोति। तदनुसारेण काव्यस्य शरीरं शब्दार्थौ, तत्र शब्दसौन्दर्यमनुप्रासादयोऽर्थसौन्दर्यमुपमारूपकादीनि रीतयो वृत्तयश्च संघटनामाधुर्यम्। तदितरो को नाम ध्वनिः सम्भवति इति। विवेचनया सिध्यति यद् वाच्यार्थचारुताहेतुभूतेभ्य उपमादिभ्यो वाचकार्थचारुताहेतुभूतेभ्योऽनुप्रासादिभ्यः पृथगेव ध्वनेर्विषयः। गुणालङ्कारयोर्विषयौ वाच्यवाचकौ, ध्वनेस्तु व्यङ्ग्यव्यञ्जकौ। तेन ध्वनिर्गुणालङ्कारयोःपृथगेव।

इस प्रकार व्यङ्ग्यार्थ की सत्ता, प्रधानता एवं ध्वनि के स्वरूप का प्रतिपादन करने के बाद अब ध्वनि के अभाववादियों के मत को दूषित करते हैं। उनमें से प्रथम पक्ष यह था कि शब्द और अर्थ काव्य के शरीर हैं और अनुप्रास-उपमा आदि उनके सौन्दर्याधायक हैं और रीति वृत्ति आदि काव्य के संघटनागत माधुर्य के हेतु। इनसे भिन्न ध्वनि नाम की कोई वस्तु नहीं है।

किन्तु उपर्युक्त विवेचना से शब्द एवं अर्थ के चारुत्वसाधनभूत अनुप्रास उपमा आदि अलङ्कारों से ध्वनि का विषय भिन्न ही है। अलङ्कार गुण आदि के विषय है वाच्य एवं वाचक, ध्वनि के विषय हैं व्यङ्ग्य एवं व्यञ्जक। अतः ध्वनि गुण अलङ्कार आदि से भिन्न ही है।

ध्वन्या०– यदप्युक्तम् 'प्रसिद्धप्रस्थानातिक्रमिणो मार्गस्य काव्यत्वहानेर्ध्वनिर्नास्ति' इति, तदप्ययुक्तम्। यतो लक्षणकृतामेव स केवलं न प्रसिद्धः, लक्ष्ये तु परिक्ष्यमाणे स एव सहृदयहृदयाह्लादकारि काव्यतत्त्वम्। ततोऽन्यच्चित्रमेवेत्यग्रे दर्शयिष्यामः।

लीला– एवं ध्वनेरभाववादिनां प्रथमं मतं सन्दूष्य सम्प्रति तेषामेव द्वितीयं मतं दूषयितुं प्रक्रमते यदप्युक्तमित्यादिना। यद्यपि यथा च उक्तं कथितं प्रसिद्धप्रस्थानातिक्रमिणः प्रसिद्धानि संस्थापितानि यानि प्रस्थानानि काव्यवर्त्मानि गुणालङ्काररीतिवृत्तिप्रभृतिदीनि, तानि अतिक्रामति उल्लङ्घयति तच्छील इति

तस्य गुणालङ्काररीतिप्रभृतिव्यतिरेकिण:, मार्गस्य पथ:, काव्यत्वहाने: काव्यत्वा-भावात् ध्वनि:, नास्ति न सम्भवति, इति, तदपि अयुक्तमसाम्प्रतम्। यतो यस्मात्, स ध्वनि:, केवलं, लक्षणकृतां 'काव्यस्यात्मा ध्वनिरिति' स ध्वनिरिति, इत्यपि च लक्षणविधायिनां, न, प्रसिद्ध: प्रचलित:, परीक्ष्यमाणे विवेच्यमाने, लक्ष्ये लक्ष्यग्रन्थे महाभारतादौ, स ध्वनि:, एव सहृदयहृदयाह्लादकारि रसिकमनो-रञ्जनविधायि, काव्यतत्त्वं काव्यरहस्यं, ततो ध्वनिविषयाद्, अन्यत् इतरत्, चित्रं चित्रकाव्यं शब्दजातम् एव नान्यत्, इति, अग्रे सम्बद्धप्रकरणे दर्शयिष्याम: प्रतिपादयिष्याम:। इति।

ये खलु गुणालङ्काररीतिवृत्तिप्रभृतिप्रसिद्धप्रस्थानभिन्नो ध्वनिर्नैव सम्भवति इति कथयन्ति तेऽपि नैव यथार्थज्ञा: किञ्च ध्वनिरस्तु न केवलं काव्यल-क्षणकारिणामेव सम्मतमपि तु महाभारतादिलक्ष्यग्रन्थविवेचनातोऽपि रसिकस्वा-न्ताह्लादकत्वेन ध्वनेरभाव एव यद्रहितं काव्यं चित्रमेव भवति। यथोक्तं— ''शब्दचित्रं वाच्यचित्रमव्यंग्यं त्ववरं स्मृतमिति।'' यथा च—

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते:।
काव्येउभे ततोऽन्यद्यत्तच्चित्रमभिधीयते।।
चित्रं शब्दार्थभेदेन द्विविधञ्च व्यवस्थितम्।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमत: परम्।। इति।

ध्वनि अभाववादियों के दूसरे मत का भी खण्डन करते हैं।

जो यह कहा जाता है कि 'गुण, अलङ्कार आदि प्रसिद्ध प्रस्थान से भिन्न मार्ग का काव्यत्व हो ही नहीं सकता। अत: ध्वनि है ही नहीं हैं।' एकदम ठीक नहीं है। ध्वनि न केवल काव्यलक्षण का निर्द्धारण करने वाले में ही प्रसिद्ध है, अपितु महाभारत आदि लक्ष्य ग्रन्थ का ठीक से विचार करने पर ध्वनि ही उनमें सहृदयों के हृदय का आह्लादन कर पाने वाले काव्यतत्त्व के रूप में मिलता है। उसके अलावा जो है केवल शब्दचित्र ही है। इसको आगे सम्बद्ध प्रकरण में बताया जायेगा।

ध्वन्या०— यदप्युक्तम्— 'कामनीयकमनतिवर्तमानस्य तस्योक्तालङ्कारादिष्वेवान्तर्भाव:' इति, तदप्यसमीचीनम्। वाच्यवाचकमात्राश्रयिणि प्रस्थाने व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यवस्थितस्य ध्वने: कथमन्तर्भाव:? वाच्यवाचकचारुत्वहेतवो हि तस्याङ्गभूता:, स त्वङ्गिरूप एवेतिप्रतिपा-दयिष्यमाणत्वात्।

लीला— एवञ्च ध्वन्याभाववादिनां द्वितीयं मतं सन्दूष्य तृतीयं मतमपि खण्डयितुमुपक्रमते यदप्युक्तमित्यादिना। यदपि यथा च, उक्तमभिहितं, कामनीयकं सौन्दर्याधायकतत्त्वं, अनतिवर्तमानस्यानतिक्रामत:, तस्य ध्वने:,

उक्तालङ्कारादिप्रकारेषु उक्ताः शब्दार्थसौन्दर्यहेतुभूता ये अलङ्कारा अनुप्रासोपमा-दयस्तेषां प्रकारेषु भेदेषु, अन्तर्भावो विलीनता इति, तदपि असमीचीनमसाम्प्रतम्। वाच्यवाचकमात्राश्रयिणि अभिधेयाभिधानमात्राश्रिते प्रस्थाने गुणालङ्कारदिमार्गे, व्यङ्ग्यव्यञ्जकसमाश्रयेण व्यङ्ग्यार्थतद्व्यञ्जकशब्दाश्रितेन, व्यवस्थितस्य प्रतिष्ठामाप्तस्य, ध्वनेः, कथं, अन्तर्भावो विलीनता।वाच्यवाचकचारुत्वहेतवः अभि-धानाभिधेयसौन्दर्यकारणभूता गुणालङ्कारादयः, हि तस्य ध्वनेः, अङ्गभूता अवय-वत्वेन स्थिताः, स ध्वनिः, तु अङ्गिरूपोऽवयविरूपः, एव, इति, प्रतिपादयिष्य-माणत्वात् कथयिष्यमाणत्वात्।

अपरञ्च ध्वनेरभाववादिषु केचिद्यत्कथयन्ति यद् ध्वनिरपि काव्यसौन्द-र्याधायक एव तेन तस्यापि अलङ्कारादिषु अन्तर्भावो भवत्येवेति न तस्य पृथगस्तित्वमिति तदपि न साम्प्रतम्। किञ्चालङ्कारादयस्तु वाच्यवाचकसौन्द-र्याधायकास्तेषु व्यङ्ग्यव्यञ्जकसमाश्रयस्य ध्वनेरन्तर्भावो नितान्तमसम्भवः। ते तु तस्याङ्गभूता एव काव्यात्मत्वाद् ध्वनिस्तु अङ्गी। अङ्गिन अङ्गेषु न कथमप्यन्तर्भाव इति।

ध्वनि के अभाववादियों के दूसरे मत का खण्डन करते हैं।

जो यह कहा गया है कि सौन्दर्याधायकतत्त्व से बाहर न होने के कारण उस ध्वनि का अलङ्कार आदि में अन्तर्भाव हो जाता है, यह भी ठीक नहीं है। वाच्य एवं वाचक अर्थ एवं शब्द में मात्र आश्रित प्रस्थान में व्यङ्ग्य एवं व्यञ्जक अर्थ एवं शब्द में आश्रित होकर व्यवस्थित ध्वनि का कैसे अन्तर्भाव हो सकता है। वाच्य एवं वाचक के चारुत्व के हेतुभूत गुण एवं अलङ्कार आदि अङ्गमात्र हैं और ध्वनि अङ्गी है। इसको बाद में प्रतिपादित किया जायेगा। अङ्गी में अङ्ग का अन्तर्भाव हो सकता है लेकिन अङ्ग में अङ्गी का नहीं।

ध्वन्या— परिकरश्लोकश्चात्र—

व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः।।

लीला— व्यङ्ग्यव्यञ्जकाश्रयस्य ध्वनेर्वाच्यवाचकाश्रितालङ्कारादिष्वन्तर्भावो नैव सम्भवतीति प्रतिपादितसिद्धान्तस्याधिकावापाय परिकरश्लोकमुपस्थापयति व्यङ्ग्येत्यादिना। ध्वनेः व्यंग्यव्यञ्जकसम्बन्धनिबन्धनतया वाच्यवाचकचारुत्व-हेत्वन्तः पातिता कुतः, इतिपदव्यवस्था।

परिकरार्थ कारिकार्थस्याधिकावापं कर्तुं : श्लोकः स परिकरश्लोकः अत्रेत्यस्मिन् प्रकरणे।

ध्वनेः ध्वनितत्त्वस्य, व्यंग्यव्यञ्जकसम्बन्धनिबन्धनतया व्यंग्यो व्यङ्ग्यार्थः व्यञ्जको व्यञ्जकशब्दस्तयोर्यः सम्बन्धः प्रावधानं तत्र निबन्धनं ग्रथनं यस्य तस्य भावस्तत्ता तया, वाच्यवाचकचारुत्वहेत्वन्तःपातिता वाच्योऽभिधेयो वाच-

कोऽर्थप्रत्यायकशब्दस्तयोश्चारुत्वं सौन्दर्यं तस्य हेतुः कारणं गुणालङ्कारादिस्त-स्मिन्नन्तःपातिताऽन्तर्वर्तिता, कुतः कथं सम्भवति इति।

ध्वनिस्तु व्यंग्यव्यञ्जकसम्बद्धस्य वाच्यवाचकसौन्दर्याधायकतत्त्वेषु कथम-न्तर्भावः सम्भवति अर्थान्नैव कदापि इति।

ध्वनिविरोधियों के तीसरे पक्ष का भी खण्डन जो किये हैं उसके समर्थन के लिए श्लोक का उद्धरण करते हैं।

यहाँ यह परिकर श्लोक भी होता है—

ध्वनि का व्यंग्य एवं व्यञ्जक से सम्बन्ध होने के कारण वाच्य एवं वाचक के सौन्दर्य के साधनों में कैसे अन्तर्भाव हो पायेगा।

ध्वन्या०— ननु यत्र प्रतीयमानस्यार्थस्य वैशद्येनाप्रतीतिः स नाम माभूद्ध्वनेर्विषयः। यत्र तु प्रतीतिरस्ति, यथा समासोक्त्याक्षेपानुक्तनिमि-त्तविशेषोक्तिपर्यायोक्तापह्नुतिदीपकसङ्करालङ्कारादौ, तत्र ध्वनेरन्तर्भावो भविष्यतीत्यादि निराकर्तुमभिहितम्— 'उपसर्जनीकृतस्वार्थौ' इति। अर्थौ गुणीकृतात्मा गुणीभूताभिधेयः। शब्दो वा यत्रार्थान्तरमभिव्यनक्ति स ध्वनिरिति। तेषु कथं तस्यान्तर्भावः। व्यङ्ग्यप्राधान्ये हि ध्वनिः। न चैतत्समासोक्त्यादिष्वस्ति।

लीला— पुनस्तमेवार्थं द्रढयति ननु यत्रेत्यादिना। ननु इति पक्षोपस्थापने, यत्र यस्मिन्नलङ्कारे, प्रतीयमानस्य व्यङ्ग्यस्य, अर्थस्य वस्तुनः, वैशद्येन स्पष्टतया, अप्रतीतिरनवभासनं, स तादृशोऽलङ्कारो नाम, इति वाक्यालंकारे, ध्वनेःविषयः क्षेत्रं, मा भूत् नैव स्यात्, यत्र यस्मिन्नलङ्कारे, तु इति व्यवच्छेदे, प्रतीतिः-प्रतीयमानार्थावभासः, अस्ति स्पष्टमेवांनुभूयते यथेति निदर्शने समासोक्त्याक्षेपा-नुक्तनिमित्तविशेषोक्तिपर्यायोक्तापह्नुतिदीपकसङ्करालङ्कारादौ तत्तत्कथितालङ्का-रप्रभृतिषु, तत्र तादृशेऽलङ्कारे, तु, ध्वनेरन्तर्भावो विलीनता, भविष्यति सम्पत्स्यते, इत्यादि इत्येवमाद्यन्याशङ्कां निराकर्तुमपास्तुं, अभिहितं कथितं— 'उपसर्जनीकृ-तस्वार्थौ उपसर्जनीकृतौ गुणीभूतौ स्वमात्मा अर्थोऽभिधेयः, गुणीकृताभिधेयः, गौणभावेन स्थापितवाच्यः, शब्दः वा, यत्रेति काव्ये, अर्थान्तरं प्रतीयमानार्थ, अभिव्यनक्ति प्रकटयति सः, ध्वनिरिति। तेषु अनुज्झितस्वार्थेषु अगौणीकृतार्थेषु, अलङ्कारादिषु समासोक्त्यादिषु, कथं केन प्रकारेण, तस्य ध्वनेः, अन्तर्भावो विलीनता। हि यतः व्यङ्ग्यप्राधान्ये प्रतीयमानार्थोत्कृष्टत्वे ध्वनेर्भवति। एतद् ध्वनिप्राधान्यं, समासोक्त्यादिषु तत्तदलङ्कारेषु, न च अस्ति इति।

व्यङ्ग्यार्थदृष्ट्या द्विविधा अलङ्काराः प्रथमे तु ते यत्र व्यङ्ग्यार्थस्य स्पष्टमेव प्रतीतिर्भवति यथा समासोक्त्यादौ, अपरे तु ते ये व्यंग्यार्थस्य केवलमुपस्करा एव। उपमाद्यलङ्कारेषु तेषां व्यंग्यार्थस्य स्पष्टप्रतीत्यभावात् कामं तेषु ध्वनेरन्तर्भावो

नैव भवेत्, किन्तु येषु स्फुटतया व्यंग्यार्थप्रतीतिर्भवति यथा समासोक्त्यादिषु तत्र तु ध्वनेरन्तरर्भावो भवत्येवेत्याशङ्कानिरासाय कारिकायाम् 'उपसर्जनीकृतस्वार्थौ' इति कथितम्। गुणीभूत आत्मा अर्थश्च यस्यतादृशशब्दोऽर्थे वाध्वनेर्विषयो भवितुमर्हति। समासोक्त्यादिषु तु न तथा तत्र वाच्यार्थस्यैव प्राधान्यात् गुणीकृतात्मा अर्थगुणीकृताभिधेयः शब्द एव ध्वनेर्विषयः, किञ्च व्यंग्यप्राधान्य एव ध्वनिर्भवति न तु वाच्यार्थप्राधान्ये। व्यङ्ग्यार्थप्राधन्ये ध्वनिः। गुणीभूतव्यङ्ग्यत्वेन वाच्यार्थप्राधान्ये मध्यमम् व्यङ्ग्याभावे त्ववरं काव्यमिति व्यवस्था काव्यविदाम्।

मान लिया जाय कि जो अलङ्कार केवल व्यङ्ग्यार्थ की उपस्कृति मात्र करते हैं किन्तु उसकी स्पष्ट प्रतीति नहीं करा पाते उन उपमा आदि अलङ्कारों में ध्वनि का अन्तर्भाव नहीं होता है, किन्तु जिन अलङ्कारों में, जैसे कि समासोक्ति आदि में, जहाँ कि व्यङ्ग्यार्थ की स्पष्ट एवं सुन्दर प्रतीति होती है वहाँ ध्वनि का अन्तर्भाव क्यों नहीं हो पाता आदि आशङ्का के निवारण के लिए ही कारिका में कह लिया है—'उपसर्जनीकृतस्वार्थौ' अर्थात् गौण बनाये हैं अपनी आत्मा एवं अर्थ जिन्होंने ऐसे अर्थ एवं शब्द। आत्मा को जिसने गौण बनाया है ऐसा शब्द जहाँ दूसरे अर्थात् प्राधान्य से से प्रतीयमान अर्थ का बोध कराते हैं वही ध्वनि है। उन समासोक्ति आदि अलङ्कारों में ध्वनि का कैसे अन्तर्भाव हो पायेगा ? व्यङ्ग्य अर्थ की प्रधानता हो पाने पर ही ध्वनि होता है, समासोक्ति आदि अलङ्कारों में ऐसा तो है नहीं। वहाँ तो वाच्यार्थ ही प्रधान रहता है। अतः उनमें ध्वनि का अन्तर्भाव हो ही नहीं सकता।

ध्वन्या०—

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तथा पुरोऽपि रागाद् गलितं न लक्षितम्।।

इत्यादौ व्यङ्ग्येनानुगतं वाच्यमेव प्राधान्येन प्रतीयते समारोपितः। नायिकानायकव्यवहारायोर्निशाशशिनोरेव वाक्यार्थत्वात्।

लीला— समासोक्त्यलङ्कारे तत्समानविशेषणद्वाराऽन्यार्थोपस्थापनेन प्रतीयमानार्थविषयत्वात्तत्र ध्वनेरन्तर्भावो भवितुमर्हति इति यदुक्तं तन्निरासाय समासोक्तेरुदाहरणमुपस्थायति उपोढरागेणेति। उपोढरागेण शशिना विलोलतारकम् निशामुखम् तथा गृहीतम् यथा तया रागात् समस्तम् तिमिरांशुकम् पुरः गलितम् अपि न लक्षितम्, इति पदव्यवस्था।

उपोढरागेण प्रवृद्धानुरागेण, शशिना चन्द्रमसा, विलोलतारकं चञ्चलनक्षत्रं, निशामुखं रात्रिवदनं तथा तेन प्रकारेण अनुरागातिशयो सन्द्योतित यथास्यात्तथा, गृहीतमवधारितं, यथा यस्मात् तया निशया, रागात्स्नेहाधिक्यरूपलौहित्यात्, समस्तं निःशेषं, तिमिरांशुकं तमोरुपवस्त्रं, पुनः अग्रे एव, गलितं स्रस्तं, अपि,

न, लक्षितम् दृष्टं ज्ञातमिति। वस्तुतस्तु पद्यमिदं सायंसन्ध्यावर्णनपरमपि समानविशेषणबलान्नायकनायिकाविलासोपस्थापनम्। तत्पक्षे विशेषणानां प्रस्तुतितर्तया— उपोढरागेण संवृत स्नेहेन, विलोलतारकं चञ्चलकनीनिकं, निशामुखं 'निशा' इति स्त्रीवाचकशब्दसाम्यान्नायिका तस्या मुखमाननं, तिमिरांशुकं नीलवर्णशाटिकामिति अन्यत्समानम्। अत्र रात्रिचन्द्रमसोः कार्यलिङ्ग-विशेषणसाम्यादप्रस्तुतस्य नायिकानायकप्रेमाभ्यासस्य निशाशशिव्यवहारे प्रस्तुते समारोपात्समासोक्तिरलङ्कारः। तल्लक्षणञ्च यथा—

'यत्रोक्तौ गम्यतेऽन्योऽर्थस्तत्समानैर्विशेषणैः।'

'प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः।

अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता।।' इति।

इदमवधेयं यत्समासोक्तिर्नाम संक्षिप्तकथनम्। सादृश्यमूलकेषु अलङ्कारेषु प्रस्तुताप्रस्तुतयोरुभयोरेव कथनं भवति, किन्तु यदैकेनैवोभौ गृह्येते तदा संक्षिप्तकथनात्समासोक्तिर्भवति। अस्य लक्षणस्वरूप-हेतु-नाम-निर्वचनाख्या-श्चत्वारः पादाः। तत्र लक्षणस्वरूपं प्रस्तुतेऽप्रस्तुतारोपः, हेतुश्च कार्यलिङ्गवि-शेषणानि। तादृशश्चारोपः कार्यसाम्याल्लिङ्गसाम्याद्विशेषसाम्याच्च सम्भवति। नाम चाऽस्य समासोक्तिः। निर्वचनञ्चास्य समासेन संक्षेपेण एकेनोभयोः प्रस्तुताप्रस्तुतयोरेव उक्तिः कथनमिति। अत्र च प्रस्तुतयोर्निशाचन्द्रयोरप्रस्तुत-योर्नायिकानायकयोरारोपस्तत्र च कार्यलिङ्गविशेषणसाम्यमुभयोरेव। कार्यसाम्यं यथा मुखस्य प्रकाशनविकासनयोः तिमिरांशुकस्रंसनयोः लिङ्गसाम्यञ्च शशिना यह नायकस्य निशया सह नायिकायाः। विशेषणसाम्यश्च 'उपोढरागेण', विलोलतारकम्' इति।

इत्यादौ व्यङ्ग्येन व्यङ्ग्यार्थेन, अनुगतमनुसृतं, वाच्यमभिधेयार्थमेव, प्राधान्येव प्रधानतया, प्रतीयतेऽवभासते, समारोपितनायिकानायकव्यवहारयो आरोपितप्रेमिकाप्रेमिप्रेमाभ्यासयोः, निशाशशिनो रात्रिचन्द्रमसो एव, वाक्या-र्थत्वात् प्रधानतया वाक्यार्थबोधविषयत्वात्। उदाहरणेऽस्मिन् प्रस्तुतेन निशाशशि-नोर्व्यवहार वर्णनेन विशेषण बलाद् प्रस्तुत नायिका नायक प्रेमाभ्यासवर्णनासु व्यङ्ग्यार्थस्य सत्वेऽपि वाच्यस्यैवोपस्कारकत्वेन गुणीभावाद् व्यङ्ग्यस्य नैव प्रधान्यं सिध्यति। तेन नायं ध्वनेर्विषयः। यद्यपि निशाशशि शब्दाभ्यां संश्लिष्ट विशेषण साम्येन नायिका नायकयोः शृंगाररसस्य व्यङ्ग्यस्य प्रतीति रास्ति, तथापिव्यवहारसमारोपादारोपितनायिकानायकव्यवहारौ निशाशशिनावेव वाच्यौ प्रधानतया वाक्यर्थबोधजनकाविति व्यङ्ग्यस्य गुणीभावान्नैव ध्वनेर्विषयः इति। उक्तमेव—

अलङ्कारान्तरस्याऽपि प्रतीतौ यत्र भासते।

तत्परत्वं न काव्यस्य नाऽसौ मार्गो ध्वनेर्मतः।। इति।

समासोक्ति आदि अलङ्कार में संक्षिप्तता के लिए प्रस्तुत में अप्रस्तुत का आरोप किये जाने से उसमें प्रतीयमान अर्थरूप ध्वनि का अन्तर्भाव मानने वालों के मत को खण्डन करने हेतु उदाहरण उपस्थापित करते हैं–

(सन्ध्या की अरुणिमा से) लाली चढ़े हुए चन्द्रमा ने (उदयकाल के वेग से) चञ्चल हुए हैं तारे जिसमें ऐसी निशा के वदन अर्थात् प्रदोष को ऐसे ग्रहण किया जिसमें कि उस निशा को अपने समाने ही सारे-के-सारे अन्धकार रूप वस्त्र के गिर जाने पर भी राग के कारण कुछ पता नहीं चला। इसमें 'लाली चढ़े हुए', 'चञ्चल तारकों वाले' आदि विशेषण एवं पुंल्लिङ्गवाची 'शशी' शब्द एवं स्त्रीवाची 'निशा' शब्द एवं अन्य समान धर्म के भी उपस्थापन से 'चन्द्र' एवं 'निशा' का नायक एवं नायिका में आरोपण हो जाता है, जैसे कि अनुराग बढ़े हुए प्रेमी में प्रेमिका का चञ्चल तारक अर्थात् कनीनिका वाले मुखमण्डल को ऐसे ग्रहण किया कि प्रेमिका को अपने सामने ही अपने सारे-के-सारे वस्त्र गिर जाने पर भी अनुराग नायक का एवं प्रस्तुत निशा से अप्रस्तुत नायिका का एवं प्रकाशित करने के कार्य से चुम्बन का और प्रस्तुत अन्धकार के दूर होने के कार्य से अप्रस्तुत नायिका के विश्वस्त होने का जो आरोप है वह प्रतीयमान् अर्थात् व्यंग्य अर्थ अवश्य है लेकिन उसकी प्रधानता नहीं है। क्योंकि इसका वर्ण्य विषय है सन्ध्या और शशी एवं निशा शृङ्गार रस के विभाव हैं जिन पर नायक एवं नायिका का आरोप है। अत: नायक-नायिका-परक व्यङ्ग्यार्थ चन्द्र-निशा-परक वाच्यार्थ का परिस्कार करते हुए अलङ्कार का रूप धारण करता है। उसमें विभाव रूप से स्थित वाच्यार्थ से ही रस प्रवाहित हो जाता है। अत: वृत्तिकार कहते हैं–

इत्यादि वाक्यों में व्यङ्ग्यार्थ से अनुगत होकर प्रधान रूप में वाच्यार्थ की ही प्रतीति होती है क्योंकि यहाँ वाच्यार्थ शशी तथा निशा परक ही है जिन पर नायक एवं नायिका का आरोप किया गया है।

इस तरह से व्यङ्ग्य होते हुए वाच्यार्थ का उपस्कारक होने के कारण व्यंग्यार्थ गौण बन जाता है और वाच्यार्थ प्रधान। अत: यह गुणीभूत व्यङ्ग्य है कि ध्वनि–

ध्वन्या०– आक्षेपेऽपि व्यङ्ग्यविशेषाधिक्षेपिणोऽपि वाच्यस्यैव चारुत्वं प्राधान्येन वाक्यार्थ आक्षेपोक्तिसामर्थ्यादेव जायते। तथा हि– तत्र शब्दोपारूढो विशेषाभिधानेच्छया प्रतिषेधरूपो य आक्षेप: स एव व्यङ्ग्यविशेषमाक्षिपन् मुख्यं काव्यशरीरम्। चारुत्वोत्कर्षनिबन्धना हि वाच्यव्यङ्ग्ययो: प्राधान्यविवक्षा।

यथा–

अनुरागवती सन्ध्या दिवसस्तत्पुरस्सर:।
अहो दैवगति: कीदृक्तथापि न समागम:।।

अत्र सत्यामपि व्यङ्ग्यप्रतीतौ वाच्यस्यैव चारुत्वमुत्कर्षवदिति तस्यैवप्राधान्यविवक्षा।

लीला– एवं समासोक्तौ वाच्यार्थस्य प्राधान्याद्व्यङ्ग्यस्य गुणीभूतत्वेन ध्वनेरन्तर्भावं युक्त्या प्रतिषिध्य सम्प्रति आक्षेपेऽपि ध्वनेरन्तर्भावनमसम्भवमिति प्रतिपादनाय विवृणोति आक्षेपे इत्यादिना। आक्षेपे= वक्तुं प्रारब्धस्याऽपि विशेषद्योतनार्थं यो निषेधः स आक्षेपः। स च वक्ष्यमाणः उक्त विषय भेदाद् द्विविधः। यत्र वक्तुमुपक्रान्तः पूर्वार्थो निषिध्यते स वक्ष्यमाणविषयः। यत्र तूक्त्वा तद्वचनवैयर्थ्यमुच्यते स उक्तविषय इति। विधिना निषेधश्च आक्षेपः। तस्मिन्, अपि= च, व्यङ्ग्यविशेषाधिक्षेपिणः= व्यङ्ग्यविशेषं विशिष्टव्यङ्ग्यार्थमधिक्षिपति प्रत्याययति तच्छील इति तस्य, अपि इति व्यवच्छेदे, वाच्यस्याभिधेयस्य, एवेति व्यवच्छेदे तु व्यङ्ग्यस्येति, प्राधान्येन= मुख्यतयां, चारुत्वं= सौन्दर्न्य भवतीति शेषः यतः वाक्यार्थः= वाच्याभिप्रायः, आक्षेपोभ्तिसामर्थ्यान्= आक्षेप वचनशक्त्या एवेति नान्येनेत्याशयः, जायते सम्पद्यते। तथा हि= यतः, तत्र= आक्षेपे, विशेपाभिधानेच्छया= विशिष्टोक्तिकथनाभिप्रायेण, शब्दोपारूढः= शब्दनिष्पन्नः, प्रतिपेधरूपः= निषेधलक्षणः, यः, आक्षेपः= कथषाक्षेपोक्तिः, सः= तादृश आक्षेप एव न तु तद्भिन्नो वाच्यार्थादिः, व्यङ्ग्यविशेषं= विशिष्ट-व्यङ्ग्यं, आक्षिपत्= समभ्याहरन्, मुख्यं= प्रधानं, काव्यशरीरं= वाक्यार्थं, भवतीति शेषः। यतः, चारुत्वोत्कर्षनिबन्धना= चारुत्वं (सौन्दर्यं) तस्य उत्कर्षः (परमोच्यता) तस्मिन् निबन्धनं (आश्रयः) यस्याः सा, सौन्दर्यातिशयाश्रिता, हि= इत्यवधारणे नान्येति, वाच्यव्यङ्ग्ययोः= मुख्यप्रतीयमानार्थयोः, प्राधान्य-विवक्षा= प्रधानता सिद्धिः= यस्य सौन्दर्योत्कर्षेस्तस्यैव प्राधान्यमितिः यथा अनुरागवतीत्यादौ। सन्ध्या अनुरागवती दिवसः तत्पुरस्सरः अहो कीदृक् दवगतिः, तथापि समागम न इति पद व्यवस्था सन्ध्या= सायं, अनुरागवती= नितान्तानु-रक्तत्वाद्रामातिशययुक्ता, दिवस= घस्रञ्च, तत्पुरस्सरः= तस्याः (संन्ध्याया) पुरस्सरः निकट पुरोवर्ती) साभिलाषात्वात्, अहो= इत्याश्चर्ये खेदे च, दैवगतिः= विधिलीला, कीदृक्= विचित्रैव, तथापि= उभयोरेव, साभिलाषत्वेऽपि समागमः= संयोगः, न= नैव भवतीति प्रकृतार्थः।

अत्रापि प्रस्तुते सन्ध्यादिवसप्रक्रमेऽप्रस्तुतस्य कस्याश्चिन्नापिकायाः कस्य चिन्नायकेनसहानुरागस्याक्षेपो व्यङ्ग्यरूपः, किन्तु सत्यां= विद्यमानायां, अपि, व्यङ्ग्यप्रतीतौ प्रतीयमानार्थविभासने वाच्यस्य= वाच्यरूप सन्ध्यापिवर्णन परस्य, एव= इत्यवधारणे, न तु व्यङ्ग्यस्येति, चारुत्वं= सौन्दर्यं, उत्कर्षवत्= अतिशयता युक्तं इतिहेतोः, तस्यैव वाच्यार्थस्य प्राधान्यविवक्षा= अतिशयता कल्प इति। अतिशयताकल्प इति। अत्राभिधायाः प्रकृतार्थे नियन्त्रणाद् द्वितीयार्थस्य व्यङ्ग्यतया न श्लेषसम्भवः किन्तु श्लिष्टविशेषणमर्यादया सन्ध्यादिवसयोर्नाय-कव्यवहारसमारोपात् समासोक्तिरिति समालोचकः। भामहमतेऽत्र समासोक्ति-

र्वामनमते त्वाक्षेप: इत्याशयमादाय ग्रन्थकृतोभयोरेकमेवोदाहरणं प्रस्तुतमित्यभिनवगुप्तपादा:। नास्माकं किमपि समासोक्त्यावाऽऽक्षेपेण वा सर्वथाऽलङ्कारेषु व्यङ्ग्यं वाच्ये गुणीभवतीति सत्यमेव। वस्तुतस्तु वाऽऽक्षेपे इष्टार्थस्तस्य निषेधस्तस्याऽप्यसत्यता अर्थगतविशेषप्रतिपादनञ्चेति चत्वारि तत्त्वानि भवन्ति। तेनाक्षेपे न तु विधेर्निषेधौ नैव च निषिद्धस्य विधिरपि तु असत्यनिषेधेन विधेराक्षेपादाक्षेप:। तथैव विधिना निषेधश्च। यथा—

गच्छ गच्छसि चेत्कान्त पन्थान: सन्तु ते शिवा:।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्।।

अत्र त्वं गच्छसि चेदहं सद्य एव प्राणान्मोक्ष्यामीत्याशययुक्तविधिना गमननिषेध:। वामनाचार्यस्तु उपमानस्याक्षेपमेवाक्षेपं मन्यते। काव्यप्रकाशकारस्तु तं प्रतीपमिति कथयति। प्रस्तुतोदाहरणे तु सन्ध्यानिमित्तं नायिकाया दिवसनिमित्तं नायकस्याक्षेप: क्रियते। नायिका प्रेमार्द्रा विद्यते नायकश्च तदग्रे एवं तथैवानुरक्त:। एवमुभयो: समागमाय साभिलाषयो: सतोरपि गुरुपारतन्त्र्यादिकारणेन नैव समागम: सम्भवतीति नियतिलीला वामैव। सत्यामपि व्यङ्ग्यार्थप्रतीतौ सौन्दर्यन्तु वाच्ये एव पर्यवस्यतीति नैषोऽपि ध्वनेर्विषय इति।

इस तरह समासोक्ति में व्यङ्ग्यार्थ के वाच्यार्थ के ही उपस्कारक होने के कारण गौण बन जाने से उसमें ध्वनि के समाविष्ट हो न पाने की बात सिद्ध करने के बाद अब आक्षेप में भी ध्वनि के समावेश करने के मत को खण्डन करने के लिए उपस्थापित करते हैं।

आक्षेप में व्यङ्ग्यविशेष का अधिक्षेप करने वाला होते हुए भी मुख्य रूप से वाच्यार्थ में चारुत्व होता है, क्योंकि आक्षेप उक्ति के सामर्थ्य से ही वाक्य का अर्थ बन पाता है बात यह है कि वहाँ विशेष बात कहने की इच्छा से शब्द से निष्पन्न निषेध रूप जो आक्षेप है वह ही व्यङ्ग्य-विशेष का आक्षेप करता हुआ मुख्य काव्यशरीर अर्थात् वाच्यार्थ बन पाता है। वाच्य एवं व्यंग्य अर्थ में जो प्रधानता की विवक्षा है वह चारुत्व के उत्कर्ष के कारण होती है। यदि चारुत्व व्यंग्यार्थ में ज्यादा है तो प्रधानता व्यंग्यार्थ की होगी और वहाँ ध्वनि मानना होगा और उसके विपरीत यदि व्यंग्य अर्थ की तुलना में वाच्यार्थ में ज्यादा सौन्दर्य हो तो वहाँ व्यंग्य के गौण होने से गुणीभूतव्यंग्य मानना पड़ेगा। जैसे—

"सन्ध्या अनुराग के आधिक्य से लाल बनी हुई है और दिन उसके ठीक आगे चलने वाला है फिर भी दोनों का सामगम नहीं हो पाता। दैव की गति बड़ी विचित्र है।"

यहाँ व्यंग्य की प्रतीति होने पर भी वाच्य का ही चारुत्व उत्कर्ष से युक्त हैं अत: वाच्यार्थ की ही प्रधानता बनेगी न कि व्यंग्यार्थ की।

वास्तव में यह उदाहरण है समासोक्ति का और वामन के मत से ही आक्षेप अलङ्कार बन पाता है। इसका उपस्थापन अलङ्कार में व्यंग्यार्थ की अपेक्षा वाच्यार्थ की ही प्रधानता रहने की बात दिखाने के लिए है।

आक्षेप में चार तत्त्व होते हैं— अभीष्ट अर्थ, उसका निषेध, निषेध की असत्यता और विशेष अर्थ का प्रतिपादन। इसमें न निषेध की विधि होती है, न ही विधि का निषेध। अपितु असत्य निषेध से विधि का आक्षेप किये जाने से आक्षेप है। जैसे—

जाना हो तो जाओ, तुम्हारा मार्ग मङ्गलमय हो। मेरा भी जन्म वहीं हो जहाँ तुम जाते हो।

यहाँ 'तुम्हारे जाने के बाद मैं जीवित नहीं रहूँगी' इस आशय की विधि द्वारा गमन के निषेध का आक्षेप किया जाता है। फिर भी यह आक्षेप वाच्यार्थ का ही पोषक होता है।

ध्वन्या०— यथा च दीपकापह्नुत्यादौ व्यङ्ग्यत्वेनोपमायाः प्रतीतावपि प्राधान्येनाविवक्षितत्वान्न तथा व्यपदेशस्तद्वदत्रापि द्रष्टव्यम्।

लीला— प्रधानत्वेन वा गौणत्वेनैव स्यादलङ्कारेषु व्यञ्जनाया व्यापारस्तु सम्मत एव। गौणेऽपि व्यापारे तस्या नितान्तमपलापस्तु नैव भवतीति तत्र ध्वनेरन्तर्भावे का हानिरित्यपेक्षायां तन्निरासाय वृत्तिकृत् प्रयतते यथा चेत्यादिना। यथा च= यद्वत्, दीपकापह्नुत्यादौ= दीपक-अपह्नुतिप्रभृत्यलङ्कारेषु व्यङ्ग्यत्वेन= प्रतीयमानत्वेन, उपमायाः= सादृश्यमुपमाभेदे इत्थं लक्षणस्यार्थालंङ्कारस्य, प्रतीतौ= अवभासमाने, अपि, प्राधान्येन= प्रधानतया, अविवक्षितत्वात्= अनभी-प्सितत्वात्, न तथा= तादृशत्वेन, व्यपदेशः= संज्ञानं, अत्रापि= अस्मिन्प्रकरणेऽपि, तद्वत्= तथैव, द्रष्टव्यं= चिन्तितव्यमिति। यथा च दीपकापह्नुतिप्रभृत्यलङ्कारेषु व्यङ्ग्यत्वेनोपमायाः प्रतीतिर्भवति किन्तु तस्या अप्राधान्यत्वान्न तेषामुपमेति नाम तथैव व्यञ्जनामूलकालङ्कारेषु व्यङ्ग्यस्य सत्त्वेऽपि तस्याप्राधान्यान्न तस्य ध्वनिरिति संज्ञा किञ्च प्राधान्येन व्यपदेशा भवन्ति। अत्रोपमेत्युपमानोपमेयभावः। दीपके तु उपमानोपमेयभावव्यङ्ग्यः प्रसिद्धः। दीपकं तु प्रकृताऽप्रकृतयोर्धर्म-स्यैकत्रोपादानं वा प्रस्तुतयोरके धर्माभि सम्बन्धः। प्रकृताप्रकृतानामेकान्वयिता दीपकम्। यथा—

"मणिः शाणोल्लीढः समरविजयी हेतिदलितः
कलाशेषश्चन्द्रः सुरतमृदिता बालललना।
मदक्षीणो नागः शरदि सरितः श्यामपुलिना-
स्तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः॥" इति।

अत्र 'अर्थिषु गलितविभवा जनाः' इति प्रस्तुतम् 'मणिः शालोल्लीढः' इत्यादीनि अप्रस्तुतानि। तेषामुपमानोपमेयभावो व्यज्यते च। नाऽसावुपमालङ्कारः सादृश्यनिमित्तकचमत्कारप्रतीतेरभावात् किन्तु अनेकेषामप्रस्तुतानां सहैव दीपनाद्धि चारुतायाः प्रतीतिः। अतो दीपकव्यपदेशनाऽयमभिहितः। एवमेवापह्नु-तावपि। अपह्नुतिश्च वर्ण्यत्यवेनाभिमतस्य व्यङ्ग्योपमा। प्रकृतिं निषिध्य

भिन्नात्मतया कथनभेदापह्नुतिः किञ्चदपह्नुत्य कस्यचिद् दर्शनं वा। यथा—

''नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः।।''

अत्रापि उपमा व्यक्ता किन्तु सौन्दर्यातिरेकस्तु अपह्नुतावेव। तेनास्य तन्नाम्नैव व्यपदेश इति।

व्यङ्ग्य चाहे प्रधान होकर रहे चाहे गौण, उसमें व्यञ्जना का व्यापार तो होता ही है तो उस तरह के अलङ्कारों में ध्वनि संज्ञा क्यों न दी जाय ? आदि आशङ्का के निवारण हेतु कहते हैं—

जैसे कि दीपक, अपहनुति आदि में व्यंग्य के रूप में उपमानोपमेयभाव अर्थात् उपमा की प्रतीति होती है फिर भी प्रधान के रूप में अविवक्षित होने के कारण उनको उपमा कहा नहीं जाता उसी तरह यहाँ भी जान लेना।

दीपक है प्रस्तुत एवं अप्रस्तुत का एक साथ उपमानोपमेयभाव से चकासना, ओर कुछ को छिपाकर कुछ को कह देना अपहनुति। दोनों में उपमानोपमेय भाव व्यंग्य होता है किन्तु सौन्दर्य उपमा में न रह कर तत्-तत् में रहता है। अतः उनकी वही संज्ञा मानी जाती है। जैसे दीपक का उदाहरण—

शान पर धिसी मणि, अस्त्र द्वारा घायल विजेता, कला मात्र अवशिष्ट चाँद, सुरत में मसली गई बाला क्षीणमद हाथी, शरद् के समय तट से दूर हटी नदियाँ और गरजी को धन देने से बने गरीब, ये छोटेपन से ही शोभा पाते हैं।

यहाँ पर प्रस्तुत गरजी हो धन देने से बने गरीब है, और अप्रस्तुत शान में घिसी हुई मणि आदि। एक साथ अनेक अप्रस्तुतों के गूँथने से दीपन का चमत्कार अधिक है और उपमानोपमेय भाव व्यङ्ग्य का कम। अतः दीपक कहा जाता है न कि उपमा। इसी तरह—

''यह मद से मत्त भँवरों की पाँत बराबर आवाज नहीं करती है, यह तो कामदेव के खीचे गये धनुष का टङ्कार है।''

इसमें प्रस्तुत भ्रमरपंक्ति का निषेध कर अप्रस्तुत कामदेव के धनु के टङ्कार के उपस्थापन होने से अपह्नुति है न कि उपमानोपमेयभाव होने से उपमा क्योंकि सौन्दर्य अपह्नुति में है उपमा में नहीं।

ध्वन्या०— अनुक्तनिमित्तायामपि विशेषोक्तौ—

आहूतोऽपि सहायैरोमित्युक्त्वा विमुक्तनिद्रोऽपि।
गन्तुमना अपि पथिकः सङ्कोचं नैव शिथिलयति।।

इत्यादौ व्यङ्ग्यस्य प्रकरणसामर्थ्यात् प्रतीतिमात्रम् न तु तत्प्रतीति-निमित्ता काचिच्चारुत्वनिष्पत्तिरिति न प्राधान्यम्।

लीला— एवञ्च ध्वनिविरोधसम्बद्धं प्रकारद्वयमवधीर्य तृतीयं प्रकारमाशङ्कते अनुक्तनिमित्तायामित्यादिना। अनुक्तनिमित्तायां= अनुपस्थापितकारणायां तदाख्य-

भेदवत्यां, विशेषोक्तौ= हेतौ सत्यपि फलाभावव्रत्यलङ्कारविशेषे यथा— आहूत इत्यादि। सहायैः आहूतः ओम् इति उक्त्वा अपि विमुक्तनिद्रः अपि गन्तुमनाः अपि पथिकः सङ्कोचम् नैव शिथिलयति इति।

सहायैः= सहयात्रिभिः आहूतः= प्रबोधनाय दत्तसङ्केतः, अपि, ओम्= बाढम् इति= इत्थं, उक्त्वा= कथयित्वा, विमुक्तनिद्रः= विगतस्वापः, अपि, गन्तुमनाः= गमनोत्सुकः, अपि, पथिकः= पान्थः, सङ्कोचं= नेत्राकुञ्चनं, नैव, शिथिलयति= त्यजति इति। इत्यादौ= इत्युक्तपद्ये, व्यङ्ग्यस्य= स्वप्ने स्वीयप्रिया-सङ्गमरूपस्य प्रतीयमानार्थस्य, प्रकरणसामर्थ्यात्= प्रसङ्गवशात्, प्रतीतिमात्रं= अवभासनमेव। तत्प्रतीतिनिमत्ता= तस्य (व्यङ्ग्यार्थस्य) प्रतीतिः (अवभासनं) तस्मिन् निमित्ता (हेतुभूता), काचित्= कीदृश्यपि, चारुत्वनिष्पत्तिः= चारुत्वस्य (विलक्षणतायाः) निष्पत्तिः (प्रतिपादनम्), न नैव, इति= हेतोः, न, प्रधान्यं= मुख्यता इति।

विशेषोक्तिमधिकृत्य काव्याचार्या विवदन्ते। तत्र 'एकदेशस्य विगते या गुणान्तरसंस्तुतिः। विशेषप्रथनायाऽसौ विशेषोक्तिरिति स्मृता।।'' इति भामहो निर्दिशति। दण्डी तु— 'गुणजातिक्रियादीनां यत्तु वैकल्यदर्शनम्। विशेषदर्शनायैव सा विशेषोक्तिरिष्यते।।' इति। ''हेतौ सत्यपि कार्यानुत्पत्तिः स्याद्विशेषोक्तिरिति'' विश्वेश्वरः। सा त्रेधा— अनुक्तनिमित्ता, उक्तनिमित्ता, अचिन्त्यनिमित्ता च। तत्र अनुक्तनिमित्तायां निमित्तकल्पनारूपो व्यङ्ग्यः प्रतीयते, किन्तु तस्य वाच्यार्थसिद्धये स्वसमर्पणाद्गौणत्वमेव। अतस्तत्र न ध्वनिः। उक्तनिमित्ता, अचिन्त्यानिमित्ता च। तत्र अनुक्तनिमित्तायां निमित्तकल्पनारूपो व्यङ्ग्यः प्रतीयते, किन्तु तस्य वाच्यार्थसिद्धये स्वसमर्पणाद्गौणत्वमेव। अतस्तत्र न ध्वनिः। उक्तनिमित्तायां निमित्तस्य वाच्यत्वादचिन्त्यनिमित्तायाञ्च व्यङ्ग्यार्थप्रतीतेरभावान्न तत्र ध्वनिसम्भवः। उदाहृतपद्ये ओमित्युक्त्वाऽपि विमुक्तनिद्रोऽपि गमनायोत्सु-कोऽपि नेत्रसङ्कोचनं नैव शिथिलयति इति तत्र तस्य निमित्तमूह्यमस्ति। तेन तत्र व्यङ्ग्यार्थस्य विषयस्तु समापतति किन्तु तस्यापि वाच्यार्थस्यैव समर्थकत्वात् प्रकरणादेव तस्य सिद्धेश्च तस्य गुणीभावत्वेन न किञ्चिदपि सचारुत्वमावहतीति नैष स ध्वनेर्विषय इति।

इस तरह आक्षेप का भी ध्वनि का विषय न होने की बात सिद्ध करने के बाद अब विशेषोक्ति का वह भेद, जिसमें कि निमित्त कहा गया नहीं होता है और उसकी कल्पना करनी होती है, भी ध्वनि का विषय न बन पाने के तथ्य को उजागर करने के लिए तीसरे प्रमेय का उपस्थापन करते हैं।

अनुक्तनिमित्ता विशेषोक्ति में—

'साथियों से बराबर बुलाया गया भी, 'अच्छा' कहकर नींद से जगा हुआ

भी, जाने के लिए उत्सुक होता हुआ भी बटोही आँखों का संकोचन शिथिल नहीं करता अर्थात् आँखे नहीं खोलता।

इत्यादि में व्यङ्ग्यरूप निमित्त की प्रकरण के सामर्थ्य से प्रतीति मात्र होती है। उस प्रतीत निमित्त से किसी भी प्रकार के चारुत्व की उत्पत्ति नहीं होती अतः उसकी प्रधानता नहीं रहती।

कारण के रहते हुये भी कार्य का न होना विशेषोक्ति है। यह तीन प्रकार का माना गया है– उक्तनिमित्त, जिसमें निमित्त स्पष्ट रूप से कहा गया है, अचिन्त्यनिमित्त, जिसमें निमित्त का विचार ही नहीं किया जा सकता और अनुक्तनिमित्त, जिसमें निमित्त की कल्पना तो की जा सकती है, लेकिन वाच्य रूप में कहा नहीं गया है। इनमें से तीसरे भेद में व्यङ्ग्य की स्थिति हो तो सकती है, लेकिन उस व्यङ्ग्य की प्रतीति से किसी भी प्रकार के चारुत्व की निष्पत्ति नहीं होती। केवल उसमें वाच्यार्थ का ही उपकार होता है। अतः व्यंग्य के गौण हो जाने के कारण वहाँ भी ध्वनि का विषय बन नहीं सकता।

उक्त उदाहरण में जगाये जाने पर भी, 'अच्छा' कहकर नींद से जग जाने पर भी, उठने के लिए इच्छुक होने पर भी आँख नहीं खोलता, तो उसमें 'स्वप्न में हुये प्रियामिलन से वियुक्त होने के डर से' यह जो कारण है, व्यंग्य का विषय है, क्योंकि वाच्य के रूप में कहा नहीं गया है। लेकिन उससे कोई चमत्कार उत्पन्न नहीं होता, केवल वाच्यार्थ रूप 'आँखें न खोलने' का ही उपकार होता है, अतः व्यंग्य के गौण बन जाने से यह ध्वनि का विषय नहीं बन पाता है।

ध्वन्या०– पर्यायोक्तेऽपि यदि प्राधान्येन व्यङ्ग्यत्वम्, तद्भवतु नाम तस्य ध्वनावन्तर्भावः, न तु ध्वनेस्तत्रान्तर्भावः। तस्य महाविषयत्वेनाङ्गित्वेन च प्रतिपादयिष्यमाणत्वात्। न पुनः पर्यायोक्ते भामहोदाहृतसदृशे व्यङ्ग्यस्यैव प्राधान्यम्। वाच्यस्य तत्रोपसर्जनभावेनाविवक्षितत्वात्।

लीला– एवमलङ्कारेषु ध्वनेरन्तर्भावनिरासप्रसङ्गेऽनुक्तनिमित्तविशेषोक्तेः ध्वनिविषयतां परिहार्य सम्प्रति पर्यायोक्ते ध्वनिनिरसनरूपं चतुर्थं प्रमेयमुपस्थापयति पर्यायोक्तेऽपीत्यादिना। पर्यायोक्ते= 'वाच्यस्यैव अन्यभङ्ग्या उक्तिः' इति लक्षणेऽर्थालङ्कारे, यदि प्राधान्येन= मुख्यतया, व्यङ्ग्यत्वं= व्यङ्ग्यभावः, भवति तत्तस्माद्धेतोः, तस्य पर्यायोक्तस्य, ध्वनौ= ध्वनितत्त्वे, अन्तर्भावः= विलीनता, भवतु स्यादेव। तत्र न कोऽपि विप्रतिपत्तिः। ध्वनेः= ध्वनितत्त्वस्य, तत्र= व्यङ्ग्यप्राधान्यपर्यायोक्ते, न= नैव, अन्तर्भावः= निमग्नता। तस्य= ध्वनेः, महाविषयत्वेन= पर्यायोक्तातिरिक्तविस्तृतक्षेत्रत्वेन, अङ्गित्वेन= मुख्यत्वेन यस्य सर्वेऽप्यलङ्कारा अङ्गत्वं यान्ति, च, प्रतिपादयिष्यमाणत्वात्= वर्णयिष्यमाणत्वात्। भामहोदाहृतसदृशे= भामहेन उदाहरणरूपेण यदुपस्थापितं पर्यायोक्तस्य तथाविधे, पर्यायोक्ते= तदाख्यालङ्कारे, व्यङ्ग्यस्य= प्रतीयमानस्य, प्रधान्यं= मुख्यभावः, न

नैव भवति। किञ्च तत्र= भामहोदाहृतपद्ये, वाच्यस्य= मुख्यार्थस्य, उपसर्जनभावेन= गौणरूपेण, अविवक्षिततत्वात्= अनास्थिततत्वात्।

पर्यायोक्ते व्यङ्ग्यत्वं प्राधान्येनैव भवति किञ्च तत्र वाच्य एवार्थो व्यङ्ग्यतयोच्यते। यथा—

''निवेद्यतां हन्त समापयन्तौ शिरीषकोषं मदिमाभिमानम्।
पादौ कियद्दूरमिमौ प्रयासे निधीत्सिते तुच्छदयं मनस्ते।।''

अत्र कियद्दूरं गन्तुमिच्छसीति वाच्यार्थः, स एव व्यङ्ग्यतया प्रतिपादितोऽस्ति। अतो वाच्यार्थभूतस्य व्यंग्यस्य प्राधान्यं त्वस्त्येव। तेनास्य ध्वनावन्तर्भावः कामं सम्भवतु। किन्तु तत्र ध्वनेरन्तर्भावस्तु न सम्भवति। प्रथमं तु यत्र वाच्यस्य व्यङ्ग्यस्य प्राधान्यं तत्रैव ध्वनिर्भवति। तेन वाच्याक्षिप्तव्यङ्ग्य एव ध्वनेर्विषयः। अतो ध्वनौ वाच्यव्यङ्ग्ययोः सुस्पष्टो भेदः। अत्र तु व्यङ्ग्य एव वाच्यार्थस्तेन न तयोर्भेदः। अपरञ्च ध्वनेर्विषयः पर्यायोक्तत्वातिरिक्तोऽप्यस्ति स तु महाविषयः। केवलं पर्यायोक्त एव न स पर्यवस्यति। तृतीयञ्च, ध्वनिरङ्गित्वेन स्थितो भवति स एवालङ्कार्यः किञ्चालङ्कारादयस्तु तस्याङ्गान्येव। अलङ्कारतया पर्यायोक्तस्तु अङ्गमेव भवितुमर्हति अङ्गेऽङ्गिनो नान्तर्भावसम्भवः। अपरञ्च न हि सर्वत्र पर्यायोक्ते व्यङ्ग्यप्राधान्यमपि। भामहेन पर्यायोक्तनिदर्शनाय यत्पद्यमुदाहृतं तत्र वाच्यस्य गौणभावेन विवक्षैव नास्ति यतो व्यङ्ग्यस्य प्राधान्यं सिध्येत्। तच्च यथा—

''शत्रुच्छेददृढेच्छस्य मुनेरुत्पथगामिनः।
रामस्यानेन धनुषा देशिता धर्मदेशना।।''

अत्र राममपि शासतो भीष्मस्य प्रभावाधिक्योपस्थापनं व्यङ्ग्यः, किन्तु स च गौणत्वेनावस्थितः, किञ्च 'देशिता धर्मदेशना' इत्यनेनैव काव्यार्थभूतोऽलङ्कृतो व्यङ्ग्यस्तु तत्सहाय एवेति। यत्राभिधया कथनीयमर्थं वैचित्र्यसिद्धये व्यञ्जनया कथ्यते तत्र पर्यायोक्तालङ्कारविषयः। यथाऽऽह दण्डी— ''अर्थमिष्टमनाख्याय साक्षात्तस्यैव सिद्धये। तत्प्रकारान्तराऽऽख्यानं पर्यायोक्तं तदिष्यते।।''' इति। वस्तुतो विचारणे पर्यायोक्त एवैतादृशोऽलङ्कारो यत्र ध्वनेरन्तर्भावस्य सर्वाधिकसम्भवः। अभीष्टं साक्षादनुपस्थाप्य प्रकारान्तरेण सौन्दर्याधानपूर्वकं कथनमेव व्यञ्जनाया व्यापारस्तत्रैव ध्वनिश्च। किन्तु सत्यपि ध्वनिनैकले पर्यायोक्ते चमत्कारस्तु वाच्यार्थे पर्यवस्यति न तु व्यङ्ग्यार्थे। ध्वनिमित्तं तु व्यङ्ग्यार्थे एव चमत्कारपर्यवसानं नितान्तमपेक्षितमिति न पर्यायोक्ते ध्वनेरन्तर्भावो नैव च तस्य ध्वनौ। तत्रापि व्यङ्ग्यस्तु गुणीभूत एव तस्यैव वाच्यार्थत्वादिति।

**अलङ्कारों में ध्वनि के अन्तर्भाव को निरास करने के प्रसङ्ग में अब चौथे प्रमेय के रूप में पर्यायोक्त को लेते हैं।**

पर्यायोक्त अलङ्कार में यदि व्यंग्यत्व प्रधानता से है, तो भले ही उसका ध्वनि में अन्तर्भाव हो तो हो, किन्तु ध्वनि का उसमें अन्तर्भाव नहीं हो सकता। क्योंकि ध्वनि को पर्यायोक्त से भी आगे और अधिक विस्तृत विषय वाले के रूप में और अङ्गी के रूप में प्रतिपादन किया जाना है, इसलिए। और न ही भामह द्वारा उदाहृत के सदृश पर्यायोक्त में व्यंग्य की प्रधानता ही रहती है क्योंकि उसमें वाच्य को गौणभाव से उपस्थापित ही नहीं किया गया है।

बात यह है कि जहाँ अभीष्ट अर्थ सीधे अभिधा से न कहकर चमत्कार के अतिशय के साथ घुमा-फिराकर व्यञ्जना से कहा जाता है वहाँ पर्यायोक्त अलङ्कार होता है और स्पष्ट रूप से यह कहा जा सकता है कि पर्यायोक्त में व्यङ्ग्य ही वाच्यार्थ बन जाता है। तो जब यहाँ व्यञ्जना ही खेलती है तो पर्यायोक्त को ही ध्वनि क्यों न माना जाय ? किन्तु इसमें कई विपत्तियाँ है। पहले तो यह है कि ध्वनि के लिए वाच्यार्थ की गौणता एवं व्यंग्यार्थ की प्रधानता आवश्यक है। पर्यायोक्त में तो व्यंग्य के ही वाच्यार्थ होने से यह स्थिति नहीं बनती। दूसरी बात यह है कि पर्यायोक्त का क्षेत्र है किसी बात को सीधे न कह कर घुमाफिरा कर कहना, किन्तु ध्वनि में इतनी ही बात नहीं। इससे भी बढ़कर इसका विषय है वाच्यार्थ से आक्षिप्त प्रतीयमान अर्थ का बोध कराना है, जो कि पर्यायोक्त के क्षेत्र से बाहर है। तीसरी बात यह भी है कि ध्वनि अङ्गी है और अलङ्कार आदि उसके अङ्ग, अर्थात् ध्वनि अलङ्कार्य है और पर्यायोक्त अलङ्कार अङ्ग में अङ्गी का अन्तर्भाव कैसा? चौथी बात यह भी है कि भामह आदि ने जो पर्यायोक्त का उदाहरण दिया है उसमें व्यंग्य अर्थ की प्रधानता नहीं बन पाती, क्योंकि उसमें वाच्य अर्थ गौण के रूप में विवक्षित नहीं है। जैसे—

'शत्रु के नाश करने में दृढ़ इच्छा वाले एवं रास्ता छोड़कर चलने वाले परशुराम को इस धनुष से धर्म की शिक्षा दी।'

यहाँ परशुराम के प्रभाव से भीष्म के प्रभाव का आधिक्य व्यङ्ग्य जरूर है लेकिन काव्यार्थ रूप जो वीर रस है, उसका सौन्दर्य तो 'धर्म की शिक्षा दी' से ही प्रभावित है। अतः यहाँ वाच्यार्थ प्रधान है न कि गौण, और व्यङ्ग्यार्थ गौण है न कि प्रधान, क्योंकि चमत्कार का पर्यवसन वाच्यार्थ में है, व्यङ्ग्यार्थ में नहीं। अतः ध्वनि का पर्यायोक्त में समावेश असम्भव है।

ध्वन्या०— अपह्नुतिदीपकयोः पुनर्वाच्यस्य प्राधान्यं व्यङ्ग्यस्य चानुयायित्वं प्रसिद्धमेव।

लीला— एवं पर्यायोक्ते ध्वनेरन्तर्भावं निषिध्य प्रकरणसिद्धये प्रतिपादित-पूर्वावपि अपह्नुतिदीपकालङ्कारौ पुनरुपस्थापयति तत्र तत्र ध्वनेरन्तर्भावनिरासाय अपह्नुतीत्यादिना। अपह्नुतिदीपकयोः= अपह्नुति (प्रकृतं निषिध्य भिन्नात्मतया कथनमिति इत्थंलक्षणोऽलङ्कारः) दीपकं (प्रकृताप्रकृतानामेकान्वयितारूपल-क्षणोऽलङ्कारः) तयोः, पुनः= प्रसङ्गान्तरे, वाच्यस्य= मुख्यार्थस्य, प्राधान्यं=

मुख्यता, व्यंग्यस्य= प्रतीयमानार्थस्य, च, अनुयायित्वं= वाच्यार्थानुवर्तित्वं गौणत्वं, प्रसिद्धं= प्रतीतं प्रसाधितञ्च, एव इत्यवधारणे न पुनः कथनप्रसङ्ग इति।

प्रकृतं निषिध्य भिन्नात्मतया कथनमपह्नुतिः। यथा— ''या विरौति नेयं भृङ्गाली अपि तु आकृष्यमाणस्य कामधनुषो ध्वनिरिति।'' अत्र भृङ्गालीं प्रकृतं निषिध्य तस्य कामधनुष्टङ्कारत्वेन कथनमेवापह्नुतिः। अत्र भ्रमरावली कामधनुषः प्रत्यञ्चया समाना' इति उपमा (उपमानोपमेयभावः) व्यज्यते किन्तु चारुत्वं तु नैव व्यङ्ग्यभूतायामुपमायामपि तु वाच्यभूतायामपह्नुतावेव पर्यवस्यति तथैव प्रकृताप्रकृतानामेकान्वयिताकथनं दीपकं यथा ''मणिः शाणोल्लीढः समरविजयी हेतिदलितः....तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु जनाः'' इति। अत्रापि अर्थिषु गलितविभवा जनाः प्रकृतानि, मणिः शाणोल्लीढः इत्यादयस्तु अप्रकृतानि। एतेषां परस्परमुपमानोपमेयभावो व्यज्यते किन्तु व्यङ्ग्यभूताया उपमाया नैव प्राधान्यमपि तु अनेकेषामप्रस्तुतानां सहैव दीपने. एव चारुत्वं पर्यवस्यति। अत एवोक्तं तयोरपि वाच्यस्य प्राधान्यं व्यंग्यस्य तदनुयायित्वमिति।

इस प्रकार पर्यायोक्त में ध्वनि का समावेश निषेध कर प्रकरण की सिद्धि के लिए पुनः अपह्नुति और दीपक अलङ्कारों का उपस्थापन करते हैं उसमें ध्वनि के अन्तर्भाव की सम्भावना का निषेध करने के लिए।

अपह्नुति एवं दीपक में वाच्य की प्रधानता एवं वयंग्य के उसका अनुवर्तित्त्व प्रसिद्ध ही है अर्थात् पहले ही बताया गया है।

किसी प्रकृत को छिपा कर अप्रकृत का उपस्थापन करना अपह्नुति है और प्रकृत तथा अप्रकृत का एकान्वयी बनाकर प्रस्तुत करना दीपक है। दोनों में उपमा (उपमानोपमेय भाव) व्यङ्ग्य होता है लेकिन उसका प्राधान्य न होकर वह वाच्यार्थ का अनुगामी होता है। जैसे ''यह जो आवाज कर रही है भवँरों की पाँत नहीं, खींचे गये कामदेव के धनुष की प्रत्यञ्चा है।'' यह प्रकृत भवँरों की पाँत का निषेधकर अप्रकृत प्रत्यञ्चा की स्थापना से दोनों में उपमानोपमेय भाव तो आ गया है और ''भँवरों की पंक्ति प्रत्यञ्चा के समान है'' इस तरह की उपमा व्यंग्य है लेकिन चारुत्व उपमा के बूते पर होकर अपह्नुति पर ही है। अतः व्यङ्ग्यभूत उपमा अपह्नुति जो कि वाच्यार्थ है, का उत्कर्ष बढ़ाता है। अतः गौण है। इसी तरह ''शान में घिसी मणि, सुरत में मलिन युवति एवं गरजी को धन देने से बने गरीब कृशता से ही शोभित होते हैं'' में प्रकृत तो है गरजी को धन देने से बने गरीब और उसके साथ अनेक अप्रकृत का जो उपस्थापन किया गया है, उसमें परस्पर उपमानोपमेयभाव आ जाता है। लेकिन व्यङ्ग्यभूत उपमा यहाँ भी गौण ही रह जाती है, क्योंकि सौन्दर्य का उत्कर्ष उपमा के कारण न होकर दीपन के कारण हुआ है और चारुत्व का पर्यवसान भी उसी में है। अतः दोनों में ही व्यङ्ग्यभूत उपसा गौण है और वाच्यार्थ प्रधान। इसलिए ये दोनों ही ध्वनि के विषय नहीं बन सकते।

ध्वन्या०— सङ्करालङ्कारेऽपि यदालकारोलङ्कारान्तरच्छायामनुगृह्णाति तदा व्यङ्ग्यस्य प्राधान्येनाविवक्षितत्वान्न ध्वनिविषयत्वम्, अलङ्कारादृय-सम्भावनायां तु वाच्यव्यङ्ग्ययोः समं प्राधान्यम्। अथ वाच्योपसर्जनी-भावेन व्यङ्ग्यस्य तत्रावस्थानं तदा सोऽपि ध्वनिविषयोऽस्तु न तु स एव ध्वनिरितिवक्तुं शक्यम्। पर्यायोक्तनिर्दिष्टन्यायात्। अपि च सङ्करालङ्कारेऽपि च क्वचित् सङ्करोक्तिरेव ध्वनिसम्भावनां निराकरोति।

लीला— एवं व्यञ्जनामूलकेषु समासोक्तिप्रभृतिषु ध्वनेरन्तर्भावं युक्त्या निरस्य सङ्करालङ्कारेऽपि तदवस्थितिनिरसनाय प्रक्रमते सङ्करेत्यादिना। सङ्करालङ्कारे= एकाधिकालङ्कारस्थितावेकाश्रये, अपि इति प्रकरणे यथा समासोक्त्यादौ पृथग्वर्त्यलङ्कारे तथा चात्रेति, यदा= यस्यां स्थितौ, अलङ्कारः= कश्चिदपि काव्यालङ्कारः, अलङ्कारान्तरच्छायां= अलङ्कारान्तरस्य (अन्योऽलङ्कारोऽलङ्कारान्तरं) तस्य, छाया (शोभा) तां अन्यालङ्कारशोभां, अनुगृह्णाति= उपकरोति, जनयति, परशोभाधानायात्मानमर्पयति, तदा= तस्यां स्थितौ, व्यङ्ग्यस्य= प्रतीयमानार्थस्य, प्राधान्येन= मुख्यतया, अविवक्षितत्वात्= अनवस्थितत्वात् ध्वनिविषयत्वं= ध्वनिक्षेत्रत्वं, न= नैव सम्पद्यते। यदा एकोऽपरस्य शोभधानार्थमात्मानं समर्पयति तदा तस्यात्मन एव गुणीभावेन स ध्वनेर्विषय एव न सम्भवति व्यङ्ग्यप्राधान्ये एव तस्य सम्भवात्। अलङ्कारद्वयसम्भावनायां= यत्र द्वयोरेवालङ्कारयोः समावस्थितत्वेन स्थितिर्भवति तदाऽपि, वाच्यव्यङ्ग्ययोः= वाच्यत्वेन स्थितस्य व्यङ्ग्यत्वेन प्रतीतस्य चोभयोरेव प्राधान्यं= मुख्यत्वं, समं= तुल्यमेव। यत्र च द्वावलङ्कारौ समानस्थित्या वर्तते तत्रापि न ध्वनेर्विषयता वाच्यव्यङ्ग्यभूतयोरुभयोरेव सममर्हत्वात् अथ= अपरस्यां स्थित्यां, वाच्योपसर्जनीयभावेन= वाच्यस्य (वाच्योपकारकस्यालङ्कारस्य) उपसर्जनभावेन (गौणीभावेन) व्यङ्ग्यस्य प्रतीयमानत्वेनावस्थितस्यालङ्कारस्य, तत्र= तस्मिन्नवकाशे, अवस्थानं= समवस्थितिः तदा= तादृशावसरे, सः= प्रतीयमानत्वेन स्थितोऽलङ्कारः, अपि= इत्यवधारणे ध्वनिविषयः= ध्वन्यवस्थानं, अस्तु= स्यात् सः= तादृशोऽलङ्कारः, एव= इत्यवधारणे, नान्य इति, ध्वनिः= ध्वन्यास्पदं, इति= इत्थं, वक्तुं= प्रतिपादयितुं, न= नैव, शक्यं= पार्यम्। पर्यायोक्तनिर्दिष्टन्यायात्= पर्यायोक्ते (प्रकृतं निषिध्याप्रकृतस्थापनरूपलक्षणेऽर्थालङ्कारे) निर्दिष्टः= निर्धारितः। तत्र व्यङ्ग्यस्यैव वाच्यार्थत्वाद्वाच्यार्थव्यङ्ग्यार्थयोरभेदः ध्वनौ तु वाच्यार्थस्य गौणीभावेन व्यङ्ग्यस्य प्राधान्यमपेक्षितं तेन तत्रापि न ध्वनेरवकाशः इति) यो न्यायः (विधिः) तस्मात्। अपि च= तदतिरिक्तमपि, सङ्करालङ्कारे= एकवाक्ये एकाधिकालङ्काराणां मिथोऽनपेक्ष्य स्थितावपि, क्वचित्= कुत्रचित्, सङ्करोक्तिः= एकाधिकालङ्कारावस्थितित्वेन कथनमेव, ध्वनिसम्भावनां= ध्वन्यवस्थानाशङ्कामेवापि, निराकरोति= निरासयति इति।

भामहदण्डिप्रभृतयः प्राचीनालङ्कारिकास्तु एकवाक्ये एकाधिकालङ्कारयोगं संसृष्टिशब्देन व्यपदिशन्ति। तत्र भामहः 'वरा विभूषा संसृष्टिर्बह्वलङ्कारयोगतः' इति। दण्डी तु— 'नानाऽलङ्कारसंसृष्टिः सङ्कीर्णं तु निगद्यते' इति। तत्र भामहस्तु द्वयोस्त्रयाणां च संसृष्टेरुदाहरणे प्रस्तौति। दण्डी तु संसृष्टेः अङ्गाङ्गिभावावस्थानं सर्वेषां समकक्षता चेति भेदद्वयं प्रस्तौति। यथा—

आक्षिपन्त्यरविन्दानि मुग्धे मुखश्रियम्।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम्।।

इत्यत्र श्लेषोऽर्थान्तरन्यासस्य स चोपमाया अङ्गमित्यङ्गाङ्गिभावः। एवमेव—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता।।

इत्यत्र पूर्वार्धे उत्प्रेक्षायाः उत्तरार्धे उपमायाश्च परस्परं प्राधान्येनावस्थानात् समकक्षतोभयोरेव। अर्वाचीनास्तु अङ्गाङ्गिभावत्वे सङ्करः समकक्षतायां संसृष्टिरिति व्यपदिशन्ति। आनन्दवर्धनोऽपि द्वावेव सङ्करशब्देन व्यपदिशति। तेनाऽत्र वयमपि तथैव व्यवहरामः। तस्य च चतस्रोऽवस्थाः एकानुप्रवेशः, सन्दिग्धत्वमङ्गाङ्गिभावः, समकक्षता च। यदा एकोऽलङ्कारोऽलङ्कारान्तरच्छायामनुगच्छति स एकानुप्रवेशः, अलङ्कारद्वयसम्भावना सन्दिग्धत्वं, एकस्योपसर्जनीभावोऽपरस्य व्यङ्ग्यत्वमङ्गाङ्गीभावः, उभयोरेव समानमहत्त्वं समकक्षता चेति। एकानुप्रवेशे शब्दार्थवर्तिनोऽलङ्कारा एववाक्ये वा एकवाक्यांशेऽनुप्रविशन्ति तत्र व्यङ्ग्यभूतस्यानुप्रविष्टस्य गुणीभावान्न तत्र ध्वनिः। यथा 'स्मरं स्मरमिव प्रियम्'। अत्र 'स्मर स्मर' इत्यत्र यमकमुपमा च 'आवृत्तवर्णस्तबकं यमकम्', 'सादृश्यमुपमा भेदे' इति तयोर्लक्षणात्। उभावप्यलङ्कारौ 'स्मर' शब्देन बोध्येते। अत्र तु व्यङ्ग्यस्यैवाभावो ध्वनेस्तु का कथा। सन्दिग्धत्वञ्च तत्र यत्रानुग्राह्यानुग्राहकभावोऽलङ्काराणाम्। यथा—

'प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्याः।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः।।'

अत्र मृगाङ्गनावलोकनेन पार्वत्यवलोकनस्योपमा यद्यपि व्यङ्ग्या तथापि वाच्यस्य सा सन्देहालङ्कारस्याभ्युत्थानकारिणीत्वेनानुग्राहकत्वात् सा गुणीभूता। अनुग्राह्यत्वेन हि सन्देहे पर्यवसानम्। तेन नात्रापि ध्वनेरवकाशः। अङ्गाङ्गिभावसङ्करस्तु एकस्योपसर्जनीभावोऽपरस्य व्यङ्ग्यत्वे भवति। यथा—

'भवति न गुणानुरागः खलानां केवलं प्रसिद्धिशरणानाम्।
किल प्राप्नोति शशिमणिश्चन्द्र न प्रियामुखे दृष्टे।।'

अत्र सामान्यस्य खलप्रवृत्तेविशेषेण चन्द्रकान्तस्वभावेन समर्थनादर्थान्तरन्यासोऽलङ्कारो वाच्यः— 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' इति

तत्लक्षणात्। चन्द्रापेक्षया मुखस्य शोभाधिक्यप्रतीत्या व्यतिरेकश्च 'व्यतिरेको विशेषश्चेदुपमानोपमेययो:' इति तल्लक्षणात्। तथैव 'न मुखमिदं चन्द्र एव' इति अपह्नुतेरपि प्रतीति: 'प्रकृतं निषिध्य अप्रकृतस्य कथनमपह्नुति:' इति तत्लक्षणात्। इत्थं व्यज्यमानयोरपह्नुतिव्यतिरेकयोरेव चारुत्वपर्यवसानादत्र ध्वनेर्विषय उत्पद्यते। स्यादेष ध्वेनर्विषयो वाच्यस्यार्थान्तरन्यासस्योपसर्जनीभावेन व्यङ्ग्यस्य व्यतिरेकापह्नुत्यो: प्राधान्यात्। किन्तु न तत्र ध्वनेरन्तर्भाव: महाविषयत्वात्सङ्करस्य सीमितत्वात्तस्याङ्गित्वात्सङ्करस्याङ्गत्वात्तस्यालङ्कार्यत्वात्सङ्कारस्यालङ्कारत्वात्। कुत्रचित्तु 'सङ्कर' इति नामैव ध्वनिसम्भावनां निरासयति किञ्च सङ्करत्वं नाम सङ्कीर्णत्वं यत्रान्योऽन्यस्य परिज्ञानमेव न सम्भवति तेन कथं गौणत्वप्राधान्यनिर्णय:। तेन सङ्करालङ्कारे नैव ध्वनेरन्तर्भाव: समकक्षतायामपि द्वयोरेव वाच्यत्वान्नैव तत्र ध्वनेरवसर:।

इस तरह अलङ्कारों में ध्वनि के अन्तर्भाव के निराकरण के बाद अब अलङ्कारों के संमिश्रण से बनने वाले सङ्कर अलङ्कार में ध्वनि के अन्तर्भाव की सम्भावना के निराकरण हेतु विषय का उपस्थापन करते हैं।

सङ्कर अलङ्कार में भी जब कोई एक अलङ्कार दूसरे किसी अलङ्कार की छाया ग्रहण करता है तो वहाँ व्यङ्ग्यार्थ के प्राधान्य की विवक्षा न होने से वह ध्वनि का विषय नहीं हो सकता। जहाँ पर दो अलङ्कारों की समान अवस्थिति की सम्भावना होती है वहाँ भी वाच्यार्थ एवं व्यङ्ग्यार्थ में समान रूप से प्राधान्य होने से वह भी ध्वनि का विषय नहीं हो सकता। जहाँ एक से अधिक अलङ्कारों का संमिश्रण इस प्रकार है कि वाच्य जो है वह गौण हो जाय और व्यङ्ग्य का प्राधान्य हो वह ध्वनि का विषय बने तो बने, किन्तु उसी को ही ध्वनि माना नहीं जा सकता, पर्यायोक्त में बताये गये न्याय से अर्थात् ध्वनि के महाविषय एवं अङ्गी होने से तथा सङ्कर के सङ्कीर्ण विषय एवं अङ्ग होने से। और यह भी कि कहीं-कहीं तो 'सङ्कर' शब्द ही स्वयं ध्वनि की सम्भावना का निराकरण करता है।

पीछे के प्रकरण में यह देखा गया कि किसी एक अलङ्कार में ध्वनि का समावेश नहीं हो सकता। अब यहाँ यह देख लेना है कि जहाँ एक से अधिक अलङ्कारों का मिश्रण होता है वह ध्वनि का विषय बन पाता है कि नहीं।

जहाँ एक से अधिक अलङ्कार सहभाव से वा मिश्रित रूप से एक वाक्य में रहते हैं वहाँ सङ्कर अलङ्कार का विषय होता है। यह प्राचीन आलङ्कारिकों की मान्यता है। नवीन आलङ्कारिक तो एक वाक्य में दो, उससे अधिक अलङ्कारों की समान अवस्थिति को संसृष्टि कहते है और इसे तिल एवं चाँवल के मिश्रण के रूप में माना जाता है। और जल एवं दूध के मिश्रण के रूप में परस्पर समन्वित अलङ्कार जहाँ हैं उसे सङ्कर कहते हैं। यहाँ वृत्तिकार आनन्दवर्धन को प्राचीन मत ही अभीष्ट है। अत: यहाँ हम उसी स्थिति को सङ्कर मानकर चलेंगे।

सङ्कर अर्थात् एक से अधिक अलङ्कारों की एक वाक्य में अवस्थिति की

चार अवस्थाएँ मानी गई हैं। ये हैं– एकानुप्रवेश, सन्दिग्धता, अङ्गाङ्गिभाव एवं समकक्षता। उनमें एकानुप्रवेश वह स्थिति है, जहाँ दो से, उससे अधिक शब्द एवं अर्थ अलङ्कार इस तरह मिले रहते हैं। कि दूसरे अलङ्कार एक अलङ्कार की शोभा बढाने के लिए होते हैं। उसमें वाच्य की प्रधानता रहती है। अतः वह ध्वनि का विषय नहीं बन सकता। दूसरे प्रकार की स्थिति सन्दिग्धत्व है, जहाँ दो में कौन वाच्य एवं कौन व्यङ्ग्य है, इसका निश्चय नहीं हो पाता, अतः वाच्य एवं व्यङ्ग्य दोनों की प्रधानता समान रहती है। तीसरी स्थिति है अङ्गाङ्गिभाव, जहाँ वाच्य गौण हो जाता है और व्यङ्ग्य प्रधान। जैसे–

''केवल प्रसिद्धि पर ही चलने वाले मूर्खों को गुण के प्रति कोई अनुराग नहीं होता। चाँद के उगने से चन्द्रकान्त मणि पिघल जाती है, लेकिन मुखचन्द्र के उगने से नहीं।''

यहाँ सामान्य का विशेष कथन से समर्थन होने के कारण अर्थान्तरन्यास अलङ्कार वाच्य है। साथ ही चन्द्रमा से मुख की उत्कर्षता बताये जाने से व्यतिरेक हुआ और यह मुख नहीं है चन्द्र ही है कहकर प्रकृत मुख का निषेध कर अप्रकृत चन्द्र की उपस्थापना से अपह्नुति है। यहाँ चारुत्व का चमत्कार जो है उसका पर्यवसान अर्थान्तरन्यास में न होकर व्यतिरेक एवं अपह्नुति में है, तो भी इसमें ध्वनि का अन्तर्भाव तो हो नहीं सकता, क्योंकि इसका विषय सीमित है और ध्वनि का विस्तृत। एवं ध्वनि अङ्गी है अलङ्कार अङ्गमात्र, ध्वनि अलङ्कार्य है अलङ्कार उसके चारुत्वसाधन। कहीं-कहीं तो 'सङ्कर' नाम ही इसमें ध्वनि के समावेश की सम्भावना का निराकरण करता है। सङ्कर है सम्मिश्रण, जिसमें प्रधान और अप्रधान का भेद करना कठिन हो जाता है। वैसे में भी ध्वनि नहीं बन पाती।

ध्वन्या०– अप्रस्तुतप्रशंसायामपि यदा सामान्यविशेषभावान्निमित्त-निमित्तिभावाद्वा अपिधीयमानस्याप्रस्तुतस्य प्रतीयमानेन प्रस्तुतेनाभि-सम्बन्धः तदाऽभिधीयमानप्रतीयमानयोः सममेव प्राधान्यम्। यदा तावत्सा-मान्यस्याप्रस्तुतस्याभिधीयमानस्य प्राकरणिकेन विशेषेण प्रतीयमानेन सम्बन्धस्तदा विशेषप्रतीतौ सत्यामपि प्राधान्येन तत्सामान्येनाविनाभावात् सामान्यस्यापि प्राधान्यम्।

लीला– अलङ्कारे ध्वनेरन्तर्भावनिरसनाय प्रवृत्तो वृत्तिकारः समासोक्ति-प्रभृतिषु अलङ्कारेषु तेषां सङ्करेऽपि च ध्वनेरन्तर्भावं निरस्यापि अवितृप्तः सन् पुनः अप्रस्तुतप्रशंसायां ध्वनेरन्तर्भावं परिहर्तुमुपक्रमते अप्रस्तुतेत्यादिना। अप्रस्तु-तप्रशसायां= अप्रस्तुतात्प्रस्तुतप्रतीतिलक्षणेऽलङ्कारे, अपि= इति प्रकरणद्यो-तनाय यथान्यत्र तथैवात्र, यदा= स्थितौ, सामान्यविशेषभावात्= सामान्याद्विशेषस्य विशेषात्सामान्यस्य प्रतीत्या, निमित्तनिमित्तिभावात्= कारणकार्यभावाद्, वा इति विकल्पेन, अभिधीयमानस्य= उच्यमानस्य, अप्रस्तुतस्य= अप्रकृतस्य=

प्रतीयमानेन= अवभास्यमानेन, अभिसम्बन्धः= विशेषरुचिः, तदा= तस्यामवस्थायां, अभिधीयमानप्रतीयमानयोः= उच्यमानावभास्यमानयोः, समम्= तुल्यं, एव इत्यवधारणे, प्राधान्यं= महत्ता। यदा= यस्यां स्थितौ, अभिधीयमानस्य= निगद्यमानस्य, अप्रस्तुतस्य= समान्यस्य= सार्वत्रिकस्य, प्रतीयमानेन= अवभास्यमानेन, प्राकरणिकेन= प्रासङ्गिकेन, विशेषेण= विशेषगतेन, सम्बन्धः= संपर्कः, तदा= तस्यां स्थितौ, विशेषप्रतीतौ= सामान्येतरविशिष्टावभासने, तस्यां= विद्यमानायां, अपि, प्राधान्येन= मुख्यत्वेन, तत्सामान्येन= तादृशसार्वत्रिकेण, अविनाभावात्= व्याप्यव्यापकसम्बन्धात्सा-मान्येन विना विशेषस्यानवस्थितेः, सामान्यस्य, अपि प्राधान्यं= मुख्यता भवत्येव अतोऽत्रापि न ध्वनिः। यदा वा अप्रस्तुतस्य वाच्यरूपस्य सामान्यस्य प्रतीयमानेन प्रासंगिकेन विशेषेण सम्बन्धस्तदा विशेषप्रतीतिस्तु भवति सामान्यस्यापि प्राधान्याराहित्यमेवातः सामान्यस्य प्राधान्यं भवत्येव। तेन नायमपि ध्वनेर्विषयः।

प्रस्तुतेनाप्रस्तुतस्य प्रतीतिर्यदा समासोक्तिर्भवति तदा अप्रस्तुतात्प्रस्तुतस्य प्रतीतिरप्रस्तुतप्रशंसा भवति। तेन यत्राप्रस्तुतवृत्तान्तवर्णनं प्रस्तुतवृत्तान्तावगतिपर्यवसायि तत्राप्रस्तुतप्रशंसा भवति। अप्रस्तुतवृत्तान्तवर्णनेन प्रस्तुतावगतिश्च। अप्रस्तुतप्रस्तुतायाः सम्बन्धे सति भवति। सम्बन्धश्च सारूप्यं सामान्यविषेशभावः कार्यकारणभावो वा सम्भवति। तत्र सामान्यविशेषभावे सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्यावगतौ द्वैविध्यम्। कार्यकारणभावेऽपि कार्यात्कारणस्य कारणात्कार्यस्य वावगतौ द्वैविध्यम्। सारूप्ये तु एको भेदः, इत्यस्याः पञ्च प्रकाराः। उक्तमेव—

> कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति।
> तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा।। इति।

तत्र सामान्यविशेषभावाद्वा कार्यकारणभावाद्यत्र सामान्येन अप्रस्तुतेन प्रस्तुतस्य विशेषस्य बोधो भवति तदा विशेषस्य प्रतीयमानत्वं तु सञ्जायते, किन्तु सामान्येन विशेषस्यासम्भावाद् उभयोरभिधीयमानप्रतीयमानयोः समानमेव प्राधान्यं भवति, किञ्च सामान्यविशेषयोर्व्याप्यव्यापकसम्बन्धस्तत्र समुदेति। अतः वाच्यव्यङ्ग्ययोरेवाविशेषान्न तत्र ध्वनेरवसरः यथा—

> विधाय वैरं सामर्षे नरोऽरौ य उदासते।
> प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम्।।

अत्र प्रागेव सामर्षे शिशुपालवधे रुक्मिणीहरणादिना वैरं दृढीकृतवता श्रीकृष्णेन तस्मिन्नुदासितुमयुक्तमिति वक्तव्येऽर्थे प्रस्तुतेऽप्रस्तुतेंन समान्येन तस्य प्रतीतिस्तु भवति किन्तु तस्य सामान्यातिशायित्वं नैव सिध्यति, सामान्येन विना तस्यास्तित्वसम्भवात्। अंतो नाऽत्र ध्वनेरवकाशः।

इस प्रकार पृथक्-पृथक अलङ्कार एवं अलङ्कारों के संमिश्रण सङ्कर में ध्वनि के अन्तर्भाव का निराकरण करने के बाद भी अवितृप्त वृत्तिकार पुनः अप्रस्तुतप्रशंसा में भी ध्वनि के अन्तर्भाव के निराकरण हेतु प्रकरण उठाते हैं—

अप्रस्तुतप्रशसा में भी जब तक सामान्यविशेषभाव वा कार्यकारणभाव से अभिधान किये जा रहे अप्रस्तुत का प्रतीयमान प्रस्तुत से विशेष सम्बन्ध होता है तब अभिधीयमान एवं प्रतीयमान दोनों का समान ही प्राधान्य रहता है। क्योंकि जब कहे जा रहे अप्रस्तुत सामान्य का प्राकरणिक प्रतीयमान विशेष से सम्बन्ध होता है उस समय विशेष प्रतीति के होते हुए भी प्रधान रूप से उसके सामान्य से व्याप्यव्यापकभाव सम्बन्ध होने के कारण सामान्य की भी प्रधानता होती है।

यहाँ अप्रस्तुत का अर्थ है असङ्गत। कहना कुछ है तो कहा कुछ जाता है तो वहाँ अप्रस्तुतप्रशंसा होती है। समासोक्ति में प्रस्तुत से अप्रस्तुत का उपस्थापन होता है तो अप्रस्तुतप्रशंसा में अप्रस्तुत से प्रस्तुत का। अप्रस्तुत से प्रस्तुत का उपस्थापन किसी सम्बन्ध से होता है। ऐसा सम्बन्ध तीन कारणों से होता है सामान्यविशेषभाव से, कार्यकारणभाव से और सारूप्य से। सामान्यविशेषभाव से जो अप्रस्तुतप्रशंसा होती है उसमें दो स्थितियाँ होती हैं— सामान्य से विशेष की प्रस्तुति और विशेष से सामान्य की प्रस्तुति, इसी तरह कार्य से कारण की एवं कारण से कार्य को उपस्थिति करके कार्यकारणभाव में भी दो स्थितियाँ होती हैं। सारूप्य से एक स्थिति करके कुल पाँच अवस्थाएँ होती हैं।

जहाँ अप्रस्तुत सामान्य से प्रस्तुत विशेष की उपस्थिति होती है वहाँ अप्रस्तुत सामान्य के कथन से प्रतीयमान प्रस्तुत का सम्बन्ध हो जाता है तो वहाँ अभिधीयमान एवं प्रतीयमान का प्राधान्य बराबर होता है। क्योंकि अप्रस्तुत सामान्य से प्रस्तुत विशेष की प्रतीति होती तो है लेकिन दोनों का व्याप्यव्यापक सम्बन्ध होता है अर्थात् बिना सामान्य के विशेष नहीं रह सकता। अतः विशेष अंश में भी सामान्य के व्याप्त होने से विशेषपरक व्यङ्ग्यार्थ का जितना महत्त्व है उतना ही सामान्यपरक वाच्यार्थ का भी। अतः वाच्यार्थ के गुणभूत न होने से वहाँ ध्वनि नहीं हो सकती। जैसे—

''चिढ़े हुए शत्रु से और—वैर बढ़ाकर जो उदासीन रहता है वह कमरे में आग लगाकर हवा की ओर मुँह करके सोता है।''

यहाँ प्रस्तुत है 'शिशुपाल से वैर बनाये हुए श्रीकृष्ण का चुप रहना ठीक नहीं' और उसे अप्रस्तुत सामान्य से उपस्थापित किया तो गया है लेकिन प्रस्तुत के प्रतीयमान होने पर भी अप्रस्तुत सामान्य से भिन्न उसका अस्तित्व नहीं है। अतः यहाँ दोनों का समान महत्त्व है जो ध्वनि का विषय नहीं है।

**ध्वन्या०— यदापि विशेषस्य सामान्यनिष्ठत्वं तदापि सामान्यस्य प्राधान्ये सामान्ये सर्वविशेषाणामन्तर्भावाद्विशेषस्यापि प्राधान्यम्। निमित्तनिमित्तिभावे चायमेव न्यायः।**

लीला— सामान्यविशेषभावसम्बन्धसम्बद्धमप्रस्तुतप्रशंसाया अपरं भेदमुपस्थाप्य तत्र ध्वनिसम्भावनां निराकरोति यदाऽपीत्यादिना। यदाऽपि= यस्यां स्थितौ, विशेषस्य= अप्राकरणिकस्य विशेषाक्षिप्तसामान्यस्य, प्राधान्यें= प्रतीततया वाच्यातिशायित्वे, सत्यपि, सामान्ये= प्रतीयमानत्वेन व्यवहृते सामान्ये, सर्वविशेषाणां= सर्वविधवाच्यरूपविशेषस्य, अन्तर्भावात्= सन्निवेशनात्, उभयोरेव व्याप्यव्यापकसम्बन्धात्, विशेषस्य वाच्यार्थरूपविशेषाप्रस्तुतस्याऽपि, प्राधान्यं= मुख्यता। तेन नाऽत्रापि ध्वनेरवसरः।

निमित्तनिमित्तिभावे= कारणकार्यभावे अप्रस्तुतात्कारणात्प्रस्तुतस्य कार्यस्याक्षेपे तथैव अप्रस्तुतात्कार्यात्प्रस्तुतस्य कारणस्याक्षेपे च, अयमेव= सामान्यविशेषभावे यथा निर्दिष्टस्तथैव, न्यायः= प्रवर्तनम्, अर्थात् कार्यकारणयोर्व्याप्यव्यापकसम्बन्धात् अप्रस्तुतात्कार्यात्प्रतीतस्य कारणस्य प्राधान्ये सिद्धेऽपि पूर्वेण विनाऽपरस्य सिद्धेरुभयोरेव समं प्राधान्यं भवति तथैवाप्रस्तुतात्कारणादाक्षिप्तस्य कार्यस्यापि।

यत्रापि अप्रस्तुतेन विशेषेण प्रस्तुतस्य सामान्यस्य प्रतीतिर्भवति तत्र प्रतीतया सामान्यस्य प्राधान्यं तु सञ्जायते, किन्तु तस्याप्रस्तुताद्वाच्यरूपाद्विशेषान्नातिशायिता तेन विना तस्यासम्भवात्। यथा—

अङ्काधिरोपितभुवश्चन्द्रमा मृगलाञ्छनः।
केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः।।

अत्र क्रूर एव ख्यातिभाग्भवति न मृदुरिति सामान्ये वक्तव्ये तत्प्रत्यायनार्थमप्रस्तुतो विशेषोऽभिहितः। किन्तु सामान्यस्य प्रतीतत्वेन प्राधान्येऽपि विशेषे विना तस्यास्तित्वसम्भवाद्विशेषस्यापि तादृगेव प्राधान्यमतो नासावपि ध्वनेर्विषयः।

एवमेव कार्यकारणभावेऽपि। अप्रस्तुतात्कार्यादाक्षिप्तस्य कारणस्य प्रतीयमानत्वेन प्राधान्ये सिद्धेऽपि तस्य कार्येण सह अविनाभावसम्बन्धादुभयोरेव प्राधान्यमुत्पद्यते। तेन नासावपि ध्वनेर्विषयः। तथैव अप्रस्तुतात्कारणादाक्षिप्तस्य कार्यस्यापि। तत्रापि उभयोरेव प्राधान्यान्नासावपि ध्वनेर्विषय। कारणाक्षेपि कार्यं यथा—

ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति विषयेषु च।
ते बान्धवास्ते सुहृदो लोकः स्वार्थपरोऽपरः।।

अत्र बान्धवानां सुहृदाञ्च स्वरूपवर्णनमप्रस्तुतं तु तेषामनुकरणम्। पूर्वं निमित्तमपरं निमित्ति। अत्र निमित्तेः प्रतीतमानतया प्राधान्यं तु सिध्यति किन्तु तदनुप्राणनान्निमित्तस्यापि तथैव प्राधान्यमतो वाच्यार्थस्योपसर्जनीभावाभावान्नासौ ध्वनेर्विषयः। एवमेव कार्याक्षिप्तकारणेऽपि।

इस तरह सामान्य से आक्षिप्त विशेष में ध्वनि का विषय हो न पाने की बात सिद्ध कर अब विशेष आक्षिप्त सामान्य भी ध्वनि के विषय न हो पाने की चर्चा उठाते हैं। जब भी विशेष सामान्य से आक्षिप्त होता है तब भी सामान्य की प्राधानता से भी सामान्य सभी विशेष के अन्तर्भाव होने से विशेष की भी प्रधानता बनी रहती है। अत: यह ध्वनि का विषय नहीं बन सकता। निमित्तनिमित्ति भाव अर्थात् कार्य से आक्षिप्त कारण और कारण से आक्षिप्त कार्य में भी यही बात है।

सामान्यविशेष भाव में जैसे कार्यकारण भाव में भी ध्वनि का अवसर नहीं निकल पाता है। जहाँ अप्रस्तुत कार्य से प्रस्तुत कारण की प्रतीति होती है वहाँ प्रतीयमान होने से कारण का प्राधान्य तो बन जाता है लेकिन वाच्य रूप कार्य के विना उसका अस्तित्व नहीं बन पाता। अत: वाच्यार्थ में भी प्राधान्य बना रहता है। इसी तरह कारण से आक्षिप्त कार्य में भी। अत: दोनों में वाच्यार्थ के उपसर्जनीभूत न होने से ध्वनि का यह विषय बन नहीं पाता है।

ध्वन्या०— यदा तु सारूप्यमात्रवशेनाप्रस्तुतप्रशंसायामप्रकृतप्रकृतयोः सम्बन्धस्तदाप्यप्रस्तुतस्य सारूपस्याभिधीयमानस्य प्राधान्येनाविवक्षायां ध्वनावेवान्तः पातः। इतरथात्वलङ्कारान्तरमेव।

लीला— एवञ्च सामान्यविशेषभावसम्बन्धे कार्यकारणसम्बन्धे च ध्वनिविषयतां निरास्य सम्प्रति सरूप्यसम्बन्धाप्रस्तुतप्रशंसामुपस्थापयति ध्वनिदृ-ष्ट्या विवेचनाय यदा तु इत्यादिना। यदा= सामान्यविशेषभावेन नैव च कार्यकार-णभावेन, अप्रस्तुतप्रशंसायां= अप्राकरणिकेन प्रकारणिकावबोधनलक्षणालङ्कारे, अप्रकृतप्रकृतयोः= अप्राकरणिकप्राकरणिकयोः, सम्बन्धः= समभियोगः, तदापि= तस्यां स्थितावपि, अप्रस्तुतस्य= अप्राकरणिकस्य, अभिधीयमानस्य= कथ्य-मानस्य, सरूपस्य= तुल्यरूपस्य, प्राधान्येन= प्राधानतया, अविवक्षायां= असम्म-तत्वे, तस्य, ध्वनौ= ध्वनितत्त्वे, एव= इति व्यवच्छेदे न तु ध्वनेस्तस्मिन्निति, अन्तःपातः= अन्तर्भावनम्, इतरथा= तदतिरिक्तं अप्रस्तुतस्य प्राधान्येन विवक्षायां, तु= इति व्यवच्छेदे, अलङ्कारान्तरं= अलङ्कारभेदः, एवेति।

यत्र च सारूप्यवशादप्रस्तुतः प्रस्तुतमाक्षिपति तदा वा सारूप्यवशेन अप्रकृतप्रकृतयोः सम्बन्धो भवति तदा द्विविधां स्थितिर्भवति। यदि तत्र वाच्यार्थरूपोऽप्रस्तुतः प्राधान्येंन नैव विवक्ष्यते तदा तु स ध्वनेर्विषयो भवति वाच्यस्योपसर्जनीयत्वेन व्यंग्यस्य प्राधान्यात्, किन्तु यदा तत्राप्रस्तुतस्यापि प्राधान्यविवक्षा तदा तु तत्रालङ्कारस्यैव विषय उत्पद्यते। ध्वनिविषयत्वेऽपि तत्र ध्वनेरन्तर्भावस्तु नैव सम्भवति तदपेक्षया ध्वनेर्महाविषयत्वाद् ध्वनेरङ्गित्वात्तस्या-ङ्गत्वाच्च। अङ्गत्वेनैव सोऽलङ्कारध्वनिरिति अभिधीयते। तत्राप्रस्तुतस्यापि प्राधान्यं यथा—

प्राणा येन समर्पिता तव बलाद्येन त्वमुत्थापितः,
स्कन्धे यस्य चिरं स्थितोऽपि विदधे यस्ते सपर्यामपि।

तस्यास्य स्मितमात्रकेण जनयन् प्राणापहारक्रियां
भ्रातः प्रत्युपकारिणां धुरि पुरं बेताल लीलायसे।।

यद्यप्यत्र सारूप्यवशेन कृतघ्नः कश्चिदन्यः प्रस्तुत आक्षिप्यते तथापि अप्रस्तुतस्यैव वेतालवृत्तान्तस्य चमत्कारकारित्वम्। अतोऽयमलङ्कारमात्र एव। अलङ्कारध्वनिविषयस्त्वित्थम्।

शैत्यं नाम गुणस्तवैव सहजः स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति शुचयोः स्पर्शेन यस्यापरे।
किञ्चान्यत्कथयामि ते स्तुतिपदं त्वं जीवनं जीविनां
त्वञ्चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः।।

अत्र कञ्चित्सत्पुरुषं प्रति गुणप्रख्यापनपूर्वकमुपालम्भः प्रस्तुतप्रतीयमानार्थः प्राधान्याय कल्पते अप्रस्तुतजलापेक्षया। तेनायमलङ्कारध्वनिः एवञ्च—

धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः।।

अत्र वाता धन्या इति अप्रस्तुतादर्थादहमधन्य इति वैधर्म्येण प्रस्तुतः प्रतीयमानोऽर्थः प्राधान्याय कल्पते। एवञ्च—

कस्त्वं भोः कथयामि दैवहतकं मा विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायाऽपि परोपकारकृतये मार्गस्थितस्यापि मे।।

अत्राचेतनेन सह प्रश्नोत्तरिका नोपपन्नेति वाच्यस्यासम्भवत्वमेव एव। तेन व्यङ्ग्यस्यैव प्राधान्यं ध्वनिविषयाय।

इस प्रकार सामान्यविशेषभाव एवं कार्यकारणभाव में ध्वनिविषय न बन पाने की बात सिद्ध कर अब सारूप्य से जो अप्रस्तुतप्रशंसा होती है उस पर विचार करते हैं।

जब अप्रस्तुतप्रशंसा में सादृश्य के कारण ही अप्रकृत और प्रकृत का सम्बन्ध होता है तब—

यदि समान रूप वाला वाच्यरूप अप्रस्तुत की वाक्य में विवक्षा न हो तो वह ध्वनि का विषय होता है और उसका ध्वनि में अन्तर्भाव होता है।

नहीं तो यह अलङ्कार ही रह जाता है।

जहाँ सारूप्य के कारण अप्रस्तुत से प्रस्तुत की प्रतीति होती है अर्थात् सारूप्य के कारण अप्रकृत एवं प्रकृत में सम्बन्ध हो जाता है तब दो स्थितियां उत्पन्न होती हैं। एक तो यह कि अप्रस्तुत वाच्य की प्रधानता की अपेक्षा नहीं रहती है और दूसरा रह जाती है। पहली स्थिति में वाच्य के उपसर्जन होने एवं प्रतीयमान के प्राधान्य होने से ध्वनि का विषय बनता है और वही अलङ्कारध्वनि है। जहाँ

वाच्यरूप अप्रस्तुता की भी विवक्षा रहती है तो वहाँ ध्वनि का विषय नहीं बन पाता, केवल वाच्य का अलङ्कार बन पाता है। अलङ्कारध्वनि का उदाहरण है—

हे जल, शीतलता तुम्हारा ही गुण है, तुम्हारी स्वच्छता स्वभाव सिद्ध है, तुम्हारी शुद्धता पर क्या कहें— तुम्हें ही छूकर लोग शुद्ध हो जाते है, इससे और तुम्हारी क्या तारीफ हो सकती है कि तुम प्राणियों के जीवन हो। इतना होते हुए भी तुम नीच मार्ग से चलते हो तो तुम्हें कौन रोक पाएगा? अर्थात् कोई नहीं।

यहाँ अप्रस्तुत जल से प्रस्तुत किसी सज्जन के गुणों का बखान कर उपालम्भ प्रस्तुत है जो कि वाच्यार्थ के प्राधान्य की अपेक्षा नहीं रखता। अत: यह ध्वनि हैं लेकिन इसका अन्तर्भाव ध्वनि में होता है किन्तु ध्वनि का इसमें अन्तर्भाव नहीं हो पाता क्योंकि ध्वनि का विषय इससे भी विस्तृत है।

ध्वन्या०— तदयमत्र संक्षेप:—

व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिन:।
समासोक्त्यादयस्तत्र वाच्यालङ्कृतय: स्फुटा:।।

लीला— एवं समासोक्तिप्रभृतिषु अलङ्कारेषु ध्वनेरन्तर्भावाशङ्कां युक्त्या परिहार्य सम्प्रति उक्तमेवार्थं सारसक्षेपरूपेण प्रतिपादयति व्यङ्ग्यस्येत्यादिना- यत्र वाच्यमात्रानुयायिन: व्यङ्ग्यस्य अप्राधान्यम् तत्र समासोक्त्यादय: स्फुटा: वाच्यालङ्कारा इति पदव्यवस्था।

तत्= पूर्वप्रतिपादितं यन्मतमस्ति तस्य, अत्र= ध्वनिस्वरूपनिरूपणप्रसङ्गे, अयं= वक्ष्यमाणप्रकार:, सारसङ्क्षेप:= सारस्य (तत्वस्य मतस्य) सङ्क्षेप: (साररूपेण कथनम्) इति। इत: पूर्वं ध्वनिविषयमाधृत्य यन्मतं प्रतिपादितं तत्पुन: साररूपेण कथ्यत इति।

यत्र= यस्मिन् काव्ये, वाच्यमात्रानुयायिन:= वाच्य (अभिधेय:) एव तन्मात्रं तद् अनुयाति (उपस्करोति) तच्छीलस्तस्य, आत्मानमुपसर्जनीकृत्य वाच्यार्थच-मत्कारवृद्धिहेतुभूतस्य, व्यङ्ग्यस्य-प्रतीयमानार्थस्य, अप्राधान्यं= गौणत्वं तत्र= तादृशे गुणीभूतव्यङ्ग्यकाव्ये, समासोक्त्यादय:= समासोक्तिप्रभृतयो व्यञ्ज-नामूला अर्थालङ्कारा:, स्फूटा:= चारुत्वस्पष्टत्वहेतव:, वाच्यालङ्कारा:= अभिधेया-र्थचारुत्वोत्कर्षका भवन्ति इति। यस्मिन् काव्ये वाच्यार्थोपस्कारकत्वाद्व्यङ्ग्यार्थस्य गौणत्वं तत्र समासोक्तिप्रभृत्यर्थालङ्कारा: स्पष्टरूपेण वाच्यालङ्कारा: तेन तत्र नैव ध्वनेरवकाश:। ध्वनेरवकाशनिमित्तं द्वेऽवस्थे सम्मते वाच्यार्थस्य गौणभाव-स्तदाक्षिप्तस्य प्रतीयमानार्थस्य प्राधान्यं च। चारुत्वोत्कर्षनिबन्धना ह्रि वाच्य-व्यङ्ग्ययो: प्राधान्यविवक्षा। अलङ्कारेषु विशेषत: पर्यायोक्ते: सङ्करस्याङ्गाङ्गिभावभेदे च सारूप्यनिर्दिष्टाप्रस्तुतप्रशंसायामेव ध्वनेरवकाशसम्भावना। किन्तु तत्रापि अलङ्कारस्य ध्वनावन्तर्भावो न तु तत्र ध्वनेस्तस्यालङ्कारापेक्षया विस्तृतविष-यादङ्गित्वाच्च। अलङ्कारादयस्तु तस्यैवालङ्कृतिहेतव:। अतस्तेभ्य: पृथगेव ध्वनि:। तदितरावस्थायां तु समासोक्त्यादयो वाच्यालङ्कारा एवेति।

अब तक काव्य के चारुत्व हेतु भूत अलङ्कारो में ध्वनि के अन्तर्भाव का जो निरास किया गया था उसका सारसंक्षेप प्रस्तुत करते हैं।

अब तक जो कहा गया उस सबका सारांश यह है–

जिस काव्य में केवल वाच्य अर्थ का वैशिष्ट्य जताने के कारण व्यङ्ग्य अर्थ गौण हो जाता है वहाँ समासोक्ति अलङ्कार स्पष्ट रूप से वाच्य के अलङ्कार होते हैं।

ध्वनि के लिए दो स्थितियों का होना आवश्यक है– एक तो यह कि वाच्य अर्थ व्यङ्ग्य अर्थ में समर्पित होने के कारण गौण बन जाय, दूसरा यह कि चारुत्व का पर्यवासन वाच्य अर्थ से आक्षिप्त व्यङ्ग्य अर्थ में हो अर्थात् वाच्यार्थ की अपेक्षा व्यङ्ग्य अर्थ की प्रधानता हो। ऊपर यह देख लिया गया है पर्यायोक्त, अङ्गङ्गिभाव सङ्कर एवं सरूपता के कारण होने वाले अप्रस्तुतप्रशंसा में थोड़ा बहुत ध्वनि का विषय आ जाता है किन्तु उसमें ध्वनि का अन्तर्भाव नहीं हो सकता क्योंकि अलङ्कार की अपेक्षा ध्वनि का विषय विस्तृत है और ध्वनि अङ्गी है और अलङ्कार अङ्ग। ध्वनि का रहस्य यही है कि ध्वनि वहीं होती है जहाँ चारुत्व का पर्यवसन व्यङ्ग्य अर्थ में हो जाय। शेष सभी अवस्थाओं में अलङ्कार वाच्यार्थ के ही उपस्कारक होते हैं। जहाँ व्यङ्ग्य का प्राधान्य है वह ध्वनि, जहाँ व्यङ्ग्य तो है लेकिन उसकी अपेक्षा वाच्यार्थ का ही प्राधान्य होता है या दोनों में प्रधानता समान रहती है उसे गुणीभूत व्यङ्ग्य एवं जहाँ व्यङ्ग्य है ही या दोनों में प्रधानता समान रहती है उसे गुणीभूत व्यङ्ग्य एवं जहाँ व्यङ्ग्य है ही नहीं उसे शब्दचित्र कहा गया है। ध्वनि में अलङ्कार ध्वनि के सौन्दर्याधायक होते हैं और शेष स्थिति में वाच्यार्थ के।

ध्वन्या०– व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते।।

लीला– इत्थमलङ्काराणां वाच्यार्थोपस्करणस्थिति निर्वर्ण्य सम्प्रति ध्वन्यभाव विषयमुपस्थापयति व्यङ्गस्येत्यादिन–व्यङ्ग्यस्य प्रतिभामात्रे व्रा वाच्यार्थानुगमे वा यत्र तस्य प्राधान्यम् न प्रतीयते तत्र न ध्वनिः इति पदव्यवस्था।

व्यङ्ग्यस्य= प्रतीयमानास्यार्थस्य वाच्याक्षिप्तस्य, प्रतिभामाने= आभासनमात्रे न तु स्फुटत्वेन प्रतीते, यथोपमादौ अस्पष्टार्थप्रतीतिः, वाच्यार्थानुपमे= वाच्येत (अभिधेयेन) अर्थेन (वस्तुना) अनुगमः (समप्रधान्यं) तस्मात्, वा= इति विकल्पे, अपि= इति प्रकरणे, यत्र= यस्मिन् काव्ये, तस्य= व्यङ्ग्यार्थस्य, प्राधान्यं= चारुत्व-पर्यवसानत्वं, न= नैव, प्रतीयते= स्फुटतया अवभासतेऽपि तु वलान्नीयते इति त्रिषु प्रकारेषु, न, ध्वनिः= ध्वनितत्वावकाशः इति।

व्यङ्ग्यस्य अवभासनमात्रे वाच्यार्थसमप्राधान्ये गौणत्वे च नैव ध्वनेरवकाशो भवति। व्यङ्ग्यस्य अवभासनमात्रं यथोपमादौ, वाच्यार्थसमप्राधान्यं यथाऽप्रस्तुत-प्रशंसादौ, स्पष्टतया न प्राधान्यं यथा समासोक्त्यादौ।

अलङ्कारों की वाच्य के मात्र उपस्कारक होने की अवस्था बताने के बाद अब ध्वनि के अभाव क्षेत्र का निर्धारण करते हैं—

जहाँ व्यङ्ग्य का अभास मात्र हो और स्पष्ट रूप से प्रतीति न हो, जहाँ व्यङ्ग्य का वाच्य के समान ही प्राधान्य हो और जहाँ व्यङ्ग्य का प्राधान्य स्पष्ट रूप से प्रतीत न हो वहाँ ध्वनि नहीं होती।

व्यङ्ग्य का आभास मात्र होना जैसे उपमा आदि में, व्यङ्ग्य की वाच्य के समान ही प्रतीति जैसे अप्रस्तुतप्रशंसा आदि में, व्यङ्ग्य का स्पष्ट रूप से प्राधान्य न दिखाई पड़ना जैसे समासोक्ति आदि में ध्वनि का विषय नहीं आ सकता।

ध्वन्या०— तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः।।

लीला— इत्थं ध्वनेरभावक्षेत्रं समालोच्य सम्प्रति ध्वनिविषयं निरुपयति तत्परावेवेत्यादिना— यत्र तत्परौ शब्दार्थौ एव व्यङ्ग्यं प्रति तत्परौ स्थितौ सङ्करोज्झितः स एव विषयः ध्वनेः मन्तव्यः इति पदव्यवस्था।

यत्र= यस्मिन् काव्ये, तत्परौ= व्यङ्ग्यार्थाक्षेपणाय सदोद्यतौ, शब्दार्थौ= अभिधेयाभिधानौ, व्यङ्ग्यं= प्रतीयमानार्थं, प्रति, तत्परौ= समर्पितौ, स्थितौ= निबद्धौ, सङ्करोज्झितः= सङ्करेण। (अलङ्कारानुप्रवेशनसम्भावनाया) उज्झितः (विरहितः) सः= तादृशः, एव= इति व्यवच्छेदे, विषयः= क्षेत्रम्, ध्वनेः= काव्यात्मभूतस्य ध्वनितत्त्वस्य, मन्तव्यः= अवधारयितव्य इति।

यस्मिन्बन्धे शब्दार्थौ तथा सुगुम्फितौ यथा तौ व्यङ्ग्यार्थाक्षेपणाय सदोद्यतौ अर्थमात्मानञ्च गौणीकृत्य व्यङ्ग्योत्कर्षाय समर्पितौ भवतो येन व्यङ्ग्यार्थ एव चारुत्वपर्यवसानं सम्भवेत्, यत्र चालङ्कारानुप्रवेशसम्भावनाऽपि न स्यात्, स एव ध्वनेर्विषयो भवितुमर्हति नान्य इति।

यत्र व्यङ्ग्यार्थ एव न प्रतीयते तत्र तु ध्वनेः सम्भावनामात्रमपि नोत्पद्यते। यत्र व्यङ्ग्यार्थप्रतीतिरस्त्यपि न खलु सर्वविधो व्यङ्ग्यार्थों ध्वनिविषयो भवति। विशेषतो व्यङ्ग्यार्थप्रतीतावपि यत्र तस्य प्राधान्यं न भवति, यत्र स समुज्ज्वलतया न प्रतीयते, यत्र च वाच्यार्थव्यङ्ग्यार्थयोः सममेव प्राधान्यं यत्र च तस्य प्राधान्यं नैव स्फुटं तत्र ध्वनिर्नाक्रामति। ध्वनिस्तु तत्रैव भवति यत्र वाच्याक्षिप्तो व्यङ्ग्यार्थः स्पष्टतया वाच्यातिशायित्वेन सुतरां प्राधान्यमृच्छति। ध्वनित्वेनापेक्षितेन— व्यङ्ग्यार्थेन वाच्याक्षिप्तत्वेन भाव्यमन्यथा पर्यायोक्तेऽपि ध्वनिः स्यात् तत्र हि वाच्य एवार्थो व्यङ्ग्यतयोक्तत्वान्न ध्वनिः। वाच्याक्षिप्तोऽपि व्यङ्ग्यार्थो यदा वाच्यातिशायित्वेन प्राधान्यमृच्छति तदैव ध्वनिसम्भवोऽन्यथा दीपकापह्नुतीत्यादौ ध्वनित्वमुत्पद्येत। ध्वनिरात्मा काव्यस्य। अलङ्काराश्च तस्य चारुत्वहेतवः। ध्वनिः स्वामिस्थानीयोऽलङ्काराश्च सेवकस्थानीयाः। ध्वनिर्व्यङ्ग्यव्यञ्जकभावमाश्रित्य प्रवर्ततेऽलङ्कारास्तु वाच्यवाचकभावमाश्रयन्ते। तेन ध्वन्यलङ्कारयोर्नैव तादात्म्यसम्भवः। इति ध्वन्युपनिषद्।

इस प्रकार ध्वनि के अभाव क्षेत्र का विवेचन करने के बाद अब ध्वनि के विषय का निरूपण करते हैं।

जहाँ व्यंग्य अर्थ को आक्षिप्त करने में तत्पर शब्द एवं अर्थ व्यंग्य के प्रति तत्पर हो कर रहते है और जहाँ अलङ्कारों के अनुप्रवेश की सम्भावना न हो वही ध्वनि का विषय होता है।

इन सबका निष्कर्ष यह हुआ कि ध्वनि वहीं होती है जहाँ वाच्यार्थ के द्वारा आक्षिप्त व्यङ्ग्यार्थ स्पष्ट रूप से प्रधान बने अर्थात् चारुत्व का पर्यवसान वाच्यार्थ से आक्षिप्त व्यङ्ग्यार्थ में हो। केवल व्यङ्ग्य मात्र ध्वनि नहीं बन पाता और जहाँ व्यङ्ग्य नहीं है वहाँ तो सवाल ही नहीं पैदा होता है। वाच्यार्थ से आक्षिप्त व्यङ्ग्य ही ध्वनि का विषय बन सकता है व्यङ्ग्य तो है लेकिन स्वयं वाच्यार्थ बनता है तो वहाँ भी ध्वनि नहीं होती। जहाँ अलङ्कारों के प्रवेश मात्र की भी सम्भावना न हो वहीं ध्वनि होती है। अलङ्कार वाच्यवाचकभाव में होते है और ध्वनि व्यङ्ग्यव्यञ्जक भाव में। अलङ्कार और ध्वनि में तालमेल बैठ नहीं पाता है। यहीं ध्वनि का रहस्य है।

ध्वन्या०— तस्मान्न ध्वनेरन्यत्रान्तर्भावः। इतश्च नान्तर्भावः, यतः काव्यविशेषोऽङ्गी ध्वनिरिति कथितः। तस्य पुनरङ्गानि अलङ्कारा गुणा वृत्तयश्चेति प्रतिपादयिष्यन्ते। न चावयव एव पृथग्भूतोऽवयवीति प्रसिद्धः। अपृथग्भावे तु तदङ्गत्वं तस्य। न तु तत्त्वमेव। यत्रापि वा तत्त्वं तत्रापि ध्वनेर्महाविषयत्वान्न तन्निष्ठत्वमेव।

लीला— सम्प्रति सिद्धं पुनरुपस्थापयति दार्ढ्याय तस्मान्नेत्यादिना तस्मात्= तेनैव हेतुना— अन्यच्चालङ्कारक्षेत्रमन्यदेव च ध्वनेः प्रक्षेत्रमिति कारणेन, ध्वनेः= काव्यात्मभूतस्य, ध्वनितत्वस्य, अन्यत्र= ध्वनिनिमित्तकक्षेत्रं विहायेतरत्रालङ्का-रादिषु, न, अन्तर्भावः= समायोजनम्। इतः पूर्वं यदपि प्रतिपादितं तेनैवैतत्सिध्यति यन्नास्ति ध्वनेरन्यत्रान्तर्भावसम्भावना। नैतावन्मात्रम्। इतः= वक्ष्यमाणकारणात् च, अपि, ध्वनेरन्यत्र, न, अन्तर्भावः, यतः= यस्माद्धेतोः, काव्यविशेषः= काव्यत्वेन व्यवहृतः, ध्वनिः, अङ्गी= अयववी, इति= इत्थं, कथितः= अभिहितः। तस्य ध्वनेः, पुनः= इति नैरन्तर्ये, अङ्गानि= अवयवाः अलङ्काराः= शब्दार्थोभयगता अनुप्रसोपमादयः काव्यशोभातिशयहेतवः, गुणाः= शब्दार्थोभयगता ओजःप्रासा-दमाधुर्यादयः काव्यशोभाकर्तृधर्माः, वृत्तयः= उपनागरिकाद्या गुम्फनप्रकाराश्च, इति= प्रकरणनिर्देशे, प्रतिपादयिष्यन्ते= निर्द्धारयिष्यन्ते। अनेन ध्वनिरवयवी अलङ्काराश्चावयवा इति निश्चितम्। न= नैव, च पृथग्भूतः= एकैकः, अवयवः= अङ्गम्, एव अयवयी= अङ्गी, इति= इत्थं, प्रसिद्धः= ख्यातः। न केवलं पृथग्भूतोऽवयवोऽवयवी भवितुमर्हत्यपितु समुदायमध्यनिपतितोऽपि अवयवो नैवावयवी भवति यतः अपृथग्भावे= संयुज्य स्थितौ, तु तस्य= अवयवस्य तदङ्गत्वं= तस्य अवयविनः अङ्गत्वमवयवत्वम् यतो न स एक एव

समुदायोऽन्येषामपि समुदायिनां तत्र भावात्। किञ्च तत्समुदायमध्ये प्रतीय-मानमन्येपि। न च तदलङ्कारररूपं तस्य प्रधानत्वात्। यत्त्वलङ्कारररूपं तदप्रधानत्वान्न ध्वनिः। तेन न= नैव, तु= इति व्यवच्छेदे, तत्त्वं= प्रधानं, एव। पृथग्भावे तु अवयवो नैवावयवी भवति यतः अवयवित्वं प्रधानत्वे सिध्यति न तु स्वरूपमात्रे। अपृथग्भावे तु अवयवोऽवयविनोऽङ्गमेव भवति न तु प्रधानमेव। यत्रापि= यस्मिन्नवसरे, वा तत्वं= प्रधानं, तत्रापि= प्रधानत्वेऽपि, ध्वनेः= काव्यात्मभूतस्य ध्वनितत्वस्य, महाविषयत्वात्= तदपेक्षया विस्तृतक्षेत्रत्वात्, न= नैव, तन्निष्ठत्वं= तदवस्थिततत्वं, एव= इत्यवधारणे। तादृशस्यावयवस्य यत्र कुत्र प्रधानत्वमपि कामसिध्येत् किन्तु तत्रापि न तत्र ध्वनेरन्तर्भवनं तस्य तदपेक्षया विस्तृत-विषयत्वात्।

ध्वन्यलङ्कारयोर्नैव तादात्म्यं सम्भवति तयोरन्योन्यविरुद्धव्यङ्ग्यव्यञ्ज-कभाववाचकभावसमाश्रयत्वात् नैतावन्मात्रमपितु तयोरङ्गाङ्गिभावाच्च। काव्या-त्मभूतो ध्वनिरङ्गी तस्य च अलङ्कारगुणवृत्तयोऽङ्गानि। तैः स सुसज्यते। एकैकमङ्गं पृथग्भूतं नैव पूर्णावयवी भवितुमर्हति नैव च समुदायस्थ एक एव समुदायसंज्ञां लभते। अवयवानां समुदाय एवावयवी भवितुमर्हति। तेनैकस्यैवावयवस्या-वयविना सह तादात्म्यं तु नैव सम्भवति। समुदायेषु तु प्रतीयमानोऽप्यर्थः अवयवेष्वेकत्वेन स्थितो यः प्रधानरूपेण स्थितत्वादलङ्कारसंज्ञां नैव लभते स एवाप्रधानत्वे ध्वनित्वमपि नैव ऋच्छति। तेन नैवाङ्गत्वेन स्थिता अलङ्कारा अङ्गिनो ध्वनेरास्पदं गृह्णन्ति। तेन समुदाये तु अलङ्काराणामङ्गत्वमेव सिध्यति न तु तत्त्वम्। यत्र कुत्र यथा पर्यायोक्ताङ्गाङ्गिभावसङ्करसारूप्यसम्बन्धाप्रस्तुतप्रशंसादौ तत्त्वं सिध्यत्यपि तद् ध्वनेरङ्गमेव भवति अलङ्कारध्वनित्वेन। किन्तु ध्वनेस्तन्निष्ठता तु नैव सम्भवति तदितरविषयेष्वपि ध्वनेरवकाशात्। तेन न ध्वनेरलङ्कारनिष्ठत्वम्।

जो युक्तियों के द्वारा सिद्ध किया गया है उसे एकत्रित करते हैं—

इस कारण ध्वनि का अन्यत्र कहीं अन्तर्भाव नहीं हो सकता और कहे जाने वाले कारणों से भी अन्तर्भाव नहीं हो सकता, क्योंकि काव्यविशेष जो ध्वनि है वह अङ्गी माना गया है और अलङ्कार, गुण, वृत्ति आदि उसके अङ्ग माने गए है, जो कि बाद में प्रतिपादित किए जायेंगे। न तो अवयव ही अवयवी से से पृथक् होकर अवयवी बन सकता है क्योंकि अवयवित्व तो प्राधान्य में रहता है और एक समुदाय में अनेक अवयव होते है और सबकी प्रकृति अलग-अलग होती है। इसलिए समुदाय में रहता हुआ कोई एक अवयव अवयवी नहीं बन पाता। वह केवल अङ्ग के रूप में ही रहता है। समुदाय में प्रतीयमान अर्थ भी रहता है वह प्रधान होने से अलंकार नहीं बन सकता और यदि अप्रधान हो तो ध्वनि भी नहीं बन सकता और यदि अप्रधान हो तो ध्वनि भी नहीं बन सकता। अगर अलंकार कहीं प्रतीयमान होकर प्रधान बन भी जाय जैसे कि अङ्गाङ्गिभावसङ्कर में

वह भी ध्वनि का पूरा क्षेत्र नहीं हो सकता क्योंकि ध्वनि अलङ्कार से बाहर वस्तु एवं रस में भी होती है। अतः ध्वनि की अलङ्कारनिष्ठता कभी भी नहीं बन सकती। हाँ, अलङ्कारध्वनि ध्वनि का एक भेद बन पाता है यदि वह वाच्यार्थ के आश्रित होकर प्रतीयमान रूप में प्राधान्य प्राप्त करे।

ध्वन्या०— 'सूरिभिः कथित' इति विद्वदुपज्ञेयमुक्तिः न यथाकथञ्चित्प्रवृत्तेति प्रतिपाद्यते। प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति।

लीला— कारिकागतं ध्वनिशब्दं व्याख्याय सम्प्रति तस्य प्रामाणिकत्वसिद्धयेऽन्येषामपि मतव्याख्यानायादत्ते वृत्तिकारः सूरिभिरित्यादिकारिकाभागम्।

सूरिभिः= विद्वद्भिः, कथितः= निर्दिष्टः, इति= इत्थं, विद्वदुपज्ञा= विद्वद्भ्यः (शास्त्रपारंगतेभ्यः) उपज्ञाता विद्वद्भिः प्रथमत उपक्रान्त इतिप्रतिपादनपरा, इयं= पूर्वोक्ता, उक्तिः= कथनम्। अनेन न-नैव, यथाकथञ्चित्= येन केन प्रकारेण काष्ठपाषाणसंयोग इव, प्रवृत्ता= उपक्रान्ता, इति= इत्थं, प्रतिपाद्यते= सप्रमाणमभिधीयते। सूरिभिः कथितः इति कारिकायां यदुक्तं तस्यायमेवाशयो यद् ध्वनिर्विद्वत्सु पारम्पर्यक्रमेण प्रचलितोऽस्ति नैव यथा तथा वैदुष्यप्रदर्शनाय प्रवर्तित इति। के च ते सूरय इत्यपेक्षायां कथ्यते प्रथमे= आद्या अत एव मुख्याः, विद्वांसः= सूरयः, वैयाकरणाः= शब्दानुशासनपारङ्गताः। कथं ते एव तादृशाः किमन्ये नासन्नित्यपेक्षायां कथयति सर्वविद्यानां= सर्वविधशास्त्राणां, व्याकरणमूलत्वात्= शब्दानुशासनयोनित्वात्। पदपदार्थाधीनं शास्त्रं तस्यावगमश्च व्याकरणादिति सर्वासामेव विद्यानां व्याकरणमूलत्वम्। षडङ्गेषु तस्यैव प्राधान्यकथनाच्च। इत्थं वैयाकरणानां सर्वप्राधान्यमवस्थाप्य ध्वनिविषये तेषां मतपुस्थापयति-ते= वैयाकरणाः, च, श्रूयमाणेषु= श्रावणप्रत्यक्षविषयतावच्छेदकधर्मेषु, वर्णेषु= अक्षरेषु, ध्वनिः, इति, व्यवहरन्ति= प्रयुञ्जन्ति।

सोऽयं ध्वनिश्च विद्वत्सु प्राचीनकालादेव लब्धप्रतिष्ठः। विद्वांसो वैयाकरणास्तन्मूलत्वात्सर्वशास्त्राणाम्। ते च कर्णगोचरीभूयमानान् वर्णान् ध्वनिशब्देन व्यपदिशन्ति। वैयाकरणाश्च शब्दार्थयोस्तादात्म्यं मन्यते यः शब्दः सोऽर्थः स शब्द इति। प्रतीतपदार्थको लोके ध्वनिः शब्दः। उक्तञ्च—

यः संयोगवियोगाभ्यां करणैरुपजायते।
स स्फोटः शब्दजः शब्दो ध्वनिरित्युच्यते बुधैः।। इति।

वैयाकरणानुसारं न कस्यापि शब्दस्य बाह्योऽर्थः किन्तु वस्तुनो यद्भावात्मकचित्रमन्तःकरणे उपतिष्ठति तस्यैवाकृतिर्जातिपदवाच्या शब्दबोध्यो वास्तविकोऽर्थश्च, अर्थात् उच्चार्यमाणेन शब्देन यद्वस्तु प्रतिपद्यते तस्य शब्दस्य तदेवार्थः। शब्देऽर्थप्रतीतिजनकतारूपा योग्यता अनादिरूपा। शब्दार्थयोरवस्थिति-

र्यावदवचेतनचित्ते भवति तावत्तयोस्तादात्म्यं स्वसिद्धम्। इयमेव तादात्म्यावस्था परेत्युच्यते। यदा सा वस्तुरूपे बुद्धिग्रहणं करोति तदा सैव पश्यन्तीत्युच्यते। परायाः स्थानं नाभिःपश्यन्त्याश्च हृदयम्। यदा सैव वस्तुग्रहणं करोति तदा सा मध्यमेत्युच्यते तस्याश्चावस्थानं कण्ठः। निर्विकल्पत्वं परालक्षणं वस्तु प्रतीतिः पश्यन्ती लक्षणं पृथग्रूपेण वस्तुभेदप्रतीतिश्च मध्यमास्वरूपम्। तिसृष्वेवैतास्ववस्थासु नैव वर्णानां पृथग्रूपेण बोधः। यदा च तदेव प्रतीतवस्तु परग्राह्यत्वेनाभिव्यज्यते तदा सा बैखरी भवति। बैखर्या इयमेव विशेषता यदस्यामवस्थायां स्थानप्रयत्नबलाद्वर्णाः पृथक्पृथग्रूपेणाभिव्यक्ता भवन्ति। वैयाकरणमतेऽयमेव ध्वनिः। येन वायुसंयोगेन स्थानप्रयत्नबलाच्छब्दोभिव्यक्तो भवति स एव ध्वनिः। तेनैव वृत्तौ कथित श्रूयमाणेषु वर्णेषु ध्वनिरिति। बैखर्यावस्थायां वायुसंयोगाद् यदपि उच्चार्यते तदपि स्थानप्रयत्नबलाद्वर्णतां परिणमते। तदेव च यदा श्रवणगोचरीभवितुमर्हति स एव ध्वनिरिति वैयाकरणानामभिमतम्। अत एवोक्तं शब्दजशब्द एव ध्वनिरिति। यथैवोच्चरितः शब्दो बीचित्तरङ्गन्यायेन श्रवणपथपर्यन्तमायाति तस्यैव घण्टानुरणनरूपो ध्वनिः। यथा च यः स्थानकरणानां संयोगविभागाभ्यां प्रथममुपजायते स शब्दः स्फोटः। तस्मांच्छब्दाज्जाताः शब्दा द्रुतादिवृत्तिहेतवो वैकृता ध्वनयः शब्दाभिव्यक्ति-वादिभ्योऽन्यैरुक्ताः। नित्यस्फोटवादिनां मते तु स्थानकरणसंयोगजविभाग-जध्वनिव्यङ्ग्यः स्फोटो न तु कार्यः इति।

इस प्रकार कारिका में दिए गए ध्वनि की युक्तिपूर्वक संस्थापना करने के बाद अब कारिका के अनुसार ही उस ध्वनि की बैधता एवं प्राचीनता सिद्ध करने के लिए आगे बढते हैं।

कारिका में जो 'सूरिभिः कथितः' विद्वानों ने कहा है' कहा गया है वह कथन इसका पहला उपक्रम विद्वानों से ही होने की बात बताने के लिए है। अर्थात् ध्वनि पहले विद्वानों से स्थापित है न कि किसी तरह प्रवर्तित किया गया है। प्रथम विद्वान् जो हैं वे वैयाकरण हैं क्योंकि सभी विद्याओं का मूल व्याकरण है। वे वैयाकरण सुने जाने वाले वर्णो में ध्वनि शब्द का व्यवहार करते हैं। यह ध्वनिसिद्धान्त प्राचीन काल से ही विद्वानों से प्रवर्तित हैं न कि आज किसी तरह प्रतिपादित किया गया है। वे विद्वान् वैयाकरण हैं क्योंकि व्याकरण ही सब शास्त्रों का मूल आधार है। शास्त्र शब्द में आश्रित होते है और शब्द व्याकरण से ही सिद्ध होते है। अतः व्याकरण की सर्वश्रेष्ठता स्वतः सिद्ध है। वैयाकरण सुने जाने वाले वर्ण को ही ध्वनि कहते हैं। उच्चारण अवयवों के संयोग अथवा वियोग से जो शब्द निकलता है, वह स्फोट है और उस शब्द से जो शब्द निकलते है वे सब ध्वनि है। जब वाणी वायुसंयोग से प्रेरित होकर स्थान एवं प्रयत्न के आधार पर उच्चरित होती है तब वह अपने को अनेक वर्णो में विभक्त करती है और वही वर्ण ध्वनि

कहे जाते हैं क्योंकि घण्टानाद के बाद अनुरणन की तरह वे भी उच्चरित होने के बाद बीचितरङ्गन्याय से उच्चारणस्थान से श्रोता के कान तक अनुरणन के रूप में ही पहुंचते हैं अतः वे ही ध्वनियाँ हैं।

ध्वन्या०— तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्तवार्थदर्शिभिर्वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद्ध्वनिरित्युक्तः।

लीला— एवं वैयाकरणसिद्धं ध्वनिमुपवर्ण्य सम्प्रति काव्ये तस्य प्रतिपतिं निदिशति तथैवेत्यादिना— तथैव= तदनुसारमेव-यथा घण्टावादनानन्तरोत्पन्नानुरणनमिव करणद्वारोच्चारितशब्दध्वननानन्तरं यच्छ्रूयते स एव वर्णात्मको ध्वनिरिति यदुक्तं तदनुरूपमेव, तन्मतानुसारिभिः= तेषां वैयाकरणानां यन्मतं शब्दानुरणंन ध्वनिरिति सिद्धान्तः तदनुसरन्ति अनुगच्छन्ति तच्छीला इति तैः, काव्यतत्त्वार्थदर्शिभिः= काव्यस्य कविकृतेः तत्त्वार्थ परमरहस्यं विदन्ति जानन्ति तच्छीला इति तैः, सूरिभिः= विद्वद्भिः, वाच्यवाचकसंमिश्रः= वाच्योऽभिधेयः वाचकोऽभिधानं ताभ्यां संमिश्रः आक्षिप्तः, शब्दात्मा= शब्दनं शब्दः शब्दआत्मपदसाहचर्यात्, काव्यमिति= काव्यविशेष इति, व्यपदेश्यः= संज्ञेयः, व्यञ्जकत्वसाम्यात्= व्यञ्जकः व्यनक्त्यसाविति व्यञ्जकोऽनुरणकस्तेन साम्यात् समानधर्मात्-तथा व्याकरणे उच्चरितस्य शब्दस्यानुरणनरूपो ध्वनिस्तथैव काव्येऽपि वाच्यवाचकानुरणनरूप इति, ध्वनिः, इति, उक्तः= कथितः।

यथा च वैयाकरणैः करणैः संयोगवियोगव्यापारेणोच्चरितशब्दानुरणनरूपो वर्णात्मकस्तत्प्रतीतिरूपो ध्वनिर्निर्दिष्टस्तदनुगैः काव्यविद्भिरपि वाच्यवाचकसहितः समिश्रः शब्दव्यापारस्वरूपो व्यञ्जनागम्यत्वात्काव्यव्यपदेश्यः व्यङ्गचव्यञ्जकसाम्याद् ध्वनिरिति कथित इति। एवं घण्टानिर्ह्लादस्थानीयः अनुरणनात्मोपलक्षितः व्यङ्ग्योऽप्यर्थो ध्वनिरिति व्यवहृतः। व्यञ्जकौ शब्दार्थावपि ध्वनिसंज्ञितौ। तथा प्रसिद्धेभ्यः शब्दव्यापारेभ्योऽभिधाातात्पर्यलक्षणारूपेभ्योऽतिरिक्तो व्यापारो ध्वनिः। तद्योगाच्च सम्मतमपि काव्यं ध्वनिः। व्याकरणे यथा च शब्दस्तथैव काव्ये वाच्यवाचकौ, अनुरणनञ्च समानमेव। व्यतीतेषु च शब्देषु तथा तेषामनुरणनरूपो ध्वनिः श्रवणगोचरीभूय वर्णतां प्रतिपद्यते तथैव वाच्यवाचकयोरपि उपसर्जनीभूतयोरनुरणनरूपो ध्वनिर्ब्यङ्ग्यार्थरूपः काव्यतां प्रतिपद्यते। तेन वाच्योऽपि ध्वनिर्वाचकोऽपि ध्वनिः शब्दः द्वयोरपि व्यञ्जकत्वं ध्वननमिति कृत्वा। एवञ्च व्यङ्ग्योऽपि ध्वनिर्व्यापारोऽपि ध्वनिस्तकाव्यव्यपदिष्टोऽर्थश्च ध्वनिरिति दिक्।

यथा च पूर्वं पूर्वमुच्चारितो वर्णोऽपि स्वसंस्कारमागामिवर्णे निधाय गच्छति तं च संस्कारमादायान्तिमो वर्णः पदार्थं बोधयति। तथैव तत्संस्कारवशाद्यः प्रतीयमानोर्थोऽभिव्यज्यते प्रधानत्वेन स एव ध्वनिरित काव्ये।

वैयाकरणों में प्रचलित ध्वनि का परिचय कराने के बाद वृत्तिकार काव्य की ध्वनि से उसका सम्बन्ध जोड़ने के लिए युक्ति का उपस्थापन करते हैं।

उसी तरह उन वैयाकरणों के मत के अनुसार चलने वाले काव्य के मर्मज्ञ विद्वानों ने वाच्य एवं वाचक के साथ संमिश्रण वाला, शब्द के व्यापार से उद्‌भूत, काव्यविशेष की संज्ञा से विभूषित जो तत्व है वह व्यञ्जकत्व के साम्य से ध्वनि कहा गया है।

जिस प्रकार घण्टानाद के बाद उसमें अनुरणनता होती है उसी प्रकार वैयाकरणों ने शब्द के अनुरणन को ध्वनि कहा है। उसी तरह काव्य में भी वाच्य अर्थ एवं वाचक शब्द के अनुरणन रूप में उपलक्षित होने वाला व्यङ्ग्य अर्थ भी ध्वनि शब्द से सम्बोधित है।

अखण्ड स्फोट की वर्णों के रूप में व्यक्ति व्यञ्जना के द्वारा होती है और उस व्यञ्जक को ध्वनि कहा जाता है। इसी साम्य के आधार पर व्यञ्जक शब्द एवं अर्थ ध्वनि कहे जाते हैं।

ध्वन्या०— न चैवंविधस्य ध्वनेर्वक्ष्यमाणप्रभेदतद्‌भेदसङ्कलनया महाविषयस्य यत्प्रकाशनं तदप्रसिद्धालङ्कारविशेषमात्रप्रतिपादनेन तुल्य-मिति तद्‌भावितचेतसां युक्त एव संरम्भः। न च तेषु कथञ्चिदीर्ष्यया कलुषितशेमुषीकत्वमाविष्करणीयम्। तदेवं ध्वनेस्तावदभाववादिनः प्रत्युक्ताः।

लीला— एंव व्याकरणप्रसिद्धध्वनिना सह काव्यध्वनि समायोज्य सम्प्रतित-दस्तित्वनिमित्तकं यत्सिद्धं मतं तदेव दार्ढ्याय पुनरूपस्थापयति न चैवंविध-स्येत्यादिना—न, च= अपि, एवंविधस्य= सर्वविधप्रमाणसिद्धस्य, ध्वनेः= ध्वनित-त्वस्य, वक्ष्यमाणप्रभेदतद्‌भेदसङ्कलनया= कथ्यमानमुख्यभेदोपभेदसमाहारेण, महाविषयस्य= सुविस्तृतक्षेत्रस्य, यत्= यथा, प्रकाशनं, तत्= तादृशं प्रकाशनं, अप्रसिद्धालङ्कारविशेषमात्रप्रतिपादनेन= अप्रसिद्धः अतथासम्मतः यः अलङ्कार-विशेषः— पश्चादपि प्रदर्शयिष्यमाणो वाग्विकल्पानामानन्त्यात्, स एव तन्मात्रं तस्य प्रतिपादनेन समर्थनेन, तुल्य= समम्, इति हेतोः, तद्भावितचेतसां= तेन ध्वनि भावितानि चमत्कृतानि चेतांसि मनांसि येषान्तेषां-ध्वनिरहस्यप्रभावित मनसां, संरम्भः= ध्वनिप्रतिपादनपर उपक्रमः, युक्तः= सामयिकः, एव= इति समर्थने। तेन, तेषु= काव्यात्मभूतध्वनिप्रतिपादकेषु, कथञ्चिद्= यथाकथमपि ,= ईर्ष्याया द्वेषेण कलुषित शेमुषीतत्वं सन्दूषित बुद्धितत्वं न नैव आविष्यकरणीयं-प्रकटनीयम्। तद्= तस्मात्, एवं= पूर्वोक्तरीत्या, ध्वनेः= काव्यात्मभूतस्य ध्वनित-त्वस्य, तावत्= प्रथमं, अभाववादिनः= नास्त्येव ध्वनिरिति समर्थकाः, प्रत्युक्ताः= प्रत्यभिहिता इति।

एवञ्च ध्वनेर्न केवलं काव्य एवापितु वैयाकरणसम्मतत्वमपि प्रतिपादितम्।

इत्थं काव्ये प्रतिष्ठापितस्य वैयाकरणमतेनाऽपि सम्मतस्य ध्वनेः कथ्यमान-सलक्ष्यक्रमादिप्रभेदतद्भेदसमायोजनेनाशेषलक्ष्यव्यापिनो यत्काव्यात्मत्वेन प्रति-पादनं तादृशगरिमामयस्य अतथास्थापितालङ्कारविशेषप्रतिपादनसमं नैव भवत्येव यथा च वाग्विकल्पानामानन्त्यसमर्थकैरुक्तं तेन ध्वनिचमत्कृतमानसानां ध्वनि-विवेचनाय य एव उपक्रमः कृतः स नितान्तमुपयुक्तं आवश्यकश्च। प्रतिपक्षि-भिश्च तेषां तादृशशुभप्रयासे ईर्ष्यादिवशात्सन्दूषितमनीषात्वं न प्रकल्पनीयमिति ध्वन्यभाववादिनः प्रत्यभिहिताः ध्वनिश्च सर्वविधदृष्ट्या काव्यात्मत्वेन स्थापितश्चेति।

अभाववादियों में कुछ की ऐसी भी आशङ्का होने की सम्भावना है कि वाग्विकल्प की अनन्तता के कारण कहीं कुछ ध्वनि नाम का तत्त्व हो भी तो इसके पश्चाद् भी आविष्कृत होने वाले अलङ्कार में उसका समायोजन हो सकता है, का निराकरण हेतु कहते हैं—

तो इस प्रकार से सभी प्रकार से सिद्ध एवं कहे जाने वाले संलक्ष्यक्रम आदि भेद और उनके अनेक उपभेद आदि को मिलाकर समग्र काव्यता में भी व्याप्त ध्वनि का जो विवेचन है वह अप्रसिद्ध किसी अलङ्कारविशेष के प्रतिपादन के तुल्य तो हो नहीं सकता। अतः ध्वनि से चमत्कृत चित्त वाले विद्वानों ने जो ध्वनि के विवेचन के लिए कार्य का प्रारम्भ किया है, वह एकदम उपयुक्त है। उसमें किसी को भी ईर्ष्या से किसी भी प्रकार से मन में कलुषित भाव लेना नहीं चाहिए। तो इस प्रकार ध्वनि के अभाववादी जो हो सकते हैं वे निरुत्तर कर दिए गए।

ध्वन्या०— अस्ति ध्वनिः। स चासावविवक्षितवाच्यो विवक्षितान्य-परवाच्यश्चेति द्विविधः सामान्येन।

लीला— प्रकरणतस्तु ध्वन्यभाववादनिराकरणानन्तरं भाक्तवादिनामशक्य-लक्षणवादिनाञ्च मतखण्डनमण्डनं प्रासङ्गिकं किन्तु तद्भेदोपदर्शनेनाभाववादि-निराकरणदार्ढ्याय सम्प्रति ध्वनेर्मुख्यप्रभेदावुपस्थापयति सिद्धसिद्धान्तोद्घोष-णापूर्वकमस्तीत्यादिना-ध्वनिः= काव्यात्मत्वेन सम्मतं ध्वनितत्त्वं, अस्ति= प्राशस्त्येन विद्यते न केवलं कपोलकल्पनायामपितु स्वरूपेणैव विद्यत इति तस्य प्रभेदावुपदिशति स इत्यादिना सः= अस्तित्वशाली, च, असौ= ध्वनिः, सामान्येन= प्रथमतः, अविवक्षितवाच्यः= अविवक्षितः अप्रधानीकृतः वाच्यः स्वात्मा येन तादृशः व्यञ्जकोऽर्थः, विवक्षितान्यपरवाच्यः= विवक्षितः प्रधानीकृतः अन्यपरः स्वभिन्नसम्बन्धः वाच्यः स्वात्मा येन स इति-यत्रार्थ कदाचिदनुप-पद्यमानत्वादिना निमित्तेन अविवक्षितो भवति कदाचिदुपपद्यमान इति कृत्वा विवक्षित एव भवति, च, इति= इत्थं, द्विविधः= द्विप्रकारकः भवतीति शेषः।

तदित्थं काव्यात्मत्वेन प्रतिष्ठितो ध्वनिः स्वरूपत्वेनैवास्तित्वं भजते। तस्य च वस्त्वलङ्काररसादीनधिकृत्य अनेके भेदाः सम्भवन्ति किन्तु प्रथमतः

अविवक्षितवाच्यविवक्षितान्यपरवाच्यभेदेन द्वौ मुख्यौ भेदौ भवतः। तत्र अविवक्षितोऽप्रधानीकृतोवाच्य स्वात्मा येन स इति व्यञ्जकोऽर्थः, अविवक्षितो वाच्येति मुख्यार्थो येन स इति व्यञ्जकशब्दः, अविवक्षितो वाच्योऽभिधेयो यस्यामिति व्यञ्जनाव्यपारः, अविवक्षितो वाच्यो यस्य इति व्यङ्गयोऽर्थः, अविवक्षितो वाच्यो यस्येति वाचकः शब्दः, अविवक्षितः वाच्यः स्वात्मा येनेति वाच्योऽर्थश्च। एवमेव विवक्षितः अन्यपरो व्यङ्ग्यपरः वाच्यो येन स इति व्यञ्जकः शब्दः, विवक्षितोऽन्यपरो वाच्यो यस्यामिति व्यञ्जनाव्यापारः, अविक्षि-तवाच्यस्तत्रैव सम्भवति यत्र वाच्यस्य विबक्षैव न क्रियते। स तु अर्थान्तरे सङ्क्रमितो भवति वा नितान्तमेव तिरस्कृतो भवति। तेनाऽसौ लक्षणामूलोन ध्वनिरित्युच्यते प्रयोजनपरस्य रूढौ ध्वनेरसम्भवात्। विवक्षितान्यपरवाच्यस्तु अभिधामूलकः व्यञ्जनाव्यापारयोगे वाच्यार्थस्य द्वे स्थिती भवतः क्वचितु वाच्यार्थस्य वाक्येऽनन्वयसिध्देस्तस्य विवक्षैव न भवति क्वचितु वाच्यार्थोऽपि वाक्येऽन्वेति किन्तु तदतिरिक्तं स्वसौभाग्यवशाच्छब्दः कमपि नवीनमप्यर्थं व्यनक्ति प्रयोगवैशिष्ट्यात्स्वकीयवैशिष्ट्याद्वा। अत एव वाच्यार्थादारभ्य व्यङ्ग्यार्थप्रतीतिपर्यवसानपर्यन्तमपि शब्दः स्वसौभाग्यमहिम्ना विलसति। यत्र व्यङ्ग्यार्थप्रतीत्यर्थं वाच्यार्थो नितान्तमेवाविवक्षितो भवति स अविवक्षितवाच्यः। यत्र च व्यङ्ग्यार्थेन सहवाच्यार्थस्याऽपि प्रतीतिर्दीपघटन्यायेन्-यथा दीपः स्वयमपि प्रकाशते घटमपि प्रकाशयति तथैव, स विवक्षितान्यपरवाच्यः। अविवक्षितवा-च्येऽर्थस्याविवक्षातः प्रधानतया शब्दो व्यञ्जको भवति द्वितीये तु अर्थ एव द्वितीयमर्थमभिव्यनक्तीति प्रधानतयाऽर्थ एव व्यञ्जको भवति। अत्र केचिद्विप्र-तिपद्यन्ते। यद्यदा वाच्यार्थोऽप्यभीष्टः स चार्थान्तरमपि व्यनक्ति इति वदतोव्याघात इति। किन्तु एकोऽप्यर्थः आत्मानं केनचिदपरेण विशिष्टार्थेन सह अभिव्यनक्तीति का हानिः। ध्वन्यतेऽनेति ध्वनिर्व्यापारोऽपि तत्र शब्दोऽर्थश्चोभौ कारणम्।

इस प्रकार ध्वनि की स्थापना कर लेने के बाद उसका अस्तित्व प्रमाणित करने हेतु उसके भेदों के साथ फिर उपस्थापित करते हैं।

ध्वनि है, न केवल शास्त्रों में अपितु व्यवहार में भी। अर्थात् ध्वनि कोई कल्पना नहीं है यह एक यथार्थ सत्य है। उसके सामान्यतः दो भेद हैं- अविवक्षितवाच्य एवं विवक्षितान्यपरवाच्य। जहाँ वाच्य अर्थ की कोई विवक्षा नहीं होती वह अविवक्षितवाच्य एवं जहाँ पर वाच्य अर्थ की कोई विवक्षा नहीं होती वह अविवक्षितवाच्य एवं जहाँ पर वाच्य अर्थ अपने अस्तित्व के साथ-साथ अन्य अर्थ का भी व्यञ्जक होता है वह विवक्षितान्यपरवाच्य। पहले में अर्थ की उपेक्षा होने के कारण शब्द ही व्यञ्जक होता है और दूसरे में अर्थ की उपादेयता के कारण अर्थ ही व्यञ्जक होता है।

ध्वन्या०— तत्राद्यस्योदाहरणम्—

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्।।

लीला— अविवक्षितवाच्यस्योदाहरणं प्रस्तुवन् भूमिकां निबध्नाति तत्रेत्यादिना तत्र= अविवक्षितवाच्यविवक्षितान्यपरवाच्यभेदयोः, आद्यस्य= प्रथमस्य अविवक्षितवाच्यस्य स एव प्रथमक्रमे उक्तत्वात्, उदाहरणं= निदर्शनं, यथा= वक्ष्यमाणप्रकारमिति। अत्राभिधामूलस्य क्रमेण प्राङ्निरुपयितव्ये उपस्थापनक्रमानुसारेण सूचीकटाहन्यायेन वा प्रथमं लक्षणामूलमेवोदाहरतीति समालोचकाः। वयन्तु वृत्तौ प्रथममविवक्षितवाच्यस्यैव निर्देशात्क्रमप्राप्तमात्रं मन्यामहे। उदाहरणं प्रस्तौति सुवर्णपुष्पामित्यादिं— त्रयः पुरुषाः शूरः च, कृतविद्यः च यः च सेवितुम् जानाति सुवर्णपुष्पाम् पृथिवीम् चिन्वन्ति इति पदव्यवस्था।

त्रयः= त्रिविधाः, एव, पुरूषाः= जनाः, यः शूरः= उत्साहवान्, कृतविद्यः= अधीतशास्त्रो नीतिनिपुणः, च यः, च, सेवितुं= परिचरितुं, जानाति= वेत्ति च, एते, सुवर्णपुष्पां= सुवर्णं कनकमेव पुष्पं कुसुमं यस्याः सा, अभिनवगुप्तपादास्तु सुवर्णानिपुष्पति या इति सुवर्णपुष्पा इति। बहुव्रीहिसमासे तु सुवर्णस्य पुष्पमात्रावबोधनं न तु पृथिव्या नित्यसुवर्णोत्पादकतासिद्धिरिति तथा विग्रहकरण युक्तिः। केचितु तत्रानेकाः विप्रतिपत्तीरूपस्थापयन्ति। तत्र प्रथमं तु पुष्पधातुरेवाकर्मस्तेन तस्य कर्मैव न सिध्यति, सिद्धेऽपि कर्मणि णिजन्तयोगमानादणि ङीषेव भवति न तु टाबिति। अपरे तु अजादिगणस्याकृतिगणत्वाट् टापमपि साधु मन्यन्ते। यद्यप्याकृतिगणोऽगतिस्था— पिविशे षाभिव्यञ्जनाय तथाकरणेडिप् नदोष इति केचित्। वस्तुतस्तु श्लोकार्थप्रतिपत्तये सुवर्णानि पुष्पति इत्येव विग्रहः साधुस्तस्य सुवर्णोत्पादनार्थद्योतनक्षमत्वात्, पृथिवीं= अवनिं, चिन्वन्ति= सङ्गृह्णन्ति। अत्र चकारत्रयमेकैकस्यान्यनैरपेक्ष्यद्यौतनाय। शूरा बलबलेन विद्वांसों विद्याबलेन, सेवी च श्रमबलेन समृद्धिभाजनानि भवन्तीत्यस्य प्रतीयमानोऽर्थः। 'सुवर्णपुष्पा' इति पृथिव्या विशेषणम्। अनेन पृथिव्यां लताया आरोपः सम्पद्यते। किन्तु न तु पृथिवीलता नैव च लतायां सुवर्णपुष्पकुसुमनम्। तेन वाक्यार्थस्य वाच्यार्थो वाक्ये नैवान्वेति तेनेदमसम्भवमिति कृत्वा अविवक्षितवाच्यत्वम्। अत्रायं क्रमः सिध्यति प्रथमं तु अभिधावृत्तिवशाद् वाच्यार्थबोधः सञ्जायते। ततश्च तस्य तात्पर्यवशादिति अभिहितान्वयवादिमतानुसारमभिधावशादेवेति अन्विताभिधानवादितानुसारं वाक्येऽन्वयः। ततश्च पृथव्याः पुष्पणस्याप्रसिद्धेस्तदसम्भवादर्थबोधे बाधः प्रतीयते यतः सादृश्यसम्बन्धाल्लक्षणया सुवर्णपुष्पां पृथिवीं चिन्वन्ति इत्येतस्य महदैश्वर्यं लभन्ते इत्यर्थबोधः सञ्जायते। तस्य च प्रयोजनं च शूरादीनां प्रशासनं यत्प्रत्यक्षमनुक्त्वा व्यङ्ग्यमात्रेण

प्रतिपादितमस्ति यत् सुगुप्तं मत्तकाशिनीकुचकलशयुगलमिव महार्घतामुपयाद् ध्वन्यते इत्यत्र ध्वनिर्यस्य शब्दः प्रधानतया व्यञ्जकोऽर्थश्च तत्सहकारितया गौण एवेति। अत्र अभिधा-तात्पर्य-लक्षणा-व्यञ्जनाख्याश्चतस्रो वृतयः कार्यपरा इत। भूमितः कनककुसुमस्य तच्चवनस्य चाप्रसिद्धतया वाक्यस्यैवासम्भवात् स्वार्थो बाधितरूपः सन् सादृश्यसम्बन्धेन 'ऐश्वर्यं प्राप्नुन्ति' इत्यर्थं व्यञ्जयति। तेनैवाऽवाविवक्षितवाच्यो ध्वनिः अत्र त्रयाणामेवैकक्रियासम्बन्धाद्दीपकमलङ्कारः। तथैव प्रकृतायां तादृक्त्वर्णनात् तुल्ययोगिता च।

ध्वनि के अविवक्षितवाच्य एवं विवक्षितान्यपरवाच्य भेदों में जो पहला भेद जो अविवक्षितवाच्य है उसका उदाहरण देते हैं।

''तीन प्रकार के लोग, जो शूर है, जो विद्या में पारङ्गत है अथवा जो सेवा करना जानते है, ये ही सोने के फूल वाली पृथ्वी को चुन पाते हैं।''

यहाँ फूल के सम्बन्ध से पृथ्वी पर लता का आरोप करना पड़ेगा और न तो पृथ्वी लता है, न ही लता मे सोने के फूल में खिलते हैं और न ही पृथ्वी चुनी जाती है। अतः यह सब असम्भव होने से वाच्यार्थ का बाध हो जाता है, तब समानता के आधार पर 'सोने के फूल बाली पृथ्वी को चुन लेने का मतलब' 'बड़ी समृद्धि प्राप्त करना' मानना पड़ता है। पहला वाच्य अर्थ बता कर अभिधा हट जाती है और उसका वाक्य में अन्वय बैठ न पाते के कारण बाध हो जाता है। तब प्रयोजन को लेकर लक्षणा आती है और दूसरा अर्थ बताती है। इस तरह लक्षणा से दूसरे अर्थ को बताने का प्रयोजन है शूर, विद्वान् एवं परिश्रमी की प्रशास्ति गाना जो कि शब्दों में न कह कर घुमा फिरा कर कहा गया है। यह काम व्यञ्जना करती है अतः यह अर्थ व्यङ्ग्य है। जैसे नवयौवन के स्तन छुपे रहने के कारण आकर्षक लगते है, उसी तरह व्यङ्ग्य अर्थ भी गुप्त रहने के कारण सुन्दर होता है।

ध्वन्या०— द्वितीयस्यापि—

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
सुमुखि येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः।।

लीला— इत्थमाद्यं ध्वनिभेदमविवक्षितवाच्यं सोदाहरणं व्याख्याय सम्प्रति द्वितीयस्यापि भेदस्य विवक्षितान्यपरवाच्यस्योदाहरणं प्रस्तुवन्भूमिकां निबन्धाति द्वितीयस्येत्यादिना-द्वितीयस्य= अपरस्य विवक्षितान्यपरवाच्यस्य ध्वनिभेदस्य, अपि= च। उदाहरति शिखरिणीत्यादि— हे सुमुखि, असौ शुकशावकः क्व नु नाम शिखरिणि कियत् चिरम् किमभिधानमृ तपः अकरोत् येन तव अधरपाटलम् बिम्वफलम् दशति इति पदव्यवस्था।

हे सुमुखि ! = सुष्ठु मनोहरं मुखमाननं यस्याः सा तत्सम्बुदौ, असौ= सौभाग्यवान्= शुकशावकः= शुकार्भकः, क्व नु नाम= किंनाम्नि कस्मिन्,

शिखरिणि= पर्वते, कियत्= कति, चिरं= दीर्घकालं, किमभिधानं= किंनामकं, तपः= तपस्यां, अकरोत्= कृतवान्, येन= यत्तपःपुण्येन, तव= भवत्याः, अधरपाटलं= अधर इव पाटलं रक्तं, बिम्बफ़लं= तदाख्यसस्यं, दशति= दंशयति आस्वादयतीति। अनेन शुकशिशुना कस्मिन् पुण्यक्षेत्रे कियद्दीर्घकालं किसंज्ञकं तपस्तप्तं येन सः तव अधरतुल्यरक्तं बिम्बफलं सुखेन आस्वादयति इति। श्रूयते हि प्रख्याते पुण्यक्षेत्रे सिद्धैः सुदीर्घकालं शास्त्रनिर्दिष्टं तपस्तप्तं तथापि तैर्वाञ्छितं फलं नैवाप्तं किन्तु अनेन तुच्छकीटेन तत्रापि शिशुनैव कुत्र कियत्कालं किंनाम तत्प्रस्तुत येन स परमसिद्धैरपि अप्राप्यं त्वदधरतुल्यच्छाय बिम्बफलमा-स्वादयतीति पर्यवसितोऽर्थः। एकतस्तु त्वदधरसमच्छायस्य परमयोगिनामपि दुर्लभस्यं बिम्बफलस्यास्वादनं महतः पुण्यस्यैव फलम्। अपरतश्च तच्चाविच्छि-न्नप्रबन्धतयाऽऽस्वाद्यते न तु औदरिकेण इव परं भुज्यते। येन तस्य रसज्ञता द्योत्यते। साऽपि तपसः फलमेव। तच्च समुचितकाले आस्वाद्यते येन रसस्य चरमोत्कर्षताऽनुभवितुं शक्यते। अनेन प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्यचाटु-विरचनात्मकविभावोद्दीपनं व्यङ्ग्यम्।

अत्र नो मुख्यार्थबाधस्तेन वाक्यार्थसौन्दर्यादेव व्यङ्ग्यप्रतिपत्तिः। तेनात्र मुख्यतया त्रय एव व्यापाराः अभिधा, ताप्पर्यं, व्यञ्जना च। अभिधाया शब्दार्थबोधः, तात्पर्येण तेषां वाक्येऽन्वयोऽभिहितान्वयवादिपक्षे, अन्विताभिधा-नपक्षेतु अभिधयैव वाक्येऽन्वयोऽन्वितस्यैव ज्ञानात्। ततश्च वक्तुराशयाप-र्यवसानात् तच्चाटुकारिताबोधश्च व्यञ्जनया। तेनात्राभिधातात्पर्यशक्ती एव ध्वननव्यापारे सहकारिण्यौ। बिम्बफलास्वादनं तु शुकस्य स्वाभाविकी एव क्रिया। तामादाय तथाविधविशिष्टप्रश्नार्थानुपपत्तेर्मुख्यार्थबाधेन सादृश्य बलात् भवति चेदपि न तथा तस्या व्यापारो वाक्यार्थ सौन्दर्यादेवव्यङ्ग्यप्रतिपत्तेः। शुकशावकस्तु पूर्वकाल कृततपप्रभावात्वदधरतुल्यरुपरिविम्बफलमास्वादयति। स तु मदपेक्षया भाग्यवत्तरः। अहं तु अनवरतत्वनपरोऽपि आस्वादनस्य कथा तु दूर एव तवाधरस्पर्शमात्रसुखमपि लब्धुं न प्रभावामीति ध्वननम्। अत्र शुकशिशोस्तथाविधबिम्बफलास्वादनक्रियायाः प्रसिद्धेर्वाच्यार्थो विवक्षित एव किन्तु तथाविधकथने वक्तुर्यस्तरुण्यधरपानरूपप्रच्छन्नाभिप्रायः तस्यापि बोधना-द्विवक्षितोऽपि वाच्यार्थोऽन्यपरः सम्पद्यते। कथितचरंमेवैतद्यथा दीपः स्वेन सह घटमपि प्रकाशयति विवक्षितान्यपरवाच्ये तथैव वाच्यार्थः स्वार्थमनुज्झन्नपि अन्यपरमर्थमपि द्योतयति। अत्र शुकशिशोर्बिम्बफलास्वादनक्रियोपस्थानपनरूपो वाच्यार्थः आत्मानं यथावदभिरक्ष्य तथाविधचाटुकारिताद्वारा नायिकां तदधरपा-नावसरप्रदानायानुलालयति कश्चिदिति योऽन्यपरोऽर्थस्तमपि प्रत्याययतीत्यत्र विवक्षितान्यपरवाच्यो ध्वनिरर्थमूल इति।

इस प्रकार उदाहरण द्वारा अविवक्षितवाच्य ध्वनि को सिद्ध करने के बाद अब ध्वनि के दूसरे प्रकार का उदाहरण प्रस्तुत करते हैं।

इस प्रकार की ध्वनि का भी—

"हे सुमुखी ! इस भाग्यवान् शुकशिशु ने कौन से पवित्र पर्वत में कितने ही लम्बे अरसे तक कौन सी ही तपस्या की थी जिसके पुण्य प्रभाव से वह तुम्हारे अधर जैसे रूप (लाल वर्ण) वाले बिम्बफल का स्वाद ले पाता है।"

यहाँ विवक्षित अर्थ है शुकशावक के द्वारा बिम्बफल का स्वाद लेने की क्रिया का वर्णन। वह प्रसिद्ध ही है और वाच्यार्थ में कोई बाधा नहीं है। लेकिन इस तरह का साधारण क्रिया, जो यह कि शुकशावक बिम्बफल का स्वाद लेता है, को लेकर अपने छुपाए गए अधरपान करने के अभिप्राय के प्रकट करने की चतुर चाटुकारिता के रचनात्मक विभाव का उद्दीपन है, वह व्यङ्ग्य है। यह तो बताया जा चुका है कि विवक्षितान्यपर वाच्य में वाच्यार्थ अपनेपन को यथावत् रखते हुए दूसरे अन्यपरक अर्थ की भी प्रतीति कराता है। यह शुकशावक के बिम्बफल का स्वाद लेने का वर्णन करने वाला वाच्यार्थ अपने में निर्बाध है और अपने चमत्कार से वक्ता की नायिका के अधरपान हेतु तो उसको फुसलाने के लिए चाटुकारिता है उसकी भी प्रतीति कराता है जो कि अन्यपर वाच्य है। अतः यहाँ विवक्षितान्यपरवाच्य ध्वनि है।

इसमें मुख्यतः तीन व्यापार है अभिधा, तात्पर्य एवं ध्वनन। अभिधा शब्दों के अर्थ जता कर रूक जाती है तो तात्पर्य उन सबका वाक्य में अन्वय करता है। अन्विताभिधानवादियों के मत में यह काम अमिधा ही करती है, क्योंकि पदों के अर्थ अन्वित रूप में ही जाने जाते हैं। उसके बाद वाच्यार्थ जो है अपने वाक्यार्थ के सौन्दर्य के कारण व्यङ्ग्य अर्थ की प्रतीति कराता है। अतः अमिधा एव तात्पर्य ध्वनन व्यापार के सहकारी हैं। लक्षणा का यहाँ कोई स्पष्ट स्थान नहीं है। यदि एकाएक उस तरह विशेष प्रकार के प्रश्न पूछे जाने की उपपत्ति न होने से मुख्यार्थबाध मानकर सादृश्य के बल पर लक्षणा मानी भी जाय तो भी ध्वनन व्यापार में उसका कोई स्पष्ट दायित्व नहीं झलकता क्योंकि वाक्यार्थ से ही व्यङ्ग्यार्थ टपकता है।

ध्वन्या०— यदप्युक्तं भक्तिर्ध्वनिरितितत्प्रतिसमाधीयते—

कारिका— भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।

लीला— एवं ध्वन्यभाववादिसम्भविमतनिरसनपूर्वकप्रस्थापितस्य ध्वनेरुभौ भेदौ सोदाहरणं व्याख्याय सम्प्रति भाक्तवादिमतनिरसनाय कारिकां व्याचिख्यासु- र्वृत्तिकारस्तत्पूर्वपीठिकां निबध्नाति यदप्युक्तमित्यादिना- भक्तिः= भज्यते सेव्यते प्राज्ञेन प्रसिद्धतया उद्बोध्यत इति भक्तिर्धर्मोऽभिधेयेन सारूप्यादिः। सा च प्रतिपाद्ये सामीप्यादौ श्रद्धातिशयः। मुख्यस्यार्थस्य भङ्गोऽपि भक्तिः लक्षणा, सैव, ध्वनिः= ध्वनितत्वं या भक्तिः सः ध्वनिर्यश्च ध्वनिः सैव भक्तिरिति, यदपि= यन्मात्रम्, उक्तं= कथितं, तत्= तादृशं भक्तौ ध्वनिसमावेशनमतं,

प्रतिसमाधीयते= विविच्य दूष्यत इति। तत्सम्बद्धां कारिकामवतारयति भक्त्येत्या-दिनाअयम् ध्वनिः रूपभेदात् भक्त्या एकत्वम् न बिभर्ति (असौ अतिव्याप्तेः अथ अव्याप्तेः च तया न लक्ष्यते) इति पदव्यवस्था।

अयं= प्रतीयमानरूपः, ध्वनिः= ध्वनितत्त्वम्, रूपभेदात्= पृथग्रूपत्वात् भक्त्या= लक्षणया, सह, एकत्वं= समानत्वमर्थात्साम्यत्वं, न= नैव, बिभर्ति= पुष्णाति, ध्वनेः प्रतीयमानरूपत्वाद् भक्तेरभिधेयेन सारूप्यादिधर्मत्वात् न स भक्त्या ताद्रूप्यं भजते। असौ= ध्वनिः, अतिव्याप्तेः= अलक्ष्ये लक्षणस्य गमनं वाऽनुचितविस्तारेणानभिप्रेतवस्तुनोऽपि समावेशोऽतिव्याप्तिः तस्याः, अथ= तदतिरिक्तश्च, अव्याप्तेः= लक्ष्यैकदेशे लक्षणस्यावर्तनं, च, तया= भक्त्या, न, लक्ष्यते= लक्षणीयो भवति। अस्यायमाशयः— ध्वनिर्धर्मव्याप्तिस्तस्याः, सह ताद्रूप्यं नैव भजते तयोः रूपपार्थक्यात्। पार्थक्यञ्च शब्देऽर्थे व्यापारे व्यङ्ग्ये समुदाये च भवति। किञ्च लक्षणानिमित्तं मुख्यार्थबाध आवश्यकः किन्तु ध्वनिनिमित्तमुपसर्जनीभाव एव मुख्यार्थस्य। लक्षणाऽभिधेयेन सारूप्यादि-धर्ममवलम्बते ध्वनिस्तु त्तात्पर्योपपत्तिमेव कामं स विधिवाक्ये प्रतिषेधरूपो वा प्रतिषेधवाक्ये विधिरूपश्च किं न स्यात्। लक्षणायान्तु मुख्यार्थसम्बद्धा-र्थान्तरविबोधनमेव भवति ध्वनौ तु वक्तुस्तात्पर्यावसानमेव। लक्षणा तु अनन्तरा वृत्तिर्ध्वनिस्तु प्रयोजनस्य विश्रान्तिस्थानम्। यमर्थमधिकृत्य प्रवर्तनं तत्प्रयो जनम्। तच्च ध्वनावेव पर्यस्यति न तु लक्षणायां किञ्च सोपचारमात्रमेव। नैतावदेव, यत्र लक्षणाया अभावस्तत्रापि ध्वनेर्यत्र च ध्वनेरभावस्त्रापि लक्षणायाः सम्भवः। यथा कलिङ्गः साहसिकः इत्यत्र देशविशेषस्य साहसिकत्वासम्भावात् मुख्यार्थ-बाधेन रूढिवशाल्लक्षणा भवति। तत्र न ध्वनेरवकाशस्तात्पर्यस्य तत्रैव पर्यवसानात्। किन्तु 'भ्रम धार्मिक विस्रब्ध' इत्यत्र नैव लक्षणाया अवकाशो मुख्यार्थबाधाभावात् किन्तु ध्वनेरवकाशो मुख्यार्थमात्रेण तात्पर्यानुपपत्तेः। तथ च लक्षणा मुख्यार्थस्य बाधमेव गृह्णति ध्वनिस्तु तस्योपसर्जनीभावमेव। स्यादपि लक्षणा ध्वनेः पन्था तथापि सा अभिधाध्वनिसंयोजकसेतुरेव न तु निर्णायिका प्रयोजनावबोधशेषात्। यथा गङ्गायां घोष' इत्यत्र प्रवाहे घोषासम्भवान्मुख्या-र्थबाधायां प्रयोजनमुद्दिश्य लक्षणया गङ्गाशब्दस्तटं बोधयति किन्तु तस्य प्रयोजनं शीतत्वपावनत्वाद्यबबोधनं तु व्यञ्जनयैव भवति। ध्वनेर्भक्त्या लक्षणे कृते अतिव्याप्तिअव्याप्तिदोषौ समापद्येते। यत्रापि ध्वनिर्न भवति तत्रापि लक्षणा भवति। यथा मुख्यार्थबाधे। तथैव यत्रापि ध्वनिर्भवति तत्र लक्षणा न भवति। यथा वाच्यार्थस्योपसर्जनीभावे। अर्थात् यदा ध्वनिरेव लक्षणा मन्यते तदा मुख्यार्थस्योपसर्जनीभावेऽपि लक्षणा स्यात् तथैव यदि लक्षणैव ध्वनिरिति मन्यते तदा मुख्यार्थबाधेऽपि ध्वनिः स्यात्। उभयत्र दोषः।

इस तरह अभाववादियों के मत का युक्तिपूर्वक खण्डन करने के बाद अब भाक्तवादी जो कि ध्वनि को लक्षणा में अन्तर्भावित मानते हैं, के मत के खण्डन के लिए कारिका के अवतरण का उपक्रम करते हैं—

जो यह कहा गया है कि भक्ति अर्थात् लक्षणा ही ध्वनि है, उसका खण्डन किया जाता है।

यह ध्वनि जो है वह रूप के भेद के कारण लक्षणा से एकत्व नहीं ले सकता अर्थात् लक्षणा और ध्वनि एक नहीं हो सकते क्योंकि दोनों में रूपभेद होता है। और यह ध्वनि अतिव्याप्ति एवं अव्याप्ति के कारण लक्षणा से लक्षित नहीं हो सकती।

यह रूपभेद शब्द, अर्थ व्यापर व्यङ्ग्य एवं समुदाय करके पाँचों में ही होता है। लक्षणा का शब्द लक्षक होता है और वाचक के बाध होने से काम करता है और ध्वनि का शब्द व्यञ्जक होता है और वाच्य शब्द के उपसर्जन अर्थात् गौण भाव में ही काम करता है। लक्षक शब्द रूढि को भी पकड़ता है लेकिन व्यञ्जक केवल तात्पर्यसिक्त प्रयोजन को। इसी तरह लक्ष्य अर्थ गौण होता है व्यङ्ग्य अर्थ प्रधान और लक्ष्य अर्थ उपचार मात्र है व्यङ्ग्य अर्थ वास्तविक क्योंकि इसी में काव्य का व्यापार शुरु होता है लेकिन व्यञ्जना का व्यापार अभिधा के साथ साथ ही। एवं लक्ष्य सारूप्य, समवाय, वैपरीत्य, क्रियायोग आदि से अभिधेय का ही दूसरा रूप है लेकिन व्यङ्ग्य अर्थ प्रतीयमान मात्र। लक्ष्य में मुख्यार्थबाध होना चाहिए तो व्यङ्ग्य में मुख्यार्थ से आक्षेप। लक्ष्य अर्थ अगूढ होता है और व्यङ्ग्य गूढ। इस तरह रूपभेदों के कारण ध्वनि लक्षणा में अन्तर्भूत नहीं हो सकता। लक्षणा का जो लक्षण है उसे ही ध्वनि का लक्षण माना जाय तो वहाँ अतिव्याप्ति एवं अव्याप्ति दोष आ जाएंगे। जिसका लक्षण करना है उसमें ज्यादे विषय का ग्रहण करना अतिव्याप्ति है और उसमें भी पूरा घटित न हो पाना अव्याप्ति है। यदि लक्षणा को ही ध्वनि माना जाय तो मुख्यार्थबाध में भी ध्वनि हो जाएगा यह अतिव्याप्ति है, क्योंकि मुख्यार्थबाध ध्वनि के विषय से बाहर है। इसी तरह ध्वनि एवं लक्षणा के एक ही लक्षण मानने पर वाच्यार्थ के उपसर्जनीभाव में भी ध्वनि नहीं हो पाएगी क्योंकि वह लक्षणा के क्षेत्र से बाहर है। यह है अव्याप्ति। अतः रूपभेद एवं लक्षणभेद के कारण ध्वनि लक्षणा में अन्तर्भूत नहीं हो सकती।

ध्वन्या०— अयमुक्तप्रकारो ध्वनिर्भक्त्या नैकत्वं बिभर्ति भिन्नरूपत्वात्। वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येण प्रकाशनं यत्र व्यङ्ग्यप्राधान्ये स ध्वनिः। उपचारमात्रं तु भक्तिः।

लीला— कारिकां वृत्तिकारो व्याचष्टे अयमित्यादिना— अयं= सिद्धास्तित्वः, उक्तप्रकारः= अविवक्षितवाच्यविवक्षितान्यपरवाच्यप्रकारः, ध्वनिः= ध्वनितत्वं, भक्त्या= लक्षणया, एकत्वं= ताद्रूप्यं, न= नैव, विभर्ति= पुष्णाति, भिन्नरूपत्वात्= पृथक्स्वरूपत्वात्। कथं भिन्नरूपत्वमित्याकाङ्क्षायां कथयति वाच्येत्यादि- वाच्यव्यतिरिक्तस्य= वाच्याभीष्टेतरस्य, अर्थस्य= वस्तुनः, वाच्यवाचकाभ्यां=

अभिधेयाभिधानाभ्यां, तात्पर्येण= प्रयोजनत्वेन, यदुद्दिश्य कथ्यते तत्प्रयो जनत्वेन तस्य विश्रान्तिधामत्वात्, प्रकाशनं= द्योतनं, यत्र= यस्मिन्काव्ये, व्यङ्ग्यप्राधान्ये= प्रतीयमानार्थस्य वाच्यार्थापेक्षया उत्कृष्टतरत्वे, सः= तथारूपः, ध्वनिः= ध्वनितत्त्वम्। भक्तिः= लक्षणा, तु= इति व्यवच्छेदे, उपचारमात्रं= उपचारो गुणवृत्तिर्लक्षणा स एव तन्मात्रं न तस्मादधिकमिति। यत्र सम्भवन्नपि व्यङ्ग्यार्थस्तत्प्रयोजनस्य चारुत्वविशेषाभावात् असत्कल्प इव भवति अर्थात्काव्यस्य प्रयोजनमुपचारे एव पर्यवस्यति तदितरस्यानुपयुज्यमानत्वात्तावदेव लक्षणाक्षेत्रं न तस्मादधिकमिति तयोः रूपभेदः। भिन्नरूपत्वेन ध्वनिर्भक्त्या न ताद्रूप्यं भजते। तच्चेत्थम्–यत्र वाच्यवाचकाभ्यामेव स्वमुख्यार्थभिन्नस्यार्थस्य प्रयोजनमुद्दिश्य द्योतनं भवति तत्र व्यङ्ग्योत्कर्षयुते काव्ये ध्वनिर्भवति लक्षणा तु गुणवृत्तिरेव न तस्मादधिका। यत्र प्रयोजनात्मनो व्यापारस्य न तथोपयोगस्तत्रैव लक्षणा भवति, लक्षणा केवलमतिशयितो व्यवहारो ध्वनिस्तु प्रयोजनात्मव्यापारः।

वृत्तिकार कारिका की व्याख्या करते हैं–

यह अविवक्षितवाच्य एव विवक्षितान्यपरवाच्य भेद वाला जो ध्वनि है वह भक्ति अर्थात् लक्षणा से एकत्व नहीं हो सकती क्योंकि दोनों में रूपभेद है। वह रूपभेद इस प्रकार है। वाच्यवाचक के द्वारा काव्य के प्रयोजन को लक्ष्य कर जो वाच्य से भिन्न अर्थ का प्रकाशन अर्थात् द्योतन होता है और उससे वाच्य की अपेक्षा व्यङ्ग्य की प्रधानता स्थापित होती है वह ध्वनि का विषय है। लक्षणा तो केवल उपचार अर्थात् बढाया गया व्यवहार मात्र है। अर्थात् गुणों के आधार पर व प्रचलित व्यवहार के कारण जहाँ एक शब्द का ऐसे अर्थ में प्रयोग किया जाय जो उस शब्द के वास्तविक अर्थ से सम्बन्ध रखता हो। अतः दोनों में कोई साम्य नहीं है। जहाँ लक्षणा एकदम न हो वहाँ भी ध्वनि होती है और जहाँ ध्वनि की कोई सम्भावना तक नहीं है वहाँ भी लक्षणा होती हैं।

**ध्वन्या०— मा चैतत्स्याद्भक्तिर्लक्षणं ध्वनेरित्याह–**

**कारिका— अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया।।१४।।**

**ध्वन्या०— नैवं भक्त्या ध्वनिर्लक्ष्यते। कथम् ? अतिव्याप्तेरव्याप्तेश्च। तत्रातिव्याप्तिर्ध्वनिव्यतिरिक्तेऽपि विषये भक्तेः सम्भवात्।**

लीला— इत्थं ध्वनेर्भक्त्या सह पर्यायतां निराकृत्य सम्प्रति भक्तिरेव ध्वनेर्लक्षणं यदुक्तं तन्निरासाय कारिकां व्याचिख्यासुर्वृत्तिकारस्तत्पूर्वपीठिकां निबध्नाति मा चैतदित्यादिना— भक्तिः= लक्षणा, ध्वनेः= ध्वनितत्त्वस्य, लक्षणं= अन्यावच्छेदकधर्म, मा= नैव, स्यात्= सम्भवेत् इति= इति हेतोः, एतत्= वक्ष्यमाणप्रकारम्, आह= कथयति।

कारिकाशेषभागं व्याख्याति नैवेत्यादिना— भक्त्या= लक्षणया, ध्वनिः= ध्वनितत्त्वं, नैव, लक्ष्यते= अन्यावच्छेदकधर्मत्वेन व्याख्यातें। कथं= केन हेतुना,

अतिव्याप्तेः= अलक्ष्ये लक्षणस्य गमनमतिव्याप्तिः वा, अतिविस्तारेणानभीष्टवस्तुनोऽपि ग्रहणमतिव्याप्तिः तस्याः, अव्याप्तेः= लक्ष्यैकदेशे लक्षणस्यावर्तनमव्याप्तिस्तस्याः। तत्र= अतिव्याप्त्यव्याप्त्योः, अतिव्याप्तिः= अलक्ष्येऽपि लक्षणस्य गमनं, ध्वनिब्यतिरिक्ते= ध्वनिविभिन्ने-यत्र ध्वनिर्न सम्भवति तत्र, विषये= क्षेत्रे, अपि= च, भक्तेः= लक्षणायाः, सत्त्वात्= सम्भवात्।

न च भक्तिर्ध्वनेर्लक्षणं सम्भवति तथा सति तत्र ध्वनिलक्षणे अतिव्याप्त्यव्याप्तिदोषावापतेताम्। तत्रातिव्याप्तिर्यथा यत्रापि ध्वनिलेशोऽपि न सम्भवति तत्रापि लक्षणा भवति। ध्वनेर्लक्षणत्वेन भक्तेः स्वीकरणे तत्रापि ध्वनिः स्यात् यथा मुख्यार्थबाधे।

इस प्रकार ध्वनि एवं भक्ति के पर्यायवाचकत्व का निराकरण करने के बाद अब जो ध्वनि के लक्षण के रूप में भक्ति को मानते हैं उसके निराकरण के लिए कारिका के अवतरण हेतु भूमिका बनाते हैं—

भक्ति ध्वनि का लक्षण न हो, इसलिए कहते हैं— कारिका की व्याख्या करते है—

भक्ति से ध्वनि का लक्षण नहीं किया जा सकता। क्योंकि वैसा करने से ध्वनि के लक्षण में अतिव्याप्ति एवं अव्याप्ति दोष आ जाएंगे। उसमें अतिव्याप्ति दोष यह होगा कि जहाँ ध्वनि हो ही नहीं सकती वहाँ भी लक्षणा होती है।

यदि भक्ति को ध्वनि का लक्षण माना जाय तो यह सम्भव नहीं है क्योंकि वैसा करने से अतिव्याप्ति एवं अव्याप्ति दोष आ जाएंगे। अतिव्याप्ति का अर्थ है आवश्यक सभी अंश का ग्रहण कर न पाना। अतिव्याप्ति इसलिए होगी कि जहाँ ध्वनि की थोडी सी भी सम्भावना नहीं है, वहाँ भी लक्षणा होती है जैसे मुख्यार्थबाध में। भक्ति को ध्वनि का लक्षण मानने से मुख्यार्थबाध में भी ध्वनि हो जाने लगेगी जो कि असम्भव व अनुचित है।

ध्वन्या०— यत्र हि व्यङ्ग्यकृतं महत्सौष्ठवं नास्ति तत्राप्युपचरितशब्दवृत्त्या प्रसिद्ध्यनुरोधप्रवर्तितव्यवहारः कवयो दृश्यन्ते यथा—

परिम्लानं पीनस्तनजघनसङ्गादुभयतः
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति विसिनीपत्रशयनम्।

लीला— तत्र भक्तेर्ध्वनिलक्षणत्वेन स्वीकरणे यदतिव्याप्तिदोषसम्भव उक्तस्तदेव विशदयति यत्रेत्यादिना—यत्र= यस्मिन् काव्ये, हि= इत्यवधारणे, व्यङ्ग्यकृतं= प्रतीयमानार्थविहितं, महत्सौष्ठवं= विशेषचारुत्वं, नास्ति= न विद्यते-कामं तत्र किञ्चिन्मात्रं चारुत्वं सम्भवत्वपि ध्वननस्य व्यापकत्वात्, तत्र= तादृशविधकाव्ये, अपि, उपचरितशब्दवृत्या= गुणाधिष्ठितशब्दशक्त्या लक्षणयेति भावः, प्रयोजनाभावेऽपि किञ्च प्रयोजनानुरोधेतु व्यङ्ग्यं प्राधान्याय

कल्पते एवं, प्रसिद्ध्यनुरोधप्रवर्तितव्यवहारा:= प्रसिद्धे: रूढे: अनुरोधेन समायोजनेन प्रविर्तिता: प्रयोगमानीता: व्यवहारा: शब्दप्रयोग: यैस्ते तादृशा:, कवय:= काव्यकारा:, दृश्यन्ते= सन्तीत्याशय:। कथितमेव यल्लक्षणायामपि व्यङ्ग्यस्यानिवार्यता तु भवत्येव। तत्कथं लक्षणा नैव ध्वनेविषयो भवितुमर्हति इत्याकाङ्क्षापनोदाय वृत्तिकार: कथयति यत्सत्यमेव लक्षणायामपि व्यङ्ग्य विलसत्येव किन्तु चारुत्वं न केवलं व्यङ्ग्यशरीरमपितु तस्य गूढत्वेनावस्थि-तिमप्यपेक्षते। प्रयोजनवत्यां लक्षणायां तु व्यङ्ग्यं गूढं भवति तेन सा तु ध्वनेर्विषयत्वमवलम्बते एवं किन्तु यत्र व्यङ्ग्यमगूढं तत्र तु न तावत्काव्यसौष्ठवं प्रतिभाति। उक्तमेव यत् मत्तकाशिनीकुचयोरावृतत्त्वेन हि सौष्ठवम्। रूढिस-माश्रितायां तु व्यङ्ग्यमगूढमेवोपतिष्ठतेऽतो न तत्काव्यसौष्ठवाय कल्पते। तर्हि किंनिमित्तं कवयस्तादृशप्रयोगं कुर्वन्ति इति चेदित्थम्। उपचरितार्थे प्रयोगस्य प्रसिद्धे: कवयोऽपि स्वाभाविकरूपेण तथाविधप्रसिद्धिमाश्रित्य प्रयुञ्जन्ति किन्तु श्रोतृणां तत्र नैव कश्चिदपि चमत्कारबोध:। अतस्तादृशस्थलं नैव ध्वनेर्विषय:। सिद्धमर्थं संसाधयितुमुदाहरणं प्रस्तौति— परिम्लानमित्यादि-पीनजघनसङ्गात् उभयत: परिम्लानम् तनो: मध्यस्य अन्त: परिमिलनम् अप्राप्य हरितम् श्लथभुज-लताक्षेपबलनै: व्यस्तन्यासम् इदम् बिसिनीपत्रशयनम् कृशाङ्ग्या: सन्तापम् वदति इति पदव्यवस्था।

पीनस्तनजघनसङ्गात्= नितान्तपुष्टकुचकटिपूर्वभागसम्पर्केण, उभयत:= पार्श्वद्वयम्, एव, परिम्लानं= मर्दनेन मलिनं, तनो:= शरीरस्य, मध्यस्य= मध्यभागस्य, अन्त:= मध्ये, परिमिलनं= सम्पर्क, अप्राप्य= अनासाद्य, हरितं= हरिद्वर्ण, श्लथभुजलताक्षेपबलनै:= शिथिलबहुबल्लरीनिक्षेपकलनै:, व्यस्तन्यासं= विपर्यस्तरचनं, इदं= पुरोवर्ति, बिसिनीपत्रशयनं= कमलिनीदलरचिततल्पं, कृशाङ्ग्या:= तन्वङ्ग्या:, तस्या:, सन्तापं= सन्तप्तावस्थां, बदति= स्फुटीकरोति इति। अत्र तल्पस्य तथाविधस्स्पष्टवागुच्चारणकर्तृत्वस्या— प्रसिद्धत्वाद् त्वस्या-प्रसिद्धत्वाद् वदति इत्येतस्य मुख्यार्थबाधेन अभिधेयस्य क्रियायोगात् रूढिमाश्रित्य स्फुटीकरोति इति भाक्तोऽर्थ:। अत्रान्तर्निहितप्रयोजनस्य नितान्तमेवाभावान्नैव ध्वनेरवसर:।

**ध्वनि का लक्षण भक्ति मानने पर जो अतिव्याप्ति दोष आ जाने की बात कहीं गई थी, उसको उदाहरण के साथ समझाते हैं।**

**जिस काव्य में व्यङ्ग्य के चलते कोई खाश चमत्कार नहीं बन पाता वहाँ भी प्रचलित शब्द के व्यापार के द्वारा प्रसिद्धि के आधार पर शब्दों के प्रयोग करने वाले कवि भी देखे गए हैं।**

**वैसे तो व्यङ्ग्य का लेश लक्षणा में भी होता है किन्तु अन्तर है गूढ और अगूढ का। गूढव्यङ्ग्य में ही वास्तविक आनन्द रहता है। कहा गया है न कि**

मत्तकाशिनी के स्तन छुपे रहने के कारण ही आकर्षक होते हैं। वस्तुतः प्रसिद्धि के कारण जो लक्षणा होती है उसमें व्यङ्ग्य एकदम स्पष्ट रहता है, जिसमें किसी चमत्कार की अवस्थिति होती ही नहीं है। फिर भी प्रसिद्ध के कारण कविजन इस तरह का प्रयोग भी करते हैं। प्रयोजनवती लक्षणा में तो व्यङ्ग्य के गूढ़ रहने से चमत्कार रहता है और वह ध्वनि का विषय भी बन पाता है। लेकिन प्रसिद्धि अर्थात् रूढि में आश्रित लक्षणा में व्यङ्ग्य के स्पष्ट होने से वह एकदम ध्वनि के क्षेत्र से बाहर रह जाता है।

उदाहरण देते हैं—

मोटे स्तनों एव जंघाओं से दब जाने के कारण दोनो भागों में मलिन बने शरीर के मध्य भाग कृश होने के कारण उसके संसर्ग में आ न पाने के कारण हरे ही रहे, शिथिल भुजारूप लता के इधर उधर फेंकने के कारण बिखरे हुए यह कमलिनी के पत्रों से रची गई शय्या उस बेचारी की सन्तप्त अवस्था बताती है।

यहाँ शय्या का उस तरह बोलना अप्रसिद्ध होने से मुख्यार्थबाध होने पर प्रसिद्धि के आधार पर अभिधेय बोलती के साथ क्रियायोग से 'प्रकट करती है' अर्थ लक्षणा से ज्ञात होता है जो कि एकदम स्पष्ट है। अतः इसमें कोई खाश चारुत्व के न होन से यह ध्वनि का विषय नहीं बन सकता।

ध्वन्या०— तथा—

चुम्बिज्जइ असहुत्तं अवरुन्धिज्जइ सहस्हूत्तम्मि।
विरमिअ पुणरमिज्जइ पियो जणो णत्थि पुनरुत्तम्।।

(शतकृत्वोऽवरुद्ध्यते सहस्रकृत्वः चुम्बयते।
विरम्य पुनारम्यते प्रियो जनो नास्ति पुनरुक्तम्।।)

लीला— भक्तिर्ध्वनेर्लक्षणत्वेन स्वीक्रियते चेत्तदाऽतिव्याप्तिदोष आपतति इति यदुक्तं तन्निदर्शनायोदाहरणान्तरं प्रस्तौति चुम्बिज्जइ इत्यादि— असहुत्तं (शतकृत्वः) चुम्बिज्जइ (चुम्ब्यते) सहस्महूत्तम्मि (सहस्रकृत्वः) अवरुन्धि ज्जइ (अवरुध्यते) विरमिअ (विरम्य) पुण (पुनः) रमिजइ (रम्यते) पियो (प्रियः) जणो (जनः) पुनरुत्तं (पुनरुक्तम्) णत्थि (नास्ति) इति पदव्यवस्था।

शतकृत्वः= शतबारं, चुम्ब्यते= निक्ष्यते, सहस्रकृत्वः= सहस्रं वारान्, अरुध्यते= आलिङ्ग्यते दृढबाहुपाशेन, निवरम्य= विश्रम्य, पुनः= वारंवारं, रम्यते= मिथुनीभूयते, तथापि, प्रियः= वल्लभः, जनः, पुनरुक्त= आवर्त्य कथितं, नास्ति= न भवति इति वाच्यार्थः। अत्र उक्तिकर्मत्वं तु शब्दस्यैव भवति। चुम्बनादिक्रियासु अतथाप्रसिद्धेः 'पुनरुक्त' इत्येतस्य मुख्यार्थबाधेन प्रसिद्धि-माश्रित्य समवायतः पुनः कृतेऽपि अनुपादेयः' इत्यर्थो लक्षणया बोध्यते। शतशश्चुम्बनेऽपि सहस्रश आलिङ्गनेऽपि विश्रम्य भूयोभूयो रमणेऽपि प्रियजनस्य पुनरुक्तवदनुपादेयत्वं न भवति इत्याशयः प्रतीयते। अत्रापि व्यङ्ग्यस्यागूढत्वान्नैव किञ्चिदपि चारुत्वस्य वैशिष्ट्यमतो नासौ ध्वनेर्विषयः।

लक्षणा को ध्वनि के लक्षण मानने पर जो अतिव्याप्ति दोष होने की बात कही गई थी उसकी सिद्धि हेतु दूसरा उदाहरण प्रस्तुत करते हैं।

सौ-सौ बार चूमा जाता है, हजारौं बार आलिङ्गन किया जात है, रह-रह कर कामक्रीडा की जाती है, फिर भी प्रियजन दुहराकर कहा गया नहीं होता।

कहना कर्म तो शब्द का ही होता है न कि चुम्बन आदि क्रिया का। अतः 'दुहरा कर कहा गया' में वाक्यान्बिति के अभाव से मुख्य अर्थ का बोध हो जाता है और प्रसिद्धि के आधार पर इसका अर्थ लक्षणा के द्वारा 'दुहरा-दुहरा कर कहे गए बात की तरह फीका वा नीरस नहीं' ऐसा अर्थ निकलता है। उसमें व्यङ्ग्य के स्पष्ट होने के कारण न कोई चारुत्व है न तो ध्वनि ही।

ध्वन्या०— तथा—

कुविआओ पसन्नाओ ओरण्णमुहीओ विहसमाणाओ।
जह गहिओ तह हिअअं हरिन्ति उच्छित महिलाओ।।

(कुपिताः प्रसन्ना अवरुदिवघदना विहसत्न्यः।
यथा गृहीतास्तथा हृदयं हरन्ति स्वैरिण्यो महिलाः।)

लीला— भक्तौ ध्वनेरन्तर्भावनिरासायोदाहरणं प्रस्तौति कुविआओ इति कुविआओ (कुपिताः) पसन्नाओ (प्रसन्नाः) ओरण्णमुहीओ (अवरुदितमुख्यः) विहसमाणाओ (विहसन्त्यः) जह (यथा) गहिओ (गृहीताः) उच्छित (स्वैरिण्यः) महिलाओ (महिलाः) तह= हिअअं (हृदयं) हरन्ति इति पदव्यवस्था।

कुपिताः= क्रुद्धाः, प्रसन्नाः= स्वस्थचेतसः, हृष्टाः, अवरुदितमुख्यः= अश्रुपूर्णवदनाः विहसन्त्यः= स्मिताननाः, यथा= येनापि प्रकारेण, गृहीताः= धृताः, अवलम्बिताः, स्वैरिण्यः= पुंश्चल्यः, महिलाः= स्त्रियः, तथा= तथैव, हृदयं= चेतः, हरन्ति= लुठन्तीति वाच्यार्थः। अत्र ग्रहणकर्म वस्तुन एव हरणकर्म च मूर्तवस्तुन एव प्रसिद्धत्वात् महिलानां ग्रहणे अमूर्तस्य चित्तस्य हरणे मुख्यार्थबाधात् रूढिमाभितय उपादानार्थे वशीकरणार्थे च लक्षणा। अत्रापि न किमपि गूढत्वं चारुत्वञ्च किञ्च गृहीता इत्यत्रं 'उणदत्ता' इत्यस्यैव प्रयोगे का हानिः। अतो नात्रापि ध्वनिः केवलं लक्षणैव।

इसी तरह-गुस्से में हो, खुश हों रो रही हों, हँस रही हों, जिस रूप में भी ग्रहण की गई हों स्वैरिणी महिलाएं उसी रूप में ही मन हर लेती हैं।

ग्रहण एवं हरण तो किसी वस्तु एवं मूर्त वस्तु का होता है अतः महिलाओं का ग्रहण एवं मन के हरण में मुख्यार्थबाध हो जाने से उनमें क्रमशः उपादान एव अधीन लेने के अर्थ में लक्षणा होती हैं व्यङ्ग्य के गूढ न होने से कोई चमत्कार इसमें नहीं है। अतः यह भी ध्वनि का विषय नहीं बन सकता।

ध्वन्या०— तथा—

अज्जाएँ पहारो णवलदाए दिण्णो पिएण थणवहे।
मिअओ वि दूसहो ब्तिअजाओ हिअए सवत्तणिम्।।

(भर्यायाः प्रहारो नवलतया दत्तः प्रियेण स्तनपृष्ठे।
मृदुकोऽपि दुस्सह इव जातो हृदये सपत्नीनाम्।। इति च्छाया)

लीला— लक्षणायां ध्वनेरन्तर्भावनिरासप्रसङ्गे उदाहरणान्तरं प्रस्तोति अज्जाए इति—पिएण (प्रियेण) अज्जाएं (भार्यायाः) थनबहे (स्तनपृष्ठे) णवलदाए (नवलतया) दिण्णो (दत्तः) मिउओ (मृदुकः) वि (अपि) पहारो (प्रहारः) सबत्तीणं (सपत्नीनां) हिअए (हृदये) दूसहो (दुःसहः) व्विअ (इव) जाओ (जातः) इति पदव्यवस्था—

प्रियेण= बल्लभेन, भार्यायाः= नवपरिणीतायाः, स्तनपृष्ठे= कुचप्रदेशे, नवलतया= कोमललतया, दत्तः= विहितः, मृदुकः= कोमलः, अपि, प्रहारः= आघातः, सपत्नीनां= प्रियान्यस्त्रीणां, हृदये= चित्ते, दुःसह= सोढुमशक्यः, इव, जातः= सम्पन्न इति। अत्र प्रहारस्य दानेऽतथाप्रसिद्धत्वान्मुख्यार्थबाधेन दत्त इत्यस्य कृत इत्यर्थे लक्षणा। अत्रापि नैव गूढत्वं व्यङ्ग्यस्य नापि चारुत्वम् अतो न ध्वनिः किन्तु वाच्यालङ्काराणामेव चमत्कृतिः।

लक्षणा में ध्वनि के अन्तर्भाव के निरास करने के प्रसङ्ग में चौथा उदाहरण प्रस्तुत करते हैं।

इसी तरह प्रिय ने अपनी नवोढा पत्नी के स्तनों पर नवलता के द्वारा दिया गया हल्का सा प्रहार सौतों के मन में असह्य हो उठा।

यहाँ 'देना' जो है प्रहार के साथ में प्रसिद्ध नहीं है अतः मुख्यार्थबाध होने से लक्षणा से उसका अर्थ 'करना' हो जाता है और व्यङ्ग्य के गूढ न होने से यह ध्वनि का विषय नहीं है, केवल असङ्गति आदि वाच्यालङ्कारों का खेलखाल मात्र है।

ध्वन्या०— तथा—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोप्यभिमतः।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्र पतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः।।

इत्यत्रेक्षु पक्षेऽनुभवति शब्दोः न चैवंविधः कदाचिदपि ध्वनेर्विषयः।

लीला— लक्षणाया ध्वनेरन्तर्भावनिरसनप्रसङ्गे पञ्चममुदाहरणमुपस्थापयति परार्थ इत्यादि— यः परार्थे पीडाम् अनुभवति भङ्गे अपि मधुरः इह यदीयः विकारः अपि सर्वेषाम् अभिमतः खलु सः अक्षेत्रपतितः यदि वृद्धि न प्राप्तः असौ किम् इक्षोः दोषः पुनः अगुणायाः मरुभुवः न इति पदव्यवस्था।

यः= इक्षुः परार्थे अन्यनिसित्तं, पीडां= कष्टं—कर्तनपेषणादिकं, अनुभवति= प्राप्नोति, यः, भङ्गे= त्रोटने खण्डने, अपि= च, मधुरः= मिष्टः, एव, इह= जगति, यदीयः= यत्सम्भवः, विकारः= विकृतिः—गुडादिः, सर्वेषां= निखिलानां

व्यक्तिनिर्विशेषं, अभिमत:= इष्टः, सः तादृशः परार्थे त्यक्तजीवित इक्षुः, अक्षेत्रपतित:= अक्षेत्रे कुवाटिकायामूषरभूभौ पतित उप्तः, सन् यदि= कारणवशात्, वृद्धिं= पुष्टिं, न प्राप्त:= गतः, असौ= अवृद्धिः, किं= इति प्रश्ने, इक्षो:= इक्षुदण्डस्य, दोष:= त्रुटि, पुन:= इति पक्षान्तरे, अगुणायाः= उर्वराशक्तिहीनायाः, मरुभुवः= बालुकामयभूमेः, न= नैव दोषः? अपि तु काक्वाऽवश्यमेव भूमेर्दोष इति। पीडाया अनुभवस्तु विशिष्टचैतन्ययुक्तस्यैव धर्मः। यद्यपि इक्ष्वादिलतास्वपि जन्मवृद्धिक्षयधर्मत्वाच्चैतन्यमस्त्येव तथापि इक्षोः प्रत्यक्षतः पीडानुभवदर्शना-भावादतथाप्रसिद्धेर्मुख्यार्थबाधेन 'पीडामनुभवति' इत्येतस्य इक्षुपक्षे मर्द्यते इत्यर्थे लक्षणा। तत्र च न किमपि चारुत्वं व्यङ्ग्यस्य गूढत्वाभावात्। इदमप्रस्तुतपक्षे। प्रस्तुतमहापुरुषपक्षे तु अनुभवति शब्दो मुख्य एव। तेनाऽत्र केवलमप्रस्तुतप्रशं-साऽलङ्कारसौन्दर्यमेव। अप्रस्तुतेन इक्षुपक्षेण प्रस्तुतस्य तथाविधपरोपकारिणः सादृश्यसम्बन्धेनाक्षेपात्।

इति= इत्थं, अत्र= अस्मिन्वाक्ये, इक्षुपक्षे= इक्षुलताप्रकरणे अनुभवतिशब्दः= अनुभवति इति शब्दो लाक्षणिकः। एवंविधः= ईदृशोऽगूढव्यङ्ग्यः, कदाचित्= कस्यामप्यवस्थायाम् अपि= च, न= नैव, ध्वनेः= ध्वनितत्त्वस्य, विषयः= क्षेत्रम्।

अत्र इक्षुपक्षे अनुभवतिशब्दोऽतथासम्भवान्मर्द्यते इत्यर्थे लाक्षणिकः। एवविधोऽगूढव्यङ्ग्यो विषयो नैव कदापि ध्वनेर्विषयत्वेनोपस्थातुं शक्नोति। उक्त्यन्तराशक्यचारुत्वप्रकाशनपरो व्यञ्जकशब्द एव ध्वनेर्विषयतामायाति। नैवापि स्याद्ध्वनेविषयः किन्त्वस्य अप्रस्तुतप्रशंसावैचित्र्यन्तु सुतरां प्रभावि एव। तद्वशेनास्य ध्वनावन्तःपातस्तु न केनाऽपि परिह्रियते इति।

ध्वनि के लक्षण के रूप में लक्षणा को लेने से जो अतिव्याप्ति दोष आ जाने की बात कही गई थी, उसे उदाहरण द्वारा सिद्ध करने के लिए कहते हैं। इसी तरह—

'जो दूसरे के लिए पीडा का अनुभव करता है, जो टुकड़े किए जाने पर भी मीठा ही रहता है, जिसका विकार भी सबके लिए अभीष्ट है, वह ईख यदि बन्जर भूमि में पडने के कारण बढ न सके तो क्या ईख का दोष होगा ? न कि उस उर्वरा गुण से वर्जित मरुभूमि का ?

इस तरह इसमें ईख के पक्ष में 'अनुभव करता है' अंश। इस तरह के वाक्य में कभी भी ध्वनि का विषय नहीं आ पाता। यह तो केवल लक्षणा का विषय है। प्रस्तुत महापुरुष के पक्ष में तो अनुभव करता है, जो है वह मुख्य अर्थ पर ही है। इसमें अप्रस्तुत ईख के वर्णन से प्रस्तुत सज्जन का सादृश्य के कारण आक्षेप होने से अप्रस्तुतप्रशंसा है। उसके नाते इसका ध्वनि में अन्तःपात होना ही होता है।

ध्वन्या०— यतः—

कारिका-उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन्।

शब्दो व्यञ्जकतां बिभ्रद्ध्वन्युक्तेर्विषयीभवेत्।। १५।।

ध्वन्या०— अत्र चोदाहृते विषये नोक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः शब्दः।

लीला— एवं ध्वन्यभावविषयं प्रदर्श्य ध्वनिभावविषयनिर्देशनपरां कारिकां व्याचिख्यासुर्वृत्तिकारस्तत्पूर्वपीठिकां निबध्नाति यत इत्यादिना-न च एवंविधः कदाचिद्रपि ध्वनेर्विषयः, यतः= यस्मात्।

ध्वनिविषयं निर्दिशति कारिकाकारः— उक्त्येत्यादिना-यत् चारुत्वम् उक्त्यन्तरेण अशक्यम् तत् प्रकाशयन् व्यञ्जकताम् बिभ्रत् शब्द ध्वन्युक्तेः विषयीभवेत् इति।

यत्= यादृशं-सर्वातिशायि, चारुत्वं= सौन्दर्यं, अन्या अपरा उक्तिः कथनप्रकार उक्त्यनतरं तेन— ध्वन्यतिरिक्तेन शब्दार्थव्यापारविशेषेण, अशक्यं= अप्रकाश्यं भवति, तत्= तादृशं पर्यवसायि सर्वातिशायि, चारुत्वं प्रकाशयन्= द्योतयन्, व्यञ्जकतां= व्यञ्जकत्वधर्मः, बिभ्रत्= धारयन्, शब्दः= शब्दयतेऽभि-धीयते इति शब्दो वाच्यः, शब्द्यतेऽनेनेति वाचकः, शब्द्यते व्यज्यते इति व्यङ्ग्यः, शब्दनमिति व्यापारः, समुदायरूपः शब्दपदार्थश्च, ध्वन्युक्तेः= ध्वनिरितिख्या-ततत्वस्य, विषयीभवेत्= विषयत्वेन भवति नान्य इति। उक्त्यन्तरेण अशक्यं, यद्यारुत्वं तत्प्रकाशयन् व्यञ्जकता बिभ्रत् शब्दः ध्वनेर्विषयो भवति।

ध्वनेर्लक्षणमिदमुदाहृतेषु न घटतीति प्रतिपादयति वृत्तिकृदत्रेत्यादिनअत्र= अस्मिन् प्रकरणे, च, उदाहृते= उदाहरणरूपेण प्रस्तुते, विषये= काव्ये, उक्त्यन्तराशक्यचारुत्वव्यक्तिहेतुः= तदितरकथनेन द्योतयितुमसम्भवि यच्चारुत्वं तस्य द्योतनकारणीभूतः शब्दः वाच्यो वा वाचको वा, न= नैव अर्थात् नैतादृशशब्दस्य तत्र प्रयोगो यस्य विकल्पने चारुत्वमेव हीयेत। यथा परिम्लानमिति पद्ये 'वदति' शब्दस्य स्थाने प्रकटयतिशब्दप्रयोगेऽपि नो काऽपि हानिः। एवं क्रमेण पुनरुक्त शब्दस्य स्थानेऽनाकर्षकशब्दस्य, गृहीतशब्दस्य स्थाने उपादत्त शब्दस्य हरन्ति इत्येतस्य स्थाने वशीकरोति इत्येतस्य दत्त इत्येतस्य स्थाने 'कृतः' इत्येतस्य, अनुभवतिशब्दस्य स्थाने 'मर्द्यते' इत्येतस्य प्रयोगेऽपि नो काऽपि हानिः। तर्हि किमर्थं कवयस्तथा कुर्वन्तीत्यपेक्षायां कथ्यते प्रसिद्ध्यनुरोधात्। विकल्पसमर्थने मुख्यार्थ एव प्रभवति। तथा सत्यपि वाच्यार्थस्तु सिध्यत्येव।

यत्तु प्रयोजनं नितान्तमेव नापेक्षितं यथा निरूढलक्षणायां तत्र तु ध्वनेः सम्भावनैव न भवति यथा 'कुशल': इत्यादौ। कुशान् लाति इति कुशोत्पाटनदक्षे प्रवर्तितः कुशलशब्दः प्रयोगपरम्परया निपुणार्थे रूढः। वस्तुतस्तु कुशोत्पाटनेऽपि निपुणताऽऽवश्यकी एवान्यथा हस्तपादादिकर्तनकुशेतरवस्तुग्रहणसम्भवात्। तेनैव साम्याधारेण कुशलशब्दो निपुणार्थे रूढः। तत्र न किमपि प्रयोजनं तथाकरणे

केवलं प्रसिद्धिरेव। तेनैवोक्तं 'निरूढा लक्षणाः काश्चित्सामर्थ्यादाभिधानवत्' इति। प्रयोगपरम्परावशाद्यः शब्दोऽर्थान्तरे तथा रूढो यथा तस्य मूलार्थस्य प्रतीतिरेव न भवति तत्र निरूढा लक्षणा भवति। प्रयोजनाभावात्। सत्यपि प्रयोजने यथाकथञ्चित्सिद्धे न तत्र चारुत्वपर्यवसानं व्यङ्ग्यस्य अगूढत्वात्। एवञ्च यदा च प्रयोजनमाधृत्य लक्षणा भवति तत्र प्रयोजनप्रत्यानयनाय व्यञ्जनाऽश्रयीणा भवति। तत्र व्यङ्ग्यं तु भवति द्विप्रकारम्। एकन्तु तद् यच्छब्दान्तरेणाभिहिते न तादृशं चारुत्वोत्कर्षमावहति यादृशं लक्षणामूलक-विशेषशब्दप्रयोगेण। द्वितीयन्तु शब्दान्तराभिहितत्वेऽपि रमणीय तायां न किमपि स्पष्टमन्तरम्। ध्वनेर्विषयस्तु प्रथमप्रकारमेव व्यङ्ग्यं किञ्च रमणीयताया व्यङ्ग्यार्थे पर्यवसानं ध्वनिविषयभवनाय परममावश्कं तथ्यम्। उपर्युक्तोदाहरणेषु यथाकथञ्चिद् व्यङ्ग्यस्योन्नयनेऽपि शब्दविकल्पनेऽपि न किमपिचारुत्वेऽन्तरमिति न तत्र ध्वनिः।

न तो इस प्रकार के प्रयोग परम्परा के आधार पर अर्थान्तर में निरूढ होने वाले शब्द कभी ध्वनि के विषय बन सकते हैं। क्योंकि—

जो व्यञ्जना वृत्ति का आश्रय लेकर इस प्रकार की रमणीयता का उन्नयन करे जो किसी दूसरी उक्ति से सम्भव न हो वही शब्द ध्वनि की उक्ति का विषय बन सकता है।

यहाँ ऊपर जो भी उदाहरण दिए गए हैं उनमें जिन शब्दों में लक्षणा है उनमें से कोई भी ऐसा शब्द नहीं है जो किसी ऐसी रमणीयता का हेतु हो जो किसी दूसरे शब्द से व्यक्त न की जा सके। जैसे 'कहता है' के बदले 'प्रकट करता है', 'पुनरुक्त' के बदले 'अनुपादेय', 'ग्रहण के 'उत्पादन' एवं हरण के बदले वश में करना' 'दिया' के बदले 'किया' और अनुभव करता है' के बदले 'पिसा जाता है' कहने पर भी कोई फर्क नहीं पड़ता क्योंकि निरूढा लक्षणा अपने बल पर अभिधा ही बन बैठती है।

ध्वन्या०— किञ्च—

कारिका— रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः।।१६।।

ध्वन्या०— तेषु चोपचरितशब्दवृत्तिरस्तीति। तथाविधे च विषये ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते। न तथाविधशब्दमुखेन।

लीला— यत्र सदपि प्रयोजनमत्यन्तादराभावे नैव ध्वनेर्विषयो भवति यत्र तु प्रयोजनमेव नास्ति केवलमुपचारमात्रं तत्र कथं ध्वनिरिति प्रकाशनाय सम्बद्धां कारिकामवतारयितुं कथयति किञ्चेति किञ्च= इदमपि यत्—

कारिकामवतारयति रूढा इत्यादि— स्वविषयाद् अन्यत्र विषये रूढाः ये लावण्याद्याः शब्दाः ते प्रयुक्ता अपि ध्वनेः पदम् न भवन्ति इति पदव्यवस्था।

स्वविषयात्= स्वमुख्यार्थात्, अन्यत्र= अन्यस्मिन्–कान्त्यादिरूपे, विषये= अर्थे, रूढाः= परम्परया प्रसिद्धाः, ये= केचन, लावण्याद्याः= लावण्यप्रभृतयः, आदिपदात् अनुलोमप्रतिलोमादयश्च, शब्दाः= अर्थाश्रयाः, सन्ति, ते= तादृशाः शब्दाः, प्रयुक्ताः= प्रयोगविषयीकृताः, अपि, ध्वनेः= ध्वनितत्वस्य, पदं= स्थानं, न, भवन्ति= कल्पन्त इति। ये खलु शब्दाः स्वमुख्यार्थाभिन्नार्थेष्वपि रूढत्वेन प्रयुक्तास्ते ध्वनिविषयाय नैव कल्पन्त इति।

कारिकाशयं विशदीकरोति वृत्तिकृत् तेषु चेत्यादिना–तेषु= तादृशेषु लावण्यादिशब्देषु, उपचरितशब्दवृत्तिः= उपचरिता भक्त्या समाश्रिता चासौ शब्दवृत्तिर्गौणी लक्षणा, अस्ति= विद्यत, इति हेतोर्नासौ ध्वनेर्विषयः। स्वार्थादन्यत्र प्रयुक्ता अपि न ते ध्वनिविषयीभावसौभाग्यं लभन्ते प्रयोजनमनुद्दिश्यैवोपचरितमात्रत्वात्। तथाविधे= तादृशे, प्रयोजनशून्येनैव गौणीभवने, विषये= काव्ये, क्वचित्= यत्र कुत्र, सम्भवन्= सम्भाव्यतां प्राप्नुवन्, अपि= च, ध्वनिव्यवहारः ध्वनित्वेन प्रयोगः, प्रकारान्तरेण= अन्येनैवोपायेन, प्रवर्तते= प्रावृत्तो भवति, तथाविधशब्दमुखेन= तादृशनिरूढशब्दद्वारेण, नैवेति।

लावण्यशब्दो वस्तुतस्तु लवणरसयुक्तत्वावबोधकः। सलवणत्वमेव सर्वेषां स्वदते। अनेनैवार्थसाम्येन लावण्यशब्दः सौन्दर्यार्थे निरुढः। यथा लवणहीनं व्यञ्जनं नैव स्वदते तथैव लावण्यहींनं वपुरपीति तत्र युक्तिः। किन्तु प्रयोगपरम्परावशात् शब्दोऽयं स्वं शक्यार्थं नितान्तमेवापास्य सौन्दर्यार्थे निरूढः। तेन तत्र लक्षयार्थं नैव त्रितयसन्निध्यपेक्षा। मुख्यार्थबाधः स्वार्थसम्बन्धः रूढिप्रयोजनान्यतरहेतुत्वञ्च त्रितयसन्निधयः। निरूढा लक्षणा सामर्थ्याभिधानवद्भवति इत्यनेनैव तत्रार्थबोधः। तेन स्वविषयादन्यत्रार्थे प्रयुक्तोऽपि तादृशशब्दो नैव ध्वनेर्विषयो भवति प्रयोजनाभावत् केचितु निरुढयामपिमुख्यार्थबाधः मुख्यार्थ सम्बन्धयोः स्वस्थानम्—मन्यन्तेऽन्यथा लक्षणाऽसम्भवादिति युक्त्या किन्तु ते विस्मरन्ति यल्लावण्यशब्दः स्वकीयलवणयुक्तत्वमर्थं स्वयमेव विस्मरति। तेन कथं मुख्यार्थबाधः आपतेत्। सत्यामपि तत्प्रतीतौ नैवदृश्यत्वेनोपतिष्ठते इति न निरूढायां मुख्यार्थवाधावसरः। यथा परमतत्वेलीनोभवतः स्व स्वयोनिञ्च विस्मरति मजते तदद्वैतभावेन तथैव लावण्यशब्दोऽपि निरूढलक्षणायां तथा रूढो यत्सः स्वीयं सङ्केतितमर्थमपि विस्मरति। आदिपदात् अनुलोम-प्रतिकूलादिशब्दानां ग्रहणम् तेषामपि तथैव स्थितिः। लोम्नोऽनुगतमनुलोमं मर्दनमित्यस्य अनुकूलने, कूलस्य प्रतिपक्षतया स्थितं प्रतिकूलं स्रोतः इत्यस्य वैपरीत्यसामान्ये निरूढता। स्यादपि तेषु पूर्वकाले मुख्यार्थबाधावसरः। सम्प्रति तु तेषामभिधायकस्तत्र प्रयोग इति त्रितयसान्निध्यभावसिद्धौ युक्तिः यथा कथयति साहित्यदर्पणकारोऽपि— अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तं,

व्युत्पत्तिलभ्यमात्रस्यैव मुख्यार्थत्वे 'गौः शेते' इत्यत्रापि लक्षणा स्याद्' इति। यदि व्युत्पत्तिलभ्यस्यैव मुख्यार्थत्वं स्यात्तदा तु सर्वेऽप्यव्युत्पन्नशब्दा लक्षणा-विषयाः स्युस्तेषां व्युत्पत्तेरगम्यत्वात्। कविप्रतिभा तु अगम्यैव भवति। तेन यदा कदा ते चमत्कारातिशयाधानाय निरूढायामपि शक्यार्थं सङ्केतयन्ति। तादृशकाव्ये तु तत्रापि व्यङ्ग्यार्थप्रतीतिः सम्भवति मुख्येतरार्थस्य तदाक्षिप्तेत्वेन प्रतीयमानत्वात् इति चेदित्थं तन्नापि ध्वनितिव्यवहारस्तु यदि सम्भवति चेदपि, प्रकारान्तेण भवेन्न तु तादृशशब्दाधारेण। प्रकारान्तरञ्च समग्रवाक्यार्थप्रतीत्यनन्तरं ध्वननव्यापारादि।

और यह भी कि—

अपने विषय अर्थात् अर्थ से भिन्न दूसरे ही अर्थ में रूढ हो कर प्रयुक्त लावण्य आदि शब्द भी ध्वनि के विषय नहीं होते।

उनमें केवल आश्रित लक्षणा ही होती है व्यङ्ग्यार्थ नहीं। यदि उनमें कहीं ध्वनि का व्यवहार हो भी पाए तो भी वह उनके चलते नहीं अपितु दूसरे ही प्रकार से हुआ होता है।

यहाँ उपचरित का अर्थ है नितान्त आश्रित अर्थात् अपने शक्य अर्थ को एकदम भूल कर जैसे घर द्वार छोड़ कर भक्त भगवान् में तन्मय होकर भगवान् से अद्वैत भाव का अनुभव करते हैं। उसी तरह ऐसे शब्द भी अपनी मौलिकता को पूरा छोड़ कर लक्षणा में ऐसे आश्रित बन जाते है कि मानों वही उनका मुख्यार्थ है। जैसे लवण से बना लावण्य शब्द सौन्दर्य अर्थ में। अनुलोम से बना अनुलोम शब्द अनूकूल अर्थ में, प्रति+कूल से बना प्रतिकूल शब्द विपरीत अर्थ में, अतः ऐसे शब्द में न मुख्ययार्थबाघ की बात आती है, न तो मुख्यार्थसम्बन्ध की, प्रयोजन की बात तो बहुत दूर रही। ये शब्द व्युत्पत्तिनिमित्त को छोड़ कर प्रवृत्तिनिमित्त में मस्त रहते हैं। वैसे कहीं किसी के प्रयोग में उनके नितान्त विस्मृत मुख्यार्थ की भनक आ जाय और वैसे काव्य में ध्वनि व्यवहार की सम्भावना हो भी सके तो भी वह वैसे शब्द के कारण नहीं बल्कि दूसरे ही कारणों से हो सकता हैं। अर्थात् सम्पूर्ण वाक्यार्थ की प्रतीति के कारण ध्वनि के व्यवहार की सम्भावना होने से।

**ध्वन्या०— अपि च—**

**कारिका— मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम्।**
**यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः।।१७।।**

**ध्वन्या०— तत्र हि चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे प्रयोजने कर्तव्ये यदि शब्दस्यामुख्यता तदा तस्य प्रयोगे दुष्टतैव स्यात्। न चैवम्।**

लीला— एवं ध्वनेर्भक्तिलक्षणां सम्भावनां निरास्य पुनश्च तयोर्व्यापरगत-

पार्थक्यप्रदर्शनाय कारिकावतरणस्य प्राग्रूपं प्रस्तौति वृत्तिकृत् अपीत्यादिना अपि= ईदमपरं, च-अपि-न केवल तावन्मात्रमपि एतावदपि।

कारिकामवतारयति-मुख्यामित्यादिना-यत् फलम् उद्दिश्य मुख्याम् वृत्तिम् परित्यज्य गुणवृत्या अर्थदर्शनम् तत्र शब्दः नैव स्खलद्गतिः इति पदव्यवस्था।

यत्= यद्विधं, फलं= प्रयोजनं, उद्दिश्य= लक्षयित्वा, मुख्यां= अभिधां, वृत्ति= व्यापारं, परित्यज्य= उज्झित्वा, गुणवृत्या= गुणाधृतशक्त्या, लक्षणया, अर्थदर्शनं= वस्तुबोधनं, क्रियते, तत्र= इति व्यङ्ग्ये, शब्दः, स्खलद्गतिः= स्खलन्ती मुख्यार्थबाधाद्यनुसन्धानेन विलम्बिता गतिः प्रसरणं बोधकता यस्य स तादृशः, न= नैवेति।

मुख्यार्थं परित्यज्य लक्षणयाऽमुख्यस्यार्थस्य प्रत्यारब्धे यत्प्रयोजनमुद्दिश्य क्रियते ततः पर एव व्यापरः। स च नैव लक्षणा शब्दस्यार्थावबोधनशक्तेरबाधात्। शब्दस्य स्खलद्गतित्वे पुनस्तस्या अवसर आपद्येत किन्तु तत्र न तथा। अतस्तत्र व्यञ्जना एवोदेति तृतीयव्यापारत्वेन। सङ्केतितमर्थमभिधा बोधयति। मुख्यार्थबाधे लक्षणाव्यापारः। यत्फलमुद्दिश्य मुख्यार्थस्य बाधेन गौणोऽर्थो गृह्यते तत्फलं तु व्यञ्जनाव्यापार एव। किञ्च तत्र लक्ष्यार्थस्यामुख्यत्वात् शब्दस्य चार्थावबोधनशक्तेरकुण्ठितत्वाच्च न तल्लक्षणाविषयः। यथा 'गङ्गायां घोषः' इत्यत्र प्रवाहे घोषावस्थितेरप्रसिद्धेर्मुख्यार्थबाधेन शीतत्वपावनत्वादिप्रयोनमादृत्य जहत्स्वार्थया लक्षणलक्षणया गङ्गाशब्देन तटस्यावबोधनं भवति। तत्प्रयोजनादबोधनञ्च व्यञ्जनया सम्भवति। यतो गङ्गाशब्दस्य तटरूपोऽर्थो नैव मुख्यस्तेन मुख्यार्थबाधस्यावसर एव नोदेति। अपरञ्च तटे घोषस्यावस्थितिर्नैवसम्भवा यतस्तस्य बाधः स्यात्। गङ्गातटयोर्यादृशः सामीप्यसम्बन्धो न तथा तटपावनत्वयोर्यतः पावनादिकं तटापेक्षया गङ्गायामेव भवति। अतो न तत्र पुनर्लक्षणावसरोऽपि तेन प्रयोजनप्रतिपत्तिस्तु व्यञ्जनाया एव व्यापार इति। यथोक्तं काव्यप्रकाशेऽपि-

लक्ष्यं न मुख्यं नाऽप्यत्र बाधो योगः फलेन नो।<br>
न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः।।

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वद्यदि तटे अपि सबाधः स्यात् तत्प्रयोजनं लक्षयेत्। न च तटं मुख्योऽर्थः नाप्यत्र बाधः न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः, नाऽपि प्रयोजने लक्ष्ये किञ्चित्प्रयोजनम्, नाऽपि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः। तेन अमुख्यार्थे ये विशेषास्तेऽभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः। तच्च व्यञ्जनद्योतनध्वननादि वाच्यमेव। तत्र खलु सङ्केतिताभावान्नाभिधा मुख्यार्थबाधादिहेतुत्रयाभावान्नैव च लक्षण। अतः-

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।<br>
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।।

अपि च—

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता।।

कारिकार्थमेव पुष्णाति तत्रेत्यादिना—तत्र= इति प्रकरणे, चारुत्वातिशयविशिष्टार्थप्रकाशनलक्षणे= चारुत्वातिशयेन सौन्दर्योत्कर्षेण विशिष्टः प्राधान्यं प्राप्तो योऽर्थो व्यङ्ग्यार्थस्तस्य प्रकाशनं द्योतनं तदेव लक्षणं यस्य तस्मिन् तादृशे, प्रयोजने मुख्यार्थबाधलक्ष्ये, कर्तव्ये= अवगमयितव्ये, सति, यदि, शब्दस्य= तादृशप्रयोजनाक्षेपकस्य, अमुख्यता= बाधकेन विधुरीकृतता, तदा= तस्यां स्थितौ, तस्य= तथाविधशब्दस्य, प्रयोगे= व्यवहारे, दुष्टता= सदोषता, एव, स्यात्,किन्तु, एवं= शब्दस्य तदवस्था, न= नैव भवति इति। चारुत्वोत्कर्षविशिष्टार्थद्योतनमेव प्रयोजनस्य प्रयोजनम्। तदवगमार्थमेव शब्दस्यामुख्यार्थे प्रयोगः, क्रियते चेत्तद् दोषाकृतं भवति किन्तु यथार्थे न तथा। मुख्यार्थस्य बाधेनामुख्यार्थे तटादौ गङ्गादिशब्दप्रयोगः एतन्निमित्तमेव क्रियते यथा प्रयोजनस्यावगमः सुखेनैव स्यात्। यथा 'वटुवीर' इति कथनावसरे 'सिंहो वटुः' इति कथनं बटोः शौर्याधिक्यद्योतनायैव। यदि तादृशप्रतीत्यवगमाय शब्दः स्खलद्गतिर्भवति तदा तस्य प्रयोग एव निरर्थकः। यदि तस्य प्रतीतिलक्षणा क्रियते तदा तन्निमित्तमपि प्रयोजनमन्वेष्टव्यम्। तत्रापि लक्षणावगमो यतः सुदीर्घा लक्षणाशृङ्खलैव स्याद्यस्मादनवस्थादोष उत्पद्यते। यदि तादृशप्रयोजनस्य प्रत्यायने शब्दस्य गतिः कुण्ठिता न भवति तदा प्रयोजनावगमे नैव लक्षणाव्यापारस्तस्य साधनाभावात्। न च तत्र व्यापार एव इति न, व्यापारस्तु भवत्येव। तत्रनाभिधा प्रयोजने संकेतग्रहंणाभावात् न च लक्षणा हेत्वभावात् प्रयोजनस्य प्रयोजनाभावाच्च। अत एव प्रत्ययार्थमपि कश्चिदपि व्यापारस्तु स्वीकर्तव्य एव। स एव ध्वननव्यापारः। 'न चैवम्' इत्यस्यायमेवाशयो यत्तत्र लाक्षणिकशब्दप्रयोगे न कोऽपि दोषः प्रयोजनप्रतीतौ विहनाभावात्। तत्र यदि अभिधा शक्यार्थाय प्रयतते तदा बाधकस्तां निरूणद्धि। ततश्चाचरितार्थाऽभि—धाऽमुख्यार्थे प्रविशति। तेन लक्ष्यार्थोप्यभिधाया अमुख्यार्थ एव यतोऽमुख्यार्थे संकेतग्रहोऽपि शब्द्यते कैश्चित्।

**अतिव्याप्ति दोष के आ जाने के कारण लक्षण ध्वनि का लक्षण नहीं बन पाती क्योंकि जहाँ-जहाँ कक्षणा है वहाँ-वहाँ ध्वनि नहीं होती। इतना ही नहीं, ध्वंनन एवं लक्षणा के व्यापार भी भिन्न-भिन्न हैं। इसी बात को अब उपस्थापित करते हैं—**

**और यह भी कि—**

**जिस प्रयोजन के उद्‌देश्य से शब्द की मुख्यवृत्ति अर्थात् शक्य अर्थ को छोड़ कर गुणवृत्ति अर्थात् लक्षणा से अमुख्य अर्थ की प्रतीति कराई जाती है उस प्रयोजन के विषय में शब्द फिर बाधित नहीं होता।**

इसी का आगे पल्लवन करते हैं—

वहाँ चारुत्व की अतिशयता से विशिष्ट बने अर्थ का प्रकाशन करना ही है लक्षणा जिसका ऐसे प्रयोजन के अवगमन में यदि उस शब्द की फिर अर्थबाध से अमुख्यता आ जाती तो वह एक दोष होता लेकिन ऐसा नहीं होता अर्थात् उस शब्द का फिर अर्थबाध नहीं होता प्रयोजन के अभाव होने से।

प्रकारान्तर से इसे यों समझा जा सकता है। किसी एक प्रयोजन से ही शब्द के मुख्यार्थ का बोध होता है वह शब्द अपने मुख्य अर्थ को छोड़कर गौण अर्थ में प्रयुक्त होता है। पहली स्थिति अभिधा थी तो दूसरी थी लक्षणा तब उस प्रयोजन के अवबोधन के लिए तीसरी स्थिति आ जाती है। इसी स्थिति में विवाद है। यह स्थिति अभिधा नहीं हो सकती क्योंकि शब्द का लक्ष्यार्थ में सङ्केतग्रह किया नहीं जाता है। न तो यह स्थिति लक्षणा की होती है क्योंकि न तो लक्ष्यार्थ मुख्यार्थ है न ही उसका बाध होता है और न ही उस बाध के लिए कोई प्रयोजन ही होता है क्योंकि बिना प्रयोजन मुख्यार्थबाध नहीं होता, होने पर भी वह ध्वनि का विषय नहीं बन पाता। यदि वहाँ फिर लक्षणा मानी जाय तो फिर उसका भी प्रयोजन खोजना पड़ेगा और उस प्रयोजन का भी प्रयोजन। इस तरह लक्षणा की एक लम्बी शृखला बन जाएगी जिसका कोई अन्त न होने से अनवस्था दोष आ जाएगा। ऐसा भी तो नहीं माना जा सकता कि वहाँ कोई व्यापार ही नहीं है क्योंकि बिना व्यापार का फल नहीं होता तो वह व्यापार जो कि सङ्केत ग्रह न होने से अभिधा नहीं है और हेतु के न होने से लक्षणा नहीं है, और व्यापार भी आवश्यक है नहीं तो प्रयोजन का फल कैसे ज्ञात होगा ? तो वह है कौन ? वह ही व्यञ्जना है। जैसे 'लड़का वीर है' कहने के बजाय जब यह कहा जाता है कि 'लड़का शेर है'— तब उसमें शूरता के उत्कर्ष की प्रतीति ही प्रयोजन होता है नहीं तो ऐसा कहा जाता ? बिना प्रयोजन मूर्ख तो प्रवृत्त नहीं होता तो क्रान्तदर्शी कवि कैसे हो सकता है ? तो 'शेर' शब्द का तो एक शूर जानवर के रूप में संकेतग्रह हुआ होता है अत: उसका लडका के साथ तालमेल बैठ नहीं पाता अत: मुख्यार्थबाध होने से गुण के साम्य से उसमें 'अत्यन्त शूर' अर्थ में लक्षणा होती है और शौर्येत्कर्ष के अवबोधन के लिए तब कौन सा व्यापार कार्य करता है ? क्या अभिधा ? नहीं यहाँ संकेतग्रह नहीं है ? तो क्या लक्षणा ? नहीं। यहाँ न मुख्य अर्थ है न तो उसका बाध ही न तो ऐसा प्रयोजन ही है। बिना व्यापार काम भील नहीं चल सकता ? अत: वह कार्य व्यञ्जना करती है। इसीलिए लक्षणा का व्यापार अलग है और व्यञ्जना का अलग। दो पृथग्धर्मी एक ही लक्षण में नहीं आ सकते। अत: ध्वनि का लक्षण भक्ति नहीं है।

ध्वन्या०— तस्मात्—

कारिका— वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्।।१८।।

ध्वन्या०— तस्मादन्यो ध्वनिरन्या च गुणवृत्तिः।

लीला— इत्थमतिव्याप्तिदोषोपस्थापनेन व्यापारान्तरप्रतिपादनेन च ध्वनेर्लक्षणत्वेन भक्तिं निरास्य सम्प्रति आश्रयभेदेनापि तन्निरासनाय वृत्तिकृत् कारिकावतरणाय पूर्वसम्बन्धं प्रदर्शयति तस्मादिति-तस्मात्= तेन हेतुना। यतोऽतिव्याप्तिरुक्ता तत्प्रसङ्गेन च भिन्नविषयत्वं तस्मात्।

कारिकामवतारयति वाचकत्वेत्यादि—वाचकत्वाश्रयेण एव व्यवस्थिता गुणवृत्तिः व्यञ्जकत्वैकमूलस्य ध्वनेः लक्षणम् कथम् स्यादिति पदव्यवस्था।

वाचकत्वाश्रयेण= वाचकत्वं वाच्यवृत्तिरभिधा तया प्रतिपाद्यो योऽर्थो वाच्यस्तस्य वाचकोऽभिधायकस्तस्य भावस्तत्त्वं तस्य आश्रयेण आधारेण तस्यैव गौणीभावे एव तस्य प्रवर्तनसम्भवात्, एव= इति व्यवच्छेदे नान्यथेति, व्यवस्थिता= आत्तसत्ता, गुणवृत्तिः= लक्ष्यभावगुणयोगा भक्तिलक्षणेति- ''अभिधयाविनाभावप्रतीतिर्लक्षणोच्यते। लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता।' इति प्रतिपादितलक्षणा, व्यञ्जकत्वैकमूलस्य= व्यञ्जकत्वं व्यज्यतेऽसाविति व्यङ्ग्यः प्रमीयमानवस्तु, तस्य प्रतीतिकृत् व्यञ्जकः व्यन्क्त्यसाविति व्युत्पत्तेः प्रत्यायकस्तस्य भावस्तत्त्वं तदेव एकमद्वितीयं मूलं यस्य स तस्य, तादृशस्य, ध्वनेः काव्यात्मत्वेन व्यवस्थितस्य ध्वनितत्वस्य लक्षणं= अन्यावच्छेदकासाधारणधर्म, कथं= कथंकारं, भवतीति शेषः। मुख्यार्थबाधे एव तस्याः सम्भवात् तत्पुच्छभूता लक्षणा नितान्मतमेव वाचकत्वसमाश्रिता। ध्वनिस्तु व्यञ्जनापरा इति कथङ्कारं भक्तिर्ध्वनेर्लक्षणत्वेनोत्तिष्ठते। नैव कदाचित्। सङ्केतितार्थबोधनमभिधाव्यापारः तदाबाधे प्रयोजनमाश्रित्य वा रूढिं तत्सम्बन्ध्यार्थबोधनं लक्षणाव्यपारः। विरतेषु तेषु च मुख्यार्थबाधप्रयोजनस्य फलोपपादनं व्यञ्जनाव्यापारः। तत्र वाचकत्वाधारेण कृतास्तित्वा लक्षणा व्यङ्ग्यविग्रहस्य ध्वनेर्लक्षणं नैव सम्भवति।

कारिकोक्तमुपसंहरति तस्मादित्यादिना-तस्मात्= पूर्वप्रतिपादिततत्तद्धेतुना स्वरूप-व्यापार-आश्रयादिपार्थक्येन, अन्यः= लक्षणातो भिन्नः, अपरः, ध्वनिः= ध्वनितत्वं, अन्या= अपरा, पृथगेव ध्वनेः, गुणवृत्तिः, लक्ष्यमाणगुणयुक्त व्यापारा लक्षणा चेति। लक्षणागुणवृत्तिः ध्वनिः प्रयोजनवृत्तिः लक्षणा वाच्यार्थाश्रिता ध्वनिः प्रतीयमानार्थाश्रितः, लक्षणाऽभिधानुगा ध्वनिस्तदुदासीना, पूर्वावाचकत्वाधारा अपरा व्यञ्जकत्वैकमूला। तेन नैव लक्षणा ध्वनेर्लक्षणत्वेनोपतिष्ठते।

ध्वनि एवं लक्षण के सम्बन्ध में जो भी कहा गया उन सबका उपसंहार करते हुए उस आशय की कारिका का अवतरण करते हैं।

इसलिए—

वाचकत्व में आश्रय से व्यवस्थित लक्ष्यमाण गुणों से व्यापार चलाने वाली लक्षणा व्यञ्जकत्व ही एक मात्र मूल वाली ध्वनि का लक्षण कैसे बन सकती है।

इस हेतु ध्वनि अन्य होती है और लक्षणा और ही। दोनों मे कोई ताल मेल नहीं।

लक्षणा केवल अभिधा की अनुगामिनी होती है और ध्वनि अभिधा के प्रतिकूल भी। लक्षणा अभिधा की दूसरी गति है तो ध्वनि उससे आक्षिप्त प्रतीयमान मात्र। मुख्यार्थ का बाध, मुख्यार्थसम्बन्ध एवं रूढिप्रयोजनेतर ये तीन लक्षणा के हेतु है, ध्वनि के लिए गुढ व्यङ्ग्य। लक्षणा का अभिधा के पूरक के रूप में व्यापार है तो ध्वनि का चारुत्वपर्यवसायी के रूप में। लक्षणा का आश्रय है वाचकत्व एवं ध्वनि का है व्यञ्जकत्व। जहाँ-जहाँ लक्षणा हो सकती है वहाँ ध्वनि एकदम नहीं ज्ञान का विषय एक है तो फल का अन्य ही। लक्षणा का जो क्षेत्र है, उन सबमें ध्वनि व्याप्त हो नहीं सकती। हाँ, ध्वनि का आधार प्रयोजन है और लक्षणा में भी प्रयोजन तो रहता ही है लेकिन इसमें दोनों समानता नहीं रखते क्योंकि लक्षणा शब्द के प्रयोजन से और ध्वनि वाक्य के प्रयोजन से सम्बद्ध है व्यङ्ग्य दोनों में हो सकता है लेकिन लक्षणा में यह स्पष्ट भी रहता है ध्वनि तो केवल गूढ व्यङ्ग्य में होती है। लक्षणा तो सतह से ऊपर नाचती है तो ध्वनि गहराई में। 'गङ्गा में घोष' में लक्षणा केवल सामीप्य के नाते गङ्गा शब्द का गौण अर्थ 'तट' का बोध करा पाती है और व्यञ्जना वा ध्वनि अमुख्यार्थ ग्रहण करने के प्रयोजन को जो कि शीतत्व पावनत्व आदि है। लक्षणा एक बीच रास्ते का चबूतरा है तो ध्वनि यात्रा का अन्तिम लक्ष्य।

ध्वन्या०— अव्याप्तिरप्यस्य लक्षणस्य न हि ध्वनिप्रभेदो विवक्षितान्यपरवाच्यलक्षणः अन्ये च बहवः प्रकाराः भक्त्या व्याप्यन्ते। तस्माद्भक्तिरलक्षणम्।

लीला— कारिकायां 'अव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया' इति यदुक्तं तत्रातिव्याप्तिं व्याख्याय सम्प्रति अव्याप्तिं व्याचष्टे अव्याप्तिरित्यादिना-अस्य= गुणवृत्तिरूपस्य, लक्षणस्य= भक्तिरूपध्वनिलक्षणस्य, अव्याप्तिः= लक्ष्यैकदेशमात्रव्याप्तिश्च। ध्वनेर्लक्षणत्वेन भक्तेः स्वीकरणे न केवलमतिव्याप्तिदोषोऽपितु अव्याप्तिरपि। यदि यत्र-यत्र ध्वनिस्तत्र तत्र भक्तिर्भवेन्न तत्र स्यादव्याप्तिः। किन्तु न चैवम्। विवक्षितान्यपरवाच्यलक्षणः= यत्र वाच्यः आत्मानं प्रकाशयन्नम्यपरं वाच्यमपि प्रकाशयति तथालक्षणः, ध्वनिप्रभेदः= अभिधामूलको ध्वनिभेदः, न= नैव भक्तिविषयः। अस्यायमाशयः-यत्र-यत्र ध्वनिर्भवति तत्र-तत्र नैव भक्तिरिति ध्वनेर्भक्तिलक्षणेऽव्याप्तिदोषः तत्र द्विविधो ध्वनिः सासान्यत, अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च। अविवक्षितवाच्ये तु भक्तिर्भवति यथा 'सवुर्णपुष्पां' इत्यादौ किन्तु विवक्षितान्यपरवाच्ये नैव भक्तेर्लेशोऽपि यथा 'शिखरिणी' इत्यादौ। सुव्यक्तमेव यदविवक्षितवाच्ये वाच्यार्थस्याविवक्षातो लक्षणा प्राप्नोति किन्तु विवक्षितान्यपरवाच्ये तु वाच्यस्यापि विवक्षया हेत्वभावान्नैव लक्षणा। अत्राव्याप्तिदोषाख्यानप्रकरणे अस्येतिगुणवृत्तिरूपस्येति

व्याख्यानं न तु सम्बन्धान्तरवृत्तिरूपस्य। अत्रेदमवधेयं यन्मीमांसका गौणीं लक्षणां च पृथक्पृथग्वृत्तित्वेन गृह्णन्ति। तदनुसारं मुख्यार्थबाधे गुणसाम्यात्त-दितरार्थबोधो भवति गौण्यां लक्षणायां तु तथा सम्बन्धान्तरत एव। गोण्यां केवलं शब्दस्तमर्थं लक्षयित्वा तेनैव सह सामानाधिकरण्यं भजते। यथा 'सिंहो माणवकः' इत्यत्र शौर्यादिगुणसाम्यात् माणवकः सिंह इति कथितः उभयोरेव सम्मिलितप्रयोगश्च। एवमेव अर्थो वा अर्थान्तरं लक्षयित्वा स्ववचनकेन तद्वाचकं समानाधिकरणं करोति वा शब्दर्थौ युगपत्तं लक्षयित्वाऽन्याभ्यामेव शब्दार्थाभ्यां मिश्रीभवतः। यथा 'गङ्गायां घोषः' इत्यत्र सामीप्यसम्बन्धाद्गङ्गाशब्दस्यतटेऽर्थे प्रयोगः। नैव तटशब्दस्यैव प्रयोगः। इति। तद्विपरीतमालङ्कारिकास्तु यत्र-यत्र मुख्यार्थबाधस्तत्र तत्र लक्षणाबीजं पश्यन्ति। तन्मते उभे एव लक्षणायाः भेदौ।

यथोक्तं—

'भेदाविमौ च सादृश्यात्सम्बन्धान्तरतस्तथा।
गौणो शुद्धौ च विज्ञेयौ..........इति।।

किन्तु गौण्यां शब्दस्यापि प्रयोगो लक्षणायां नैवेत्यपि न समीचीनम्। यत्र कुत्र गौण्यामपि नैव शब्दप्रयोगो लक्षणायामपि यत्र कुत्र शब्दप्रयोगश्च। सारोपायां लक्षकशब्देन सह वाचकस्यापि प्रयोगो यथा सिंहो माणवक। किन्तु साध्यवसानायां नैव यथा सिंहोऽयमिति। एतत्तु गौण्याम्। सादृश्येतरसम्ब-न्धायामपि तथैव। यथा आयुर्घृतम् इत्यत्र वाचकेन सह लक्षकस्यापि प्रयोगः कार्यकारणसम्बन्धेन। 'आयुः पिवति' इत्यत्र नैव तथा। सादृश्यसम्बन्धातिरिक्तमपि लक्षणा पञ्चविधा भवति। सा चाभिधेयेन वाच्यवाचकभावसम्बन्धात् यथा द्विरेफ इत्यत्र भ्रमरबोधः, सामीप्यसम्बन्धात् यथा गङ्गायां घोषः इत्यत्र, समवायसम्बन्धाद् यथा 'यष्टीः प्रवेशय' इत्यत्रः, वैपरीत्यसम्बन्धाद् यथा 'उपकृतं बहु तत्र किमुच्यते', कार्यकारणभावसम्बन्धाद् यथा 'आयुः पिवति' इत्यादौ। इत्थं लक्षणाया विश्वं व्याप्तं किन्तु तत्सर्व मुख्यार्थबाधे एव भवति। पर्यवासनाभावात् 'शिखरिणि' इत्यादौ नैव मुख्यर्थबाधस्तेन न लक्षणा आकस्मिकप्रश्नानुरोधेन बिम्बफलाध-रसाम्यान्मतेऽपि लक्षणाविषये सा मध्ये लक्षणा एव तत्र पर्यवसायित्वाभावात्। एवमेव अन्ये= अपरे असंलक्ष्यक्रम-व्यङ्ग्यादयः, बहवः= बहुसङ्ख्याकाः, प्रकाराः= ध्वनिभेदाः, भक्त्या= गौण्या वृत्या, नैव व्याप्यन्ते= स्वविषयीक्रियते इति। तस्मात्= तेन हेतुना ध्वनिभक्त्योः स्वरूपलक्षण-व्यापार-आश्रयादिपार्थक्येन, ध्वनेः, भक्तिः= गौणीवृत्तिः, अलक्ष-णम्= इतरंव्यावर्तकासाधारणधर्मो नेति।

इस तरह भक्ति को ध्वनि का लक्षण मानने से होने वाले अव्याप्ति दोष की विवेचना करने के बाद अब उसमें आने वाले अव्याप्ति दोष की भी विवेचना करते हैं—

ध्वनि के इस गुणवृत्तिरूप लक्षण में अव्याप्ति दोष भी है। जहाँ जहाँ ध्वनि होती है वहाँ वहाँ भक्ति नहीं हो पाती। अविवक्षितवाच्य ध्वनि में भले ही भक्ति है लेकिन विवक्षितान्यपरवाच्य में कहाँ। इस तरह और भी अनेक असंलक्ष्यक्रमव्यङ्ग्य आदि ध्वनि के भेदों में भक्ति व्याप्त नहीं होती। इस कारण भक्ति ध्वनि का लक्षण नहीं बन पाती।

जहाँ वाच्य की विवक्षा नही होती वहाँ तो मुख्यार्थबाध होने से भक्ति अर्थात् लक्षणा होती है जैसे 'सुवर्णपुष्पा' आदि में। लेकिन विवक्षितान्यपरवाच्य जहाँ कि वाच्यार्थ अपने को भी प्रकाशित करते हुए अन्यप्रक अर्थ का भी प्रकाशन करता है वहाँ मुख्यार्थबाध न होने से लक्षण आ नहीं सकती। जैसे 'शिखरिणि' आदि में। यहाँ अचानक विशेष प्रश्न आदि के कारण लक्षणा को उपपन्न मान भी लिया जाय तो भी बीच की स्थिति ही होगी, पर्यवसान नहीं अत: इसका कोई महत्व नहीं। इतने ही में नहीं, असंलक्ष्यक्रमव्यङ्ग्यध्वनि में क्रम की विवक्षा न होने से लक्षणा का अवसर नहीं आता। अत: भक्ति ध्वनि का लक्षण नहीं बन सकती।

कारिका— कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम्।

ध्वन्या०— सा पुनर्भक्तिर्वक्ष्यमाणप्रभेदमध्यादन्यतमस्य भेदस्य यदि नामोपलक्षणतया सम्भाव्येत; यदि च गुणवृत्त्यैव ध्वनिर्लक्ष्येत इत्युच्यते तदमिधाव्यापारेण तदितरोऽलङ्कारवर्ग: समग्र एव लक्ष्यत इति प्रत्येक-मलङ्काराणां लक्षणकरणवैयर्थ्यप्रसङ्ग:।

लीला— पूर्वमेव कथितमासीद्यद्ये खलु ध्वनिं भाक्तं मन्तुं प्रयतन्ते तेषां त्रय: पक्षा: सम्भवन्ति भक्तिरेव ध्वनि: भक्तिरेव ध्वनेर्लक्षणं भक्तिरेव ध्वनेरुप-लक्षणमिति। तत्र युक्त्या प्रथमौ द्वौ पक्षौ निरस्य सम्प्रति तृतीयमपि पक्षमुप-स्थापयति कारिकाकार: कस्यचिदत्यादिना-सा कस्यचिद् ध्वनिभेदस्य उपलक्षणम् तु स्यादिति पदव्यवस्था।

सा= भक्ति:, तु, कस्यचित्= तदनुकलस्य, ध्वनिभेदस्य= ध्वनिविषयस्य-अविबक्षितवाच्यरूपस्य यत्र वाच्यमर्थान्तरे सङ्क्रमितं वा अत्यन्तं तिरस्कृतं भवति, उपलक्षणं= स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणम्। अत्र तु ध्वनिप्राधान्येन सहैव गुणवृत्तेरप्युपस्थिति:, तु-इति स्वीकारे, स्यात्= सम्भाव्येत एवेति।

यदि गुणवृत्तिस्तदुपयुक्तध्वनिभेदस्याविवक्षितवाच्यस्योपलक्षणं भवति चेद्भवतु। तत्र नैव नो हानि: (यत्र कुत्र भक्त्युपलक्षितो ध्वनिर्भवति चेत्तदपि भवतु।)

कारिकार्थमेव पल्वयति वृत्तिकार: सा पुनरित्यादिना-सा= तादृशी, ध्वने:= स्वरूपलक्षणनिराकृता, भक्ति:= गुणवृत्ति:, पुन:= प्रकरणे सर्वोपायक्षीणत्वेन,

ध्वने:, वक्ष्यमाणप्रभेदमध्यात्= कथ्यमानाविवक्षितवाच्यभेदात्, अन्यतमस्य= एकस्य कस्यापि, भेदस्य= विषयस्य, यदि, नाम= इति सम्भाव्ये, उपलक्षणतया= शेषरूपतया, ध्वनेरनन्तरप्रभावित्वेन, सम्भाव्येत= व्यवस्थाप्येत, तदा नास्माकं काऽपि हानि:।

भक्तेरुपलक्षणत्वं तु भवद्धिरपि स्वीकृतं तदा उपलक्षणात्मकभक्त्यैव सर्वविधध्वनिप्रकाशसम्भवे ध्वनिलक्षणायासेन किमित्याशङ्कानिवारणाय वृत्तिकृत्कथयति यदीत्यादि-यदि, च, गुणवृत्या= भक्त्या, एव= इति व्यवच्छेदे, ध्वनि:= ध्वनितत्वं, लक्ष्यते= स्वरूपावबोधनपूर्वकमुपस्थाप्यते, इति= इत्थं, उच्यते= कथ्यते, तदा= तत्वस्थायां, अभिधाव्यापारेण= मुख्यशक्त्या, एव= इति व्यवच्छेदे, तदितर:= तद्भिन्न:-ध्वनिविषयभिन्न:, समग्र:= सम्पूर्ण:, एव= इत्यशेषमेव, अलङ्कारवर्ग:= शब्दार्थालङ्कारसमूह:, लक्ष्यते= लक्षणीक्रियते, इतिइति प्रकरणे, अलङ्काराणां= काव्यशोभातिशयहेतुभूतानां शब्दार्थोभयालङ्काराणां, प्रत्येकं= पृथक्पृथक् लक्षणकरणे= स्वरूपाधानेऽन्यावच्छेदकत्वेन, वैयर्थ्यप्रसङ्ग:= व्यर्थमेव, स्यात्।

यदि उपलक्षणात्मकगुणवृत्यैव सकलध्वन्यवबोध: कल्प्यते तदा सर्वेष्वेवालङ्कारेषु व्यापकत्वेनाभिधेयभावात् अभिधयैव सर्वेषामेव तेषां बोध इति तेषां पृथगेवलक्षणकरणं व्यर्थमेव स्यादिति। किन्तु यथार्थस्तु न तथा। न च उपलक्षणात्मकभक्त्या सर्वेषामेव ध्वनिविषयाणां बोधसम्भवो नापि तया सकलव्यञ्जनाव्यापारासम्भवो न चाभिधयैवालङ्काराणां तथा लक्षणसम्भव इति नैव कदापि भक्तिर्ध्वनेर्लक्षणमिति सिद्धम्।

पहले कहा ग़या था कि ध्वनि को भाक्त मानने वाले के तीन मत हो सकते हैं– भक्ति ही ध्वनि है, भक्ति ही ध्वनि का लक्षण है, भक्ति ध्वनि का उपलक्षण हो सकती हैं। इनमें से पहले दो मतों का युक्ति से खण्डन करने के बाद अब तीसरे पक्ष को उठाते हैं–

यदि भक्ति ध्वनि के किसी भेद का उपलक्षण बने तो बने।

यदि भक्ति ध्वनि के किसी एक भेद का उपलक्षण बन सकती हो तो बने लेकिन ध्वनि के पूरे विषय का तो नहीं ही बन सकती। ऐसे बहुत कम अवसर आते हैं कि जहाँ ध्वनि होती है वहाँ भक्ति भी होती है। वैसे ऐसा अवसर अविवक्षित वाच्य के अर्थान्तरसंक्रमित भेद में आता है जिसका कि ''सुवर्णपुष्पां'' उदाहरण है। इससे समस्त ध्वनिविषय व्यापाक तो नहीं हो पाता। अत: ध्वनि भक्ति से पृथक् ही है।

वृत्तिकार कारिका के आशय का विस्तार करते हैं–

आगे बतलाए ज़ाने वाले ध्वनि के भेदों में से किसी एक भेद में भक्ति ध्वनि का उपलक्षण बने तो बने। वह भी शायद ही सफल हो पाएगी। इतने के

बल पर यदि यह माना जाय कि ध्वनि के सारे भेद उपलक्षण के रूप में भक्ति से लक्षित होगें, तो वह अनर्थ होगा। ऐसा सम्भव हो जाने से सारे के सारे अलङ्कार अभिधा से लक्षित होने लगेंगे क्योंकि उनमें अभिधेय भाव तो है ही और फिर अलङ्कारों का पृथक् पृथक् लक्षण करना व्यर्थ हो जाएगा। वस्तुतः न भक्ति से ध्वनि लक्षित होती है न तो अभिधा मात्र से अलङ्कार।

ध्वन्या०— किञ्च—

कारिका— लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः।।१९।।

ध्वन्या०— कृतेऽपि वा पूर्वमेवान्यैर्ध्वनिलक्षणे पक्षसंसिद्धिरेव नः यस्माद्ध्वनिरस्तीति नः पक्षः। स च प्रागेव संसिद्ध इत्ययत्नसम्पन्न-समीहितार्थाः संवृत्ताः स्मः।

लीला— एवमनुपपन्नमपि ध्वनेर्भक्त्युपलक्षणत्वं तदनुगामितोषाय यथाकथञ्चित्स्वीकृत्यापि स्वाभीष्टं ध्वनिप्रकर्षमेव पुनः पुष्णाति कारिकाकारः लक्षण इत्यादिना। तच्च प्रकरणिकं करोति वृत्तिकारः किञ्चेत्यादिना—किञ्च= इदमपि।

कारिकामवतारयति लक्षणे इति— अस्य अन्यैः च कृते लक्षणे नः पक्षसंसिद्धि एव इति पदब्यवस्था।

अस्य= ध्वनेः, अन्यैः= प्राचीनैर्वुधैः, च= न केवलमस्माभिरेव, कृते= निरुपिते, लक्षणे= इतरावच्छेदकासाधारणधर्मे, स्वरूपे, नः= अस्माकं, पक्षसं-सिद्धिः= अभीष्टपरिपुष्टिः, एव= इति व्यवच्छेदे न तु तत्र निरर्गलपूर्वाग्रह इति।

ध्वनिनिरूपणे न किमपि नवीनत्वमत्र। यदेव प्राचीनाचार्यैरुन्मीलितं तदेवा स्माभिः सन्निरूपितम्। तेनास्माकंमभीष्टपक्षपरिपुष्टिरेव न तु निरर्थकहठधर्मितेति।

कारिकां विवृणोति वृत्तिकारः कृतेऽपीत्यादिना— अन्यैः= अपरै काव्यतत्वज्ञैः, पूर्वं= प्रथमं, एंव कृते= निर्द्धारिते, ध्वनिलक्षणे= ध्वनिस्वरूपे, नः= अस्माकं, अपि, पक्षसंसिद्धिः= पक्षपरिपुष्टिः एव, यस्मात्= यतः, ध्वनिः= काव्यात्मरूपध्वनितत्वं, अस्ति= विद्यते, इति= इत्थमेव, नः= अस्माकं, पक्षः= विषयावलम्बनम्। स= ध्वनिः, च, प्राक्= पूर्वं, एव संसिद्धः= सम्यङ्निरूपितः, इति= हेतोः अयत्नसम्पन्नसमीहितार्थाः= अनायाससिद्धाभीष्टप्रयोजनाः, संबृताः= सम्पन्नाः, विश्रान्ताः, स्म इति।

इस प्रकार अनुपपन्न भी ध्वनि को भक्ति का उपलक्षण मानने की बात उस पक्ष के लोगों की तसल्ली के लिए स्वीकार कर भी फिर अपने लिए अभीष्ट ध्वनि की ही सर्वोत्कृष्टता स्थापित करने हेतु उसे प्राचीनता से जोड़ते हैं।

और यह भी दूसरे भी विद्वानों से निरूपित किए गए इस ध्वनि के लक्षण में हमारी तो पक्ष की सिद्धि ही है।

कारिका के आशय को वृत्तिकार पल्लवित करते हैं—

पहले ही दूसरों से भी किए गए इस लक्षण में हमारी तो केवल पक्ष की

सिद्धि ही है क्योंकि ध्वनि है, यही हमारा पक्ष है। वह जो है पहले ही सिद्ध है। अतः हम विना प्रयास के ही अभीष्ट प्रयोजन की सिद्धि वाले बन गए हैं।

ध्वनि का अस्तित्व तो पहले से ही सिद्ध था ही और पुराने विद्वानों ने उसका लक्षण भी कर ही दिया था। उसमें हमारा प्रयास केवल अपनी पक्षसिद्धि के लिए ही है। हम ध्वनि के पक्षधर हैं और वह सिद्ध है पहले से। अतः विना प्रयास ही हमारी समीक्षा पूरी हो गई है।

ध्वन्या०— येऽपि सहृदयहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानमाम्नासिषुस्तेऽपि न परीक्ष्यवादिनः। यत उक्तता नीत्या वक्ष्यमाणया च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि यद्यनाख्येयत्वं तत्सर्वेषामेव वस्तूनां तत्प्रसक्तम्। यदि पुनर्ध्वनेरतिशयोक्त्यानया काव्यान्तरातिशायितैः स्वरूपमाख्यायते तत्तेऽपि युक्ताभिधायिन एव।

लीला— एवं ध्वनेरभाववादिनां त्रिप्रकारं मतं ध्वनेः भक्त्यन्तर्भूततताञ्च निराकृत्य पक्षसंसिद्धिघोषणपूर्वकं विश्रान्तेऽपि कारिकाकारे अवितृप्तो वृत्तिकृत् पुनर्ध्वनेरनिर्वचनीयतावादिनां मतं दूषयित्वा स्वाभीष्टस्थापनाय प्रयतते येऽपीत्यादिनाये= अनिर्वचनीयतावादिलनः, अपि= च, ध्वनेः= ध्वनितत्वस्य, आत्मानं= रहस्यं, अनाख्येयं= निरूपतियतुमशक्यं, किन्तु सहृदयहृदयसंवेद्यं= रसिकजनस्वान्तानुभव्यं, एव, आम्नासिषुः= व्यचिन्तयन् ते= तादृशाः जनाः, अपि= च अभाववादिन इव भक्तिवादिन इव, न= नैव, परीक्ष्य= सम्यग्विचार्य, वादिनः= कथनपराः। यतः= यस्मात्, उक्तया= कथितया, वक्ष्यमाणया= कथयिष्यमाणया, नीत्या= प्रकारेण, नयेन, ध्वनेः= ध्वन्याख्यतत्वस्य, सामान्यविशेषलक्षणे= साधारणाऽसाधारणधर्मे प्रतिपादिते= निरूप्य व्यवस्थापिते, अपि, यदि, अनाख्येयत्वं= अनिर्वचनीयत्वं, तत्= तादृशम्, सर्वेषां= समस्तानां, एव= इति व्यवच्छेदे, वस्तूनां= पदार्थानां, तत्= अनाख्येयत्व, प्रसक्त= प्रसज्य स्थित, भवेत्। यदि, पुनः= इति पक्षान्तरे, तैः= ध्वनेरनिर्वचनीयतावादिभिरभाववादिभिश्च, ध्वनेः= ध्वनितत्वस्य, अनया= प्रस्तुतया, अतिशयोक्त्या= वैचित्र्योक्त्या, काव्यान्तरातिशायि= मध्यमावरकाव्यविलक्षणं, स्वरूपं= अपरमेव तत्वं, आख्यायते= प्रस्थादिते, तत्= तथा, ते-तादृशाः पक्षान्तरग्राहकाः, अपि, युक्ताभिधायिनः-समुचितवादिनः, एवेति।

ये च ध्वनि सहृदयहृदयसंवेद्यमेव किन्त्वनिर्वचनीयं मन्यते तेऽपि अभाववादिन इव भाक्तवादिन इव नैव बिचिन्त्य वक्तारः। उक्तेन कथ्यमानेन च नयेन ध्वनेः साधारणासाधारणंधर्मे प्रख्यापितेऽपि यदि तदनिर्वचनीयमेव भवति चेदेतत्तु सर्वत्रैव प्रसक्तं स्यात्। यदि तेषां ध्वनेरेव शुष्कविरोधस्तदाऽपि यदि ते ध्वनीतरमपि यत्किञ्चिदपि तत्त्वं सामान्यकाव्यातिशायितित्वेनोपस्थापयन्ति तस्य स्वरूपनिरूपणं च कुर्वन्ति, तदा तेऽपि मान्या एव भविष्यन्ति।

सम्भवतो वृत्तिकारस्येदमेव समाह्वानमुररीकृत्य तत्परवर्तिना कुन्तकेन ध्वनिप्रत्याख्यानपूर्वकं वक्रोक्तिः काव्यात्मत्वेन स्वीकृता तथैव महिमभट्टेन ध्वनिरनुमानेऽन्तर्भावितः। तच्च तत्तद्ग्रन्थादेवोन्नेयम्।

'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवकं कुरुते प्रणम्य महिमा परां वाचम्।।'

इति शिवम्।

तदिदं— यदनुक्तं दुरुक्तं वा कारिकायामपेक्षितम्।
उदाहरणवृत्तिभ्यां ध्वन्यालोके तदीरितम्।।
ध्वन्यालोके यदस्पष्टं यन्न चन्द्रिकयाऽऽदृतम्।
तत्सर्वं प्रतिपत्त्याऽर्थो लोचनेन प्रकाशितम्।।
कालक्रमेण तच्चाभूत्कठिनं ज्ञानवैक्लवात्।
व्यधाद्बालप्रियाकारः सरलीकरणे श्रमः।।
भाति दीपशिखाऽप्यत्र रात्रौ दीपशिखा यथा।
दीधित्या तत्सरलितं तारावयाऽतितानितम्।।
आलोकदीपिका चाथ ध्वन्यालोप्रकाशिका।
सर्वेषां साररूपेण लीला लीलायते कृतौ।।
यथा लीलायते लीला हृदयेऽहनिशं मम।
पाठकेषु भवेत्तद्वत्तदाख्या विवृतिः सदा।।
श्रीलोकमणिरचिते ध्वन्यालोकस्य टिप्पणे।
सामान्यलक्षणः पूतिमगादुद्द्योत आदिमः।।

इति श्रीवत्सगोत्रीयविप्रकुलावतंसपरशुरामात्मजविष्णुमायोद्भवरमशैवनेपालाजनलोकमणिदाहालविरचितायां लीलाऽऽख्यायां सलोचनध्वन्यालोककाव्यालोकविवृतौ ध्वनिसाधारणलक्षणो नाम प्रथम उद्योतः।

इस प्रकार ध्वनि के अभाववादियों के तीनों मतों को एवं भक्तिवादियों के भी तीनों ही मतों को परास्त करने बाद ध्वनिसिद्धि की घोषणा के साथ-साथ कारिका कार के चूप रहने पर भी ध्वनि के समर्थन में दलील देने से अवितृप्त वृत्तिकार पुनः अनिर्वचनीयतावादियों के मत को उद्धृत कर उसका खण्डन कर उन्हें चुनौती देते है—

जो लोग ध्वनि को अनिर्वचनीय मान कर केवल रसिकों के हृदय द्वारा संवेद्य ही कहते हैं, वे भी बिना सोचे बोलने बाले हैं। जब कि कहे गए एवं कहे जाने वाले प्रकार से ध्वनि के साधारण एवं असाधारण लक्षण प्रतिपादित होने पर भी उसे अनिर्वचनीय ही माना जाता है तो यह तो सभी वस्तुओं में लागू हो सकता है।

अथवा वे भले ध्वनि को न मानें किन्तु उससे भिन्न कोई ऐसे तत्त्व का जो कि काव्य को काव्य के सामान्यस्वरूप से ऊपर उठावे, ख्यापन वा लक्षण करें तो ही वे मान्य समझ जाएंगे।

इस तरह हिन्दी अनुवाद में पहला उद्योत समाप्त हुआ।



# ध्वन्यालोक:

## अथ द्वितीय उद्योत:

ध्वन्या०— एवमविवक्षितवाच्य-विवक्षितान्य परवाच्यत्वेन ध्वनिर्द्वि-प्रकार प्रकाशित:। तत्राविवक्षितवाच्यस्य प्रभेदप्रतिपादनायेदमुच्यते—

कारिका— अर्थान्तरे सङ्क्रमितमत्यन्तं वा तिरस्कृतम्।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम्।। १ ।।

ध्वन्या०— तथाविधाभ्यां च व्यङ्ग्यस्यैव विशेष:।

लीला— वाच्याक्षिप्ततया यस्य प्रतीतिर्नैव बाधत:।
प्रयोजनस्वरूपाय तस्मै ध्वन्यात्मने नम:।।
व्याख्याय ध्वनिसामान्यलक्षणं प्रथमोद्यमे।
विशिष्टलक्षणञ्चात्र साङ्गोपाङ्गं विविच्यते।।

इत्थं ध्वनिप्रातपक्षवादिनां मतं युक्त्या प्रत्याख्याय सम्प्रति तस्य भेदोपभेदविवेचनाय सम्बद्धां कारिकामवतितारयिषुर्वृत्तिकारस्तद्भूमिकां निबध्नाति एवमित्यादिना— एवं= प्रतिपक्षकथननिरसनपूर्वकमवस्थापित: ध्वनि:= मुख्यल-क्ष्यव्यतिरि क्तप्रतीयमानव्यङ्ग्य:, अविवक्षितवाच्यविवक्षितान्यपरवाच्यत्वेन= अविवक्षितोऽनुपयुज्यमानतयाऽनुपपद्यमानतया वा वक्तुरनभिप्रेतत्वेनोपेक्षितो वाच्यो वाच्यजात्यादिधर्मिणां धर्मी यत्र स: अविवक्षितवाच्य:, च विवक्षितोऽबाधि-तोऽन्यपरो व्यङ्ग्योपसर्जनीभूतो वाच्यो वाच्यजात्यादिधर्मिणां धर्मो यत्र स: –यत्र वाच्योऽर्थ: स्वं रूपं प्रत्याययन्नेव व्यङ्ग्यस्य प्रकाशको दीप द्रव घटस्य च तयोर्भावस्तत्त्वं तेन, द्विप्रकार:= द्विविधस्वरूप:, प्रकाशित:= प्रकटित:। तत्र= उभयोरपि भेदयो:, अविवक्षितवाच्यस्य= उपेक्षितमुख्याद्यर्थस्य ध्वने:, प्रभेदप्रति-पादनाय= प्रभेदोऽवान्तरप्रकारस्तस्य प्रतिपादनं संसिद्धिस्तस्मै तादर्थ्ये चतुर्थी, इदं= वक्ष्यमाणप्रकरणं उच्यते= उपस्थाप्यते इति।

अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति यौ ध्वनेर्भेदावुक्तौ तत्र प्रथममविवक्षितवाच्यध्वनेरवान्तरभेदा उच्यन्त इति।

कारिकामवतारयति अर्थान्तर इत्यादि— अविवक्षितवाच्यस्य ध्वने: वाच्यं अर्थान्तरे सङ्क्रमितं वा अत्यन्ततिरस्कृतम् इति द्विधा मतम् इति पदव्यवस्था।

अविवक्षितवाच्यस्य= अविवक्षित: अनुपयुज्यमानतया अनुपपद्यमानतया

वा वक्तुरनभिप्रेतत्वेनोपेक्षित: वाच्यो वाच्यजात्यादिधर्माणां धर्मी यत्र तस्य तादृशस्य, वाच्येन अविवक्षितेन सदा प्रत्यायितस्य, ध्वने:= मुख्यलक्ष्यव्यतिरिक्त-प्रतीयमानव्यङ्ग्यस्य, वाच्यम्= मुख्यार्थ:, अत्र सामान्ये नपुंसकम्, अर्थान्तरे= अन्यो मुख्याद्भिन्नोऽर्थोऽभिप्राय इति अर्थान्तरं मुख्यार्थभिन्नं किन्तु तत्सम्बद्धमेव, तस्मिन् उपयोगिनि लक्ष्यतावच्छेदकेऽर्थे, सङ्क्रमितं= आश्रयत्वेन परिणमितं व्यञ्जनाव्यापारे य: सहकारिवर्गस्तेन तथा कारितं—णिजन्तरूपमेतत् निष्ठायां सेटि इति णिलोप:, वा= इति पक्षान्तरे, अत्यन्तं= नितान्तमेव, तिरस्कृतं= अनपेक्षितं— न केनाऽपि रूपेणान्वयप्रविष्टम्, इति, द्विधा= द्विप्रकारकम्, मतं= सम्मतम् इति। यत्र वाक्ये उपपद्यमानोऽप्यर्थस्तावतैव अनुपयोगाद्वाच्यधर्माति-रिक्तधर्मवत्त्वेनान्यतामिव गमयति लक्षणया तत्र अविवक्षितवाच्यो नाम ध्वनेर्भेदो भवति यत्र वाच्यार्थ: स्वं मुख्यरूपं परित्यज्यतत्सम्बद्धेऽन्यस्मिन्नर्थे गमितो भवति वा नितान्तमेवोपेक्षितो भवति। प्रथमे वाच्योऽर्थो रूपान्तरेण लक्ष्यते द्वितीये तु न केनाऽपि रूपेण अन्वयप्रविष्टो भवति। वाच्यस्याविवक्षितत्वञ्च वाक्ये वाच्यार्थस्यान्वयानुपपत्ते:। तादृशी अनुपपत्तिश्च वाच्यस्यानुपयुक्तत्वमपि पुनरुक्त-त्वाद् विशेषानाधायकत्वमात्राद्वा। ध्वनेरयं प्रभेदो लक्षणामूलस्यैव मुख्यार्थबा-धस्थिते:। सा च लक्षणा मुख्चयार्थबाधे एव सम्भवति। मुख्यार्थबाध: मुख्या-र्थसम्बन्धो रूढिप्रयोजनान्यतरापेक्षयेति हेतुर्लक्षणाया: न तु हेतव:। तत्रापि रूढिमाश्रित्य या लक्षणा भवति सा तु केवलं मुख्यार्थभक्तिरेव। तेन सा नैव ध्वनेर्विषय: प्रयोजनाभावात् सत्यपि यत्र कुत्र प्रयोजने तत्र गूढत्वाभावात्। प्रयोजनमुद्दिश्य या लक्षणा भवति सैव ध्वनेर्विषयो भवतिुमर्हति यदि तत्र प्रयोजनं गूढं भवति। व्यङ्ग्यस्य प्राधान्ये एव ध्वनिर्भवति तच्च चारुत्वोत्कर्षपरम्। यदि नाम व्यङ्ग्यार्थे चारुत्वं पर्यवस्यति तदैव ध्वनिर्भवति गुणीभूतव्यङ्ग्ये तु नैव। प्रयोजनवती लक्षणा च द्विविधा—गौणी शुद्धा च। तत्र सादृश्याद् गौणी भवति सम्बन्धान्तरे शुद्धा भवति। तत्र शुद्धाया द्वौ भेदौ उपादानलक्षणा च लक्षणलक्षणा च। यत्र स्वसिद्धये परस्याक्षेपस्तत्रोपादानलक्षणा यत्र च परार्थे स्वसमर्पणं तत्र लक्षणलक्षणा। इयमेवोपादानलक्षणाऽर्थान्तरसंक्रमितध्वनिभेदस्य मूलं, उपादानल-क्षणा च अत्यन्ततिरस्कृतभेदस्येति।

उक्तमेव—

स्वसिद्धये पराक्षेप: परार्थे स्वसमर्पणम्।
उपादानं लक्षणञ्चेत्युक्ता शुद्धैव सा द्विधा।
अपिच मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये।
स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा।
अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।
उपलक्षणहेतुत्वादेषोपादानलक्षणा।

यया शक्त्या ध्वनिः प्रतीयते सा व्यञ्जना। सा च द्विविधा भवति अभिधा-मूला लक्षणाग्मूला च। तत्र लक्षणामूला यथा—

यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया।
लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।
यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया।

किञ्च— तत्र नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा।

कारिकायां ध्वनेर्वाच्यं द्विधा मतमित्युक्तं ध्वनिस्तु व्यङ्ग्यात्मा भवति। तत्कथं सङ्गच्छत इत्यपेक्षानिरासाय वृत्तिकारः कथयति तथाविधाभ्यामिति— तथाविधाभ्यां= तादृशलक्षणाभ्यां अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतरूपाभ्यां, ताभ्यां=वाच्याभ्यां, च= अपि, व्यङ्ग्यस्य= प्रतीयमानस्यार्थस्य, एव= इति निर्धारणे, नान्यस्येति, विशेषः= भेद इति। ताभ्यामपि व्यञ्जकवैचित्र्यस्यैव सिद्धिरिति न दोषस्तथाकथने। व्यञ्जकेऽर्थे ध्वनिः प्रयुक्त एव व्यनक्त्यसाविति व्युत्पत्त्या परमार्थस्तु कमपि प्रयोजनमुद्दिश्य यत्र वाच्यस्याविवक्षा तत्र वाच्यार्थः अर्थान्तरे सङ्क्रम्यते वाऽत्यन्तमेव तिरस्क्रियते।

इस प्रकार अभाववादियों, भाक्तवादियों तथा अनिर्वचनीयतावादियों सहित सभी ध्वनि के प्रतिपक्षों का निराकरणपूर्वक ध्वनि के सामान्य लक्षण के निर्धारण के बाद अब ध्वनि के सामान्य एवं विशेष भेदों के विवरण देने का उपक्रम करते हैं वृत्तिकार।

इस प्रकार अविवक्षितवाच्य एवं विवक्षितान्यपरवाच्य भेद से ध्वनि दो प्रकार की बताई गई थी। उनमें से अविवक्षितवाच्य के भेदों के प्रतिपादन करने हेतु कहा जाता है—

कारिका का अवतारण करते हैं—

जो अविवक्षितवाच्य रूप ध्वनि है उसके वाच्य दूसरे अर्थ में सङ्क्रमित वा अत्यन्त तिरस्कृत करके दो प्रकार के माने गए हैं।

उस प्रकार के उन दोनों से ध्वनि की ही विशेषता दिखाई जाती है।

ध्वनि तो व्यङ्ग्यरूप है तो फिर उसका वाच्य कैसा ? सामान्यतः यह बिना मेल का जैसा लगता है। वस्तुतः वैसा नहीं है। कहा गया है कि जब वाच्य अपने अर्थ के वाच्य में उपयोगी न होने से दूसरे अर्थ में सङ्क्रमित होता है वा विलकुल बेठीक हो जाने से एक दम छोड़ सा दिया जाता है तब वे दोनों ध्वनि के भेद होते हैं। ध्वनि का आधार है और व्यङ्ग्य का आधार है प्रयोजन और उसी प्रयोजन की सिद्धि हेतु वाच्य के अर्थ को या तो दूसरे अर्थ में सङ्क्रमित किया जाता है या तो एक दम तिरस्कृत। ध्वनि के ये दोनों भेद लक्षणामूल के हैं। बात यह है कि मुख्यार्थ जब किसी रूढ़ि वा प्रयोजन हेतु अपने को गौण अर्थ के लिए समर्पित कर देता है तब वह लक्षणा के क्षेत्र में आ जाता है। रूढ़ि में कोई व्यङ्ग्य नहीं होता अतः वह ध्वनि

से बाहर है। प्रयोजन में आधारित लक्षणा के दो भेद है। उपादानलक्षणा और लक्षणलक्षणा। यदि अपनी सिद्धि के लिए दूसरे का आक्षेप किया गया हो तो उपादानलक्षणा और यदि दूसरे के लिए अपने को समर्पित किया हो तो लक्षणलक्षणा होती है। व्यङ्ग्य के गूढ एवं अगूढ होने से लक्षणलक्षणा दो प्रकार की होती है और गूढ़ व्यङ्ग्य ही ध्वनि का विषय होता है। जिस प्रयोजन को लेकर वाच्य को बाधित किया जाता है उसको बनाने वाली शक्ति व्यञ्जना होती है और ध्वनि व्यञ्जना का ही विषय है। शब्दशक्ति की यह विशेषता होती है कि वह एक बार अपना कार्य करने के बाद फिर उसी में प्रवृत्त नहीं हो पाती। और यह भी है कि बिना शक्ति का अर्थबोध हो नहीं पाता। जैसे गङ्गायां घोषः में गङ्गा के प्रवाह मे घोष की अवस्थिति असम्भव होने से मुख्यार्थ का बाध होकर गङ्गाशब्द लक्षणा से 'तट' का बोध कराता है लेकिन इसका प्रयोजन जो है शीतलता एवं पवित्रता उसकी प्रतीति तो व्यञ्जना से ही होती है क्योंकि गङ्गाशब्द का तट अर्थ मुख्य नहीं है अतः उसका बोध नहीं हो सकता, न तो तट अर्थ में प्रयोजन जताने की शक्ति है, न तो ऐसा करने के लिए प्रयोजन ही कुछ हो सकता है। प्रयोजन का प्रयोजन नहीं होता। न तो शब्द बिना शक्ति के अर्थबोध करा पाता है। अतः वैसी शक्ति जो अभिधा एवं लक्षणा से भिन्न है व्यञ्जना ही होती है। व्यञ्जना का विषयक्षेत्र है गूढ व्यङ्ग्य और उसका आधार है वाच्य से आक्षिप्त प्रयोजन। उस अभीष्ट प्रयोजन के लिए वाच्य कहीं तो अर्थान्तर में सङ्क्रामत होता है और कहीं तो अत्यन्त तिरस्कृत।

ध्वन्या— तत्रार्थान्तरसङ्क्रमितवाच्यो यथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घनाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव।।

लीला— इत्थमविवक्षितवाच्यस्य भेदद्वयकथनान्तरं भेदप्रतिपादकेनैव अन्वर्थनाम्ना लक्षणस्य सिद्धेः। प्रथमस्योदाहरणं प्रस्तुवन् वृत्तिकारस्तन्निर्दिशति तत्रेत्यादिना तत्र= तयोभेदयोर्मध्ये, अर्थान्तरसङ्क्रमितवाच्यः= अर्थान्तरेऽन्यस्मिन्नेवार्थे सङ्क्रमितः प्रयोजनसिद्धये परिणमितः वाच्यो वाच्यार्थो यस्मिन् सः, तादृशो ध्वनिः यथा= इत्युदाहरणप्रस्तावे।

उदाहरणं प्रस्तौति-स्निग्धेत्यादिना-स्निग्धश्यामलकान्तिलिप्तवियतः वेल्लद्बलाकाः घना' शीकरिणः वाताः पयोदसुहृदाम् कलाः आनन्दकेकाः कामं सन्तु दृढं कठोरहृदयः रामः अस्मि सर्वं सहे वैदेही तु कथं भविष्यति हहा हा देवि ! धीरा भव इति पदव्यवस्था।

स्निग्धश्यामलकान्तिलिप्तवियतः=.स्निग्धया= सरसया श्यामलयाऽसितया कान्त्या= छायया लिप्तं= आच्छुरितं वियद्= गगनं, वेल्लद्बलाकाः= वेल्लन्त्यः= समुत्साहिता अत एव सलीलं= चलन्त्यः बलाका वकपङ्क्तिर्येषु ते, घनाः=

मेघा:, वहन्त:, वाता:= अनिला:, पयोदसुहृदां= पयांसि जलानि ददाति वर्षति इति पयोदो मेघस्तस्य सुहृन्मित्रं मयूरस्तेषां—मत्तमयूराणां, कला:= षड्जसंवादिन्यो मधुरा: आनन्दकेका:= आनन्देन प्रमोदातिरेकेण जनिता या केका: मयूरवाण्य:,- मेघध्वनिषु नृत्यं भवति च शिखिनां' इति कविसमयख्याति:, नीरनिर्भरेण मसृणा श्यामा घना: स्वच्छायया गगनं व्याप्य स्थिता: सन्ति तत्र च पर्युत्सुका बलाका विलसन्ति। तेन गगनं तावद्वियोगिनां कृते दु:खलोकं विद्यते। सशीकरपवन-मन्दचलनेन दिशोऽपि दु:सहा: सन्ति। मेघालोकेन तन्मन्दगर्जनेन च मत्तानां मयूराणां प्रमोदातिरेकजनितमधुरवाण्या क्वचित्प्रविश्यासनमपि नैव सम्भवति, इत्येतादृशा: वियोगिजनानां कृतेऽसह्या:, कामं= यथेच्छं सन्तु= भवन्तु, दृढं= नितान्तमेव, कठोरहृदय:= निष्ठुरचेता:, राम:, अस्मि, सर्वं= निखिलमेव, सहे= मर्षयामि, अहं तु कर्कशमना रामोऽस्मि तेन तत्सर्वमपि यथाकथञ्चित्सहे, किन्तु वैदेही=सीता या प्रकृत्यैव स्त्रीत्वात्कोमलहृदया तत्रापि अनुभूतराजसु-खत्वात्स्वल्पमपि विषममं सोढुमक्षमा, कथं= केन प्रकारेण, भविष्यति= सोढुं, शक्ष्यति, भवनमेवास्या असम्भाव्यमिति, हहा= इति दु:खाातिशये, हा= कष्टम्, भावनोपनीतां सीतां सम्बोध्य कथयति— हे देवि != हे धीरस्वभावे सीते! धीरा= धैर्ययुता, भवेति। अयं वियोगिनां कृते कठिन: काल:। अहं तु कर्कशचित्तत्वात्पी-डासहनाभ्यस्तत्वाच्च कथचिञ्दपि सहे एव किञ्च रामोऽस्मि सा तु राजसुताऽननुभूतदु:खा कथं जीविष्यति विषमेऽस्मिन्काले। तथापि धीरस्वभा-वत्वात् कथमपि तत्सहनाय प्रयतस्वेति। स्निग्धश्यामलेत्यादिभि: पदैर्वियोगिज-नदुर्विसह्यकालवर्णनम्, 'कठोरहृदयो रामोऽस्मि सर्वं सहे' इत्यनेन आत्मन: सकलकष्टपात्रत्वेन प्रसिद्धत्वोपस्थापनम्, वैदही तु कथं भविष्यति हहा' इत्यनेन तस्या नितान्तसुकुमारत्वस्य, दु:खसहनानुभवरहितत्वस्य च ख्यापनम्, 'हा देवि ! धीरा भव' इति भावनोपनीताया: सीताया: समाश्वासनं कथञ्चिदपि कालं यापयेति।

उदाहरणं प्रकृते घटयति इत्यत्रेति— इत्यत्र= अस्मिन्, पद्ये, रामशब्द:= अर्थान्तरसङ्क्रमितवाच्यस्योदाहरणमिति। तथाभवने कारणं प्रस्तौति अनेनेत्यादिना अनेन= सर्वसहत्वदिप्रकृतार्थानुपयुक्तार्थकरामपदेन, हि= यत:, व्यङ्ग्यधर्मान्तर-रिणत: व्यङ्ग्यंप्रतीयमानरूप धर्मान्तरं प्रयोजनरूपं राज्यनिर्वासनाद्यसङ्ख्येयं तस्मिन् परिणत: ख्यात: सर्वविधदु:खस— हनाभ्यस्तरूप:, संज्ञी= राम इति संज्ञाशब्द:, प्रत्याय्यते= उपस्थाप्यते, न= नैव, संज्ञिमात्रम्= राम इत्यभिधानमात्रं दाशरथिरूपमिति। अस्यायमाशय:— अत्र रामशब्द: अर्थान्तरसङ्क्रमितवाच्यो ध्वनिर्यत्र दाशरथिरूपो वाच्योऽर्थ: दृढं कठोरहृदय: इति अभिव्यक्तिसाहचर्यवशात् दु:खातिशयसहनत्वरूपे व्यङ्ग्ये प्रतीतं तस्य राज्यनिर्वासनपितृशोकमातृवि-

योगाटवि– वाससीताविरहाद्यनेकरूपत्वादभिधयाऽशक्यसमर्पणं तस्या विरम्य व्यापाराभावात्। किं किं न सहत इति पर्यवसितोऽर्थ:।

पद्यमेवेदं 'काव्यप्रकाशे' ध्वनिसाङ्कर्योदाहरणाय प्रस्तुतमस्ति। तत्र लेपो मूर्तधर्मस्तत्रापि चित्रफलकादौ। नि:स्पर्शस्य वियतो लेपनासम्भवेन मुख्यार्थबाधा- ल्लिप्तपदं सम्पर्कं लक्षयत्तदतिशयं व्यनक्ति। पयोदे चाऽचेतने सौहृदाभावात् सुहृत्पद परस्परोपकारित्वं लक्षयत् परस्परातिशयं प्रकाशयति। एवं लेपसुहृत्त्वयो: सर्वथाऽन्वयाप्रवेशाद् वाच्यार्थस्यात्यन्त– तिरस्कारादत्यन्ततिरस्कृतवाच्यव्य- ङ्ग्योर्ध्वनिभेदयो: परस्परनैरपेक्ष्येणावस्थानात् संसृष्टि:। तथैव रामोऽस्मीत्यर्था- न्तरसङ्क्रमितवाच्यस्य ताभ्यां सह अनुग्राह्यनुग्राहकभावेन सङ्करस्तं विना तयोश्चा- रुत्वालाभात्। ताभ्यां विना च तस्य रूपासिद्धेस्तयोरुद्दीपकत्वात्।

एवञ्च साहित्यदर्पणेऽपि श्लोकोऽसौ लक्षणाया: फलस्य धर्मिगतभेदनि- दर्शनायोद्धृतोऽस्ति। अत्र यत: 'रामोऽस्मि अत: सर्वं सहे; इति सर्वसहत्वं प्रति केवलरामस्य हेतुत्वानुपपत्तेर्मुख्यार्थवाध:। अथवा 'सर्वं सहे' इत्यत्र उत्तमपु- रुषनिर्देशे सत्यपि पुनस्तदर्थमेव 'रामोऽस्मी' त्यभिधाने तात्पर्यानुपपत्तेर्मुख्यार्थ- बाध:। अतएव दशरथनन्दनरूपस्य मुख्यार्थस्यापि वाक्यार्थेऽन्वयसिद्धयेऽत्यन्त- दु:खसहिष्णुत्वमेव लक्ष्यतावच्छेदकं बोध्यमिति।

कुन्तकोऽप्यमुमेव रूढिवैचित्र्यवक्रतोदाहरणायोद्धरति। तत्र रूढिशब्दस्यैव प्रस्तावसमुचितत्वेन वाच्यप्रसिद्धधर्मान्तराध्यारोपगर्भत्वेन निबन्धो रूढिवैचित्र्य- वक्रता। 'रामोऽस्मि सर्वं सहे' इत्यत्र रामशब्द वाच्यरूपप्रसिद्धदशरथपुत्रत्व धर्मातिरिक्तराज्यत्याग:-वनगमन-पितृनिधन– दयिताहरणादिजन्यदु:खातिश- यसह नशीलरूपधर्माध्यारोपगर्भत्वेन कविना प्रयुक्त: इति।

इस प्रकार जिस वाच्य के अविवक्षित होने से ध्वनि होती है उस वाच्य के भेदों को बताने के बाद क्रम तो यह था कि उन भेदों के लक्षण भी किए जायं किन्तु उन भेदों की अन्वर्थसंज्ञा होने से अर्थात् शब्द से उनके लक्षण के सिद्ध होने से उनके उदाहरण प्रस्तुत किए जाते हैं। उनमें से अर्थान्तरसङ्क्रमित वाच्य का उदाहरण जैसे– अपनी स्निग्ध एवं श्यामकान्ति से आकाश को लिप्त किए हुए, चारों ओर उछल रहे हैं मत्त बलाकाएँ जिनमें ऐसे बादल हैं, जलकणों से व्याप्त होने से मन्द-मन्द गति से हवा चल रही है, बादलों के मित्र मोर की मीठी बोली सुनाई पड़ती है ये सब जो होने हैं हुआ करें मैं कठोर हृदयवाला राम हूँ, अत: सह लेता हूँ। लेकिन बेचारी सीता यह सब कैसे बर्दास्त कर पाएगी। हे देवी ! किसी तरह धीरज करो।'

यहाँ पर 'राम' शब्द अविवक्षित वाच्य का उदाहरण है। यहाँ केवल संज्ञा वाले राम मात्र का प्रत्यायन नहीं होता अपितु व्यङ्ग्यरूप दूसरे धर्मों में परिणत संज्ञावाले का बोध होता है।

आकाश स्निग्ध एवं श्याम बादलों की कान्ति से लिप्त है और उससे मस्त

बनी बकुलपङ्क्ति चारों और मडरा रही है, हवा भी शीतल जलकणों से युक्त होकर मन्द गति से चल रही है। एवं बादलों के मित्र मोर मीठी बोली बोल रहे है। ये सब वियोगी जनों के लिए असह्य हैं। तो इस प्रकार आकाश, दिशाएं और वातावरण सबके सब उत्तेजक हैं। हों ये सब अपने में उत्तेजक ! मैं तो कठोर हृदय वाला राम ही ठहरा, सब सह लेता हूँ। लेकिन वह बेचारी कोमल प्रकृति की सीता क्या करती होगी, कैसे जी पाएगी। हे देवी ! धैर्य करो।

यहाँ दशरथ का पुत्र राम 'रामशब्द' का वाच्यार्थ हो जो कि वाक्य के अन्वय में अपने संकेतित अर्थ में सक्षम नहीं है और राज्यत्याग आदि अनेक कष्टों के झेल पाने वाले व्यक्ति के अर्थ में सङ्क्रमित हो जाता है जो कि व्यङ्ग्य है। ऐसा 'कठोरहृदय' पद के साहचर्य से हो जाता है क्योंकि राज्यत्याग, बनवास, प्रियावियोग आदि अनेक व्यङ्ग्य को अभिधा नहीं जता सकती।

इसी पद्य को 'काव्यप्रकाश' में भी ध्वनिसाङ्कर्य के उदाहरण के लिए प्रस्तुत किया है। यहाँ 'आकाश का लिप्त होना' एवं 'बादलों के मित्र होना' दोनों प्रसिद्ध नहीं है क्योंकि लिप्त होना ठोस वस्तु का धर्म है और मित्र प्राणी के ही हो सकते हैं। अत: दोनों में वाच्य अत्यन्त तिरस्कृत हैं। और राम में सब कुछ सह पाने के आरोप से सामान्य राम से विशिष्ट सब कुछ सह पाने वाले राम विशेष में राम शब्द का अर्थ सङ्क्रमित हो जाता है और दोनों का सङ्कर है।

यह पद्य साहित्यदर्पण में भी लक्षणा के धर्मिगत भेद के उदाहरण के लिए उपस्थापित किया गया है। कुन्तक भी इसे रुढिवैचित्र्यवक्रता के उदाहरण के लिए प्रस्तुत करते हैं।

ध्वन्या०— यथा च ममैव विषमबाणलीलायाम्—

ताला जाअन्ति गुणा जाला दे सहिअएहिं घेप्पन्ति।
‍इकिरणानुग्गहिआइं होन्ति कमलाइं कमलाइं।।
(तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि।।)

इत्यत्र द्वितीय: कमलशब्द:।

लीला— अर्थान्तरसङ्क्रमितवाच्यस्यैवोदाहरणान्तरं प्रस्तौति यथाचेत्यादि यथा= इति निदर्शने, मम= वृत्तिकृत आनन्दवर्धनस्य एव, विषमबाणलीलायाम्= विषमबाणलीलाऽऽख्ये ग्रन्थे निबद्धमिदं पद्यमिति।

उदाहरणमुपस्थापयति ताला इत्यादि— जाला (यदा) दे (ते) सहिअएहिं (सहृदयै:) धेप्पन्ति (गृह्यन्ते) ताला (तदा) गुणा (गुणा:) जाअन्ति (जायन्ते) रइकिरणानुग्गहिआइ (रविकिरणानुगृहीतानि) कमलाइं (कमलानि) कमलाइं (कमलानि) होन्ति (भवन्ति) इति पदव्यवस्था।

यदा= यस्मिन् काले, ते= गुणा:, सहृदयै:= उदारचेतोभि:, गृह्यन्ते= तथात्वेन

स्वीक्रियन्ते, तदा= तत्समये एव, गुणा:= आत्मधर्मत्वेन स्वीकृता गुणा: जायन्ते= सम्पद्यन्ते, रविकिरणानुगृहीतानि= रवे: सूर्यस्य किरणैर्मयूखै: अनुगृहीतानि प्रसाधितानि-विकासितानीत्याशय:, कमलानि= पद्मानि, एव, कमलानि= कमलत्वेन ज्ञायमानानि भवन्ति= जायन्ते इति। यथैव सहृदयाभिनन्दिता गुणा एव गुणा भवन्ति तथैव सूर्यमयूखाभिनन्दितानि अतएव विकसितानि कमलानि एव कमलानि भवन्ति न तु जातमात्राणि इति।' अत्र वृत्तं जघनविपुलेति। अत्र यथा सहृदयाभिनन्दने एव गुणानां प्राशस्त्यं तथैव सूर्यकिरणविकसितानामेव कमलानां प्राशस्त्यमिति सादृश्याभिधायके वाक्यद्वये एकस्यैव धर्मस्य द्विर्निर्देशात्प्रतिवस्तूपमाऽलङ्कार। तल्लक्षणं यथा— 'सादृश्यपर्यवसिते यस्मिन् वाक्यद्वये धर्म:। एकोऽद्विरूपात्तस्तां प्रतिवस्तूपमामाहु:' इति। तथैव सामान्यस्य विशेषेण समर्थनादर्थान्तरन्यासोऽलङ्कार:। तल्लक्षणञ्च—यदि सामान्यविशेषौ समर्थयेते विशेषसामान्ये। साधर्म्याद्वैधर्म्यादपि वा सोऽर्थान्तरन्यास:। इति।

तदेव विवृण्वन् निर्दिशति इत्यत्रेति—इति= ति।, अत्र= अस्मिन् काव्ये द्वितीय:= अपर:, कमलशब्द:= कान्त्याश्रयत्वविकसितत्वसौरभादिशालित्वप्रभृतिधर्मविशिष्ट: तत्संज्ञी भवतीति। तेनात्र द्वितीयकमलशब्दस्य मुख्यार्थ: कमलसामान्यावबोधकरूप: कान्तिमत्त्वसौरभत्वादिविशिष्टधर्मयुतवस्तुनि सङ्क्रमितो भवति इति। तदयमाशय:— अत्र प्रथमकमलशब्दस्तु सामान्यकमलेऽर्थे प्रयुक्तत्वान्न तत्र मुख्यार्थबाधावसर:। किन्तु द्वितीयकमलशब्दस्तुकाव्यार्थो बाधितो भवति कमलस्य कमलभावस्याप्रसिद्धे:। तेन तस्य लक्ष्यार्थो भवति वास्तविकं कमलं यत्र कान्तिमत्त्वसौरभशालित्वादिविविधधर्मसङ्घातरूपविचित्रीभावो व्यङ्ग्यस्य प्रयोजनम्। एतादृशविविधधर्मसंवलितत्वेन विचित्रभावाविष्टकमलं संज्ञी इति द्वितीयकमलशब्दस्य प्रतीयमानोऽर्थ:।

केचिदत्र 'रामोऽस्मि कमलानि इत्यत्र रामशब्दो द्वितीयकमलशब्दश्च मुख्यार्थबाधेन लक्ष्यार्थे प्रयुक्त इत्यामनन्ति। तत्र समवायसम्बन्धेन धर्मस्यावस्थितिर्लक्षणाया निमित्तम्। निमित्तमिदमाधृत्य रामशब्दे सद्धर्मपरिणतेऽर्थे लक्षणा भवति। तत्र प्रयोजनरूपो व्यङ्ग्यार्थस्तु शब्दानभिधेयोऽसाधारणधर्म:। रामस्यानेकविधकष्टानुभवो लक्ष्यार्थो व्यङ्ग्यं तु निर्वेदादय:। द्वितीयकमलशब्देऽप्येवमेव। द्वितीयगुणशब्दे तु इतरधर्मसंयोगाभावात्केवलं संज्ञिता एव, अतस्तत्र नैव सहृदयप्रतीत्यनुकूलता इत्यपरे। नि:सन्देहमेव रामद्वितीयकमलशब्दयोर्मुख्यार्थबाधस्तयोर्वाच्यार्थेऽनुपयोगित्वात्। बाधितेऽपि वाच्यार्थे राज्यनिर्वासनाद्यर्थ: कान्तिमत्त्वाद्यर्थश्च प्रतीतिगोचरत्वाद् ध्वनेर्विषय एव यस्य मूलं लक्षणेति।

हृदयदर्पणकारस्त्वत्र अनुपयोगात्मिका च मुख्यार्थबाधाऽस्तीति लक्षणामूलत्वाद्विवक्षितवाच्यभेदताऽस्योपपन्नैव शब्दार्थस्याविवक्षणादिति निर्दिशति।

नैव च रामकमलशब्दयोः तिरस्कृतत्वं धर्मिरूपेण तयोर्लक्ष्ये व्यङ्ग्येचार्थेऽनुप्रवेशादिति।

अर्थान्तरसङ्क्रमितवाच्य ध्वनि का दूसरा उदाहरण प्रस्तुत करते है—

और जैसे मेरे ही 'विषमबाणलीला' में— 'गुण तभी गुण होते हैं जब वे सहृदयों के हृदय को आह्लादित करते हैं। सूर्य के किरणों से अनुगृहीत कमल ही कमल होते हैं।'

यहाँ पहला कमल शब्द तो संज्ञी मात्र है उससे केवल कमल नाम की एक वस्तु का बोध होता है। लेकिन दूसरा जो कमल शब्द है उसमें मुख्य अर्थ काम नहीं करता क्योंकि कमल है में दोनों संज्ञी हों तो दूसरे का कोई अर्थ ही नहीं निकलता। निरर्थक प्रयोग का काव्य में कोई स्थान नहीं होता। तो, दूसरे कमल शब्द का कुछ न कुछ प्रयोजन अवश्य है ही। वैसा प्रयोजन विशिष्ट धर्म से सम्बन्धित है क्योंकि वाक्य में किसी भी प्रकार का उपयोग न होने से उसका मुख्यार्थबाध हो जाता है और वह अर्थ कान्ति, सौरभ आदि अनेक धर्मों से सम्पन्न अवस्थाविशेष के अर्थ में संक्रमित हो जाता है। ध्वनि में अनुप्रविष्ट हो जाने से वाच्यार्थ को निराकार भी नहीं माना जा सकता। अतः दूसरा कमल शब्द संज्ञीमात्र न होकर वास्तविक कमल, जिसमें कान्ति सौरभता आदि अनेक विशेषताएँ होती हैं, का बोधक हो कर उसी अर्थ में सङ्क्रमित हो जाने से यह अर्थान्तरसङ्क्रमित ध्वनि का उदाहरण है।

ध्वन्या— अत्यन्तरिस्कृतवाच्यो यथादिकवेर्वाल्मीकेः—

रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते।। इति।

अत्रान्धशब्दः।

लीला— इत्थमर्थान्तरसङ्क्रमितवाच्यध्वनिं सोदाहरणं प्रतिपाद्य सम्प्रति अविवक्षितवाच्यध्वनेर्द्वितीयं भेदमत्यन्ततिरस्कृतवाच्यध्वनिमुदा-हर्तुमुपक्रमत अत्यन्तेति—अत्यन्ततिरस्कृतवाच्यः= वाक्ये मुख्यार्थ· न्वयात् परित्यज्यार्थान्तरप्रवेशरूपः, यथा,= इति निदर्शने, आदिकवेः= प्रथमकाव्यकर्तुः, वाल्मीकेः= तदाख्यस्य रामायणप्रणेतुः—उदाहरणस्य प्राशस्त्म्यमिति।

उदाहरति–रवीत्यादि–रविसङ्क्रान्तसौभाग्यः तुषारावृतमण्डलः चन्द्रमाः निःश्वासान्धः आदर्शः इव न प्रकाशते इति पदव्यवस्था।

रविसङ्क्रान्तसौभाग्यः= रवौ सूर्ये सङ्क्रान्तं सङ्गतं सौभाग्यमाह्लादकत्वाद्यैश्वर्यं यस्य सः—चन्द्रस्याह्लादकत्वं प्रसिद्धं सौभाग्यं किन्तु हेमन्ते तु तत्सूर्ये एव न तु चन्द्रे इत्याशयः, तुषारावृतमण्डलः=तुषारैर्हिमैरावृतमाच्छादितमतः एवारुणं मण्डलं विम्बं यस्य सः, तादृशः, चन्द्रमाः= शीतांशुः, निःश्वासेन मुखनासिकापवमानेन अन्धो मलिनः, आदर्शः= दर्पणं, इव= यथा, न प्रकाशते= नैव भासत इति।

पद्यमिदं वाल्मीकीयरामायणे रामं प्रति लक्ष्मणवाक्ये हेमन्तवर्णनप्रसङ्गगतम्। उपमाऽलङ्कारः। वृत्तमनुष्टुप्, श्लोके षष्ठं गुरु ज्ञेय सर्वत्र लघु पञ्चमम्' इति तल्लक्षणम्।

तदेव विवृणोति—अत्र= काव्येऽस्मिन्, अन्धशब्दः—अत्यन्ततिरस्कृतवाच्य इति। किञ्च अन्धशब्द उपहतदृष्टिके शक्तः—न पश्यति च जन्मान्धः कामान्धो नैव पश्यति' इत्यादाविव। दर्पणस्य तु दृष्टेरेवांभावादत्र मुख्यार्थबाधो भवत्येव निरर्थकप्रयोगस्य काव्ये स्थानाभावात्। ततोऽसौ बाधितशक्यार्थोऽर्थान्तरस-ङ्क्रमणेनाऽपि वाक्येऽन्वेतुमसमर्थः सन् वाच्यार्थं नितान्तमेव तिरस्कृत्य अत्यन्त-तिरस्कृतवाच्यध्वनेरुदाहरणमिति। अत्रेदमवधेयं यदन्धशब्दो नेत्रज्योतिहीनस्या-वबोधकः। 'अन्धोऽयं नैव पश्यति' इत्यादाविव। अत्र शब्दोऽयं मुख्यार्थे प्रयुक्तः। तस्यैव 'विषयान्धो न पश्यति' इत्यत्र तु सनेत्रज्योतिष्कोऽपि न पश्यति इत्याश यादावृतनयनत्वस्यावबोधः। तेनाऽत्र अर्थान्तरसङ्क्रमितत्वम्। प्रकृते तु दर्पणस्य नयनयोरेवासम्भवात्तिरस्कृतवाच्यत्वेन पदार्थस्फुटीकरणाशक्तेरवबोध इति।

यत्त्वत्र भट्टनायकेन इवशब्दस्य निःश्वासान्धशब्देन सह अन्वयं कृत्वोत्प्रेक्षा मता न तु गौणता तत्क्लिष्टमेंवेति।

इस प्रकार अविवक्षितवाच्य ध्वनि के पहले भेद अर्थान्तरङ्क्रमित वाच्य को सोदाहरण समझाने के बाद अब उसके दूसरे भेद अत्यन्ततिरस्कृतवाच्य का उदाहरण प्रस्तुत करते हैं।

अत्यन्ततिरस्कृतवाच्य जैसे आदिकवि वाल्मीकि का 'सूर्य के तेज से धूमिल हैं कान्ति जिसका ऐसा पाले से आच्छादित होने से लाल है मण्डल जिसका ऐसा चनद्रमा श्वास के बाफ से अन्ध (मलिन) आइने की तरह प्रकाशित नहीं होता।

यहाँ 'अन्ध शब्द तिरस्कृतवाच्यध्वनि का उदाहरण है।' 'अन्ध का अर्थ है दृष्टि का अभाव वाला। दर्पण की आँखें न होने से यहां अन्ध शब्द का मुख्यार्थ बाधित हो जाता है और अपने मुख्यार्थ का तिरस्कार कर अप्रकाशत्वरूप अर्थ का बोध कराता है।

ध्वन्या— गअणं च मत्तमेहं धारालुलिअज्जुणाइं अ वणाई।
णिरहङ्कारमिअङ्का हरन्ति नीलआ वि णिसाओ।
(गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः।।) इतिच्छाया

लीला— अत्यन्ततिरस्कृतवाच्यध्वनेरुदाहरणान्तरं प्रस्तौति. 'गअणं' इत्यादि—गअणं (गगन) अ (च) मत्तमेघं) धारुलिअज्जुगाइं (धारालुलितार्जुनानि) अ (च) वणाइं' (वनानि) णिरहङ्कारमिअङ्का (निरहङ्कारमृगाङ्का) नीलाओ (नीलाः) वि (अपि) णिसाओ (निशाः) हरन्ति इति पदव्यवस्था।

गगनं= नभ:, मत्तमेघं=मत्ता उन्मत्ता बलाहका यस्मिंस्तत्, धारा‌लुलितार्जुनानि= धाराभिरासारैर्लुलिता प्रकम्पिता: अर्जुना वृक्षविशेषा: यस्मिंस्तानि, च वनानि= काननानि, निरहङ्कारमृगाङ्का= निरहङ्कार: अभिमानरहित: मृगाङ्क: हिमांशुर्यस्मिन् सा, नीला:= श्यामा:, अपि= च, निशा:= रात्रय:, हरन्ति= मनांसि प्रलोभयन्ति इति। गगनं न केवलं तारकितमपितु उन्मत्तबलाहकमपि, वनानि च न केवलं मलयानिलान्दोलितसहकाराणि धारालुलितार्जुनवृक्षाण्यपि, निष्प्रभत्वेन निरभिमा-नकुमुदबान्धवा, न केवलं सितकरकरधवलिता अपितु नीला अपि रात्रयो यूनां मनांसि उत्सुकयन्तीति।

पद्यमिदं वाक्पतिराजकृते 'गउडवहो' काव्ये वर्षावर्णनप्रसङ्गसम्बद्धम्।

अत्र= अस्मिन् श्लोके मत्तनिरहङ्कारशब्दौ अत्यन्ततिरस्कृतवाच्यौ। किञ्च मत्तत्वं क्षीबत्वस्य जीवधर्म:। मेघस्य निर्जीवतया तत्र सर्वथैवाऽसम्भवात् मुख्यार्थबाधेन तिरस्कृतस्वार्थ: इतस्तत: परिभ्रमण लक्षयन्नसमञ्जसकारित्वदु-र्निवारितत्वादिधर्मसहस्रंध्वनयति। तथैव अहङ्कारत्वस्य जीवधर्मत्वस्य चन्द्रेबाधात् निरहङ्कारशब्द: सर्वदाऽसम्भवत्स्वार्थो मालिन्यं लक्षयन् विच्छायत्वजिगीषात्या-गप्रभृति ध्वनयति इति तयोरत्यन्तरिस्कृतवाच्यत्वे तात्पर्यम्।।१।।

अत्यन्ततिरस्कृतवाच्य का दूसरा उदाहरण भी प्रस्तुत करते हैं,

'मदमाते बादलों से आच्छन्न आकाश, वर्षा की धाराओं से प्रक्षालित हैं अर्जुन के वृक्ष जिसमें ऐसे वन, अभिमान से शून्य है चन्द्रमा जिसमें ऐसी काली रातें भी मन को लुभा लेती हैं।''

यह वाक्पतिराज के 'गउडवहो' में वर्षा ऋतु के लिए प्रस्तुत पद्य है।

यहाँ मत्त एवं निरहङ्कार शब्द अविवक्षितवाच्य है। मत्तता से मद्य से मत्त होना है जो कि जीव का धर्म है। आकाश के निर्जीव होने से इसके मुख्यार्थ का बाध हो जाता है और यह अपने अर्थ का नितान्त तिरस्कार कर उमडना अर्थ को उपस्थित करता है। इसी तरह अहङ्कार जीव का धर्म है और चन्द्र के निर्जीव होने से उसमें उसके मुख्यार्थबाध होने के कारण उसका प्रभावहीनता अर्थ बन जाता है। अत: दोनों अत्यन्त तिरस्कृतवाच्य ध्वनि के उदाहरण हैं।

कारिका— असंलक्ष्यक्रमोद्द्योत: क्रमेण द्योतित: पर:।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मत:।।२।।

ध्वन्या०— मुख्यतया प्रकाशमानोव्यङ्ग्योऽर्थो ध्वनेरात्मा। स च वाच्यार्थपेक्षया कश्चिदलक्ष्यक्रमतया प्रकाशते क्रमेणेति द्विधा मत:।

लीला— वाच्यस्य अविवक्षितत्वेन मुख्यार्थबाधाद्यो लक्षणामूलो ध्वनिर-भिहितस्तस्य अर्थान्तरसङ्क्रमितवाच्यत्वेन द्वौ प्रकारौ निरूपितौ सोदाहरणम्। सम्प्रति वाच्यस्य विवक्षितान्यपरत्वेन अभिधामूलो यो ध्वनि: कथितस्तस्य च सोदाहरणं प्रकारनिरूपणायोपक्रमते कारिकाकृद् असंलक्ष्येत्यादिना विवक्षिता-

भिधेयस्य ध्वने: आत्मा असंलक्ष्यक्रमोद्द्योत: पर: क्रमेण द्योतित: इति द्विधा मत: इति पदव्यवस्था।

विवक्षिताभिधेयस्य= विवक्षितो वाच्यतावच्छेदकत्वेन वक्तुमीप्सित: अभिधेय: शक्यार्थो यस्मिंस्तादृश:, ध्वने:= ध्वनितत्त्वस्य—ननु वाच्यार्थे एव विवक्षिते कथं ध्वनिरित्यकाङ्क्षायां अन्यपरमिति। अन्यपरं व्यङ्ग्यनिष्ठं—तेन तदाक्षेपकत्वेन तत्र विश्रान्तस्य, यत्र हि वाच्योऽर्थस्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थकस्य प्रकाशको यथा प्रदीपो घटस्य, आत्मा= स्वरूपं, अर्थान्तरसङ्क्रमिते रूपान्तरेणैव वाच्यविवक्षणादत्र च वाच्यतावच्छेदकत्वेन विवक्षितत्वादयमेव द्वयोर्भेद:, असंलक्ष्यक्रमोद्द्योत:= असंलक्ष्यक्रम: न सम्यग्लक्षयितुं बुद्धिगोचरीकर्तुं शक्य: क्रम: पर्यायो यस्य तादृश उद्द्योत उद्द्योतनव्यापारो यस्य तादृश: अज्ञेयक्रम:—एक:—अभेबोधोऽय यदयमसंलक्ष्यक्रम: एव नत्वक्रम: किञ्च तत्र व्यङ्ग्यव्यञ्जकयो: पौर्वापर्यक्रमस्तु भवत्येव। किन्तु स न लक्ष्यते कालसौक्ष्म्यात्। आस्वादेन झटिति चित्तकर्षणादयोग्यस्य सूक्ष्मकालस्यानुपलब्धेर्नाभावसाधकत्वमिति असंलक्ष्यक्रम, इति, पर:= अन्य: पूर्वोक्तभिन्न:, क्रमेण= पौर्वापर्येण, द्योतित:= प्रकाशित:, इति, द्विधा= द्विप्रकारक:, मत:= सम्मत इति। असंलक्ष्यको रसादिरुपस्तत्र स्वप्रकाशकत्वेन विभावादिज्ञानस्य स्वज्ञापकत्वादास्वादोद्बोधकत्वाच्च अनुमानासम्भवेन तद्द्योतते इति रसादीनामलक्ष्यक्रमत्वम्। तत्रापि विभावादय एव न रस: किन्तु समस्तैर्निष्पद्यत इति अस्त्येव विभावादिरसप्रतीत्यो: क्रम:। स तु लाघवाद्रसादीनां स्वप्रकाशकत्वाच्च न लक्ष्यत युगपत्पद्मपत्रशतवेधवद् इति असंलक्ष्यक्रम: क्रमेण द्योतितोऽर्थात्संलक्ष्यक्रमस्तु वस्त्वलङ्कारादिरूपस्तयोरनुमानादिनावगम्यत्वात् क्रमलक्षणसम्भव इति। अत्र केचित्तु रसादौ वर्णादित आरभ्य विभावादिपर्यन्तं रसानुवेद्यनियमात्र क्रमलक्षणम्। वस्त्वलङ्कारयोस्तु रसव्यञ्जकापेक्षया व्यङ्ग्यस्यात्यन्तविजातीयत्वेन क्रमलक्षणमित्याहु:। अपरे तु रसवति काव्ये तत्प्राधान्यात् वस्त्वलङ्कारयोरपि क्रमो नैव लक्ष्यते नीरसे तु प्रहेलिकादौ क्रमलक्षणात्तत्साजात्येन तथा व्यवहार इति वदन्ति।

कारिकाशयं विवृणोति वृत्तिकृन्मुख्यतयेत्यादिना—मुख्यतया=वाच्यार्थपेक्षया प्रधानत्वेन, प्रकाशमान:= द्योतमान:, व्यङ्ग्य:= वाच्यार्थाक्षिप्ततया प्रतीत: कवेरभिप्रेतो गूढ:, अर्थ:= वस्तु, ध्वने:= व्यङ्ग्यतत्वस्य, आत्मा= तत्त्वम्। अविवक्षितवाच्ये तु ध्वनेर्वाच्यमुखेन भेद:, अत्र तु द्योतनव्यापारमुखेनेति। स:= व्यङ्ग्यार्थो विवक्षितान्यपरवाच्यमूल:, च= इत्यपीत्यर्थे, वाच्यार्थपेक्षया= वाच्योऽर्थो विभावादिस्तेषामपेक्षयाऽऽधारेण, कश्चित्=एको कश्चिदपरो वस्त्वलङ्काररूपस्तु, क्रमेण= पौर्वापर्यविवक्षया, प्रकाशत इति= इत्थं, द्विधा=द्विप्रकारक:, मत:= सम्मत इति।।२।।

इस प्रकार अविवक्षितवाच्य ध्वनि के भेदों का उदाहरण सहित प्रतिपादन के बाद अब विवक्षितान्यपरवाच्य ध्वनि के भेदों को बताते हैं–

वाच्य के विवक्षित होते हुए भी व्यङ्ग्यपरक होने से जो ध्वनि होती है वह विवक्षितान्यपरवाच्य ध्वनि है। उस ध्वनि की आत्मा अज्ञेय क्रम से द्योतित एवं क्रम से द्योतित करके दो प्रकार की होती है।

वाच्यार्थ की अपेक्षा प्रधान रूप से प्रकाशित जो व्यङ्ग्य अर्थ है वही ध्वनि की आत्मा है। वह आत्मा वाच्यार्थ की अपेक्षा कोई तो द्योतन का क्रम दिखाई न पडने के हिसाब से प्रकाशित होती है और कोई क्रम से द्योतित होती है। इस प्रकार वह दो प्रकार की है।

जिसमें द्योतन का क्रम दिखाई न पड़े वह रसादिरूप है और जिसमें क्रम दिखाई पड़े वह वस्तु एवं अलङ्कार रूप होता है। क्रम तो दोनों में होता है, लेकिन रसों के स्वप्रकाशक होने के कारण इतना जल्दी उसकी प्रतीति होती है कि उसमें क्रम का पता ही नहीं चलता और वस्तु एवं अलङ्कार कुछ हद तक अनुमान के विषय होने से उनकी प्रतीति में क्रम तो स्पष्ट दिखाई पडता है।। २।।

ध्वन्या०— तत्र—

कारिका— रस भाव तदाभास-भावशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः।। ३।।

ध्वन्या— रसादिरर्थो सहैव वाच्येनावभासते। सचाङ्गित्वेनावभासमानो ध्वनेरात्मा।

लीला— इत्थं विवक्षितान्यपरवाच्यस्य ध्वनेरसंलक्ष्यक्रमसंलक्ष्यक्रमत्वेन प्रकारद्वयमुक्त्वा सम्प्रति असंलक्ष्यक्रमभेदविवेचनाय कारिकामवतितारयिषुर्वृत्ति-कारस्तत्पूर्वयोठिकां निबध्नाति तत्रेति-तत्र=तयोर्द्वयोर्मध्यात्। कारिकामवतारयति रसेत्यादिना-रसभावतदाभास-तत्प्रशान्त्यादिः अक्रमः अङ्गिभावेन भासमानः ध्वनेः आत्मा व्यवस्थित इति पदव्यवस्था।

रसभावतदाभासतत्प्रशान्त्यादिः= रसः शृङ्गारादिः, भावयो रत्यादिः, तदाभासः तयोः रसभावयोः आभासः अपूर्णद्योतनं, तत्प्रशान्त्यादिः तस्य भावस्य प्रशान्तिः शमनं आदिपदात् तस्य उदयः सन्धिः शवलताऽपि, इत्थं रसो रसाभासः भावो भावाभासः भावशान्तिः भावोदयः, भावसन्धिः भावशबलता चेति, अक्रमः= अज्ञेयद्योतनपौर्वापर्यः, अङ्गिभावेन= प्राधान्यविवक्षया अलङ्कार्यत्वेन, भासमानः= प्रतीयमानः, ध्वनेः= विवक्षितान्यपरवाच्यस्य, आत्मा= स्वरूपं, व्यवस्थितः= प्रतिष्ठित इति।

कारिकाशयं विवृणोति वृत्तिकृत् रसादिरिति—रसादिः=रसभावप्रभृतिः, अर्थः=प्रतीयमानवस्तु, हिं= यतः, वाच्येन= विभावादिना, सह= समं—समकालं,

इव= यथा, अत्रोत्प्रेक्षा, अवभासते= प्रत्येति। स: रसादिरर्थ:, अङ्गित्वेनप्राधान्येन, अवभासमान:= प्रतीयमान, ध्वने:= ध्वन्याख्यतत्त्वस्य; आत्मा= स्वरूपमिति।

यो रसादिरर्थ: स एवाक्रमो ध्वनेरात्मा नत्वक्रम एव स:। तेन रसादिर्योऽर्थ: स ध्वनेरक्रमो नाम भेद:। सोऽपि न सर्वदैव ध्वने: प्रकारोऽपितु यदा सोऽङ्गत्वेनावभासते तदैव स ध्वनेर्विषयो भवति। स च व्यवस्थित एव तं विना काव्यत्वापत्ते:। रसभावध्वनिविषयेऽत्र किञ्चिदुच्यते प्रासङ्गिकत्वात्। रसात्मनोऽपि काव्यस्य, रसस्यैकधनचमत्कारात्मनोऽपि कुतश्चिदशात्प्रयोजकीभूताधिकोऽसौ चमत्कारी भवति। तत्र स्थायिभावोत्कर्षे रसध्वनिर्भवति, व्यभिचारिभावोत्कर्षे भावध्वनि: तावेव अनुचितत्वेन प्रयुक्तौ रसाभासभावाभासौ। एवमेव भावस्य शान्त्यादयोऽपि। रसध्वनिस्तु स एव योऽत्र मुख्यतया विभावानुभावव्यभिचारिसंयोजनोदितस्थायिप्रतिपत्तिकस्य प्रतिपत्तु: स्थाय्यंशचर्वणाप्रयुक्त: एवास्वादप्रकर्ष:।

यथा—

दोर्भ्यां संयमित: पयोधरभरेणापीडित: पाणिजै—<br>
राविद्धो दशनै: क्षताधरपुट: श्रोणीतटेनाहत:।<br>
हस्तेनानमित: कचेऽधरसुधापानेन सम्मोहित:<br>
कान्त: कामपि तृप्तिमापतदहो कामस्य वामा गति:।

इत्यत्र सम्भोगश्रृङ्गारध्वनि:। यथा वा

"किमपि किमपि मन्दं मन्दमासत्तियोगा—<br>
दविरलितकपोलं जल्पतोरक्रमेण।<br>
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो—<br>
रविदिगतगतयामा रात्रिरेव व्यरंसीत्।"

इत्यत्रापि तथैव।

यदा कश्चिदुद्रिक्तावस्थां प्रतिपन्नो व्यभिचारी चमत्कारातिशयप्रयोजको भवति तदा तत्र भावध्वनिर्भवति। यथा—

तिष्ठेत्कोपवशात्प्रभावपिहिता, दीर्घं न सा कुप्यति<br>
स्वर्गायोत्पतिता भवेत्, मयि पुनर्भावार्द्रमस्या मन:।<br>
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ता: पुरोवर्तिनीं<br>
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधि:।

अत्र हि विप्रलम्भश्रृङ्गारसद्भावेऽपि वितर्काख्यव्यभिचारिभावचमत्क्रियाप्रयुक्त: आस्वादातिशय:। व्यभिचारी तु— विविधिमाभिमुख्येन चरन्तो व्यभिचारिण:। इति। ते च उदय-स्थिति-अपायत्रिधर्मा:। अत्र तु तस्य स्थिति:।

अनौचित्यप्रवर्तितौ तावेव रसाभासभावाभासौ। तत्राद्यो यथा—

मधुर्द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः।
अत्र? अधमपात्रप्रयुक्तत्वाद् शृङ्गाररसाभास एव।

भावाभसो यथा–

अनन्तभङ्गी परिभूषिताङ्गी मञ्जीरमञ्जुस्वनशालिनीयम्।
वेशाङ्गना काऽपि विलोक्य लोकं नतानना राजति राजमार्गे।।
अत्र वेश्यायां लज्जावर्णनाद्भावाभासः।

भावशान्तिर्यथा–

सुतनु जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवं विधोऽभूत्।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित्।
अत्र वाष्पमोचनेन ईर्ष्यासञ्चारिभावस्य शमः।

भावोदयो यथा–

आलीजनैर्मण्डनकेलिकाले विभूष्यमाणा वृषभानुपुत्री।
उरोगते नीलमणीन्द्रहारे स्विन्ना सकम्पा पुलकाकुलासीत्।।

अत्र हर्षस्योदयः।

भावसन्धिर्यथा–

'ईर्ष्याश्रुशोभिताया मुखं चुम्बितं येन।
अमृतरसनिगरणानां तृप्तिर्ज्ञाता तेन।।'

अत्र कोप्रसादसन्धिश्चमत्कारस्थानम्।

भावशबलता यथा–

क्वाकार्यं शशलक्ष्मणः क्व च कूलं भूयोऽपि दृश्यते सा
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं पास्यति।।

अत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने परस्परवाध्यवाधक भावेन द्वन्द्वशो भूत्वा पर्यन्ते तु चिन्ताया एव प्रधानतां ददती परमास्वादस्थानमिति भावानां शवलतेति।

अत्रेदमप्यवधेयं यद्विभावानुभावमुखेनापि चमत्काराधिक्यं दृश्यते इति विभावानुभावध्वनिर्नैव शङ्क्यः तयोः स्वशब्दवाच्यत्वात् तच्चर्वणाया अपि वित्तवृत्तिष्वेव पर्यवसानात्। चर्वणीयौ तु रसभावावेव। यदा तु तावपि व्यङ्ग्यौ भवतस्तदा वस्तुध्वनिस्तु तत्रेष्ट एव। यदा तु विभावाभासाद्रत्याभासोदयः तदा।

इस प्रकार विवक्षितान्यपरवाच्य के दो भेद— असंलक्ष्यक्रम व्यङ्ग्य एवं संलक्ष्यक्रम व्यङ्ग्य का निरूपण करने के बाद अब उनमें से पहला असंलक्ष्यक्रमव्यङ्ग्य का विषय बताते हैं—

रस, रसाभास, भाव, भावाभास भावशान्ति, भावोदय, भावसन्धि, भावशबलता, इतने अक्रम अर्थात् असंलक्ष्यक्रमव्यङ्ग्य अङ्गिभाव से भासमान होकर ध्वनि की आत्मा बनते हैं।

कारिका के आशय का स्पष्टीकरण करते हैं—

रसादि रूप अर्थ जो है वह वाच्य के साथ-साथ जैसे ही प्रतीत होता है और वह प्रधान भाव से रहता हुआ ध्वनि का स्वरूप बनाता है।

यद्यपि इनमें भी क्रम तो होता ही है क्योंकि विभाव आदि ही रस नहीं है; वह तो इनके संयुक्त परिणाम का फल होता है। अतः दोनों में पहले विभावादि तब रस करके क्रम का तो होना ही है, लेकिन बहुत ही कम-समय के अन्तर के कारण से यह क्रम दिखाई नहीं पड़ता। अतः उसे अक्रम कहा गया है।

रस, भाव आदि के उदाहरण को संस्कृत भाग से ही लें क्योंकि यहाँ उसी का अनुवाद देना पिष्टपेषण हो जाएगा। इतना ही समझें कि रस ही काव्यजीवन है फिर भी इसमें भी कुछ अंश ही अधिक चमत्कारी होता है। जिस अंश के चमत्कार से ध्वनि निकलती है उसे उसी नाम से पुकारा जाता है। जैसे स्थायीभाव में चमत्कारातिशय होने से रसध्वनि होती है, व्यभिचार भाव में वैसा होने से भावध्वनि। दोनों के अधम पात्र में प्रयुक्त होने से आभास माना जाता है अर्थात् रसाभास, भावाभास। भाव के उदय, स्थिति, शान्ति, सन्धि, शबलता होते हैं, उसी के हिसाब से ध्वनियाँ भी ! लेकिन विभावों एवं अनुभावों के स्वशब्दवाच्य होने से उनकी ध्वनि नहीं बन पाती।, हाँ, यदि उनकी भी प्रतीति हो तो वस्तुध्वनि हो सकती है एवं विभावाभास अनुभावाभास आदि रसाभास के विषय हैं।

ध्वन्या०— इदानीं रसवदलङ्कारादलक्ष्यक्रमद्योतनात्मनो ध्वनेर्विविक्तो विषय इति प्रदर्श्यते—

कारिका— वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम्।
रसादिपरता यत्र स ध्वनेर्विषयो मतः।। ४।।

ध्वन्या०— रसभावतदाभासतत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दार्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया विभिन्नरूपा व्यवस्थितास्तत्र काव्ये ध्वनिरिति व्यपदेशः।

लीला— इत्थं विवक्षितान्यपरवाच्यस्य ध्वनेः प्रथमं भेदमसंलक्ष्यक्रमं निरुप्य तत्र रसदीनां स्थितिवर्णनाय प्रस्तुतां कारिकामवतारयन् वृत्तिकारस्तद्भूमिकाभाबध्नाति इदानीमित्यादिना-इदानीं= सम्प्रति, रसवदलङ्कारात्= रसवत्प्रेयऊर्जस्वि-

समाहितालङ्काररूपेभ्य:, अलक्ष्यक्रमद्योतनात्मन:= अज्ञेयद्योतनपौर्वापर्यस्वरूपस्य, ध्वने:= व्यङ्ग्यार्थस्य, विषय:= क्षेत्रं, विभक्त:= पृथगेव, इति= इत्थं प्रदर्श्यते= निर्दिश्यते इति।

रसादिरर्थो ध्वने: प्रकार इत्युक्तस्तत्र रसवदाद्यलङ्काराणां का स्थितिरिति जिज्ञासानिवारणाय तत्राङ्गिभावेन भासमानस्यैव ध्वनेरात्मता इति यदुक्तं तमेवार्थमत्र विशदयति कारिकाकार:। असंलक्ष्यक्रमध्वनेर्विषयो रसवदाद्यलङ्कारेभ्य: पृथगेव। यत्र च रसादेरर्थस्य प्राधान्यविवक्षा तत्र तु तस्यालङ्कार्यत्वाद् ध्वनेर्विषय आपतति यत्र तु तस्य वाच्यार्थस्याङ्गभावेन स्थितिस्तत्र तु तस्य वाच्यार्थस्यालङ्कारत्वेनावस्थितरिति तयोर्विषयस्तु, विभक्त एव।

कारिकामवतारयति वाच्येत्यादि— यत्र विविधात्मनां वाच्यावाचकचारुत्व-हेतूनां रसादिपरता स ध्वने: विषय: मत इति पदव्यवस्था।

यत्र= यस्मिन् वाक्ये, विविधात्मनां= नानास्वरूपाणां, वाच्यवाचकचारुत्व-हेतूनां= वाच्यमर्थ: वाचक: शब्दश्च तयोश्चारुत्वं हेतूनां कारणभूतानामलङ्काराणां, रसादिपरता= रसादिरूपव्यङ्ग्यार्थपरायणता, स: तादृश:, ध्वने:= ध्वनितत्त्वस्य, विषय:= क्षेत्रं, मत इति।

तत्र प्रथमं रसादेरर्थस्य ध्वनित्वं निर्दिशति। यत्र च वाच्यवाचकसौन्द-र्याधायका:= शब्दार्थोभयलङ्कारा अनुप्रासोपमादयो गुणाश्च रसाद्यर्थपरत्वेनो-पतिष्ठन्ते तदा स रसाद्यर्थो ध्वनेर्विषयो भवतीति।

कारिकार्थं विशदयति वृत्तिकृद् रसेत्यादिना—यत्र=यस्मिन् वाक्ये, रसभावतदाभासतत्प्रशमलक्षणं= रस: शृङ्गारादि: विभावानुभावसञ्चारिभा-वैर्मिलित्वा स्वाद्यत्वमानीयमानो रत्यादिस्थायिभाव:, भाव: स एव रत्यादिरत-थापरिपुष्ट: किन्तु नितरामुद्बुद्ध: तदाभास: तयो: रसभावयोराभास अनौचित्यप्रव-र्तनावस्था, तत्प्रशमस्तस्य भावस्य प्रशम: शान्त्युदयस्थितिसन्धिशबलताद्यवस्था च तल्लक्षणं तत्स्वरूपं मुख्यं—प्रधानमङ्गित्वेन स्थितं अर्थं= व्यङ्ग्यवस्तु, अनुव-र्तमाना:= उपस्कुर्वाणा:, विभिन्नरूपा:= नानाविधरूपा: शब्दार्थालङ्कारा:= शब्दाश्च अलङ्कारा: अनुप्रासादय: अर्थाश्च अलङ्कारा उपमादय:, च ते, गुणा:काव्यशोभा-कर्तृधर्मा: माधुर्यादय:, परस्परं=अन्योन्यं, ध्वन्यपेक्षया= ध्वनिं प्राधान्येन स्वीकृत्य च व्यवस्थिता: संयुक्त:, तादृशे, काव्ये= वाक्यसमुच्चये. इतिं, व्यपदेश:= सञ्ज्ञा इति।

यत्र च काव्यशोभाकर्तृधर्मा गुणास्तदतिशयहेतवोऽलङ्काराश्च नानारूपा रसादिर्थ प्राधान्येन स्वीकृत्य तमुपस्कुर्वाणा ध्वनि समपेक्ष्य निबद्धा भवन्ति तत्र ध्वनिर्भवति इति। तेन रसादीनामङ्गत्वमपि सम्भवति। तत्र न ध्वनेरन्तर्भावो यथा समासोक्त्यादिषुनैववस्तुध्वने:।अन्यश्चरसादिध्वनिरन्यश्चरसवदाद्यलङ्कारइति।

अथात्र प्रसङ्गाद्रसस्वरूपं व्यवस्थापयिष्यन्तो लोचनकाराः अभिनवगुप्तपादाः प्रथमं भट्टनायकमतमुद्धृत्य विवेचयन्ति। तच्च यथा 'रसो यदा परगततया प्रतीयते तर्हि ताटस्थ्यमेव स्यात्। न च स्वगतत्वेन रामादिचरितमयात्काव्यादसौ प्रतीयते। स्वात्मगतत्वेन च स्वामनि रसस्योत्पत्तिरेवाभ्युपगता स्यात्। सा च अयुक्ता सीतायाः। तस्याः सामाजिकं प्रति अविभावत्वात्। कान्तात्वसाधारणं वासनाविकासहेतुविभावनायां प्रयोजकमिति चेत्—देवतावर्णनादौ तदपि कथम्। न च स्वकान्तास्मरणं मध्ये संवेद्यते। अलोकसामान्यानाञ्च रामदीनां ये समुद्रसेतुबन्धादयो विभावास्ते कथं साधारण्यं भजेयुः। न चोत्साहादिमान् रामः स्मर्यते अननुभूतत्वात्। शब्दादपि तत्प्रतीतौ च रसोपजनः। प्रत्यक्षादिव नायक-मिथुनप्रतिपत्तौ न रसोपजनः। उत्पत्तिपक्षे च करुणस्योत्पादाद् दुःखित्वे करुणप्रेक्षासु पुनरप्रवृत्तिः स्यात्। तत्र उत्पत्तिरपि नाप्यभिव्यक्तिः शक्तिरूपस्य हि शृङ्गारस्या-भिव्यक्तौ विषयार्जनतारतम्यप्रवृत्तिः स्यात्। तत्रापि किं स्वगतोऽभिव्यज्यते रसः परगतो वेति पूर्ववदेव दोषः। तेन प्रतीयते नोत्पद्यते नाभिव्यज्यते काव्येन रसः। किन्तु अन्यशब्दवैलक्षण्यं काव्यात्मनः शब्दस्य त्र्यंशताप्रसादात्। तत्र अभिधायकत्वं वाच्यविषयं भावकत्वं रसादिविषयं भोगकृत्वं सहृदयविषयमिति त्रयोंऽशभूतो व्यापारः।

अब रसवद् अलाङ्कारों से असंलक्ष्यक्रमव्यङ्ग्यध्वनि की पृथक् विषयता दर्शाते हैं—

जहाँ अनेक रूप वाले वाच्य वाचक एवं उनके सौन्दर्य के कारणभूत अलङ्कार एवं गुण रसादि अर्थ के अङ्ग होकर उसका उत्कर्ष साधते हैं तब वह ध्वनि का विषय होता है।

कारिका के आशय का स्पष्टीकरण करते हैं—

जिस काव्य में रस, भाव, रसाभास, भाव, भावाभास, भावोदय, भावशान्ति, भावसन्धि, भावशबलता, आदि लक्षण के अर्थात् रसादिलक्षण के मुख्य अर्थ के उपस्कारक शब्द अर्थ एवं उनके अनेक अलङ्कार एवं गुण परस्पर ध्वनि की अपेक्षा करके व्यवस्थित होते हैं उसी काव्य में ध्वनि का व्यवहार होता है।

यहाँ पर समझना यह चाहिए कि रसादि अर्थ जब वाच्यार्थ से प्रधान होता है तब वह ध्वनि का विषय बन पाता है और यदि वह वाच्यार्थ का अङ्ग बन जाय तब वह रसादि अलङ्कार बन जाता है। जैसे समासोक्ति आदि में वस्तुध्वनि का अन्तर्भाव नहीं होता वैसे ही रसादि अलङ्कारों में रसध्वनि का अन्तर्भाव नहीं होता।। ४।।

कारिका— प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गंतु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः।।५।।

ध्वन्या०— यद्यपि रसवदलङ्कारस्यान्यैर्दर्शितो विषयस्तथापि यस्मिन् काव्ये प्रधानतयान्योऽर्थो वाक्यार्थीभूतस्तस्य चाङ्गभूता ये रसादयस्ते

रसादेरलङ्कारस्य विषया इति मामकीन: पक्ष:। तद्यथा चाटुष प्रेयोऽलङ्कारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते।

लीला— इत्थं रसादेरर्थस्य ध्वनित्वावस्थां निरूप्य सम्प्रति तेषामलङ्कारावस्थां निरूपयति प्रधान इत्यादिना-अन्यत्र यत्र वाक्यार्थे प्रधाने रसादय: तु अङ्गं तस्मिन् काव्ये रसादि: अलङ्कार: इति मे मति: इति पदव्यवस्था।

अन्यत्र= रसस्वरूपे वस्तुमात्रेऽलङ्कारतायोग्ये वा, यत्र= यस्मिन् काव्ये, वाक्यार्थे= वाच्यस्वरूपे, प्रधाने= चारुत्वोत्कर्षतायुते, चारुत्वपर्यवसायिनि, सति, रसादय:= रसभावाद्या: तु, अङ्गं= गुणीभावमापन्ना: नातिचमत्कारितया, तस्मिन्= तथाविधे, काव्ये= कविकृतौ, रसादि:—रसाभावादय:, अलङ्कार:= सौन्दर्याधायकतत्वमेव, इति= इत्थं, मे= मम, मति:= विचार: इति।

यत्र च रसादे: प्राधान्यं तदितरस्मिन् काव्ये यत्र रसादिरर्थो वाच्यार्थस्यैव प्राधान्याय तस्याङ्गत्वेन भवति तत्र तु रसादिरलङ्कार एव इति मदीयस्तर्क इति।

कारिकार्थं पल्लवयति वृत्तिकृत् यद्यपीत्यादिना—'यद्यपि= एकत:, रसवदलङ्कारस्य— रसवदाद्यलङ्काराणां, विषय:= प्रपञ्च:, अन्यै:= इतरविपश्चिद्भिरुद्भटाादिभि:, दर्शित:= निर्दिष्ट:, तथापि= तस्यानुपपन्नत्वेन, यस्मिन्, काले प्रधानतया= चारुत्वपर्यवसायित्वेन, अन्य:= रसादिरूपादितर:— वाच्य सम्बन्ध अर्थ: वस्तु, वाक्यार्थीभूत:= वाच्यतात्पर्यपर्यवसानीभूत:, तस्य= तादृशस्य चारुत्वपर्यवसायिनो वाच्यार्थस्य, अङ्गभूता:= उपस्करभूता: ये, रसादय:= रसभावतदाभासादय:, ते= तादृशा एव, रसादे:= रसभावादीनां, अलङ्कारत्वस्य= अलङ्कारभावस्य, विषया:= पक्षा इति= इत्थं मामकीन: पक्ष:।

इतरे यदेव जानन्ति तथैव कथयन्तु वयं तु यस्मिन् काव्ये ते रसादयोऽङ्गभूता:। वाक्यार्थीभूतश्चान्योऽर्थ: तस्य काव्यस्य सम्बन्धिनो ये रसादय: अङ्गभूतास्ते रसादेरलङ्कारस्य शब्दस्य विषया इति चिन्तयाम:। स एवालङ्कारशब्दवाच्यो भवति योऽङ्गभूत: न तु अङ्गिभावत्वेन स्थित इति।

प्राचीनालङ्कारिकै: रससम्बद्धत्वेन रसवत्प्रेयऊर्जस्विसमाहिताद्या अलङ्कारा निर्दिष्टा:। यथा—

भामह:— रसवद्दर्शितस्पष्ट: शृङ्गारादिरसे यथा।
प्रेयो गृहागतं कृष्णमवादीद्विदुरो यथा।।
अद्य या मम गोविन्द जाता त्वयि गृहागते।
कालेनैषा भवेत्प्रीतिस्तवैवागमनात्पुन:।।
ऊर्जस्वि कर्णेन यथा पार्थाय पुनरागत:।
द्वि: सन्दधाति किं कर्ण: शल्येत्यहिरपाकृत:।।
समाहितं राजमित्रे यथा क्षत्रिययोषिताम्।
राजप्रसक्त्यै यान्तीनां पुरोऽदश्यत नारद:।।

दण्डी च यथा—

प्रेयः प्रियतराख्यानं रसवद्रसपेशलम्।
ऊर्जस्वि रूढाहङ्कारं युक्तोत्कर्षञ्च तत्त्रयम्।।
किञ्चिदारभमाणस्य कार्यं दैववशात्पुनः।
तत्साधनसमापत्तिर्या तदाहुः समाहितम्।।

उद्भटस्त्वाह—

रत्यादिकानां भावानामनुभावादिसूचनैः।
यत्काव्यं बध्यते सद्भिस्तत्प्रेयस्वदुदाहृतम्।।
रसवद्दर्शितस्पष्टशृङ्गारादिरसादयम्।
स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम्।
अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात्।
भावानां च रसानाञ्च बन्ध ऊर्जस्वि कथ्यते।।
रसभावतदाभासवृत्तेः प्रशमबन्धनम्।
अन्यानुमाननिःशून्यरूपं यत्तत्समाहितम्।

सारांशतस्तु—

रसभावतदाभासो रसवत्प्रेय ऊर्जस्वी।
शमे समाहितमुदयेऽन्योऽप्यस्य शबलत्वे।

तत्रेयं-व्यवस्था— रसो यत्र प्राधान्येनावतिष्ठते तत्र ध्वनिः। यदा तु रसोऽन्यस्मिन्नर्थेऽङ्गत्वं भजते तत्रान्योपकारकत्वाद् रसवदलङ्कारो भवति। भावस्य तथात्वे प्रेयोऽलङ्कारः। तच्छब्देन रसभावयोः परामर्शः रसाभासतदाभासयोस्तथात्वे ऊर्जस्विनामालङ्कारः। आभासत्वञ्चजनौचित्यप्रवृत्तत्वाद्बोध्यम्। भावशान्तेऽन्याङ्गत्वे समाहितालङ्कारः। भावोदयभावशवलतयोरलङ्कारत्वं विशेषसंज्ञाभिधा नात्स्वसंज्ञयैव ज्ञेयमिति।

दृष्टान्तमुखेन स्वपक्षं निश्चनोति तद्यथेत्यादिना— तद्= रसादीनामङ्गत्वं, यथा= इति निदर्शनं, चाटुषु= प्रियवचनेषु, प्रेयोऽलङ्कारस्य, वाक्यार्थत्वे= वाक्यार्थत्वेन प्रधानीभूतत्वे, अपि रसादयः= रसभावादयः, अङ्गभूताः= गुणीभावत्वेन स्थिताः, दृश्यन्ते= परिलक्ष्यन्त इति।

अयमाशयः— चाटुषु प्रेयोऽलङ्कारस्य वाक्यार्थत्वेऽपि रसादयस्तत्राङ्गभूता एवेति तत्र रसादीनामलङ्कारत्वम्। तेषामङ्गित्वेन विवक्षायां तु ध्वनिरेव। तत्र गुरुदेवनृपतिपुत्रविषयप्रीतिवर्णनं प्रेयोऽलंकार इति पूर्वेषां मतम्। तत्र प्रेयोलङ्कारो यत्र सः प्रेयोऽलङ्कारोऽलङ्करणीयः, अपरे तु चाटुतायाः वाक्यार्थत्वे प्रेयोऽलङ्कारविषयं मन्यन्ते विशेषेणोद्भटः। तथाभूतेऽपि रसादयस्तु अङ्गभूता एवेति।। ५।।

इस प्रकार रसादि अर्थ की ध्वनि के विषय होने की अवस्था के निरूपण के बाद अब रसादि अर्थ के अलङ्कार होने की स्थिति का निर्देश करते हैं—

रसादि अर्थ के प्रधान होने की स्थिति को छोड़कर दूसरी स्थिति में जहाँ वाच्यार्थ के प्रधान होने पर रसादि अर्थ अङ्ग हों, उस काव्य में रस इत्यादि अलङ्कार बन जाते हैं, यह मेरी सम्मति है।

कारिका के आशय का पल्लवन करते हैं—

यद्यपि अन्य आचार्यों ने भी रसवद् अलङ्कार का विषय दिखलाया है, तो भी उसमें मेरा पक्ष यह है कि जिस काव्य में रसादि से भिन्न अन्य अर्थ प्रधानतया वाक्यार्थ हो और रस इत्यादि उसके अङ्ग हों वहाँ रस इत्यादि अलङ्कार का विषय बन जाते हैं। जैसे चाटु उक्ति में प्रेयस् अलङ्कार होते हुए भी रस इत्यादि उसके अङ्ग के रूप में देखे जाते हैं।।५।।

ध्वन्या०— सं च रसादिरलङ्कारः किं हास्येन नमे प्रयास्यसि पुनः प्राप्तश्चिराद् दर्शनं शुद्धः सङ्कीर्णो वा। तत्राद्यो यथा—

केयं निष्करुण प्रवासरुचिता केनासि दूरीकृतः।
स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः।।

इत्यत्र करुणरसस्य शुद्धस्याङ्गभावात् स्पष्टमेव रसवदलङ्कारत्वम्। एवमेवंविधे विषये रसान्तराणां स्पष्ट एवाङ्गभावः।

लीला— इत्थं रसादेरर्थस्य प्राधान्ये सति ध्वनित्वमङ्गत्वे सति अलङ्कार-त्वमिति प्रतिपाद्य सम्प्रति द्वितीयस्य भेदं निरूपयति स चेत्यादिना—सः= तादृशः, च= इति वाक्यालङ्कारः, अलङ्कारः= अङ्गत्वेनावस्थानादलङ्काररूपः, रसादिः= रसभावादिः, शुद्धः= रसान्तरेणाङ्गभूतेनालङ्कारान्तरेण वा न मिश्रः, सङ्कीर्णः= आमिश्रः, वा= इति पक्षान्तरे।

उदाहरति किं हास्येनेति—हास्येन किम् चिरात् मे दर्शनं प्राप्तः पुनः न प्रयास्यसि, निष्करुण ! इयं ते प्रवासरुचिता का ? केन दूरीकृतः असि ? इति स्वप्नान्तेषु वदन् प्रियतमव्यासक्तकण्ठग्रहः ते रिपुस्त्रीजनः बुद्ध्वा रिक्तबाहुवलयः तारं रोदिति इति पदव्यवस्था।

हास्येन= प्रेमपरिहासेन, किम्= किं प्रयोजनम्, चिरात्= बहुकालात्, मे= मम, दर्शनं= लोचनपथं, प्राप्तः= आगतः, असि, पुनः= पुनरपि, न प्रयास्यसि नैवं गमिष्यसि विदितशठभावं त्वां बाहुबन्धनान्नैव मोक्ष्यामि, हे निष्करुण= हे निष्ठुर ! इयं= ईदृशी, ते= तव, प्रवासरुचिता= दूरदेशविवसित्सा, का= कीदृशी, किन्निमित्तं, केन= कतमेन जनेन वा कारणेन, दूरीकृतः= मत्तो निराकृतः असि, इति इत्थं, स्वप्नान्तेषु= स्वप्नायितेषु वदन्= प्रलपन्, प्रियतमव्यासक्तकण्ठग्रहः= समादत्तवल्लभगलः, ते= तव, रिपुस्त्रीजनः= वैरिविलासिनीलोकः, बुद्ध्वा= जागरित्वा, रिक्तबाहुवलयः= शून्यभुजमण्डलः, सन्, तारं= उच्चैः= रोदिति= साश्रुपातं प्रलपति इति।

रसादेरर्थस्य शुद्धत्वं प्रतिपादयति इत्यत्रेति—इत्यत्र= इत्यस्मिन् पद्ये, शुद्धस्य= केवलस्य न केनापि अमिश्रस्य, करुणरसस्य= शोकस्थायिभावात्मकस्य, रसस्य, अङ्गभावात्= नरपतिप्रभावातिशयरूपवाक्यार्थस्य उपस्कारकत्वेन स्थित-तया, स्पष्टमेव= सुव्यक्तमेव, रसवदलङ्कारत्वं= रसवन्नाम्नोऽलङ्कारस्य स्थितिः। एवं= इत्थं, एवंविधे= एतादृशे, विषये= अवस्थाने, रसान्तराणां= अन्येषामपि रसानां, अङ्गभावः= इतरोपस्कारकत्वेनावस्थितिः, स्पष्ट एव= सुव्यक्त एवेति। अत्र नरपतिप्रभाववर्णनरूपस्य वाक्यार्थस्य सौन्दर्यं च करुणरसकृतमेवेति। यथा चन्द्रादिना वस्तुना वस्त्वन्तरं वदनाद्यलङ्क्रियते तदुपमितत्वेन चारुतयावभासात्। यथा रसेनाऽपि वा रसान्तरं वोपस्कृतं सुन्दरं भातीति रसस्यापि वस्तुन इवाल-ङ्कारत्वम्। यथोपमया प्रस्तुतोऽर्थ उपमीयते तथा रसेन सरसीक्रियत इति। सन्त्यत्र काश्चिद्विप्रतिपत्तयः। केचन रसादिमलङ्कार्यमेव मन्यन्ते। तदनुसारेण स कथमपि अलङ्कारत्वं नैव भजते। किन्तु रसादिरलङ्कार्यस्तदैव भवति यदा स प्राधान्यं लभते वाक्यार्थत्वेन। तदोपमादयस्तस्यालङ्कारा भवन्ति। किन्तु यदा स प्राधान्यं भजतोऽपरवाक्यार्थस्योपस्कारकत्वेन तदङ्गत्वं भजते, तदा सोऽलङ्कार एव स्वभिन्नस्य चमत्कारातिशयहेतुत्वात्।

अपरञ्च, अलङ्कारास्तु शब्दगता अर्थगता वा भवन्ति। रसस्तु नैव शब्दगतो नापि चार्थगत इति कथं तस्यालङ्कारत्वम्। यदि नाम तथा कुत्र तस्य निवेश इत्यपि केषाञ्चिन्मतम्। तत्रेदं कथ्यते यदलङ्कारा नापि शब्दगता नापि अर्थगताः न च शब्दो वार्थो वा तेषां प्रयोजकः। अपितु चमत्कार एव अलङ्कारा नापि शग्दगता नापि अर्थगताः न च शब्दो वार्थो वा तेषां प्रयोजकः। अपितु चमत्कार एव अलङ्कारत्वस्य प्रयोजकम्। चमत्कारस्तु रसगत एव भवतीति न काचिदापत्तिः रसादीनामलङ्कारत्वे मतेऽपि च अलङ्काराणां शब्दार्थगतत्वे व्यङ्ग्यमपि तथैव शब्दार्थगतं भवत्येव। तेन व्यङ्ग्यस्वरूपस्य रसस्याऽपि शब्दार्थस्वरूपं सिद्ध्यति।

केचित्तु रसानां प्राधान्यविवक्षायां तेऽलङ्काराः भवन्ति गौणत्वे तु उदात्ताल-ङ्कारस्य भेद इत्यपि कथयन्ति। मतमिदमपि न समीचीनम्, यतः प्राधान्याविवक्षायां रसः स्वयमेवालङ्कार्यो भवति। आत्मनः आत्मनैव कथमलङ्करणम् ? तस्य गौणत्वेऽपि नोदात्तालङ्कारत्वं तस्य तु 'वस्तुप्रचय उदात्तं महतामङ्गत्ववचनञ्च' इति लक्षणात्।

एवमेव अन्यदेव रूपकादीनां रामणीयकत्वमन्यदेव च रसादीनाम्। तेन तेषामलङ्कारत्वमपि नैव गौणतां भजते। इति।

वह रसादि अलङ्कार शुद्ध एवं संकीर्ण भेद से दो प्रकार का होता हैं उनमें से पहला जैसे—

हँसने से क्या ? बहुत दिन बाद आए हो, अब तो तुम्हें मैं अपने बाहुपाश से अलग नहीं होने दूंगी, हे निष्ठुर ! यह तुम्हें दूर देश की रुचि क्यों है ? तुमको

किसने मेरे से दूर किया है (मैंने तो कोई अपराध नहीं किया है) स्वप्न के प्रलापों में इस तरह कहते हुए तथा प्रिय के गले में बाहुपाश डाले हुए आपके शत्रुओं की स्त्रियों का समूह जग जाने पर बाहुपाश को रिक्त पाकर जोर-जोर से रोता है।

यहाँ पर शुद्ध करुण रस वाच्यार्थरूप नरपति के प्रभाव के वर्णन का अङ्ग हो गया है अर्थात् उसमें चमत्कारातिशय का कारण बन गया है। अत: रसवत् अलङ्कार है। इस तरह ऐसे ही विषय में दूसरे रसों का भी स्पष्टतया अङ्गभाव हो जाता है।

ध्वन्या०— सङ्कीर्णो रसादिरङ्गभूतो यथा—

> क्षिप्तो हस्तावलग्न: प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
> गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षित: सम्भ्रमेण।
> आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभि: साश्रु नेत्रोत्पलाभि:
> कामीवार्द्रापराध: स दहत्तु दुरितं शाम्भवो व: शराग्नि:।।

ध्वन्या०— इत्यत्र त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे ईर्ष्याविप्रलम्भस्य श्लेषसहितस्याङ्गभाव इति। एवंविध एव रसवदाद्यलङ्कारस्य न्याय्यो विषय: अतएव चेर्ष्याविप्रलम्भकरुणयोरङ्गत्वेन व्यवस्थानात्समावेशो न दोष:।

लीला— रसाद्यलङ्कारस्य सङ्कीर्णस्वरूपमुदाहृत्य विवेचयति सङ्कीर्ण इत्यादिना— अङ्गभूत:= गुणीभावेन स्थित:, रसादि:= रसभावार्थ:, सङ्कीर्ण:= आमिश्र:, यथा= इति निदर्शनम्।

उदाहरति क्षिप्त इत्यादि— साश्रुनेत्रोत्पलाभि: त्रिपुरयुवतिभि: य: हस्तावलग्न: क्षिप्त: अंशुकान्तं आददान: अपि प्रसभं अभिहत:, केशेषु गृह्णन् अपास्त: चरणनिपतित: सम्भ्रमेण न ईक्षित: आलिङ्गन् आर्द्रापराध: कामी इव अवधूत: शाम्भव: शराग्नि: स: व: दुरितं दहतु इति पदव्यवस्था।

साश्रुनेत्रोत्पलाभि:= साश्रुणि सवाष्पाणि नेत्राणि एवोत्पलानि कमलानि ताभि: त्रिपुरयुवतिभि:= त्रिपुरस्थतरुणीभि:, य: हस्तावलग्न: गृहीतकर:, क्षिप्त:= दूरीकृत:, अंशुकान्तं= अंशुकं परिधानं तस्य अन्तं प्रान्तभागं, आददान:= गृह्णन्, अपि, प्रसभं= बलादेव, अभिहत:= निर्धूत:, केशेषु= रोमेषु, गृह्णन्= आददान्:, अपास्त:= दूरीकृत:, चरणनिपतित:= पादावनत:, सम्भ्रमेण= संवेगेन, न ईक्षित:= उपेक्षित:, आलिङ्गन्= समाश्लिषन्, आर्द्रापराध:= सद्य: कृतागा:, परस्त्रीगमनादिना, कामी= कामुक इव, अवधूत:= प्रक्षिप्त:, स:= तथा प्रसिद्ध:, शम्भव:= शम्भुप्रहत:, शराग्नि:= बाणवह्नि:, स:, व:= युष्माकं, दुरितं= वृजिनं, दहतु= भस्मीकरोतु इति। वृत्तं स्रग्धरा, तल्लक्षणं तु म्रभ्नैर्यानां त्रयेण (म र भ न य य य) इति। उपमालङ्कार:। अत्र यथा अन्यासम्भोगदूषित अतएव आर्द्रापराध: कामुक:=स्वप्रियया तिरस्क्रियते तथैव त्रिपुरयुवतिभिर्व्यवहृत: शाम्भव: शराग्निर्वो दुरितं दहतु इति भावार्थ:।

प्रकृते सङ्कीर्णत्वं निर्दिशति इत्यत्रेत्यादिना— इति इत्थं, अत्र= अस्मिन् काव्ये, त्रिपुररिपुप्रभावातिशयस्य= त्रिपुररिपु:= शम्भु: तस्य य: प्रभावस्तस्य अतिशय: आधिक्यं तस्य, वाक्यार्थत्वे= वाक्याभिमतार्थत्वे, श्लेषसहितस्य= श्लेषालङ्कारयुक्तस्य, ईर्ष्याविप्रलम्भस्य= तदाख्यशृङ्गारस्य, अङ्गभाव:= गुणभूतत्वं, इति= इत्थं, एवविधस्य= एतादृशस्य, गुणीभूतस्य एव, रसवदलङ्कारस्य= रसस्य गुणीभावलक्षणस्यालङ्कारस्य, विषय:= पक्ष:, न्याय्य:= समुचित इति।

उपोद्वलकं निर्दिशति अत एवेत्यादिना— अतएव= अनेनैव हेतुना, च ईर्ष्याविप्रलम्भकरुणयो:= मिथो विरुद्धयोरपि तयो: शृङ्गारकरुणयो:, अङ्गत्वेन= वस्तुनोऽङ्गत्वेन, अन्योपस्कारकत्वेन, व्यवस्थानात्= गुम्फनात्, समावेशे= उभयोरेकत्र सन्निवेशे, न दोष:= न दोषावह इति।

पद्यमिदं भगवन्महिमोत्कर्षवर्णनपरमंत एव तदेवास्य प्रधानो वाक्यार्थोऽङ्गी अन्येषां तस्यैवोपस्कारकत्वात्। तस्य ईर्ष्याविप्रलम्भोऽङ्गं किन्तु नैवं स शुद्धोऽपितु सङ्कीर्ण: श्लेषप्रसाधितत्वात्। अत्र करुणोऽपि रसस्तत्सहचर: किन्तु उभयोरेवाङ्गभावान्न तथागुम्फने दोष इति। अपि चात्र न केवलमीर्ष्याविप्रलम्भशृङ्गार एव शम्भुमहिमोत्कर्षरुपवाक्यार्थस्योपस्कारकमपितु तत्र श्लेषस्योपमायाश्च सहकारित्वमप्यपेक्षितम्। अतोऽत्र सङ्कीर्णत्वं रसवत:। यद्यप्यत्र करुणरसस्यापि अभिव्यक्ति: किन्तु तस्य चारुताप्रतीत्यै न तथावस्थानान्नास्य साङ्कर्यमभिमतम्। चारुताप्रतीतिस्तु ईर्ष्याविप्रलम्भशृङ्गाराश्रिता एव।

इस रसवद् अलङ्कार के सङ्कीर्ण स्वरूप का उपस्थापन करते हैं—

सङ्कीर्ण होकर रस इत्यादि के अङ्ग होने का उदाहरण जैसे—

जो आँसुओं से भरी आँखों वाली त्रिपुर की युवतियों ने हाथ पकड़ने पर फेंकी गई, वस्त्र का छोर पकड़ने पर बलात् ताड़ित, केशों में पकड़ने पर दूर फेंकी गई, पैरों पर गिरने पर सम्भ्रम से उपेक्षित और आलिङ्गन करने पर तुरन्त अपराध किये हुए कामुक की तरह दूर हटाई गई भगवान् शम्भु की शररूप अग्नि आप सब के पापों को जला दें।

उदाहरण में सङ्कीर्णता का निर्देशन करते हैं—

इस प्रकार इसमें त्रिपुरविजयी भगवान् शंकर के प्रभाव का अतिशय जो वह प्रधानभूत वाक्यार्थ अर्थात् अङ्गी है और शोक के सहित ईर्ष्याविप्रलम्भ शृङ्गार का अङ्ग है। इस प्रकार यहाँ रसवत् आदि अलङ्कार का विषय उचित बन पाता है। इस कारण ईर्ष्याविप्रलम्भ एवं करुण रस का अङ्ग के रूप में समावेश किए जाने से दोनों विरोधी रसों का एक वाक्य में समावेश भी दूषित नहीं है।

यहाँ भगवान् की महिमा का उत्कर्ष वाक्यार्थ अर्थात् अङ्गी है और विप्रलम्भ शृङ्गार उसका अङ्ग लेकिन उसकी सीधे न होकर श्लेष के द्वारा अवस्थिति होने से उसमें साङ्कर्य है। यद्यपि यहाँ करुण रस भी है लेकिन चारुता की प्रतीति में कोई

भूमिका नहीं है और चारुता के उत्कर्ष का हेतुत्व ईर्ष्याविप्रलम्भ शृङ्गार रसवत् अलङ्कार में ही आधारित है। अत: यहाँ सङ्कीर्ण ईर्ष्याविप्रलम्भ शृङ्गार रसवत् अलङ्कार बन जाता है जो कि भगवान् के महिमोत्कर्ष के रूप में चासनी का आधान करता है। वास्तविकता तो यह है कि जो सजाया जाय वह अङ्गी है। अ ौर जो सजाता है वह अलङ्कार है।

ध्वन्या०— यत्र हि रसस्य वाक्यार्थीभावस्तत्र कथमलङ्कारत्वम् ? अलङ्कारो हि चारुत्वहेतु: प्रसिद्ध:। न त्वसावात्मैवात्मनश्चारुत्वहेतु:। तथा चायमत्र संक्षेप:—

रसभाववादितात्पर्यमाश्रित्य विनिवेशनम्।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम्।।

एवं ध्वनेरुपमादीनां रसवदलङ्कारस्य च विभक्तविषयता भवति।

लीला— प्रकरणसिद्धं निष्कर्षं प्रस्तौति यत्रेत्यादिना—यत्र= यस्मिन् काव्ये, हि= इति अवधारणे, रसस्य= रसभावादे:, वाक्यार्थीभाव:= वाक्याशयत्वेनावस्थिति:, तत्र= तादृशे काव्ये, तस्य कथं नाम, अलङ्कारत्वं= अलङ्कारभाव:। अपितु नैवेत्याशय:।

तत्र हेतु निर्दिशति अलङ्कार इत्यादिना—हि= यत: अलङ्कार:= शोभातिशयहेतुभूतकाव्यधर्म: प्रसिद्ध:= विख्यात:, चारुत्वहेतु:= सौन्दर्याधायकतत्वमेव। न, तु, असौ= इति प्रसिद्ध:, आत्मा, एव= इति अवधारणे, आत्मन:= स्वस्य, चारुत्वहेतु:= सौन्दर्यनिदानम्।

प्रकरणमुपसंहरन्तन्निर्दिशति तथेति— तथा च, अत्र= प्रकरणेऽस्मिन्, अयं= वक्ष्यमाणप्रकार:, सङ्क्षेप:= निष्कर्ष:। संक्षेपमवतारयति रसेत्यादि— सर्वासां अलङ्कृतीनां रसभावादितात्पर्यं आश्रित्य विनिवेशनं अलङ्कारत्वसाधनम् इति पदव्यवस्था।

सर्वासां= निखिलानामेव शब्दगतानामर्थगतानां रसवदादीनां वा, अलङ्कृतीनां= चारुत्वहेतुभूतधर्माणां, रसभावादितात्पर्यं= रसभावतदाभासादीनां प्रयोजनं, आश्रित्य= समाधृत्य, विनिवेशनं= विन्यसनमेव, अलङ्कारत्वसाधनम्= अलंकृतित्वप्रयोजकम् इति। रसभावाद्यनुकूलसन्निवेशे एव अलङ्काराणामलङ्कारंत्वं न तु स्वरूप: इति। अलङ्कारास्तदैवालङ्कारत्वमापुवन्ति यदा ते प्रधानभूतस्य रसादेरुत्कर्षं कुर्वन्ति चारुत्वातिशयाधानेति। यदा उपमादय अलङ्कारा. सर्वोऽपि रसादिश्चालङ्कारास्तदाऽलङ्कार्यत्वेन किम्मात्रमवशिष्यते ? तच्च यद्यपि वस्तुमात्रमेव भवति तथापि तस्य पुनरपि विभावादिरूपतापर्यवसानात् रसादितात्पर्यमेवेति सर्वत्र रसध्वनेरेवात्मभावोऽलङ्कार्यत्वञ्च

पर्यवसितमुपस्थापयति तस्मादित्यादिना—तस्मात्= तेन हेतुना, यत्र= यस्मिन्

काव्ये, रसादयः= रसभावादयः, वाक्यार्थीभूताः= वाक्यार्थत्वेन पर्यवसिताः, सः= तादृशः, सर्वः= संपूर्णः, एव, न= नैव, रसादेः, अलङ्कारस्य= अलंकृतेः, विषयः= प्रदेशः। सः= तादृशस्तु, ध्वनेः= ध्वनितत्त्वस्य, प्रभेदः= विभागो रसध्वनिरूपः। तस्य= प्रधानीभूतरसादेः रसध्वनिरूपस्य, उपमादयः= उपमाप्रभृतयः, अलङ्काराः= शोभातिशयहेतवः। तद्विपरीतं, यत्र= यस्मिन् काव्ये, तु, प्राधान्येन= मुख्यतया, अर्थान्तरस्य= अन्यस्यैवार्थस्य वस्तुरूपस्यालङ्काररूपस्य रसरूपस्य वा, वाक्यार्थी भावे= प्रधानतया चारुत्वपर्यवसायित्वेनावस्थाने, रसादिभिः= रसभावतदाभासादिभिः, चारुत्वनिष्पत्तिः, सौन्दर्यातिशयसृष्टिः, क्रियते= सम्पाद्यते, सः= तादृशः रसादेः= रसभावतदाभासादेः, अलङ्कारतायाः= अलङ्कृतिभावस्य विषयः= अवसर इति।

यदा तु रसादिरर्थः प्राधान्येन वाक्यार्थतया विलसति तदा सः ध्वनेः रसध्वनिसंज्ञकभेदत्वेन अलङ्कार्यो भवति यस्योपमादयोऽलङ्काराः भवन्ति चारुत्वाधायकाः। यदा च प्राधान्येन अन्य एवार्थ उपतिष्ठति वस्तुरूपोऽलङ्काररूपो वाऽपररसरूपो वा यस्य चारुत्वनिष्पत्तिः रसादिभिः क्रियते तदा तादृशचारुत्वनिष्पादकरसादिरलङ्कारो भवति इति।

यद्यपि उपमाया अलङ्कार्यस्तु वाच्यार्थ एव तथापि तस्य तदेवालङ्करणं यद्व्यङ्ग्यार्थाभिव्यञ्जनसामर्थ्याधीनमिति वस्तुतो ध्वन्यात्मैवालङ्कार्यः। यथा शरीरधारितैः कटककेयूरादिभिः तत्तच्चित्तवृत्तिविशेषौचित्यसूचनात्मतया चेतन आत्मैवालङ्क्रियते। यतोऽचेतनं शवशरीरं कुण्डलाद्युपेतमपि न भाति तत्रालङ्कार्यस्याभावात्, सत्यपि अलङ्कार्ये यतिशरीरं कटकादिसज्जितं हास्याय भवति अनौचित्त्यं तदलङ्कार्यस्य। सचेतनत्वमौचित्यञ्चात्मन एव धर्मो न तु शरीरस्य। तेनात्मैवालङ्कार्यो भवति अहमलङ्कृतोऽस्मीत्यभिमानात्। एवमुपमादीनामपि वाच्यवृत्तित्वेऽपि रसादिना सह साक्षात्सम्बन्धाभावेऽपि काव्यात्मत्वेन स्थितत्वाद् ध्वनिरेवालङ्कार्यो भवति। इति।

स्वाभिमतं सारत्वेन प्रस्तौति एवमित्यादिना—एवं अनेन हेतुता, ध्वनेः= काव्यात्मभूतस्य ध्वनितत्वस्य, उपमादीनां=उपमाद्यलङ्काराणां, रसवदलङ्कारस्य= रसस्य गुणीभावेन योऽलङ्कारवर्गः सम्भवति रसवत्, प्रेयः, उर्जस्वी, समाहितं इत्यादिः तस्य, च= अपि, विभक्तविषयता= भिन्नावसरता, भवति= सम्पद्यत इति।

रसादीनां प्राधान्ये रसध्वनिर्भवति तस्य च उपमादयोऽलङ्काराः सौन्दर्याधायकाः:। रसादीनां गुणीभावे च तेषामप्यलङ्कारता प्रधानार्थस्य सौन्दर्याधायकत्वेनेति विषयो विभक्त इति। यत्र रसस्यालङ्कार्यता रसादीनाञ्च गुणीभावाभावस्तत्र शुद्धा एवोपमादयः। गुणीभावे तेषां तु संसृष्ट्या तद्विषयापहार इति लोचने स्पष्टम्। रसाद्यलङ्कारग्रहणे भावाद्यलङ्कारा अपि गृह्यन्ते।

जहाँ पर रस मुख्यतया वाक्यार्थ के रूप में रहता है, वहाँ पर वह अलङ्कार हो ही नहीं सकता। अलङ्कार तो सौन्दर्य का निष्पादक कारण होता है। स्वयं ही स्वयं का सौन्दर्य का साधन तो कोई भी नहीं बन सकता। अर्थात् रस के वाक्यार्थ होने पर वह अलङ्कार्य हो जाता है और अलङ्कार की चारुता उसमें सौन्दर्य का अधीन करती है। अगर इस प्रधानीभूत को भी हम अलङ्कार मानें तो स्वयं से स्वयं का प्रसाधन हो जाएगा जो कि असम्भव है। तो इसका यह संक्षेप (निष्कर्ष) होता है–

सभी अलङ्कारों की अलङ्कारता तभी सिद्ध हो सकती है जब उनका सन्निवेश रसभाव आदि के तात्पर्य के अनुकूल हो।

प्रकरण का निष्कर्ष बताते हैं–

इस कारण जो रस आदि वाक्यार्थ होते हैं वे सब रसादि अलङ्कार का विषय नहीं होते। वह तो ध्वनि का एक भेद है जो कि रसध्वनि के नाम से पुकारा जाता है। उसके ही उपमा आदि अलङ्कार होते हैं। जहाँ उससे भिन्न दूसरा अर्थ प्रधान भाव से वाक्य का अर्थ होता है और उसके चारुत्व का निष्पादन रसादि से किया जाता है तब वह रसादि की अलङ्कारता का विषय होता है।

यहाँ यह समझना चाहिए कि जैसे कुण्डल शरीर में रहकर भी आत्मा का सौन्दर्य बढ़ाता है न कि शरीर का वैसे ही वाच्यार्थ से सम्बद्ध होते हुए भी उपमा आदि अलङ्कार काव्य की आत्मा का सौन्दर्य बढ़ाते हैं। सौन्दर्य का अभिमान आत्मा को ही होता है, शरीर को नहीं।

इस प्रकार ध्वनि उपमा आदि अलङ्कार एवं रसवत् का भी विषय का विभाग हो जाता है।

ध्वन्या०– यदि तु चेतनानां वाक्यार्थीभावो रसाद्यलङ्कारस्य विषय इत्युच्यते तर्ह्युपमादीनां प्रविरलविषयता निर्विषयता वाभिहिता स्यात्। यस्मादचेतनवस्तुवतेर्वाक्यार्थीभूते पुनश्चेतनवस्तुयोजनया यथाकथञ्चि-द्भवितव्यम्।

अथ सत्यामपि तस्यां यत्राचेतनानां वाक्यार्थीभावो नासौ रसवद-लङ्कारस्य विषय इत्युच्यते। तन्महत: काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्वमभिहितं स्यात्।

लीला– ''काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मति:'' इति कथनेन यत्परमतं सूचितं तद्दूषणमुपन्यस्यति यदीत्यादिना– यदि= चेत्, तु= इति पक्षोपस्थापने, 'तु पादपूरणे, भेदे समुच्चयेऽवधारणेङ्क' इति कोश:, चेतनानां= चैतन्ययुक्तानां, वाक्यार्थीभाव:= प्रधानतया वाक्यार्थीभवनं, रसाद्यलंकारस्य= रसभावतदाभासाद्यलकृतीनां, विषय:= अवसर, इति= इत्थं, उच्यते= कथ्यते– अचेतनानां चित्तवृत्तिरूपरसाद्यसम्भवात् तद्वर्णने रसवदलङ्कारस्यानाशंक्यत्वा-त्तद्विभक्त एवोपमादीनां विषय इति पक्षान्तरे, निर्विषयता= अवसराभावत्वं,

अभिहिता= उक्ता, स्यात्, तथा सति उपमादिनिमित्तं न किमपि क्षेत्रमवशिष्टं भवेत् तत्र हेतुमाह यस्मादिति यस्मात्= यतः, अचेतनवस्तुवृत्ते= चैतन्यरहितपदार्थवृत्तान्ते, वाक्यार्थभूते= प्राधान्येन वाक्यार्थीभावे, पुनः= इति भेदे, चेतनवस्तुयोजनया= सजीवपदार्थवृत्तान्तेन, यथाकथञ्चित्= येन केनाऽपि विभावादिरूपतया प्रकारेण, भवितव्यं= आवश्यकतया भाव्यमिति। सत्यपि वाक्यार्थेऽचेतने विभावादिरूपतया तत्रापि चेतनवस्तुयोजना भवत्येव। अतोऽचेतनता सम्भवतो न कुत्रापि वाक्यार्थो भवति यत उपमादीना वसर आपतेत्। पुनः शङ्कामुपस्थापयति अथेत्यादिना— अथ यदि तस्यां= अचेतनेऽपि वाक्यार्थे चेतनवृत्तान्तयोजनायां, सत्यां= विद्यमानायां, अपि, यत्र= यस्मिन् काव्ये, अचेतनानां= जडानां, वाक्यार्थीभावः= प्राधान्येन वाक्यार्थता, असौ= एतादृशः, न, रसवदलङ्कारस्य, विषयः= क्षेत्रं, इति, उच्यते तत्= तथा कथने, महतः= सुविस्तृतस्य, रसनिधानभूतस्य= रसैकाश्रयतया प्रसिद्धस्य काव्यप्रबन्धस्य= काव्ययोजनायाः, नीरसत्वं= रसराहित्यं, अभिहितं= कथितं स्यादिति। अचेतनानां वाक्यार्थीभाव रसवदलङ्काराणां स्थितिर्यदि न मन्यते तदा तु रसाधारस्य महतः काव्यप्रबन्धस्य सुमहद्भागो नीरस एव स्यात्। 'यत्र हि रसस्तत्र हि अवश्यं रसवदलङ्कारस्तदितरस्मिन्नैव तस्यावसर इत्युच्यते चेत्तदा गगन्यापुरसरिदादिवर्णने नीरसतैव भवेत्किन्तु यथार्थस्तत्रापि सरसता भवत्येव रसस्य चमत्कारमयत्वात्। अतौ रसवदलङ्काराभाव एव नीरसताया द्योतकः अपितु ध्वन्यात्मभूतरसाभावे एव नीरसता सम्भवतीति। वर्णनीयस्य रसास्वादे न चैतन्याचैतन्ययोर्विवेकस्तत्र चमत्कारातिशय एव कारणमिति सारसंक्षेपः।

कतिचन विद्वांसो मन्यन्ते यद्यत्र चेतनपरको मुख्यार्थस्तत्र रसवदलंकारविषय आपतति किञ्च रसाश्रयत्वहेतोश्चित्तवृत्तिनितान्तमपेक्षिता। अचेतनेषु तस्य नितान्तमभावः। अतोऽचेतने वाक्यार्थे न रसस्य सम्भवः। तत्र केवलमुपमादयोऽलङ्कारा एव। यत्र तु चेतनवाक्यार्थस्तत्रैव रसाद्यलङ्कारः। इयमेव रसालङ्कारस्योपमादीनाञ्च विषयविभाजनरेखा। इति। तत्रेदमुच्यते यद्यदि चेतनस्य वाक्यार्थीभावे एव रसालङ्कारस्थितिस्तदा उपमादयोऽलङ्कारा निर्विषया वा विरलविषयाः स्युः। ननु उपमादीनां विषयस्तु अचेतनवर्णनमेव रसालङ्काराणां तु सचेतनवर्णनं तत्कथं रसालङ्कारेण उपमादीनां विषयापहार इति चेदत्रोच्यते। यत्र अचेतनवृत्तेर्वाक्यार्थता तत्रापि येन केनाप्युपायेन विभावादिरूपे चेतनवस्तुवृत्तान्तयोजना भवत्येव। तथापि यदीदमुच्यते यत्र अचेतनवृत्तेर्वाक्यार्थता न तत्र रसाद्यलङ्कारयोजना तदा सुमहत्काव्यप्रन्धो नीरस एव स्यात्किन्तु यथार्थतो नैतादृशी स्थितिः। असत्यपि रसाद्यलङ्कारप्रसङ्गे तत्र-तत्र वर्णनचातुर्या च्चमत्कृतेरतिशयात्सरसत्वमस्त्येव। नीरसता तु ध्वन्यात्मभूतरसाभावे एव न तु रसवदलङ्काराभावे इति सुनिश्चितः

पक्ष:। तदयमत्रसंक्षेप:-यत्र-यत्र हि रसस्तत्र तत्रावश्यमेव रसवदलङ्कारो यत्र च न रसवदलङ्कारस्तत्र–नैव रस इति तु नैवास्माकं सम्मतम्। रसभावेऽपि तस्य प्राधान्ये नैव तस्यालंकारताऽपितु ध्वनेर्विषयत्वालदलंकार्यता तस्य गुणीभावे एव रसवादाद्यलंकारस्थिति:। एवञ्च रसवदलंकारसत्वे सरसत्वमित्यपि नैव सम्मतं तदभावेऽपि नगनदीवर्णनादौ चमत्कारातिशयेन सरसताया: सत्त्वात्। यदि ध्वन्यात्मभूतरसभावभावस्तदा अचेतनवृत्तेर्वाक्यार्थत्वेऽपि सरसतोत्पद्यत एवेति। यत्र रसादीनां गौणता तत्र रसवदलंकारो यत्र च रसप्राधान्यं तत्रोपमादीनां स्थिति:।

"ऐसा मेरा विचार है कि" कह कर जो दूसरे के मत का भी होना सूचित किया गया था उसे उपस्थापित कर उसका खण्डन करते हैं–

यदि चेतन का वाक्यार्थ होना ही रसादि अलङ्कार का विषय बनना माना जाय जो कि कुछ विद्वान् मानते हैं तो उपमा आदि अलङ्कार का विषय या तो बहुत छोटा हो जाएगा या बिल्कुल नहीं रहेगा। क्योंकि अचेतन वृत्ति के असमर्थ होने पर भी चेतन वस्तुवृत्त की योजना किसी न किसी प्रकार से विभाव आदि के रूप में होगी ही।

और यह माना जाय कि अचेतन रूप वाक्यार्थ में चेतन वस्तु की योजना के होने पर भी जहाँ अचेतनपरक वाक्यार्थ होता है वह रसवत् अलङ्कार का विषय नहीं होता तो इनके विधानभूत काव्यप्रबन्ध का बहुत बड़ा भाग नीरस मानना पड़ेगा। वस्तुतस्तु ऐसा नहीं होता। न तो यह कहना उचित है कि जहाँ रस है वहीं रसवदलंकार होता है और न यही मानना ठीक है कि जहाँ रसवदलङ्कार होता है वहीं रस भी होता है। स्थिति ऐसी नहीं है। वास्तविकता तो यह है कि रस के प्रधान रूप से वाक्यार्थ होने से ध्वनि होती है और उसके गुणीभाव में रसवदलङ्काकार। उपमा आदि ध्वनि के अलंकार हैं।

कुछ लोग मानते हैं कि इस रस के चित्तवृत्ति से सम्बद्ध होने एवं चित्तवृत्ति का चेतन से सम्बन्ध होने से जहाँ अचेतन वाक्यार्थ होता है वहाँ रसवदलंकार नहीं होता। ऐसा मानना ठीक नहीं क्योंकि अचेतनवृत्ति के वाक्यार्थ होने पर भी विभाव आदि के द्वारा किसी न किसी रूप में चेतनवृत्ति का होना निश्चित है। अत: उस स्थिति में उपमा आदि अलंकार का या तो क्षेत्र बहुत कम हो जाएगा या तो रहेगा ही नहीं क्योंकि पूर्णत: अचेतनता बहुत ही विरल होती है न तो रस के होने मात्र से रसवद् अलंकार का होना होता है न तो रसववद् अलंकार का होना ही सरसता का लक्षण है। जहाँ रसवद् अलंकार नहीं होता है वहाँ भी चमत्कार के अतिशय से सरसता होती है।

ध्वन्या०– तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरसना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम्।
यथाविद्धं याति स्खलितमभिसन्धाय बहुशो
नदीरूपेणेयं ध्रुवमसहना सा परिणता।

लीला— यत्र रसवदलंकारस्तत्रैव रसवत्त्वं यत्र च अचेतनवृत्तेर्वाक्यार्थता तत्रैव रसवदलंकारस्य सत्त्वमिति परमतदूषणाय उदाहरणं प्रस्तौति तरङ्गेत्यादित– रङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरसना संरम्भशिथिलं वसनं इव फेनं विकर्षन्ती, बहुशः स्खलितं अभिसन्धाय असहना इयं यथा आविद्धं परिणता तथा ध्रुवं सा नदीरूपेण याति इति पदव्यवस्था।

तरङ्गभ्रूभङ्गा= तरङ्गाः वीचय एव भ्रूवोर्भङ्गो विक्षेपो यस्याः सा उभयोरेव दैर्घ्यकौटिल्ययोगात्, क्षुभितविहगश्रेणिरसना= क्षुभिता चञ्चला ये विहगाः, पक्षिणस्तेषां श्रेणिः पङ्क्तिरेव रसना काञ्ची यस्याः सा, संरम्भशिथिलं= संरम्भेण आवेगेन शिथिलं श्लथं, वसनं= वस्त्रं, इव= यथा फेनं= बुद्बुदं, विकर्षन्ती= बलादाकर्षन्ती बहुशः= अनेकशः, स्खलितं= प्रमादादेवापि अन्यस्त्रीनामग्रहणा- द्यपराधं, अभिसन्धाय= हृदयेन एकीकृत्य, असहना= सोढुमक्षमा, यथा इव, आविद्धं= कुटिलतां परिणता= प्राप्ता, तथा ध्रुवं= निश्चयेन, सा= मे प्रेयसी ऊर्वशी, नदीरूपेण= सरिताकारेण, याति= गच्छतीति। अत्र रूपकानुप्राणितोत्प्रेक्षा- लङ्कारः। वृत्तन्तु शिखरिणी 'यमनसभलागाः' इति तल्लक्षणम्। ऊर्वशीविरहो- न्मादग्रस्तस्य पुरूरवस उक्तिरियम्। अत्र स प्रमादेन तरङ्गान् भ्रूभङ्गत्वेन विहगपङ्क्तीः रसनात्वेन फेनं वसनत्वेन कुटिलां गति कोपावस्थात्वेन विकल्प्य नदीमेव प्रियां स्मरति। अत्राचेतनाया नद्या वर्णने सचेतनाया नायिकायाश्च- रितारोपात् सरसत्वं सिद्ध्यत्येव। अचेतनवाक्यार्थे चेतनत्वारोपे कृतेऽपि तत्र न रसावस्थितिरिति यदुक्तं तदनेन परास्यते एव।

जहाँ रसवद् अलंकार होता है वहीं रस होता है और अचेतनपरक वाक्यार्थ के होने से वहाँ रसवद् अलंकार नहीं होता इस तरह जो दूसरे विद्वानों का मत है उसके निरास के लिए उदाहरण देते हैं—

तरंग रूप भ्रूविक्षेप वाली, उड़ते पञ्छियों की पंक्ति रूप मेखला वाली, आवेग से शिथिल हुए वस्त्र के समान फेन को, खींच रही, अनेक गोत्रस्खलन के अपराधों को न सह पाने के कारण कुटिल बनी यह निश्चय ही मेरी वह प्रेयसी नदी का रूप लेकर जा रही है।

यहाँ वाक्यार्थ तो चेतन नहीं है लेकिन विभाव आदि के कारण उसमें नायिका के आरोप होने से चेतनता बन जाती है और रस की स्थिति सिद्ध हो जाती है। चेतनता के आरोप होने पर भी अचेतनपरक वाक्यार्थ में रसवद् अलंकार की स्थिति न मानने पर तो यहाँ भी नीरसता बन जाती। लेकिन चमत्कार के अतिशय के कारण रसवत्ता स्पष्ट है।

यथा वा—

तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा।

चिन्तामौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा।।

लीला— अचेतनेऽपि वाक्यार्थे रसवत्तासिद्धये उदाहरणान्तरं प्रस्तौति तन्वीत्यादि—तन्वी मेघजलार्द्रपल्लवतया अश्रुभिः धौताधरा इव स्वकालविरहात् विश्रान्त पुष्पोद्गमा आभरणैः शून्या इव मधुलिहां शब्दैः विना चिन्तामौनं आश्रिता इव सा चण्डी पादपतितं मां अवधूय जातानुतापा इव लक्ष्यते इति पदव्यवस्था।

तन्वी= कृशाङ्गी, मेघजलार्द्रपल्लवतया= मेघजलेन वर्षावारिणा आर्द्राः क्लिन्नाः पल्लवाः किसलयानि यस्याः सा तस्याः भावस्तत्ता तया, अश्रुभिः= वाष्पैः धौताधरा= प्रक्षालितनिम्नोष्ठा, इव= इत्युत्प्रेक्षा, स्वकालविरहात्= स्वकालस्य वसन्तग्रीष्मादेः पुष्पोद्गमसमयस्य, विरहात् राहित्यात्, विश्रान्तपुष्पोद्गमा= अवरुद्धकुसुमोत्पत्तिः, आभरणैः= विभूषणैः, शून्या= विरहिता, इव= इत्युत्प्रेक्षा, मधुलिहां= भ्रमराणां, शब्दैः= ध्वनिभिः, विना= अन्तरा, चिन्तामौनं= चिन्तया पश्चात्तापेन मौनं तूष्णीम्भावं, आश्रिता= अवलम्बिता, इव= इत्युत्प्रेक्षा, चण्डी= कोपना, सा= प्रेयसी, पादपतितं= चरणावनतं, मां= अत्र पुरूरवसं, अवधूय= अनादृत्य, जातानुतापा= समुत्पन्नपश्चात्तापा, इव, लक्ष्यते= परिदृश्यते इति। वृत्तं शार्दूलविक्रीडितं, लक्षणन्तु 'मसजसततगा' इति।

इयमपि उन्मादाक्रान्तस्य पुरूरवस उक्तिः। अत्रापि लतारूपे वाक्यार्थे कलहान्तरतनायिकाया वृत्तान्तारोपाद्रसवत्तासिद्धिः। अचेतनवाक्यार्थे रसानवस्थितिमते क्वापि नीरसत्वं स्यात्किन्तु चमत्कारातिशयेन रसवत्ता व्यक्तैव!

अचेतनपरक वाक्यार्थ के होने पर भी रसवत्ता की स्थिति को सिद्ध करने के लिए दूसरा उदाहरण भी देते हैं—

यह दुबली बरसात के जलों से पल्लव के भींगने से आँशुओं से अधर धोई हुई जैसी अपने समय के निकल जाने से फूलों का खिलना अवरुद्ध हुई, आभूषणों से शून्य जैसी, भंवरों के न होने से चिन्ता से मौनधारण की हुई जैसी यह कोपन स्वभाव वाली चरणों में गिरे हुए मेरा तिरस्कार कर पश्चात्ताप में पड़ी हुई मेरी प्रेयसी जैसी दिखाई पड़ती है।

यहाँ भी वाक्यार्थ है लता जो कि अचेतन है लेकिन उसमें कलहान्तरिता नायिका के आरोप किए जाने से चेतनता आ जाती है और उसकी रसवत्ता सिद्ध है। अचेतन वाक्यार्थ में रस की अवस्थिति न मानने से तो यहाँ भी नीरसता माननी पड़ेगी जो कि यथार्थ के विपरीत होगी।

ध्वन्या०— यथा वा—

तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां
क्षेमं भद्र कलिन्दशैलतनयातीरे लतावेश्मनाम्।

विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना
ते जाने जरठीभवन्ति विगलन्नीलत्विष: पल्लवा:।

लीला— अचेतनेऽपि वाक्यार्थे रसवत्तासिद्धये पुनरुदाहरणान्तरं प्रस्तौति तेषामित्यादि— हे भद्र ! कलिन्दशैलतनयातीरे गोपवधूविलाससुहृदां राधारह· साक्षिणां तेषां लतावेश्मनां क्षेमम् स्मरतल्पकल्पनमृदुच्छेदोपयोगे विच्छिन्ने विगलन्नीलत्विष: ते पल्लवा: अधुना जरठीभवन्ति जाने इति पदव्यवस्था।

हे भद्र ! हे सौम्य ! कलिन्दशैलतनयातीरे= कलिन्दाख्यो य शैलोऽद्रिस्तस्य तनया सुता कालिन्दी तस्यास्तीरे तटप्रदेशे, गोपवधूविलाससुहृदां= गोपवधूनां गापिकानां ये विलासा: आक्रीडास्तेषां सुहृदां मित्राणां गोपिकाविभ्रमनर्मसचिवानां राधारह:साक्षिणां= राधाया: रहसि सुरतक्रीडाया: साक्षिणां प्रत्यक्षदर्शकाणां, तेषां= मत्स्मृतिस्थानां, लतावेश्मनां= बल्लरीनिकुञ्जानां, क्षेमं= भद्रं, कच्चित्, स्मरतल्पकल्पनमृदुच्छेदोपयोगे= स्मरो मदनोऽत्र कामक्रीडा तदर्थं यस्तल्प: शय्या तस्य कल्पनं प्ररचना तन्निमित्तं मृदु स्वल्पं यच्छेदस्त्रोटनं तस्य उपयोग: साफल्यं तस्मिन्, विच्छिन्ने= विरते सति, विगलन्नीलत्विष:= प्रणश्यन्नीलकान्तय:, ते, पल्लवा:= किसलया:, अधुना= साम्प्रतं, जरठीभवन्ति= जीर्णा भवन्ति, इति, जाने—मन्ये—सम्प्रति उपयोगाभवात्तेषां विशीर्णता स्वाभाविकी एव। वृत्तं शार्दूलविक्रीडितं, लक्षणन्तु 'मसजसततगा:' इति।

अत्र अचेतनं लताकुञ्जवर्णनरूपे वाक्यार्थे सुहृत्त्वसाक्षित्त्वादिचेतनधर्मा- रोपाद्रसवत्ता सम्पद्यते एव। अचेतनवाक्यार्थे रसवत्तास्वीकारेऽत्रापि नीरसता आपतेद्यथार्थस्य विपरीतं भवेत्।

अचेतनपरक वाक्यार्थ के होने पर भी रसवत्ता की स्थिति को दर्शाने के लिए पुन: उदाहरण प्रस्तुत करते हैं।

हे सौम्य, कालिन्दी नदी के तट में रहे लताकुञ्जों की स्थिति अच्छी ही है, न जो कि गोपिकाओं के विलास के मित्र हैं राधिका के एकान्तविहार के साक्षी हैं। अब तो कामक्रीड़ा के निमित्त शय्या की रचना के लिए धीरे से तोड़ने रूप जो उपयोग तथा उसके विच्छिन्न हो जाने से चली गई है नीली कान्ति जिसके ऐसे पल्लव जरठ हो गए होंगे, मुझे लगता है।

यहाँ अचेतन वाक्यार्थ रूप लताकुञ्जों में मित्रत्व साक्षित्व आदि चेतन धर्मों के आरोप से रस की स्थिति बन जाती है। अचेतन वाक्यार्थ में रस की स्थिति न मानने से तो यहाँ भी नीरसता माननी पड़ेगी जो कि यथार्थ के विपरीत होगी।

ध्वन्या०— इत्येवमादौ विषयेऽचेतनानां वाक्यार्थीभावेऽपि चेतनवस्तु- वृत्तान्तयोजनास्त्येव।

अथ यत्र चेतनवस्तुवृत्तान्तयोजनास्ति तत्र रसादिरलङ्कार:। तदेवं

सत्युपमादयोऽलङ्कारा: निर्विषया: प्रविरलविषया वा स्यु:। यस्मान्नास्त्येवासावचेतनवस्तुवृत्तान्तो यत्र चेतनवस्तुवृत्तान्तयोजना नास्त्यन्ततो विभावत्वेन। तस्मादङ्गत्वेन च रसादीनामलङ्कारता। य: पुनरङ्गी रस: भावो वा सर्वाकारमलङ्कार्य: स ध्वनेरात्मेति।

लीला– एवमचेतनेऽपि वाक्यार्थे रसवत्तास्थित्यवबोधनाय नदीलतानिकुञ्जवाक्यार्थरूपमुदाहरणत्रयमुपस्थाप्य तत्र वक्तव्यमाह इत्येवमित्यादिना–इति= इत्थं , एवमादौ= एतादृशे, विषये= प्रकरणे, अचेतनानां= जडपदार्थानां, वाक्यार्थीभावे= प्राधान्यत्वेन विवक्षिते, अपि, चेतनवस्तुवृत्तान्तयोजना= चैतन्ययुक्तपदार्थवृत्तसमायोजनं, अस्त्येव= भवत्येव। अथ= यदि, यत्र= यस्मिन् काव्ये, चेतनवस्तुवृत्तान्तयोजना= सजीवपदार्थवृत्तारोपणं, अस्ति, तत्र= तादृशे काव्ये, रसादि:= रसभावतदाभसादि:, अलङ्कार:, तत्= तदा, एव सति= इत्थं स्वीकारे कृते सति, उपमादय:= उपमाप्रभृत्यलङ्कारा:, प्रविरलविषया:= नितान्तस्वल्पविषया: विषयरहिता वा= इति पक्षान्तरे, स्यु:= भवेयुरिति। तर्हि यत्र चेतनवृत्तस्य सर्वथा नानुप्रवेश:= स उपमादेर्विषयो भविष्यतीत्याशङ्क्याह यस्मादित्यादि–यस्मात्= यत:, असौ= एतादृश:, अचेतनवस्तुवृत्तान्त:= जडपदार्थवृत्त:, नास्त्येव= नैव विद्यत एव, यत्र= यस्मिन् चेतनवस्तुवृत्तान्तयोजना= चैतन्ययुक्तपदार्थसमारोपणं, अन्तत:= परिणामात्,

विभावत्वेन= विभावादिरूपेण, नास्ति= नैव सम्भवति। अयमाशय:– स्तम्भपुलकाद्यचेतनमपि वर्ण्यमानमनुभावत्वाच्चेतनमाक्षिपत्येव अर्थात्, चित्तवृत्तिविशेषगमकत्वेन चेतनगमकं भवत्येव। तादृशोऽचेतनवस्तुवृत्तान्त एव न सम्भवति यत्र अन्ततो विभावत्वेन चेतनवस्तुवृत्तान्तयोजना न भवति। अतिजडोऽपि चन्द्रोद्यानप्रभृति: वाच्यार्थबाधेन स्वस्मिन् पर्यवसितोऽपि वर्ण्यमान: अवश्यं चित्तवृत्तिविभावतां त्यक्त्वा तु काव्येऽनुपादेय एव भवति इति।

इत्थं परमतं संदूष्य सम्प्रति स्वाभिमतं प्रत्याम्नायेन उपसंहरति तस्मादिति–तस्मात्= तेनैव हेतुना, अङ्गत्वेन= अवयवत्वेन, गुणीभावेन, प्रधानोपस्कारकत्वेन, रसादीनां= रसभावादीनां, अलङ्कारता= अलङ्कारभाव इति। य:= यश्च, पुन: पक्षान्तरे, अङ्गी= प्राधान्येन वाक्यार्थीभूत:, रस:= शृङ्गारादि:, भाव: रत्यादिर्वा, सर्वाकार= सवप्रकारेण,–उपमादिभि: रसवदादिभिर्वा, अलङ्कार्य:= अलङ्करणयोग्य:, स:= तादृश:, ध्वने:= ध्वनितत्त्वस्य, आत्मा= रहस्यं परमतत्त्वं वा इति= प्रकरणसमाप्तौ। अत एव स नालङ्कार इति।।५।।

ऊपर जो तीन उदाहरण दिए गए उनसे जो अभीष्ट वस्तु है उसको बताने का उपक्रम करते हैं– इत्यादि विषयों में अचेतन के वाक्यार्थ होते हुए भी चेतनवस्तु के वृत्तान्त की योजना तो होती ही है।

यह कहा जाय कि जहाँ उस तरह चेतनवस्तु के वृत्तान्त की योजना है वहाँ रसादि अलङ्कार होते हैं, तब भी उपमा आदि अलंकार का क्षेत्र या तो रहेगा ही नहीं या तो बहुत सीमित हो जाएगा। क्योंकि ऐसा कोई अचेतनवस्तुवृत्तान्त नहीं है जिसमें अन्ततः विभाव आदि के रूप में चेतन वस्तु के वृतान्त की योजना न हो। यहाँ तक कि चन्द्र उद्यान जैसे अत्यन्त जड़ वस्तु भी वाच्यार्थबोध के कारण अपने में पर्यवसित होकर भी चित्तवृत्ति के विभाव बन ही जाते हैं नहीं तो उनका काव्य मे कोई स्थान नहीं होता और स्तम्भ पुलक आदि अचेतन भी अनुभाव के रूप में वेतन का आक्षेप करते ही हैं अर्थात् चित्तवृत्तिविशेष के गमक के रूप में चेतन का गमक होते ही है। अतः शुद्ध जड़ वस्तु जिसमें चेतन के समावेश की योजना न हो काव्य में नहीं होती। अगर जड़ से वाक्यार्थभाव में ही उपमा आदि का होना हो तो फिर उनका विषय ही शून्य हो जाएगा।

इस तरह परमत को दूषित कर अपने अभीष्ट मत का सङ्ग्रह करते हैं—

अतएव वाक्यार्थ चाहे जड़ हो या चेतन लेकिन रसादि तभी अलंकार होंगे जब वे किसी का अङ्ग बनकर उपस्कारक होते हैं। इसके विपरीत जो रस या भाव अङ्गी हो तथा सब प्रकार से अलङ्कार्य ही वह ध्वनि की आत्मा होती है। इस तरह रसध्वनि एवं रसालंकार भिन्न-भिन्न अवस्था के पहलू हैं।

ध्वन्या०— किञ्च—

कारिका— तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्कारा: विज्ञेयाः कटकादिवत्।।६।।

ध्वन्या— ये तमर्थं रसादिलक्षणमङ्गिनं सन्तमवलम्बन्ते ते गुणाः शौर्यादिवत्। वाच्यवाचकलक्षणान्यङ्गानि ये पुनस्तदाश्रितास्तेऽलङ्कारा मन्तव्याः कटकादिवत्।

लीला— एवं वाक्यार्थीभूतस्य रसस्याङ्गित्वमलङ्कार्यत्वञ्च प्रतिपाद्य तदेवा-न्येनाऽप्युपायेन प्रतिपादयितुकामो गुणगुणिनोरलङ्कार्ययोर्भेदवर्णनाय प्रस्तुतां कारिकामवतारयन् तद्भूमिका निर्दिशति वृत्तिकारः किञ्चेति—किञ्च= नैतावन्मात्रं युक्तिजातं रसस्याङ्गित्वेऽपितु अन्यदपि सम्भवतीति समुच्चयार्थे।

कारिकामवतारयति तमर्थमित्यादि ये तं अङ्गिनं अर्थं अवलम्बन्ते ते गुणाः स्मृताः अलङ्काराः तु कटकादिवत् अङ्गाश्रिताः विज्ञेया इति पदव्यवस्था।

ये= धर्माः, तं= तादृशं वाक्यार्थत्वेन, स्थितं, अङ्गिनं= मुख्यं प्रधानं वा, अर्थरसादिवस्तु, अवलम्बन्ते= आश्रयन्ते, ते= तादृशाः धर्माः, गुणाः= काव्यशोभा-धायकधर्माः, स्मृताः= मताः, अलङ्काराः= काव्यशोभातिशयहेतुभूतधर्माः, तु, इति भेदे, कटकादिवत= बलयादिवत्—तुल्यार्थे वतिः, अङ्गाश्रिताः= वाच्यवाचका-धारिताः, विज्ञेयाः= मन्तव्याः। ते गुणा ये खलु वाक्यार्थीभूतमङ्गिनं रसादिमाश्रयन्ते ते त्वलङ्कारा ये खलु शब्दार्थवृत्तय इत्याशयः।

कारिकां व्याख्याति वृत्तिकृद् य इत्यादिना ये= धर्माः, तं= अर्थ= रसादिलक्षणं= रसभावादिवाक्यार्थीभूतं, अङ्गिनं, सन्तं= प्राधान्येन स्थितं, अवलम्बन्ते= आश्रयन्ते, ते= तादृशा धर्माः, गुणाः= तदाख्याः, शौर्यादिवत्= आत्मनः शूरतादिवत्— यथा शौर्यादय आत्मनो गुणा न शरीरस्य तथैव माधुर्यादयो गुणा वाक्यार्थीभूतत्वादङ्गित्वेन स्थितस्य रसादेरर्थस्यैव न तु शब्दार्थयोस्तयोः शरीरस्थनीयत्वात्, अङ्गानि= तथाभूतस्य रसादेरर्थस्य अङ्गभूता अवयवास्तु, वाच्यवाचकलक्षणानि= अभिधेयाभिधानस्वरूपाणि ये= धर्माः तदाश्रिताः= तस्मिन् वाच्यवाचकलक्षणे अङ्गे आश्रिता अवलम्बिताः, पुनः= इति भेदे ते= तादृशाः, अलङ्काराः= अलङ्कारसंज्ञिता मन्तव्याः= ज्ञातव्याः, कटकादिवत्= बलयादिवत्। यथा कटककुण्डलादयः शरीरस्य अलङ्कारास्तथैव काव्यात्मभूतस्य रसादेरर्थस्य अङ्गभूतयोः शब्दार्थयोरलङ्कारप्रयोजकास्त्वलङ्काराः। तेऽपि यथा एव अङ्गभूता बहिर्धर्माः। यथाऽऽह वामनः— 'काव्यशोभायाः कर्तारो धर्माः गुणाः। तदतिशयहेतवस्त्वलङ्कारा इति। अत्र काव्यशब्देन काव्यात्मन एव ग्रहणं भवति तस्यैवालङ्कार्यत्वात्। अलङ्कारस्तस्यैव शोभामादधाति यः। स्वयमपि तत्क्षमो भवति। यथा शवशरीरस्य मण्डनं वृथैव भवति तत्रालङ्कार्याभावात् तथैव यतिशरीरस्य मण्डनं हास्यावहं भवति तत्र तथाकरणायौचित्याभावात्। तेन गुणा अलङ्काराश्च आत्मन एव धर्माः यत्र शौर्यादय इवाभ्यन्तरा गुणाः कटकादय इव वाह्या अलङ्कारा इति। इदमप्यवधेयं यद्गुणानां रसादिना सह नित्यसम्बन्धो धर्मत्वात् अलङ्काराणामनित्यसम्बन्धस्तेषामभावेऽपि काव्यत्वसिद्धेः किन्तु परमार्थतस्तु तेषामपि नित्यता सिध्यति चमत्काराधायकत्वात्। अत एवोक्तं 'न कान्तमपि निर्भूषं विभाति वनितामुखम्' इति।

अत्र द्वावेव प्रमेयौ चिन्त्यौ। प्रथमस्तु अन्य एवाङ्गी तदितरावेव गुणालङ्कारौ, द्वितीयस्तु अन्य एव गुणोऽन्य एवालङ्कार इति।

इत्थं गुणिव्यतिरिक्तो गुणोऽलङ्कार्यव्यतिरिक्तोऽलङ्कारश्च। गुणिनि स्थिते एव गुणस्य अलङ्कार्ये स्थित एवालङ्कारस्य व्यवहारो युक्त इति युक्तमेवोक्तम्।।६।।

इस प्रकार वाक्यार्थीभाव से अलङ्कार्य एवं अलङ्कार का भेद प्रतिपादन करने के बाद अब दूसरे प्रकार से भी उस भेद को दर्शाते हैं—

यह भी कि—

जो धर्म रसरूप अङ्गी अर्थ का आश्रय लेते हैं वे गुण कहे जाते है और इसके अलकार तो कटक आदि जैसे अङ्ग में ही आश्रित होते हैं।। ६।।

कारिका की व्याख्या करते हैं वृत्तिकार—

जो अङ्गी बने हुए रसादि लक्षण रूप अर्थ का आश्रय लेते हैं वे गुण होते हैं जैसे आत्मा के शौर्य आदि। जो वाच्यवाचक लक्षण वाले हैं वे अङ्ग हैं और उनमें जो आश्रित होते हैं वे अलंकार हैं जैसे शरीर के कटक। इस तरह अङ्गी रस रसादि

अर्थ एवं गुण तथा अलंकार में भेद होता है और गुण और अलंकार में भी परस्पर में भेद होता है।। ६।।

ध्वन्या०— तथा च—

कारिका— शृङ्गार एव मधुरः परः प्रह्लादनो रसः।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति।। ७।।

ध्वन्या०— शृङ्गार एव रसान्तरापेक्षया मधुरः प्रह्लादहेतुत्वात्। तत्प्रकाशनपरशब्दार्थतया काव्यस्य स माधुर्यलक्षणो गुणः. पुनरोजसोऽपि साधारणमिति।

लीला— ननु गुणास्तु बन्धगुणत्वेन अर्थगुणत्वेन च प्राचीनैः स्वीकृताः। तत्कथमुच्यते 'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणा' इत्याकाङ्क्षापरिहाराय तन्निमित्तककारिकावतारणाय वृत्तिकृदुपक्रमते तथाचेति— तथा च= इति पूर्वोक्तार्थदृढीकरणे, एवमेव।

कारिकामवतारयति शृङ्गार इत्यादि— शृङ्गार एव परः प्रह्लादनः मधुरः रसः माधुर्यं तन्मयं काव्यं आश्रित्य प्रतितिष्ठति इति।

शृङ्गारः= तदाख्यः रतिस्थायिभावात्मकरसः, एव= इति गुणानां शब्दार्थवृत्तित्वपरिहाराय, न तु रसान्तरव्यवच्छेदाय, करुणेऽपि तस्य सत्त्वात्, परः= सर्वोत्कृष्टः, प्रह्लादनः=आनन्दातिशयदायकः, मधुरः= मधुवन्मिष्टः रसः= ज्ञायमानकाव्यार्थादनुभूयमानात्मानन्दः, माधुर्यं= तदाख्यो गुणः। चित्तविकासहेतुः, तन्मयं शृङ्गारमयं, काव्यं= शब्दार्थौ, आश्रित्य= आधृत्य, प्रतितिष्ठति= प्रतिष्ठां लभते इति।

यत्र व्यङ्ग्यतया शृङ्गार आत्मत्वेन प्रकृतस्तादृशादेव शब्दार्थौ माधुर्यमाश्रयते यतः स एव परमाह्लादको रसो रतिस्थायिभावात्मकत्वाद्रतेरेव सर्वेषां हृदयसंवादमयत्वादिति। माधुर्यं नाम शृङ्गारादेः रसस्यैव गुणः। तन्मधुरसाभिव्यञ्जकयोः शब्दार्थयोर्माधुर्यमिति गुणवृत्यैव।

कारिकार्थं स्पष्टयति वृत्तिकारः शृङ्गार इत्यादिना— रसान्तरापेक्षया= अन्यः शृङ्गारभिन्नो रसो रसान्तरं हास्यादि तदपेक्षया तत्तुलनया, प्रह्लादहेतुत्वात्= अत्यानन्दकारणात्, शृङ्गारः= रतिस्थायिभावात्मको रसः, एव— इति व्यवच्छेदा नान्यः, मधुरः= माधुर्याश्रयः, तत्प्रकाशनपरशब्दार्थतया= तस्य शृङ्गारस्य प्रकाशनमवभासनं तत्परौ यौ शब्दार्थौ तयोर्भावस्तत्ता तया, काव्यस्य, सः= तादृशः माधुर्यलक्षणः= चित्तद्रवीभावमयस्वरूपः, गुणः= काव्यशोभाकरधर्म इति। यत्तु भामहेन 'श्रव्यं नातिसमस्तार्थकाव्यं मधुरमिष्यते' इत्युक्तं तदूषयितुमाह श्रव्यत्वमित्यादिश्रव्यत्वम्—श्रवणानुद्वेजकस्वरूपं, तु, पुनः= इति पक्षान्तरे, ओजसः= चित्तविस्तारधर्मगुणस्य, अपि च साधारणं= सामान्यं, न केवलं माधुर्यस्येति माधुर्य न

तदुपयुक्तं लक्षणम्। माधुर्य तु चित्तद्रवीभावमयह्लाद एव यच्छृङ्गारे एव सम्भवति तस्य रत्यात्मकत्वात्। रतेश्च सर्वेषामेव प्रमोदावहत्वात्। इति उक्तमेव— प्रमोदात्मा रति: सैव यूनोरन्योन्यरक्तयो:। प्रहृष्यमाण: शृङ्गारो मधुराङ्गविचेष्टितै: इति।

माधुर्यं नाम शृङ्गारस्यैव गुणस्तस्य रत्यात्मकत्वाद्रतेश्च सर्वेषामेव हृदयसंवादित्वात्। तत्प्रकाशकत्वेनैव शब्दार्थयोस्तस्य स्थितिर्मता गुणवृत्या। चित्तद्रवीभावमयाह्लाद एव माधुर्यं न तु सुश्रव्यत्वं तस्य ओजोगुणे चित्तविस्ताररूपेऽपि साधारणात्। 'यो य: शस्त्रं विभर्ति' इत्यादौ सुश्रव्यत्वस्य असमस्तपदत्वस्य सत्वेऽपि चित्तद्रवीभावाभावान्न तु माधुर्यमपि तु ओज एव तेनैव साधूक्तं— 'आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्। करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितमिति।

इदमप्यत्रावधेयं यद्रसो नाम काव्यार्थसम्भेदादात्मानन्दसमुद्भव: स्वाद:। स च चित्तस्य द्रुतिविस्तारविकासभेदात्त्रिदशात्मक: ! तत्र द्रुतिर्नाम गलितत्वमिव= काठिन्यादित्यागेन हृदयस्यार्द्रप्रायत्वमेव। सा च शृङ्गारकरुणशान्तजन्या। विस्तारश्च काठिन्यात्मिका दीप्तिरेव। स तु वीरबीभत्सरौद्रेषु। विकास उत्फुल्लता। स च हास्याद्भुतभयानकेषु। केचित्तु रसचर्बणजन्याश्चतस्त्रोऽवस्था मन्यन्ते विकासविस्तारक्षोभावक्षेपभेदात्।। ताश्च क्रमेण शृङ्गारहास्ययो: वीराद्भुतयो: बीभत्सभयानकयो: परिणामरूपा इति। ये खलु गुणान् रसधर्मत्वेन स्वीकुर्वन्ति तेषां मते तिस्त्र एवावस्थास्त्रय एव गुणाश्च माधुर्यौज:प्रसादा:। ये च खलु गुणान् शब्दार्थमात्राश्रितानामनन्ति तेषां मते ते दशसङ्ख्याका: केषाञ्चिन्मते तु चतुर्विंशतिरपि। गुणानां चित्तवृत्तिविशेषसापेक्षत्वात्तेषां रसधर्मत्वमकुण्ठितमेव शब्दार्थयोस्तु तद्व्यव्यञ्जकवर्णवत्त्वेन तद्वत्त्वमुपचर्यते। इति।।७।।

इस प्रकार अङ्गी और उसमें आश्रित गुण तथा अङ्ग एवं उसमें आश्रित अलङ्कार होने का निर्देश करने के बाद गुणों का रस में आश्रित होने की बात सिद्ध करने के लिए उपक्रम करते हैं—

और ऐसा भी कि—

''शृङ्गार ही परम आनन्ददायक रस होने के कारण मधुर होता है और शृङ्गार रसमय शब्दार्थ का आश्रय लेकर माधुर्य गुण अवस्थित होता है।''

कारिका के आश्रय का विस्तार करते हैं—

अन्य रसों की अपेक्षा शृङ्गार ही अधिक मधुर होता है क्योंकि वही आनन्द का कारण होता है। शब्द एवं अर्थ उस मधुर शृङ्गार रस के प्रकाशक होने के कारण काव्य का वह माधुर्यस्वरूप का गुण होता है। (माधुर्य का लक्षण है चित्त का द्रवीभाव होना और जो लोग सुश्रव्यत्व उसकी स्थिति मानते हैं उनका मत ठीक नहीं क्योंकि) श्रव्यत्व तो ओज में भी साधारण है अर्थात् सुश्रव्यत्व ओज में भी पाया जाता है।

माधुर्य का स्वरूप ही विशेष आनन्द है और वह शृङ्गार रस में ही होता है। श्रव्यत्व आदि में नहीं जैसा कि कहा जाता है। वस्तुत: गुण इसमें ही आश्रित होता है

और इस रस के व्यञ्जक वर्णों के रहने से शब्दार्थ में उसकी स्थिति केवल उपचार से मानी गई है। गुण रस के नित्य धर्म है क्योंकि वे ही रस के आस्वाद में कारण होते हैं। रस की चर्वणा में सहृदय के चित्त की तीन अवस्थाएं होती है। द्रवीभाव, विस्तार वा विकास। द्रवीभाव का अर्थ है कठोरता को छोड़कर पिघले हुए से होना। यह शृङ्गार; करुण एवं शान्त रसों में होता है। विस्तार का अर्थ है तुनक जाना और यह वीर, वीभत्स एवं रौद्र रसों में पाया जाता है। तथा विकास का अर्थ है अपने आकार में फैलना। यह हास्य, अद्‌भुत एवं भयानक रसों में होता है।। ७।।

कारिका— शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः।।८।।

ध्वन्या०— विप्रलम्भशृङ्गारकरुणयोस्तु माधुर्यमेव प्रकर्षवत्। सहृदय-हृदयावर्जनातिशयनिमित्तत्वादिति।

लीला— इत्थं माधुर्यं सल्लक्षणं शृङ्गाररसधर्मत्वेन प्रतिपाद्य पुनस्तस्य लक्ष्यं निर्दिशति शृङ्गार इत्यादिना— माधुर्य विप्रलम्भाख्ये शृङ्गारे करुणे च प्रकर्षवत् भवति यतः तत्र मनः अधिकं आर्द्रतां याति इति पदव्यवस्था।

माधुर्यं= चित्तद्रवीभावमयाह्लादरूपो गुणः, विप्रलम्भाख्ये= 'विप्रलम्भस्तु विश्लेषो रूढविश्रम्भयोर्द्विधा।मानप्रवासभेदेन' इति लक्षिते, शृङ्गारे= रतिस्थायि-भावात्मके रसे, करुणे= शोकस्थायिभावात्मके रसे च, प्रकर्षवत्= उत्तरोत्तरोत्क-र्षयुक्तं, भवति। प्रथमं तु माधुर्यं नाम शृङ्गारस्यैव गुणः तत्रापि सम्भोगशृङ्गारापेक्षया विप्रलम्भशृङ्गारो मधुरतरः। तस्मादपि मधुरतमः करुण इति। शब्दार्थयोस्त-दभिव्यञ्जनकौशलञ्च क्रमेण मधुरं मधुरतरं मधुरतमम्। तत्र तथाभवने हेतुमाह-यत इत्यादिना। यतः= यस्माद्धेतोः, तत्र= विप्रलम्भशृङ्गारकरुणयोः, हेतुमाह- चित्तं, अधिकं= पूर्वापेक्षया अत्यन्तमेव, आर्द्रतां= द्रवीभावत्वं, याति= प्राप्नोति इति।

कारिकां विवृणोति वृत्तिकृद् विप्रलम्भेत्यादिना= विप्रलम्भशृङ्गारकरुणयोः= पुनर्लभ्ये वियोगे पूर्वः पुनरलभ्ये त्वपर इति लक्षितयोर्द्वयोः तु= इति व्यवच्छेदे, पूर्वापेक्षया, माधुर्यं= मधुरता, प्रकर्षवत्= उत्तरोत्तरमुत्कृष्टतरं, एव= इति अवधारणे, तत्र हेतुश्च सहृदयहृदयावर्जनातिशयनिमित्तत्वात्= सहृदयानां रसिकानां यद् हृदयं चित्तं तस्य आवर्जनमाकर्षणं तन्निमित्तमतिशयः औत्कर्ष्यं तस्य निमित्तत्वात् कारणत्वात् उत्तरोत्तरं रसिकचित्ताकर्षणक्षमत्वात्, इति। मम्मटाद्याः परवर्तिनस्तु शान्तेऽपि माधुर्यस्य स्थितिमिवमन्यन्ते चित्तवृत्तिसाम्यात्। विषयवैरस्यं हि निर्वेदः। स च चित्तस्य स्वरूपात्मविश्रामहेतुः प्रतिबन्धकविषयोपरागोच्छेदकत्वात्। तस्य च करुणादित्रिष्वेव स्थितिरिति तत्र युक्तिः। किन्तु तत्र द्रुतितारतम्ये सम्भोगशृङ्गारकरुणविप्रलम्भशृङ्गारशान्तेषु क्रमेणोत्तरोत्तरौत्कर्ष्यं मतम्। यतः सम्भोगे विषयमात्रावलम्बनेन निर्वेदानुपयोगाद्द्रुतिरल्पैव नास्मिन्नश्रुपातलेशोऽपि। एवं

करुणे सङ्गमाशानिवृत्तौ प्रियनाशे द्रुतेरास्थेति तत्प्रतिबन्धेनात्मावलम्बनं लघीय इति नात्यन्तिका द्रु ति:। विप्रलम्भे तु पुनर्जागरूकायां सङ्गमप्रत्याशायां प्रयाला-भेष्वास्था लघीयसी तु प्रतिबन्धकलाघवेन आत्मसुखावलम्बनमलघु इति करुणा-दिह अतिरिच्यते इति शान्ते तु सर्वात्मना विषयविनिवृत्तौ निर्वेद: स्थिर एवेति स्थायित्वेन निर्भर— मात्मसुखावलम्बनमिति अत्र सर्वातिशायिनी द्रुतिरिति। अत्र आर्द्रता नाम चित्तस्य शृङ्गारादिचर्वणाजन्य: काठिन्यादिपरित्याग एव। सर्वत्र शब्दार्थयोर्गुणवृत्तिस्तु गुणवृत्यैव।। ८।।

इस प्रकार शृङ्गार रस के धर्म के रूप में माधुर्य का लक्षण सहित प्रतिपादन करने के बाद अब उसके प्रमुख लक्ष्य का भी निर्देश करते हैं—

यह माधुर्य विप्रलम्भ शृङ्गार एवं करुण रस में अधिक उत्कर्ष वाला होता है क्योंकि वहाँ मन और अधिक आर्द्र होता जाता है।

वृत्तिकार कारिका के आशय का स्पष्टीकरण करते हैं—

विप्रलम्भ शृङ्गार एवं करुण रस में माधुर्य और अधिक उत्कर्षवाला होता है क्योंकि वहाँ यह सहृदयों के हृदय को अधिकाधिक आकर्षित करने में निमित्त होता है।

पहली बात तो यह है कि शृङ्गार रस मधुर होता है उसमें भी सम्भोग शृङ्गार की अपेक्षा विप्रलम्भ शृङ्गार ज्यादा ही मधुर होता है और उससे भी मधुर होता है करुण रस। इस प्रकार तीनों में चित्त के द्रवीभाव की मात्रा उत्तरोत्तर बढ़ती है। उसमें फिर मिलन हो पाने वाला वियोग विप्रलम्भ शृङ्गार होता है और फिर मिलन हो पाने की सम्भावना न होने पर करुण होता है।

मम्मट आदि शान्त रस में भी माधुर्य की स्थिति मानते हैं और माधुर्य के उत्कर्ष का क्रम भी सम्भोग शृङ्गार करुण; विप्रलम्भशृङ्गार एवं शान्त मानते हैं। सम्भोग शृङ्गार में विषय के अवलम्बन से निर्वेद आदि का कोई उपयोग नहीं होगा। अत: द्रुति की मात्रा कम होती है। इससे ज्यादा करुण रस में होती है क्योंकि वहाँ पुनर्मिलन की आशा न होने से निर्वेद अश्रुपात आदि ज्यादे ही होते है। लेकिन वहाँ भी मिलन की आशा न होने से आत्मा निराश हो जाती है अत: उतनी द्रुति नहीं हो पाती। विप्रलम्भ शृङ्गार में फिर मिलन होने की पूरी आशा होने से आत्मा का अवलम्बन होता है और द्रुति की मात्रा अधिक होती है। सब से ज्यादा द्रुति शान्त रस में होती है। वहाँ पूरे विषय से निवृत्त हो जाने के कारण सदा परमानन्द से द्रुति ही रहती है।। ८।।

कारिका— रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिन:।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्।।९।।

ध्वन्या०— रौद्रादयो हि रसा: परां दीप्तिमुज्ज्वलतां जनयन्तीति लक्षणया त एव दीप्तिरित्युच्यते।

लीला— इत्थं माधुर्यगुणं विवेच्य सम्प्रति तत्प्रसङ्गादोजोगुणस्याऽपि विषयं

दर्शयति रौद्रादय इत्यादिना— काव्यवर्तिनः रौद्रादयः रसाः दीप्त्या लक्ष्यन्ते ओजः तद्व्यक्तिहेतू शब्दार्थौ आश्रित्य व्यवस्थितम् इति पदव्यवस्था।

काव्यवर्तिनः= काव्यगताः, रौद्रादयः= रौद्रः क्रोधस्थायिभवात्मको रस आदिपदात्समानधर्मितया उत्साहस्थायिभावस्य वीरस्य घृणास्थायिभावस्य वीभत्सस्य च ग्रहणम्, रौद्रवीरवीभत्साः, रसाः दीप्त्या= ओजसा चेतोविस्फारणलक्षणेन, लक्ष्यन्ते= प्रतीयन्ते, तत्र ओजः= प्रतिपत्तुर्हृदये विकासविस्तारप्रज्वलनस्वभावो गुणः, तद्व्यक्तिहेतू= तेषां रौद्रवीरवीभत्सानां व्यक्तिः प्रतीतिस्तत्र हेतू कारणभूतौ, शब्दार्थौ= वाचकवाच्यौ, आश्रित्य= अवलम्ब्य, ओजः= दीप्त्यात्मको गुणः, व्यवस्थितं= विशिष्यावस्थितमिति। कारिकाशशं विशदयति वृत्तिकृत् रौद्रादय इत्यादिना—रौद्रादयः—रौद्रप्रभृतयो रौद्रवीरबीभत्साख्याः रसाः= काव्यरसाः, परां= अत्युत्कृष्टां, दीप्तिं= उज्ज्वलतां= प्रकाशमयतां, जनयन्ति= समुत्पादयन्ति, इति= हेतोः, लक्षणया= कारणे कार्योपचारेण, त एव= रौद्रादय एव, दीप्तिः= ओजः, भवन्ति= इति= इत्थं, उच्यते= कथ्यते इति।

अत्र कारिकायां वृत्तिभागे च प्रयुक्तेन रौद्रादयः' इति पदेन रौद्रवीराद्भुतानां ग्रहणमिति लोचने उक्तम्। अत्र अद्भुतपदेन वीरविभावप्रभवस्यैवाद्भुतस्य ग्रहणे न काचिच्छङ्कोदेतीति टिप्पणीकारमतम्। मम्मटादयस्तु प्रकरणेऽस्मिन् बीभत्समेव गृह्णन्ति। एवमेव बालप्रियाकारोऽपि मन्यते। अतोऽत्रास्माभिरपि तत्र बीभत्सस्यैव ग्रहणं कृतं तत्र—तत्र चित्तवृत्तिविशेषसाम्याद्ग्रन्थानुरोधाच्च।

काव्यगता रौद्रादिरसा दीप्तिरिति व्यपदिश्यन्ते। तद्दीप्त्यभिव्यक्तिनिमित्तभूतौ शब्दार्थावाश्रित्य ओजो व्यवस्थितं भवति दीप्तिः प्रतिपत्तुर्हृदये विकासविस्तार-प्रोज्ज्वलनस्वभावा। सैव मुख्यतया ओजःशब्दवाच्या। रौद्रादिरसास्तां प्रजनयन्ति। तेन रौद्रादिरसास्तदुत्पत्तौ निमित्तकारणानि। तदुत्पन्नयास्वादरूपकार्यदीप्त्या रौद्रादयो रसान्तरात् पृथक् प्रतीयन्ते। तेन रौद्रादयः कारणानि ओजश्च तेषां कार्यम्। कारणे कार्यस्योपचारात् रौद्रादयो रसा अपि ओजःशब्दव्यपदेश्या भवन्ति। किञ्च भिन्नयोर्द्वयोः सादृश्याधिक्याद्भेदाप्रतीतिरेवोपचारः। तेन ओजस्विकाव्य-मित्यादौ स्थितमोजःपदं लक्षणया रौद्राद्यर्थकम्। लक्षणयेति लक्षितलक्षणया। सा च लक्षितार्थेन लक्षणा वा वाक्यार्थस्य परस्परासम्बन्धो वा। दीप्तिरित्युच्यते इत्यत्र स एव दीप्तिर्भवति इत्युच्यते इति।अत्र मम्मटादयस्त्वाहुः—

दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः।

तत्र चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः। दीप्तिर्वैषविषयासङ्गेन द्रुतिविरोधी कश्चन् धर्मः। सैव विस्तृतिः। स्निग्धस्यापि सामाजिकचित्तस्य द्वेष्यात्मविषय-विशेषसम्पर्केण उष्णता। यथा सूर्यकान्तस्य सूर्यरश्मिसम्बन्धेन। एतावत्पर्यन्तं तु उभयत्र समानमेव। तस्य प्रकर्षताविषये तु तेषां मतं लोचनकाराद्भिन्नमेव।

मम्मटानुसारेण वीरबीभत्सरौद्रेषु तस्याधिक्यं क्रमेण। वीरे तु केवलं जिगीषा एव भवति तत्र वैरिवशीकरणमात्रस्योद्देश्यत्वात्। तेन तत्र दीप्ते सामान्यत एव स्थिति:। बीभत्से जुगुप्सिते विषये ममतानास्पदत्वेन तितिक्षैव न तु जिघांसा। रौद्रे तु अपकारिणो वधावधविषय इति जिघांसैव न तु जिगीषा न च तितिक्षा इति दीप्तेराधिक्यम्। तेन दीप्ते: प्रकर्षो वीराद्बीभत्से ततोऽपि रौद्रे इति।'

इस प्रकार माधुर्य गुण का प्रतिपादन कर अब उसके प्रसङ्ग में ओजगुण का भी विवेचन करते हैं।

'काव्य में रहने वाले रौद्र इत्यादि रस दीप्ति के द्वारा लक्षित होते हैं। उस दीप्ति को व्यक्त करने में जो शब्द और अर्थ कारण होते हैं उनका ही आश्रय लेकर ओजगुण व्यवस्थित होता है।

वृत्तिकार कारिका के आशय का विवेचन करते हैं—

रौद्र आदि रस परम् दीप्ति अर्थात् उज्ज्वलता को उत्पन्न करते हैं। अत: लक्षणालक्षित लक्षणा—से रौद्र आदि रस दीप्ति होते हैं-- ऐसा कहा जाता है।

यहाँ 'रौद्र आदि' में आदि शब्द से वीर एवं अद्भुत का ग्रहण होता है। ऐसा लोचनकार का मत है। लेकिन मम्मट आदि विद्वान् उसमें वीर और बीभत्स का समावेश मानते हैं। कुछ तो अद्भुत को वीर रस के ही विभाव में उत्पन्न अद्भुत का ग्रहण मान कर चलते हैं। यहाँ हम चित्तवृत्ति की समानता को ध्यान में रखकर आदि शब्द से वीर और बीभत्स को ही मानकर चले हैं। बालप्रियाकार भी ऐसा ही अभीष्ट मानते हैं। दीप्ति हृदय में विकास, विस्तार एवं प्रज्ज्वलन स्वभाव वाली होती है। उसको ही मुख्य रूप से ओज कहा गया है। रौद्र आदि रस दीप्ति के आस्वादमय होते हैं। उसी कार्य रूप दीप्ति से ये रस दूसरे रसों से भिन्न लक्षित होते हैं। अत: कारण में कार्य के उपचार से उन रसों को ओज कहा गया है।

**ध्वन्या०— तत्प्रकाशनपर: शब्दो दीर्घसमासरचनालङ्कृतं वाक्यम्।**

**यथा—**

**चञ्चद्भुजभ्रमितचण्डगदाभिघात—**
**सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।**
**स्त्यानावनद्धघनशोणितशोणपाणि—**
**रुत्तंसयिष्यति कचांस्तव देवि भीम:।।**

लीला— 'तद्व्यक्तिहेतू शब्दार्थौ' इति यदुक्तं तत्र तद्व्यञ्जकपरं शब्दमुपदिशति तदित्यादिना—तत्प्रकाशनपर:= तस्या: दीप्ते: प्रकाशनमभिव्यक्तिस्तन्निमित्तं परस्तत्पर:, शब्द:= अर्थशरीरं तु, दीर्घसमासरचनालङ्कृतं= दीर्घसमासा अनेकपदानामेकपदीभावरूपा या रचना निर्मितिस्तयाऽलङ्कृतं= शोभितं, वाक्यं= पदसमूह, एवेति। यथा= इति निदर्शने।

उदाहरति चञ्चद्भुजेत्यादि— हे देवि ! चञ्चद्भुजभ्रमितचण्डगदाभिघा—

तसञ्चूर्णितोरूयुगलस्य सुयोधनस्य स्त्यानावनद्धघनशोणितशोणपाणिः भीमः तव कचान् उत्तंसयिष्यति इति पदव्यवस्था।

हे देवि ! द्रुपदात्मजे ! चञ्चदित्यादि= चञ्चन् स्फुरन् यो भुजो बाहुस्तेन भ्रमिता घूर्णिता या चण्डा दारुणा गदाऽस्त्रविशेषस्तस्याः य अभिघातः प्रहारस्तेन सञ्चूर्णितं त्रोटितमूर्वोजंघयोर्युगलं द्वन्द्वं यस्य स तस्य, सुयोधनस्य= स्वल्पा-यासवध्यस्य तस्य दुर्योधनस्य, स्त्यानेत्यादि= स्त्यानेन आश्यानतया अवनद्धं संसक्तं घनं गाढं यत् शोणितं रुधिरं तेन शोणौ रक्तौ पाणी करौ यस्य सः, तादृशः, भीमः= भीमसेनः, तव= भवत्याः, कचान्= केशान्, उत्तंसयिष्यतिः= संस्करिष्यतीति। वृत्तं वसन्ततिलका तभजा जगौ गः इति। अत्र भीम इत्यत्र शत्रुभीषण इत्यर्थान्तरसङ्क्रमितवाच्यध्वनिसङ्कीर्ण– देवीविरुद्धकेशकर्षणजंघाप्र-दर्शनादिविविधापराधस्मरणोद्दीपितक्रोध– प्रकर्षरौद्ररसध्वनिस्तद्व्यञ्जकत्वेन दीर्घ-समासादिविशिष्टवाक्यमिति। समासेन च सन्ततवेगगहनस्वभावात् तावत्येव मध्ये विश्रान्तिमलभमाना चूर्णितोरुद्वयसुयोधनानादरणपर्यन्ता प्रतीतिरेकत्वेन भवतीत्यौद्धत्यस्य परं परिपोषिकेति लोचने।

जो 'उसको व्यक्त करने में जो शब्द और अर्थ कारण होते हैं' कहा गया था उसके अभिव्ज्जक शब्द का निर्देश करते हैं–

उस दीप्त को प्रकाशित करने वाला शब्द ऐसा वाक्य होता है जिसमें रचना दीर्घ समास से अलंकृत हो। जैसे– हे देवी ! चञ्चद्भुजभ्रमितचण्डगदाभिघात-सञ्चूर्णितोरुयुगल अर्थात् फड़कती हुई भुजाओं द्वारा घुमाई गई प्रचण्ड गदा के प्रहार से टूटे हुए दोनों जाँघ जिसके ऐसे दुर्योधन के स्त्यानावबद्धधनशोणिशोणिपाणी अर्थात् चिक्कण एव चिपके हुए गाढ़े रक्त से लाल बने हैं दोनों हाथ जिसका ऐसा भीम तुम्हारे इन खुले बालों को सँवारेगा।

यहाँ चञ्चद्भुज......में नौ शब्द एवं स्त्याना.......में छह शब्द समास के द्वारा एक पद में जोड दिए गए हैं और उन शब्दों के द्वारा देवी के ऊपर किए गए अनेक अपराध के स्मरण से उद्दीपित क्रोध का परिपोषस्वरूप रौद्ररस की ध्वनि आक्षिप्त है।

ध्वन्या०– तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनः प्रसन्नवाच-काभिधेयः।

यथा–

यो यः शस्त्रं विभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम्
यो यः पाञ्चालगोत्रे शिशुरधिकवयाः गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्।।

इत्यादौ द्वयोरोजस्त्वम्।

लीला— इत्थं दीप्त्यभिव्यक्तिहेतुभूतं शब्दं सोदाहरणं व्याख्याय सम्प्रति तथा–भूतमर्थमपि निर्दिशति तदित्यादिना— तत्प्रकाशनपर:= तस्या: दीप्ते: प्रकाशनमभिव्यक्तिस्तन्निमितं तत्पर:, अर्थ:= वाच्य: अनुपेक्षितदीर्घसमासरचन:= न अपेक्षिता आश्रिता दीर्घसमासा समासबहुला रचना निर्मिति: शब्दयोजना येन तादृश:—अल्पसमस्तपद:, प्रसन्नवाचकाभिधेय:= प्रसन्नवाचक: झगित्यर्थस–मर्पक: अभिधेय: शब्दो यस्य स तादृशो भवति इति। तादृशश्चार्थश्च स्वल्पसम–स्तझगित्यर्थसमर्पकशब्दाभिहितो भवतीत्याशय:। यथा उदाहरणं प्रस्तौति यो य: इत्यादि—पाण्डवीनां चमूनां स्वभुजगुरुमद: य: य: शस्त्रं विभर्ति पाञ्चालगोत्रे य: य: शिशु: अधिकवया: गर्भशय्यां गत: वा य: य: तत्कर्मसाक्षी मयि रणे चरति य: च य: च प्रतीप: तस्य तस्य स्वयं जगतां अन्तकस्य अपि अहं क्रोधान्ध: अन्तक: अस्मि इति पदव्यवस्था।

पाण्डवीनां= पाण्डवसम्बन्धिनीनां, चमूनां= सेनानां, स्वभुजगुरुमद:= स्वभुजयो: निजबाह्वो: गुरुर्महान् मदोऽभिमानो यस्य स: तादृश:, य: य: जन:—व्यक्तिनैरपेक्ष्येण य: कश्चन् स्यात्, शस्त्रं= आयुधं, विभर्ति= धारयति, तथा पाञ्चालगोत्रे= द्रुपदकुले, य: य: शिशु:= अर्भक:, अधिकवया:= प्रौढ:, गर्भशय्यां गत:= गर्भस्था, वा इति पक्षान्तरे— वयोनिरपेक्ष्यं य: कोऽपि स्यात्, य:, य:, तत्कर्मसाक्षी= तस्य तादृशस्य द्रोणहत्यारूपस्य कर्मण: कृत्यस्य साक्षी सहायको द्रष्टा वा, मयि= अश्वत्थाम्नि, रणे= युद्धे, चरति= भ्रमति सति—युद्धपरायणे सति, यश्च, यश्च, प्रतीप:= प्रतिकूल:, भवति तस्य, तस्य, जगतां= भुवनानां, अन्तकस्य= सहर्तु:, अपि, अहं= अश्वत्थामा, क्रोधान्ध:= क्रोधेन प्रतिशोधनिमित्त–ककोपेन अन्ध: उन्मत्त, अन्तक:= यम:, अस्मि इति। वृत्तं स्रग्धरा तल्लक्षणं तु 'म्रभ्नैर्यानां त्रयेण मरभनययया। पितृबधाभिक्रुद्धस्याश्वथाम्नो रणघोषणेयम्। अत्र उद्धतस्याप्यर्थस्य क्रोधोत्कर्षाभिव्यञ्जकस्य स्वल्पसमस्तपदाभिधानभवेऽपि ओजोगुणव्यञ्जकत्वमिति। इत्थं पृथग्भूतैरेव विक्रमाद्विमृश्यमानैरर्थै: पदात्पदं क्रोध: परां धारामाश्रित इत्यसमस्ततयैव दीप्तिबन्धनमिति।

इत्थमोजोगुणसम्बद्धमुदाहरणद्वयं प्रस्तुत्य तत्र वक्तव्यं निर्दिशति इत्यादा–वित्यादिना—इत्यादौ= 'चञ्चद्भुजभ्रमित' इति 'यो य: शस्त्रं विभर्ति' इति च पद्ययो:, द्वयो: शब्दस्य दीर्घसमासरचनालङ्कृतस्थवाक्यस्थस्य अर्थस्य च स्वल्पसमासरचनस्य, च ओजस्त्वं= शब्दस्य दीर्घसमासगतत्वेन अर्थस्य उद्धता–र्थत्वेन च ओजोगुणभाव इति। समासदैर्घ्यादर्थौद्धत्याच्चात्र ओजोगुणभाव इति।।९।।

इस प्रकार ओजो गुण के प्रकाशक शब्द के लक्षण के साथ उदाहरण प्रस्तुत कर अब उसको प्रकाशित कर पाने वाले अर्थ का लक्षण करते हैं—

उस ओजो गुण को प्रकाशित करने वला अर्थजो है वह लम्बे—लम्बे समास की रचना की अपेक्षा किए बिना ही शीघ्र ही अर्थ को समझा पाने वाले शब्दों से अभिहित होता है। वैसे अर्थ का उदाहरण प्रस्तुत करते हैं—

जैसे—

पाण्डवों की सेना में अपने भुजबल के अभिमान से मत्त होकर जो—जो शस्त्र धारण करता है, पाञ्चाल वंश में जो भी बालक हो, युवा हो या गर्भस्थ हो, चाहे कोई बूढ़ा भी हो जो कोई उस द्रोणबध रूप क्रूर कर्म के साक्षी हैं, युद्ध में मेरे प्रवेश करने पर जो कोई विरुद्ध होकर लड़ता हो, चाहे वह विश्व का ही संहारक क्यों न हो, क्रोध से अन्ध हुआ मैं उस संहारक का भी संहारक हूँ।

कारिका— समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति।
स प्रसादो गुणो ज्ञेय: सर्वसाधारणक्रिय:।। १० ।।

ध्वन्या०— प्रसादस्तु स्वच्छता शब्दार्थयो:। स च सर्वरससाधारणो गुण: सर्वरचनासाधारणश्च व्यङ्ग्यार्थापेक्षयैव मुख्यतया व्यवस्थितो मन्तव्य:।

लीला— एवमोजोगुणस्य स्वरूपमवस्थानञ्च निरूप्य सम्प्रति प्रसङ्गात्प्रसादगुणं लक्षयति कारिकाकार: समर्पकत्वमित्यादिना— काव्यस्य सर्वरसान् प्रति यत् समर्पकत्वं स: तु सर्वसाधारणक्रिय: प्रसाद: गुण: ज्ञेय इति पदव्यवस्था।

काव्यस्य= कविनिबन्धस्य, सर्वरसान्= सर्वाश्च निखिला एव ते रसा: शृङ्गारादयस्तान् प्रति= निमित्त, यत्= यत्स्वरूपं, समर्पकत्वं= झटितिरसादिव्यङ्ग्यार्पकत्वं, स:= तादृश:, तु= इति व्यवच्छेदे, सर्वसाधारणक्रिय:= निखिलानुकूलव्यापार:, प्रसाद:= तदाख्य:, गुण:= रसधर्म, ज्ञेय= अवगन्तव्य इति। प्रसादो नाम सर्वरसानां गुण:। उपचारात्तथाविधे व्यङ्ग्येऽर्थे यच्छब्दार्थयो: समर्पकत्वं तदपि प्रसाद एव।

कारिकाशयं विवृणोति वृत्तिकार: प्रसाद इत्यादिना— प्रसाद:= प्रसादो नाम, तु= इति व्यवच्छेदे, शब्दार्थयो:= काव्यशरीरभूतस्य शब्दस्यार्थस्य च, स्वच्छता= शब्दे झगित्यर्थोपस्थापकता अर्थे च झगित्यवभासकता, स:= तादृश: प्रसादाख्य:, च, सर्वरससाधारण:= सर्वेषु निखिलेष्वेव रसेषु शृङ्गारादिषु साधारण: सामान्यरूपेण वर्तमान:, सर्वरचनासाधारण:= सर्वास्वेव समस्तासु रचनासु निर्मितिषु शब्दगतासु अर्थगतासु समस्तास्वसमस्तासु वा साधारण: सामान्य:, च इत्यवधारणे, व्यङ्ग्यार्थापेक्षया= व्यङ्ग्य: प्रतीयमानो योऽर्थो रसादि: तस्यापेक्षया, एव= इत्यवधारणे न तु वाच्यार्थाश्रयत्वेन, मुख्यतया= प्राधान्येन—शब्दस्य स्ववाच्यार्थत्वेन अर्थस्य व्यङ्ग्यप्रतिसमर्पकत्वं, तथाविधेन, मन्तव्य:= बोध्य इति।

काव्यस्य= शब्दार्थयो:, सर्वविधरसान् प्रति यत् समर्पकत्वं सहृदयहृदये

सर्वरससमर्पकं झटिति यदर्पणं व्यापकरूपं कर्तृत्वं, अर्थात् यथा शुष्ककाष्ठमग्निः यथा वा अकलुषं स्वच्छं वस्त्रादि उदकं झटिति व्याप्नोति तथैव सहृदयहृदये तदानुकूल्येन झटिति स्वात्मावेशेन व्यापकत्वं सः प्रसादाख्यो गुणः। अत्रेदमवधेयं यदा वीररौद्रादो चित्तं व्याप्नोति तदा शुष्केन्धनादिवत्, यदा शृङ्गारकरुणादौ तदा स्वच्छजलवदिति। स च सर्वसाधारणक्रियः= सर्वेष्वेव रसेषु सामान्य-व्यापारवान्= सर्व रससाधारण एव गुणः, स एव सर्वरससाधारणो गुणो नान्यो भवतीति। प्रसादस्तु सर्वरसानामेव गुणः, उपचाराद्धि शब्दार्थयोर्यत्तथाविधर-सादिरूपव्यङ्ग्यार्थे समर्पकत्वं तदपि प्रसाद एव। तस्य च रसेषु मङ्क्षु प्रतीयमानत्वं रसेषु मङ्क्षु प्रत्यायकत्वम्। सामान्यतस्तु शब्दस्य स्ववाच्यार्थकत्वमर्थस्य च व्यङ्ग्यं प्रति समर्पकत्वं च साधारणो धर्मः अतस्तयो स्तत्तदर्पकत्वं न गुणः किन्तु रसस्यैव स्वात्मावेशेन झगिति सहृदयहृदयव्यापकत्वमतो मुख्यतया रसनिष्ठ एव प्रसादाख्यो गुणः, उपचारात्तु स शब्दार्थयोरिति बालप्रियायां स्पष्टम्। सामान्यतस्तु प्रसादोऽपि रसगत एव गुणः। किन्तु स शब्दार्थयोः रसादिरूपव्य-ङ्ग्यार्थमपेक्ष्यैव व्यवस्थितं इत्यस्याशयः। वस्तुतस्तु गुणाः प्रतिपत्तुश्चित्तस्य द्रुतिदीप्तिविकासलक्षणाः ततश्च त एवास्वादरूपाः मुख्यतयाऽऽस्वाद्ये रसे उपच-रितास्ततस्तद्रसव्यञ्जकयोः शब्दार्थयोः तद्रूपे काव्ये चापि उपचरिता इति दीपशिखायां स्पष्टम्। यत्तु दीधितिकारेणोक्तं 'अत एवायं व्यङ्ग्यानां रसानाम-पेक्षयाऽपि प्राधान्येन व्यवस्थितो बोध्यः' 'गुणानां रसापेक्षयाऽपि मुख्यत्वमिति भट्टभामहमतेनेदमुच्यते। अर्वाञ्चस्तु............इत्यादि तच्चिन्त्यं प्रतिभाति। यतः स च व्यङ्ग्यापेक्षयैव मुख्यतया व्यवस्थितो मन्तव्यः इत्यस्य न तथार्थः प्रतीयते यथार्थतः।

इत्थं शृङ्गारकरुणयोश्चित्तद्रुतिहेतुत्वान्माधुर्यस्य प्रकृष्टत्वं, रौद्रवीराद्भूतेषु चेतस उद्दीपनादोजःप्रकृष्टत्वं प्रतिपादितम्। एवं हास्ये हासस्थायिभावस्य 'शृङ्गाराद्धि भवेद्धास्यः', इत्युक्तेः शृङ्गाराङ्गतया माधुर्यं प्रकृष्टं तथैवास्य चित्तवि-कासधर्मतया ओजोऽपि प्रकृष्टमिति तत्र द्वयोः साम्यम्। एवमेव शान्ते विभावस्य वैचित्र्यात्कदाचिन्माधुर्यस्य कदाचित्तु ओजसः प्रकृष्टत्वम्। भयानके भयचित्तवृत्ति-स्वभावत्वेऽपि विभावस्य दीप्ततया ओजसः प्रकृष्टत्वं माधुर्यस्य स्वल्पत्वमेव। एवमेव बीभत्सेऽपि ओजसः प्रकर्षो माधुर्यस्य स्वल्पतेति।

उक्ता गुणाः। प्रकरणेऽस्मिन् भामहो यथाऽऽह आद्यकाव्यशास्त्राचार्यः—

'माधुर्यमभिवाञ्छन्तः प्रसादञ्च समेधसः।<br>
समासवन्ति भूयांसि न पदानि प्रयुञ्जते।<br>
केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि।<br>
यथा मन्दारकुसुमरेणुपञ्जरितालकाः।।

श्रव्यं नातिसमस्तार्थ काव्यं मधुरमिष्यते।
आविद्धदङ्गतां बालप्रतीतार्थं प्रसादवत्।।' (काव्या० २१—३)
'भाविकत्वमिति प्राहुः प्रबन्धविषयं गुणम्।' (काव्या० ३—५३)

यथाऽऽह काव्यप्रकाशकारः—

आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्।
करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्।।
दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थितिः।
बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च।।
शुष्केन्धनादिवत्स्वच्छजलवत्सहसैव यः।
व्याप्नोत्यन्यत्प्रसादोऽसौ सर्वत्र विहितस्थितिः।।
गुणवृत्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता। (काव्य० ८—३—६)

गुणानां शब्दार्थवृत्तित्वमुपचारादेव शौर्यादीनामिव देहवृत्तित्वम्। इत्थं सामाजिकानां चित्ते नवरसोजन्यास्तिस्रोऽवस्थाः द्रुतिर्विस्तारो विकासश्च। तत्र चित्तस्य द्रवोभावमयत्त्वं द्रुतिः। स च शृङ्गारकरुणशान्तेभ्यः। चित्तस्य उत्तेजितत्वं विस्तारः। स च वीरबीभत्सरौद्रेभ्यः। विकासश्च विकसनम्। स च हास्याद्भुत-भयानकेभ्यः। हास्ये वदनस्याद्भुते नयनयोः बीभत्से अपसरणस्य च विकासः। अत्र यथोत्तरमतिशयः।

यथा च साहित्यदर्पणकारो विश्वनाथः—

चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते।
सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्।। (साहि० ८—२)
ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते।
वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु।। (साहि० ८—४)
चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च।। (साहि०. ८—७)
शब्दास्तद्व्यञ्जना अर्थबोधकाः श्रुतिमात्रतः। (साहि० ८—८)
एषां शब्दगुणत्वञ्च गुणवृत्योच्यते बुधैः। (साहि० ९८—९)

अनेन रसगुणालङ्काराणां स्थितिश्चिन्तिता काव्ये। तत्र रसगुणयोः प्राधान्ये विचारः। गुणानां रसाङ्गत्वं वा रसानां गुणाङ्गत्वमिति विषयः। तत्र काव्यं सरसं गुणसंस्कृतशब्दार्थशरीरत्वात् इत्येकः पक्षः काव्यं सगुणं रसात्मकत्वादित्यपरः।

वस्तुतस्तु रसास्वादप्रभावितचित्तवृत्तेरवस्थाविशेषस्य गुणसंज्ञेति तथा च न खलु काव्यस्य रसानाञ्च अलङ्कार्यालङ्कारभावः किन्तु आत्मशरीरभावः। रसा हि काव्यस्य आत्मत्वेनावस्थिताः। शब्दार्थौ च शरीररूपेपतया। यथा हि आत्माधिष्ठितं शरीरं जीवतीति व्यपदिश्यते तथा रसाधिष्ठितस्य काव्यस्य

जीवद्रूपतया व्यपदेश: क्रियते तस्माद्रसानां काव्यशरीरभूतशब्दार्थविषयतया-त्मत्वेनावस्थानं न त्वलङ्कारे तथा। रसाभिव्यक्तिश्च यथायोगं माधर्यौजोभ्यां तारतम्येनोपवृंहितो योऽसौ प्रसादात्मा गुणस्तेन क्रियते।

उक्तमेव—

रसाद्यधिष्ठितं काव्यं जीवद्रूपतया यत:।
कथ्यते तद्रसादीनां काव्यात्मत्वं व्यवस्थितम्।

तदेवं गुणसंस्कृतशब्दार्थशरीरत्वात्सरसमेव काव्यमिति प्रतिहारेन्दुराज:। तेन गुणा: काव्यात्मभूतस्य रसस्य नियतधर्मा यथाऽऽत्मन: शौर्यादय:। किन्तु तत्रायं भेदो यदात्मा निर्गुणोऽपि आत्मैव भवति किन्तु काव्यं निर्गुणं नैव सम्भवति अनास्वाद्यत्वात्। अनास्वाद्यतयैव तस्य जीवनत्वात्। तेन काव्यं सगुणं रसवत्त्वात्, काव्यं सरसं गुणवत्त्वादिति समुपपन्नमुभयमेवेति।

इस तरह ओजोगुण का सोदाहरण प्रतिपादन करने के बाद अब प्रसङ्ग से प्राप्त प्रसाद गुण का लक्षण बताते हैं—

काव्य का सभी रसों के प्रति जो एक समर्पकत्व गुण होता है वह प्रसाद गुण कहलाता है और वह सभी में सामान्य रूप से व्याप्त होता है।

कारिका के आशय का विस्तार करते हैं—

प्रसाद का अर्थ है शब्द एवं अर्थ की स्वच्छता। वह जो है सभी रसों में साधारण रूप से रहने वाला है और सभी प्रकार की रचनाओं में—समस्त वा असमस्त शब्दप्रधान वा अर्थप्रधान, साधारण वह गुण मुख्य रूप से व्यङ्ग्य अर्थ अर्थात् रसादि की अपेक्षा से ही स्थित होता है।

सभी प्रकार के काव्यों में रह पाने वाला एक ऐसा गुण जिसके चलते काव्य सहृदयों के हृदय से मेल खा पाता है और अपनी आत्मा का सञ्चार सहृदयों के चित्त में कर सकता है। जिस प्रकार सूखी लकड़ी में आग व्याप्त होता है वा साफ कपड़ा साफ पानी में, उसी तरह यह गुण सहृदयों में एक दम आक्रान्त हो जाता है। यह सभी रसों का गुण होता है। उपचार के कारण व्यङ्ग्यार्थ को शीघ्र समर्पित करने वाले शब्द और अर्थ की वैसी विशेषता भी प्रसाद कहलाता है।

इस प्रकार माधुर्य, ओजस् एवं प्रसाद तीनों गुणों की अङ्गिभूत रसादि अर्थ के अङ्ग के रूप में व्याख्या की गई। इससे यह भी सिद्ध किया गया कि अङ्गी और अङ्ग के रूप में रसादि एवं गुण का भेद है और अलङ्कार्य एवं अलङ्कार के रूप मे रसादि एवं अलङ्कार का तथा नित्यधर्म एवं अनित्य धर्म के रूप में गुण एवं अलङ्कार का।

कारिका— श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिता:।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृता:।।११।।

ध्वन्या०— अनित्या दोषाश्च ये श्रुतिदुष्टादय: सूचितास्तेऽपि न वाच्येऽर्थमात्रे न च व्यङ्ग्ये शृङ्गारव्यतिरेकिणि शृङ्गारे वा ध्वनेरनात्मभूते

किं तर्हि ? ध्वन्यात्मन्येव शृङ्गारेऽङ्गितया व्यङ्ग्ये ते हेया इत्युदाहृताः। अन्यथा हि तेषामनित्यदोषतैव न स्यात्।

लीला— एवं गुणं सभेदं निरूप्य सम्प्रति दोषविषयेऽपि स्वमतमुपस्थापयति श्रुतीत्यादिना— श्रुतिदुष्टादयः ये अनित्याः दोषाः दर्शिताः ते ध्वन्यात्मनि एव शृङ्गारे हेयाः इति उदाहृताः इति पदव्यवस्था।

श्रुतिदुष्टादयः= श्रुतिदुष्टार्थदुष्टकल्पनादुष्टश्रुतिकष्टप्रभृतयः, अनित्या= अनियताः क्वांचित्काः ये= यादृशाः, च, दोषाः= दूषयन्ति असौस्वाद्यं करोति काव्यमिति दोषाः— स्याच्चेतो विशता येन सक्षता रमणीयता इति लक्षिताः, दर्शिताः= निर्दिष्टाः, ते= तथाविधाः दोषाः, ध्वन्यात्मनि= ध्वनिप्रधाने, शृङ्गारे= रतिस्थायिभावात्मके रसे, एव= इत्यवधारणे तत्समानधर्मिग्रहणाय तद्विरुद्धत्यागाय च— न तु रौद्रादौ, हेयाः= त्याज्याः, इति= इत्थं, उदाहृताः कथिता इति। ये खलु श्रुतिदुष्टादयो दोषाः काव्यास्वादविघातकत्वात्त्याज्यत्वेन निर्दिष्टास्ते अनित्या एव क्वाचित्कत्वात्। न हि सर्वत्र ते दोषाः। ते तु ध्वनिप्रधाने शृङ्गार एव त्याज्या इत्युक्तस्तत्र तेषामनुपयोगात्। यत्र तु तेषां रसप्रतीतिसाहाय्यं यथा रौद्रादौ तत्र तेनैव दोषा इति तेषामनित्यता।

कारिकार्थं विशदयति वृत्तिकृत् अनित्यां इत्यादिना— ये यादृशाः, श्रुतिदुष्टादयः= श्रुतिदुष्टार्थदुष्टकल्पनादुष्टश्रुतिकष्टप्रभृतयः, दोषाः= काव्यास्वादविघातकाः, अनित्याः= अनियताः क्वाचित्का इति, सूचिताः= न तु विभागेन प्रतिपादिताः, ते= तादृशाः, अपि, न= नैव, वाच्ये= अभिधेये, अर्थमात्रे, न च, शृङ्गारव्यतिरेकिणि= रतिस्थायिभावात्मकभूततदाख्यरसातिरिक्ते, व्यङ्ग्ये= प्रतीयमानार्थे वाक्यार्थभूते, वा= इति पक्षान्तरे, शृङ्गारे अपि, ध्वनेः= ध्वनितत्वस्य, अनात्मभूते अप्राधान्येन स्थिते अपि। श्रुतिदुष्टादयो ये दोषाः कथितास्ते वाच्यमात्रेऽर्थे, शृङ्गारातिरिक्ते वाक्यार्थभूतरसादौ, गुणीभूते शृङ्गारेऽपि न दोषा भवन्ति। यतो दोषत्वं नाम द्रागर्थरसाद्यन्तरक्षीप्रतिबन्धकत्वमेव तत्र तेषां तादृशकर्माभावात्। अस्यायमाशयः— दोषत्वं नाम रसास्वादविघातकत्वमेव। न दोषा जात्यैव दोषाः किन्तु यदा ते काव्यास्वादविघातकास्तदैव ते दोषा भवन्ति। वाच्योऽर्थस्तु कदापि नैवास्वाद्यो भवति। एवमेव गुणीभूतव्यङ्ग्योऽपि तथैवानास्वाद्यो वाच्यार्थस्योपस्कारकत्वात्। तेन तत्र तत्र दोषाणां विषय एव नैवापतति। वाक्यार्थीभूतो रसादिरर्थ एवास्वाद्यो भवति तेन तत्रैव दोषाणां प्रश्नः सम्भवति। किं तर्हि ? यदि तथा कुत्र ते भवन्ति दोषा इत्यपेक्षायामुच्यते ध्वन्यात्मनि एव शृङ्गारे= अङ्गितया वाक्यार्थत्वेन, व्यङ्ग्ये—प्रतीयमानर्थत्वेन स्थिते शृङ्गारे एव ते—तादृशाः श्रुतिदुष्टादयः, हेयाः= त्याज्याः, इति= इत्थं, उदाहृताः= कथिता इति। तथाकथने हेतुमाह अन्यथेत्यादि—अन्यथा= अतथामते, हि= इति अवधारणे,

तेषां= श्रुतिदुष्टादीनां, अनित्यदोषता= अनियतदोषत्वं, एव न स्यात्= नैवं भवेदिति।

श्रुतिदुष्टादयो वाक्यार्थीभूते शृङ्गारे एव दोषा भवन्ति तत्र तेषामनुकूलताभावात्। किन्तु त एव तथाभूते रौद्रे भवन्ति तेषां दीप्तेरुपस्कारकत्वादिति। इत्थं क्वाचित्कतया तेषामनित्यता सिध्यति।

यद्यपि भामहेन नित्यानित्यता दोषाणां नैवोक्ता विषयविभागेन किन्तु श्रुतिदुष्टादीनां भिन्नवृत्तादीनाञ्च पृथकर्निर्देशात् तथा सूचितमित्युक्तम्। ते च कुत्र त्याज्या वा कुत्र ग्राह्या इत्यपि नैव प्रतिपादितम्। तेनैवात्र विभाग उक्तो यत्ते वाक्यार्थभूते शृङ्गारे एव हेया न तु शृङ्गारातिरिक्ते रसाद्यर्थे, वा शृङ्गारे एव गुणीभूतत्वेन स्थिते वाऽपि वाच्यमात्रेऽर्थे। रसापकर्षका वा रसाद्यर्थधीप्रतिबन्धका दोषाः। उक्तमेव: 'स्याच्चेतो विशता येन सक्षता रमणीयता। शब्देऽर्थे च कृतोन्मेषं दोषमुद्बोधयन्ति तम्' इति। ते च द्विविधाः नित्या अनित्याश्च। नित्यास्तु सर्वदैव दोषा भवन्ति अनित्यास्तु प्रकरणानुसारं कुत्रचित्तु दोषा भवन्ति कुत्रचित्तु गुणा अपि कुत्रचित्तु नैव दोषा नैवाऽपि गुणाः। श्रुतिकष्टादयः शृङ्गारसदृशे कोमलप्रकृतिके रसे दोषा भवन्ति किन्तु त एव कठोरस्वभावे रौद्रादौ गुणा अपि। इयञ्च दोषाणां नित्यानित्यता वाक्यार्थभूते रसाद्यर्थ एव भवति वाच्यार्थमात्रे तु अर्थरूपतायाः सर्वत्र समानरूपत्वात् दोषाणां नित्यानित्यव्यवस्था न सम्भवति। तेन च रसोत्कर्षहेतुत्वं गुणत्वं तदपकर्षहेतुत्वं दोषत्वम्। तेन गुणदोषावेव रसस्यैव धर्मौ। रससम्बन्धादेव भक्त्या शब्दार्थयोर्दोषाः। यदि शब्दार्थयोः दोषस्थितिः तदा बीभत्सादौ कष्टत्वादीनि नैव गुणाः भवेयुः हास्ये अश्लीलत्वादीनि। अतो गुणदोषा रसाश्रितावेव।

तत्र वान्तादयोऽसम्पयक्स्मृतिहेतवः श्रुतिदुष्टाः, वाक्यार्थबलादश्लीलार्थावबोधका अर्थदुष्टाः द्वयोः पदयोः कल्पनया कल्पनादुष्टाः यथा 'कुरु रुचिं इत्यत्र रुचिं कुरु' इति क्रमव्यत्यासः। चिङ्कुनभि योन्यन्तर्वर्त्यङ्कुरः। श्रुतिकष्टन्तु तृणेढ़ि, कार्तार्थ्यं इत्यादौ।

वाक्यार्थीभूते शृङ्गारे श्रुतिदुष्टार्थदुष्टकल्पनादुष्टश्रुतिकष्टादीनां दोषत्वं, वीरेऽश्लीलादीनामेव तत्र श्रुतिकष्टस्य ओजोव्यञ्जकत्वेनानुकूल्यात्। सारतः इदमेवावधेयं यद्यद्रसप्रातिकूल्यं तत्तदेव दोषत्वं यद्यदानुकूल्यं तत्तदेव गुणत्वमिति। एतत्सर्वं रसादीनामङ्गित्वे ध्वनित्वमङ्गीकुर्वतामेव मते उपपन्नमित्यस्येह प्रासङ्गित्वम्।।११।।

इस प्रकार अङ्गी एवं अङ्ग के निर्धारण के प्रसङ्ग में रसादि अर्थ अङ्गी के अङ्ग के रूप में गुणों की विवेचना करने के बाद अब प्रसङ्गवश दोष के विषय में भी अपना मत व्यक्त करते हैं–

जो श्रुतिदुष्ट आदि अनित्य दोष बतलाए गए हैं वे ध्वन्यात्मक शृङ्गार में अग्राह्य हैं, ऐसा कहा गया है।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

जो श्रुतिदुष्ट इत्यादि अनित्य दोष माने गए हैं, वे न तो वाच्य अर्थ मात्र में होते हैं, न तो शृङ्गार के अतिरिक्त अन्य रसादि अर्थ में होते हैं। न तो ऐसे शृङ्गार में ही होते हैं जो ध्वनि की आत्मा के रूप में स्थिति न हो। तो फिर कहाँ होता है ? ध्वन्यात्मक शृङ्गार में अर्थात् अङ्गों के रूप में स्थिति व्यङ्ग्य प्रतीयमान शृङ्गार में ही अग्राह्य होता है। ऐसा न होकर सभी जगह दोष ही हो तो उनको अनित्यदोषता ही नहीं बन पाएगी।

दोष के विषय में यह समझ लेना चाहिए कि दोष वही है जो रसास्वादन में बाधक बने वा काव्य की रमणीयता को घटावे और गुण वही है जो रस की उत्कर्षता बढ़ावे या रस को आस्वादयोग्य बनावे। गिनाए गए दोषों में से कई ऐसे हैं जो जहाँ भी रहें दोष के रूप में रहते हैं और कुछ काव्य की रमणींयता पर चोट पहुँचाते हैं। वे नित्य दोष माने जाते हैं। कुछ दोष वैसे भी हैं जो कहीं तो दोष का काम करते हैं और कहीं गुण बन जाते हैं। जैसे श्रुतिकटु शृङ्गार मे दोष होता है क्योंकि शृङ्गार कोमल स्वभाव का होता है लेकिन वही रौद्र आदि रस में जिसकी दीप्ति कठोरता पर होती है गुण बन जाता है क्योंकि उससे दीप्ति का उत्कर्ष बढ़ जाता है। ऐसे दोष अनित्य माने जाते हैं। कुछ तो कहीं दोष बनते हैं, कहीं गुण बनते हैं और कहीं न दोष न तो गुण, कुछ भी नहीं बनते हैं। वस्तुतः दोष भी गुण की तरह रसनिष्ठ होते हैं क्योंकि रसास्वादन में बाधक होने पर ही दोष–दोष माने जाते हैं और उस रस की अभिव्यक्ति से माध्यम होने से उपचार से शब्द एवं अर्थ में भी दोष की स्थिति मानी जाती है।

यह भी समझ लेना चाहिए कि दोष तभी दोष होता है जब काव्यास्वाद में बाधक बने। काव्य में शब्द वा अर्थ आस्वाद्य नहीं होते। अतः उनमें दोष का प्रश्न हीं नहीं आता। उसी तरह रसादि अर्थ के गुणीभूत होने पर भी वह वाक्यार्थ का उपस्कारक होता है न कि आस्वाद्य। अतः उससे भी दोष काम नहीं करता। आस्वाद्य होता है वाक्यार्थीभूत रसादि अर्थ। अतः उसी में ही दोष का प्रश्न आता है।

ध्वन्या०— एवमसंलक्ष्यक्रमद्योत्यो ध्वनेरात्मा प्रदर्शितः सामान्येन।

लीला— प्रकरणमुपसंहरति एवमित्यादिना— एवं= अनेन प्रकारेण, अयं= प्रकरणगतः, असंलक्ष्यक्रमोद्द्योतः= असलक्ष्यः सत्यपि लाघवेनाविभाव्यः क्रमः पौर्वापर्यत्वं तादृशः उद्द्योतः प्रतीयमानता यस्य स तादृशः, ध्वनेः= ध्वनितत्वस्य, आत्मा= स्वरूप, सामान्येन= अविशेषेण, प्रदर्शितः= वर्णित इति। रसादिरूपो वाक्यार्थो वाच्यार्थेन सहैव अवभासतेऽतस्तस्य क्रमोऽलक्ष्यो भवति न तु तस्याभावः

प्रकरण का उपसंहार करते हैं—

इस प्रकार यह असंलक्ष्यक्रमद्योत ध्वनि का स्वरूप सामान्यतः दिखलाया गया।

कारिका— तस्याङ्गानां प्रभेदा ये प्रभेदा: स्वगताश्च ये।
तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने ।।१२।।

ध्वन्या०— अङ्गितया व्यङ्ग्यो रसादिविवक्षितान्यपरवाच्यस्य ध्वनेरेक आत्मा य उक्तस्तस्याङ्गानां वाच्यवाचकानुपातिनामलङ्काराणां ये प्रभेदा निरवधयो ये च स्वगतास्याङ्गिनोऽर्थस्य रसभावतदाभासतत्प्रशमलक्षणा विभावानुभावव्यभिचारिप्रतिपादनसहिता अनन्ता: स्वाश्रयापेक्षया निस्सीमानो विशेषास्तेषामन्योन्य परिकल्पने क्रियमाणे कस्यचिदन्तमस्यापि रसस्य प्रकारा: परिसङ्ख्यातुं न शक्यन्ते किमुत सर्वेषाम्।

लीला— असंलक्ष्यक्रमद्योतस्य सामान्येन प्रदर्शित यदुक्तं तथाकरणे कारणं निर्दिशति तस्याङ्गानामित्यादिना— तस्य अङ्गानां ये प्रभेदा: ये च स्वगता: प्रभेदा: तेषां अन्योन्यसम्बन्धपरिकल्पने आनन्त्यम् इति पदव्यवस्था।

तस्य= वाक्यार्थीभूतरसादिध्वनेरसंलक्ष्यक्रमद्योतस्य, अङ्गानां= अवयवभूतानामलङ्कारादीनां, ये= यादृशा:, प्रभेदा:= विभागा उपमादय:, ये, च, स्वगता:= आत्मसम्बद्धा: एव, प्रभेदा:= विभागा: रसभावादय: स्वरूपभेदाश्च यथा शृङ्गारस्य अयोगसम्भोगविप्रलम्भादय:, वीरस्य दानधर्मदयायुद्धवीरादय:, बीभत्सस्य शुद्धोद्वेगिक्षोभणादय: हास्यस्य स्मितहसितविहसितोपहसितापहसितातिहसितादय: सन्ति, तेषां= आत्मगतागतभेदानां, अन्योन्यसम्बन्धपरिकल्पने= अन्योन्यं मिथ: य: सम्बन्ध: सम्पर्क:= सङ्करसंसृष्टिरूप: तस्य परिकल्पने सम्पादने, आनन्त्यं= अनन्तता येन नैव विशेषकथनसम्भव इति।

कारिकार्थ विशदयति वृत्तिकृद् अङ्गितयेत्यादिना— अङ्गितयाप्रधानवाक्यार्थीरूपेण स्थित:, य: रसादि:= रसभावादि:, व्यङ्ग्य:= प्रतीयमानार्थ:, विवक्षितान्यपरवाच्यस्य= यत्र वाच्यार्थ: स्वयमपि प्रकाश्य व्यङ्ग्यार्थमप्याक्षिपति तद्रूपस्थ्य, ध्वने:= ध्वनितत्वस्य, एक एव, आत्मा= रहस्यं, उक्त:= कथित:, तस्य= तादृशस्य वाक्यार्थीभूतस्य रसादिरूपार्थस्य, अङ्गानां= अवयवरूपेण स्थितानां, वाच्यवाचकानुपातिनां= वाच्योऽर्थो वाचक: शब्दस्तौ अनुपाति अनुगच्छति तच्छील इति तेषां— अभिधेयाभिधानानुगामिनां, अलङ्काराणां= उपमाप्रभृतीनां, ये= यावन्त:, प्रभेदा:= विभागा:, निरवधय:= निस्सीमान:— सामान्यतो वक्तुमपार्या:, तस्य= तादृशस्य, अङ्गिन:= प्रधानभूतस्य, अर्थस्य= वस्तुन:, ये= यावन्त:, स्वगता:= आत्मनिष्ठा:, रसभावतदाभासतत्प्रशमलक्षणा:= रस-भाव-रसाभास-भावाभास-भावोदय- भावशान्ति—भावसन्धि— भावशबलतास्वरूपा:, विभावानुभावव्याभिचारिप्रति- पादनसहिता:, विभावा: आलम्बनोद्दीपनरूपा भावोद्बोधनोद्दीपनव्यापारा: अनुभावा: भावोद्बोधनान्तरवाह्य चेष्टा:

व्यभिचारिणः सञ्चारिभावाः निर्वेदादयस्तेषां प्रतिपादनन्तेन सहिताः अनन्ताः= असङ्ख्याः, स्वाश्रयापेक्षया= स्वावलम्बनाधारेण, निस्सीमानः= निरवधयः, विशेषाः= विशिष्टभेदाः,—प्रत्येकभेदाः, तेषां= अङ्गानां सभेदानां स्वगतभेदानाञ्च सोपभेदानां, अन्योन्यपरिकल्पने= परस्परसम्बन्धयोजने, क्रियमाणे= विधीयमाने, कस्यचित्, अन्यतमस्य= अष्टानां मध्ये एकस्याऽपि, रसस्य, प्रकाराः= भेदाः, परिसङ्ख्यातुं= गणयितुं, न= नैव, शक्यन्ते= पार्यन्ते, किमुत= कथंनाम, सर्वेषां= निखिलानामेवेति।

विशेष रूप से कह न पाने का कारण बताते हैं—

उस असंलक्ष्यक्रमव्यंङ्ग्य के अंशों के जो अवान्तर भेद हैं और स्वयं उसके भी जो अवान्तर भेद हैं, उनके परस्पर सम्बन्ध की परिकल्पना अनन्त हो जाती है।

कारिका के आशय का विस्तार करते हैं—

अंगों के रूप में स्थिति जो रसादि व्यंग्य विवक्षितान्यपरवाच्य ध्वनि की एक ही आत्मा कहा गया उसके अंग बने वाच्य, वाचक के अनुगामी अलङ्कारों के जो असङ्ख्य भेद हैं, और उस अंगिरूप अर्थ के आत्मनिष्ठ; रस, भाव, रसाभास, भावाभास, भावशान्ति, भावसन्धि, भावोदय, भावशवलता, आदि नामक जो भेद हैं वे उनके विभाव, अनुभाव व्यभिचारिभाव आदि के प्रतिपादन के साथ असङ्ख्य हो जाते हैं, अर्थात् अपने आश्रय की अपेक्षाा से उनके विशेष भेद अनगिनत हो जाते हैं। उनके एक दूसरे से जो सम्बन्ध हैं उनकी भी परिकल्पना करने पर किसी एक ही प्रकार के भी रस के भेद एवं उपभेद की गणना नहीं की जा सकती है तो सबकी तो बात ही क्या ? अर्थात् गणना करना सम्भव नहीं है।

ध्वन्या०— तथाहि शृङ्गारस्याङ्गिनस्तावदाद्यौ द्वौ भेदौ-सम्भोगो विप्रलम्भश्च संभोगस्य च पररस्परप्रेमदर्शनसुरतविहरणादिलक्षणाः प्रकाराः।

विप्रलम्भस्याप्यभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः। तेषां च प्रत्येकं विभावानुभावव्यभिचारिभेदाः। तेषां च देशकालाद्याश्रयावस्थाभेद इति स्वगतभेदापेक्षयैकस्य तस्यापरिमेयत्वम्, किं पुनरङ्गप्रभेदकल्पनायाम्। ते ह्यङ्गप्रभेदाः प्रत्येकमङ्गिप्रभेदसम्बन्धपरिकल्पने क्रियमाणे सत्यानन्त्यमेवोपयान्ति।

लीला— अङ्गिनः— प्रभेदानां यदानन्त्यमुक्तं तदेव विशेषेण प्रतिपादयति तथाहीत्यादिना— तथा हि= इति पक्षोपस्थापने, अङ्गिनः= वाक्यार्थीभूतस्य, शृङ्गारस्य= रतिस्थायिभावात्मकस्य रसस्य, तावत्= प्रथमं, आद्यौ= मुख्यौ, द्वौ= द्विसङ्ख्याकौ, भेदौ= विभागौ, सम्भोगः= मिलनरूपः, विप्रलम्भः= मानप्रवासादिकारेण वियोगरूपः इति। धनञ्जयस्तु शृङ्गारं अयोगसम्भोगविप्रलम्भभेदेन त्रिधा विभजते। तत्तु दैवेन पारतन्त्र्याद्वा असंगमः अयोगः परस्परनिषेवणं सम्भोगः, युक्तयोः पुनर्लभ्यवियोगो विप्रलम्भ इति। तत्र सम्भोगस्य= परस्परनिषेवणा—

त्मकस्य, परस्परप्रेमदर्शनसुरतविहरणादिलक्षणाः= अनुरक्तयोर्यूनोरन्योन्यस्नेह- विलोकनकेलिक्रीडादिस्वरूपाः, प्रकाराः= भेदाः भवन्ति। विप्रलम्भस्य= तदाख्य- श्रृङ्गारभेदस्याऽपि, अभिलाषेर्ष्याविरहप्रवासवि- प्रलम्भादयः= अभिलाषः स्पृहा, ईर्ष्या कृतकद्वेषः, विरहो वियोगः, प्रवासो विप्रकृष्टता यैर्जनितो विप्रलम्भः अर्थात् ईर्ष्याविप्रलम्भः प्रवासविप्रलम्भः विरहविप्रलम्भश्चेत्यादयो भेदाः। तेषां= तथोक्तानां भेदानामपि, प्रत्येकं, विभावानुभावव्यभिचारिभेदः= विभावः कारणरूपः, अनुभावः कार्यरूपः व्यभिचारिभावः सहकारिरूपस्तेषाञ्च भेदः। तेषां= विभावादीनामपि, देशकालद्याश्रयावस्थाभेदः= स्थानसमयस्थित्यादिः— आधार- स्थितिभेदः, इति= इत्थं, स्वगतभेदापेक्षया= आत्मनिष्ठभेदाधारणे, तस्य= रसस्य,, एकस्य एव, अपरिमेयत्वं= असङ्ख्येयत्वम् पुन= पक्षान्तरे, अङ्गप्रभेदकल्पनायां= अङ्गभूतालङ्कारादिवर्णने तु किम् ?= असङ्ख्येयत्वमेव। ते= तादृशा अङ्गभेदप्र- भेदयुक्ताः, अङ्गप्रभेदाः= अङ्गभूतालङ्कारादिविभिन्नभेदाः, प्रत्येकं= एकैकशः, अङ्गिभेदसम्बन्धपरिकल्पने= अङ्गिनः मुख्यस्य रसाद्यर्थस्य ये प्रभेदाः तै सह यः सम्बन्धस्तस्य परिकल्पने विचारे, क्रियमाणे= विधीयमाने, सति, आनन्त्यं= असङ्ख्येयत्वं, एव, उपयान्ति= प्राप्नुवन्ति इति।

प्रथमन्तु सम्भोगविप्रलम्भभेदेन द्विविधः शृङ्गारः। तयोश्च प्रत्येकं स्वग- तभेदाः। तेषाञ्च प्रत्येकं विभावादिभेदः। तेषामपि प्रत्येकं देशकालादि- आश्रयावस्थाभेदा इति एकस्यैव स्वगतभेदानामानन्त्यं तथैव तस्य अङ्गप्रभेदाः। तेषाञ्च प्रत्येकमङ्गिभेदैः सह सम्बन्धयोजनायां तु भेदानामानन्त्यमेव भवतीति।

अङ्गी के प्रभेदों की जो अनन्तता बताई गई उसका विशेष रूप से प्रतिपादन करते हैं—

इसी तरह अंगी रूप शृङ्गार के ही पहले दो भेद होते हैं— सम्भोग एवं विप्रलम्भ।

सम्भोग का परस्पर, प्रेम, दर्शन, सुरत, विहार आदि लक्षण वाले बहुत से भेद होते हैं। विप्रलम्भ का भी अभिलाष, ईर्ष्याविप्रलम्भ, विरहविप्रलम्भ, प्रवासविप्रलम्भ, शापविप्रलम्भ आदि भेद होते हैं। उनमें से प्रत्येक के विभाव, अनुभाव, व्यभिचारिभाव आदि भेद होते हैं। उन विभाव आदि के भी देश काल आदि आश्रय तथा अवस्था के भेद होते हैं। इस तरह अपने ही भेदों एवं उपभेदों से एक ही रस के अनन्त भेद होते हैं। फिर उसके अंगभूत अलङ्कारों के भेदों को तो कहना ही क्या ? वे अंगभूत अलङ्कारों के प्रभेद भी प्रत्येक अंगी के अवान्तर भेदों से सम्बन्ध की परिकल्पना करने पर अनन्त ही बन जाते हैं।

कारिका— दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम्।
बुद्धिरासादितालोका सर्वत्रैव भविष्यति।। १३।।

ध्वन्या०— दिङ्मात्रकथनेन हि व्युत्पन्नानां सहृदयानामेकत्रापि रसभेदे

सहालङ्कारैरङ्गाङ्गिभावपरिज्ञानादासादितालोका बुद्धिः सर्वत्रैव भविष्यति।

लीला— रसादिध्वनेरङ्गिनस्तदङ्गानां च भेदानामानन्त्यात्सामान्येन ते प्रतिपादिता इति यदुक्तं तदेव द्रढयति दिङ्मात्रमित्यादिना— दिङ्मात्रं तु उच्यते येन व्युत्पन्नानां सचेतसां बुद्धिः सर्वत्र एव आसादितालोका भविष्यति इति पदव्यवस्था

दिङ्मात्रं= सामान्यस्वरूपमात्रं, तु= इत्यत्र, स्वार्थे, उच्यते= कथ्यते— दिगवबोधनमात्रं क्रियते इत्यर्थः, येन= पथप्रदर्शनमात्रेण, व्युत्पन्नानां= विशेषविदां काव्यमर्मज्ञानां, सचेतसां= सहृदयानां, बुद्धिः= मतिः, सर्वत्र= सर्वविषपक्षे, एव= इत्यवधारणे, यद्यदनुक्तं तत्र तत्रापि, आसादितालोका= प्राप्तप्रकाशा, भविष्यति= सम्पत्स्यत इति। भेदानामानन्त्याद्विस्तरशः कथनासम्भवाद् दिग्दर्शनमात्रमत्र कृतं तावन्मात्रेणापि प्रतिभावतां मतिः सर्वत्रैव लब्धप्रसरा सम्पत्स्यत इति।

कारिकार्थं विवृणोति वृत्तिकारो दिङ्मात्रेत्यादिना— दिङ्मात्रकथनेन= सामान्यस्वरूपमात्रावबोधनेन, हि= एव व्युत्पन्नानां= प्रतिभाजुषां, सहृदयानां= रसिकानां, एकत्र= एकदेशमात्रमपि, रसभेदे= रसतत्सामान्यस्वरूपकथने, कर्तब्ये= कृते सति, अलङ्कारे= तदङ्गभूते उपमादौ, अङ्गाङ्गिभाव परिज्ञानात्= अवयवभूतालङ्कारावयविभूतरसादिसमत्रबोधनात्, आसदितालोका= प्राप्तज्ञानरूपप्रकाशा, बुद्धिः= मतिः, सर्वत्रैव= सर्वेष्वेव भेदेषु, भविष्यति= प्राप्स्यति इति।।१३।।

इसलिए यहाँ दिग्दर्शन मात्र कराया गया है जिससे व्युत्पन्न रसिकों की बुद्धि प्रकाश लेकर शेष तत्त्व को समझ पा सकेगी।

दिग्दर्शन मात्र करा देने से भी व्युत्पन्न सहृदयों की बुद्धि अलङ्कारों के साथ एक भी रसभेद के अङ्गाङ्गिभाव को जान लेने से प्रकाश पाकर सर्वत्र प्रकाश पा जाएगी।।१३।।

ध्वन्या०— तत्र—

कारिका— शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान्।
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः।। १४।

ध्वन्या०— अङ्गिनो हि शृङ्गारस्य ये उक्ता प्रभेदास्तेषु सर्वेष्वेकप्रकारानुबन्धितया प्रबन्धेन प्रवृत्तोऽनुप्रासो न व्यञ्जकः। अङ्गिन इत्यनेनाङ्गभूतस्य शृङ्गारस्यैकरूपानुबन्ध्यनुप्रासनिबन्धने कामचारमाह।

लीला— वाक्यार्थीभूते रसादौ शब्दालङ्कारस्थितिनिर्देशककारिकामवतारयन् वृत्तिकारस्तत्पूर्वपीठिकां निबध्नाति तत्रेत्यादिना— तत्र= अङ्गिनस्तदङ्गस्य च भेदानामानन्त्येन दिङ्मात्रे वक्तव्ये सति।

कारिकामवतारयति शृङ्गारस्येत्यादिना— अङ्गिनां, शृङ्गारस्य सर्वेषु एव प्रभेदेषु यत्नात् एकरूपानुबन्धवान् अनुप्रासः न प्रकाशक इति पदव्यवस्था।

अङ्गिनः= वाक्यार्थत्वेन ध्वनिविषयीभूतस्य, शृङ्गारस्य= रतिस्थायिभावात्मक रसस्य, सर्वेषु= निखिलेषु, एव= इत्यवधारणे-निःशेषमित्याशयः, प्रभेदेषु= रसभावरसाभास भावाभास भावोदय भावशान्तिभावसन्धिभावशवलतादिषु भेदेषु यत्नात्= प्रयत्नेन, एकरूपानुबन्धवान्= समानस्वरूपकशब्दानुसरणात्मा, अनुप्रासः अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यदितिलक्षणः शब्दालङ्कारः- यथा- वाचाटाकटपूतनाकटुपटुः कापट्यकोटींपुटी विस्पष्टा नृतनाटिकानटभटी लाम्पट्य-साटाटवी' इति। न= नैव, प्रकाशकः= व्यञ्जको भवति इति।

कारिकार्थं विशदयति वृत्तिकृदङ्गिन् इत्यादिना— अङ्गिनः= वाक्यार्थत्वेन ध्वनिविषयीभूतस्य, हिं= इति एवार्थे, न तु अङ्गभूतस्य तस्य गुणीभावेन, ये= यावन्तः प्रभेदाः—रसभावादिभेदाः, उक्तः—कथिताः, सर्वेषु= निखिलेषु, तेषु= तत्तभेदेषु, एकप्रकारानुबन्धितया= एकप्रकारस्य एकस्यैव वर्णस्य वा शब्दस्य अनुबन्धितया संयोजनरूपतया, प्रबन्धेन= नितान्तप्रयत्नेन, प्रवृत्तः समुपन्यस्तः, अनुप्रासः= 'अनुप्रासः शब्दसाम्यं'= इति लक्षणः शब्दालङ्कारः, न-नैव, व्यञ्जकः= प्रकाशकः। किञ्च समानवर्णसंयोजने प्रयत्न आवश्यकस्तेन तथाकरणे कवेर्मु-ख्यसंरम्भस्तु तद्योजनायामेव भवति येन रसनिस्पत्तिर्बाधिता भवतीति तादृशानु-प्रासपरिहारे कारणम्। सोऽपि यत्नात्रानुबन्ध्यो यदि स्वभावत एव भवति तदा भवतु। यदि तेन रसनिष्पत्तौ न काऽपि बाधा सम्भवति तदा तस्य प्रयोगेऽपि न काऽपि आपत्तिः। एवञ्चायं निषेधोऽपि अङ्गिभूते एव तस्यास्वाद्यत्वात् किन्तु अङ्गभूते तु न काऽपि हानिस्तस्यानास्वाद्यत्वादिति प्रतिपादयति अङ्गिनइत्यादिना— 'अङ्गिनः= वाक्यार्थत्वेन ध्वनिविषयभूततस्य इति कथनेन, अङ्गभूतस्य= गुणीभावेन इतरोपस्कारकतया स्थितस्य, शृंगारस्य, एकरूपानुबन्ध्यनुप्रासनिबन्धने= समानव-र्णात्मकानुप्रासयोजनायां, कामचारं= स्वाच्छन्द्यं, आह=निर्दिशति। अस्यायमा-शयः- शब्दसाम्यमनुप्रासः। स त्रिविधिः छेकवृत्तिलाटभेदेन। तत्र सकृद्वर्णावृ-त्तिश्छेकः। तत्र आवृत्तिश्च एकस्यैव वर्णस्य वाऽनेकेषां वर्णानामपि भवति। प्रथमो यथा 'कामपरिम्तानाम कामिनीगण्डपाण्डुताम्' इति द्वितीयो यथा— 'न साले सालम्बो लवमपि लवङ्ग न रमते' इति। असकृद्वृत्तिरनुप्रासः। स च वर्णस्य यथा— 'विस्पष्टा नृतनाटिकानटभटी लाम्पट्यसाटाटवी' इति। अनेकस्य यथा— स्वच्छन्दोच्छलदच्छकच्छ कुहरच्छातेतराम्बुच्छटा' इति। सकृदसकृद्वा पदावृत्तिर्लाटः। पदस्य यथा 'निशाकरकरस्मेरैर्गुणैर्गुणवतां मतैः' इति। एषु ध्वन्यात्मकशृङ्गारभेदेषु प्रथमप्रकार एव निषिद्धः। उक्तमेव लोचनेऽपि- एकरूपं त्वनुबन्धं त्यक्त्वा विचित्रोनुप्रासो निबध्यमानो न दोषायेत्येकरूपग्रहणम्' इति। अपरञ्च, व्यवस्थेयं वाक्यार्थीभूत एव शृङ्गारे तस्यास्वाद्यत्वात्। किन्तु गुणीभावे तु तस्य नेयं व्यवस्था तस्य प्राधान्याभावेनास्वाद्यत्वात्। एकवर्णानुबन्धनानुप्रासेः

कृतसरंम्भः कविः कदाचिद्रससिद्धो न प्रमाद्येतेत्यस्यौचित्यं यदि तथाकरणेऽपि कविः रससिद्धावेव सफलसंरम्भश्चेत्तदपि न दोषायेति। अङ्गभूते शृङ्गारे तु कवेः स्वाच्छन्द्यमेव।।१४।।

वाक्यार्थीभूत रसादि अर्थ में शब्दालङ्कार की स्थिति को बताते हैं।

उसमें भी–

जहाँ शृङ्गार अंगी हो उसके सभी भेदों में प्रयत्नपूर्वक लाए जाने के कारण एक वर्ण के अनुबन्ध वाला अनुप्रास उसका प्रकाशक नहीं बन सकता।

कारिका के आशय का पल्लवन करते हैं वृत्तिकार–

अंगी बने शृङ्गार के जो भी भेद बताए गए हैं उन सबमें एक ही वर्ण के अनुबन्ध के रूप में प्रवृत्त अनुप्रास उनका व्यञ्जक नहीं बन सकता। यहाँ 'अङ्गी का' कहने का तात्पर्य यह है कि यदि वही शृङ्गार अंग हो तो उसमें एकरूप अनुबन्ध वाले अनुप्रास का निबन्धन कवि की इच्छा पर है।। १४।।

कारिका– ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम्।
शक्तावपि प्रमादित्व विप्रलम्भे विशेषतः।। १५।।

ध्वन्या०– ध्वनेरात्मभूतः शृङ्गारस्तात्पर्येण वाच्यवाचकाभ्यां प्रकाश्यमानस्तस्मिन् यमकादीनां यमकप्रकाराणां निबन्धनं दुष्करशब्दभङ्गश्लेषादीनां शक्तावपि प्रमादित्वम्। प्रमादित्वमित्यनेनैतद्दर्श्यते– काकतालीयेन कदाचित्कस्यचिदेकस्य यमकादेनिष्पत्तावपि भूम्नालङ्कारान्तरवद्रसाङ्गत्वेन निबन्धो न कर्तव्य। इति। 'विप्रलम्भे विशेषत' इत्यनेन विप्रलम्भे सौकुमार्यातिशयः ख्याप्यते। तस्मिन् द्योत्ये यमकादेरङ्गस्य निबन्धो नियमान्न कर्तव्य इति।

लीला– शब्दालङ्कार स्थितिप्रसङ्गे तुल्यन्यायाद्यमकस्थितिमपि निर्दिशति ध्वन्यात्मभूत इत्यादिना– ध्वन्यात्मभूते शृङ्गारे विशेषतः विप्रलम्भे यमकादिनिबन्धनं शक्तो अपि प्रमादित्वमिति पदव्यवस्था।

ध्वन्यात्मभूते= वाक्यार्थत्वेन ध्वनिविषयभूते, शृङ्गारे= रतिस्थायिभावात्मकरसे, विशेषतः= विशेषेण, विप्रलम्भो वियोगः स्याद्रूढविश्रम्भयोर्द्वयोः। मानप्रवासभेदाभ्यां' इतिलक्षिते शृङ्गारभेदे, यमकादिनिबन्धनं= यमकं= तुल्य श्रुतिक्रमाक्षरावृत्तिर्यमकमिति लक्षितः शब्दालङ्कारः, यथा– 'भुजलतां जलतामवलाजनः' इति, यथा वा विभाति रामापरमारणस्य विभाऽतिरामा परमा रणस्य, इति, आदिपदात् क्लिष्टश्लेषमुरजचक्रबन्धादीनां ग्रहणम्; तेषां निबन्धनं ग्रथनं, शक्तौ= दोषतिरोधायकसामर्थ्ये, अपि, प्रमादित्त्वं= अनवधानतैव। कदाचित्तु जातेऽपि न दोष इति।

कारिकार्थं विवृणोति वृत्तिकारः ध्वनेरित्यादिना– ध्वनेः= ध्वनितत्त्वस्य,

आत्मभूतः= साररूपः, शृङ्गारः= रतिस्थायिभावत्मकरसः, तात्पर्येण= तात्पर्यतया, वाच्यवाचकाभ्यां= अभिधेयाभिधानाभ्यां, प्रकाशयमानः= व्यज्यमानः यः, तस्मिन्= तादृशे शृङ्गारे, यमकादीनां= यमकसभङ्गश्लेषचित्रप्रभृतीनां= यमकप्रकाराणां नवविधयमकभेदानां मुखादीनां, दुष्करशब्दभङ्गश्लेषादीनां= दुष्करं मुरजबन्धचक्र-बन्धादि शब्दभङ्गश्लेषः सभङ्गश्लेषस्तेषां निबन्धनं ग्रंथनं, शक्तावपि— दोषतिरो-धायकशक्तौ सत्यामपि, प्रमादित्वं= अनवधानतैवेति। 'प्रमादित्वं' इति अनेन= पदेन, एतत्= वक्ष्यमाणप्रकारं, दर्श्यते= उपस्थाप्यते—काकतालीयेन= काककृत-तालकलोपभोगन्यायेन, कदाचित्= कुत्रचिदेव न तु सर्वत्र, कस्यचित्, एकस्य यमकादेः, निष्पत्तौ= सन्निवेशे, अपि, भूम्ना= प्राशस्त्येन, अलङ्कारान्तरवत्= अन्यस्तदितरः, अलङ्कार उपमादिस्तद्वत्, रसाङ्गत्वेन= रसोपस्कारकत्वेन, निबन्धः= संयोजनं, न कर्तव्यं इति। 'विप्रलम्भे विशेषः' इति अनेन= पदसमूहेन, विप्रलम्भे= विश्लेषणलक्षणे, शृङ्गारभेदे, सौकुमार्यातिशयः= कोमलताप्रकर्षः, ख्याप्यते उद्घुष्यते। तस्मिन्= विप्रलम्भशृङ्गारे, द्योत्ये= प्रकाश्ये, यमकादेः= यमकप्रकाराणां, अङ्गस्य= अलङ्काकारस्य, निबन्धः= संयोजनं, नियमात्= नितान्-तमेव, न कर्तव्यः= नैव विधातव्य इति।

ध्वन्यात्मभूते शृङ्गारे यथैव एकवर्णानुबन्ध्यनुप्रासनिषेधस्तथैव यमकप्रकारा-णामपि। तत्रापि ध्वन्यात्मभूते विप्रलम्भे तु कदापि नैव कामं सम्भोगे कुत्रचित्स्यादपीति।।१५।।

शब्दालङ्कार की स्थिति के प्रसंग में अब यमक प्रकार के अलङ्कारों की स्थिति का निर्देश करते हैं—

ध्वनि की आत्मा बने शृङ्गार रस में खास करके विप्रलम्भ शृङ्गार में यमक प्रकार के अलङ्कारों का निबन्धन करना दोष छुपाने की शक्ति होने पर भी प्रमाद ही है अर्थात् नहीं करना चाहिए।

कारिका के आशय का पल्लवन करते हैं—

वाच्यवाचक से तात्पर्य के रूप में प्रकाश्यमान, ध्वनि के आत्मभूत जो शृङ्गार है उसमें यमक आदि— यमक प्रकार के दुष्कर सभङ्ग्श्लेष आदि अलङ्कारों का निबन्धन दोष को छिपाने की शक्ति के होने पर भी कवि का प्रमाद ही है।

इस पद से यह बताया जाता है—कातालीय न्याय से कभी काल किसी एक यमक आदि की निष्पत्ति होने पर भी अन्य अलङ्कारों की भाँति उनका रस के अंग के रूप में बहुलता से प्रयोग नहीं करना चाहिए। 'खाश करके विप्रलम्भ में' पदसमूह से विप्रलम्भ में सुकुमारता का अतिशय कहा गया है। उसके अर्थात् विप्रलम्भ के द्योतित किए जाने पर यमक प्रकार के अलङ्कारों का अंग के रूप में निबन्धन नियम से नहीं करना चाहिए।

शृङ्गार रस कोमल प्रकृति का होता है और उसमें शब्दालङ्कारों का बोझ

रससिद्धि मे सहायक नहीं बन सकता, उसमें भी विप्रलम्भ शृङ्गार में तो एकदम उपयुक्त नहीं होता। विप्रलम्भ शृङ्गार माधुर्य के उद्रेक का परम स्थान है और उसमें यमक प्रकार के अलङ्कार उपस्कारक नहीं बन पाते यमक वह है जहाँ पदों की दो बार आवृत्ति होती है, जैसे— भुजलता जलता अब पा गए। श्लेष का अर्थ है एक ही शब्द से एक से अधिक अर्थों का निकलना। वह भी दो प्रकार का होता है— सभंग श्लेष एवं अभंगश्लेष। शब्दभंग श्लेष को सभंगश्लेष कहा जाता है। इसमे शब्द का तोड़ मरोड़ कर अर्थ निकाला जाता है अभंगश्लेष में शब्द ही द्व्यर्थक होता हैं वाक्यार्थीभूत शृङ्गार मे शब्दभंगश्लेष निषिद्ध है अर्थश्लेष नहीं। इसी तरह चित्र अलङ्कार भी उसका उपस्कारक नहीं बन सकता। उसमें भी सम्भोग शृङ्गार में कहीं एकाध बने तो किन्तु विप्रलम्भ मे एकदम नहीं बनना चाहिए। अङ्गभूत शृङ्गार में तो कवि स्वेच्छा से किसी भी अलङ्कार का सन्निवेश कर सकता है।। १५।।

ध्वन्या— अत्र युक्तिरभिधीयते—

कारिका— रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः।। १६ ।।

ध्वन्या०— निष्पत्तावाश्चर्यभूतोऽपि यस्यालङ्कारस्य रसाक्षिप्ततयैव बन्धः शक्यक्रियो भवेत् सोऽस्मिन्नलक्ष्यक्रमव्यङ्ग्ये ध्वनावलङ्कारो मतः। तस्यैव रसाङ्गत्वं मुख्यमित्यर्थः।

लीला— एवं ध्वन्यात्मभूते शृङ्गारे शब्दालङ्कारस्थिति निर्दिश्य सम्प्रति प्रकरणसिद्धये सामान्यमतनिर्देशिकां कारिकामवतारयन तत्पूर्वपीठिकां निबध्नाति वृत्तिकारः अत्रेत्यादिना— अत्र= प्रकरणेऽस्मिन्, युक्ति= सर्वव्यापकं वस्तु, अभिधीयते= कथ्यते इति। कारिकामवतारयति रसेत्यादि— यस्य बन्धः रसाक्षिप्ततया शक्यक्रिया, भवेत् सः अपथग्यत्ननिर्वत्यर्यः। अलङ्कारध्वनौमतः इति पदव्यवस्था।

यस्य= अलङ्कारस्य, बन्धः= सन्निवेशः, रसाक्षिप्ततया= रससंमवधानेन— रसबन्धानुकूलनेनैव, शक्यक्रियः, सम्पाद्यनिवेशनव्यापारः, भवेत्, सः= तादृशः, अपृथग्यत्ननिर्वर्त्यः= रसबन्धानुकूलयत्नैनैव सम्पाद्यः—रसनिबन्धने यावान् प्रयत्नस्तावतैव सम्पाद्यः, अलङ्कारः, ध्वनौ= ध्वनितत्त्वे, मतः= सम्मत इति। ध्वनौ स एवालङ्कारो मतो यः' रसनिबन्धक्रमे यदि रसेनैव स आक्षिप्तो भवति अर्थात् तन्निमित्तं पृथक्प्रयत्नस्य नैवावश्यकता भवतीति।

कारिकां विवृणोति वृत्तिकृत् निष्पत्तावित्यादिना— निष्पत्तौ= संसिद्धौ, आश्चर्यभूतः= स्वतः स्फूर्तत्वेन विस्मयावहः, अपि,—रसनिबन्धनप्रयासेऽलङ्कारस्य स्वतःसिद्धत्वेन चमत्कारावहोऽपि, यस्य, अलङ्कारस्य, रसाक्षिप्ततया= रससमवधानत्वेन, एव= इत्यवधारणे-न पृथक्प्रयत्ने, बन्धः= सन्निवेशः, शक्यक्रियः=

सम्पन्ननिष्पन्नव्यापारः, भवेत्, सः= तादृशः, एव अलङ्कारः, अस्मिन्, असंलक्ष्य-क्रमव्यङ्ग्येऽ सत्यपि क्रमे लाघवादसंलक्ष्यद्योतनक्रमे, ध्वनौ, अलङ्कारः, मतः। तस्य= तादृशस्य रसाक्षिप्तस्य एवालङ्कारस्य, एव= नान्यस्य, रसाङ्गत्वं= रसस्य वाक्यार्थीभूतरसध्वनेः, अङ्गत्वमवयवत्वमुपस्कारकत्वं, मुख्यं= प्रधानमिति, इति= इत्थं, अर्थः= आशय इति।

वाक्यार्थीभूतरसादौ स एवालङ्कारो मुख्यो मत उपस्कारकत्वेन यो रससम-वधानेन सहैव विना पृथक्प्रयत्नेन निर्वर्त्यो भवति यश्च रसैकतानतया स्थितो भवति। तेन रसनिबन्धनानुकूलतयाऽऽनुषङ्गिकरूपेण स्वतः स्फूर्त एवालङ्कारो रसध्वनौ तस्याङ्गत्वेन प्राधान्य भजते, तदितरेषां तु गौणत्वमेवेति। सामान्यतोऽल-ङ्कारबाहुल्यं रसविघातायैव भवति न तु तदुपकाराय। तेन तेषां सामान्यतो रसाङ्गत्वे सत्यपि त एव रसध्वनौ मुख्या येषां रसबन्धप्रयत्नेनैव निबन्धनं सम्पद्यते तथा च ये रसाक्षिप्तयैव शक्यक्रिया भवन्ति। रसातिरिक्तयत्ननिष्पादनीयानां तु तत्र गौणतैव।।१६।।

इस प्रकार वाक्यार्थीभूत रस में शब्दालङ्कार का स्थिति को बताकर अब सामान्य रूप से अलङ्कारों के सन्निवेश का निर्देशन करने वाली कारिका को अवतरित करने के लिए उसकी पूर्वयोजना बताते हैं—

इस विषय में युक्ति (अलङ्कारों के समायोजन का उपाय) बताई जाती है।

कारिका का अवतारण करते हैं—

ध्वनि में केवल वही अलङ्कार मान्य होता है जिसका रस के द्वारा आक्षिप्त होने पर ही सन्निवेश हुआ हो और उसके लिए रस के अतिरिक्त कोई पृथक् प्रयत्न न करना पड़े।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

निष्पत्ति में आश्चर्यजनक होते हुए भी—बिना किसी प्रयत्न के स्वतः सन्निविष्ट हो जाने से आश्चर्यजनक होने पर भी रस के द्वारा आक्षिप्त होने से ही जिस अलङ्कार का सन्निवेश करना सम्भव हो, वही अलङ्कार इस अलक्ष्यक्रमव्यङ्ग्य ध्वनि में अलङ्कार माना जाता है। उसी की रसाङ्गता मुख्य होती है। इसका यह अर्थ है।

चाहे रस कोई हो, चाहे अलङ्कार कोई भी हो, वाक्यार्थीभूत रसादि के अंग बनने के लिए अलङ्कार में यह योग्यता आवश्यक है कि उसके लिए रससिद्धि के लिए जो प्रयत्न होता है, उससे अलग प्रयत्न करना न पड़ने पर भी रस के आक्षिप्त होकर ही उसका सन्निवेश समर्थव्यापार वाला बन जाय अर्थात् उसका सन्निवेश रस के सन्निवेश के साथ ही स्वतः हो और वह रस के द्वारा आक्षिप्त होकर विराजे। शेष अलङ्कारों का अर्थात् जिसके निबन्धन के लिए पृथक् प्रयत्न करना पड़े और रस से आक्षिप्त न बन पाने पर भी स्वतः चिपक गया हो. उनका रसादि ध्वनि में कोई स्थान नहीं है।।१६।।

ध्वन्या०— यथा—

कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निश्श्वासैरयममृतहृद्योऽधररसः।
मुहुः कण्ठे लग्नस्तरलयति वाष्पस्तनतटीं
प्रियो मन्युजोतस्तव निरनुरोधे न तु वयम्।।

लीला— अपृथग्यत्ननिर्वर्त्यमलङ्कारमुदाहरति यथेत्यादि—यथा= इति निदर्शने। उदाहरणं प्रस्तौति कपोले इत्यादि— हे निरनुरोधे, तव कपोले पत्राली करतलनिरोधेन मृदिता अयम् अमृतहृद्यः अधररसः निःश्वासैः निपीतः कण्ठे लग्नः वाष्पः स्तनतटं मुहुः तरलयति, तव मन्युः प्रियः जातः वयं तु न इति पदव्यवस्था।

हे निरनुरोधे= हे प्रियंनिरपेक्षे, तव= ते कपोले= गण्डस्थले, या पत्राली= शृङ्गारनिमित्तकपत्रादिरचना, करतलनिरोधेन= करतलस्य वामकरतलस्य निरोधेन पीडनेन, मृदिता= प्रोञ्छिता, अयं= एषः, अमृतहृद्यः= पीयूषवन्मधुरः, अधररसः= निम्नोष्ठसुधा, निःश्वासैः= उच्छ्वासैः, निपीतः= निश्शेष कारितः, कण्ठे= गले, लग्नः= अधिष्ठितः, वाष्पः= अश्रु, मुहुः= बारंबारं, स्तनतटं= कुचषान्तभागं, तरलयति= आन्दोलयति, निरनुरोधे= अनुनयरहितेऽपि, तव, मन्युः= क्रोधः, प्रियः= अभीष्टः, जातः= अजनि, वयं= त्वदाराधकाः, तु, न= नैवेति।

अत्र क्रोध एव तव प्रियो न तु वयमिति क्रोधानुरोधेन त्वयाऽस्मत्त्यागः कृतो न त्वस्मदनुरोधेन कोपत्याग इति तात्पर्येण उपमानभूतस्य वक्तुरपेक्षया उपमेयभूतस्य कोपस्य नायिकायाः प्रियत्वेन कथनाद् व्यतिरेकालङ्कारः। उपमानाद्यदन्यस्य व्यतिरेकः स एव सः' इति तल्लक्षणात् स च विप्रलम्भ-शृङ्गारापेक्षया शक्यक्रियत्वेन अपृथग्यत्ननिष्पन्नत्वात्तमुपस्कारोतीति व्यतिरेकस्य तदङ्गत्त्वम्।

अपृथग्यत्ननिर्वर्त्य एव रसाक्षिप्त अलङ्कार का उदाहरण प्रस्तुत करते है—

जैसे— हे अनुरोध को न मानने वाली ! कपोलों की पत्ररचना करतल के दबाव से पोछीं गई हैं, अमृत की तरह मधुर यह अधररस निःश्वासों के द्वारा पिया गया है, गले में रुके हुए आँसु दोनों स्तनों के प्रान्तभाग को कँपा रहे हैं, विना ही अनुरोध के कोप से तुम्हारा प्यार हो गया और बार-बार अनुरोध करने पर भी हम प्रिय नहीं बना सके।

यहाँ उपमान 'हम' की अपेक्षा उपमेय 'कोप' का उत्कर्ष बताने के कारण व्यतिरेक अलङ्कार है और वह विना पृथक् प्रयत्न के निर्वर्त्य होते हुए रस से ही आक्षिप्त होने से वाक्यार्थीभूत विप्रलम्भ शृङ्गार का अङ्ग है।

ध्वन्या०— रसाङ्गत्वे च तस्य लक्षणमपृथग्यत्ननिर्वर्त्यत्वमिति

यो रसं बन्धुमध्यवसितस्य कवेरलङ्कारसतां वासनामत्यूह्य यत्नान्तरमा-स्थितस्यनिष्पद्यते स न रसाङ्गमिति। यमके च प्रबन्धेन बुद्धिपूर्वकं क्रियमाणं नियमेनैव यत्नान्तरपरिग्रह आपतति शब्दविशेषान्वेषणरूपः।

अलङ्कारान्तरेष्वपि तत्तुल्यमिति चेत्-नैवम्, अलङ्कारान्तराणि हि निरूप्यमाणदुर्घटनान्यपि रससमाहितचेतसः प्रतिभानवतः कवेरहंपूर्विकया परापतन्ति। यथा कादम्बरीदर्शनावसरे। यथा च मायारामशिरोदर्शनेन विह्वलायां सीतादेव्यां सेतौ। युक्तं चैतत्। यतो रसा वाच्यविशेषैरे-वाक्षेप्तव्याः। तत्प्रतिपादकैश्च शब्दैस्तत्प्रकाशिनो वाच्यविशेषा एव रूपका-दयोऽलङ्कराताः। तस्मान्न तेषां बहिरङ्गत्वं रसाभिव्यक्तौ। यमकदुष्करमार्गेषु तु तत्स्थितमेव। यत्तु रसवन्ति कानिचिद्यमकादीनि दृश्यन्ते, तत्र रसादीनामङ्गता यमकादीनां त्वङ्गितैव। रसाभासे चाङ्गत्वमप्यविरुद्धम्। अङ्गितया तु व्यङ्ग्ये रसेनाङ्गत्वं पृथग्प्रयत्ननिर्वर्त्यत्वाद्यमकादेः।

लीला— प्रकरणपर्यवसितं निर्दिशति रसाङ्गत्व इत्यादिना— रसाङ्गत्वेः तस्य= अलङ्कारस्य, रसाङ्गत्वे= रसस्य वाक्यार्थीभूतरसादेः, लक्षणं= इतरव्यावर्तकधर्मः, च, अपृथग्यत्ननिर्वर्त्यत्वं= पृथक्प्रयासं विनैव सम्पाद्यत्वं, इति= हेतुना, यः अलङ्कारः रसं= वाक्यार्थीभूतरसादि, बन्धुं= साधयितुं, अध्यवसितस्य= प्रयतमानस्य, कवेः= तां= रससम्बन्धिनीं, वासनां= संस्कारपरम्परां, अत्यूह्य= अतिक्रम्ययत्नान्तरं= रससमवधानेतरप्रयत्नं, आस्थितस्य= विहितवतः, निष्पद्यते= निस्सरति, सः= तादृशः अलङ्कारः, न= नैव, रसाङ्गं= रसोपस्कारकत्वेन तदवयवम्, इति।

यमकादीनां रसाङ्गत्वाभावे हेतुं निर्दिशति यमक इत्यादिना= प्रबन्धेन= योजनावद्धरूपेण, बुद्धिपूर्वकं= अवश्यमेव करोमीति, क्रियमाणे= विधीयमाने, यमके= यमकप्रकारालङ्कारे, नियमेन= नियतरूपेण, एव शब्दविशेषान्वेषणरूपः= सदृशाकृतितुल्यार्थकविशेषशब्दानुसन्धानरूपः, यत्नान्तरपरिग्रहः= रससमवधा-नादन्यो यत्नो यत्नान्तरं तस्य परिग्रहः अभ्यासः, आपतति= आयातीति। यमकादयः पृथक्प्रयत्नसाध्यास्तेषु तदुपयुक्तसदृशाकृतितुल्यार्थकशब्दानुसन्धाना-वश्यकतया। तेन तेषां रसाङ्गत्वं नैव सिध्यति यदि अलङ्कान्तरेषुः अन्येष्वपि अलङ्कारेषु उपमादिषु, अपि, तत्, विशेषप्रयत्नसाध्यत्वं, तुल्यं= यमकेन समानम्, इति= इत्थं, उच्यते चेत्, मैवम्-न तत्सत्यम्। तत्र कारणं निर्दिशति। हि= यतः, अलङ्कारान्तराणि= तदितरालङ्काराः, निरूप्यमाणदुर्घटनानि= निरूप्यमाणानि यत्नतः कृतानि अपि दुर्घटनानि दुष्करविधानानि, कृतेऽपि यत्ने दुःसाध्यानि, अपि, रससमाहितचेतसः= रसैकतानचित्तस्य, प्रतिभानवतः= प्रज्ञाशालिनः, कवेः= काव्यकर्तुः, अहम्पूर्विकया= अहं पूर्वः प्रथम इत्यस्य भावोऽहम्पूर्विका तया=

अन्योन्यप्रतिस्पर्धित्वेन, परापतन्ति= अग्रे अग्रे धावन्ति। तेन नैव तेषु पृथक्प्रयत्न-साध्यता। तदेवोदाहरति— यथा, कादम्बर्यां= वाणभट्टकृततदाख्याख्यायिकायां कादम्बरीदर्शनावसरे= चन्द्रापीडस्य कादम्बरीविलोकनसमये, यथा च= इत्युदाहरणान्तरे, सेतौ= प्रवरसेनकृतसेतुबन्धकाव्ये, मायारामशिरोदर्शनेन= सीताप्रतारणंनिमित्तं रावणकृतं यन्मायया निर्मितं रामस्य शिरःस्तद्दर्शनेन, विह्वलायां= आकुलितायां सीतादेव्याम्। तदेव युक्त्या समर्थयति—एतत्= रसनियोजनावसरेऽलङ्काराणामहम्पूर्विकयाऽऽपतनं, च, युक्तं= नितान्तमेवोचिम्। यतः= यस्मात्, रसाः, वाच्यविशेषैः= अभिधेयविशेषैः एव आक्षेप्तव्याः प्रत्यायितव्याः। तत्प्रतिपादकैः= तादृशरसाक्षेपकवाच्यवाचकैः, च शब्दैः= अभिधानैः, तत्प्रकाशिनः= रसद्योतिनः, रूपकादयः= रूपकप्रभृतयः, अलङ्काराः= अर्थगतालङ्काराः, वाच्यविशेषाः= अभिधेयविशेषाः रसरूपतया प्रतीताः एव। तस्मात्= तेन कारणेन, तेषां= रूपकाद्यलङ्काराणां, रसाभिव्यक्तौ= रसादिप्रतीतौ, न नैव, बहिरङ्गत्वं= साधनान्तरसाध्यत्वम्। यमकदुष्करमार्गेषु= यमकप्रकारदुर्घटवर्त्मसु, तु तत्= साधनान्तरसाध्यत्वं, स्थितं, एव= विद्यते एव। यत्तु= यथा तु, कानिचित्= कालिदासादिकृतानि, यमकानि, रसवन्ति= सरसानि, दृश्यन्ते= लभ्यन्ते, तत्र= तत्र—तत्र स्थले, रसादीनां= शृङ्गारादीनां, अङ्गता= गुणीभावः, यमकादीनां, तु, अङ्गिता= प्राधान्यं, एव। रसाभासे= अनौचित्यप्रवर्तितरसे, च अङ्गत्वं= यमकादीनामङ्गरूपेण वर्तनं, अविरुद्धं= अनुकूलं, एव। अङ्गितया= वाक्यार्थीभावेन स्थिते व्यङ्ग्ये= ध्वन्यात्मभूते, रसे= शृङ्गारादौ तु, यमकादेः= यमकप्रकारालङ्काराणां पृथक्प्रयत्ननिर्वर्त्यत्वात्= रससमवधाने इतरयत्नसाध्यत्वात्, न अङ्गत्वं= उपस्कारकत्वमिति।

रसस्य अङ्गत्वेऽलङ्कारे तावदेव लक्षणं यदयं रससमवधानेन सहैव बिना पृथक्प्रयत्नः साधितो भवेत् किन्तु कवेः रससम्बद्धवासनातिक्रम्य यत्नान्तरेण सम्पन्नोऽलङ्कारो न कदापि रसाङ्गत्वमाप्नोति। यमकप्रकरणे तदुपयुक्तसदृशाकृति-तुल्यार्थकादिशब्दान्वेषणाय रसनिमित्तातिरिक्त— प्रयत्नस्य आवश्यकतया तस्य रसाङ्गत्वं नैव सिध्यति। यमकातिरिक्तालङ्कारेष्वपि विशेषप्रयत्नस्यावश्यकंतया तेषां रसाङ्गत्वं कथं सिध्यति इत्यपेक्षायां यमकप्रकारातिरिक्तालङ्कारास्तु प्रयत्नेनाऽपि अर्थात् बुद्धिपूर्वकं चिकीर्षिता अपि कर्तुमशक्या अपितु रससिद्ध्या सहैव अहम्पूर्विकया परापतनशीलाः। यतो रसाक्षेपकस्य वाच्यविशेषस्य वाचकेनैव आक्षिप्ततया रूपकादयोऽपि वाच्यविशेषा। एव। तेन ते रससधर्मत्वादन्तरङ्ग रसादेः, यमकप्रकारस्य तु पृथक् शब्दसाध्यत्वाद्बहिरङ्गत्वमेव। यदि यमकादौ सरसे तत्र तस्यैव अङ्गित्वं रसादीनामंगभाव एव। अनौचित्यप्रवर्तितरसादौ तु यमकप्रकारस्य अङ्गता सिद्धयत्येव न तु वाक्यार्थीभूतरसादावित्याशयः।

प्रस्तुत प्रकरण से सिद्ध अर्थ का उपसंहार करते हैं—

रस के अंग बनने के लिए अलङ्कार का लक्षण यही है कि वह कोई अलग प्रयत्न से साध्य न हो। अर्थात् रस के लिए जो प्रयत्न होता है उससे भिन्न प्रयत्न की आवश्यकता जिसकी सिद्धि के लिए नहीं पड़ती वही अलङ्कार रस के अङ्ग बन सकते हैं। जो अलङ्कार रस के निवेश के लिए लगे कवि की वासना को लाँघ कर दूसरे प्रयत्न का सहारा लेने पर ही निष्पन्न होता है वह रस का अंग नहीं बन सकता। यमक आदि में तो विशेष प्रकार के शब्दों का जो कि समान आकृति वाले एवं तुल्यार्थक वाले भी होने चाहिए, अन्वेषण करना पड़ता है अत: उनमें जानबूझकर प्रयास करना है जो कि नियमत: पृथक्प्रयत्न हो ही जाता है।

यदि यह कहा जाय कि दूसरे अलङ्कारों की निष्पत्ति के लिए भी तो यह बात लागू होती है, तो वह ठीक नहीं है। दूसरा अलङ्कार जो है बुद्धिपूर्वक चाहने पर भी दुष्कर होते हुए भी रस से भावित चित्त वाले प्रतिभाशाली कवि के मस्तिष्क में पहले आने के लिए होड लगाकर आने लगते हैं। जैसे कादम्बरी में कादम्बरी के दर्शन के अवसर पर और जैसे सेतुबन्ध में माया से निर्मित राम का सर देखकर विह्वल सीता में। यह ठीक भी है। क्योंकि रसों का आंक्षेप विशेष प्रकार के वाच्यों के द्वारा किया जाता है और उन रसाक्षेपक वाच्यों के वाचक शब्दों के द्वारा ही प्रकाशित होने के कारण रूपकादि अलङ्कार भी वाच्य विशेष ही हैं। अत: इस प्रकार के अलङ्कार रस की अभिव्यक्ति में अन्तरंग होते हैं, बहिरंग नहीं। किन्तु यमक आदि के दुष्कर मार्ग में बहिरङ्गता ही रहती है। जहाँ कहीं भी यमक आदि रस से युक्त पाए जाते हैं वहाँ उनकी ही प्राधानता होती है और रस आदि उनके अंग होते हैं। जहाँ अनुचित पात्र में वर्णित होने के कारण रसाभास होता है वहाँ तो यमक आदि उसके अंग बन ही सकते हैं। किन्तु जहाँ अंगी मे रस व्यंग्य होता है वहाँ यमक आदि में पृथक् प्रयत्न की आवश्यकता पड़ने के कारण वे उसके अङ्ग नहीं बन सकते।

ध्वन्या०— अस्यैवार्थस्य संग्रह:—

रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित्।<br>एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवे:।।

लीला— वाक्यार्थीभूते रसाद्यर्थेऽलङ्काराणामंगयङ्गभाव विवेचनप्रकरणमु- पसञ्जिहीर्षुस्तन्निमित्तकश्लोकोपस्थापनाय पूर्वरूपमु— पस्थापयति अस्यैवेत्या- दिना— अस्य एव अर्थस्य= वाक्यार्थीभूतेरसादौ अलङ्कारणामङ्गयङ्ग...निर्द्धा- रणविषयस्य, सङ्ग्रहश्लोका:= प्रकरणपद्यानि।

अलङ्काराणां वाक्यार्थीभूतरसाङ्गत्वावबोधकं पद्यमवतारयति रसवन्तीत्या- दिना— कानिचित् सालङ्काराणि रसवन्ति वस्तूनि महाकवे: एकेन एव प्रयत्नेन निर्वर्त्यन्ते हि इति पदव्यवस्था।

कानिचित्= कतिपयानि एव न तु सर्वाणि, सालङ्काराणि= अलङ्कारोप-

स्कृतानि, रसवन्ति= सरसानि, वस्तूनि= अर्थनीतानि, महाकवे:= रससिद्धकवे:, एकेन एव= न तु एकाधिकेन,, प्रयत्नेन= प्रयासेन, निर्वर्त्यन्ते= सिध्यन्ति इति रससिद्धकवेरपृथक्प्रयासेनैव वाक्यार्थीभूत रससिद्धिस्तदङ्गभूतालङ्कारयोजाना च सिध्यत: इति।

अलङ्कारों का वाक्यार्थीभूत रस के अंग होने की स्थिति बताने वाले पद्य का अवतरण करते हैं—

कतिपय अलङ्कारों से सज्जित रससिक्त अर्थ महाकवि के एक ही प्रयत्न से सिद्ध होते हैं।

ध्वन्या०— यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते।
शक्तस्यापि रसेऽङ्गत्वं तस्मादेषां न विद्यते।।

लीला— यमकप्रकारस्य वाक्यार्थीभूतरसादेरङ्गत्वपरिहारनिमित्तकं श्लोक मुपस्थापयति यमकेत्यादिना— शक्तस्य अपि अस्य यमकादिनिबन्धे तु पृथग्यत्नत: जायते तस्मात् एषां रसे अंगत्वं न विद्यते इति पदव्यवस्था।

शाक्तस्य= कर्तुमकर्तुमन्यथाकर्तुमपि समर्थस्य, अपि, अस्य= महाकवे:, यमकादिनिबन्धे= यमकप्रकाररचनायां, तु= इति व्यवच्छेदे, पृथग्यत्न:= रससमव-धानेतरप्रयत्न:, जायते= सम्पद्यते, तस्मात्= तेन हेतुना, एषां= यमकाद्यलङ्काराणां, रसे= वाक्यार्थीभूतरसादौ, अंगत्वं= उपस्कारकत्वं, न= नैव, विद्यते= जायते इति। रससमवधानेतरोयोगसाहयत्वाद्यमकादीनां नैव वाक्यर्थीभूतरसादेरङ्गता इति।

यमक प्रकार के अलङ्कारों के वाक्यार्थीभूत रसादि के अंग हो न पाने की बात को दर्शाने वाले पद्य का अवतारण करते हैं—

काव्य रचना समर्थ कवि को भी यमक प्रकार के अलङ्कारों की रचना में रससिद्धि के लिए जो यत्न होता है उससे भिन्न प्रयास की आवश्यकता पड़ती है।

अत: वाक्यार्थीभूत में रस में उनका अंगत्व सिद्ध नहीं होता।

ध्वन्या०— रसाभासाङ्गभावस्तु यमकादेर्न वार्यते।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते।।

लीला— यमकप्रकारस्य स्थितयन्तरावबोधकं पद्यमवतारयति रसाभासे-त्यादिना— यमकादे: रसाभासांगभाव: तु न वार्यते ध्वन्यात्मभूते शृङ्गारे तु अंगता न उपपद्यते इति पदव्यवस्था।

यमकादे:= यमकप्रकारालङ्काराणां, रसाभासांगभाव:= अनौचित्यप्रवर्तितो रसो रसाभासस्तस्य अंगभाव:, उपस्कारकता, तु, न, वार्यते= निषिध्यते, ध्वन्या-त्मभूते= ध्वनिविषयभूते व्यंग्यत्वेन, शृंगारे= रतिस्थायिभावात्मक रसे तु, यमकादे:, अंगता= अंगत्वेनोपकारकता, न, उपपद्यते= सञ्जायत इति। रसाभासे यमकादी-नामंगत्वं सम्भवति वाक्यार्थीभूतशृंगारे तु नैवेत्याशय:।

तदित्थं प्रतिपादितं यत्त एवालङ्कारा वाक्यार्थीभूतरसादेरंगत्वमुपयान्ति ये खलु रससमवबोधनप्रयासेनैव निष्पन्ना भवन्ति यमकप्रकारे तु विशिष्टशब्दान्वेषणरूपत्वात्तत्समायोजने पृथगेव यत्न आवश्यक:। अतस्तस्य तिस्रोऽवस्था भवन्ति—स—च वाक्यार्थीभूतरसादेरंगत्वं नोपयाति, रसाभासस्य तु अंगत्वेन उपकर्तुं प्रभवति, तस्मिन् सरसे तु तस्यैव प्राधान्यं भवति रसस्य तु व्यङ्गत्वमेवेति।

यमक की दूसरी स्थिति को बताने वाले पद्य का अवतारण करते हैं—

यमक प्रकार के अलङ्कारों का रसाभास का अंग होना रोका नहीं जा सकता। लेकिन ध्वनि के विषय बने शृङ्गार में उसका अंगभाव बन नहीं सकता।

इस प्रकार रस के साथ एक ही प्रयास से निष्पन्न होने वाले अलङ्कार वाक्यार्थीभूत रस के अंग बन सकते हैं। यमक प्रकार के अलङ्कारों में विशेष प्रकार के शब्दों का प्रयोग आवश्यक होने के कारण वह पृथक्प्रयत्नसाध्य होता है अत: वह वाक्यार्थीभूत रस का अंग नहीं बन सकता, रसाभास का उपकारक बन सकता है और उसके सरस हो जाने पर वह स्वयं अंगी बन जाता है और रस उसका अंग।

ध्वन्या०— इदानीं ध्वन्यात्मभूतस्य शृङ्गारस्य व्यञ्जकोऽलङ्कारवर्ग आख्यायते।

कारिका— ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशित:।
रूपकादिरलङ्कारवर्ग एति यथार्थताम्।। १७।।

ध्वन्या०— अलङ्कारो बाह्यालङ्कारसाम्यादङ्गिनश्चारुत्वहेतुरुच्यते। वाच्यालङ्कारवर्गश्च रूपकादिर्यावानुक्तो वक्ष्यते च कैश्चिच, अलङ्काराणामनन्तत्वात्। सर्वोऽपि यदि समीक्ष्य विनिवेश्यते तदालक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरङ्गिन: सर्वस्यैव चारुत्वहेतुर्निष्पद्यते।

लीला— इत्थं वाक्यार्थीभूतरसादेरंगनिमित्तं हेयवर्गमुक्त्वा सम्प्रति उपादेयवर्गनिर्देशिकां कारिकामवतारयन् तत्प्राक्कथनमुपस्थापयति इदानीमित्यादिना— इदानीं= सम्प्रति, ध्वन्यात्मभूतस्य= ध्वनिविषयभूतस्य, शृङ्गारसमूह:, व्याख्यायते= ध्वन्यात्मकरसस्य, व्यञ्जक:, अलङ्कारवर्ग:= अलङ्कारसमूह:, व्याख्यायते= विव्रियते इति। वाक्यार्थीभूतशृङ्गारस्य य उपादेय वर्गोऽङ्गत्वेन विव्रियत इति।

कारिकामवतारयति ध्वन्यात्मभूतइति—ध्वन्यात्मभूते समीक्ष्य विनिवेशित: रूपकादि: अलङ्कारवर्ग: यथार्थतां एति इति पदव्यवस्था।

ध्वन्यात्मभूते= ध्वनिविषयभूते, शृङ्गारे= रतिस्थायिभावात्मकरसे, समीक्ष्य= सम्यग्विचार्य, विनिवेशित:= उपात्त:, रूपकादि= रूपकप्रभृति:, अलङ्कारवर्ग:= अर्थालङ्कारसमूह:, यथार्थतां= अलङ्कारतां; चारुत्वहेतुतां, एति= यातीत्यर्थ:।

कारिकार्थं विशदयति वृत्तिकृत् अलङ्कार इत्यादिना— अलङ्कारो नाम हि= इत्यवधारणे, वाह्यालङ्कारसाम्यात्= वाह्योलौकिक: शरीरस्य कटककुण्डलादिवत्

य अलङ्कारस्तस्य साम्यात् सादृश्यात्, अंगिन= वाक्यार्थीभूतरसादे:, चारूत्वहेतु:= सौन्दर्यकारणं, उच्यते= कथ्यते। यथा शरीरस्थ कटककुण्डलाद्यलङ्कारा आत्मना सह प्रत्यक्षत: सम्पर्काभावेऽपि शरीर संयोगेन ते आत्मन एवोच्यन्ते तस्यैवाल-ङ्कार्यत्वात् तथैव काव्ये रूपकादिरलङ्कारो वाच्यवाचकसंयोगेन अङ्गिन:, सौन्दर्य-कारणं भवतीत्याशय:। रूपकादि:= रूपकप्रभृति:, वाच्यालङ्कारवर्ग:= अर्थालङ्कार-समूह:, यावत्= यावत्परिणामं, उक्त: कथित:, प्राचीनैरिति यावत्, कैश्चित्= अपरैश्च, वक्ष्यते= कथयिष्यते, अलङ्काराणां= काव्यशोभातिशय हेतुभूतं धर्माणां, अनन्तत्वात्= अपरिसंख्यत्वात्। स: तादृश: उक्तोवक्ष्यमाणश्च सर्वोऽपि= निखिल एवालङ्कारवर्ग:, यदि= चेत्, समीक्ष्यं= निपुणं विचिन्त्य, विनिवेश्यते: निबध्य-ते— यत्र यथाधारणेन यस्य शोभाधायकता समीचीना भवति तत्र तस्यैव निवेशनेनेति भाव: अन्यथानिवेशने शोभानाशकत्वात्करे धृतो नूपुरश्चरणधृतो बलय: इव, तत्= तादृशं, सर्वस्य= निखिलस्य, एव= तंत्तु कस्याप्येकस्य, अङ्गिन:= अङ्गित्वेन वाक्यार्थी, भूतस्य अलक्ष्यक्रमव्यङ्ग्यस्य= सत्यपि द्योतनक्रमे लाघवात् संलक्ष्यद्योतनपौर्वापर्यस्य व्यङ्ग्यस्य, ध्वने:= ध्वनितत्त्वस्य, चारूत्वहेतु:= सौन्दर्यकारणं, निष्पद्यते= सञ्जायत इति।

वाक्यार्थीभूतशृङ्गारादौ सम्यग् विचिन्त्य यथायोग्यं विनिवेशिते रूपकाद्यल-ङ्कारसमूहोऽन्वर्थज्ञां लभते अर्थात् सौन्दर्यहेतुर्भवति। स च लौकिकालङ्कार इव वाक्यार्थस्यालङ्कारो भवति। यथा यथास्थानं शरीरे विनिवेशित: कटककुण्डलादि-भूषणविशेष: शरीरसंयोगेन आत्मन: सौन्दर्याय भवति तथैव वाच्यसम्बद्धोऽल-ङ्कारोऽङ्गिभूतस्य असंलक्ष्यक्रम व्यङ्ग्यस्यध्वने: सौन्दर्याधायको भवतीति।।१७।।

इस प्रकार वाक्यार्थीभूत रसादि अर्थ के लिए त्याज्यवर्ग को बताकर अब उसके लिए उपादेयवर्ग का निर्देश करने वाली कारिका का अवतारण करते हुए वृत्तिकार उसकी पूर्वपीठिका बताते हैं—

अब ध्वनि की आत्मा बने शृङ्गार का प्रकाशक अलङ्कारवर्ग बताया जाता है—

ध्वनि की आत्मा बने शृङ्गार में सोच समझकर प्रयुक्त रूपक आदि अलङ्कार वर्ग उसके वास्तविक अलङ्कार होते हैं।

कारिका के आशय का विस्तार करते हैं वृत्तिकार—

अलङ्कार जो है, उसके बाह्य के साम्य से अङ्गीभूत वाक्यार्थ के सौन्दर्य का कारण कहा जाता है।

रूपक इत्यादि में इत्यादि से उन सब अलङ्कारों का संग्रह हो जाता है जो कि वाच्यालङ्कार के रूप में कहे गए हैं जो बाद में भी कहे जाएंगे क्योंकि वेअनन्त होते हैं। वह सब अलङ्कारवर्ग यदि सोच विचार कर सन्निवेश किया गया हो तो अङ्गी बनकर ध्वनि के रूप में स्थिति सभी असंलक्ष्यक्रम व्यंगय की चारुता में हेतु बन जाता है।

जैसे शरीर में यथा स्थान धारण किया गया आभूषण आत्मा का शोभाधायक होता है वैसे ही वाच्य में स्थित अलङ्कार अंगी के शोभाधायक बनते हैं।

ध्वन्या०— एषा चास्य विनिवेशने समीक्षा—

कारिका— विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन।
काले च ग्रहणत्यागौ नाति निर्वहणैषिता।। १८।।
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।
रूपकादिरलङ्कारवर्गस्याङ्गत्वसाधनम्।। १९।।

लीला— पूर्वकारिकायां 'समीक्ष्य विनिवेशित:' इति यदुक्तं तदनुवर्तित्वेन समीक्ष्य विनिवेशनरीतिनिर्देशिके कारिकेऽवतारयन् वृत्तिकारस्तद्भूमिकां निर्दिशति एषेत्यादिना— अस्य= रूपकाद्यलङ्कारवर्गस्य, विनिवेशने= वाक्यार्थीभूतरसाद्यङ्गत्वेन संयोजने, एषा= वक्ष्यमाणप्रकारा, समीक्षा= संविचारणा।

कारिकामवतारयति विवेक्षेत्यादि— तत्परत्वेन न कदाचन अङ्गित्वेन विवक्षा काले ग्रहणत्यागौ च नातिर्निर्वहणैषिता निर्व्यूढौ अपि च अङ्गत्वे यत्नेन पर्यवेक्षणरूपकादे: अलङ्कारवर्गस्य अङ्गित्वसाधनम् इति पदव्यवस्था।

तत्परत्वेन= तस्मिन्, वाक्यार्थीभूतरसादौपर:, समर्पितस्तस्य भावस्तत्वं तेनरसद्यङ्गत्वेन, न, कदाचन= कस्यामपि स्थितौ, अङ्गित्वेन= वाक्यार्थीभावेन, विवक्षा= अभीष्टता, अङ्गत्वे साधनं भवति इति सम्बन्ध: काले= अवसरे, ग्रहणत्यागौ= ग्रहणं सन्निवेशो त्यागो, विसर्गश्च तौ, उचितावसरे ग्रहणमवसरे हानिश्च, अङ्गत्वसाधनं भवति नातिनिर्वहणैषिता= न च अत्यन्तमेव निर्वोढुं व्यवहर्तुमिच्छा—रसमव्यमपेक्ष्येति, अङ्गत्वसाधनं भवति, निर्व्यूढौ= निर्वाहे, अपि, यत्नेन= संकलप्रयासेन, च, अङगत्वे= अङ्गभावे एव, प्रत्यवेक्षणं= पर्यालोचनं च इति रूपकादे:= रूपक प्रभृते:, अलङ्कारवर्गस्य= वाच्यालङ्कारसमूहस्य, अङ्गत्वसाधनं अङ्गत्वेनोपस्थापनस्योपाया: इति।

स एवालङ्कारो, रसाभिव्यक्तिहेतुर्भवति य: कवि: रसाङ्गतया विवक्षति न तु कदापि प्राधान्येन, यञ्चावसरे विनिवेशयति अनवसरे त्यजति च, यञ्च नैवात्यन्तं व्यवहर्तुमिच्छति व्यवहरेऽपि य प्रयत्नेन अङ्गरूपेण पर्यालोचयति इति। इयमेकं अङ्गत्वनालङकारविनिवेशने समीक्षेति।।१७।।

अंग के रूप में अलंकारों के प्रयोग के बारे में समीक्षा बतलाने वाली कारिका का अवतरण करने हेतु उसकी भूमिका उपस्थापित करते हैं—

तभी रूपक आदि अलंकारों की वाक्यार्थीभूत रसादि की अंगता बन पाती है जब उसकी विवक्षा रसपरक होती है न कि वाक्यार्थ के रूप में, उसकी उचित अवसर पर लिया जाता है और उपयोगिता न होने पर छोड़ा भी जाता है, उसको ढोए रहने की नितान्त इच्छा न हो, निर्बहण के होने पर भी उसे प्रयत्नपूर्वक भी अंग के रूप में प्रतिष्ठित किया जाय।१७—१८।।

ध्वन्या०— रसबन्धेष्वत्यादृतमनाः कविर्यमलङ्कारं तदङ्गतया विवक्षति। यथा—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करौ व्याधुन्वन्त्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती।।

अत्र हि भ्रमरस्वभावोक्तिरलङ्कारो रसानुगुणः।

लीला— सोदाहरणं कारिकार्थं प्रथम पक्षसम्बद्ध विशदयति वृत्तिकृत् रसे त्यादिना- रसबन्धेषु= रसयोजनासु, अत्यादृतमनाः= नितान्ततत्परचेताः, कवि, यं= अलङ्कारं, तदङ्गतया= वाक्यार्थीभूतरसाङ्गतया, विवक्षति= उपस्थापयितु- मिच्छति स एवालङ्कारोऽङ्गं भवितुमर्हति इति सम्बन्धः कारिकार्थेन। यथा= इति निदर्शने। उदाहरति चलापङ्गामित्यादि— हे मधुकर, त्वं कृति खलु, यतः चलापङ्गां वेपथुमतीं दृष्टिं बहुशः स्पृशसि, रहस्याख्यायी इव कर्णान्तिकचरः मृदु स्वनसि करौ व्याधुन्वन्त्याः रतिसर्वस्वं अधरं पिबसि,वयं तु तत्त्वान्वेषात् हता इति पदव्यवस्था।

हे मधुकर= हे भ्रमर, त्वं= भवान्, कृती= भाग्यशाली, कृतकृत्यः, खलु इति निश्चये, यतः, चलापाङ्गां= चञ्चलकटाक्षां, वेपथुमतीं= सकम्पां, दृष्टिं= विलोचनं, बहुशः= अनेकवारं, स्पृशसि= स्पर्शविषयी करोषि, अस्मत्कृते तु तद्गोचरीभवनमपि दुर्लभं, रहस्याख्यायी= रहस्य वक्ता, इव= यथा, कर्णांति- कचरः= श्रोत्रसमीपगतः, मृदु= मधुरं यथा कश्चिन्तापरः श्रृणुयादिति, स्वनसि= शब्दं करोषि, वयं तु दूरादेवापि स्वाभिप्रायेनैव व्यङ्क्तुं समर्थाःस्म आकर्णनं तु दूरे एव, करौ= हस्तौ, व्याधुन्वन्त्याः= क्षिपन्त्याः अनभिलषितायाः अपि, रतिसर्वस्वं= सुरतनिधिभूतं, अधरं= निम्नोष्ठं, पिवसि= निभृतं पानं करोषि वयन्तु तत्स्पर्शेऽपि न क्षमाः कुतः पानं, वयं, तु, तत्त्वान्वेषात्= यथार्थानुसन्धानेन— साऽभिलषति नवेति, हताः= प्रणष्टाः वर्णिता एवेति। वयं तु साभिलाषा अपि केवलमायासिता एव त्वं तु अयत्नेनैव सिद्ध इति व्यङ्ग्यार्थः। वृत्तं शिखरिणी तल्लक्षणं तु 'य म न स भ ला गः' इति। लक्ष्ये लक्षणं घटयति अत्तेत्यादिना- अत् अस्मिन् पद्ये, हि= वाक्यालङ्कारे, भ्रमरस्वभावोक्तिः= भ्रमरस्य षट्पदस्य यः स्वभावः स्वक्रिया तस्य उक्तिः कथनं तद्रूपः स्वभावोक्तिरलङ्कारः, रसानुगुणः= रसस्य श्रृङ्गारस्य अनुगुणः उत्कर्षाधायकत्वादङ्गभूत इति। तदयमस्याशयःयो वस्तुतः स्वभावस्तस्य निरुक्तिः स्वभावोक्तिः। अत्र च भ्रमरो नीलोत्पलधिया नेत्रं स्पृशयति कर्णयोरपि तद्बुध्या ध्वनेस्तिष्ठति कुवलयाभावे मधुरमधरं पिबतीति भ्रमरस्वभावस्य निरुक्तेः स्वभावोक्तिरलङ्कारः। स च वाक्यार्थीभूतस्य श्रृङ्गारस्या-

ङ्गतामुपगत:। अपरे त्वत्र भ्रमरस्वभावे उक्तिर्यस्येति विग्रहंकृत्वा रूपकव्यतिरेकं मन्यन्ते तदनुसारमत्र भ्रमरासाधारणधर्मवर्णनाभावान्न स्वभावोक्तिः। किन्तु व्यतिरेक एवेति तल्लक्षणं तु उपमानादुपमेयस्याधिक्यमिति। भ्रमरे नायकत्वारोपाद्रूपक चतुर्थपादे व्यतिरेकश्चेतितन्मतम्। वस्तुतस्त्वत्र न रूपकं तादात्म्यारोपाभावात् किन्तु समासोक्तिरिति अपरे प्रकृतेनाप्रकृतोक्ति: समासोक्तिरित।

कारिका के प्रथम पक्ष से सम्बद्ध अर्थ का उदाहरण के साथ विस्तार करते हैं—

रस के निबन्धन मे संलग्न मन वाला कवि जिस अलङ्कार को वाक्यार्थीभूत रसादि के अंग के रूप में विवक्षा करता है।

जैसे—

हे भ्रमर ! तु चञ्चल अपङ्गों वाली काँपती हुई दृष्टि का अनेक बार स्पर्श कर लेते हो, रहस्य की बात कहने वाला जैसा कान के पास मधुर आवाज करते हो, हाथों को हिलाती हुई भी उनका रति के सर्वस्व बने अधर का पान कर लेते हो इस प्रकार तुम तो कृतकृत्य हो गए, हम तो तत्व के पीछे बरबाद हो गए।

लक्षण का लक्ष्य में निरूपण करते हैं—

यहाँ पर भ्रमर की स्वभावोक्ति अलङ्कार रस के अनुकूल गुण वाला है।

जिस वस्तु का स्वभाव है, उसको उसी हिसाब से कहना स्वभावोक्ति है। भ्रमर कमल में रहता है। शकुन्तला की आँखें नीलकमल जैसी हैं और कानों तक पहुंची हैं। उसका मुख कमल जैसा है। अत: भ्रमर अपने स्वभाव से उसकी आँखों में बैठना चाहता है कानों के इर्द गिर्द मँडराता है, और अधर का पान करता हैं यह उसकी स्वभावोक्ति है। इसी तरह 'तुम कृतकृत्य हो' कहकर हम इतने प्रयास के बावजूद भी असफल हैं तुम बिन प्रयास से ही सफल हो ऐसा व्यङ्ग्य झलकता है।

कोई तो भ्रमर में कामुक का आरोप कर रूपक और उपमान से उपमेय का आधिक्य बताए जाने के कारण व्यतिरेक भी मानते है। उनके मत में भ्रमर स्वभावोक्ति का विग्रह 'भ्रमर की स्वभावोक्ति है जिसमें' ऐसा किया जाता है। कोई इसमें रूपक न मान कर समासोक्ति भी मानते हैं। प्रस्तुत से अप्रस्तुत का कथन समासोक्ति होती है। यहाँ प्रस्तुत भ्रमर से अप्रस्तुत किसी कामुक का वर्णन है' ऐसा उनका मत है।

यह पद्य अभिज्ञानशाकुन्त में दुष्यन्त की उक्ति के रूप में है। अत: मूलत: यह स्वाभावोक्ति ही है और भले ही प्रकरण बदल देने से कुछ और हो जाय। इसका सन्निवेश दुष्यन्त के पूर्वराग से सम्बन्ध सम्भोग शृङ्गार रस के अङ्ग के रूप में है।

**ध्वन्या०**— नाङ्गित्वेनेति न प्राधान्येंन कदाचिद्रसादितात्पर्येण विवक्षितोऽपि ह्यलङ्कार: कश्चिदङ्गित्वेन विवक्षितो दृश्यते। यथा—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुबधूजनस्य।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम्।।

अत्र हि पर्यायोक्तस्याङ्गित्वेन विवक्षा रसादितात्पर्ये सत्यपीति

लीला— द्वितीयपक्षसम्बद्धकारिकार्थं सविपरीतोदाहरणं विवृणोति वृत्तिकृतः नङ्गित्वेनेतीत्यादिना। नाङ्गित्वेन इति न प्राधान्येन= नैव वाक्यार्थतया कदाचित्= कृतचित्तु रसादितात्पर्येण= रसभावादिप्रयोजनेन, विवक्षितः अभीष्टः, अपि, हि, अलङ्कारः, कश्चित्= कश्चनवस्तु, अङ्गित्वेन= प्राधान्येन, विवक्षितः= सम्पन्नः, परिणतः, दृश्यते= लभ्यते इति। कारिकायां नाङ्गित्वेनेति यदुक्तं तस्यार्थस्तु नैव प्रधानतयेति। प्रधानतया विवक्षितस्तु अलङ्कारः प्राधान्याय कल्पते न तु अङ्गरूपेण।

तदेवोदाहरति चक्राभिघातेत्यादिना— यः चक्राभिघातप्रसभाज्ञया एव राहुवधूजनस्य रतोत्सवं आलिङ्गनोद्दामविलासवन्ध्यं चुम्बनमात्रशेषं चकार इति पदव्यवस्था।

यः= अत्र विष्णुः, चक्राभिघातप्रसभाज्ञया= चक्रेण= मुदर्शनाऽऽख्येन यः अभिघातः प्रहारः स एव प्रसभाज्ञा अनुल्लङ्घनीयो नियोगः, एव= इत्यवधारणे, राहुबधूजनस्य= राहुविलासिन्याः, रतोत्सवं= रतिक्रीडां, आलिङ्गनोद्दामविलास-बन्ध्यं= आलिङ्गनमाश्लेषमुद्दामं प्रधानं येषु ते तादृशा ये विलासाः निधुवनवि-हारास्तैर्बन्ध्यं शून्यं, चुम्बनमात्रशेषं= चुम्बनमात्रंशेषमवशिष्टं, यस्मिंस्तत्, तादृशं, चकार= विदधे इति। अत्र पर्यायोक्तमलङ्कारः। तल्लक्षणं तु 'पर्यायोक्तं बिनावाच्य-वाचकत्वेन यद्वचः' इति। अर्थात् वाच्यवाचकव्यतिरिक्तेन अवगमन व्यापारेण यत्प्रतिपादनं तत्पर्यायेण व्यङ्ग्यान्तरेण कथनं पर्यायोक्तं भवति। वाच्यत्वेन वाचकत्वेन बिनायद्वचोऽभिधयैव प्रतिपाद्यते ते पर्यायोक्तिः पर्यायशब्देनैव मुक्षटित्यर्थप्रत्यायनरूपा। अत्र राहुवधूजनस्य रतोत्सवं चुम्बनमात्रशेषं चकार 'इत्यनेन राहोः शिरश्चिच्छेद' इत्याशयः प्रकाश्यते। तेनात्र भगवद्विषयकरति भावरूपतात्पर्ये सत्यपि पर्यायोक्तस्यैव प्राधान्यमिति तत्र भावस्याङ्गतैव।

पर्यवसितमाह वृत्तिकृत् अत्रेत्यादिना-अत्र= अस्मिन् वाक्ये, हि= अवधारणे, रसादितात्पर्ये= भगवद्विषयकरति भावप्रयोजने, सत्यपि= विवक्षितेऽपि, पर्यायश-ब्देनैव झटित्यर्थप्रत्यायनरूपस्य अलङ्कारस्य, अङ्गित्वेन, विवक्षा= अभीष्टता, इति= इति उपसंहृतौ। अत्र भगवत्प्रतापो विवक्षितस्तद्विषयकरतिभावरूप किन्तु तस्य चारुत्वहेतुतया अनवस्थितेः पर्यायोक्तस्यैवाङ्गिता सिध्यति तत्रैव चमत्कारा-धिक्यदिति।

कारिका के दूसरे आशय को उदाहरण के साथ समझाते हैं—

'अंङ्गी के रूप में नहीं का अर्थ है प्रधानता के रूप में नहीं। कभी-कभी रस भाव आदि के तात्पर्य से कथन के लिए अभीष्ट भी अलङ्कार अङ्गी के रूप में विवक्षित हुआ दिखाई पड़ता है। जैसे—

जिसने चक्र के प्रहाररूपी अव्यर्थ आज्ञा से ही राहु की स्त्रियों की रतिक्रीडा को आलिङ्गन आदि उत्कृष्ट विलासों से शून्य एवं चुम्बनमात्र शेष वाला बना दिया।

यहाँ रस आदि का तापर्य होते हुए भी अङ्गी के रूप में पर्यायोक्त अलङ्कार की ही विवक्षा की गई है। यहाँ पर भगवान् वासुदेव के प्रति रति भाव की विवक्षा होने पर रसादितात्पर्यता ही है लेकिन उसमे चारुता का पर्यवसान न होने से पर्यायोक्त की ही प्रधानता है। जहाँ वाच्यत्व एव वाचकत्व के बिना ही अभिधा के द्वारा कुछ कहा जाता है वहाँ पर्यायोक्त होता है। दूसरे शब्दों में पर्यायोक्त में वाच्यार्थ ही व्यङ्ग्य के रूप में कहा जाता है। यहाँ 'राहुविलासिनियों का सुरतोत्सव चुम्बन मात्र शेष हो गया' 'का अर्थ है राहु का सर मात्र शेष है, धड़ नहीं व्यङ्ग्य के रूप में दूसरे शब्दों से आक्षिप्त है। अत: यहाँ पर्यायोक्त है।

ध्वन्या०— अङ्गत्वेन विवक्षितमपि यमवसरे गृह्णति नावसरे। अवसरे गृहीतिर्यथा—

उद्दामोत्कलिकां विपाण्डुररूचं प्रारब्धजृम्भां क्षणात्
आवासं श्वसनोद्‌गमैरविरलैरातन्वतीमात्मन:।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्या: करिष्याम्यहम।।

इत्यत्र उपमा श्लेषस्य।

लीला— कारिकागतं तृतीयं सोदाहरणं विवृणोति वृत्तिकार: अङ्गत्वेने-त्यादिना— अङ्गत्वेन= वाक्यार्थोपकारकत्वेन, विवक्षितं= अभीष्टं, अपि यं= अलङ्कारं, अवसरे= अनूकूलसमये, रसादि निबन्धनकाले, गृह्णति= अनवसरे= अनुपयुक्तसमये, न= नैवति। अपृथक्प्रयत्नसाध्यतत्वा प्रसस्याङ्गत्वेनाभीष्टमपि यमलङ्कारं समये गृह्णाति= असमये जहाति च स एव अङ्गत्वेन सिद्धो भवति नान्य इति। तत्र अवसरे= यथोचितकाले, गृहीति:= ग्रहणं, यथा—

उदाहरति उद्दालमोत्कलिकामित्यादि— उद्दामो अहं= अत्र उदयन:, उद्दामो-त्कलिकां= उत्कृष्टा उद्‌गता प्ररूढा कलिका, कुड्मलं यस्यास्तां, विपाण्डुररुचं= विपाण्डुरा सिता रुक् कान्तिर्यस्यास्तां, क्षणात्= तदवसर एव, प्रारब्धजृम्भां== प्रारब्धा उपक्रान्ता जृम्भा विकासो यस्यास्तां, अविरलै:= अजस्रै:, श्वसनोद्‌गमै:= वसन्ता नि:श्वासै:, आत्मन:= स्वस्य, अयास= आन्दोलनयत्नं, आतन्वती= विस्तारयन्तीं, समदनां= मदन वृक्षाश्रिता, उद्दामोत्कलिकां= उद्दामा उत्कृष्ट उत्कलिका उत्कण्ठा यस्या: सा तां प्रियसंगमाय नितान्तमेवोत्कण्ठितां, विपाण-डुंररुचं= गौरवर्णां, क्षणात्= प्रिदर्शनावसरे एव, प्रारब्धजृम्भां= प्रारब्धा समुत्पन्न जृम्भा कामवेगकृतोऽङ्गदर्यदो मुखविकासादिश्च यस्याास्तां, अविरलै:= अजस्रै:, निरन्तरै:, श्वसनोद्‌गमै:= श्वासोच्छ्‌वासै:, नि:श्वासपरम्पाभि:, आत्मन:= स्वस्य, आयासं= खेदं, आतन्वतीं= बर्द्धयन्तीं, समदनां= कामप्रवेगार्ता, अन्यां= अपरां, नारीं= स्त्रिय, इव= यथा, इमां= पुरोवर्तिनीं, उद्यानलतां= वाटिकाबल्लरीं, ध्रुवं=

निश्चयेन पश्यन्= अवलोकयन्, देव्याः= वासवदत्तायाः, मुखं= वदनं, अद्य= इह, कोपविपाटलद्युतिं= कोपेन ईर्ष्याजन्यक्रोधेन विपाटला आरक्तांद्युतिश्छविर्यस्य तत्, करिष्यामि= विदधामि इति। पद्मिनीमुद्दिश्य उदयनस्योक्तिरियम्। शार्दूलविक्रीडित छन्दः, लक्षणं तु 'म स ज स त त गा' इति।

पर्यवसितं विवृणोति इत्यत्रेत्यादिना— इति= इत्थं, अत्र= अस्मिन् पद्ये, उपमायाः श्लेषस्य च रसस्य प्रमुखीभावदशायां पुरस्सरायमाणत्वेन ग्रहणम्।

अत्रोपमाश्लेषौ। सादृश्यमुपमा भेदे इति तल्लक्षणम्। अत्र लतानायिकयोः सादृश्यवर्णानादुपमा भवति। तथैव 'उभयविशेष्यान्वितयेरकेन प्रोक्तयोरर्थयोः श्लेषः' अत्र लतानायिकयेरकेन प्रोक्तेःश्लेषश्च। अग्रिमप्रकरणे सागरिका प्रतिउदयनस्य प्रेम दृष्ट्वा वासवदत्ता भाविन ईर्ष्या विप्रलम्भस्य उपकारत्वेन तस्य प्रमुखीभावदशायां पुरःसरायमाणत्वेन उपमाश्लेषस्योपादान मवसरानुकूलम्। इति।

कारिका के तीसरे पक्ष का उदाहरण के साथ विवेचन करते हैं।

अङ्ग के रूप में विवक्षित होने पर भी (वही अलङ्कार मुख्य रूप से अङ्ग बन पाता है) जिसे अवसर के अनुकूल ही ग्रहण करता है, अवसर के प्रतिकूल नहीं। अवसर पर ग्रहण जैसे—

उद्दाम उत्कलिका वाली विशेष प्रकार के पाण्डु वर्ण वाली तत्काल ही जृम्भा प्रारम्भ हुई अविरल रूप में श्वसन के उद्भम के द्वारा अपने आयास को विस्तारित करती हुई मदन से युक्त उद्यानलता को दूसरी नारी की तरह देखता हुआ मैं देवी के मुख को कोप से लाल कर दूंगा।

इसमें उपमाश्लेष का अवसर के अनुकूल ही उपादान है। यहाँ श्लिष्टोपमा है क्योंकि लता एवं नारी में सादृश्य उपमा है और दोनों का एक ही पद से कथन होने से श्लेष भी है और उस उपमाश्लेष का उपादान रस के उपकारक के रूप में रस के आस्वादन काल में ही पुरःसर होकर उस ईर्ष्या विप्रलम्भ के शोधक के रूप में किया गया है। अतः यह अवसर गृहीत है।

ध्वन्या०— गृहीतमतपि च यमवसरे त्यजति तद्रसानुगुणतयालङ्कारान्तरापेक्षया। यथा—

रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियायाः गुणैः
त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि।।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः।।

ध्वन्या०— अत्र हि प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानो रसविशेषं पुष्णाति।

लीला— कारिकागतं चतुर्थपक्षं सोदाहरणं विवृणोति वृत्तिकार: गृहीतमपी-त्यादिना— गृहीतं= उपात्तं, अपि, च, यं= अलङ्कारं, अवसरे= काले तद्रसानुगुण-तया= तस्य प्रतिपद्यमानस्य रसस्य अनुगुणतया अनुकूलतया, अलङ्कारान्तरा-पेक्षया= अपरालङ्कारस्पृहया, व्यजति= जहाति इति। यथा—

उदाहरति तद् रक्तस्त्वमित्यादिन— हे अशोक ! त्वं नवपल्लवै: रक्त—अहम् अपि प्रियाया: श्लाघ्यै: गुणै: रक्त: स्मरधनुमुक्ता: शिलीमुखा: त्वां आयान्ति माम् अपि तथा स्मरधनुमुक्ता: शिलीमुखा: आयान्ति कान्तापादतलाहति: तव मुदे मम अपि तद्वत्, आवयो: सर्वं तुल्यं केवलम् अहम् धात्रा सशोक: कृत इति पदव्यवस्था।

हे अशोक ! अशोकाख्यवृक्ष ! त्वं= भवान्, नवपल्लवे:= नूतनकिसलयै:, रक्त:= लोहित, अहं, अपि, प्रियाया:= प्रेयस्या:, श्लाघ्यै:= प्रशंसनीय:, गुणै:= अनुरागादिभि:, रक्त:= अनुरक्त अस्मीतिशेष:, त्वाम्= भवन्तं, स्मरधनुर्मुक्ता:, त्यक्तान्यपुष्पा:, शिलीमुखा:= भ्रमरा, आयान्ति= पतन्ति, तथा= तथैव, माम्= अपि स्मरधनुर्मुक्ता:= कामचापपातित्वा: शिलीमुखा: बाणा: आपतन्ति, कान्तापादतलाहति:= कान्ताया: सुन्दर्या: पादतलाभ्यां चरणासनाभ्यां आहति-स्ताडनं, तव= भवत:, मुदे हर्षाय भवति— 'पादाघातादशोको विकसति' इति प्रसिद्धे:, मम= अपि, तद्वत्= तादृशमेव—प्रियाचरणतलाघातो होर्षाय भवति, तेन हेतुना, आवयो: नौ, सर्वं= निखिलमेव, तुल्यं= समं, केवल= एतावदेवान्तरं, यद् अहं, धात्रा= ब्रह्मणा, सशोक:= शोकपीडित:, कृत:= विहित इति। त्वं नवकिसलयै: रक्तोऽहमपि प्रियागुणैरनुरक्त: शिलीमुखास्त्वामायान्ति मामपि: पादाघातात्त्वं हृष्यसि अहमपि तथैव। इत्थं समानेऽपि सर्वस्मिन त्वमशोकोऽहन्तु प्रियामिलना भावात् सशोक इति। वृत्तं शार्द्दलविक्रिडितं तल्लक्षणन्तु 'म स ज स-ततगा' इति।

उदाहरणे पर्यवसितं विकृणोति अत्रेत्यादिना— अत्र= अस्मिन् पद्ये हि, प्रबन्धप्रवृत्त:= प्रबन्धे गुम्फनविधौ प्रवृत्त: समारब्ध:—प्रथमपादत्रभिर्व्यूढ:, अपि, श्लेष:= श्लेषालङ्कार: उभयविशेषान्वितयोरेकेनप्रोक्तिरर्थयो: श्लेष इति लक्षण:, व्यतिरेक विवक्षाया:= व्यतिरेक उभयो:साम्यप्रोक्तो विशेषा उपमेयगे व्यतिरेक: 'इति लक्षणोऽर्थालङ्कारस्तस्या विवक्षया: स्पृहया, त्यज्यमान:= उपेक्ष्यमाण:, रसविशेषं= अत्र विप्रलम्भशृङ्गार, पुष्णाति= परिपोषं करोतीति। अत्र प्रथमं पादत्रये तु अशोकवक्त्रो: रक्तत्वशिलीमुखागमनपादाघातहर्षत्वादि धर्माणामेकेनैव प्रोक्त्या श्लेषालङ्कारों यत्र शब्दपरिवर्तनासहत्वेन रक्तशिलीमुखशब्दयो: शब्द-दश्लेषो द्वयोरेव प्रकृतत्वरूप, कान्तापादतल।हतिरित्यत्र शब्द परिवृत्तिसह-त्वेनार्थश्लेष:, तत्राऽपि आद्यस्यार्थस्य द्वितीयस्यार्थस्य कृते विभावत्वाद्धेतुश्लेष:

'तत्सहोक्त्युपमाहेतुनिर्देशात्त्रिविधं' इति निर्दिष्टेष्वन्यतम:, सहोक्त्युपमाहेत्व-लङ्कारणां हि बहुधा श्लेषानुग्राहकत्वम्। रक्तत्वादिसाधर्म्यस्य सर्वेऽपि सशोकत्वेन उपमेयभूतस्यात्मन उपमानापेक्षया न्यूनत्वप्रतिपादनाद् व्यतिरेकलङ्कारश्चतुर्थपादे। तेन चारुत्वस्य पर्यवसायित्वं व्यतिरेक एव स च श्लेषानुप्राणित इति व्यतिरे-कापेक्षया श्लेषश्च त्याग:। अत्र श्लेषापेक्षया व्यतिरेकस्यैव रसानुगुण्यत्वमपि तस्यैव विप्रलम्भशृङ्गारस्यात्राभीष्टस्य पोषकत्वात् निर्वेदचिन्तादीनां विप्रलम्भपो-षकव्यभिचारिणामवस्थाभेदेनेति।

कारिका में प्रस्तुत चौथे पद की उदाहरण के सहित व्याख्या करते हैं–

एक बार ग्रहण किए हुए भी किसी अलङ्कार को उससे ज्यादा रस के अनुकूल होने की आशा से दूसरे अलङ्कार की अपेक्षा कर के छोड़ देता है– छोड़ दिया जाता है। जैसे–

हे अशोक तुम नये किसलयों से रक्त (लाल) हो तो मैं प्रिया के प्रशंसनीय गुणों से रक्त (अनुरक्त) हूँ, तुम पर दूसरे पुष्पों से छूटे हुए भ्रमर आ पड़ते हैं तो मेरे ऊपर भी कामदेव के धनु से छूटे हुए बाण आ गिरते हैं, कान्ता के पादतल का प्रहार तुम्हें भी आनन्द देता है और मेरे को भी। इस तरह ये सब बातें हम दोनों में समान हैं। फर्क यही है कि तुम अशोक (शोक से रहित) हो और मुझे विधाता ने सशोक बनाया है अर्थात् प्रिया के न मिलने से मैं शोकाकुल हूं।

यहाँ प्रबन्ध में प्रवृत्त श्लेष व्यतिरेक की अपेक्षा से छोड़ा हुआ भी रस अर्थात् विप्रलम्भ शृङ्गार की पुष्टिं करता है।

यहाँ तीन पादों में तो श्लेष है लेकिन चौथे पाद में सशोक शब्द के कारण व्यतिरेक है। और इस की पुष्टि में श्लेष की अपेक्षा व्यतिरेक का हाथ है।

ध्वन्या०– नात्रालङ्कारद्वयसंनिपात:, किं तर्हि ? अलङ्कारान्तरमेव श्लेषव्यतिरेकलक्षणे नरसिंहवदिति चेत्– न, तस्य प्रकारान्तरेण व्यवस्था-पनात्। यत्र हिं श्लेषविषय एव शब्दे प्रकारान्तरेण व्यतिरेकप्रतीतिर्जायते स तस्य विषय:। यथा– 'सहरिर्नाम्ना देव: सहरिर्वरतुरगनिवहेन' इत्यादौ।

अत्र ह्यन्य एव शब्द: श्लेषस्य विषयोऽन्यश्च व्यतिरेकस्य। यदि चैवंविधे विषयेलङ्कारान्तरत्वकल्पना क्रियते तत्संसृष्टेर्विषयापहार एव स्यात्।

लीला– तत्र श्लेषव्यतिरेकयोरन्यालङ्कारत्व वादिनां मतमुपस्थाप्य तद्दूषय-तिनात्रेत्यादिना- केचिदन्यथाबुद्धय: कथयितुं शक्नुवन्ति यद् अत्र= अस्मिन् यद् काव्ये, अलङ्कारद्वयसन्निपात:= अलङ्कारद्वयस्य श्लेषव्यतिरेकयो: सन्निपात: समावेशो निरपेक्षसंपर्क: संसृष्टिरूप: न= नैव, किं तर्हि= यदि न तथा तदा किमन्यत् ? श्लेषव्यतिरेकलक्षण= श्लेषव्यतिरेकस्वभाव:, अलङ्कारान्तरं= अन्य

एवालङ्कार: सङ्कररूप: एव, नरसिंहवत्= नरस्य सिंहस्य च संयोगेन कश्चिन्नरसिंह भिन्न: अपर एव बुध्यते तथैव, इति= इत्थं, कथ्यते, चेत्, तन्न। तत्र हेतुं निर्दिशति, तस्येत्यादिना— तस्य= तादृशालङ्कारस्य सङ्कररूपस्य, प्रकारान्तरेण= अन्येनैव प्रकारेण, व्यवस्थापनात्= प्रबन्धनात्। तत्प्रकारान्तरं निर्दिशति यत्रेत्यादिना— यत्र= यस्मिन् काव्ये, श्लेषविषये= श्लेषाश्रयभूते, एव शब्दे, प्रकारान्तरेण= अन्येनैव प्रकारेण, व्यतिरेक प्रतीति:= व्यतिरेकावभास:, जायते= सम्पद्यते, स:= तादृश, तस्य= श्लेषव्यतिरेंकलक्षणालङ्कारस्य, विषय: अर्थात् एकस्मिन्नेव विषयेऽलङ्कारद्वयावभासनं सङ्कर: इति। उदाहरति-यथा= इति निदर्शने, सइत्यादि— स:= इन्द्र, नाम्नानामत: एव, हरि:, देवो= भवान्, यरतुरगनिवहेन= श्रेष्ठाश्वसमूहेन, सहरि:= हरिभिरश्वै: सहित इति आदौ। अत्र स हरिश्शब्द:एको विषय: स हरि: सह हरिभिरिति सहरि: इति। सहरिशब्दे श्लेष: स च इन्द्रापेक्षया वास्तविक हरिसम्बन्धवर्णनेन राज्ञ आधिक्यकथनात् व्यतिरेकस्योपस्कारक इति तत्र श्लेषव्यंतिरेकयो: सङ्कर:। तेन यत्र श्लेषविषयभूते शब्दे प्रकारान्तरेण व्यतिरेक-प्रतीति: स एव सङ्करस्य विषय:। उदाहरणे तु तदन्यथाभावं निर्दिशति अत्रेत्यादिनां— अत्र= अस्मिन् काव्ये, हि= इति तु अर्थे, अन्य:= अपर:, एव शब्द= रक्तत्वादिशब्द: श्लेषस्य, विषय:= लक्ष्यं, अन्य:= अपर: एव अशोक सशोकादिशब्द:, व्यतिरेकस्य, विषय:= लक्ष्यम्। श्लेषस्य विषय: शब्दो व्यतिरे-कस्यार्थ एव। तेन श्लेषव्यतिरेकयोराश्रयभिन्नत्वान्नात्र सङ्करस्थिति: किन्तु पृथगाश्रयरुपेणैवाक्यस्थितत्वादुभयो: संसृष्टिरेव। यत: यदि च,= अपि, एवं विधे= एतादृशे, विषये= लक्ष्ये, अलङ्कारान्तरत्वकल्पना= अन्यालङ्कारावस्थि-तकल्पना, सङ्कररूपा, क्रियते= विधीयते, तत्= तादृशं तु, संसृष्टे: अनेकस्य परस्परमनपेक्ष्य योऽवस्थितिस्तद्रुपस्यालङ्कारस्थिते:, विषयापहार:= लक्ष्यलोप:, एव, स्यादिति। अस्य प्रकरणस्यायमाशय:— काव्येऽस्मिन्नेव श्लेषव्यतिकर-समायोग: संसृष्टिरूप:। संसृष्टिश्च मिथोऽनपेक्ष्यालङ्काराणां स्थितिरेव। किन्त्वत्र यथा 'नरसिंह' इत्यत्र नरस्य सिंहस्य योगेन उभयभिन्न एव प्राणी सूच्यते तथैव श्लेष व्यतिरेकलक्षण: पृथगलङ्कार एव सङ्कररूप:। सङ्करस्तु एकमपेक्ष्या-न्यस्य प्रादुर्भाव: इति केचित्कथयितुं शक्नुवन्ति। किन्तु नात्र तथा। सङ्करो हि एकविषय एव प्रकारान्तरेण अन्य प्रतीतिरेव। यद्यत्र.श्लेषविषयके रक्तत्वादिशब्दे प्रकारान्तरेण व्यतिरेकप्रतीति: स्यात्तदैव सङ्करस्यावकाशो भवेत् किन्त्वत्र न तथा। अत्र तु अन्य एव श्लेषस्य शब्दो रक्तत्वादि: अन्य एव च व्यतिरेक विषय: अशोक सशोकादि:। यदि एतादृशें पृथगाश्रितत्वेन स्थितावपि सङ्कर: कल्प्य: तदा संसृष्टेस्तु विषयलोप: स्यादिति। संसृष्टिसङ्करयोरयमेव भेदो यत् संसृष्टि: पृथगमाश्रितत्वेन अनेकस्य परस्परमनपेक्ष्यैकवाक्ये स्थिति:, सङ्करस्तु

एकस्यान्यापेक्ष्यत्वे साधकबाधकमानाभावैकस्य निर्णयाभावे एकपदाच्छब्दार्थालङ्कृत्योरवगतौ चेति। प्रस्तुतवाक्ये तु उभयोरेवाश्रयपार्थक्या संसृष्टिरेवेति पर्यवस्यति।

प्रस्तुत वाक्य में श्लेष एवं व्यतिरेक के सङ्कर को मानने वाले के मत को उद्धृत कर उसका खण्डन करते हैं।

यहाँ पर दो अलंकारों का मेल नहीं है। तो है क्या ? यह है श्लेष एवं व्यतिरेक के मिल जाने पर बना एक दोनों के स्वभाव का दूसरा ही अलंकार 'नरसिंह' आदि में जैसे नर और सिंह मिलकर दोनों से भिन्न एक अन्य ही प्राणी को सूचित करते हैं उसी तरह यहाँ भी दो मिलकर एक तीसरा ही रूप बनाते हैं। यह ठीक नहीं क्योंकि संकर की व्यवस्था दूसरे ही प्रकार से की जाती हैं जहाँ पर श्लेष के विषय बने शब्द में ही प्रकारान्तर से व्यतिरेक की प्रतीति हो जाती है। वहीं उसका विषय आ पड़ता है। जैसे— वे नाम के ही हरि हैं किन्तु आप सुन्दर घोड़ों के समूह के कारण सहरि हैं। यहाँ 'सहरि' शब्द पर श्लेष है और व्यतिरेक भी क्योंकि श्लेष इसलिए है कि इससे इन्द्र एवं राजा दो वस्तुओं का बोध होता है और व्यतिरेक इसलिए है कि इसमें उपमेयभूत राजा का उत्कर्ष बताया गया है क्योंकि घोड़ों से युक्त होने के कारण वही वास्तव में सहरि है। यहाँ दोनों का एक ही आश्रय होने के कारण दोनों का संकर है। लेकिन प्रस्तुत काव्य में तो वह स्थिति नहीं है। यहाँ तो श्लेष का आश्रयभूत शब्द एक है रक्तता आदि और व्यतिरेक का आश्रयभूत दूसरा है अशोक सशोक आदि। यदि ऐसे भी विषयों मे संकर की स्थति मानी जाय तो संसृष्टि का विषय ही लुप्त हो जाएगा और केवल संकर ही रहेगा।

ध्वन्या०— श्लेषमुखेनैवात्र व्यतिरेकस्यात्मलाभ इति नायं संसृष्टेर्विषय इति चेन्न, व्यतिरेकस्य प्रकारान्तरेणापि दर्शनात् यथा—

नो कल्पापायवायोरदयरयदलक्ष्माधरस्यापि शम्या
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहितो नो तमः कज्जलेन।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वा
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपद्वीपस्य दीप्तिः।।

ध्वन्या०— अत्र हि साम्यप्रपञ्चप्रतिपादनं विनैव व्यतिरेको दर्शितः।

लीला— पृनरपि तत्र सङ्करवक्षीयाणां सम्भवि मतमुध्दृत्य खण्डयति श्लेषमुखेनेत्यादिना- यदि, अत्तः, काव्येऽस्मिन्, श्लेषमुखेन= श्लेषोत्थापितोपमया एव, व्यतिरेकस्य= उपमानादुपमेयस्य न्यूनताऽऽधिक्यलक्षणस्यार्थालङ्कारस्य, आत्मलाभः= स्वरूपप्राप्तिः, इति= इति हेतोः, न, अयं= प्रस्तुतः, संसृष्टेः= अलङ्काराणामेकवाक्ये परस्परानपेक्ष्यस्थितेः। विषयः= लक्ष्यं, इति= इत्थं कथ्यते, चेत्,— व्यतिरेकश्च उपमागर्भ एव, सा च श्लेशद्वारैवायाति तेन श्लेष एव व्यतिरेक नैव तथा स्यानुग्राहक इति सङ्करस्यैव विषय इति कथ्यते

चेन्न:, व्यतिरेकस्य=तदाख्यालङ्कारस्य, प्रकारान्तरेण= अन्येनाप्युपायेन, न केवलं श्लेषोपमाद्वारेणैव, दर्शनात्= प्राप्ते:। अयमाशय: मा भूनाम् एक वाक्यापेक्ष-यैकविषयत्वं किन्तु व्यतिरेकस्योपमागर्भत्वादुपमायाश्च श्लेषमुखेनैव सिद्धेस्ते-षामङ्गाङ्गिभावस्तु भवत्येव। अत एवाप्ययं संकरस्य विषय इति कथ्यते चेन्न तथा यतो नैव तत्र राजाज्ञायद्वयतिरेक उपमागर्भ एव स्यादपितु प्रकारान्तरेणाऽपि तस्य सिद्धिर्भवति। यथा= इति निदर्शने। प्रकारान्तरेण व्यतिरेकसिद्धिमुदाहरति नो कल्पेत्यादि-अदयरयदलक्ष्माधरस्य कल्पापायवायो:, अपि नो शम्या अहनि गाढोद्‌गीर्णोज्ज्वलश्री: तम: कज्जलेन न नो रहिता पतङ्गात् प्राप्तोत्पत्ति:, मोषं, पुन: न उपगता निखिल द्वीपदीपस्य सा एव अन्यरूपा वर्ति: उष्णात्विष: दीप्ति: व: सुखयतु इति पदव्यवस्था।

अदयरयदलक्ष्माधरस्य= अदयेन कठिनेन रयेण वेगेन दलन्त: विशीर्यमाणा: ये क्ष्माधरा: पर्वतास्तस्य, कल्पापायवायो:= कल्पापाये कल्पावसाने यो वायुरनि-लस्तस्य, अपि, नो= नैव, शम्या= निर्वापणीया, अहनि= दिवा, गाढोद्‌गीर्णो-ज्ज्वलश्री:= गाढमत्यन्तं उद्‌गीर्णा प्रकाशिता या उज्ज्वला भास्वराश्री: प्रकाशो यया सा, तम: कज्जलेन= तमोऽन्धकार एव कज्जलं कालिमा तेन, न, रहिता= शून्या, नो अपितु शून्यैव, पतङ्गात्= सूर्यात्, प्राप्तोत्पत्ति:, प्राप्ता उपलब्धा उत्पत्तिरुत्थानं यया सा, मोषं निर्वाणं, पुन:, न, उपगता= प्राप्ता, निखिल-द्वीपदीपस्य= निखिलानां समस्तानां द्वीपानां जलमध्यगतस्थलभागानां, दीपस्य प्रकाशकस्य, अन्यरूपा= विलक्षणा, वर्ति:= दीप:, उष्णात्विष:= उष्णा धर्मा त्विट् कान्तिर्यस्य तस्य, दीप्ति:= कान्ति:, व:= युष्मान्, सुखयतु= आनन्दयत्विति।

पर्यवसितं कथयति अत्रेत्यादिना— काव्येऽस्मिन्, हि= इति त्वर्थे, साम्यं प्रपञ्चं= साम्यस्य सादृश्यस्य उपमाविषयस्य प्रपञ्चं प्रबन्धं, विना= राहित्येन, एव, व्यतिरेक:, दर्शित: इति। अस्यायमाशय:— अत्र न व्यतिरेकस्योपमागर्भत्वम्। यतोऽत्रसूर्यदीप्ते: सामान्यदीपवर्तेविलक्षणताप्रतिपादनाद् व्यतिरेकसिद्धिर्न तु उपमागर्भत्वेन। यथा च दीपवर्ति: सामान्यवायुनिर्वापणीया सूर्यदीप्तिस्तु नैव कल्पान्तवायुनाऽपि, दीपवर्तिरहनि अश्रीकां सूर्यावर्तिस्तु अहन्यपि सश्रीका, पूर्वा कज्जलमयी अपरा तमोरहिता, पूर्वा पतङ्गादपि प्राप्तध्वंसा अपरा न केनाऽपि निर्वाप्या, पूर्वाअनित्या अपरा नित्या इति सूर्यदीप्तेरुत्कर्षता। अत्र नोपमा समानधर्माभावात्।

अत्रावधेयं सत्सर्वतोपमाया: स्वशब्देनाभिधाने एव नैव व्यतिरेको भवति अपितु गम्यमानत्वेऽपि प्रतीयमानोपमा व्यतिरेकस्यानुग्राहिणी भवन्ती नाभिधानं स्वकण्ठे नोपेक्ष्यते। तस्मान्न श्लेषोपमा व्यतिरेकस्यानुग्राहित्वेनोपात्ता।

उक्त उदाहरण में श्लेष एवं व्यतिरेक के सङ्कर मानने वालों के सम्भव मत को उद्धृत कर उसका खण्डन करते हैं—

यदि ऐसा कहा जाय कि श्लेष के द्वारा ही यहाँ पर व्यतिरेक को अपना स्वरूप प्राप्त हुआ है, अत: यह संसृष्टि का विषय नहीं है। (सङ्कर अलङ्कार का विषय है) तो यह भी ठीक नहीं। व्यतिरेक का प्रकारान्तर से भी होना देखा गया है। उपमा के स्व शब्द अभिधान मात्र होने से व्यतिरेक होता नहीं, अपितु उपमा के गम्यमान होने से भी उसकी स्थिति होती है। जैसे—

अपने निर्दयता पूर्वक पहाड़ों को भी दलित कर देने वाली कल्पान्त वायु से भी जो बूत नहीं सकती, जो दिन में उज्ज्वल कान्ति की प्रगाढता के साथ उगलती रहती है, जो अन्धकार—रूपी काजल से एकदम रहित है, जो पतङ्ग (सूर्य) से उत्पन्न होती है लेकिन पतङ्ग से बुताई नहीं जा सकती, ऐसी उष्णकान्ति वाले समस्त द्वीपों के दीपक सूर्य की प्रभा जो एक विलक्षण प्रकार की ही बत्ती है, वह आप सब को सुखी करें।

यहाँ पर साम्य के प्रपञ्च के प्रतिपादन के बिना भी व्यतिरेक दिखाया गया है।

ऐसा भी मानना ठीक नहीं कि उक्त पद्य मे श्लेष के द्वारा ही व्यतिरेक बन पाता है अर्थात् व्यतिरेक का मूल है उपमा और उपमा का मूल है श्लेष अत: श्लेष ही व्यतिरेक का मूल है अत: दोनों में उत्पाद्य उत्पादक भाव होने से सङ्कर अलङ्कार की स्थिति है। वस्तु स्थिति तो यह है कि उपमा के वाच्य न होने पर भी अर्थात् गम्यमान होने पर भी व्यतिरेक होता है। उक्त उदाहृत पद्य में उपमा स्वशब्दवाच्य नहीं है फिर भी व्यतिरेक की स्थिति बन पाती है। जैसे सूर्य की प्रभा एवं दीपवर्ति दो वस्तुएं हैं दीपवर्ति थोड़ी हवा से भी बूत जाती है लेकिन सूर्य प्रभा बड़े-बड़े पहाड़ों को उखाड़ फेंक पाने वाला कल्पान्त वायु से भी बुताई नहीं जा सकती, दीपवर्ति दिन में तेजोहीन होती है लेकिन सूर्य प्रभा प्रगाढ़ प्रकाश से उद्दीप्त रहती है, दीपवर्ति में काजल होता है सूर्य प्रभा में एकदम नहीं, दीपवर्ति जलने पर भी पतङ्गो से बुताई जा सकती है, सूर्य प्रभा कभी भी निर्वाण को प्राप्त नहीं होती, दीपवर्ति थोड़े से जगह को प्रकाशित कर पाती है लेकिन सूर्य प्रभा सातों द्वीपों को प्रकाशित करती है। अत: सूर्य प्रभा दीपवर्ति से नितान्त ही विलक्षण हैं यहाँ उपमा वाच्य तो नहीं है फिर भी गम्यमान रूप से ही व्यतिरेक के पूर्वाधार का काम करती है।

ध्वन्या०— नात्र श्लेषमात्राच्चारुत्वप्रतीतिरस्तीति श्लेषस्य व्यतिरेकाङ्गत्वेनैव विवक्षिततत्वात्। नं स्वतोऽलङ्कारतेत्यपि न वाच्यम्। यत एवंविधे विषये साम्यमात्रादपि सुप्रतिपादिताच्चारुत्वं दृश्यत एव। यथा—

आक्रन्दा: स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि—
स्तद्विच्छेदभूवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमै:।
अन्तर्मे दयितामुखं तव शशी वृत्ति: समैवावयो:
स्तत्किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यत:।

इत्यादौ।

लीला— पुनश्च उदाहृतकाव्ये सङ्करसम्भावना निरासाय श्लेषं विनैव व्यतिरेकस्य पृथगेवस्तित्वं बोधयति नात्रेत्यादिना— अत्र पूर्वोदाहृते रक्तस्त्वमित्यादिकाव्ये, श्लेषमात्रात्= केवलं श्लेषोपमाया एव, चारुत्वप्रतीतिः= सौन्दर्यावभासनं, न, अस्ति= विद्यते–काममन्यत्र उपमाया गम्यमानत्वेऽपि व्यतिरेकस्य सिद्धिः सम्भवतु, अत्र तु न तथा यतो व्यतिरेक प्रावण्येनैव श्लेषोपमोपात्ताऽस्ति, इति= हेतोः, श्लेषस्य, व्यतिरेकाङ्गत्वेन= व्यतिरेकोपकारकत्वेन, विवक्षितत्वात्= संयोजितत्वात् स्वतः= स्यमेव श्लेषमात्रस्य, पृथगेव, अलङ्कारता= अलङ्कारभावः, न= नैव, इति अपि= इत्थञ्च, न, वाच्यं= कथनीयम्। व्यतिरेकप्रावल्ये स्वयं चारुत्वहेतुत्वाभावात् श्लेषोपमाऽत्र पृथगलङ्कारभावमेव न भजते इत्यपि नैव चिन्तनीयम्। अतथा चिन्तने हेतुं निर्दिशति 'यत' इत्यादिना— यतः यस्मात्, एवविधे= एतादृशे, विषये= लक्ष्ये यथा 'रक्तस्त्व' मित्यादिकाव्येऽस्ति, तत्र, सुप्रतिपादितात्= सम्यक्वत्तया प्रसाधितात्, साम्यमात्रात्= श्लेषं विनैव केवलमुपमागर्भत्वादेव व्यतिरेकात्, अपि= इति पक्षसिद्धौ, चारुत्वं= सौन्दर्यं, दृश्यते= प्राप्यत, एव= इत्यवधारणे। व्यतिरेकलक्ष्ये श्लेषं विनाऽपि उपमागर्भत्वेनैव सौन्दर्यसम्भवान्नैवानिर्ववार्दरूपेण श्लेषस्यात्र व्यतिरेकाङ्गत्वमिति तेनाऽत्र श्लेषस्य व्यतिरेकस्य च पृथगेवास्तित्वं यस्मात्तदोः परस्परमनपेक्ष्य स्थितेरत्र संसृष्टिरेव नैव सङ्कर इति। श्लेषं विनैव उपमागर्भत्वमात्रेणापि व्यतिरेकस्य चारुत्वहेतुत्वसिद्धये उदाहरणान्तरमुपस्थापयति यथेत्यादिना— यथा= इति निदर्शने। उदाहरणं प्रस्तौति आक्रन्दा इत्यादि— हे सखे 'जलधर' मे आक्रन्दाः ते स्तनितैः समाः विलोचनजलानि अश्रान्त धाराम्बुभिः तद्विच्छेदभुवः शोकशिखिनं तडिद्विभ्रमैः मे अन्तः दयितामुखं तव शशी आवयोः वृत्तिः समा तत् किं त्वं मां अनिशं दग्धुं एवं उद्यत इति पदव्यवस्था।

हे सखे ! हे मित्रं, जलधर ! मे, आक्रन्दाः= शोकध्वनयः, ते स्तनितैः= गर्जितैः, समाः= तुल्याः, मे, विलोचनजलानि= अश्रूणि, ते, अश्रान्तधाराम्बुभिः अविरलासारजलैः तुल्यानि, मे, तद्विच्छेद भुवः= तस्याः प्रियायाः विच्छेदो वियोगस्तस्माद्भवः उत्पत्तयः शोकशिखिनः= शोकवह्नयः, ते, तडिद्विभ्रमैः= सौदामिनीविलासैः, तुल्याः, मे, अन्त= हृदये, दायितामुखं= प्रियावदनं, तव, अन्तः शशी= हिमांशुः, तेन, आवयोः= नो, वृत्तिः= स्थितिः, समाः= तुल्याः, एव= इत्यवधारणे नैव किञ्चिदन्तरं, तत्= तस्मात्, किं= किमर्थ, त्वं= भवान्, मां= भवन्मित्रं, अनिशं= अनवरतं, दग्धुं= उत्तापयितुं, एव, उद्यतः= तत्पर इति। इत्यादौ= इत्यादिवाक्ये।

अत्र चतुर्थचरणे बन्धुजनपीडाकारित्वेन जलधरस्य स्वापेक्षया हीनवृत्तित्वकथनाद् व्यतिरेकः पूर्वचरणत्रये उभयोः साम्यं प्रदर्शितं किन्तु नैव

श्लेषस्य लेशमात्रमपि। एवञ्च पूर्वोदाहरणे 'नो कल्पापायवायो' इत्यादिपद्ये उपमां विनैव व्यतिरेकः सूर्यप्रभा दीपवर्त्योरसाम्यत्वात्।अतो 'रक्तस्त्वं' इत्यादौ श्लेषोपमाव्यतिरेकयोः पार्थक्यसिद्धिर्यया तत्र संसृष्टि सिद्धिरेव न तु सङ्कर इति।

उदाहृत काव्य में सङ्कर की सम्भावना के निरास के लिए श्लेष के बिना भी व्यतिरेक की सिद्धि बताते हैं—

"इनमें 'रक्तस्त्वं', आदि पद्य में श्लेष मात्र से कोई चारुत्व की प्रतीति नहीं है क्योंकि यहाँ श्लेष की व्यतिरेक के अङ्ग के रूप में विवक्षा की गई है। अतः वहीं श्लेष की स्वतः अलङ्कारता नहीं है" ऐसा भी नहीं कहना चाहिए। क्योंकि इस प्रकार के व्यतिरेक के विषय में भलीभाँति प्रतिपादित साम्य मात्र के कथन से भी जहाँ श्लेष का लेश भी नहीं है, चारुत्व देखा गया है। जैसे— हे मित्र जलधर ! मेरा करुण क्रन्दन तुम्हारे गर्जन के समान है, मेरे आँसू तुम्हारे अविरल वर्षा के जल के समान हैं, मेरे भीतर उनके वियोग से उठे शोकानल तुम्हारे अन्दर रहे विजली के विलास के समान है, मेरे अन्दर उनका सुन्दर मुखड़ा है और तुम्हारे अन्दर चन्द्रमा है। अतः हम दोनों की वृत्ति समान है। इस कारण क्यों तुम अनवरत रूप से मेरे को जलाने में लगे हो।" इत्यादि पद्य में

यहाँ पहले के तीन चरणों में मेघ और विरही का साम्य मात्र बताया गया है और श्लेष का लेशमात्र भी नहीं है और चौथे चरण में मित्र को सताने के कारण अपने से बादल की हीनता बताए जाने से व्यतिरेक है। इससे पहले के पद्य में उपमा के विना भी व्यतिरेक होने की स्थिति बताई गई थी और इसमें श्लेष के विना भी व्यतिरेक की स्थिति बताई गई है। अतः उदाहृत काव्य में श्लेषोपमा एवं व्यतिरेक का सङ्कर मानना ठीक नहीं है। वहाँ दोनों के पृथक् अस्तित्व के कारण संसृष्टि ही है।

ध्वन्या०— रसनिर्वहणैकतानहृदयो यं च नात्यन्तं निर्वोढुमिच्छति। यथा—

कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुति परः प्रेयान् रुदत्या हसन्।।

इत्यादौ रूपकमाक्षिप्तमनिर्व्यूढं च परं रसपुष्टये।

लीला— एवं काले ग्रहणस्य त्यागस्य च विधिं प्रदर्श्य सम्प्रति क्रमप्राप्तं पञ्चमपक्षं सोदाहरणं विवृणोति रसेत्यादिना— रसनिर्वहणैकतानहृदयः= रसानां काव्यास्वादानां निर्वहणे निबन्धने एकतानं तदतिरिक्तविषयव्यवच्छेदेन तन्मयभूतं हृदयं चित्तं यस्य स तादृशः कविः यं= अलङ्कारं, च, न= नैव, अत्यन्तं= नितान्तदूरगामित्वेन, निर्वोढुं= व्यवहर्तुं, इच्छति= प्रयतत इति। यथा= इति निदर्शने। तथोदाहरति कोपादित्यादिकोपात्, रुदत्या दयितया सायं कोमललोलबाहुल-

तिकापाशेनदृढं बद्ध्वा वासनिकेतनं नीत्वा सखीनां पुरः स्खलत्कलगिरा दुश्चेष्टितं संसूच्य भूयः न एवं इति निह्नुतिपरः हसन् धन्यः प्रेयान् हन्यते एव इति पदव्यवस्था।

कोपात्= प्रियकृतपरस्त्रीसङ्गमरूपापराधजन्यक्रोधात्, रुदत्याः= समाक्रन्दत्या, दयितया= प्रियया, सायं= सन्ध्यावसाने, कोमललोलबाहुलतिकापाशेन= कोमलौ मृदुलौ लोलौ चञ्चलौ या बाहू भुजौ एव लतिका बल्लरी सा एव पाशस्तेन, दृढं= भृशं, बद्ध्वा= आबन्ध्य, वासनिकेतनं= निवासकक्षं, नीत्वा= प्राप्य, सखीनां= आलीनां, पुरः= अग्रे, स्खलत्कलगिरा= स्खलन्त्या कोपेन त्रुट्न्त्या कलया स्वभावमधुरया गिरा वाण्या, दुश्चेष्टितं= परस्त्रीसम्पर्करूपमपराधं, संसूच्य= प्रकटय्य, भूयः= पुनरपि, न एवं करिष्यसीति हसन्= हासव्याजने, निह्नुतिपरः= स्वापराधगूहनपरायणः, धन्यः= सौभाग्यशाली, प्रेयान्= प्रियतमः, हन्यते= ताड्यते, एवेति।

तत्र चिकथयिषितमुपस्थापयति अत्रेत्यादिना— अत्र= काव्येऽस्मिन्, रसपुष्टये= काव्यास्वादपरिपोषाय, रूपकं= 'तद्रूपकमभेदो य उपमानोपमेययोः' इति लक्षणाऽलङ्कारः, आक्षिप्तं= उपस्थापितं— 'कोमललोलबाहुलतिकापाशेन' इति अत्र अत्र बाहुलतिकयोः लतिकापाशयोश्च, अनिर्व्यूढं= नात्यन्तं निरूढञ्चेति सम्भोगशृङ्गारसिद्धये उपक्रान्तस्यापि रूपकस्य त्यागः।

इस प्रकार कारिका की चतुर्थसमीक्षा की सोदाहरण विवेचना करने क बाद अब पाँचवीं समीक्षा की सोदाहरण व्याख्या करते हैं—

रस के निर्वाह में अपना मन पूर्ण रूप से लगाए हुए कवि जिस अलङ्कार का रस की पुष्टि के विचार से प्रारम्भ कर भी आवश्यकता से ज्यादा निर्वाह करना नहीं चाहता। जैसे— रोती हुई प्रेयसी के द्वारा क्रोध से कोमल एवं चञ्चल बाहु रूपी लता रूपी पाश से भलीभाँति बांध कर शाम के समय निवास कक्ष में ले जाकर सहेलियों के सामने उसके दुष्कृत्य (अन्य नायिका समागम) का क्रोध से स्खलित वाणी से प्रकट कर हँसते हुए अपने कुकृत्य को छुपाने का प्रयत्न करता हुआ भाग्यवान् प्रेमी फिर से ऐसा न करना कह कर पीटा जाता है।

इत्यादि में आक्षेप किया गया एवं पूरा निर्वाह न किया गया रूपक रस की परम पुष्टि के लिए हुआ है। यदि 'बाहुलतिकापाश' में आक्षिप्त रूपक का पूरा निर्वाह किया जाता तो रस की पुष्टि में अनौचित्य के कारण बाधा पड़ती क्योंकि दयिता व्याधवधू होती और निवासगृह कारागार पञ्जर होता।

ध्वन्या०— निर्वोढुमिष्टमपि यं यत्नादङ्गत्वेन प्रत्यवेक्षते यथा—

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां वर्हभारेषु केशान्।

उत्पश्यामि प्रतनुषु नदीवीचिषुं भ्रूविलासान्
हन्तैकस्थं क्वचिदिह न ते भीरु सादृश्यमस्ति।। इत्यादौ।

लीला— सम्प्रति कारिका निर्द्धारितामन्तिम समीक्षां सोदाहरणमुपस्थापयति निर्वोढुमित्यादिना— निर्वोढुं= अत्यन्तमेव व्यवहर्तुं, इष्टं= अभिमतं, अपि, य= अलङ्कारं, यत्नात्= प्रयत्नेनापि, अङ्गत्वेन= वाक्यार्थीभूतरसोपस्कारकत्वेन, प्रत्य-वेक्षते= पर्यालोचयति इति। नितान्तमेव निर्वोढुमभिमतमपि अलङ्कारं कथमपि अङ्गी न भवेदितिधिया यत्नात्पर्यालोचयति कविः स एवालङ्कारोऽङ्गत्वेन सिद्धो भवति इत। यथा= इति निदर्शने। उदाहरति तथा श्यामस्वङ्गमित्यादिना— हे भीरू ! ते श्यामासु अङ्गं चकित हरिणीप्रेक्षणे दृष्टिपातं शशिनि वक्त्रच्छायां शिखिनां बर्हभारेषु केशान् प्रतनुषु नदीवीचिषु भ्रूविलासान् उत्पश्यामि हन्त ! क्वचित् अपि ते सादृश्यं एकस्य न अस्ति इति पदव्यवस्था।

हे भीरु ! हे भयशीले ! ते= भवत्याः, श्यामासु= प्रियंगुलतासु, अङ्गं= शरीरं, चकितहरिणीप्रेक्षणे= विस्मितमृगीविलोकने, दृष्टिपातं= विलोकनं, शशिनि= चन्द्रमसि, वक्त्रच्छायां= वदनशोभां, शिखिनां= मयूराणां, बर्हभारेषु= पिच्छनिवहेषु, केशान्= कचान्, प्रतनुषु= मञ्जुषु, नदीवीचिषु सरित्तरङ्गेषु, भ्रूविलासान्= कटाक्षान्, उत्पश्यामि= उत्प्रेक्षे हन्तः= इति विषादे, क्वचिदपि= कुत्रापि, ते= भवत्याः, सादृश्यं= साम्यं, एकस्थं= एकस्मिन् वस्तुनि स्थितं, न अस्ति= न विद्यते इति।

इत्यादौ= इत्यादिकाव्ये तद्भावाध्यारोपरूपाया उत्प्रेक्षायाः अनुप्राणकं सादृश्यं यथोपक्रान्तं तथा निर्वाहितमपि विप्रलम्भपरिपोषकमेव जातमिति अङ्गत्वस्योदाहरणम्।

अब कारिका में प्रस्तुत छठीं समीक्षा का सोदाहरण व्याख्या करते हैं— पूरे निर्वाह के लिए अभीष्ट होकर भी जिसको प्रयत्नपूर्वक अङ्ग के रूप में देखता है। जैसे—

हे भयशीले ! प्रियङ्गुलताओं में तुम्हारे शरीर की, 'विस्मित हरिणी के विलोकन में तुम्हारे नजर की, चन्द्रमा में तुम्हारे मुख की शोभा की, मयूरों के पिच्छ में तुम्हारे केश की नदी की सूक्ष्म लहरों में तुम्हारे भ्रूविलासों की उत्प्रेक्षा करता हूं, किन्तु खेद की बात यह है कि तुम्हारा सौन्दर्य कहीं भी एक जगह रहा नहीं दिखाई पड़ता।

इत्यादि में उस भाव के अध्यारोप रूप उत्प्रेक्षा को अनुप्राणित करने वाला सादृश्य जैसा ही प्रारब्ध है उसी तरह उसका निर्वाह भी हुआ है और उससे विप्रलम्भ शृङ्गार का परिपोषक भी हुआ है।

ध्वन्या०— स एवमुपनिबन्ध्यमानोऽलङ्कारो रसाभिव्यक्तिहेतुः कवेर्भ-वति। उक्तप्रकारातिक्रमे तु नियमेनैव रसभङ्गहेतुः संपद्यते। लक्ष्यं च तथाविधं महाकविप्रबन्धेष्वपि दृश्यते बहुशः। तत्तु सूक्तिसहस्रद्योतितात्मनां महात्मनां

दोषोद्धोषणमात्मन एव दूषणं भवतीति न विभज्य दर्शितम्। किन्तु रूपकादेरलङ्कारवर्गस्य येयं व्यञ्जकत्वं रसादिविषये लक्षणदिग्दर्शिता तामनुसरन् स्वयं चान्यल्लक्षणमुत्प्रेक्षमाणो यद्यलक्ष्यक्रमप्रतिभमनन्तरो-क्तमेनं ध्वनेरात्मानमुपनिबध्नाति सुकवि: समाहितचेतास्तदा तस्यात्मलाभो भवति महीयानिति।

लीला— इत्थं वाक्यार्थीभूतस्य रसस्यङ्गत्वेनालङ्कारस्थितिं पृथक्पृथक्पक्षत्वेन सोदाहरणं व्याख्याय पर्यवसितमुपसंहरति स एवमित्यादिना— एवं= अनेन प्रकारेण, कवे:= काव्यकृत:, उपनिबध्यमान:= संयोज्यमान:, स:= रूपकादि: अलङ्कार:, रसाभिव्यक्तिहेतु:= रसस्य अभिव्यक्तेरभिव्यञ्जनाया: हेतु: कारणं, भवति इति उक्तप्रकारातिक्रमे= उक्तप्रकारस्य अलङ्काराणां वक्यार्थीभूत रसादेरङ्ग-त्वेनोपस्थापनविधे अतिक्रमे उल्लङ्घने उपेक्षायां, तु= इत्यवधारणे, नियमेन= विधिना, एव, रसभङ्गहेतु:= रसावच्छेदनकारणं, सम्पद्यते= परिणमति। तथावि-धनियमोल्लङ्घनेन संयोजितोऽलङ्कारो रसविच्छेदायैव भवति न तु तदुपकाराय। तथाविधं तादृशं सम्यगसमीक्ष्यैवालङ्कारयोजनं, लक्ष्यं= विषय:, च महाकविप्रब-न्धेषु= महाकविकृतनिबन्धादिषु, अपि, बहुश:= यत्र तत्र, दृश्यते= प्राप्यते, तत्= तादृशदोष पूर्णनिबन्धनं, तु, सूक्तिसहस्रद्योतितात्मनां= सूक्तीनां सुभाषितानां सहस्रेण आनन्त्येन द्योतिता: प्रकाशिता: आत्मान: स्वरूपास्तेषां, महात्मनां महामहिमशालिनां कवीनां, दोषोद्धोषणं= त्रुटिप्रख्यापनं, आत्मन:= स्वस्य, एव, दूषणं= दोषाधानं, भवति= सम्पद्यते, इति= हेतो:, विभज्य= पृथग् विविच्य, न, दर्शितं= प्रख्यापितमिति। यदि तथा नैवोच्यते तर्हि कथं तस्य ज्ञानं सम्भवति इत्यपेक्षायामाह किन्त्वित्यादिना— किन्तु= तथा अनुक्तेऽपि, रूपकादे:= रूपक-प्रभृते:, अलङ्कारवर्गस्य= अलङ्कारसमूहस्य, रसादिविषये= रसभावादिलक्ष्ये, व्यञ्जकत्वे, या = यादृशी, इयं= पूर्वोक्ता, लक्षणदिक्= स्वरूपज्ञानसंक्षेप:, दर्शिता= उपस्थापिता, तां= दिग्दर्शनं, अनुसरन्= अनुगच्छन्, स्वयं, च, अन्यल्ल-क्षणं= इतरस्वरूपादिकं, उत्प्रेक्षमाण:= आकलयन्, यदि, अलक्ष्यक्रम प्रतिमं= असंलयक्रमव्यङ्ग्यसन्निभं, अनन्तरोक्तं= अत्र न प्रतिपादितं, एनं= एतादृशं, ध्वने:= ध्वनितत्त्वस्य, आत्मानं= स्वरूपं, उपनिबध्नाति= संयोजयति, समाहि-तचेता:= सन्नद्धमना:, सुकवि:= महाकवि:, तत्= तदा, अस्य कवे:, महीयान्= सुमहान्, आत्मलाभ:= कवित्वप्राप्ति:, भवति, इति= प्रकरणसमासौ। अस्याय-माशय:= एवमलङ्कारस्य रसादि परत्वेन विवक्षा, अङ्गित्वेन न विवक्षा, अवसरे ग्रहणं त्यागश्च, नात्यन्तनिर्वाहपरता, यत्नेनाङ्गत्वेन योजनं इति विधानेन निबन्धन एव स रसादिकारणं भवति, तदुल्लङ्घनं तु रसभङ्गायैव भवति यन्महाकविप्रबन्धेषु

अपि तथा दृश्यते किन्तु महता दोषकथनजन्यदोषभियाऽत्र तन्मैवोच्यते। अनुक्तेऽपि तस्मिन् यदत्रलक्षणदिग्दर्शनं कृतं तमनुगच्छन् स्वयञ्चेतरलक्षणमुन्नयन् कविः परां सिद्धिमवाप्नोति।।१८-१९।।

इस प्रकार वाक्यार्थीभूत रसादि के अङ्ग के रूप में अलङ्कार की स्थिति को पृथक्-पृथक् पक्ष के रूप में उदाहरण के साथ प्रस्तुत कर उससे पर्यवसित अर्थ का उपसंहार करते हैं-

इस प्रकार कवि के द्वारा उपनिबध्यमान अलङ्कार रस की अभिव्यक्ति का कारण होता है। उक्त प्रकार के नियम के अतिक्रमण करने से वह नियम से ही रस के भंग का कारण बन जाता है। उस प्रकार का विषय महाकवि के प्रबन्धों में भी बहुत जगह देखा गया है। वह हजारों सुभाषितों से अपनी आत्मा को प्रकाशित किए हुए महान् व्यक्तियों के दोष के उद्घाटन से अपने को ही दूषित करता है, अतः उसका विभागशः उल्लेख नहीं किया गया है वैसा न करने पर भी रूपक आदि अलङ्कारों का रसादि विषय में व्यञ्जक होने के लक्षण का जो यह दिग्दर्शन कराया गया है, उसका अनुसरण करते हुए, स्वयं भी अन्य लक्षण्णों की उत्प्रेक्षा करतु हुए समाहित चित्त वाला कवि यदि अलंक्ष्य क्रम व्यंग्य के ध्वनि के इस आत्मा का उपनिबन्धन करता है तब उसके लिए महान् आत्मलाभ होता है। इस तरह यह असंलक्ष्य क्रमव्यंग्य ध्वनि का प्रकरण समाप्त होता है।।१८-१९।।

कारिका— क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः।
शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः।।२०।।

ध्वन्या०— अस्य विवक्षितान्यपरवाच्यस्य ध्वनेः संलक्ष्यक्रमव्यङ्ग्यत्वादनुरणनप्रख्यो य आत्मा सोऽपि शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विप्रकारः।

लीला— एवं विवक्षितान्यपरवाच्यो यो ध्वनिस्तस्य असंलक्ष्यक्रमं प्रथमं भेदं विचार्य सम्प्रति क्रमप्राप्तं तस्यैव संलक्ष्यक्रमव्यङ्ग्यं द्वितीयं भेदमुपनिर्दिशति क्रमेणेत्यादिना— अस्य अनुस्वान सन्निभः यः आत्मा क्रमेण प्रतिभाति सः अपि शब्दार्थशक्तिमूलत्वात् द्वेधा व्यवस्थित इति पदव्यवस्था।

अस्य= ध्वनेः, अनुस्वानसन्निभः= अनुस्वानं= घण्टानुरणनं तेन सन्निभस्तुल्यः, यः= यादृशः, आत्मा= स्वरूपं, क्रमेण= एकैवकृत्वा प्रतिभाति= प्रतीयते, सः= तादृशः क्रमलक्ष्यव्यङ्ग्यः, अपि= च, शब्दार्थशक्तिमूलत्वात्= शब्दशक्तिः अर्थशक्तिश्च, तौ मूलं हेतुर्यस्य तस्य भावस्तत्त्वात्, द्वेधा= द्विप्रकारकः, व्यवस्थितः= प्रतिष्ठित इति।

विवक्षितान्यपरवाच्यत्वेन यो ध्वनिस्तस्यापि द्वौ भेदौ असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति तत्र असंलक्ष्यक्रमव्यङ्ग्यः स एव यत्र वाच्यार्थव्यङ्ग्यार्थयोः

समकालमिवावभासनात् तत्क्रमो नैव लक्ष्यते। स च रसादिः। तस्य च भेदानामानन्त्यादेक एव भेदो मतः। अपरश्च संलक्ष्यक्रमव्यङ्ग्यः। स एव यत्र वाक्यार्थव्यङ्ग्यार्थयोः प्रतीतिक्रमः स्पष्टमेव लक्ष्यते। तत्र प्रथमं वाक्यार्थोऽवभासते तदनन्तरमेव व्यङ्ग्यार्थप्रतीतिः। तस्यापि द्वौ प्रकारौ शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति तस्य शब्दार्थशक्तिमूलत्वात्। यथा घण्टावादनान्तरं तत्र किञ्चित्कालपर्यन्तमनुरणनं श्रूयते तथैव वाक्यार्थविभासनानन्तरं व्यङ्ग्यार्थस्य प्रतीति र्भवति इति सोऽनुस्वानसन्निभः।

कारिकागतमेवार्थं विशदयति वृत्तिकृत् अस्येत्यादिना—अस्य= प्रकरणगतस्य, विवक्षितान्यपरवाच्यस्य= विवक्षितमभीष्टमन्यपरं व्यङ्ग्यार्थतत्परं वाच्यमभिधेयो यत्र तस्य—यथा दीपः स्वयमात्मानमपि प्रकाश्य पदार्थमपि प्रकाशयति तथैव वाच्यार्थः स्वयमपि प्रकाशितो भूत्वा व्यङ्ग्यार्थमपि प्रकाशयति तदनन्तरमिति तादृशस्य, ध्वनेः= ध्वनितत्त्वस्य, संलक्ष्यक्रमव्यङ्ग्यत्वात्= संलक्ष्यः स्पष्टमेव परिदृश्यः क्रमः अवसानपौर्वापर्यः तादृशो यो व्यङ्ग्यः प्रतीयमानार्थस्तस्य भावस्तत्त्वं तस्मात्तेन हेतुना अनुरणनप्रख्यः= अनुरणनं घण्टानादानन्तरनिष्पन्नध्वनि तदेव प्रख्यापनं यस्य तादृशः= यः= यादृशः, आत्मा= स्वरूपं, सः= तादृशः=यः= अपि, शब्दशक्तिमूलः= अभिधान व्यापारयोनिः, अर्थशक्तिमूलः= अभिधेयव्यापारयोनिश्च, इति= इत्थं, द्विप्रकारः= द्विविध इति—व्यङ्ग्यपरार्थाक्षेपकः शब्दः व्यङ्ग्यत्वेनात्माक्षेपकोऽर्थश्च तस्य योनिरित्याशयः।। २०।।

इस प्रकार विवक्षितान्यपरवाच्य जो ध्वनि है उसके पहले भेद असंलक्ष्यक्रमव्यङ्ग्य का प्रतिपादन कर अब क्रम से प्राप्त उसके दूसरे भेद संलक्ष्यक्रमव्यङ्ग्य का निर्देश करते हैं— इस विवक्षितान्यपरवाच्य की जिस आत्मा का घण्टा के अनुरणन के समान क्रम से ही प्रतीति होती है उसके शब्दशक्तिमूलक एवं अर्थशक्तिमूलक होने से वह भी दो प्रकार से व्यवस्थित होता है।

कारिका के आशय का वृत्तिकार पल्लवन करते हैं—

उस विवक्षितान्यपरवाच्य ध्वनि के व्यङ्ग्य की प्रतीति काम के परिलक्षित होने से घण्टानाद के बाद के अनुरणन के समान जो आत्मा होती है वह भी शब्दशक्तिमूलक एवं अर्थशक्तिमूलक दो प्रकार का होता है।।२०।।

ध्वन्या०— ननु शब्दशक्त्या तत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदिदानीं श्लेषस्य विषय एवापहतः स्यात्, नापहृत इत्याह—

> आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।
> यस्मिन्नुक्तः शब्देन शब्दशक्त्युदभवो हि सः।। २१ ।।

ध्वन्या०— यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्या प्रकाशते स शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितम्। वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः।

लीला— सम्प्रति शब्दशक्तिमूलध्वनिद श्लेषयोः पार्थक्यावबोधनाय विषयविवेचककारिकामवतारयन् वृत्तिकारस्तत्पूर्वपीठिकां निबध्नाति नन्वित्यादिना— ननु= इति प्रश्ने, तत्र= शब्दशक्तिमूलध्वनौ, शब्दशक्त्या= अभिधाव्यापारेण, अर्थान्तरं= वाच्यार्थातिरिक्तमन्यमर्थ, प्रकाशते= द्योतयति, यदि, सः, ध्वनेः= ध्वनितत्त्वस्य, प्रकारः= भेद, उच्यते= मन्यते, तत्= तथाभूते सति, इदानीं= अधुना, श्लेषस्य= 'नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयास्पदः' इति लक्षितस्यालङ्कारस्य, विषयं= क्षेत्रं, एव अपहृतः= विलोपितः, स्यात्, इति चेन्न, श्लेषस्य विषयो न, अपहृत इति आह= कथयति।

कारिकामवतारयति आक्षिप्त इत्यादि— यस्मिन् शब्देन अनुक्तः शब्दशक्त्या आक्षिप्तः अलङ्कार एव प्रकाशते स शब्दशक्त्युद्भवः ध्वनिः हि इति पदव्यवस्था।

यस्मिन्= यत्र वाक्ये, शब्देन= अभिधेयेन, अनुक्तः= अकथितः, किन्तु शब्दशक्त्या शब्दव्यापारेण, आक्षिप्तः= प्रत्यर्पितः, अलङ्कारः, एव= इत्यवधारणे न तु वस्त्वपि इत्याशयः, सः, शब्दशक्त्युद्भवः= ध्वनिः, हि इति अवधारणे, न तु श्लेष इति।

कारिकार्थं विवृणोति वृत्तिकारो यस्मादित्यादिना-यस्मात्= यतः, यस्मिन्= यादृशे, काव्ये, शब्दशक्त्या, अलङ्कारः, न वस्तुमात्रं= केवलं वस्तुन एव-न केवलं वस्तु एव अपितु अलङ्कारोऽपि, प्रकाशते= द्योतते, सः= तादृशः, शब्दशक्त्युद्भवः= शब्दशक्तिजनितः, ध्वनिः, इति अस्माकं विवक्षितं= अभीष्टं। शब्दशक्त्या, वस्तुद्वये= पदार्थद्वये, प्रकाशमाने= द्योतमाने, च श्लेष इति।

यत्र शब्दशक्त्या द्वितीयस्यार्थस्य प्रतीतिर्भवति यदि तद्ध्वनौ अन्तर्भाव्यते तदा श्लेषस्यापहार एव स्यादिति चेन्न। यदि शब्दशक्त्या न केवलं वस्तुन एवापितु अलङ्कारस्यापि व्यञ्जना भवति तच्छब्दशक्त्युद्भवध्वनेर्विषयः। यदि तथा द्वौ वस्तुपरकावर्थौ प्रकाश्येते तच्छ्लेशस्यैव विषयः। उभयत्रैव शब्दबलाद् द्वितीयस्यार्थस्य प्रतीतिर्भवति यत्र एकोऽर्थो वस्तुपरको भवत्यपि। तत्र एतावदेवान्तरं यद् श्लेषं द्वितीयोऽप्यर्थो वस्तुपरको भवति यदि सः अलङ्कारपरको वा अलंङ्कारमिश्रितवस्तुपरको भवति तच्छब्दशक्तिमूलध्वनेर्विषयः। इति।

शब्दशक्तिमूलध्वनि एवं श्लेष के पार्थक्य का अवबोधन कराने के लिए प्रस्तुत कारिका के अवतारण करते हुए उसकी भूमिका उपस्थापित करते है—

जहाँ शब्दशक्ति से दूसरा अर्थ प्रकाशित होता है उसे ध्वनि का प्रकार माना जाय तो श्लेष के विषय का तो अपहार ही हो जाएगा ऐसा मानना ठीक नहीं, उससे श्लेष के विषय का अपहार नहीं होगा, ऐसे दिखाने के लिए कहते हैं—

'शब्द के द्वारा न कहा हुआ किन्तु शब्द के द्वारा आक्षिप्त जो अलङ्कार प्रकाशित होता है वह शब्दशक्तिमूलक ध्वनि है।

वृत्तिकार कारिका के आशय का विस्तार करते हैं— जिस काव्य में शब्दशक्ति के द्वारा अलङ्कार ही न कि वस्तुमात्र जिससे प्रकाशित होता है वह शब्दशक्तिमूलक ध्वनि होती है—यही हमारा आशय है। जहाँ शब्द शक्ति से दोनों वस्तुएँ ही प्रकाशित होती हैं वहाँ श्लेष होता है।

वास्तविकता यह है कि शब्दशक्तिमूलक ध्वनि और श्लेष दोनों में ही शब्द के बल पर दूसरे अर्थ की प्रतीति होती है और पहला अर्थ दोनों में ही वस्तुपरक होता है। दोनों में अन्तर इतना ही है कि श्लेष में दूसरा भी अर्थ वस्तुपरक ही होता है और शब्दशक्तिमूलक ध्वनि में दूसरा अर्थ अलङ्कारपरक वा अलङ्कारमिश्रित वस्तुपरक होता है अतः शब्दशक्तिमूलक ध्वनि से श्लेष का विषयापहार नहीं होता।। २१।।

ध्वन्या०— यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गा च योऽधारयत्।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं न नामामराः।
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः।।

लीला— शब्दशक्त्या वस्तुद्वये प्रकाश्यमाने सति श्लेषो भवतीति यदुक्तं तस्य दार्ढ्याय उदाहरणं प्रस्तौति येनेत्यादि-ध्वस्तमनोभवेन येन बलिजित्कायः पुरा अस्त्रीकृतः यः च उद्वृत्तभुजङ्गहारवलयः यः च गङ्गां अधारयत् यस्य शिरःशशिमत् अमराः यस्य हर इति स्तुत्यनाम आहुः सः स्वयं अन्धकक्षयकरः उमाधवः सर्वदा त्वां पायात् इति पदव्यवस्था।

ध्वस्तमनोभवेन= ध्वस्तो भस्मीकृतो मनोभवः कामो येन तेन, येन, बलिजित्कायः= बलिं जयति तच्छील इति बलिजिद्विष्णुः तस्य कायः शरीरं, पुरा= पुराकाले, त्रिपुरदाहसमये, अस्त्रीकृतः= अस्त्ररूपेण प्रयुक्तः— त्रिपुरदाहे विष्णुः शर आसीदिति पौराणिकी कथा, यः, च, उद्वृत्तभुजङ्गहारबलयः= उद्वृत्ता वर्तुलावयवा से भुजङ्गाः सर्पाः, एव हारः बलयानि च यस्य, यः च, गङ्गां= भागीरथीं, अधारयत्= धृतवान्, यस्य, शिरः= उत्तमाङ्गं, शशिमत्= चन्द्रमां युक्तं, अमराः= देवाः, यस्य, हरः= अघसंहारकः, इति= इत्थं, स्तुत्यं= प्रणम्यं, वन्द्यं, नाम= अभिधानं, आहुः= कथयन्ति, सः= तादृशः, स्वयं, अन्धकक्षयकरः= अन्धकासुरनाशकः, उमाधवः= पार्वतीपतिः, सर्वदा, त्वां पायात्= अवतु इति। अयं शिवपक्षीयार्थः। एवमेव विष्णुपक्षीयार्थे येन अस्तः ध्वस्तं, अभवेन येन पुरा बलिजित्कायः स्त्रीकृतः रवलयः य अगं गां च अधारयत् अमराः यस्य स्तुत्यं शशिमच्छिरोहरः नाम आहुः सः अन्धकक्षयकरः सर्वदः माधवः त्वां पायदिति पदव्यवस्था।

येन= गृहीतकृष्णावतारेण, अनः= शकटं, शकटासुरश्च, ध्वस्तं= नाशितं,

अभवेन= न विद्यते भवो यस्येति जन्मरहितेन, पुरा= अमृतमन्थनावसरे, बलिजि-त्काय:= बलिं जयतीति तच्छील इति बलिजित्चासौ कायः शरीरं, स्त्रीकृत:= नारीरूपेण परिणत:, यः उद्धद्वृत्तभुजङ्गहा= उद्धतो यो भुजङ्ग सर्प स्तं हन्ति तच्छील इति, आरवलयः आरं शास्त्रवंबलं सैन्यं याति आक्रामति इति वा रवलय:= रवे शब्दे लयोऽन्तर्धानं यस्य, यः, अगं= पर्वतं, गोवर्धनं, गां= पृथि-वीश्च,— वराहरूपेण, अधारयत्= मस्तके घृतवान्, अमरा:= देवा:, यस्य, स्तुत्यं= वन्द्यं, शशिमच्छिरोहर:= शशिनं मथ्नात्यसाविति शशिमन्थ राहुः तस्य शिरस-श्छेदक:, इति। आख्यां, आहुः स:= तादृश:, अन्धकक्षयकर:= अन्धकानां तदाख्यानां यादवजातिष्वन्यतमानां, क्षयकरो नाशक:-मौसलकाण्डेन वा अन्ध-कानांक्षयः निवासस्तस्यकर:, सर्वद:= निखिल प्रद:, माधव:= कृष्णः त्वां, पायात्= अव्यादिति।

अत्र द्वितीयोऽर्थो वस्तुमात्रः प्रतीतां नैवालङ्कार इति श्लेषस्य विषयोऽयं न तु शब्दशक्युद्धव ध्वनेः।

श्लेष का उदाहरण प्रस्तुत करते हैं। जैसे—

शिवपरक अर्थ— कामदेव को भस्म करने वाले जिन भगवान् शिव ने बलि को जीतने वाले विष्णु के शरीर को पहले अर्थात् त्रिपुरविजय के समय अस्त्र अर्थात् शर बनाया, उद्धत महासर्प ही जिसे हार एवं बाजू हैं, जिसने गङ्गा को धारण किया, जिसका सर चन्द्रमा से युक्त है देवता भी जिसका 'हर' ऐसा स्तुत्य नाम बताते हैं क्योंकि वे सब कष्टों को हरने वाले हैं तथा अन्धकासुर के नाश करने वाले, पार्वती के प्रिय पति वे भगवान् सदाशिव तुम्हारी रक्षा करें।

विष्णु परक अर्थ—

नहीं है जन्म जिसका ऐसे जिन विष्णु ने शकटासुर को मारा, जो बलि को भी जीतने वाले हैं जिन्होंने पहले अर्थात् अमृत मन्थन के समय स्त्री का रूप धारण किया था, जो उद्धत सर्प को मारने वाले हैं, जो शब्द में ही लीन होने वाले हैं, जो गोवर्धन पर्वत एवं पृथ्वी को धारण करने वाले हैं, जो चक्र को वलय के रूप में धारण करने वाले हैं जिनको देवता लोग चन्द्रमा के शत्रु अर्थात् राहु के सर को काटने वाले कह कर स्तुत्य नाम से पुकारते हैं, जो अन्धक जाति के लिए आवास के प्रबन्ध करने वाले हैं (द्वारका में) ऐसे सब कुछ दे पाने वाले लक्ष्मी के प्रिय नारायण तुम्हारी रक्षा करें।

यहाँ दोनों ही अर्थ वस्तुपरक है न कि एक भी अलङ्कारपरक। अतः यहाँ श्लेष का विषय है न कि शब्दशक्तिमूलक ध्वनि का।

ध्वन्या०— नन्वलङ्कारान्तरप्रतिभायामपि श्लेषव्यपदेशो भवतीति दर्शितं भट्टोद्भटेन, तत्पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश इत्याशङ्क्ये-दमुक्तम् आक्षिप्तः इति। तदयमर्थः शब्दशक्त्या साक्षादलङ्कारान्तरं वाच्यं

सत्प्रतिभासते स सर्वः श्लेषविषयः। यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः।

लीला— सम्प्रति कारिकागतस्य 'आक्षिप्त' शब्दस्य प्रयोजनं विवृणोति वृत्तिकारः नन्वित्यादिना– ननु इति प्रश्ने, भट्टोद्भटेन= तादाख्येन काव्यालङ्कारसारसङ्ग्रहकारेण, अलङ्कारान्तरप्रतिभायां= अलङ्कारविशेषबुद्धो, अपि, श्लेषव्यपदेशः= श्लेषालङ्कारविषयः, भवति, इति= इत्थं, दर्शितं= निर्दिष्टं, तत्= तस्मात्, पुनरपि= विषयविभाजनेऽपि शब्दशक्तिमूलः, ध्वनिः, निरवकाशः= निर्विषयः, भवति इति= इत्थं, आशङ्क्य, इदं= कारिकागतं, आक्षिप्तं= शब्दबलादाक्षिप्य प्रतीतं' इति, उक्तं= कथितम्। तस्याशयमुपसंहरति तदित्यादिना— तत्= तस्य, अयं= वक्ष्यमाणः, अर्थः= आशयः—यत्र= यस्मिन् काव्ये, शब्दशक्त्या= शब्दव्यापारेण, साक्षात्= प्रत्यक्षमेव,अलङ्कारान्तरः= अलङ्कारविशेषः, वाच्यं= अभिधेयं, सत्, प्रकाशते= द्योतते, सः= तादृशः, सर्वः= निखिलश्लेषविषयः= श्लेषालङ्कारपदम्। यत्र= यस्मिन् काव्ये, तु= इति व्यवच्छेदे, अशब्दशक्त्या= शब्दव्यापारेण, सामर्थ्याक्षिप्तं= वाच्यसामर्थ्येन प्रत्यायितं, वाच्यव्यतिरिक्तं= अभिधेयभिन्नं, व्यङ्ग्यं= प्रतीयमानम्ः, एव, अलङ्कारान्तरं= अलङ्कारविशेषं, प्रकाशते= द्योतते, सः= तादृशः, ध्वनेः= शब्दशक्तिमूलध्वनेः विषयः= लक्ष्यं, भवतीति शेषः।

भट्टोद्भटेन द्वितीयार्थरूपेणालङ्कारस्याभिधानेऽपि श्लेषविषयत्वेनैव निर्दिष्टम्। तेन शब्दशक्तिमूल ध्वनेः श्लेषातिरिक्त विषयाभावान्निरवकाशता कथं न सिद्ध्यति इत्याशङ्कानिवारणाय कारिकायां 'आक्षिप्तं' इति पदपदमुक्तम्। तेन यत्र शब्दशक्त्याऽलङ्कारविशेष एव साक्षादाच्यो भवति स श्लेषस्य विषय एव यत्र तु तत्सामर्थ्याक्षिप्तं व्यङ्ग्यमेवालङ्कारविशेषत्वेन द्योतते स तु शब्दशक्तिमूलध्वनेर्विषय इति।

कारिका में दिए गए 'आक्षिप्त' पद का प्रयोजन बताते हैं—

भट्टोद्भट ने दिखलाया है कि न केवल दूसरे अर्थ के वस्तुपरक होने में ही अपितु दूसरे अलंङ्कार विशेष की प्रतिभा में भी श्लेष अलंकार होता है अतएव फिर भी शब्द शक्ति ध्वनि का कोई अवकाश नहीं रहा— इसी आशङ्का के निवारण के लिए कहा गया है 'अक्षिप्त हो'। तो इसका यह अर्थ हुआ जहाँ शब्दशक्ति के द्वारा साक्षात् दूसरा अलङ्कार वाच्य होकर प्रतिभासित होता है वह सब श्लेष का विषय है और जहाँ शब्दशक्ति के द्वारा सामर्थ्य से आक्षिप्त होकर वाच्य से भिन्न दूसरा ही व्यङ्ग्य अलङ्कार प्रतीत होता है वह ध्वनि का विषय है।

ध्वन्या०— शब्दशक्त्या साक्षादलङ्कारान्तरप्रतिभा यथाः

तस्या, विनापि हारेण निसर्गादेव हारिणौ।
जनयामासतुः कस्य विस्मयं न पयोधरौ।।

अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावः साक्षाद्विरोधालङ्कारश्च प्रतिभासत इति विरोधच्छायानुग्राहिणः श्लेषस्यायं विषयः, न त्वनुस्वानोपमव्यङ्ग्यस्य ध्वनेः।

लीला— अलङ्कारस्य वाच्यत्वे श्लेषो भवतीति यदुक्तं तदेवोदाहर्तुमुपक्रमते शब्दशक्त्येत्यादिना- शब्दशक्त्या= शब्दव्यापारेण, साक्षात्= वाच्यत्वेन अलङ्कारान्तरप्रतिभा= अलङ्कारंविशेषयति, यथा= इति वक्ष्यमाणे पद्ये। उदाहरति तदेव तस्या इत्यादिना- हारेण विना अपि निसर्गात् एव हारिणौ तस्या पयोधरौ कस्य विस्मयं न जनयामासतुः= इति पदव्यवस्था।

हारेण= मुक्ताहारं, विना, अपि मुक्तासाम्यभावेऽपि, निसर्गात्= स्वभावात्, एव, हारिणौ= हारयुक्तौ मनोमोहकौ, तस्याः= मत्तकाशिन्याः, पयोधरौ= कुचौ, कस्य= कतमस्य नाम, विस्मयं= आश्चर्यं, न= नैव, जनयामासतुः उत्पादयामासतुः= अपितु जनयामासतुरेवेति।

. तत्र वक्तव्यं कथयति अत्रेत्यादिना— अत्र= काव्येऽस्मिन्, शृङ्गारव्यभिचारी= शृङ्गाररससञ्चारी,

विस्मयाख्यः= आश्चर्यसंज्ञकः, भावः विरोधालङ्कारः= विरोध सोऽविरोधेऽपि विरुद्धत्वेन यद्वच' इति लक्षणः आपततो विरोधप्रत्ययरूप अलङ्कारः, च अपि, प्रतिभासते= द्योतते, इति= इत्थं, विरोधच्छायानुग्राहिणः= विरोधालङ्कारानुप्राणकस्य, श्लेषस्य= श्लेषालङ्कारस्य, अयं= प्रकरणगतः, विषयः= लक्ष्यम्, अनुस्वानोपमव्यङ्ग्यस्य= घण्टानादानुरणनसदृशशब्दशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यस्य, ध्वनेः= ध्वनितत्त्वस्य, तु इति व्यवच्छेदे, न= नैवेति। अत्र हारं विनैव हारवन्ताविति विरोधः किन्तु तस्य मनोहरावित्यर्थकरणे तत्परिहारश्च। स च विस्मयभावश्च अभिधावाच्यौ, भावस्य स्वशब्दवाच्यत्वात् विरोधाभासप्रतीतेश्च अपि' शब्दग्रहणात्। अतो नायं ध्वनेर्विषयः।

शब्दशक्ति के द्वारा प्रत्यक्ष रूप में अर्थात् वाच्यरूप में दूसरे अलङ्कार की प्रतीति जैसे— हार के विना भी स्वभाव से ही हारी (हारयुक्त मनोहर) उसके दोनों स्तन किसके हृदय में आश्चर्य उत्पन्न नहीं करते थे।

यहाँ पर शृङ्गार रस का व्यभिचारी विस्मय नाम का भाव है, और हार के बिना भी हारी कहने से विरोध अलङ्कार भी वाच्य है। अतः यह विरोध की छाया को अनुप्राणित करने वाले श्लेष का विषय है न कि शब्दशक्ति मूल ध्वनि का।

ध्वन्या०— अलक्ष्यक्रमव्यङ्ग्यस्य तु ध्वनेर्वाच्येन श्लेषेण विरोधेन वा व्यञ्जितस्य विषय एव। यथा ममैव—

श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित—

त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः।
विभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्मचक्षुर्दधत्
स्थाने या स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात्।।

ध्वन्या०-- अत्रवाच्यतयैव व्यतिरेकच्छायानुग्राही श्लेषः प्रतीयते।

लीला— किं एतादृशे कोऽपि ध्वनिर्नभवति इत्यपेक्षायां ब्रूते अलक्ष्येत्यादि- वाच्येन= अभिधया साक्षादुक्तेन, श्लेषेण= श्लेषालङ्कारेण, वा= अथवा, विरोधेन= विरोधालङ्कारेण, उभयोरङ्गाङ्गिभावेन, सङ्करस्येत्याशयः व्यञ्जितस्य= व्यञ्जन-याऽवबोधितस्य, अलक्ष्यक्रमव्यङ्ग्यस्य= रसादिरूपस्य, ध्वनेः, तु= इति व्यव-च्छेदे, विषयः= लक्ष्यं, एव= इत्यवधारणे-तत्तु निवार्यत इत्याशयः। यथा= इति निर्दशने, मम= इत्यत्र वृत्तिकारस्य आनन्दवर्धनस्य, एव= इति अवधारणे।

उदाहरति श्लाघ्येत्यादि— सुदर्शनकरः चरणारविन्दललितेन आक्रान्तलोकः चन्द्रात्मचक्षुः, दधत् हरिः श्लाघ्याशेषतनुं सर्वाङ्गलीलाजितत्रैलोक्यां इन्दुरूपं अखिलं मुखं विभ्राणां यां स्वतनोः अधिकां स्थाने अपश्यत् सा रूक्मिणी वः अवतात् इति पदव्यवस्था।

सदुर्शनकरः= सुदर्शनं तदाख्यचक्रं करे यस्य वा सुशोभनं दर्शनं विलोकनं यस्यास्तादृशौ करौ यस्य सः, चरणारविन्दललितेन= चरणौ पादौ एव अरविन्दे कमले तयोर्ललितेन सुन्दरचेष्टया, आक्रान्तलोकः= आक्रान्तो व्याप्तो लोकस्त्रि-भुवनं येन, चन्द्रात्मचक्षुः= चन्द्रः शशी आत्मनि अन्तर्ययोस्तादृशे ये चक्षुषी नेत्रे, दधत्= धारयन्, हरिः विष्णुः, श्लाघ्याशेषतनुं= श्लाघ्याः, सर्वश्रेष्ठत्वेन प्रशस्या अशेषा निखिला, तनु= शरीरं यस्याः सा तां सर्वाङ्गसुन्दरीं, सर्वाङ्गलीला-जितत्रैलोक्यां= सर्वेषामेवाङ्गानामवयवानां लीलया चेष्टतया जितमधः कृतं त्रैलोक्यं त्रिभुवनं यया तां, इन्दुरूपं= चन्द्रसदृशं, अखिलं= समस्तं, मुखं= वदनं= मुखमण्डलमिति, विभ्राणां= धारयन्तीं, यां-स्वतनोः= स्वविग्रहादपि, अधिकां= उत्कृष्टां, स्थाने= युक्ततया, अपश्यत्= दृष्टवान्, सा= तादृशी, रूक्मिणी= तदाख्या श्री कृष्णपट्टमहिषी, वः= युष्मान्, अवतात्= रक्षतादिति।

अत्र सुदर्शनकरः श्लाघ्याशेषतनुं चरणारविन्दललितेनाक्रान्तलोकः सर्वाङ्ग-लीलाजितत्रैलोक्यां चन्द्रात्मचक्षुर्दधत् इन्दुरूपमखिलं विभ्राणां इति कथनाद् व्यतिरेकालङ्कारः यस्य सुदर्शनकरः इत्यस्य द्वयर्थकत्वेन श्लेषश्च पोषकः किन्तु तस्य स्वतनोरधिकामिति शब्देनोक्तत्वाद् वाच्य एव। वृत्तं शार्दूलविक्रीडितं लक्षणं तु :म स ज स ततगाः' इति।

तत्र वक्तव्यमाह अत्रेत्यादिना— अत्र= काव्येऽस्मिन्, व्यतिरेकच्छायानुग्राही= व्यतिरेकपोषकः, श्लेषः, वाच्यतया= वाच्यरूपेण एव-स्वतनोरधिकामिति शब्देन व्यतिरेकस्योक्तत्वात्, प्रतीयते= प्रतीतिमायाति। तेनात्र व्यतिरेकपोषकः श्लेषो

न तु शब्दशक्तिमूलध्वनि:। कवे: रूक्मिणीविषयकरतिभावस्तु ध्वनिरस्त्येव।

तो क्या ऐसे में कोई ध्वनि नहीं होती ? ऐसी आकांक्षा के उत्तर में कहते हैं—

वैसे मे वाच्य श्लेष अथवा विरोध— दोनों के अङ्गाङ्गि भाव होने से सङ्कर के द्वारा व्यञ्जना शक्ति से व्यञ्जित अलक्ष्य क्रमव्यङ्ग्य (रसादि) ध्वनि का विषय तो बन ही जाता है। जैसे मेरा ही (पद्य)—

सुदर्शन है कर में जिसका वा सुन्दर एवं दर्शनीय है कर जिनके चरणरूपी कमलों की चेष्टा से तीनों लोकों को व्याप्त करने वाले, चन्द्रमा है आत्मा जिनके ऐसे नेत्र को धारण करने वाले श्री कृष्ण ने श्लाघनीय है सम्पूर्ण शरीर जिसका, ऐसी, सर्वाङ्गों से लीला से ही तीनों लोकों को जीतने वाली, चन्द्रमा के समान सम्पूर्ण मुख को धारण करने वाली, जिन रूक्मिणी को अपने शरीर से ठीक ही उचित समझा, वे रूक्मिणी आप सबकी रक्षा करें।

यहाँ व्यतिरेक है जिसका पोषण श्लेष से हुआ है एवं 'अपने से अधिक' शब्द से उसके वाच्य होने से शब्दशक्तिमूलक ध्वनि का यह विषय नहीं हो सकता किन्तु रुक्मिणी विषयक रति के व्यञ्जित न होने से भावध्वनि रूप असंलक्ष्यक्रमव्यङ्ग्य ध्वनि का विषय तो है ही।

ध्वन्या०— यथा च—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तम: शरीरसादम्।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्।।

लीला— तथैवोदोहरणान्तरं प्रस्तौति यथा च= एवमपि उदाहरणमुपस्थापयति भ्रमिमित्यादिना-जलदभुजगजं विषं वियोगिनीनां भ्रमिं अरतिं अलसहृदयतां प्रलयं मूर्च्छां तम: शरीरसादं, मरणं च प्रसह्य कुरुत इति पदव्यवस्था।

जलं वारि ददाति वर्षति इति जलदो मेघ: स एव यो भुजग: सर्पस्त-स्माज्जायते उत्पद्यते इति मेघरूपसर्पभवं, विषं= गरलं वर्षा च, वियोगिनीनां= विरहिणीनां, भ्रमिं= घूर्णनं अरतिं= अमनस्कतां, अलसहृदयतां= अनुत्सुकतां, प्रलयं= चेष्टाभाव:, मूर्च्छां= ज्ञानाभाव:, तम:= अज्ञानं, शरीरसादं= तनुपीडां, मरणं= सर्वविधज्ञानचेष्टाहीनत्वं= न तु निधनं तथा सति करुणापत्ते:, प्रसह्य= हठात्, कुरूते= विधत्तं इति। अत्र जलदभुजगेत्यलं रूपकं उपमानोपमेययोरभेदात् विषपदे श्लेषश्च वाच्यतयैव प्रतीयते इति श्लेषस्य विषयो रुपकानुग्राहिणो न तु शब्दशक्ति मूलध्वने: किन्तु वियोगिन्या: स्वप्रियविषयकरतिभावस्तु ध्वनिरेव। अस्य च यथा सर्पदंशे विषसञ्चारेण भ्रम्यादिमरणपर्यन्ता दशा भवन्ति तथैव वर्षाया उद्दीपनत्वेन वियोगिन्यामपि भ्रम्यादिमरणपर्यन्ता विकारा भवन्ति इति पर्यवसितोऽर्थ:। अत्र जलदभुजगेत्यादौ रूपकालङ्कार: एतदर्थं विवशयति यद्विषशब्दस्य द्वावेवार्थो गृह्णीयातां गरलं वर्षा च यत यावदस्य गरलरूपोऽर्थो न गृह्यते तावत्सर्पशब्दस्य वाच्यार्थस्यैव पूर्तिर्निभवति। तदभिधानेन विना अभिधाया

एवासमाप्तत्वात्। अतोऽत्र रूपकानुग्राही श्लेष: न तु शब्दशक्तिमूलध्वनिरिति।

दूसरा उदाहरण भी प्रस्तुत करते है। और यह भी—

मेघ रूपी सर्प से उत्पन्न विष (जल और गरल) वियोगिनियों के लिए चक्कर, उदासीनता, मन का भारीपन, चेष्टा का न होना मूर्च्छा, अन्धेरा छा जाना, शारीरिकि शिथिलता एवं मरण ये सब हठात् कर देता है। जैसे सर्प के काटने के विष से चक्कर से मरण पर्यन्त की दशाएँ होती हैं वैसे ही वर्षा के कारण वियोगिनियों की भी वे ही दशाएँ होती हैं। यहाँ सर्प शब्द के कारण विष शब्द जल अर्थ में ही विश्रान्ति नहीं लेता गरलरूप दूसरा अर्थ भी बताता है क्योंकि उसके बिना अभिधा पूरी नहीं होती। अर्थात् विष का जब तक गरल अर्थ न लिया जाय तब तक सर्प शब्द का वाच्यार्थ पूरा नहीं होता। अत: यहाँ रूपकानुग्राही श्लेष है शब्दशक्तिमूलध्वनि नहीं।

ध्वन्या०— यथा वा—

चमहिअमाणसकञ्चणपङ्कअणिम्महिअपरिमला जस्स।
अखण्डिअदाणपसारा बाहुप्पलिहा व्विअ गइन्दा।।
(खण्डितमानसकाञ्चनपङ्कजनिर्मथितपरिमला यस्य।
अखण्डितदानप्रसरा बाहुपरिघा इव गजेन्द्रा:।। इति छाया)

अत्र रूपकच्छायानुग्राही श्लेषो वाच्यतयैवावभासते।

लीला— एतस्यैवोदाहरणान्तरमुपस्थापयति यथेत्यादिना— यथा= इति निदर्शने, वा= इति विकल्पे-इदमप्युदाहरणस्येति।

उदाहरति 'चमहि' इत्यादि—जस्स (यस्य) चमहिअमाणसकञ्चण पङ्कअ-णिम्महिअपरिमला (खण्डितमानसकाञ्चनपङ्कजनिर्मथित परिमला:) अखण्डिअ-दावणपसारा (अखण्डितदानप्रसर:) बाहुप्पलिआ (बाहुपरिधा) व्विव (इव) गइन्दा (गजेन्द्रा:) इति पदव्यवस्था।

यस्य= राज्ञ:, खण्डितमानसकाञ्चनपङ्कज निर्मथितपरिमला:= खण्डितानि भग्नानि वैरीणां मानसानि मनांसि एव काञ्चनङ्कजानि स्वर्णकमलानि तैर्निर्मथित: प्ररूढ: परिमल: प्रभावो येषान्ते, तादृशा:, अखण्डितदानप्रसरा:= अखण्डिते नैव त्रुटितो दानस्य धनवितरणस्य प्रसरोविस्तारो येषान्ते, तादृशा: बाहुपरिघा:= बाहोभुजा: परिघा लौहयष्टय इव ते, खण्डितमानसकाञ्चनपङ्कजनिर्मथित-परिमला:= त्रोटितमानससरोवरस्वर्णकम- लविजृम्भितगन्धा:, अखण्डदानप्रसरा:= अनवरतमदप्रवाहा:, गजा एवेति। अत्रापि गजेन्द्रशब्दवशात् चमहिअ-परिमल-दान शब्दा: त्रोटनसौरभमदपराश्च बाहुशब्दात् विजृम्भणयशवितरणार्थका अपि।

तत्र वक्तव्यमाह अत्रेत्यादिना— अत्र= काव्येऽस्मिन्, रूपकच्छायानुग्राही= रूपकानुग्राहक:, श्लेष:, वांच्यतया= अभिधयैव वाच्यत्वेन, अवभासते= द्योतत इति नैष शब्दशक्तिमूलध्वनेर्विषय इति।

अत्र च बाहुपरिघा एव गजेन्द्रा इत्यत्र रूपकं मानसादिशब्दगतश्लेषः बाहुगजेन्द्रवशान्मानसादीनां द्वयर्थकत्वात्। उभयोरङ्गाङ्गिभावतया सङ्करो न त शब्दशक्तिमूलध्वनिः। श्लेषश्चात्र रूपकानुप्राणितो यतो रूपकवशादेव मानसादीनां पदानां श्लेषविषयत्वम्।

अथवा एक और उदाहरण यह भी– जिन राजा के खण्डित शत्रुओं के मनरूपी स्वर्णकमल से बढ़ा है प्रभाव जिनके, अटूटदान के क्रम वाले बाहु रूपी परिघ ही तोड़े गए मानस सरोवर के स्वर्णकमलों के गन्ध से सुवासित हैं गन्ध जिनके अनवरत रूप में मद के प्रवाह वाले मत्त हस्ती ही है।

यहाँ 'बाहुपरिघ ही हाथी है' रूपक है और त्रुटित, मानस, परिमल, दान आदि में उसके द्वारा अनुप्राणित श्लेष क्योंकि बाहु एवं गजेन्द्र शब्द के साहचर्य से इन शब्दों में तदनुकूल द्वयर्थकता है इस तरह रूपक के द्वारा अनुप्राणित श्लेष वाच्य के रूप में प्रतीत है अतः यह रूपक एवं श्लेष के सङ्कर का विषय है न कि शब्दशक्तिमूलध्वनि का। किन्तु उसमें भी राजविषयक रति के प्रतीत होने से भावाभासध्वनि तो है ही।

ध्वन्या०– स चाक्षिप्तोऽलङ्कारो यत्र पुनः शब्दान्तरेणाभिहितस्वरूपस्तत्र न शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्व– निव्यवहारः तत्र वक्रोक्त्यादिवाच्यालङ्कार व्यवहार एव।

एवं जातीयकः सर्व एव भवतु कामं वाच्यश्लेषस्य विषय–

लीला– एवं कारिकागतस्य 'आक्षिप्तो' शब्दस्य व्यवच्छेद्यं 'प्रदर्श्य' एवकारस्य व्यवच्छेद्यं दर्शयति सचेत्यादिना– सः= तादृशः, आक्षिप्तः= प्रत्यायितः अलङ्कारः, च= अपि, यत्र= यस्मिन् काव्ये, पुनः= अपरपक्षे, शब्दान्तरेण= अन्यशब्देन, अभिहितस्वरूपः= कथितावस्थितिः, चेत् तत्र= तादृशे काव्ये अपि, शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्य ध्वनिव्यवहारः= शब्दशक्त्युद्भवः अभिधामूलो यः अनुरणनरूपः अनुस्वानसन्निभः व्यङ्ग्यः प्रतीयमानार्थः स एव ध्वनिः तस्य व्यवहारः न नैवेति। तत्र= तादृशे काव्ये तु आक्षिप्तस्याप्यलङ्कारस्य शब्दान्तरेणाभिहिते तु, वक्रोक्त्यादिवाच्यालङ्कारव्यवहारः= वक्रोक्तिः– उक्तस्यान्येनान्यथोक्तिः श्लेषादिना आदिपदात् अन्येषामपि वाच्यालङ्काराणां व्यवहारः। अस्य प्रकरणस्यायमाशयः– यत्रद्व्यर्थकः शब्दः प्रयुक्तो भवेत् तथाऽभिधाया एकस्मिन्नर्थेनियामक हेतुर्न कश्चिदपि स्यात् यथा 'येनेध्वस्त' मित्यादिकाव्ये, तथा च केनापि हेतुना एकार्थस्य नियमनं तु भवति किन्तु तत्रैव एतादृशो हेतुरपि समुपस्थितो भवति येन द्वितीयोऽप्यर्थ अभिधाया एव ससीमायां सन्निविष्टो भवति यथा तस्या विना इत्यादौ, तादृशो विषयो वाच्यश्लेषस्यैव भवति न तु शब्दशक्तिमूलध्वनेः। यत्राभिधायाः नियमहेतुः प्रकरणादिविद्यते येनाभिधा द्वितीयस्मिन्नर्थे नैव

सङ्क्रामति तत्र द्वितीयोऽर्थ आक्षिप्त इत्युच्यते। आक्षिप्तेऽपि एतादृक् शब्द: स्यात् येन तादृशामिधानियामक: प्रकरणादिरवहतशवितक: क्रियते यत्कृते बाधिताप्यभिधा। प्रतिपत्पूतेव भवति तत्रापि नैव ध्वनेर्विषय किन्तु वक्रोक्त्यादीनामेव। तत कारिकायां प्रयुक्त 'एव' शब्द आक्षिप्तस्यैव ग्रहणाय आक्षिप्ताभासनिराकरणाय चेति। तदेवोदाहरति— यथा= इति निदर्शने, उदाहरणं प्रस्तौति दृष्टयेत्यादि- हे केशव ! मया, गोपरागहृतया दृष्ट्या किञ्चित् न दृष्टं तेन एवं स्खलिता अस्मि, हे नाथ ! पतितां किन्नाम न आलम्बसे खिन्नमनसां सर्वाबलानां विषमेषु त्वं एक: गदित: गोप्या गोष्ठे एवं सलेशं गदित: हरि: व: चिरं अवतात् इति पदव्यवस्था।

हे केशव ! = हे हरे ! मया, गोपरागहृतया= गवां पराग: खुरोद्धतधूलिस्तेनहृतया आवृतया, दृष्ट्या= विलोचनेन, किञ्चित्= किमपि, न, दृष्टं= विलोकितं, तेन= हेतुना, एव, स्खलिता= पतिता, अस्मि, हे नाथ ! पतितां= मार्गेस्खलितां, मां, किंनाम= किमर्थं, न, अवलम्बसे= आश्रयो भवसि, हस्तेन गृह्णासि, खिन्नमनसां= गन्तुमशक्तानामुत्साहाभावात्, सर्वाबलानां= सर्वविधानामेव बलरहितानां बालवृद्धाङ्गनादीनां, विषमेषु= निम्नोन्नतेषु प्रदेशेषु, त्वं= भवान्, एक:= अनन्य:, एव, गति:= आश्रय:, एवं= इत्थं, गोष्ठे= गोव्रजे, गोप्या= गोपकुमार्या, सलेशं= ससूचनं, साभिलाषं, गदित: उक्त:, हरि:, व:= युष्मान्, चिरं= बहुकालं, अवतात्= रक्षतात् इति। अत्रव सर्वेषामेव त्वं गतिरिति प्रकरणेन निरुद्धाया अभिधाया: 'सलेशं' इत्यनेन पुन: प्रत्युज्जीविता द्वितीयमप्यर्थ प्रकाशयति। स च यथा केशवगोपरागहृतया= केशवगेन उपरागेण हृतया वा हे केशव ! हे गोप ! रागहृतया दृष्टया, स्खलिता= खण्डितकौमार्या, पतितां= कौमार्ये एव त्वां भर्तृभावेन प्राप्तां, खिन्नमनसां= कामपीडितत्वेनालसहृदया, सर्वावलानां सर्वविधनारीणां, गति:= नारीत्वसफलकारको युवा, जीवितरक्षोपाय:-त्वमेव मे कामविधुरचित्ताया: शरणमित्याशय:। अत्र द्वितीयोऽप्यर्थ: सलेशमिति पदेन प्रत्यज्जीविताया अभिधाया एव विषय:। तेना त्रालङ्कारस्य वाच्यतैव भवति। अतो नासौध्वनेर्विषय:। एवं रसादावपि स्वशब्दवाच्यया नाभिमता। संयोगादिभिर्वक्तुस्तात्पर्ये नियमिते सति द्वितीयेऽर्थेऽभिधा नैव प्रसरति तदा द्वितीयाऽर्थो व्यञ्जनया बोध्यते स एव ध्वनेर्विषयो भवति शब्दशक्तिमूलस्य। अनियन्त्रितायामभिधायां तु द्वावेवार्थौ आभिधेयौ भवत:। स तु वाच्यालङ्कारस्य विषयो भवति इति। प्रकरणमुपसंहरति एवमित्यादिना- एवञ्जातीयक:= इत्यम्प्रकारक:, सर्व:= निखिल:, एव, वाच्यश्लेषस्य= वाच्यावबोधितश्लेषालङ्कारस्य:, विषय:= लक्ष्यं, कामं= यथेच्छं, भवतु= स्यादेवेति।

इस तरह कारिका में दिए हुए 'आक्षिप्त' शब्द का विवेचन कर अब उसी में

दिएहुए 'एव' शब्द का विषय बताते हैं- (आक्षिप्त का आशय पूर्णतया आक्षिप्त है न कि आक्षिप्ताभास)

वह आक्षिप्त अलङ्कार भी जहाँ फिर किसी दूसरे शब्द से अभिहित होता है वहाँ शब्दशक्ति से जन्य अनुरणन रूप व्यङ्ग्य ध्वनि का व्यवहार नहीं होता। वैसी जगह पर तो वक्रोक्ति आदि वाच्यालङ्कार का ही व्यवहार होता है। जैसे—

हे केशव ! गोधूलि से दृष्टि ढके जाने के कारण में कुछ नहीं देख पाई, इसलिए मैं गिर गई हूं, गिरी हुई को आप क्यों नही सहारा देते। विषम स्थलों में कमजोर दिल वालों समस्त दुर्बलों का एक मात्र सहारा हो। इस प्रकार कोष्ठ में गोपों के द्वारा विशेष अभिप्राय से कहे गए हरि आप सबकी बहुत समय तक रखा करें।

दूसरा अर्थ यह है—

हे केशव ! हे गोप ! प्रेम से अन्धी बनी दृष्टि के कारण मुझे उचित, अनुचित का ज्ञान नहीं हुआ, इसलिए मैं चूक गई हूँ, हे नाथ ! आप क्यों मुझ पतित को नहीं उठाते ? खिन्न मन वाली सभी नारियों के लिए कठिनाइयों में आप ही एक सहारा हैं...........।

यहाँ प्रकरण से तो पहला अर्थ मात्र बोधित था उसके बाद अभिधा बाधित होती जाती थी किन्तु 'विशेष अभिप्राय' शब्द से फिर अभिधा का प्रत्युद्धार हो गया और दूसरा अर्थ भी उसी का विषय बन गया है। अतः यहाँ शब्द शक्ति मूलक ध्वनि न होकर वाच्यालङ्कार की विषय है।

इस प्रकार के सभी विषय वाच्यश्लेष के ही विषय भले ही बने रहें। कहने का आशय यह है कि जिस वाच्य में दो अर्थ होते हैं उनमें से दोनों वस्तुपरक होने से वह श्लेष का विषय होता है। यदि दूसरा अर्थ अलङ्कार हो तो वह ध्वनि का विषय हो सकता है यदि वह वाच्य न हो और शब्दों के द्वारा आक्षिप्त हो। आक्षिप्त भी इस प्रकार हो कि उसमें किसी प्रकार से अभिधा, गम्य होने की सम्भावना न हो, आक्षिप्ताभास नहीं हो।

**ध्वन्या०— यत्र तु सामर्थ्याक्षिप्त सदलङ्कारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः। यथा—**

**'अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः।'**

लीला— इत्थं विप्रतिपत्ति निराकरणाय श्लेषालङ्कारस्य लक्ष्यं पृथाङ्निश्चित्य सम्प्रति शब्दशक्ति मूलध्वनेर्विषयं प्रतिपादयति यत्रेत्यादिना-यत्र= यस्मिन् काव्ये तु= इति पक्षान्तरोपस्थापने, शब्दशक्त्या= व्यञ्जनया, सामर्थ्याक्षिप्तं= सामर्थ्याक्षिप्तं, न तु साक्षादुक्त सत्, अलङ्कारान्तरं= अलङ्कारविशेषं, प्रकाशते= द्योतते, सः= तादृशः, सर्वः= निखिलः, एव, ध्वनेः= शब्दशक्तिमूलानुरणनात्मकव्यङ्ग्यस्य, विषयः= लक्ष्यमिति। तदिदमुक्तं भवति-यत्रद्वितीयमर्थं प्रतिसङ्केतमात्रं स समासोक्तिपर्यायोक्ताप्रस्तुतप्रशंसादीनां विषयः, यत्र शब्दस्य द्व्यर्थकताबलादेकोर्थोऽपराभिन्नारोपितो भवति स रूपकस्य विषयः यत्र शब्दबलात्प्रस्तु-

ताप्रस्तुतयोर्बोधस्तत्र यदि द्वयोःप्रस्तुतयोर्द्वयोर्वाऽप्रस्तुतयो रेकधर्मे सम्बन्धस्तुल्ययोगिताया विषय:, तत्रैव प्रस्तुता प्रस्तुतयो: सम्बन्धो दीपकस्य विषय:, एवमेव द्वयर्थकताबलात्प्रस्तुताप्रस्तुतयो: सादृश्यकथनमुपमाया विषय:, यत्रोभावेवाथौ प्रस्तुतौ द्वयोश्च भिन्नार्थकता समानकोटिकता च, संयोगादिभिर्नियामकैर्नाभिधाया नियन्त्रणं च स श्लेषस्य विषय। यत्र च प्रयुक्तशब्दवशादेव प्राकरणिकार्थस्य पूर्तिर्भवति साच स्वपूर्णतायै अर्थान्तरं नैवापेक्षते तदा य: सहृदयहृदयेषु द्वितीयोऽर्थ: प्रतीयते स एव शब्दशक्तिमूलध्वनेविषय:। यथोक्तं काव्यप्रकाशे—

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्वयापृतिरञ्जनम्।।

संयोगाद्यश्च यथा–

"संयोगो विप्रयोगश्च साहचर्य विरोधिता।
अर्थ: प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधि:।
सामर्थ्यमौचिती देश: कालो व्यक्ति: स्वरादय:।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव:।"

संयोगादिर्भिप्राकरणिकेऽर्थे एव अभिधायां नियन्त्रितायां व्यञ्जना वशाद्योऽपरोऽर्थ: प्रतीयते स एव शब्दशक्तिमूलध्वनेर्विषया इति पर्यवसितोऽर्थ:। यथा इति निदर्शने।

तदेवोदाहरति अत्रान्तरइत्यादिना— अत्रान्तरे= एतन्मध्ये, कुसुमसमययुगं= कुसुमानां पुष्पाणां समयुगं कालद्वन्द्वं चैत्रवैशाखसंज्ञितं मासद्वयं, उपसंहरन्= समापयन्, फुल्लमल्लिकाधवलाट्टहास:= फुल्ला विकासिता या मल्लिका तदाख्यपुष्पं तस्या: धवलाट्टह्यापण: हास: विकासो यत्र तादृश:, ग्रीष्मामिधान:= ग्रीष्मसंज्ञक:, महाकाल:= महान् दिनदैर्घ्यात्मक: प्रचण्डश्चासौ काल: समय:, अजृम्भत= उल्लसितवानिति प्राकरणिकाऽर्थोऽभिधेय:। अभिधा न ऋतुवर्णनप्रस्तावनियन्त्रिता। तदन्तरं योऽर्थावगति: साध्वननव्यापारादेव शब्दशक्तिमूलात्। सोऽर्थश्च शिवपक्षीयो यथा। अत्रान्तरे= एतदन्तराले, कुसुमसमययुगं= सुमनोहरकालं सत्यादिकं, उपसंहरन्= नाशयन्, फुल्ला विकसिता या मल्लिका तद्वत् धवल: श्वेत: अट्टहासो यस्य स:, ग्रीष्मभिधान:= अभक्तानामसुराणाञ्च कृते ग्रीष्मवत्प्रचण्ड अतएवतत्संज्ञक: महाकाल:= सङ्कर:, अजृम्भत= समुल्लसितवानिति।

सन्त्यत्र बहवो मतभेदा यानधिकृत्य लोचनकृता साधु व्याख्यातमस्ति। तस्य सारंत्विद मेव यद् यत्र शब्दस्य उभावेवार्थौ परस्परमसम्बद्धैव प्रतीतौ भवत: स ध्वने विषय:, किन्तु उभयार्थसम्बन्धसाधके शब्दे विद्यमाने तु उभयार्थस्यैवे वाच्यता भवति। यथा दृष्टया केशव इत्यादौ 'सलेश' शब्द:।

महिमभट्टस्त्विदं समासोक्तेरुदाहरणं मन्यते। किन्तु समासोक्तौ केवलं विशेषणसाम्यमेव, उपमाध्वनौ तु श्लेषमूलकं विशेष्यसाम्यम्। समासोक्तौ व्यङ्ग्यार्थस्य गौणत्वाद्वाच्यार्थ एव चारुत्वपर्यवसायी भवति किन्तु उपमाध्वनौ तस्य प्राधान्याद् व्यङ्ग्यार्थ एव तत्पर्यावसायी। अत्र च श्लेषमूलक विशेष्यसाम्यात् ग्रीष्मवर्णनापेक्षया महाकालेन सह तस्य सादृश्यकल्पनैव चमत्कृतौ हेतुरिति सिद्ध्यति अस्य ध्वनेर्विषयत्वमुपमाध्वनित्वेन।

इस प्रकार पहले श्लेष अलङ्कार के विषय के निरूपण के द्वारा विप्रतिपत्ति का निरास कर अब शब्दशक्तिमूलक ध्वनि के विषय का प्रतिपादन करते हैं—

जहाँ तो शब्दशक्ति के द्वारा सामर्थ्य से आक्षिप्त होता हुआ दूसरा अलङ्कार प्रकाशित होता है, वह सब ध्वनि का विषय होता है।

जैसे— 'इसी बीच में कुसुमसमय युग का उपसंहार करते हुए फुल्ल मल्लिकाध वला ट्टहास वाला ग्रीष्म नाम का महाकाल प्रवृत्त हुआ।

इसका प्राकरणिक अर्थ है ग्रीष्म का वर्णन। उसके पक्ष में इसका अर्थ है कुसुमसमययुग अर्थात् फूलों का समय वाला दो मांस-चैत्त-वैशाख-का समय उसका उपसंहार करते हुए खिली हुई नवमल्लिका के अगों को सुन्दर बनाने वाला विकास है जिसमें ऐसा लम्बे-लम्बे दिन वाला ग्रीष्म नाम का समय प्रवृत्त हुआ।

इसके बाद सहृदयों में जो अर्थ अवभासित होता है वह है शिवपरक अर्थ। द्वितीय पक्ष में इसका अर्थ है- इसी बीच में फूलों के समान सुन्दर सत्य त्रेता आदि युगों का उपसंहार करते हुए खिली हुई मल्लिका के समान सफेद है अट्टहास जिसका ऐसे दुष्टों के लिए ग्रीष्म कहे जाने वाले भगवान महाकाल प्रवृत्त हो गए।

यहाँ पर जो ग्रीष्म ऋतु परक अर्थ है उसको बता कर प्रस्ताव के कारण अभिधा नियन्त्रित हो जाती है और उसके बाद का जो शिव परक अर्थ है उसकी प्रतीति ध्वनन व्यापार के द्वारा ही होती है और दोनों अर्थो के बीच में सम्बन्ध बताने वाला कोई भी शब्द नहीं है जिससे दूसरे अर्थ को भी वाच्यता सिद्ध हो जाय अतः यह ध्वनि का विषय है।

यहाँ पर यह भी समझ लेना आवश्यक है कि संयोग आदि से अभिधा के नियन्त्रित हो जाने पर भी किसी कारण अभिधा का प्रतिप्रसव (फिर से प्रवृत्त होना) माना जाय तो भी दो अर्थों के बीच में जो रूपण वा उपमानोपमेयभाव है उसकी प्रतीति तो कदापि अभिधा से नहीं होती और वह व्यञ्जना का ही क्षेत्र होता है।

और, यह भी ध्यान में रखने योग्य है कि जहाँ शब्द के दो अर्थ होते हैं और उन दोनों के बीच में सम्बन्ध को बतलाने वाला कोई शब्द नहीं है तो वह ध्वनि का विषय होता है। उस प्रकार शब्द से ही दोनों का सम्बन्ध बताए जाने से तो दूसरा अर्थ भी वाच्य ही होता है। अतः वह ध्वनि में नहीं आता।

ध्वन्या०— यथा च—

उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम्॥

लीला— शब्दशक्तिमूलध्वनेर्विवेचनाय द्वितीमपि उदाहरणं प्रस्तौति यथेत्यादि— यथा= इति निदर्शने, च= अपि–इदमस्त्युदाहरणान्तरमिति।

उदाहरणं प्रस्तौति उन्नतइत्यादि— उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः पयोधरभरः तन्व्या अभिलाषिणं न चक्रे इति पदव्यवस्था।

उन्नतः= गगने उपर्युपरिगतः, प्रोल्लसद्धारः= प्रोल्लसन्तो निस्सरन्ती धारा जलप्रपातो यस्मात् सः, कालागुरुमलीमसः= कालागुरुवन्मलीमसः श्यामः, पयोधरभरः= मेघसमूहः, तन्व्याः= वरविग्रहाया विषये, कं= कतमं नाम, अभिलाषिणं= सस्पृहं न, चक्रे= विदधे अपितु सर्वानेव चक्रे इत्यस्य प्राकरणिकोऽर्थो वर्षावर्णनपरो यत्र प्रस्तावशादभिधाया नियन्त्रणं भवति ततश्च यो द्वितीयोऽर्थः स च तदोरूपमानोपमेयभावश्च व्यञ्जनयैव बोध्यते। स चेत्यम्–तन्व्याः= वरविग्रहायाः, उन्नतः= यौवनेनोत्थितः, प्रोल्लसद्धारः= विलसन्मौक्तिकहारः, कालागुरुमलीमसः= कालागुरुणा तल्लेपने मलीमसः श्यामवर्णः, पयोधरभरः= कुचभारः, कं अभिलाषिणं= आकर्षितं, न करोति इति। तेनेदमपि ध्वनेरुदाहरणम्। अत्र पयोधरभरस्तन्व्याः' इत्यादिवाक्यद्वारैव द्वितीयोऽर्थोऽक्षिप्यते। तेन नायमुपमा–ध्वनेर्बिषय इति महिमभट्टमतम्। किन्तु तादृशाक्षेपो नैव सहृदयसंवेद्य इति द्वितीयार्थस्य व्यञ्जनाबोध्यत्वमेव मतम्।

शब्दशक्तिमूलध्वनि का ही दूसरा उदाहरण प्रस्तुत करते है। जैसे यह भी—

उन्नत प्रोल्लसद्धार कालागुरुमलीमास पयोधर भर कृशाङ्गी के विषय में किसको उत्कण्ठित नहीं करता अपितु सबको करता है।

इसके दो पक्ष माने गए हैं पहला वर्षा वर्णन प्राकरणिक और दूसरा स्तन वर्णन आक्षिप्त।

वर्षा वर्णन में पक्ष में यह है कि आकाश में ऊपर न उठे हुए, जल की धाराओं से विलसित, कालागुरु जैसा श्याम पयोधर भर अर्थात् पानी को धारण करने वाले मेघों का समूह कृशाङ्गी की और किसको आकर्षित नहीं करता अर्थात् सबको प्रिया मिलन के प्रति उत्कण्ठित बना देता हैं

स्तन पक्ष का अर्थ है— कृशाङ्गी के यौवन से उभरे हुए लुठते हुए हार वाले काला गुरु के लेपन से श्याम बने पयः अर्थात् दूध को धारण करने वाले स्तनों का भार किसको अपनी ओर लालायित नहीं करता अपितु सबको करता है।

यहाँ वर्षावर्णनपर प्राकरणिक अर्थ में प्रस्ताव से अभिधा के नियन्त्रित हो जाने के बाद जो सहृदय संबेद्य दूसरा अर्थ है वह प्रथम अर्थ से असम्बद्ध रहने के कारण ध्वनि (उपमा ध्वनि) का विषय बन जाता है।

**ध्वन्या०— यथा वा—**

दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः,
पूर्वाह्णे विप्रकीर्णा दिशि विरमत्यह्नि संहारभाजः।

दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो,
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु।।

लीला— शब्दशक्तिमूलध्वनेस्तृतीयमप्युदाहरण प्रस्तौति यथेत्यादिना— यथा= इति निदर्शने, वा इति विकल्पे।

उदाहरणमुपस्थापयति दत्तानन्दा इत्यादि— समुचितसमयाकृष्टसृष्टैः पयोभिः प्रजानां दत्तानन्दाः पूर्वाह्ने दिशि दिशि विप्रकीर्णाः अह्नि विरमति संहारभाजः दीर्घदुःखप्रभवभयोदन्वदुत्तारनावः दीप्तांशोः गावः वः पावनानां अपरिमीता प्रीतिं परं उत्पादयन्तु इति पदव्यवस्था।

समुचितसमयाकृष्टसृष्टैः= समुचित उपयुक्तश्चासौ समयः कालः तदा आकृष्टैः गृहीतैः, सृष्टैर्मुक्तैश्च ग्रीष्मादिकाले गृहीतैवर्षाकाले मुक्तैः पयोभिः जलैः, प्रजानां= जनानां, दत्तानन्दाः= कल्पितामोदाः, पूर्वाह्णे= अह्नः= प्रथमप्रहरे, दिशिदिशि= सर्वास्वेवदिक्षु, विप्रकीर्णा= विक्षिप्ताः, अह्नि= दिवसे, विरमति= अवसानं गच्छति सति, संहारभाज= समाक्षिप्ताः, दीर्घदुःख प्रभवभवभयोदन्वदुत्तारनावः दीर्घं बहुकालब्यापि यद् दुःखं कष्टं जन्ममरणादिकं तस्य प्रभवः योनि यो भवः विश्वं तस्य यद्भवं तदेव उदन्वान्समुद्र स्तस्योत्तारे पारगमने नावो नौकारूपाः दीप्तांशोः= सूर्यस्य, गावः= किरणाः, पावनानां= पवित्राणां, वः= युष्माकं, अपिरिमितां= अपरिच्छिन्नां, प्रीतिं= आनन्दं, परं= अत्यन्तं, उत्पादयन्तु= जनयन्तु= इत्यस्य प्राकरणिकोऽर्थो वाच्यः। एवं प्रकरणवशात्प्रस्तावेन सूर्यकिरणेऽर्थेमिधायां नियन्त्रितायां यदपरो धेनुरूपोऽर्थः सहृदयहृदये व्यज्यते एव व्यङ्ग्यरूपों ध्वनिर्विषयः। स चेत्थम्, समुचिसमयाकृष्टसृष्टैः= शष्पजलादिग्रहणावसरे रसरूपेणाकृष्टैः पश्चाद् दोहनकाले मुक्तैः, पयोभिः= दुग्धविन्दुभिः, प्रजानां= जनानां, सन्ततेश्च, दत्तानन्दाः= सम्भावितादर्षाः, पूवाह्णे= दिवसप्रथमभागे, दिशि दिशि= विभिन्नहरित्सु विप्रकीर्णाः= शष्पचरणार्थ प्रसृताः, अह्नि= दिवसे, विरमति= अवसानं गच्छति सति, संहार भाजः= एकत्र गोष्ठे आगत्य स्थिताः, गावः= धेनवः शेषं समानमेवेति। अत्र गोशब्दस्य अनेकेष्वर्थेषु, सत्स्वपि संस्कारवशाद्बुद्धो धेनेरूपोऽर्थः उपारूढो भवति विशेषणानि च तत्समर्थकानि। तेन धेनुरूपार्थस्यापलापो यन्महिमभट्टेन चिन्तितं तन्नैव ग्राह्यम्। अत्र प्राकरणिकः सूर्यकिरणपरकोऽर्थः संस्कारवशाद् द्वितीयो धेनुपरकोऽर्थश्चोभौ परस्परमुपमानोपमेयभावकल्पनया असम्बद्धार्थकता निराक्रियते।

शब्दशक्तिमूलक ध्वनि का तीसरा उदाहरण भी प्रस्तुत करते हैं। अथवा जैसे—

समुचित समय पर गृहीत एवं मुक्त जल से जनों को आनन्दित करने वाली पूर्वाह्न में विभिन्न दिशाओं में बिखरने वाली और दिन के अवसान में संहृत होने वाली, अपार दुःख का कारण बने संसार के भय रूप सागर को पार करने के लिए

नाव बनने वाली सूर्य की किरणें पवित्र हृदय वाले आप सब में अपरिमित प्रेम का अत्यन्त उत्पादन करें।

प्रस्तुत पद्य के सूर्यस्तुति से सम्बद्ध होने के कारण यह उसका प्राकरणिक अर्थ है और उसको समर्पित कर प्रस्ताव के कारण अभिधा रुक जाती है। उसके बाद संस्कारवश सहृदयों में उसका गाय रूप अर्थ उत्पन्न होता है जो इस प्रकार है—

समुचित समय पर घास से रस लेकर दोहन काल में मुहु दूध से जनों एवं बछड़ों को आनन्द देने वाली, पूर्वाह्न में एकत्र होकर रहने वाली, अपार दु:ख के कारण बने संसार के भय रूपी समुद्र को पार करने में नौका रूप गायें पवित्र हृदय वाले आप सब में अपरिमित प्रेम का अत्यन्त उत्पादन करें।

इस प्रकार संस्कारवश उत्पन्न दूसरे अर्थ का पहले अर्थ के साथ उपमानोपमेय भाव की कल्पना की जाती है जो कि व्यञ्जना वृत्ति से ही सम्भव है। अत: वह भी शब्दशक्तिमूलक ध्वनि का विषय है।

ध्वन्या०— एषूदाहरणेषु शब्दशक्त्या प्रकाशमाने सत्प्राकरणिकेऽ-र्थान्तरे वाक्यस्यासम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदित्यप्राकरणिकप्राक-रणिकार्थयोरुपमानोपमेयभाव: कल्पयितव्य: साम[र्थ्या]दित्यर्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति विभिन्न एव श्लेषा[दनु]स्वानोपमव्यङ्ग्यस्य ध्वनेर्विषय:।

लीला— प्रकरणे पर्यवसितं निर्दिशति एष्वित्यादिना— एषु= प्रागुक्तस्थापितेषु, उदाहरणेषु= निदर्शनेषु, शब्दशक्त्या= अभिधया प्राकरणिकार्थ बोधनानन्तरमभि-धामूलव्यञ्जनया, अप्राकरणिके= प्रकरणभिन्ने संस्काररूपे, अर्थान्तरे= द्वितीयाऽर्थे, प्रकाशमाने= प्रतीते, सति, वाक्यस्य, असम्बद्धार्थाभिधायित्वं= अनन्वितार्थबो-धकत्वं, मा, प्रसाङ्क्षीत्= प्रसज्येत, इति= हेतो:, सामर्थ्यात्= शब्दसामर्थ्यात्, अप्राकरणिकप्रारणिकार्थयो:= अप्रस्तुतप्रस्तुतार्थयो:, उपमानोपमेयभाव:, कल्प-यितव्य: इति अर्थाक्षिप्त:= अर्थादाक्षिप्त:, अर्थ:= प्रकरणगत:, श्लेष:, न, शब्दोपारूढ:= शब्दनिष्ठ:, इति= इत्थं, अनुस्वानोपमव्यङ्ग्यस्य= घण्टानुरणस्व-रूपप्रतीयमानार्थस्य, ध्वने:, विषय:= लक्ष्यं, श्लेषात्= श्लेषालङ्कारात्, विभिन्न:= पृथक्, एवेति। अस्यायमाशय:= अभिधया प्रकाशिते प्राकरणिके तन्मूलव्यञ्जनया प्रकाशितेऽप्राकरणिके चार्थेऽसम्बद्धता दोषहानाय सहृदयसंवेद्यतानिर्वाहाय च, तयोरूपमानोपमेयभाव: कल्प्यते यत्र प्रस्तुतत्वाद्वाच्य उपमेय: अप्रस्तुतत्वाद्व्यङ्ग्य उपमान् भवति यत: सर्वऽथासम्बद्धे प्रकृताप्रकृतार्थेनैव संवेद्यता सम्भव:। श्लेषोऽप्यत्र सामर्थ्या क्षिप्तोऽर्थात् व्यञ्जनगम्यस्तेन अर्थाक्षिप्तो एव वाच्यश्लेष-वत्सर्वथा नैव शब्दाधीन: तेन शब्दशक्तिमूलध्वने: श्लेषाद्भिन्ने एव विषय:

प्रकरण से सिद्ध बात का उपसंहार करते हैं— इन तीनों उदाहरणों में शब्दशक्ति से अप्राकरणिक अर्थान्तर के प्रकाशित होने पर वाक्य का असम्बद्ध अर्थ का

प्रतिपादन कहीं प्रसक्त न हो जाय इस लिए सामर्थ्य अर्थात् ध्वनन व्यापार से अप्राकरणिक एवं प्राकरणिक अर्थों का उपमान उपमेय भाव कल्पित कर लिया जाना चाहिए इसमें श्लेष अर्थ के द्वारा आक्षिप्त होता है और शब्द के द्वारा उपारूढ नहीं होता इस प्रकार घण्टानुरणन रूप इस ध्वनि का विषय श्लेष से सर्वथा भिन्न होता है।

ध्वन्या०— अन्येऽपि चालङ्काराः शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्ये ध्वनौ सम्भवन्त्येव। तथा हि विरोधोऽपि शब्दशक्तिमूलानुस्वानरूपो दृश्यते। यथा स्थाण्वीश्वरख्यजनपदवर्णने भट्टबाणस्य—

'यत्र च मातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च धवलद्विजशुचिवदनाः मदिरामोदिश्वसनाश्च प्रमदाः।

ध्वन्या०— अत्र हि वाच्यो विरोधस्तच्छायानुग्राही वा श्लेषोऽयमिति न शक्यं वक्तुम्। साक्षाच्छब्देन विरोधालङ्कारस्यप्रकाशितत्वात्। यत्र यत्र अहि साक्षाच्छब्दावेदितो विरोधालङ्कारस्तत्र हि श्लिष्टोक्तौ वाक्यालंङ्कारस्य विरोधस्यश्लेषस्य विषयत्वम्।

लीला— एवं वाच्यश्लेषस्य श्लेषानुप्राणितोपज्ञा ध्वनेश्च विषयं पृथक्तया निर्दिश्य सम्प्रति शब्दशक्तिमूलध्वनौ उपमेतरालङ्काराणामपि स्थितिं निर्दिशति अन्येऽपीत्यादिना— शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्ये= शब्दशक्तिमूलानुरणनरूपप्रतीयमानेऽर्थे, ध्वनौ, अन्ये= इतरे, अपि, अलङ्काराः= उपमेतराः, अपि, सम्भवन्ति, एव। न केवलमुपमाऽपितु अन्येऽप्यलङ्काराः शब्दशक्तिमूलध्वनेर्विषयतामायान्त्येव। तथा हि= इति निदर्शने, विरोधः= अविरुद्धेऽपि विरोधप्रतीतिरूपोऽलङ्कारः, अपि= च-उपमावदिति, शब्दशक्तिमूलानुस्वानरूपः= शब्दशक्तिसमद्भवानुरणनात्मक प्रतीतो दृश्यते। उपमाध्वनिरिव विरोधध्वनिरपि भवत्येव। तदेवोदाहरति यथेत्यादिना- यथा= इति निदर्शने, स्थाण्वीश्वराख्यजनपदवर्णने, भट्टबाणस्य कृतौ। उदाहरणं प्रस्तौति यत्रेत्यादि—यत्र= यस्मिन् स्थाने, च, प्रमदाः= मत्तगामिन्यः, मत्तमातङ्गगामिन्यः= क्षीवश्वपचगमनशीलः, शीलवत्यः= सद्वृत्तसदाचारयुताः, च इति विरोधः मत्तगजेन्द्रगतय इति तत्परिहारः, गौर्यः= पार्वत्यः, विभवरताः= भवभिन्नेरता च इति विरोधः गौरवर्णा धनेरताश्चेति विरोधपरिहारः, श्यामाः कृष्णवर्णाः, पद्मरागिण्यः= कमलवद्रोहितवर्णाः चेति विरोधः श्यामा षोडशवार्षिक्य इति तत्परिहारश्च, धवलद्विजशुचिवदनाः= शुद्धविप्रवत् शुद्धमुखाः, मदिरामोदिश्वसनाः= मदिरासुगन्धिश्वासाः च इति विरोधः श्वेतदन्तैः स्वच्छवदना इति विरोधपरिहारः, चेति।

अत्र च विरोधालङ्कारेऽर्थद्वयाभासः शब्दशक्युद्भवानुरणदरूपव्यङ्ग्यं विना न सम्भवति।

तत्र वक्तव्यं कथयति अत्रेत्यादिना— अत्र= कथनेऽस्मिन्, हि= इति वाक्यालङ्कारे, वाच्य:= वाच्यत्वेन विवक्षित:, विरोध:= विरोधालङ्कार:, वा= अथवा, तच्छायानुग्राहि= विरोधानुग्राहक: श्लेष:, अयं, इति, वक्तुं= कथयितुं, न, शक्यं, शब्देन, विरोधालङ्कारस्य, साक्षात्= प्रत्यक्षमेव अप्रकाशितत्वात= अप्रकटीकृतत्वात्यत्र= यस्मिन् काव्ये, हि साक्षाच्छब्दावेदित: शब्दप्रकटित:, विरोधालङ्कार: तत्र= तादृशे स्थले, हि शिलष्टोक्तौ= शिलष्टकथने, वाच्यालङ्कारस्य विरोधस्य वा श्लेषस्य, विषयत्वं= लक्ष्यत्वम्। अस्यायमशय:= यस्मिन् श्लेषवति काव्ये शब्देन सक्षाद्विरोधाभासीऽभिधीयते तत्र वाच्यस्य श्लेषविरोधयो: सङ्करस्य विषयतेति।

इस प्रकार वाच्यश्लेष से अनुप्राणित उपमा ध्वनि के विषय के पार्थक्य का निरूपण कर शब्दशक्तिमूल ध्वनि में उपमा से इतर अलङ्कारों की भी स्थिति का निर्देश करते हैं— (श्लेषोपमा की तरह) अन्य अलङ्कार भी शब्दशक्तिमूलक अनुरणनरूप व्यङ्ग्य ध्वनि में सम्भव हैं। वह इस प्रकार विरोध अलङ्कार भी शब्दशक्तिमूलक अनुरणनरूप देखा जाता है।

उदाहरण देते हैं— जैसे स्थाण्वीश्वर नामक जनपद के वर्णन में भट्टबाण का—जहाँ पर प्रमदाएँ मातङ्गगामिनी—चाणपल के साथ गमन करने वाली शील सादाचार वाली भी, गौरी, विभवरत भी—विभव अर्थात् भव अर्थात् शङ्कर भिन्न रत श्यामा कमल जैसे रक्त वर्ण वाली शुद्ध द्विज के जैसे पवित्र वदन वाली, मदिरा से सुगन्धित श्वास वाली भी थी।

इस तरह के विरोधाभास का परिहार होता है मातङ्ग, विभव, श्यामा द्विज शब्द का क्रमश:, हाथी, ऐश्वर्य, युवति, दाँत अर्थ करने से।

इसमें पर्यवसित अर्थ को बताते हैं—

यहाँ पर विरोध या उसकी छाया के अनुगग्राहक श्लेष वाच्य है, यह तो कहा नहीं जा सकता क्योंकि विरोध शब्द के द्वारा साक्षात् प्रकाशित नहीं किया गया है। जहाँ पर विरोधालङ्कार साक्षात् शब्द के द्वारा अभिहित हो वहाँ पर शिलष्ट कथन में वाच्यालङ्कार विरोध या श्लेष का विषय होता है।

ध्वन्या०— यथा तत्रैव—

''समवाय इव विरोधिनां पदार्थानाम्। तथाहि— सन्निहितबालान्धकारापि भास्वन्मूर्ति:।'' इत्यादौ।

यथा वा ममैव—

सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम्।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम॥

अत्र हि शब्दशक्तिमूलानुस्वानरूपो विरोध: स्फुटमेव प्रतीयते।

लीला— समन्वय......विरोधस्य विषयमुदाहरति यथेत्यादिना— प्रतीयते।

इति निदर्शने, तत्रैव= बाणभट्टस्य हर्षचरिते, विरोधिनां= परस्परविरुद्धानां पदार्थानां= वस्तूनां, समवाय:= समूह इव= यथा। तथाहि, सन्निहित बालान्धकारा= निकटस्थ-नूतनान्धकारा अपि= भास्वन्मूर्ति:= सूर्यमूर्ति:= च इति विरोध: वाला केशा एव कृष्णत्वादन्धकारा भास्वन्ती= देदीप्यमाना मूर्तिर्यस्या इति तत्परिहारश्च। तस्यैवोदा-हरणान्तरं प्रस्तौति यथेत्यादिना- मम= इति वृत्तिकार स्वानन्ददबर्धनस्य, एवेति।

उदाहरणमुपस्थापयति सर्वेत्यादि—सर्वैकशरणं, अक्षय, अधीशंधियां ईशं हरिं कृष्णं च तुरात्मानं, निष्क्रियं अरिमथनं चक्रधरं नमत इति पदव्यवस्थाा।

सार्वैकशरणं= सर्वेषामेव एक शरण गृहं, अक्षयं= न विधधे क्षयं गृहं यस्य तमिति विरोध: शरण रक्षकं अक्षयं नाशरहितमिति तत्परिहारश्च, अधीशं= धियां मतीनामिशो धीशो न धीश: अधीशस्तं बुद्धिरहितं, धियां= मतीनां, ईशं= प्रभुमिति विरोध: किन्तु अधीशं सर्वेश्वरमिति तत्परिहार:, हरिं= हरिद्वर्णं=, कृष्णं= श्यामवर्णमिति विरोध: कृष्णसंज्ञकं हरिमिति तत्परिहारश्च, चतुरात्मानं= चतुर: क्रिया दक्ष आत्मा यस्य तं निष्क्रियं= क्रियाशून्यमिति विरोध: किन्तु प्रद्युम्नानिरुद्धसङ्कर्षणवासुदेवाख्या: आत्मानो यस्येति विरोधपरिहार:, अरिमथन= अराणि सन्त्यस्मिन्निति अरिश्चक्रं तस्य मथनं नाशकं, चक्रधरं, इति विरोध: अरीणां शत्रूणामिति तत् परिहारश्चेति, नमत= अभिवादयतेति। तत्र लक्षणं घटयति अत्रेत्यादिनना—अत्र= इति पद्येऽस्मिन्, हि शब्दशक्तिमूलानुस्वानरूप:= शब्दव्यापारमूलानुरणनात्मा, विरोध:= विरोधालङ्कार:, सुव्यक्तमेव, प्रतीयते= अभिव्यज्यत केनचिन्नोच्यते। अतोऽयं विरोधालङ्कारध्वनेर्विषय:।

विरोधालङ्कार के उदाहरण प्रस्तुत करते हैं। जैसे उसी (हर्षचरित) में ही—

'विरोधी पदार्थों के समुदाय की तरह। वैसे यह समीप में है नवीन अन्धकार जिसका ऐसी सूर्य की मूर्ति। सूर्य के सामने अन्धकार के न रह पाने से उक्ति में विरोध है किन्तु बाल का अर्थ केश और भास्वत् का अर्थ चमकती करने पर उसका परिहार होता है। जैसे काले बालों से कालिमा के निकट रहने पर भी चमकती मूर्ति है।

उसी का दूसरा उदाहरण प्रस्तुत करते हैं—

अथवा जैसे मेरा ही—

सभी के लिए एक मात्र शरण, अक्षय अधीश, बुद्धि के स्वामी हरि कृष्ण चतुर आत्मा वाले निष्क्रिय अरिमथन चक्रधर को प्रणाम करो। यहाँ शरण का अर्थ घर और अक्षय का अर्थ बेघर में विरोध है किन्तु आश्रय एवं अविनाशी अर्थ के द्वारा उसका परिहार है। अधीश बिना बुद्धि का, बुद्धि के स्वामी कहने में विरोध है लेकिन अधीश का अर्थ प्रभु कहने से उसका परिहार है। हरि का अर्थ हरा कृष्ण का अर्थ काला करने पर विरोध है और कृष्ण नाम के हरि कहने में विरोध का परिहार है। चतुर आत्मा वाले एवं निष्क्रिय में विरोध है किन्तु चतुर का अर्थ प्रद्युम्न, अनिरुद्ध, सङ्कर्षण, वासुदेव ये चार के मानने पर उसका परिहार है। अरि का अर्थ चक्र मानने पर विरोध है किन्तु शत्रु मानने पर परिहार है।

उसमें मन्तव्य प्रकट करते हैं—

यहाँ पर शब्दशक्तिमूलक अनुरणनरूप विरोध स्पष्ट रूप में ही प्रतीत होता है न किसी शब्द के द्वारा कहा गया है।

ध्वन्या०— एवंविधो व्यतिरेकोऽपि दृश्यते। यथा ममैव—

खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासश्च ये।
ये मूर्धस्ववभासिन: क्षितिभृतां ये चामराणां शिरां
स्याक्रामन्त्युभयेऽपि ते दिनपते: पादा: श्रिये सन्तु व:।।

लीला— इत्थं विरोधस्य विषयं विवृत्य सम्प्रति व्यतिरेकस्य विषयं विवृणोति एवमित्यादिना- व्यतिरेक:= उपमानादुपमेयस्य आधिक्यं न्यूनता वा इति लक्षणोऽलङ्कार:, अपि= च, एवंविध:= ईदृश: शब्देनोक्तत्वे सति वाच्यालङ्काररूप: शब्दशक्या सामर्थ्याक्षिप्तत्वे सति शब्दशक्तिमूलध्वनिरूपश्च, दृश्यत इति।

उदाहरणं प्रस्तौति—यथेत्यादिना= मम= इति वृत्तिकारस्य आनन्दवर्धनस्येति। उदाहरति खमित्यादिना—लूनतमस: ये पादा: खं अत्युज्ज्वलयन्ति, ये वा नखोद्भासिन: ये सरोरुहश्रियम् अपि पुष्णन्ति ये च क्षिप्ताब्जभास: ये क्षितिभृतां मूर्धसु अवभासिन: ये अमराणां शिरांसि च आक्रामन्ति दिपते: ते उभये अपि पादा: व: श्रिये सन्तु इति पदव्यवस्था।

लूनतमस:= छिन्नान्धकारा:, ये, खं= गगनं, अत्युज्ज्वलयन्ति= नितान्तमेव दीपयन्ति, वा= इति पक्षान्तरे, ये, च, नखोद्भासिन:= नखैरुद्भासनशीला:, ये, सरोरुहश्रियं= कमलशोभां, पुण्णन्ति= वर्धयन्ति, ये, च, क्षिप्ताब्जभास:= निर्जित-कमलशोभा:, ये, च, अमराणां= देवानां, शिरांसि= मस्तकानि, आक्रामन्ति= आरोहन्ति, दिनपते:= सूर्यस्य, ते= तादृश:, उभये, अपि पादा: किरणा: चरणाश्च, व:= युष्माकं, श्रिये= लक्ष्म्यै, सन्तु= भवन्त्विति। सूर्यस्य— किरणाश्चरणाश्च व: श्रियं दिशन्तु यत्र किरणास्तमो विनाश्य गगनमुद्दीपयन्ति कमलश्रियं पुष्णन्ति पर्वत शिखरेष्ववभासन्ते च चरणाश्च नखैरुद्भास वन्त: कमलश्रियं तिरस्कुर्वन्ति देवानामपि मूर्धसु विलसन्ति इति अत्रोपमेयभूतसूर्यकिरणानामुपमानभूतसूर्यचरणापेक्षयाऽऽधिक्यशब्दशक्तिमूलव्यतिरेकध्वनिना प्रतीयते इति व्यतिरेकध्वनेरुदाहरणम्।

अस्यायमाशय:— अत्र किरणचरणयोर्महत्ताया अन्योन्येन तारतम्यकथनाद् व्यतिरेकालङ्कारस्य शब्दशक्तिमूलकोऽनुरणनरूषो ध्वनिर्मत:। अत्र नखोद्भासिशब्दस्य द्व्यर्थकत्वादय ध्वनेर्विषय:। तच्च न खं उद्भासयते तच्छील इति नखैरुद्भासते तच्छील इति वा।

इस प्रकार शब्दशक्तिमूलविरोध ध्वनि का प्रतिपादन कर अब व्यतिरेक ध्वनि

का प्रतिपादन करते हैं। इस प्रकार शब्दशक्तिमूल भी इसी प्रकार दिखाई पड़ता है—

'जो अन्धकार का नाश कर आकाश को उज्ज्वल बनाते हैं वा जो नख से उद्भासित हैं, जो कमल की शोभा को भी पुष्ट करते हैं, जो कमल की शोभा को नीचा दिखाते हैं।, जो पर्वतों के शिखर पर अवभासित होते हैं, जो देवताओं के शिरों को आक्रान्त करते हैं श्री सूर्य के ये दोनों ही किरण और चरण आप सबके कल्याण करने वाले हों।'

यहाँ उपमेयभूत सूर्य किरणों के उपमानभूत सूर्य चरणों की अपेक्षा आधिक्य शब्दशक्तिमूलक व्यतिरेक ध्वनि के द्वारा प्रतीत होता है। अत: यह व्यतिरेक ध्वनि का उदाहरण है।

ध्वन्या०— एंवमन्येऽपि शब्दशक्तिमूलाऽनुस्वानरूपव्यङ्ग्य ध्वनिप्रकारा: सन्ति ते सहृदयै: स्वयमनुसर्तव्या:। इह तु ग्रन्थविस्तरभयान्न तत्प्रपञ्च: कृत:।

लीला— प्रकरणमुपसंहरति एवमित्यादिना— एवं= इत्थं, अन्ये= इतरे, अपि= च,, शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्यध्वनिप्रकारा:= शब्दशक्त्या सामर्थ्याक्षिप्तलङ्कारान्तरध्वनिभेदा:, सन्ति,, ते= तादृशा: ध्वनिभेदा:, सहृदयै= रसिकै:, स्वयमेव, अनुसर्तव्या:। इह= ग्रन्थेऽस्मिन्, तु, ग्रन्थविस्तरभयान्= पुस्तकगौरवभिया, तत्प्रपञ्च:= तेषां निरूपणं, न= नैव, कृत:= विहत इति।।२१।।

इस प्रकार शब्दशक्तिमूल अनुरणनरूप व्यङ्ग्य ध्वनि के और भी भेद होते हैं उन सबके सहृदयों को स्वयं ही खोज लेना चाहिए। यहाँ तो ग्रन्थ के कलेवर बढ़ने के भय से उन सबका प्रपञ्च किया नहीं गया है।। २१।।

कारिका— अर्थशक्त्युद्‌भवस्त्वन्यो यत्रार्थ: प्रकाशते।
यस्तात्पर्येण वस्त्वन्यद्व्यनक्त्युक्तिं विना स्वत:।। ३२।।

ध्वन्या०— यथार्थ: स्वसामर्थ्यादर्थान्तरमभिव्यनक्ति शब्दव्यापारं विनैव सोऽर्थशक्त्युद्‌भवो नामानुस्वानोपमव्यङ्ग्यो ध्वनि:। यथा—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती।

अत्र हि लीलाकमलपत्रगणनमुपसर्जनीकृतस्वरूपं शब्दव्यापारं विनैवार्थान्तरं व्यभिचारिभावलक्षणं प्रकाशयति।

लीला— इत्थं शब्दशक्त्युद्भवानुरणनरूपं व्यङ्ग्यं ध्वनिं निरूप्य सम्प्रति अर्थशक्त्युद्भवध्वनिं निरूपयति अर्थेत्यादिना-अर्थशक्त्युद्भव: तु अन्य: यत्र स: अर्थ प्रकाशते य: उक्ति बिना स्वत: तात्पर्येण अन्यद् वस्तु व्यनक्ति इति पदव्यवस्था।

अर्थशक्युद्भव= अर्थस्य अभिधेयस्य या शक्ति: सामर्थ्यं तस्मादुद्भव:

उत्पन्न:, ध्वनि:, तु= इति व्यवच्छेदे, अन्य:= शब्दशक्त्युद्भवाद्भिन्न एव, तर्हि कीदृश इत्यपेक्षायामाह यत्रेति–यत्र= यस्मिन् काव्ये, स:= तादृश:, अर्थप्रकाशते= द्योतते, य:, उक्तिं= कथनं अभिधानमित्याशय:, बिना, स्वत:= स्वसामर्थ्येनैव, तात्पर्येण= तात्पर्यवशादेव, ध्वननव्यापारेणैव, अन्यत्= स्वभिन्नं वाच्यादितरमेव, वस्तु= अर्थव्यङ्ग्यमिति, व्यनक्ति= प्रत्याययति इति तदयमाशय:— यत्र वाच्यार्थ एव एतादृशो भवति य: स्वतो ध्वननव्यापारवशात् ईदृशमर्थमभिव्यनक्ति यस्याभिधानं वाक्ये न केनापि शब्देन कृतं भवति।

कारिकाशयं विवृणोति वृत्तिकृत् यथार्थ इत्यादिना— यथा= येन प्रकारेण, अर्थ:= अभिधेय:, शब्दव्यापारं= शब्दवृत्तिं, विना एव, शब्दवृत्तिमनपेक्ष्यैव, स्वसामर्थ्यात्= स्वकीयध्वननव्यापारवशात्, अर्थान्तरं= अपरमर्थं, अभिव्यनक्ति= प्रत्याययति, स:= तादृशोऽर्थप्रत्यायितोऽर्थ:, अर्थशक्युद्भवो नाम, अनुस्वानोपमव्यङ्ग्यं= घण्टानादानन्तरानुरणनरूपप्रतीयमानार्थ:, ध्वनिरिति। अर्थेन आत्मानमुप- सर्ननीकृत्य स्वसामर्थ्यादिव प्रत्यायितोऽपरोऽर्थ एव अर्थशक्तिमूलध्वनिसंज्ञक इति। उदाहरति यथेत्यादिना— यथा= इति निदर्शने।

उदाहरणं प्रस्तौति एवमित्यादि- देवर्षौ एववादिनि पितु:पार्श्वे अधोमुखी पार्वती लीलाकमलपत्राणि गणयामास इति पदव्यवस्था।

देवर्षौ= वसिष्ठे, एवंवादिनि= एवं पूर्वोक्तं शङ्कराय पार्वती दीयतामिति वादिनि कथयति सति, पितु:= तातस्य हिमालयस्य, पार्श्वे= सन्निकटे, अधोमुखी लज्जावशान्नम्रवदना, पार्वती= गौरी, लीलाकमलपत्राणि= क्रीडाकमलस्य पत्राणि दलानि, गणयामास= संख्यातवती इति।

तत्र वक्तव्यं कथयति अत्रेत्यादिना—अत्र= काव्येऽस्मिन्, हि= इति अवधारणे, लीलाकमलपत्रगणनं= क्रीडासरोजदलसङ्ख्यानं, उपसर्जनीकृतस्वरूपं= गुणीभूतात्म सत्, शब्दव्यापारं= शब्दवृत्तिं, विना एव= शब्दसङ्केतमनपेक्ष्यैव, व्यभिचारिभावलक्षणं= सम्भोगशृङ्गारस्य लज्जाख्यं सहचारिभावस्वरूपं, अर्थान्तरं= द्वितीयमर्थं, प्रकाशयति= प्रकटीकरोति। इति अत्र क्रीडाकमलसङ्ख्यानरूपो वाच्योऽर्थ शब्दव्यापारेण असङ्केतितमपि लज्जामपरमर्थं त्यक्तात्मतया व्यनक्तीति अर्थशक्युद्भवानुरणनोपमव्यङ्ग्यं ध्वनेरुदाहरणमिदमिति।

इस प्रकार शब्दशक्तिमूलध्वनि की विवेचना करने के बाद अब अर्थशक्तिमूलध्वनि की विवेचना करते हैं–

अर्थशक्ति से उत्पन्न ध्वनि दूसरी ही है जिसमें वह अर्थ प्रकाशित होता है जो उक्ति अर्थात् अभिधा के विना ही स्वत: तात्पर्य से दूसरी वस्तु को व्यक्त कर देता है।। २२।।

कारिका के आशय का वृत्तिकार स्पष्टीकरण देते हैं–

जहाँ अर्थ शब्द व्यापार के विना ही अपने सामर्थ्य से दूसरे अर्थ को अभिव्यक्त

करता हो वह अर्थ सत्सुद्भव नामक अनुरणनोपमा व्यङ्ग्यध्वनि होती है। अर्थशक्तिमूलक ध्वनि का उदाहरण प्रस्तुत करते हैं—

देवर्षि के इस प्रकार कहने पर बगल में बैठी पार्वती वदन को नीचे झुका कर लीलाकमल के पत्रों को गिनने लगी।

लक्ष्य में लक्षण का सङ्केत करते हैं। यहाँ पर लीलाकमल पत्तों का गिनना रूप जो वाच्यार्थ है वह अपने स्वरूप का उपसर्जन कर शब्दव्यापार के विना ही लज्जात्मक व्यभिचारिभावस्वरूप दूसरे अर्थ का प्रकाशन करता है। इसका आशय यह है कि लज्जा भाव जो है सो यहाँ शब्दव्यापार का विषय नहीं है। फिर भी लीलाकमल के पत्तों का गिनना कार्य जो है, वह अपने को गौण बनाकर लज्जा की प्रतीति कराता है। अत: यह अर्थ शक्त्युद्भव ध्वनि का उदाहरण है।

ध्वन्या०— न चायमलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्विषय:। यतो यत्र साक्षाच्छब्दनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्य: रसादीनां प्रतीति: स तस्य केवलस्य मार्ग:। यथा कुमारसम्भवे मधुप्रसङ्गे वसन्तपुष्पाभरणं वहन्त्या देव्या आगमनादिवर्णनं मनोभवशरसन्धानपर्यन्तं शम्भोश्च परिवृत्त-धैर्यस्य चेष्टाविशेषवर्णनादि साक्षाच्छब्दनिवेदितम्। इह तु सामर्थ्याक्षिप्त-व्यभिचारिमुखेन रसप्रतीति:। तस्मादयमन्यो ध्वने: प्रकार:।

लीला— अर्थशक्त्युद्भवध्वनेर्विषयेऽसंलक्ष्यक्रमव्यङ्ग्यत्वशङ्कानिरासाय प्रकरणमुपक्रमते न चायमित्यादिना— न= नैव, च, अयं= अर्थशक्त्युद्भवध्वनि:, अलक्ष्यक्रमव्यङ्ग्यस्य= रसादिरूपस्य, ध्वने:, एव= इत्यवधारणे, विषय:= लक्ष्य-मिति, यत:= यस्मात्, यत्र= यस्मिन् वाक्ये, साक्षाच्छब्दनिवेदितेभ्य:= शब्दै:प्रत्य-क्षमवबोधितेभ्य:, विभावानुभावव्यभिचारिभ्य:= विभावादिभ्य:, रसादीनां= रसभा-वादीनां, प्रतीति:= प्रत्यायनं, स:= तादृश:, केवलस्य= कृत्स्नस्य, तस्य= अलक्ष्य-क्रम व्यङ्ग्यध्वने:, मार्ग:= विषय इति। अत्र साक्षाच्छब्दनिवेदितत्वमिति व्यभिचा-रिणां स्वविभावादिबलादलक्ष्यक्रमतया व्यवधानरहिता प्रतिपत्तिरेव न तु साक्षाच्छ-ब्दवाच्यता यतस्तेषामपि भावत्वान्न स्वशब्दत: प्रतिपत्तिरेव। तथैव रसादिरर्थो ध्वन्यमान एव भवति न वाच्य: कदाचिदपि तथापि सर्वो नालक्ष्यक्रमस्य विषय:। यत्र स्थायिभूतेभ्यो व्यभिचारिस्यभूतेभ्योवा पूर्णेभ्यो विभावानुभावेभ्यो झटित्येव रसव्यक्तिस्तत्रासंलक्ष्यक्रमव्यङ्ग्यध्वनेविषय आपतति अत्र तु मुखनमनकमल-पत्रगणनादिकार्यस्य तु अन्यथापि सम्भवाद् वाच्यार्थेन लज्जात्मकाभावस्य झटित्येवावबोधनासम्भवाद् विवाहप्रस्तावरूपप्रकरणपर्यालोचनत एव तस्यावबोध सम्भवतीत्यस्य संलक्ष्यक्रमतेति निष्कर्ष:। तदेवोदाहरति यथेत्यादिना— यथा, कुमारसम्भवे= तदाख्ये महाकविकालिदासकृती, मधुप्रसङ्गे= वसन्तवर्णनप्रकरणे, वसन्तपुष्पाभरणा= वसन्तकालिककुसुमालङ्कारं, वहन्त्या:= धारयन्त्या:, देव्या: पार्वत्या:, आगमनादिवर्णनं= समुपस्थितिवृत्तान्ताख्यानं, मनोभवशरसन्धानपर्यन्तं=

कामदेवबाणलक्ष्यीकरणावधि, परिवृत्तधैर्यस्य= शिथिलीभूतमनोवृत्ते: परिलुप्तधैर्यस्य, चेष्टाविशेषवर्णनादि= उमामुखे नयनव्यापारणादिक्रियाकथनादि च, साक्षाच्छब्दनिवेदितम्= वाच्यार्थेन झटित्येव विभावादिमुखेन रसव्यक्तित्वमिति। अत्रेत्थमुक्तं भवति वसन्तुकुसुमसज्जितायाः पार्वत्यास्तत्रागमनवर्णनं निर्वाणभूयिष्ठमित्यादिना- आलम्बनत्वोद्दीपनत्वानुकूलव्याख्यानमेव। प्रसङ्गश्चेत्थम्—

निर्वाण भूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन।
अनुप्रयाता वनदेवताभिरहश्यत स्थावरराजकन्या।।

तथैव कामस्य शरसन्धानवर्णन विभावतोपयोगकथनम्। यथा—

प्रतिग्रहीतु प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च।
सम्मोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम्।।

एवमेव—

हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे विम्बफलाधरोष्ठे व्यापारयामास विलोचनानि।
इति शम्भोश्चेष्टाविशेषस्य च साक्षाच्छब्दनिवेदितत्वमेव।

इत्थमसंलक्ष्यक्रमव्यङ्ग्यध्वने: साक्षाच्छब्दनिवेदितत्वमुपस्थाप्य सम्प्रति प्रकृतसिद्धिमुपस्थापयति इहेत्यादिना- इह= अस्मिन्, पद्ये, तु= इति व्यच्छेदे सामर्थ्याक्षिप्तव्यभिचारिमुखेन= ध्वननव्यापाराक्षिप्तलज्जात्मकसञ्चारिभावद्वारेण, रसप्रतीतिः= रसाद्यवबोधनम्। यत: तादृशचेष्टायास्तु अन्यथाऽपि सम्भवान्नैव हृदयं झटिति लज्जायां विश्रमयति किन्तु पूर्वप्रकरणानुसरणे एव तस्य प्रतिपत्तिसञ्जायत इत्यस्य क्रमव्यङ्ग्यता एव। सा च लज्जापेक्षयैव रसापेक्षया तु अत्रापि अलक्ष्यक्रमतैव तत्प्रतीतौ झटित्येव रसप्रतीतेः।

पर्यवसितमाह तस्मादित्यादिना— तस्मात्= तेन हेतुना, अयं= अर्थशक्युद्भवः। ध्वने:, प्रकार:= भेद:, अन्य:= अपर: असंलक्ष्यक्रमव्यङ्ग्यध्वनेभिन्न एवेति। तदयं निष्कर्षो यत्साक्षाच्छब्दनिवेदितत्वे सति असंलक्ष्यक्रमव्यङ्ग्यधध्वनेर्विषयत्वं, तद्भिनैव अर्थसामर्थ्याक्षिप्तत्वमर्थ- शक्युद्भवध्वनेर्लक्ष्यत्वमिति।

अर्थशक्तिमूल ध्वनि के असंलक्ष्यक्रमव्यङ्ग्य ध्वनि में अन्तर्भाव की आशङ्का के निवारण के लिए कहते हैं—

यह अर्थशक्युद्भव ध्वनि असलंक्ष्यक्रमव्यङ्ग्य ध्वनि का विषय नहीं हो सकती क्योंकि जहाँ साक्षात् शब्दों से निवेदित विभाव अनुभाव एवं व्यभिचारी भावों से रस, भाव आदि की प्रतीति होती है वह सम्पूर्ण असंलक्ष्यक्रमव्यङ्ग्य ध्वनि का विषय बन पाता है। जैसे 'कुमार सम्भव' में बसन्त के प्रसङ्ग में बसन्त पुष्पों से सज्जित पार्वती के आगमन आदि का वर्णन जो कि कामदेव के द्वारा शर के सन्धान करने तक चलता है और धैर्य से विचलित शम्भु की चेष्टा विशेष आदि का वर्णन आदि, साक्षात् शब्दों से निवेदित है।

यहाँ प्रस्तुत उदाहरण में तो सामर्थ्य से आक्षिप्त व्यभिचारी-लज्जा-के द्वारा ही रस की प्रतीति होती है। अर्थात् पहले मुख का झुकाना, लीलाकमल के पत्तों का गिनना आदि वाच्यार्थ प्रकरण के साथ मिलकर ही लज्जा व्यभिचारी भाव का देर से आक्षेप करता है और उसके द्वारा बिना देर के रस की प्रतीति होती है। इस कथन का आशय है कि मुखनमन एवं लीलाकमल पत्तों का गिनना लज्जा के अतिरिक्त और भी कई कारणों से हो सकता है। अत: उसके कथन मात्र से लज्जात्मक व्यभिचारिभाव का बोध नहीं हो पाता। वह तो विवाह के प्रस्ताव के प्रकरण के ज्ञान के बाद ही प्रतीत होता है। अत: उसकी प्रतीति में क्रम है— पहले विवाह प्रस्ताव का अवबोध तब लज्जा की प्रतीति। हाँ, लज्जा की प्रतीति एवं उस रस की अभिव्यक्ति में कोई देर नहीं लगती अत: यहाँ भी रसप्रतीति का क्रम तो लक्ष्य नहीं है।

इस कारण यह असंलक्ष्यक्रमव्यङ्ग्य से भिन्न दूसरा ही ध्वनि का प्रकार है।

ध्वन्या०— यत्र च शब्दव्यापारसहायोऽर्थोऽर्थान्तरस्य व्यञ्जकत्वेनोपादीयते स नास्य ध्वनेर्विषय:। यथा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमोलितम्।।

अत्र लीलाकमलनिमीलनस्य व्यञ्जकत्वमुक्त्यैव निवेदितम्।

लीला— कारिकाया 'उक्ति विना' इति यदुक्तं तद्व्यवच्छेद्यं दर्शयति यत्रेत्यादिना—यत्र= यस्मिन्, च= तु, शब्दव्यापारसहाय:= शब्दव्यापार: अभिधाशक्तिस्तत्सहाय: प्राप्तसाहाय्य:, अर्थ:, अर्थान्तरस्य= अन्यस्यैवार्थस्य, व्यञ्जकत्वेन= प्रत्यायकत्वेन, उपादीयते= गृह्यते, स:= तादृश:, अपि, अस्य= अर्थशक्त्युद्भवस्य, ध्वने:, विषय:= लक्ष्यं न= नैव भवति किन्तु असंलक्ष्यक्रमव्यङ्ग्यध्वनेस्तु भवत्येवेति। तदेवोदाहरति-सङ्केतमित्यादिनाविदग्धया सङ्केतकालमनसं विटं ज्ञात्वा हसन्नेत्रार्पिताकूत लीलापद्मम् निमीलितम् इति पदव्यवस्था।

विदग्धया= कयाचिच्चतुरया नायिकया, सङ्केतकालमनसं= अभिसरणनिमित्तकं समयजिज्ञासुं, विटं= उपपतिं, ज्ञात्वा= विदित्वा, दृसन्नेत्रार्पिताकूतं= दृसतीविकसती ये नेत्र ताभ्यामर्पित ससूचित आकूतं स्वाशय यथा स्यात्तथा, लीला पद्मं क्रीडासरोजं, निमीलितं= सङ्कोचितमिति। तत्र वक्तव्यं कथयति अत्रेत्यादिना— अत्र= अस्मिन् पद्ये लीलाकमलनिमीलनस्य= क्रीडासरोजङ्कोचनस्य, व्यञ्जकत्वं= प्रत्यायकत्वं, उक्त्या= कथनेन, एव= इत्यवधारणे न तु भङ्ग्यन्तरेण, निवेदितं= प्रकटितमिति नैवायमर्थशक्त्युद्भवध्वनेरूदाहरणमिति।

कारिका में उक्ति के विना' कहकर जो कहा गया था उसकी ब्यवच्छेद्यता को बताते हैं- जहाँ वाच्य अर्थ शब्दव्यापार की सहायता से दूसरे अर्थ के व्यञ्जक के रूप में लिया जाता है वह भी इस ध्वनि का विषय नहीं होता।

उसका उदाहरण प्रस्तुत करते हैं। जैसे—

'किसी चतुर नायिका ने संकेत काल को जानने में इच्छुक विट को जानकर खिली हुई आँखों से अभिप्राय की जानकारी देते हुए लीलाकमल को सिकोड़ दिया।'

यहाँ लीलाकमल के निमीलन से जो व्यक्त होता है उसे उक्ति के द्वारा ही निवेदित कर दिया है। अत: यह अर्थशक्त्युद्भवध्वनि का विषय नहीं है।। २२।।

कहने का आशय यह है कि लीलापद्म का सिकोड़ना सूर्यास्त के समय को सूचित करता है क्योंकि कमल सूर्यास्त के तत्काल बाद ही सिकुड़ जाते हैं और इसका वाचक शब्द भी उक्त पद्य में नहीं है फिर भी कमल के सिकोड़ने से जो व्यञ्जित होता है संकेत काल की सूचना, उसे उक्ति के द्वारा ही कह दिया गया है। अत: यहाँ तो व्यङ्ग्यार्थ ही वाच्यार्थ बन जाता है।। २२।।

ध्वन्या०— तथा च—

शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योर्थ: कविना पुन:।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वने:।। २३।।

शब्दशक्त्यार्थशक्त्या शब्दार्थशक्त्या वाक्षिप्तोऽपि व्यङ्ग्यार्थ: कविना पुनर्यत्र स्वोक्त्या प्रकाशीक्रियते सोऽस्मादनुस्वानोपमव्यङ्ग्याद् ध्वनेरन्य एवालङ्कार:। अलक्ष्यक्रमव्यङ्ग्यस्य वा ध्वने: सति सम्भवे स तादृग-न्योऽलङ्कार:।

लीला— अर्थशक्त्युद्भवव्यङ्ग्यध्वनिमुपसंहृत्य शब्दार्थोभयमूलव्यङ्ग्य ध्वनिप्रक्रमपरं कारिकामवतारयन् वृत्तिकार: साधारणमवतरणपदं प्रक्षिपति तथेत्या-दिना-तथा च= एवमेवापितेन चोक्तप्रकारद्वयेनायमपि तृतीय: शब्दार्थोभयश-क्तिमूलक: ध्वने भेदोऽपि मन्तव्य इति।

कारिकामवतारयति शब्दार्थेत्यादिना— यत्र शब्दार्थशक्त्याक्षिप्त: अपि व्यङ्ग्यार्थ: कविना पुन: स्वोक्त्या आविष्क्रियते सा ध्वने: अन्या एव अलङ्कृति इति पदव्यवस्था।

यत्र= यस्मिन् काव्ये, शब्दार्थशक्त्या= शब्दश्च अर्थश्च शब्दार्थौ च इति शब्दार्थो—एकशेषत्वात् तयो: शक्तिर्व्यापारस्तया, क्षिप्त:= प्रक्षिप्त:, अपि, व्यङ्ग्य:= प्रतीयमान:, अर्थ:, कविना= काव्यकृता, पुन:= पिष्टपेषणन्यायेन द्वितीयबारमपि, स्वोक्त्या= शब्देनैव, आविष्क्रियते= प्रकट्यते सा= तादृशी, ध्वने: अन्या= वाच्यमात्रालङ्कारपेक्षया लोकोत्तररूपा एव, अलंकृति:= अलङ्कारमात्रं न तु ध्वनिरिति।

कारिकाशयं विवृणोति वृत्तिकार: शब्दशक्त्येत्यादिना— अत्र= यस्मिन् काव्ये शब्दशक्त्या, अर्थशक्त्या, वा= इति पक्षान्तरे शब्दार्थशक्त्या, आक्षिप्त:= प्रत्यर्पित:, व्यङ्ग्य:= प्रतीयमान:, अर्थ:= वस्तु, कविना= काव्यकृता, पुन:=

पुनरपि, स्वोक्त्या= स्वगुम्फितशब्देन, प्रकाशीक्रियते= अभिप्रकट्यते, सः= तादृशः अर्थः, अस्मात्= पूर्वोक्तात्, अनुस्वानोपमव्यङ्ग्यात्= अनुररणनरूप प्रतीयमानार्थात्, ध्वनेः, अन्यः= एव, अलङ्कारः= अलङ्कारमात्रं, वा= पक्षान्तरे, सः= पूर्वोक्तः, तादृक्= कविना पुनः स्वोक्त्या प्रकटितः, अन्यः= अनुस्वानोपमव्यङ्ग्यभिन्नः, अलङ्कारः, सम्भवे सति= उपयुक्तत्वे सिद्धे सति, अलक्ष्यक्रमव्यङ्ग्यस्य= रसादिरूपस्य वाक्यार्थीभूतस्य, ध्वनेः भवतीति शेषः। असति सम्भवे तु वाच्यमात्रस्यापीति।

इस प्रकार अर्थशक्त्युद्भवव्यङ्ग्य ध्वनि का निरूपण करने के बाद शब्दार्थोभयमूलव्यङ्ग्य ध्वनि का उपक्रम करने वाली कारिका के अवतरण करने के लिए वृत्तिकार साधारण अवतरण पद का प्रक्षेप करते हैं—

'वैसा ही और भी—उक्त शब्दशक्त्युद्भव एवं अर्थशक्त्युद्भव व्यङ्ग्यरूप ध्वनि तृतीय रूप की ध्वनि भी है। कारिका का अवतरण करते हैं—

शब्द, अर्थ एवं शब्दार्थ की शक्ति से आक्षिप्त भी व्यङ्ग्य अर्थ जहाँ कवि के द्वारा पुनः अपनी उक्ति से प्रकट किया जाता है, वह ध्वनि से भिन्न और ध्वनि का ही अलङ्कार होता है और वह वाच्यमात्र के अलङ्कार की अपेक्षा विशिष्ट एवं लोकोत्तर होता है।

कारिका के आशय को वृत्तिकार स्पष्ट करते हैं—

शब्द अर्थ एवं शब्दार्थ की शक्ति के द्वारा आक्षिप्त भी व्यङ्ग्य अर्थ जहाँ कवि के द्वारा फिर से अपनी उक्ति से प्रकाशित किया जाता है, वह इस अनुरणन रूप व्यङ्ग्य ध्वनि से भिन्न होता है। सम्भव होने पर वह वाच्यार्थमात्र के अलङ्कार से भिन्न होकर अलक्ष्यक्रम व्यङ्ग्य ध्वनि का अलङ्कार हो जाता है।

कथन का आशय यह है कि शब्दशक्ति अर्थशक्ति एवं शब्दार्थोभयशक्ति से आक्षिप्त व्यङ्ग अर्थ क्रमशः शब्दशक्तिमूल, अर्थशक्तिमूल एवं शब्दार्थीभयशक्तिमूल ध्वनि का अनुरणनरूप ध्वनि का विषय होता है। किन्तु यदि वही अर्थ फिर उक्ति से प्रकट किया जाय तो वह ध्वनि का विषय न रहकर अलङ्कार का विषय बन जाता है और वैसा अलङ्कार वाच्यार्थमात्र के अलङ्कार की अपेक्षा लोकोत्तर होकर सम्भव होने पर रसादि रूप अर्थ अर्थात् अलक्ष्यक्रमव्यङ्ग्य ध्वनि का अलङ्कार बन जाता है।

ध्वन्या०— तत्र शब्दशक्त्या यथा—

वत्से मा गा विषादं श्वसनमुरुजवं संत्यजोर्ध्वप्रवृत्तं
कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहि।
प्रत्याख्यानं सुराणामितिभयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमूढां पयोधिः।।

लीला— तत्र शब्दशक्त्याक्षिप्तस्य व्यङ्ग्यस्य उक्त्या प्रकाशनात्संलक्ष्यक्रमव्यङ्ग्यध्वनेरभावोदाहरणाय प्रक्रमते तत्रेत्यादिना—तत्र= तेषु, शब्दशक्त्या=

शब्दव्यापारेण आक्षिप्तस्य व्यङ्ग्यार्थस्य पुनरुक्त्यां कथनाद् ध्वन्यविषयत्वं; यथा= इति निदर्शने।

उदाहरति वत्से इत्यादिना– हे वत्से ! विषादं मा गाः उरुजवं ऊर्ध्वप्रवृत्तं= ऊर्ध्वप्रवृत्तं श्वसनं सन्त्यज ते गुरु कम्पः को वा बलभिदा जृम्भितेन इह किं अत्र याहि इति भयशमनच्छद्मना सुराणां प्रत्याख्यानं कारयित्वा। पयोधिः मन्थमूढां लक्ष्मीं यस्मै अदात् स वः दुरितं दहतु इति इति पदव्यवस्था।

हे वत्से ! पुत्री ! विषादं= दैन्यं, मा गा= गम, उरु– जवं=तीव्रवेगे, ऊर्ध्वप्रवृत्तं= ऊर्ध्वप्रस्थितं, श्वसनं= निःश्वासं, सन्त्यज= जहि, ते= तव, गुरुः= महान् कम्पः= कम्पनं, कः= कुतः किमर्थं, वा= अथवा इह= अधुना बलभिदा= बलहानिकृता, जृम्भितेन= जृम्भया, किम्= किं प्रयोजनम्, अत्र= निर्दिष्टस्थाने, याहि= गच्छ, इति= इत्थं भयशमनच्छद्मना= भीतिनिवारणव्याजेन, सुराणां= देवतानां, प्रत्याख्यानं= खण्डनं, कारयित्वा= सम्पाद्य तचेत्थं–विषादं= विषमतीति विषादः शिवस्तं, मा गाः–शिवं मा वृणु, उरुजवं= वृहद्वेगं, श्वसनं= वायुं, उरुजवे, उर्ध्वप्रवृत्तं= उर्ध्वशिखमग्निं च सन्त्यज= जहि, कम्पः= कं जलं पातीति कम्पो वरुणः, कः ब्रह्मा च ते= तव, गुरु= पूज्यः अत स्तावपि मा वृणु पितृतुत्यत्वात्, जृम्भितेन= वैभवोन्मत्तेन, बलभिदा= इन्द्रेण, किं= प्रयोजन, अत्र= हरिसकाशं, याहि= गच्छ इति। पयोधिः= समुद्रः, मन्थमुखं= मन्थेन मन्थनेन मूढां मोहमापन्नां, लक्ष्मीं= कमलां, यस्मै, अदात्= समर्पयत्, सः= विष्णुः, वः= युष्माकं, दुरितं= पापं, दहतु= नाशयत्विति।

अत्र विषादादिशब्दैरभिव्यक्तं द्वितीयः शिवादिरूपोऽर्थः छम्भशब्देन पुनरूक्तत्वान्न ध्वनेर्विषयः। तत्र विषादादिशब्दानां परिवर्तनं कर्तुमशक्यत्वाच्छब्दशक्तिमलत्वसम्भावनाऽपि अपरिहार्या। तेनासौ गुणीभूत व्यङ्गस्य विषय एव।

उसमें शब्दशक्ति से व्यक्त व्यङ्ग्य का दूसरे प द से प्रकाशन होने के कारण संलक्ष्यक्रम ध्वनि के अभाव का उदाहरण देते हैं–

उसमें शब्दशक्ति से जेसे- हे वत्से ! विषाद में मत जाओ उरुजव उर्ध्वप्रवृत्त श्वसन को छोड़ो अथवा यह तुम्हारा गुरु कम्प (कः) क्यों है यहाँ बलभिद् जृम्भित से क्या काम ? यहाँ जाओ इस प्रकार डर के शमन के छल से देवताओं का प्रत्याख्यान करा कर समुद्र ने जिसे मन्थन से चकित लक्ष्मी को दिया वह आप सबके पाप को भस्म कर दें। प्रत्याख्यान पक्ष यह है कि विषाद का अर्थ विष भक्षण करने वाले शिव, श्वसन का अर्थ वायु, उर्ध्वप्रवृत्त का अर्थ अग्नि, कम्प का अर्थ वरुण, ब्रह्मा, जृम्भित अर्थात् ऐश्वर्य से मत्त बलभिद् अर्थात् इन्द्र। यहाँ विषभक्षण करने वाले होने के कारण शिव का, प्रचण्डवेग वाले होने के कारण वायु का, उर्ध्वप्रवृत्त होने के कारण अग्नि का गुरु होने के कारण वरुण एवं ब्रह्मा का ऐश्वर्य मत्त होने के कारण इन्द्र का त्याज्यत्व ध्वनित है किन्तु उसका फिर 'छल' शब्द के

प्रयोग से कथन किए जाने के कारण यह ध्वनि का विषय नहीं बन सकता अपितु गुणीभूतव्यङ्ग्य होकर अलङ्कार का विषय बन जाता है।

ध्वन्या०— अर्थशक्त्या यथा—

अम्बा शेतेत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निश्शेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथात्र।
अस्मिन् पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम्।।

लीला— अर्थशक्त्या व्यञ्जितस्य पुनः पदोक्तेन गुणीभावत्वमुदातुमुपक्रमते अर्थेत्यादिना— अर्थशक्त्या= अर्थशक्तिमूलव्यङ्ग्यस्य, गुणीभावः यथा= इति निदर्शने।

उदाहरति अम्बेत्यादिना— अत्र वृद्धा अम्बा शेते, अत्र परिणतवयसां अग्रणीतातः, तथा अत्र निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी, अस्मिन् पापा कतिपयदिवसप्रोषितप्राणनाथा एका अह इत्थं तरुण्या पान्थाय अवसरव्याहृतिव्याजपूर्वंकथितमिति।

अत्र= अस्मिन्, स्थले, वृद्धा= विगतवयस्का, अम्बा= माता, शेते= शयनं करोति, अत्र, परिणतवयसां= वृद्धानां, अग्रणीः= धुरि स्थितः—अतिवृद्धः, तातः= पिता, शेते, तथा= एवमेव, अत्र, निश्शेषागारकर्मश्रमशिथिलतनुः= निश्शेषं समग्रं यद् आगारकर्म गृहकृत्यं मार्जनलेपनवस्त्वानयनादिकं तेन यः श्रमः खेदस्तेन शिथिला क्लान्ता तनुः शरीरं यस्याः सा तादृशी, कुम्भदासी= गृहपरिचारिका, शेते= अस्मिन्= एतच्छयनेतु, पापा= मन्दभाग्या, कतिपयदिवसप्रोषितप्राणनाथा= कतिपयैर्बहुभिर्दिवसैरहोभिः प्रोषितः विप्रकृष्टस्थः प्राणनाथः पतिर्यस्या सा तादृशी, एका= अद्वितीया एव, शये, इत्थ= अनेन प्रकारेण, तरुण्या= युवत्या, पान्थाय= पथिकाय कल्पितंवासाय, अवसरव्याहृतिव्याजपूर्वं= समागमावसरकथनछलपूर्वं कथितं= उक्तिमिति। अत्र पित्रोर्बार्द्धक्यरूपः स्वस्याश्च प्रोषितभर्तृकरूपः दास्याश्च निश्चेष्टशयनरूपः तेषाञ्च पृथक् शयनरुपोऽर्थः समागमावसरसौलभ्यं नायिकायास्तत्परत्वं तस्य च भयानवसरत्वं च व्यनक्ति इति अर्थशक्युद्भवो ध्वनिः किन्तु तस्यैव पुनः छद्मशब्दोक्त्या पुनस्तस्यै कथनं कृतमिति नात्र ध्वनेरसवरऽपितु तस्य गुणीभावेनालङ्कार एवेति।

अर्थ शक्ति से उत्पन्न व्यङ्ग्य के दूसरे पदों से कथित होने के कारण ध्वनि के विषय न होने का उदराहरण प्रस्तुत करते हैं। अर्थशक्ति से उत्पन्न ध्वनि का जैसे—

यहाँ पर बूढी माता जी सोती हैं, यहाँ पर बूढ़ों में अग्रणी पिता जी सोते हैं, घर के सारे कामकाज से थकी हुई नौकरानी यहाँ पर सोती है, कई दिनों से परदेश गए हैं पति जिसके ऐसी अभागिन मैं यहाँ पर अकेली सोती हूं। इस प्रकार युवति ने वास के लिए इच्छुक राही को समागम के अवसर बताने के बहाने से कहा।

यहाँ माँ बाप की बूढ़ौती नौकरानी का थका रहना अपना प्रोषितभर्तृका होना एवं सबका अलग अलग सोना आदि वाच्यार्थ समागम के सुनहले अवसररूप दूसरे अर्थ को अभिव्यक्त करते हैं किन्तु उसे फिर बहाने शब्द की उक्ति से कह दिए जाने से यह ध्वनि का विषय न होकर गुणीभूत व्यङ्ग्य हो जाता है।

ध्वन्या०— उभयशक्त्या यथा—'दृष्टया केशवगोपरागहृतये' त्यादौ।

लीला— उभ्यशक्त्या प्रतीतस्य व्यङ्ग्यस्य गुणीभावमुदाहर्तुमुपक्रमते उभयेत्यादिना— उभयशक्त्या= शब्दार्थोभयशक्त्या प्रतीतस्य व्यङ्ग्यस्य गुणीभाव:, यथा= वक्ष्यमाणपद्ये, उदाहरति दृष्ट्येत्यादिना-पद्यमिदं व्याख्यातपूर्वम्। अत्र गोपरागादिशब्दानां परिवर्तनाक्षमत्वेन दृष्टमित्यादिशब्दानां तत्क्षमतया च शब्दार्थोभयशक्तिमूलध्वने: सम्भावनायां सत्यामपि सलेशं इति पदेन सा निराकृतैवेति नैव ध्वनेर्विषयत्वमपि तु गुणीभूत व्यङ्ग्यस्येति।। २३।।

उभयशक्ति से प्रतीति व्यङ्ग्य के गुणीभाव का उदाहरण देते हैं—

शब्दार्थशक्ति से प्रतीत व्यङ्ग्य भी दूसरे पदों से उक्त होने पर गुणीभूत हो जाता है। जैसे- 'दृष्ट्या केशव गोपरागहृतयां' इत्यादि पद्य में। इसमें गोपराग आदि शब्द परिवर्त्य न होने से दृष्ट आदि शब्दों में उस क्षमता के होने से शब्दार्थोभयशक्ति मूलक ध्वनि की सम्भावना तो है, लेकिन 'सलेश' शब्द से उसका निराकरण होता है। अत: यह ध्वनि का विषय न रहकर गुणीभूत हो जाता है।। २३।।

कारिका— प्रौढोक्तमात्रनिष्पन्नशरीर: सम्भवी स्वत:।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपक:।। २४।।

ध्वन्या०— अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थ उक्तस्तस्यापि द्वौ प्रकारौ— कवे: कविनिबद्धस्य वा वक्तु:— प्रौढोक्तिमात्रनिष्पन्नशरीर एक:, स्वत: सम्भवी च द्वितीय:।

लीला— अर्थशक्त्युद्भवध्वेनर्भेदं विवरीत्तुं प्रथममर्थस्य भेदं दर्शयति कारिकाकार: 'प्रौढोक्ति' इत्यादिना— अन्यस्य वस्तुन: दीपक: अर्थ: अपि प्रौढोक्तिमात्रनिष्पन्नशरीर: स्वत: सम्भवी इति द्विविध: ज्ञेय इति पदव्यवस्था।

अन्यस्य= अपरस्य स्वभिन्नस्य व्यङ्ग्यस्य, वस्तुन:= अर्थस्य, दीपक:= प्रकाशक व्यञ्जक:, अर्थ:, अपि= च, प्रौढोक्तिमात्रनिष्पन्नशरीर:= प्रौढोक्ति:, कविसमयप्रसिद्धि: तन्मात्रेण निष्पन्न: सम्पन्न: शरीरोऽवस्थानं यस्य तादृश एक:, स्वत: सम्भवी= योग्यतया लोकेऽपि सम्भाव्य: इति अपरश्च इति द्विविध:= द्विप्रकारक, ज्ञेय इति।

कारिकां विवृणोति वृत्तिकार: अर्थेत्यादिना— अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये= अर्थव्यापारजनितानुस्वानोपम प्रतीयमानार्थे, ध्वनौ, य:, अर्थ:, व्यञ्जक:= द्वितीयार्थ प्रकाशक:, उक्त:= कथित:, तस्य= तादृशस्यार्थस्य,

अपि= च द्वौ भेदौ= प्रकारौ-कवेः प्रौढोक्तिमात्रनिष्पन्नशरीरः, वा कविनिबद्धस्य वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीरः इत्येकः स्वतः सम्भवी इति द्वितीयश्चेति। तत्र प्रकर्षेण ऊढः सम्पादयितव्येन वस्तुना प्राप्तस्तत्कुशल प्रौढः समर्पयितव्य-वस्त्वर्पणोचिता उक्तिः प्रौढोक्तिः। यथाऽनुस्वानोपमव्यङ्ग्यस्य शब्दशक्तिमूलकार्थ शब्दशक्तिमूलक भेदेन द्वौ भेदौ भवतस्तथैव द्वितीयस्य कविप्रौढोक्तिमात्रनि-ष्पन्नशरीरस्वतः सम्भविभेदाद्द्वावेव भेदौ भवत इति अत्र लोचनकारः प्रथमप्रकाररूपः कविप्रौढोक्तिसिद्ध- कविनिबद्धवक्तृप्रौढोक्ति- सिद्धभेदाद् द्वौ प्रकारौ मत्त्वा अर्थस्य त्रैविध्यं मन्यते। वस्तुतस्तु यत्कविः प्रत्यक्षं कथयति पद्य स्वनिबद्धपात्रद्वारा कथयति उभे एव कविगते तथापि उभयोरेव चमत्कारा-तिशयः स्ववैशिष्ट्यावहः।

इस प्रकार अर्थशक्त्युद्भव ध्वनि का सामान्य लक्षण बताकर अब उसके भेदों का निरूपण करने के लिए अर्थ के भेदों को उपस्थापित करते हैं—

जो दूसरे अर्थ का प्रकाशक अर्थ है वह भी कविप्रौढोक्तिनिष्पन्नशरीर एवं स्वतः सम्भवी के भेद से दो प्रकार का होता है। कवि की कल्पना से निष्पन्न कवि प्रौढोक्तिनिष्पन्न होता है और लोक में भी सम्भव स्वतः सम्भवी होता है।

वृत्तिकार कारिका के आशय का विस्तार करते हैं— अर्थशक्ति से उद्भव अनुरणन रूप व्यङ्ग्य ध्वनि में जो अर्थ व्यञ्जक कहा गया है, उसके भी दो भेद होते हैं— कवि वा कवि के द्वारा वक्ता के प्रौढोक्तिमात्र से निष्पन्न शरीर वाला एक और स्वतः सम्भवी दूसरा। लोचनकार पहले के दो भेद मान कर अर्थ के तीन भेद मानते हैं— कविप्रौढोक्तिसिद्ध, कविनिबद्धवक्तृप्रौढोक्तिसिद्ध एवं स्वतः सम्भवी।

ध्वन्या०— कविप्रौढोक्तिमात्रनिष्पन्नशरीरो यथा—

सजयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान्।
अभिनवसहकारमुखान्नव पल्लवपत्त्रवानननङ्गस्य शरान्।।

लीला— तत्र प्रथममुदाहर्तुमुपक्रमते कवीत्यादिना— कविप्रोढोक्तिमात्र-निष्पन्नशरीरः= कवेः प्रौढोक्तिः अभीष्टवर्णनं तन्मात्रेण, न तु औचित्यवशात् सम्भाव्यमानासद्भावात्वात् निष्पन्नः समुद्भूतः कलेवरं यस्य तादृशः, यथा= इति वक्ष्यमाणपद्ये।

उदाहरति च 'सज्जेहि' इत्यादिना— सुरभिमासः युवतिजनलक्ष्यमुखान् अभिनवसहकारमुत्वान् नवपल्लवपत्त्रवान् अनङ्गस्य सज्जयति न तावत् अर्पयति इति पदव्यवस्था।

सुरभिमासः चैत्रमासः, युवतिजनलक्ष्यमुखान्= युवतिजना एव लक्ष्याणियेषां तथाविधानि मुखानि अग्रभागायेषां तान् पल्लवपत्त्रलान्= नवानि= पल्लवान् किसलयान् पत्त्राणि दलानि लान्ति गृहणन्ति इति तथा भूतान् अभिनवसहका-रमुखान्= अभिनवः प्रत्यग्रो यः सहकार आम्रस्तन्मुखान् अरविन्दमशोकंञ्च

चूतं नवमल्लिका। नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायका:' इति कथितान् अनङ्गस्य= कामदेवस्य, शरान्= बाणान्, सज्जयति= प्रसाधयति, तावत्= केवलं न, अर्पयति= ददातीति।

अत्र निश्चेतनो वसन्त: वाणान् विदधाति तांश्च न तावदर्पयातीति कामश्च धनुष्मान् चूतमञ्जर्यादयो बाणा: युवतयश्च लक्ष्यमिति, कविप्रौढोक्तिमात्रसिद्धो लोकेऽतथादृष्टत्वात् एतादृशेन कविप्रौढोक्तिमात्रसिद्धवस्तुना कामोद्दीपनस्य प्रारम्भस्तथा उत्तरोत्तरं तदीयोज्जृम्भणरूपं वस्तुव्यङ्ग्यम्। तेनेदं संलक्ष्यक्रम व्यङ्ग्यरूप— अर्थशक्त्युद्भव कविप्रौढोक्ति सिद्धवस्तु व्यङ्ग्यवस्तुध्वनेरुदाहरणम्। सुरभिमासादीनां कविप्रौढोक्तिविषयोकारणादेव व्यञ्जकत्वम्। वृत्तमत्र स्कन्धकम्।

उनमें से पहले भेद का उदाहरण प्रस्तुत करते हैं— कविप्रौढोक्ति मात्र से निष्पन्न शरीर वाली वस्तु से व्यञ्जना, जैसे—

वसन्त मास युवति जन ही हैं लक्ष्य जिसके ऐसे अग्रभाग वाले नये-नये किसलय एवं प्त्तों से सुशोशित अभिनव सहकार आदि कामदेव के बाणों को तैयार करता है केवल देता नहीं है।

यहाँ पर निश्चेतन भी वसन्त बाणों को तैयार करता है, कामदेव धनु को धारण करता है आममञ्जरी आदि बाण होते हैं, युवतियाँ उसके लक्ष्य होते हैं इत्यादि वस्तु रूप अर्थ की प्रौढोक्ति मात्र से सिद्ध हैं क्योंकि लोक में न तो कामदेव को धनु लेते हुए देखा गया है न ही उसके बाण। फिर भी कविं की प्रौढोक्ति मात्र से सिद्ध वस्तु से काम के उन्मथन का प्रारम्भ एवं उसके सिद्ध उत्तरोत्तर उज्जृम्भण रूप वस्तुव्यङ्ग्य झलकता है। अत: यह संलक्ष्यक्रमव्यङ्ग्यरूप अर्थशक्ति से निष्पन्न कवि की प्रौढोक्ति मात्र से सिद्ध वस्तु से आक्षिप्त वस्तुव्यङ्ग्य ध्वनि का उदाहरण सिद्ध होता है।

ध्वन्या०— कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो यथोदाहृतमेव— 'शिखरिणि' इत्यादि।

यथा वा—

साअरविइण्णजोव्वणहत्थालम्ब समुण्णमन्तेहिम्।
अब्भुट्ठाणं विअ मम्महस्स दिण्णं तुह थणेहिम्।।

लीला— कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरमर्थं मुदाहरणायो पक्रमते कवित्यादिनामकविनिबद्धप्रौढोक्तिमात्रेण निष्पन्न: शरीर:= कविना निबद्ध: पात्रत्वेनोपस्थापितो यो वक्ता तस्य प्रौढोक्तिमात्रेण निष्पन्न: सम्पन्न:शरीर:= कलेवरं यस्य तादृश: अर्थ:, यथा= इति निदर्शने, उदाहृतं= निदर्शितं, एव। तदेव निर्दिशति शिखरिणि इत्यादि। पद्यं तु व्याख्यातमेव। अत्र लोहितं फलं शुको दशतीति साधारणमेतत्। तस्य नैव व्यञ्जकत्वं कथमपि किन्तु तदेव कविनिबद्धस्य साभिलाषस्य तरुणस्य वक्तु: प्रौढोक्तित्वेनास्य व्यञ्जकत्वं सिध्यतीति संलक्ष्य-

क्रमव्यङ्ग्यरूपार्थशक्त्युद्भव कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तु व्यङ्ग्यवस्तु ध्वने-रुदाहरणमेतत्।

तस्यैवोदाहरणान्तरं प्रस्तौति यथेत्यादिना— वा= इति पक्षान्तरे, यथा= इति वक्ष्यमाणपद्ये।

उदाहरणं प्रस्तौति साअरइत्यादि—साअरविइण्णजोव्वणहत्थालम्बं (सादर-वितीर्णयौवनहस्तालम्बं) समुण्णमन्तेहि (समुन्नमद्भयां) तुइ (तव) थणेहिं (स्तनाभ्यां) मम्महस्य (मन्मथस्य) अन्भुठ्ठाणं (अभ्युत्थानं) विअ (इव) दिण्णं (दत्तम्) इति पदव्यवस्था।

सादरवितीर्णयौवनहस्तालम्बं= सादरं सत्कारपूर्वकं वितीर्णो दत्तो यौवनस्य हस्तावलम्बो यत्र तद्यथा तथा, समुन्नमद्भ्यां= उत्थानमाप्ताभ्यां, तव= ते, स्तना-भ्यां= कुचाभ्यां, दत्तं= अर्पितमिति। यौवनोन्नम्यमानाभ्यां तव स्तनाभ्यां कामः सम्भवित इति।

यथा स्वयमुत्थानुमसमर्थः पराश्रयेणाप्युत्थानाभ्यां गतस्य सत्कारं करोति तथैव यौवनहस्तावलम्बने समुत्थिताभ्यां ते स्तनाभ्यां कामदेवायाभ्युत्थानं दत्तमिति समासोक्त्युत्प्रेक्षयोः सङ्करः।

यौवनेन स्तनावुन्नमिताविति साधरणोऽर्थस्तस्य नैव व्यञ्जकत्वं तस्यैव कविनिबद्धकामुकप्रौढोक्तिनिष्पन्नस्य तु व्यञ्जकेति संलक्ष्यक्रमव्यङ्ग्यरूप अर्थशक्त्युद्भवकविनिबद्ध वक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तु ध्वनेरुदाहरणमेतत्। किञ्च लोके न तु स्तनावधिकारिणौ न च तयोः कामस्वागतायाभ्युत्थानं किन्तु ताभ्यामभ्युत्थानेन कामस्य सत्कार इति उक्तिवैचित्र्यमात्रं कविनिबद्धम्। तदपि यदि कविप्रौढोक्तिमात्रं तत्रैव चमत्कारस्य पर्यवसानान्नैव तत्र व्यञ्जनावसरः स्यात् किन्तु वक्तृप्रौढोक्ति निष्पन्नत्वात् तव स्तनाभ्यामहं कामपीडितः सञ्जातः इति द्वितीयस्यार्थस्य व्यञ्जना यत्र चमत्कारस्य पर्यवसानाद् ध्वनेरवसर इति।

कविनिबद्धवक्तृप्रौढोक्तिसिद्ध अर्थ से आक्षिप्त ध्वनि का उदाहरण देते हैं—

कवि के द्वारा निबद्ध वक्ता की प्रौढोक्तिमात्र से निष्पन्न शरीर वाली वस्तु से व्यञ्जना जैसे पहले ही दिए गए उदाहरण 'शिखरिणि क्व नु नाम' इत्यादि में।

इसमें शुकशावक का लाल विम्बफल का दशंन करना एक साधारण धर्म है जिसमें कोई व्यञ्जकता नहीं। किन्तु कवि के द्वारा निबद्ध साभिलाष तरुण की प्रौढोक्ति होने से उसी में व्यञ्जकता आ जाती है।

अथवा निम्नांकित पद्य में भी, जैसे— ''आदरपूर्वक दिए गए यौवन के हाथों का आधार लेकर उठे हुए तुम्हारे स्तनों ने मानों कामदेव को अभ्युत्थान प्रदान किया है।''

यौवन के आश्रय से स्तनों का उठना एक साधारण धर्म है जिससे कोई व्यञ्जना नहीं निकलती। उसी को कवि के उक्तिवैचित्र्य से स्वागत का अधिकारी बनाने से वही व्यञ्जक बन जाता है। उसमें भी यदि बात कवि सीधे कहता तो भी

उसमें खाश व्यञ्जकता न रहती, क्योंकि उससे व्यक्त होने वाली ध्वनि का विषय ही न रहता किन्तु उसी को कवि के द्वारा निबद्ध वक्ता की प्रौढोक्ति के रूप में निबद्ध कर देने से यह ध्वनि निकलती है कि तुम्हारे उठे स्तनों को देखकर मैं कामाभिभूत हो गया हूँ। अत: यह संलक्ष्यक्रमव्यङ्ग्यरूप अर्थशक्त्युद्भव कविनिबद्धवक्तृप्रौढोक्ति सिद्धवस्तु व्यङ्ग्य वस्तु ध्वनि का उदाहरण है।

ध्वन्या०— स्वत: सम्भवी य औचित्येन बहिरपि सम्भाव्यमानसद्भावो न केवलं भणितिवउशेनैवाभिनिष्पन्नशरीरा:।यथोदाहृतम्–यथा व–

सिहिपिक्छकण्णपूरा जाआ वाहस्स गव्विरी भमइ।
मुत्ताफलरइअपसाहणाणं मज्झे सवत्तीणम्।

लीला— स्वत: सम्भव्यर्थं विवृत्योदाहरणयोपक्रमते स्वतइत्यादिना- य:= अर्थ:, औचित्येन= लोकप्रचलिततया, बहि:= अन्यत्र, अपि, सम्भाव्यमानसद्भाव:= सम्भवास्तित्व:, न= नैव, केवलं, भणितिवशेन= प्रौढोक्तिवैचित्र्येण, एव अभिनिष्पन्नशरीर:= व्यक्तकलेवर:, स:, स्वत: सम्भवी इति। लोकेऽपि विद्यमानो योऽर्थ: स एव स्वत: सम्भवी इति संज्ञितोऽत्र। यदा कवि: काव्यं करोति तदा स एतादृशमप्यर्थमुपाददाति यो लोके विद्यमानो भवति यद्यपि सोऽधिकं तु कल्पनयैवोद्भावयति। किन्तु उक्तिवैचित्र्यं विना लोके विद्यमानोऽर्थो नैव चमत्काराय भवति। तेनैव स एवार्थ: स्वत: सम्भवी इति कथ्यते स भणितिवशादभिनिष्पन्नशरीरोऽपि लोकेऽपि सत्तावान् भवति। वृत्तौ 'बहिरपि' इति पदावल्या अयमेवाशय:।

यथा, पूर्वमेव उदाहृतं एवंवादिनि इत्यादौ।

अत्र स्वत: सम्भविना मुखनमनक्रीडाकमलपत्रसङ्ख्यानादिवस्तुना उक्तिवैचित्र्याञ्चितेन पार्वत्या लज्जारूपव्यभिचारिभावो व्यज्यत इति संलक्ष्यक्रमव्यङ्ग्यरूप— अर्थशक्त्युद्भव स्वत: सम्भवि वस्तुव्यङ्ग्यवस्तुध्वनेरुदाहरणम्। तस्यैवोदाहरणान्तरमपि प्रस्तौति यथेत्यादिना— वा= इति विकल्पेन यथा वक्ष्यमाणश्लोके।

उदाहरति सिहि' इत्यादि—सिहिपिच्छकण्णपूरा (शिखिपिच्छकर्णपूरा) वाहस्स (व्याधस्य) जाआ (जाया) मुत्ताफलरइअपसाहणाणं (मुक्ताफलरचितप्रसाधनानां) सवत्तीर्ण (सपत्नीनां) मज्झे (मध्ये) गब्विरी) (गर्विणी) भमइ (भ्रमति) इति पदव्यवस्था।

शिखिपिच्छकर्णपूरा= शिखिनां मयूराणां पिच्छस्य वर्हस्य कर्णपूर: कर्णभूषणं यस्या: सा तादृशी, व्याधस्य, जाया== पत्नी, मुक्ताफलरचितप्रसाधनानां= मुक्ताफलै: गजमौक्तिकै: रचितं निर्मितं प्रसाधनं भूषणं याभिस्तासां, सपत्नीनां, मध्ये, गर्विणी= साभिमाना, भ्रमति= सञ्चरतीति।

अत्र गजमौक्तिकभूषणानां सपत्नीनां मध्ये वर्हभूषणायाः गर्वरूपः स्वतः सम्भविवाच्यार्थस्तस्याः पतिसामीप्याधिक्येन सौभाग्यातिशयं व्यनक्ति। किञ्च सपत्नीनां मुक्ताफलप्राप्तिमन्तरा भूषणरचनासम्भवः। तत्प्राप्तेः बहुप्रयत्नसाध्यत्वात्! तन्निमितं पत्युर्बहुकालं वनगमनहस्तिहननादिकार्ये व्यस्तत्वेन तासां पतिसान्निध्यलाभः पिच्छभूषणायास्तु यत्नमन्तरैव भूषणप्राप्तेः दिवसेऽपि रमणलाभरूपवस्तुनो ध्वननमिति स्वतः सम्भविवस्तुव्यङ्ग्यस्योदाहरणम्।।२४।।

स्वतः सम्भवी अर्थ की विवेचना कर उसका उदाहरण देने का उपक्रम करते हैं—

स्वतः सम्भवी अर्थ वह है जो कि औचित्य के कारण बाहर (लोक में) भी सत्ता की सम्भावना वाला हो न केवल उक्ति के कारण से मात्र निष्पन्न शरीर वाला हो। जैसे कि उदाहरण दिया गया है— 'एवंवादिनि देवर्षौ' इत्यादि।

इसमें स्वतः सम्भवी मुख नमन आदि अर्थ पार्वती का लज्जारूप व्यभिचारी भाव व्यक्त करता है।

अथवा दूसरा उदाहरण जैसे— मोर के पिच्छ को कर्णभूषण के रूप में धारण किए हुए गर्व से भरी व्याध की पत्नी मुक्ताफल से रचित प्रसाधन वाली सपत्नियों के बीच घूमती है।

सपत्नियाँ मुक्ताफल के आभूषण पहनती हैं जिसकें लिए पति को दिन भर वन में घूमना एवं हाथी का शिकार करना पड़ता है। अतः उनको पति के साथ सहवास का बहुत कम मौका मिलता है और व्याधपत्नी तो केवल मोर के पिच्छ को आभूषण के रूप में पहनती हैं और उसके लिए पति को कोई बड़ा कष्ट करना नहीं पड़ता है, अतः दिन में भी उसे पति से सहवास का मौका मिलता है। अतः वह गर्विता है। यह गर्वित रूप स्वतः सम्भवी अर्थ उसके पतिसहवास रूप सौभाग्य को ध्वनित करता है। अतः यह सम्भवी अर्थ से आक्षिप्त ध्वनि का उदाहरण है।। २४।।

**कारिका— अर्थशक्तेरलङ्कारो यत्राप्यन्यः प्रतीयते।**
**अनुस्वानोपमव्यङ्ग्यः सप्रकारोऽपरो ध्वनेः।।२५।।**

**ध्वन्या०— वाच्यालङ्कारव्यतिरिक्तो यत्रान्योऽलङ्कारः सामर्थ्यात् प्रतीयमानोऽवभासते सोऽर्थशक्त्युद्भवो नामानुस्वानरूपव्यङ्ग्यो ध्वनिः।**

लीला— इत्थमर्थशक्त्युद्भववस्तुध्वनिं निरूप्य सम्प्रति तदुद्भवालङ्कारध्वनिं निरूपयति अर्थेत्यादिना— यत्र अर्थशक्तेः अन्यः अलङ्कारः अपि प्रतीयते सः अनुस्वानोपमव्यङ्ग्यः ध्वनेः अपरः प्रकार इति पदव्यवस्था।

यत्र—यस्मिन् काव्ये, अर्थशक्तेः= अर्थसामर्थ्यात्, अन्यः=वाच्यालङ्कारः भिन्नः, अलङ्कारः, अपि, प्रतीयते= व्यज्यते, सः= तादृशः, अनुस्वानोपमव्यङ्ग्यः= अनुरणनरूपप्रतीयमानार्थः, ध्वनेः, अपरः= अन्यः, प्रकारः= भेदः इति।

कारिकार्थं विशदयति वृत्तिकृत् वाच्येत्यादिना— यत्र= यस्मिन् काव्ये, वाच्यालङ्कारव्यतिरिक्तः= वाच्यार्थालङ्कारभिन्नः, अन्यः= अपरः अलङ्कारः, अर्थसा-

मर्थ्यात्= अर्थशक्तेरपि यथा शब्दशक्तेरलङ्कारः प्रतीयते तथैवार्थशक्तेरपि, प्रतीयमानः= व्यज्यमानः, अवभासते= द्योतते, सः= तादृशः, अर्थशक्त्युद्भवो नाम= तदाख्यः, अनुस्वानरूपव्यङ्ग्यः= अनुरणनोपमव्यङ्ग्यः, अन्यः= वस्तुभिन्नः अलङ्काररूपः, ध्वनिरिति।

यथा च अर्थशक्तेः वस्तुमात्रस्य व्यञ्जनीयत्वे वस्तुध्वनिर्भवति तथैवालङ्कारस्य व्यञ्जनीयत्वेऽलङ्कारध्वनिर्भवति।। २५।।

इस प्रकार अर्थशक्ति से उत्पन्न वस्तु ध्वनि की विवेचना करने के बाद अब अर्थशक्ति से उत्पन्न अलङ्कार ध्वनि की विवेचना करते हैं—

जहाँ पर अर्थशक्ति से वस्तु से भिन्न अलङ्कार भी प्रतीत होता है वह ध्वनि का अनुरणन रूप व्यङ्ग्य दूसरा प्रकार होता है।

कारिका के आशय की व्याख्या करते हैं वृत्तिकार—

जहाँ वाच्यालङ्कार से भिन्न दूसरा अलङ्कार अर्थसामर्थ्य से प्रतीत होता है वह अर्थशक्त्युद्भव नामक अनुरणन रूप व्यङ्ग्य दूसरी ध्वनि होती है।। २५।।

ध्वन्या०— तस्य प्रविरलविषयत्वमाशङ्क्येदमुच्यते—

कारिका— रूपकादिरलङ्कारवर्गो यो वाच्यतां श्रितः।
स सर्वो गम्यमानत्वं विभ्रद्भूम्ना प्रदर्शितः।।२६।।

ध्वन्या०— अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलङ्कारः सोऽन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्रभवद्भिर्भट्टोद्भटादिभिः। तथा च ससन्देहादिषूपमारूपकातिशयोक्तीनां प्रकाशमानत्वं प्रदर्शितमित्यलङ्कारान्तरस्यालङ्कारान्तरे व्यङ्ग्यत्वं न यत्नप्रतिपाद्यम्।

लीला— इत्थमर्थसामर्थ्याक्षिप्तमलङ्कारव्यङ्ग्यं प्रतिपाद्य तस्य विषयविवेचककारिकामवतारयन् वृत्तिकारस्तदवतारणाय तस्य प्रयोजनं निर्दिशति तस्येत्यादिना— तस्य= अर्थसामर्थ्याक्षिप्तालङ्कारध्वनेः, प्रविरलविषयत्वं= स्वल्पलक्ष्यत्वं—शब्द शक्त्या श्लेषाद्यलङ्कारो भासत इति सम्भाव्यमेव। अर्थशक्त्या तु कोऽलङ्कारो भातीति, आशङ्क्य= कथयितुं शक्यत इति तदाशङ्कानिरासाय, इदं= वक्ष्यमाणवचनं, उच्यते= कथ्यत इति।

कारिकामवतारयति रूपकादिरित्यादि—यः रूपकादिः अलङ्कारवर्गः वाच्यतां श्रितः सः सर्वः गम्यमानत्वं विभ्रत् भूम्ना प्रदर्शित इति पदव्यवस्था।

यः, रूपकादिः= रूपकप्रभृतिः, अलङ्कारवर्गः= अर्थालङ्कारसमूहः, वाच्यतां= अभिधेयतां, श्रितः= गतः, तादृशः, सर्वः= अर्थालङ्कारसमूहः, गम्यमानत्वं= व्यङ्ग्यत्वं प्रतीयमानत्वं, विभ्रत्= दधत्, भूम्ना= बाहुल्येन—पूर्ववर्तिभिर्भट्टोद्भटादिभिराचार्यैः, निर्दिष्ट इति।

अर्थशक्तिमूलालङ्कारादलङ्कारव्यङ्ग्यस्य ध्वनेः प्रविरलविषयाशङ्कानिरासा

कथ्यते यद्वाच्यरूपेण प्रतीतो रूपकाद्यर्थालङ्कारवर्गो व्यञ्जकत्वमपि गच्छतीति प्रायः पूर्वाचार्यैः प्रतिपादितमेवेति।

कारिकाशयं विवृणोति अन्यत्रेत्यादिना—अन्यत्र= अन्यस्मिन् वाच्ये, एकत्र-वाच्यत्वेन= अभिधेयत्वेन, प्रसिद्धः= ख्यातः संगृहीतः, यः रूपकादिः= रूपकप्र-भृतिः, अलङ्कारः= अर्थालङ्कारसमूहः, सः, अन्यत्र= अपरस्मिन् वाच्ये, प्रतीयमा-नतया= व्यङ्ग्यत्वेन, बाहुल्येन= भूम्ना, तत्रभवद्भिः= लब्धप्रतिष्ठैः, भट्टोद्भटादिभिः= भट्टोद्भटप्रभृतिविचक्षणैः, प्रदर्शितः= निर्दिष्ट इति।

तथा च= एवमेव, ससन्देहादिषु= उपमानेन तत्त्वं च भेदञ्च वदतः पुनः। ससन्देहं वचः स्तुत्यै ससन्देहं विदुर्यथा। 'इतिलक्षणससन्देहाद्यलङ्कारेषु, उपमा-रूपकातिशयोक्तीनां= उपमाया वा रूपकस्य वा सर्वेष्वेवालङ्कारेषु अतिशयो-क्तेश्च, प्रकाशमानत्वं= ध्वन्यमानत्वम् इति, अलङ्कारान्तरस्य= अलङ्कारविशेषस्य, अलङ्कारान्तरे= अलङ्कारविशेषे, व्यङ्ग्यत्वं प्रतीयमानत्वं, न= नैव, यत्नप्रतिपाद्यम्= प्रयत्नसाध्यमपितु सुखसम्भाव्यमेवेति।

तदिदमुक्तं भवति— वाच्यालङ्कारविशेषविषये व्यङ्ग्यालङ्कारविशेषः भातीति प्रतिपादयद्भिः भट्टोद्भटादिभिरपि अर्थशक्त्यलङ्कारस्य प्रतीयमानत्वमुपगतमेव। यद्यपि तद्वाच्यालङ्कारविशेषविषयप्रकरणे प्रतिपादिते ग्रन्थे तस्यैव प्राकरणि-कत्वात्तथापि प्रतीयमानविषयता अपि ऊरी कृतैव तैः। सन्देहादिषु अलङ्कारेषु उपमा रूपकं वा ध्वन्यत एवेति 'तस्याः पाणिरयं नु मारुतचलत्पत्त्राङ्गुलिः पल्लवः इत्यादौ स्पष्टमेव। यथा :अयं मारुतचलत्पत्त्राङ्गुलिः पल्लवः' तस्याः पाणिः नु इत्यत्र अयं पल्लवस्तस्याः पाणिः यस्य वायुसञ्चालितपत्राणि एव अङ्गुलयः सन्तीति उपमाया रूपकस्य वा ध्वननं स्पष्टमेव। अनेनैतत्सिध्यति यन्न केवलं वस्तुमात्रमलङ्कार ध्वनति अपितु अलङ्कारोऽप्यलङ्कारान्तरं ध्वनत्येव। अतिशयोक्तेस्तु न केवलं ससन्देहादिषु अपितु सर्वेष्वेवालङ्कारेषु ध्वन्यमानत्वम्। अर्थशक्त्युद्भवे ध्वनौ वस्तु इव अलङ्कारोऽपि व्यङ्ग्य इति पर्यवसितोऽर्थः। अलङ्कारा अपि उभाभ्यां प्रकाराभ्यां-वस्त्वाक्षिप्ततया अलङ्काराक्षिप्ततया च ध्वन्यङ्गतां यान्ति।

इस प्रकार अर्थशक्ति के द्वारा आक्षिप्त अलङ्कार ध्वनि की विवेचना करने के बाद उसके विषय के प्राशस्त्य का प्रतिपादन करने वाली कारिका के अवतरण का उपक्रम करते हैं- उसके विरल ही विषय होने की आशङ्का के समाधान के लिए यह कहा जाता है—

जो वाच्यता में आश्रित रूपक आदि अलङ्कारवर्ग है, वह सभी प्रतीयमानता को धारण करता हुआ बाहुल्य से दिखाया गया है।

कारिका के आशय का वृत्तिकार पल्लवन करते हैं— एक जगह वाच्य के रूप में प्रसिद्ध जो रूपक आदि अलङ्कार हैं वह दूसरे जगह प्रतीयमान के रूप में बहुलता से भट्टोद्भट आदि प्रतिष्ठित विद्वानों ने दिखाया है। इसी प्रकार ससन्देह आदि

अलङ्कारों में उपमा, रूपक, अतिशयोक्ति आदि अलङ्कारों की प्रकाशमानता दिखाई गई है जिससे यह सिद्ध होता है कि एक अलङ्कार का दूसरे अलङ्कार में व्यङ्ग्यत्व यत्न से प्रतिपाद्य नहीं है अपितु सुखसाध्य है।

शब्दशक्ति से श्लेष आदि अलङ्कारों का आभासन तो स्पष्ट है, लेकिन अर्थशक्ति से कौन सा अलङ्कार आक्षिप्त होता है ? 'यह आशङ्का है जिसके समाधान के लिए कहा गया है— 'रूपक आदि अलङ्कार कहीं वाच्य होता है तो कहीं वही व्यङ्ग्य भी होता है। ससन्देह अलङ्कार में उपमा वा रूपक ध्वनित होता है, दण्डी का मत है कि अतिशयोक्ति अलङ्कार सभी अलङ्कारों में ध्वनित होता है। इसी तरह भामह वक्रोक्ति को सभी अलङ्कारों में प्रतीयमान मानते हैं।

इस तरह जैसे वस्तु से वस्तु वा अलङ्कार प्रतीत होता है उसी तरह अलङ्कार से अलङ्कार भी प्रतीत होता है। अत: इसमें आशङ्का ठीक नहीं।

ध्वन्या०— इयत्पुनरुच्यत एव—

कारिका— अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते।
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मत:।। २७।।

ध्वन्या०— अलङ्कारान्तरेषु त्वनुरणनरूपालङ्कारप्रतीतौ सत्यामपि यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते नासौ ध्वनेमार्ग:। तथा च दीपकादावलङ्कारे उपमाया गम्यमानत्वेऽपि तत्परत्वेन चारुत्व-स्याव्यवस्थानान्न ध्वनिव्यपदेश:।

लीला— प्राचीनै: प्रसाधिते मार्गे पुन: प्रवर्तनं किमर्थमित्याशङ्कानिरासाय प्रवर्तितकारिकावताराय वृत्तिकार: उपक्रमते इत्यायदित्यादिना— पुन:= पूर्वैरुक्ते-ऽपि विषये, इयत्= एतावत्तु, अस्माभिरपि उच्यते= कथ्यते, एव= इत्यवधारणे, तत्रापि विषयविषमत्वादिति।

कारिकामवतारयति अलङ्कारेत्यादिना— यत्र अलङ्कारान्तरस्य प्रतीतौ अपि वाच्यस्य तत्परत्वं न भासते असौ ध्वने: मार्ग: न मत इति पदव्यवस्था:।

अलङ्कारान्तरस्य= अलङ्कारविशेषस्य, वाच्यातिरिक्तालङ्कारस्य, प्रतीतौ= व्यक्ते:, अपि, यत्र= यस्मिन् काव्ये, वाच्यस्य= वाच्यार्थस्य, तत्परत्वं= व्यङ्ग्य परायणत्वं, व्यङ्ग्यापेक्षयाऽप्रधानत्वं, व्यङ्ग्योपकारकत्वं वा, न= नैव, भासते= प्रतीयते, असौ= एतादृश:, ध्वने:= अनुस्वानोपमव्यङ्ग्यस्य, मार्ग:= विषय:, न मत:= कथित: अपितु गुणीभूतव्यङ्ग्यस्यैवेति।

कारिकाशयं वृत्तिकारो विशदयति अलङ्कारेत्यादिना— अलङ्कारान्तरस्य= वाच्यालङ्कारभिन्नस्य, रूपकादे:= रूपकप्रभृते:, अलङ्कारस्य, प्रतीतौ= प्रतीय-मानत्वं, सत्याम्, अपि, यत्र= यस्मिन् काव्ये, वाच्यस्य= वाच्यार्थस्य, व्यङ्ग्यप्र-तिपादनौन्मुख्येन= व्यङ्ग्यस्य प्रतीयमानार्थस्य प्रतिपादनं साधनं तत्रौन्मुख्येन परायणत्वेन, चारुत्वं= सौन्दर्यं, न प्रकाशते= द्योतते, न, असौ= एतादृश:,

ध्वनेः, मार्गः= विषय इति। न हि अलङ्कारव्यञ्जनमात्रेण स ध्वनेर्विषयो भवति किन्तु तस्य वाच्यापेक्षया अधिकशोभाशालित्वमपि समपेक्षितम्। अमुमेवार्थमुपपादयति तथेत्यादिना– तथा च= यथा वक्ष्यमाणप्रकरणे, दीपकादौ= दीपकप्रभृतौ आदिपदात् तुल्ययोगितापह्नुतिरूपकस्मरणादीनामपि ग्रहणं, अलङ्कारे, उपमायाः, गम्यमानत्वे= प्रतीयमानत्वे, अपि, तत्परत्वेन= व्यङ्ग्यपरत्वेन, चारुत्वस्य= सौन्दर्यस्य, अव्यवस्थानात्= अप्रबन्धनात्, न= नैव, ध्वनिव्यपदेशः= ध्वनि व्यवहारः। तदिदमुक्तं भवति–दीपकादौ वाच्ये सति प्रस्तुताप्रस्तुतयोरेकधर्माभिसम्बन्धितया व्यङ्ग्यत्वेन भासमानाया उपमायाश्चारुत्वानाश्रयत्वेन न ध्वनित्वम्।

प्राचीनों ने जब विषयनिर्द्धारण किया है तो फिर पुनः प्रतिपादन करने की निरर्थकता के निरास के लिए प्रस्तुत कारिका के अवतरण के लिए उपक्रम करते हैं। वैसा होने पर यह इस हेतु कहा ही जाता है–

वाच्य से अतिरिक्त अलङ्कार की प्रतीति होने पर भी जहाँ वाच्य का व्यङ्ग्य के लिए समर्पण नहीं है वह ध्वनि का विषय नहीं बन सकता।

कारिका के आशय का विस्तार करते हैं वृत्तिकार– वाच्यालङ्कार से भिन्न रूपक आदि अलङ्कार की प्रतीति होने पर भी जहाँ वाच्य का व्यङ्ग्यप्रतिपादन के लिए उन्मुख होकर सौन्दर्य का प्रकाशन नहीं होता वह ध्वनि का विषय नहीं बन पाता।

उसी का उपपादन करते हैं–

जैसे कि दीपक आदि अलङ्कारों में उपमा की प्रतीति होने पर भी उपमा के लिए तत्पर होकर सौन्दर्य की व्यवस्था न होने से ध्वनि नहीं कही जाती। आदि पद से तुल्ययोगिता, अपह्नुति, रूपक, स्मरण आदि अलङ्कारों का ग्रहण किया गया है। इसका आशय यह है कि दीपक आदि अलङ्कार के वाच्य होने पर प्रस्तुत एवं अप्रस्तुत अर्थों का एक ही धर्म से सम्बन्धित होने से व्यङ्ग्य के रूप में भासमान भी उपमा का सौन्दर्य के आश्रय न होने से ध्वनित्व नहीं सिद्ध होता अपितु वह गुणीभूत व्यङ्ग्य का ही विषय होता है।

ध्वन्या०– यथा–

चन्दमयूएहिं णिसा णलिनी कमलेहिं कुसुमगुच्देहिं लआ।
हंसेहिं सरअसोहा कव्वकहा सज्जनहिं करइ गरुई।।
(चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता।
हंसैश्शारदशोभा काव्यकथा सज्जनैः क्रियत गुर्वी।। इति छाया।)

इत्यादिषूपमागर्भत्वे सति वाच्यालङ्कारमुखेनैव चारुत्वं व्यवतिष्ठते न व्यङ्ग्यालङ्कारतात्पर्येण। तस्मात्तत्र वाच्यालङ्कारमुखेनैव काव्यव्यपदेशो न्याय्यः।

लीला– अलङ्कारस्य व्यज्यमानत्वेऽपि तत्र चारुत्वस्यापर्यवसायित्वे नैव ध्वनिरिति यदुक्तं तदेवोदाहरति यथेत्यादिना–यथा= इति वक्ष्यमाणपद्ये।

रूप में ही होती है वहाँ पर तो व्यङ्ग्य के द्वारा ही नाम करण उचित है। उसका उदाहरण प्रस्तुत करते हैं। जैसे—

आपके निकट आ जाने पर लक्ष्मी को प्राप्त कर चुके ये फिर क्यों मेरा मन्थन करने का कष्ट उठाऐंगे, आलस्य से रहित मन वाले इनको पहले की जैसी निद्रा की सम्भावना भी नहीं देखता हूं, समस्त द्वीपों के अधिपतियों से अनुगमन किए गए ये फिर किस लिए सेतु बांधेंगे ! इस तरह मन में सन्देह करता हुआ सा समुद्र का कम्पन दिखाई पड़ता है।

इसमें सन्देह से उत्प्रेक्षित होने से सन्देह एवं उत्प्रेक्षा के सङ्कर से सङ्कर अलङ्कार वाच्य है और उससे राजा में विष्णु के तादात्म्य प्रतिपादन से रूपक अलङ्कार आक्षिप्त है। और सन्देह या उत्प्रेक्षा की अनुपपत्ति के कारण रूपक का आक्षेप न होने से यह वाच्य का उपस्कारक भी नहीं है। अत: यह कविनिबद्ध वक्तृप्रौढोक्ति सिद्ध अलङ्कार ध्वनि है।

ध्वन्या०— यथा वा ममैव—

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि।
क्षोभां यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधि:।।

इत्येवंविधे विषयेऽनुरणनरूपकाश्रयेण काव्याचारुत्वव्यवस्था— नाद्रूपकध्वनिरितिव्यपदेशो न्याय्य:।

लीला— व्यङ्ग्यव्यपदेश्यस्योदाहरणानन्तरं प्रस्तौति यथेत्यादिना— यथा= इति निदर्शने, वा= इति विकल्पे, मम= इत्यानन्दवर्धनस्य, एवेति।

उदाहरणमुपस्थापयति लावण्येत्यादिना— हे तरलायताक्षि, अधुना लावण्य-कान्तिपरिपूरितदिङ्मुखे अस्मिन् तव मुखे स्मेरे यत् मनाक् अपि क्षोभं न एति तेन मन्ये अयं पयोधि: जलराशि: इति सुव्यक्तं एव इति पदव्यवस्था।

हे तरलायताक्षि ! हे= चञ्चलदीर्घनयने ! अधुना= साम्प्रतं, लावण्यका-न्तिपरिपूरितदिङ्मुखे= सौन्दर्यदीप्तिधवलितहरिति, अस्मिन्= दृश्यमाने, तव= भवत्या:, मुखे= वदने, स्मेरे= ईषद्विहसिते सति, यत्, मनाक्= स्वल्पं, अपि क्षोभं= चाञ्चल्यं, न, एति= प्राप्नोति, तेन= हेतुना, अयं= पुरावेर्ती, समुद्र:= अर्णव: जलराशि:= पयोनिधि: डलयोरभेदात् जडराशि: इति, सुव्यक्तं= सुस्पष्टं, एव, मन्ये= चिन्तयामीति।

अत्र श्लेषानुप्राणित उत्प्रेक्षाऽलङ्कारो वाच्य: तथैव तव मुखे ईषद्धसिते समुद्रो मनागपि न क्षुभितोऽतोऽ जड इति एतावता त्वन्मुखं चन्द्र इति रूपकालङ्कारो ध्वन्यते। स च नैवोत्प्रेक्षानुपपत्तिबलादाक्षिप्त इति नैव तस्य वाच्योपस्कारकत्वमत एवासौ ध्वनेर्विषय:।

ध्वन्या०— यत्र तु व्यङ्ग्यपरत्वेनैव वाच्यस्य तत्र व्यङ्ग्यमुखेनैव व्यपदेशो युक्तः। यथा—

प्राप्तश्रीरेष कस्मात्पुनरपि मयि तं मन्थखेदं विदध्या
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयातः
त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः।।

लीला—इत्थं वाच्यव्यपदेश्यं काव्यं निरूप्य व्यङ्ग्यव्यपदेश्यकाव्यस्थितिं निर्दिशति यत्रेत्यादिना— यत्र= यस्मिन् काव्ये, तु= इति पक्षान्तरे, व्यङ्ग्यपरत्वेन= प्रतीयमानार्थौन्मुख्येन, एव, वाच्यस्य= वाच्यालङ्कारस्य, व्यवस्थानं=अवस्थितिः, तत्र=तादृशे वाक्ये, व्यङ्ग्यमुखेन=प्रतीयमानार्थद्वारा, एव, व्यपदेशः=नामकरणं युक्तः= न्याय्य इति। अस्यायमाशयो यथोक्तं लोचनेवाच्यालङ्कारस्य व्यङ्ग्य-परत्वे सति त्रिधा विकल्पःसम्पद्यते—वाच्यालङ्कारेण कदाचिद्व्यङ्ग्यमलङ्कारान्तरं, यदि वा वाच्यालङ्कारस्य सद्भावमात्रं न व्यञ्जकता, वाच्यालङ्कारस्याभाव एव वेति।

तदेवोदाहरति यथेत्यादिना— यथा= इति वक्ष्यमाणवाक्ये, उदाहरणं प्रस्तौति— प्राप्तश्रीरित्यादिना– त्वयि आयाते सति प्राप्तश्रीः एषः मयि तं मन्थखेदं पुनः अपि कस्मात् विदध्यात् अनलसमनसः अस्य पूर्वां निद्रां अपि नैव सम्भा-वयामि, सकलद्वीपनाथानुयातः भूयः मिमिति सेतुं बध्नाति इति वितर्कान् दधतः इव पयोधेः कम्पः आभाति इति पदव्यवस्था।

हे राजन्, त्वयि अनन्तबलसमुदायवति भवति, आयाते= परिसरवर्तिनि स्थिते सति, प्राप्तश्रीः= समुपलब्धलछमीकः, एषः= विष्णुः, पुनरपि= भूयोऽपि, मयि= समुद्रे, तं= तादृशं, मन्थखेदं= मन्थनश्रमम्, कस्मात्= केन हेतुना, विदध्यात्= कुर्यात्, अनलसमनसः= आलस्यरहितमानसस्य, अस्य= विष्णोः, पूर्वांप्राचीनां, निद्रां= स्वापं, अपि= च, नैव, सम्भावयामि= तर्कयामि, सकलद्वीप नाथानुयातः= सकलाः सम्पूर्णाश्च ते द्वीपाः भूखण्डाः तेषां नाथाः प्रभवः स्तैरनुयातोऽनुगतः, सः, भूयः पुनः, किमिति= किमर्थ, सेतुं= पारसाधनं, बध्नाति= आरचयति, इति= इत्थं, वितर्कान्= सन्देहान्, दधतः= धारयतः, इव, पयोधेः समुद्रस्य, कम्पः= कम्पनं, आभाति= लक्ष्यत इति।

अत्र सन्देहेनोत्प्रेक्षितत्वात्सन्देहोत्प्रेक्षयोः सङ्करात्सङ्करालङ्कारो वाच्यः। तेन च तस्य विष्णुरूपता ध्वन्यते इति रूपकध्वनिरत्र शब्दव्यापारं विनैव अर्थसौन्दर्यबलाद्रूपणप्रतिपत्तेः। किन्तु नैव सन्देहोत्प्रेक्षानुपपत्तिबलाद्रूपकस्याक्षेपः येन व्यङ्ग्यस्य वाच्यालङ्कारस्योपस्कारकत्वं भवेत्।

इस प्रकार वाच्य व्यपदेश्य काव्य का निरूपण कर अब व्यङ्ग्यव्यपदेश्य काव्य का निरूपण करते हैं— किन्तु जहाँ पर वाक्य की अवस्थिति व्यङ्ग्यपरक के

उदाहरति चन्दमयएहिं इत्यादिना— चन्दमयूएहि (चन्द्रमयूखैः) णिसा (निशा) कमलेहि (कमलैः) णलिनी (नलिनी) कुसुमगुच्छेहि (कुसुमगुच्छैः) लआ (लता) हंसेहि (हंसैः) सरअसोहा (शारदशोभा) सज्जनेहि (सज्जनैः) कव्वकहा (काव्य-कथा) गरुई (गुर्वी) करइ (क्रियते) इति पदव्यवस्था।

चन्द्रमयूखैः= शशिकिरणैः, निशा= रात्रिः, कमलैः= सरोजैः, नलिनी= कमलिनी, कुसुमगुच्छैः= पुष्पस्तबकैः, लता= बल्लरी, हंसैः, शारदशोभा= शरच्छविः, सज्जनैः= सहृदयैः, काव्यकथा= काव्योक्तिः, गुर्वी= महत्त्वपूर्णा, क्रियते= विधीयत इति।

अत्र प्रस्तुताप्रस्तुतयोः सज्जनचन्द्रकिरणप्रभृत्योः गुर्वीकरणैकधर्मसम्बन्धेन दीपके भासमाने तयोः सम्बन्धनाय उपमानोपमेयभावः कल्प्य एव। अतः व्यङ्ग्योपमापेक्षया वाच्यस्यैव दीपकस्य चमत्कारपर्यवसायित्वात् तस्यास्तु अङ्गत्वेनैव प्रतीयमानत्वमतो नासौ ध्वनेर्विषयः। सज्जनेषु हंसादीनां काव्यकथायां निशादीनाञ्च गम्यमानाया उपमाया नैव प्राधान्यमिति।

तत्र पर्यवसितं कथयति इत्यादिना— इत्यादिषु= इत्युक्तवाक्येषु, उपमा-गर्भत्वे= वाच्यार्थानां परस्परसम्बन्धनाय उपमानोपमेयभावस्य कल्पनादुपमायाः अन्तःस्थत्वेऽपि, सति, वाच्यालङ्कारमुखेन= वाच्यालङ्कारभूतदीपकालङ्कारद्वारा, एव= इति व्यवछेदे न तूपमयाऽपि, चारुत्वं= सौन्दर्यं, व्यवतिष्ठते= व्यवस्थितं भवति, न= नैव, व्यङ्ग्यालङ्कारतात्पर्येण= व्यङ्ग्यीभूतोपमा प्रयोजनेन। तस्मात्= तेन हेतुना, तत्र= तस्मिन् काव्ये, वाच्यालङ्कारमुखेन= वाच्याभूतालङ्कारद्वारा, एव, काव्यव्यपदेशः= काव्यनामकरणं, न्याय्यः= उपयुक्तः इति।

अलङ्कार के व्यज्यमान होने पर भी उसमें चारुत्व का पर्यवसान न होने से ध्वनि का विषय न होना जो कहा गया था उसका उदाहरण प्रस्तुत करते हैं—

जैसे वक्ष्यमाण पद्य में—

चन्द्रकिरणों से रात्रि, कमलों कमलिनी, फूल के गुच्छों से लता, हंसों से शरत् कालीन शोभा, और सज्जनों से काव्यकथा महत्वपूर्ण बताई जाती है।

उसमें पर्यवसित अर्थ को बताते हैं— इत्यादि उदाहरणों में उपमागर्भित होने पर भी वाच्यालङ्कार के द्वारा ही चारुता व्यवस्थित होती है न कि व्यङ्ग्यालङ्कार के तात्पर्य से। अतएव यहाँ वाच्यालङ्कार के द्वारा काव्य का नामकरण न्याय्य (उपयुक्त) है।

कहने का आशय यह है कि यहाँ चन्द्रकिरणों के द्वारा निशा का गुरुत्वसम्पादन, कमलों से नलिनी को शोभावृद्धि, फलों से लता का मनोहरत्व हंसों से शरद का मनोहरत्व, सज्जनों से काव्य कथा का गुर्वी, आदि अर्थ दीपक के बल पर प्रकाशित होते हैं और इन सब की असम्बद्धता को हटाने के लिए उपमानोपमेय भाव की कल्पना करनी पड़ती है। अतः व्यङ्ग्य होकर भी उपमा में चारुत्व का पर्यवसान न होकर दीपक का ही प्राधान्य है। अतः यहाँ अलङ्कार से आक्षिप्त होकर भी उपमा ध्वनि का विषय नहीं बन पाता।

तत्र पर्यवसितमाह इत्येवामित्यादिना— इति= इत्थं, एवंविधे= एतादृशे, विषये= लक्ष्ये, अनुरणनरूपरूपकाश्रये= अनुस्वानोपमरूपकालङ्कराधारेणं, काव्यचारुत्वव्यवस्थानात्= काव्यसौन्दर्यावस्थितेः, स्रूपकध्वनिः= रूपकालङ्कारध्वनिः, इति= इत्थं, व्यपदेशः= अभिधानं, न्सयाय्यः= उपयुक्त इति।

व्यङ्ग्यव्यपदेश्य का दूसरा उदाहरण भी प्रस्तुत करते हैं— अथवा जैसे कि मेरा ही—

हे चञ्चल एवं लम्बी-लम्बी आँखों वाली ! अभी सौन्दर्य की छटा से सफेद की गई है दिशाएं जिससे ऐसे तुम्हारे वदन के मुस्कुरा लेने पर भी जो यह समुद्र थोड़ा सा भी चञ्चल नहीं हुआ इससे मैं समझता हूं कि यह निश्चय ही जलराशि अर्थात् जडराशि है।

यहाँ श्लेष से अनुप्राणित उत्प्रेक्षा वाच्य है और मुस्कराने पर समुद्र के क्षुभित न होने की बात से वदन में चन्द्रमा का आरोप है अतः रूपकालङ्कार ध्वनि है और यह वाच्यालङ्कार की अनुपपत्ति के कारण आक्षिप्त न होकर अर्थसौन्दर्य के बल से प्रतिपत्र होने के कारण वाच्य का उपस्कारक भी नहीं है और सौन्दर्य का पर्यवसान भी इसी में है। अतः यह व्यङ्ग्यव्यपदेश्य काव्य है अर्थात् ध्वनि का विषय है।

उक्त उदाहरणों से पर्यवसित अर्थ बताते हैं- इस प्रकार इस प्रकार के विषय में अनुस्वानरूप रूपक के आश्रय से काव्य के चारुत्व की अवस्थिति होने से रूपक ध्वनि ऐसा अभिधान ही उपयुक्त है।

ध्वन्या०— उपमाध्वनिर्यथा—

वीराणं रमइ घुसिणरूणम्मि ण तदा पिआथणुच्छङ्गे।
दिट्ठी रिउगअकुम्भत्यलम्मि जह वहलसिन्दूर।।
वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे।
दृष्टी रिपुगजकुम्भस्थले यथा वहलसिन्दूरे।।

लीला— व्यङ्ग्यपदेश्यनिर्देशनक्रमे रूपकालङ्कारध्वनिं सोदाहरणं निरूप्य सम्प्रति उपमाध्वनि निरूपयति उपमेत्यादिना— उपमाध्वनिः= उपमाया वाक्यार्थोभूतत्वेन अर्थशक्त्याक्षिप्ततया यो ध्वनिः सः, यथा= इति वक्ष्यमाणपद्ये।

उदाहरति—वीराणामित्यादि—वीराणं (वीराणां) दिट्ठी (दृष्टिः) घुसिणरुणम्मि (घुसृणारुणे) पिआथणुछङ्गे (प्रियास्तनोत्सङ्गे) ण (न) तहा (तथा) रमइ (रमते) जह (यथा) (बहलसिन्दूरे) निउगअकुम्भत्थलम्मि (रिपुगजकुम्भस्थले) रमइ (रमते) इति पदव्यवस्था।

वीराणां= शूरपुरुषाणां, दृष्टिः= विलोकनं, घुसृणारूणे= कुङ्कुमरक्ते— प्रियास्तनोत्सङ्गे= प्रेयसीकुचतटे, तथा= तावत्, न, रमते= मोदते, यथा= यावत्, बहलसिन्दूरे= सिन्दूरप्रचुरे, रिपुगजकुम्भस्थले= शत्रुहस्तिकुम्भप्रदेशे, रमते= मोदत इति।

अत्र प्रियास्तनापेक्षया गजकुम्भे उत्कण्ठाधिक्यकथनाद् व्यतिरेको वाच्यो व्यतिरेको वाच्यो येन प्रियास्तनरिपुगजकुम्भयोरुपमा प्राधान्यमितिचेदित्थं—तत्र दीपकादौ तु उपमाया वाच्योपस्कारकत्वं तत्रैव चमत्कारपर्यवसानादत्र तु सुसज्जितं प्रियाकुचतटं विहायाऽपि रिपुगजकुम्भेष्वेव बहुमानेन वीरतातिशयचमत्कार-प्राधान्याद् व्यञ्जिताया उपमाया एव प्राधान्यमिति।

व्यङ्ग्यव्यपदेश्य के उदाहरण के प्रसङ्ग में रूपकध्वनि के बाद अब उपमा ध्वनि का उदाहरण प्रस्तुत करते हैं—

उपमा ध्वनि जैसे- वीरों की दृष्टि केसर से लाल बने प्रेयसी के स्तनों में उपती नहीं उतनी जितनी कि वैरी के हाथियों के घने सिन्दूर वाले कुम्भस्थलों में।

यहाँ प्रियास्तन से गजकुम्भ का उत्कर्ष बताए जाने से व्यतिरेक अलङ्कार वाच्य है और उसकी उपपत्ति के लिए आक्षिप्त उपमा व्यङ्ग्य है। जैसे दीपक आदि में अपनी उपपत्ति के लिए आक्षिप्त उपमा ध्वनि का विषय नहीं बन पाई तो यहाँ भी तो वैसी ही स्थिति है तो यहाँ कैसे वह ध्वनि का विषय बनेगी ? यहाँ स्थिति में अन्तर है दीपक में उपमा की अपेक्षा दीपक में ही चारुत्व का अस्तित्व था यहाँ तो वीरता के अतिशय चमत्कार उपमा में ही पर्यवसित होता है। अत: यह व्यङ्ग्य व्यपदेश्य है।

ध्वन्या०— यथा वा ममैव विषमबाणलीलायामसुरपराक्रमणे कामदेवस्य—

तं ताण सिरिसहोअर रअणाहरणिम्म हिअअमेचरसम्।
बिम्बाहरे पिआणं णिवेसिअं कुसुमवाणेन।।
(तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम्।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन।।) इति छाया

लीला— प्रागुपस्थापितोदाहरणादरुचेर्दार्ढ्याय वा उपमाध्वनेरुदाहरणान्त-रोपस्थापनायोपक्रमते यथेत्यादिना= इति विकल्पे, यथा= इति वक्ष्यमाणश्लोके, मम= इत्यानन्दवर्धनस्य, विषमबाणलीलायां= तदाख्ये ग्रन्थे, असुरपराक्रमणे= असुरविक्रमावसरे, कामदेवस्य= कामदेवविषये।

उदाहरति 'तं' इत्यादिना—ताण (तेषांसिरिसहोअर रअणाहरणम्मि (श्रीसहोद-ररत्नाहरणे) हिअअमेक्करसं (एकरसं हृदयं) तं (तत्) पिआणं (प्रियाणां विम्बाहरे) (विम्बाधरे) कुसुमबाणेन, (कुसुमबाणेन) णिवेसिअं (निवेशितं) इति पदव्यवस्था।

तेषां= असुराणां, श्रीसहोदररत्नाहरणे= श्रिया:= लक्ष्म्या: सहोदरस्य सहभुवो-रत्नस्य कौस्तुभमणे: आहरणे ग्रहणे, एकरसं= तत्परं, यत्, हृदयं= मन:, तत् कुसुमबाणेन= कामेन, प्रियाणां= प्रियतमानां, विम्बाधरे= विम्बतुल्येऽधरे, आवेशितं= निभज्जितमिति। अत्र कौस्तुभमणिमपहाय प्रियाविम्बाधरेणैव तदुपादानादतिशयोक्त्यलङ्कारो वाच्य:, प्रतीयमाना चोपमा न च रूपकध्वनि:,

रूपकस्यारोप्यमाणत्वेनावास्तवत्वात् अत्र तु तेषां विम्बाधरस्य सर्वसारताबुद्धे-र्वास्तविकत्वात्। मणिविम्बाधरयोः सादृश्यस्य प्राधान्येन चमत्कारहेतुत्वात् उपमाया प्राधान्यम्।

पूर्व उदाहरण से सन्तुष्ट न होकर वा विषय की दृढता के लिए उपमा ध्वनि का दूसरा उदाहरण प्रस्तुत करते हैं- अथवा जैसे मेरा ही विषयवाण लीला में असुरों के पराक्रम के अवसर पर कामदेव का–

'उन लोगों (बसुरों) का लक्ष्मी के सहोदर रत्न–कौस्तुभमणि के हरण एक रस बना वह हृदय कामदेव के द्वारा फूल के बाणों से प्रियतमाओं के विम्बाधरों में निविष्ट कर दिया गया।

यहाँ अतिशयोक्ति वाच्यालङ्कार है और उपमा प्रतीयमान। विम्बाधर की सर्वसारता की बुद्धि के वास्तविक होने से रूपक नहीं। मणि एवं विम्बाधर के सादृश्य में चमत्कार के पर्यवसान से उपमा का प्राधान्य है।

ध्वन्या०— आक्षेपध्वनिर्यथा–

स वक्तुमखिलान् शक्तो हयग्रीवाश्रितान् गुणान्।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः।।

अत्रातिशयोक्त्या हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपस्या–साधारणतद्विशेषप्रकाशनपरस्याक्षेपस्य प्रकाशनम्।

लीला– इत्थमुपमालङ्कारध्वनिं निरूप्य सम्प्रति आक्षेपध्वनेरुदाहरणायो-पक्रमते आक्षेपध्वनिरित्यादिना- आक्षेपध्वनिः= आक्षेपालङ्कारस्य विवक्षितार्थस्य वचनप्रतिषेध आक्षेप इति लक्षणस्यालङ्कारस्य व्यङ्ग्यत्वेन प्रतीयमानतया यः ध्वनिः, सः, यथा= इति वक्ष्यमाणपद्ये, उदाहरति स इत्यादिना— सः हयग्रीवाश्रितान् अखिलान् गुणान् वक्तुं शक्तः यः अम्बुकुम्भैः महोदधेः परिच्छेदं ज्ञातुं शक्त इति पदव्यवस्था।

सः= तादृशो जन एव, हयग्रीवाश्रितान्= हग्रीवनिष्ठान्, अखिलान्= समस्तान् गुणान्= शौर्यादिधर्मान, वक्तुं= कथयितुं, शक्तः= समर्थः, भवति यः, अम्बुकुम्भैः= जलघटैः, महोदधेः= अर्णवस्य, परिच्छेदं= इयतां, ज्ञातुं= वेत्तुं, शक्तः= समर्थो भवतीति।

तत्र अभीष्टं निर्दिशति अत्रेत्यादिना— अत्र= अतिशयोक्त्या= असम्बन्धेऽपि सम्बन्धरूपातिशयोक्त्या, हयग्रीवगुणानां= हयग्रीवनिष्ठशौर्यादिधर्माणां, अवर्ण-नीयताप्रतिपादनरूपस्य= वर्णनातीतसम्पादनस्वरूपस्य, असाधारणद्विशेषप्रंका-शनपरस्य= असाधारणो विलक्षणो यो विशेषो वैशिष्ट्यं तस्य प्रकाशनपरस्य प्रंकटनपरायणस्य, आक्षेपस्य= आक्षेपालङ्कारस्य, प्रकाशनं= ध्वननं विधीयत इति।

अयमत्र पर्यवसितोऽर्थः— यथा जलघटैर्महासागरस्येयतां ज्ञातुं न शक्यते तथैव हयग्रीवगुणा वर्णयितुमशक्या इति वाच्ययाऽतिशयोक्त्या वा हयग्रीव-निष्ठगुणानवर्णशक्यत्वनिषेधादाक्षेपालङ्कारो व्यङ्ग्यो यतोऽवर्णनीयताप्रतिपादन-मेवाक्षेपस्य= रूपकमिष्टप्रतिषेधात्मकत्वात्।

अब आक्षेप का बताते हैं- आक्षेप अलङ्कार के व्यङ्ग्य होने से उत्पन्न ध्वनि जैसे— हयग्रीव मूं आश्रित समस्त गुणों को कहने में वह ही समर्थ हो पाता है जो कि जलकुम्भों से महासागर का परिमाण जानने में समर्थ हो सकता है।

उसमें अभीष्ट अर्थ को बताते हैं— यहाँ पर असम्बन्ध में भी सम्बन्ध रूप अतिशयोक्ति के द्वारा हयग्रीव के गुणों की अवर्णनीयता के प्रतिपादनरूप उनकी असाधारण विशेषताओं के प्रकाशनपरक आक्षेप की व्यञ्जना होती है।

ध्वन्या०— अर्थान्तरन्यासध्वनि: शब्दशक्तिमूलानुरणरूपव्यङ्ग्योऽर्थ शक्तिमूलानुरणरूपव्यङ्ग्यश्च सम्भवति। तत्राद्यस्योदाहरणम्—

देव्वाएत्तम्मि फले कि कोरइ एत्तिअं पुणा मणिओ।
कङ्किल्लपल्लवा: पल्लवाणं अण्णाणं ण सरिच्छा।।

दैवायत्ते फले किं क्रियतामेतावत्पुनर्भणाम:।
रक्ताशोकपल्लवा: पल्लवानामन्येषां न सदृशा:।। (इतिच्छाया)।

पदप्रकाशश्चायं ध्वनिरिति वाक्यस्यार्थान्तरतात्पर्येऽपि सति न विरोध:।

लीला— इत्यमाक्षेपध्वनिमुदाहृत्य सम्प्रति अर्थान्तरन्यासध्वनिमुदाहर्तुमु-पक्रमते अर्थान्तरेत्यादिनाअर्थान्तरन्यासध्वनि:= अर्थान्तरन्यास: सामान्येन विशेष-स्य विशेषेण सामान्यस्य वा साधर्म्याद्वैधर्म्याद्वा समर्थनरूपोऽलङ्कार: स: एव व्यङ्ग्यत्वेन सामर्थ्याक्षिप्ततया यो ध्वनि: स: शब्दशक्तिमूलानुरणनरूपव्यङ्ग्य:= शब्दशक्त्युद्भवानुस्वानोपमव्यङ्ग्यश्च इत्यपर: इति द्विधा सम्भवति इति। अत्रशब्दशक्तिमूलस्य विचारस्तु प्रसङ्गादेव न तु प्राकरणिकत्वेन। तत्र= तयोर्मध्ये, आद्यस्य= शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्य, उदाहरणं= निदर्शनं, यथा= उदाहरणं प्रस्तौति 'देव्या' इत्यादिना— (फले) देव्वाएतम्भि (दैवायत्ते) किं (किं) कीरइ (क्रियतां) एत्तिमं (एतावत्) पुणा (पुन:) भणिमो (भणाम:) कङ्किल्लपल्लवा: (रक्ताशोकपल्लवा:) अण्णाण (अन्येषां (पल्लवाणै (पल्लवानां ण (न) सरिच्छा (सदृशा:) इति पदव्यवस्था।

फले= परिणामे,, दैवायत्ते= विध्यधीने, किं, क्रियतां= विधीयतां, एतावत्= इयन्मात्रं, पुन:= तथापि, भणाम:= वदाम:, यत्, रक्ताशोकपल्लवा:= बकुलकि-सलया:, अन्येषां= इतरेषां सहकारादीनां, न सदृशा:= तुल्या इति।

अत्र अशोकस्य पल्लवेषु हृद्येष्वपि आम्रादिवत्फलं नास्ति इति अभिधाव्या-पारिविषय:। समनोयोगं प्रवृत्तस्यापि फलस्य दैवाधीनत्वात् कदाचिन्नापि भवेदिति

सामान्यात्मकम्। अस्यायमाशयो दैवायत्ते फले किं क्रियतामित्यत्र फलशब्दः प्रकरणवशादभिधया सस्यरूपमर्थं प्रकटयति ततश्च अशोकस्य फलं नास्ति इति प्रस्तुतार्थो लभ्यते। पुनश्च फलशब्दः शब्दशक्तिमूलध्वनिना सम्पदात्मक-प्रयोजनरूपमर्थं बोधयति। ततश्च सर्वेषां सम्पदो दैवायत्ताः कदाचिन्नापि भवेयुरिति सामान्यरूपोऽर्थः पूर्वोक्तप्रस्तुतार्थस्य सम्पदो दैवायत्ताः कदाचिन्नापि भवेयुरिति सामान्यरूपोऽर्थः पूर्वोक्तप्रस्तुतार्थस्य समर्थको लभ्यत इति।

तत्राप्रस्तुतप्रशंसाऽऽशङ्कापरिहाराय प्रकरणमुपक्रमते पदेत्यादिना— अयं= श्लोकनिर्दिष्टः, ध्वनिः= अर्थान्तरन्यासध्वनिः, पदप्रकाशः= पदात् अत्र फलं इत्यस्मात्प्रकाशः प्रकटनं यस्य तादृशः, इति हेतोः, वाक्यस्य, अर्थान्तरतात्पर्ये= इतरार्थप्रयोजने-उपायप्रवृत्तस्यापि सम्पल्लक्षणं फलमलब्धवतः कस्यचिद्राजादेः गुणप्रशंसारूपः प्रस्तुतार्थ इति अप्रस्तुतप्रशंसाविषये, सति= विद्यमाने अपि, न= नैव, विरोधः। अस्यायमाशयः— अत्र तु सर्ववाक्यस्य, प्रवृत्तस्यापि निष्फलस्य प्रशंसा रूपप्रस्तुतार्थत्वादप्रस्तुतप्रशंसा एव प्राधान्येन व्यङ्ग्या किञ्च अप्रस्तुतप्रशंसास्थले प्रस्तुतार्थो व्यङ्ग्यः स क्वचित्तु प्राधानमपि इति व्यवस्था-पितमेव। यदि अर्थान्तरन्यासस्याऽपि व्यंग्यता स्वीक्रियते तदा तु द्वयोरेकत्र प्राधान्यं भवेदिति आशङ्कानिवारणाय कथ्यते यत् सर्वो हि ध्वनिप्रपञ्चः पदप्रकाशो वाक्यप्रकाशश्चेति द्विविधो भवति। तेनात्र फलप्रदेऽर्थान्तरन्यासध्वनिः प्राधान्येन, वाक्ये तु अप्रस्तुतप्रशंसैव प्राधान्येन व्यङ्ग्या भवति। तर्हि कथं व्यवहार इति चेदुच्यतें तत्रापि फलपदोपात्तौ यौ सामर्थ्यसमर्थकावर्थौ तयोर्भावप्राधान्यात् प्राधान्'येन व्यपदेशा भवन्ति इति न्यायेनात्र अर्थान्तरन्यासध्वनिव्यवहार एवेति।

इस प्रकार आक्षेपध्वनि की सोदाहरण प्रस्तुति के बाद अब अर्थान्तरन्यासध्वनि के उदाहरण के लिए उपक्रम करते हैं— अर्थान्तरन्यासध्वनि शब्दशक्तिमूलानुरणन-रूपव्यङ्ग्य एवं अर्थशक्तिमूलानुरणनरूपव्यङ्ग्य करके दो प्रकार की होती है।

उनमें से प्रथम प्रकार का उदाहरण जैसे—

फल के दैवाधीन होने के कारण क्या किया जाय, फिर हम इतना कह सकते हैं कि रक्त अशोक के पल्लवों के समान नहीं होते।'

'यह ध्वनि पद के द्वारा प्रकाशित होने वाली है अतः यदि वाक्य का दूसरे अर्थ में भी तात्पर्य हो तो उसमें कोई विशेष नहीं है।'

सामान्य से विशेष का या विशेष से सामान्य का सामर्थ्य वा वैधर्म्य से समर्थन करना अर्थान्तरन्यास है और अकृतार्थ से प्रकृतार्थ का उन्नयन अप्रस्तुत प्रशंसा है। यहाँ पल शब्द के द्वारा अभिधामूल अर्थान्तरन्यास ध्वनि है और वाक्य का तात्पर्य अप्रस्तुत प्रशंसा में होने पर भी प्रधानता के हिसाब से अर्थान्तरन्यास ध्वनि ही यहाँ है।

ध्वन्या०— द्वितीयस्योदाहरणं यथा—

हिअअट्ठाविअ मण्णुं अवरुण्णमुह हि मं पसाअन्त।

अवरद्धसस वि ण हु दे पहु जाणअ रोसिउं सक्कम्।।

(दयस्थापितमन्युमपरोषमुखीमपि मां प्रमादयन्।।) इति छाया।

अपराद्धस्यापि न खलु ते बहुज्ञ रोषितं शक्यम्)

अत्र हि वाक्यविशेषेण सापराद्धस्यापि बहुज्ञस्य कोप: कर्तुमाक्यं इति समर्थकं सामान्यमन्वितमन्यत्तात्पर्येण प्रकाशते।

लीला— अर्थान्तरन्यासध्वने: अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यस्य उदाहरणायोपक्रमते द्वितीयस्येत्यादिना— द्वितीयस्य-द्वितीयप्रकारस्य अर्थशक्त्युद्भवानुरणनीयमव्यङ्ग्यस्य अर्थान्तरन्यासध्वने:, उदाहरणं= निदर्शनं, यथा= इति वक्ष्यमाणपद्ये—

उदाहरति हिअअ इत्यादि— हे पहुजाणअ (बहुज्ञ) हिअअट्ठाविअमण्णुं (हृदयस्थापितमन्युं) अवरुण्णमुहं (अपरोषमुखी) हि (अपि) म (मां) पसाअन्त (प्रसादयन्) अवरद्धस्स (अपराद्धस्य) वि (अपि) दे (ते) रोसिडं (रोषितुं) ण (न) हु (खलु) सक्कं (शक्यम्) इति पदव्यवस्था।

हे बहुज्ञ ! हे भूरिविद् ! पराशयवेत्त: ! हृदयस्थापितमन्युं= चित्तावधारितक्रोधां, अपरोषमुखीं= क्रोधहीनवदनां— प्रसन्नवदनां, अपि, मा, प्रसादयन्= प्रसन्नां कुर्वन्, अपराद्धस्य= कृतापराधस्य, अपि, ते= तव, रोषितुं= क्रोद्धुं, न, शक्यं= सम्भाव्यं, खलु इति वाक्यालङ्कारे।

तत्राभीष्टं निर्दिशति अत्रेत्यादिना— अत्र= अस्मिन् पद्ये, हि= इति अवधारणे, वाच्यविशेषेण= वाच्यार्थेन, सापराधस्य= कृतागस:, अपि, बहुज्ञस्य= भूरिविद:, कोप:= क्रोध:, कर्तुं= विधातुं, अशक्य:= असम्भाव्य:, इति, समर्थकं= द्योतकं, अर्थसामान्यं= अभिप्रायसाधारणं, अन्वितं= सम्बद्धं, अन्यद्= अपरं, तात्पर्येण= व्यञ्जनया, प्रकाशते= अभिव्यनक्ति इति।

अस्यायमाशय:— अन्त: कोपां प्रसन्नमुखीं मामपि प्रसादयंस्त्वं बहुज्ञोऽसि अत: कृतागसोऽपि ते मन्यु: कर्तुं न शक्य: इति वाच्यविशेषेण अपराद्धस्यापि बहुज्ञस्य क्रोध: कर्तुमशक्य इति व्यञ्जनागम्यस्य अर्थसामान्यस्य समर्थनादर्थशक्तिमूलोऽर्थान्तरन्यासध्वनि:। शब्दानां परिवर्तनसहत्वञ्चात्र अर्थशक्तिमूलत्वस्य हेतुरिति।

दूसरे अर्थात् अर्थशक्तिमूलानुरणनस्वरूप व्यङ्ग्य अर्थान्तरन्यास ध्वनि का उदाहरण देते हैं- दूसरे का उदाहरण जैसे—

'हे बहुज्ञ मन में क्रोध लेकर भी प्रसन्न वदन वाली मेरे को भी प्रसन्न करने में आप सफल हैं। अत: अपराध किए हुए भी आप पर क्रोध करना सम्भव नहीं है।'

लक्ष्य पर लक्षण घटाते हैं—

यहाँ पर वाच्यविशेष के द्वारा अपराध किए हुए भी बहुज्ञ के ऊपर कोप करना सम्भव नहीं' यह समर्थक सम्बद्ध अन्य अर्थसामान्य तात्पर्य अर्थात् व्यञ्जना के द्वारा प्रकाशित होता है।

इसका आशय यह है कि आप बहुज्ञ हैं और भीतर क्रोध को छिपाकर बैठी मेरे को भी आप ने प्रसन्न किया और आप के ऊपर क्रोध किया नहीं जा सकता यह वाच्य विशेष है और इसके द्वारा ध्वनित अर्थसामान्य है—अपराध किए हुए भी बहुज्ञ के ऊपर क्रोध करना कठिन है। अतः यह अर्थान्तरन्यास ध्वनि है जो कि अर्थशक्ति से आक्षिप्त है।

ध्वन्या०— व्यतिरेकध्वनिरप्युभयतः सम्भवति। तत्राद्यस्योदाहरणं प्राक्प्रदर्शितमेव। द्वितीयस्योदाहरणं यथा—

जाएज्ज वणुद्देशे खुज्ज व्विअ पाअवो गडिअवत्तो।
मा माणुसम्मि लोए ता एच्चरसो दरिद्दो अ।।

(जायेय वनोद्देशे कुब्ज एव पादपो गलितपत्रः।
मा मानुषे लोके त्यागैकरसो दरद्रिश्च।। इति छाया।)

अत्रहि त्यागैकरसस्य दरिद्रस्य जन्मानभिनन्दनं त्रुटितपत्रकुब्जपादपजन्माभिनन्दनं च साक्षाच्छब्दवाच्यम्। तथाविधादपि पादपात्तदृशस्य पुंस उपमानोपमेयत्वप्रतीतिपूर्वकं शोच्यतायामाधिक्यं तात्पर्येण प्रकाशयति।

लीला— अलङ्कारध्वनिनिरूपणप्रसङ्गे सम्प्रति व्यतिरेकध्वनिनिदर्शनायोपक्रमते व्यतिरेकेत्यादिना— व्यतिरेकध्वनिः= व्यतिरेकस्य उपमानादुपमेयस्य केनचिद्धर्मेणाधिक्यवर्णनरूपस्यालङ्कारस्य व्यङ्ग्यत्वेन यो ध्वनिः सोऽपि अर्थान्तरन्यासध्वनिरिव, उभयरूपः= शब्दार्थोभयशक्तिमूलानुस्वानसन्निभव्यङ्ग्यध्वनिरूषः। तत्र= तयोर्भेदयोर्मध्ये, आद्यस्य= प्रथमस्य शब्दशक्तिमूलस्य, उदाहरणं= निदर्शनं, प्राक्= प्रथममेवः— 'खं येऽत्युज्ज्वलयन्ति, 'रक्तस्त्वं नवपल्लवैः' इत्यपि च, प्रदर्शितं= उपस्थापितं, एव= इत्यवधारणे-नु पुनस्तस्यावश्यकतेति। द्वितीयस्य= अर्थशक्तिमूलस्य व्यतिरेकध्वनिः, उदाहरणं-निदर्शनं, यथा= इति वक्ष्यमाणपद्यम्।

उदाहरति जाएज्ज इत्यादि— वणुद्देशे (वनोद्देशे) खुज्ज (कुब्जः) व्विअ (इव) गडिअवत्तो (गलितपत्रः) पाअवो (पादपः) जाएज्ज (जायेय) माणुसम्मि (मानुषं) लोए (लोके) ताएव्वकरसो (त्यागैकरसः) दरिद्दो (दरिद्रः) अ (च) (मा जायेय) इति पदव्यवस्था।

वनोद्देशे= गहनंकानने, कुब्जः= ह्रस्वःस्तम्भाद्ययोग्यः, अजातदलः फलपुष्परहितः, पादपः= वृक्षः, जायेय= भवेयं, कामं किन्तु, मानुषे=

मनुष्यसमाकीर्णे, लोके= जगति, त्यागैकरसः= सततदानरतः, दरिद्रः= निर्धनः च मा भूवमिति।

तत्र पर्यवसितं निर्दिशति अत्रेत्यादिना—अत्र= काव्येऽस्मिन्, हि, त्यागैकरसस्य= त्यागो दानमेव एकरसः सततपरायणता यस्य तस्य, दरिद्रस्य= निर्धनस्य, जन्मानभिनन्दनम्= उद्भवाप्रशमनं, त्रुटिंतपत्रकुब्जपादपजन्माभिनन्दनं= त्रुटितानि गलितानि पत्त्राणि दलपुष्पादीनि यस्य स तादृशो यः कुब्जो ह्रस्वः पादपो वृक्षस्तस्य जन्म अवस्थितिस्तस्याभिनन्दनं प्रशंसनं, च, साक्षाच्छब्दवाच्यं= प्रत्यक्षत एवाभिधानबोध्यम्। तथाविधात्= पादपात्= वृक्षात्, अपि, तादृशस्य= तथाविधावस्थस्य, पुंसः पुरुषस्य, उपमानोपमेयत्वप्रतीतिपूर्वकं= उपमानोमेयमा-वव्यञ्जनपूर्वकं, तात्पर्येण= व्यञ्जनया, शोच्यतायां= दयनीयत्वे, आधिक्यं= प्रकर्षं, प्रकाशयति= व्यनक्ति इति। अस्यायमाशयः- अत्र हि दानपदरिद्रादान्निष्पत्र खर्ववृक्षत्वमेव वरमिति तु अभिधयैव गम्यम्। किन्तु तादृशशस्य पुंसस्तादृशाद् वृक्षादपि शोचनीयत्वाधिक्यं तु अर्थशक्त्याक्षिप्तमिति अर्थशक्तिमूलव्यतिरेकध्-वनेरुदाहरणमिति।

अर्थशक्ति से उत्पन्न अलङ्कार ध्वनि के विवेचन के प्रसङ्ग में अब व्यतिरेक ध्वनि के उदाहरण का उपक्रम करते हैं- अर्थान्तरन्यास की तरह व्यतिरेक ध्वनि भी दो प्रकार की होती है—शब्दशक्तिमूल एवं अर्थशक्तिमूल। उनमें से पहले का उदाहरण पहले ही 'खं येऽत्युज्ज्वलयन्ति' एवं रक्तस्त्वपं नवपल्लवैः इत्यादि पद्य में दिया जा चुका है। दूसरे उदाहरण में जैसे—

भले ही मैं घने जङ्गल में पात से रहित कुबड़ा पेड़ बन जाऊँ लेकिन इस मनुष्य लोक में दान के लिए तत्पर गरीब न बनूं।'

यहाँ पर त्याग ही है एक मात्र रस जिसके ऐसे दग्रिद के जन्म निन्दा एवं पात गिरे हुए कुबड़े पेड़ के जन्म की प्रशंसा तो शब्दों से प्रत्यक्ष ही वाच्य है। उस प्रकार के वृक्ष से भी उस अवस्था के पुरुष का उपमान एवं उपमेय भाव की प्रतीति पूर्वक शोचनीयता में अधिकता व्यञ्जना के द्वारा प्रकाशित होती है जो कि अर्थशक्ति से आक्षिप्त व्यतिरेक ध्वनि का उदाहरण है।

ध्वन्या०— उत्प्रेक्षाध्वनिर्यथा—

चन्दनासक्तभुजगनिश्श्वासानिलमूर्छितः।
मूर्छयत्येष पथिकान् मधौ मलयमारुतः।।

अत्र हि मधौ मलयमारुतस्य पथिकमूर्छाकारित्वं मन्मथोन्माददा-यित्वेनैव। तत्तु चन्दनासक्तभुजगनिश्श्वासानिलमूर्छि- तत्वेनोत्प्रेक्षितमि-त्युत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादनुरणनरूपा लक्ष्यते।

लीला— अर्थशक्त्युद्भवालङ्कारध्वनिविवेचनाप्रसङ्गे सम्प्रति उत्प्रेक्षाध्वनेः उदाहरणायोपक्रमते उत्प्रेक्षेत्यादिना- उत्प्रेक्षाध्वनिः= उत्प्रेक्षायाः, उपमेये उपमानता-

दात्म्यसम्भावनरूपाया अलङ्कृतेः अर्थशक्त्याक्षिप्तव्यङ्ग्यत्वेन यो ध्वनिः सः यथा= इति वक्ष्यमाणपद्ये।

उदाहरति चन्दनेत्यादि- चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः एषः मलयमारुतो मधौ पथिकान् मूर्च्छयति एव इति पदव्यवस्था।

चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः= चन्दनेषु श्रीखण्डवृक्षेषु आसक्ताः= संसक्ता ये भुजगाः सर्पास्तेषां निःश्वासानिलेन श्वासमारुतेन मूर्च्छितो बृंहिता, एषमलयमारुतः= मलयपवनः, मधौ= वसन्ते, पथिकान्= प्रियाविरहितान्, पान्थानमूर्च्छयति= मोहयति, एवेति।

तत्र पर्यवसितं निर्दिशति अत्रेत्यादिना— अत्र= पद्येऽस्मिन्, हि, मधौ= वस्तुन्ततौ, मलयमारुतस्य= मलयाचलगतमन्दपवनस्य, पथिकमूर्च्छाकारित्वं= पान्थसम्मोहनं, मन्मथौन्मथदायित्वेन= कामोद्दीपनत्वेन, एव। तत्= संमोहनं, तु, चन्दना सक्तभुजगनिःश्वासानिलमूर्च्छितत्वेन= श्रीखण्डसंसक्तसर्पैनिः श्वासमारुतोपबृंहितत्वे उत्प्रेक्षितं= उन्नमितम्, इति, उत्प्रेक्षा, साक्षात्= शब्दतः, अनुक्ता अप्रतिपादित अपि, वाक्यार्थसामर्थ्यात्= वाक्याशयबलात्, अनुरणनरूपा= अनुस्वानोपमा, लक्ष्यते= दृश्यते इति।

मलयानिलस्य तादृशविषसंसर्गमन्तरेण मूर्च्छाहेतुत्वमसम्भवीति तादृशसंसर्गवत्त्वेनोत्प्रेक्षित इत्यत्र हेतूत्प्रेक्षा।

अर्थशक्ति से उत्पन्न अलङ्कार ध्वनि के विवेचन के प्रसङ्ग में अब उत्प्रेक्षाध्वनि के उदारहण के लिए उपक्रम करते हैं—

उत्प्रेक्षाध्वनि जैसे- चन्दन के पेड़ में लिपटे साँप के निःश्वास के वायु से बृंहित यह मलयमा वसन्त में पथिकों को मूर्च्छित करता है।

यहाँ पर वसन्त में मलयमारुत का पथिकों के लिए मूर्च्छाकारक होना सम्भव नहीं है। अतः उसके मूर्छाकारकत्व में चन्दन से में लिपटे साँप के निःश्ववायु से बृंहित होने से ही उत्प्रेक्षित होने से उत्प्रेक्षा ध्वनि है।

ध्वन्या०— न चैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणासम्बद्धतैवेति शक्यते वक्तुम्। गमकत्वादन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात्।

ध्वन्या०— यथा—

ईसाकलुसस्स वि तुह मुहस्स णं एस पुण्णिमाचन्दो।
अज्ज सरिसत्तणं पाविऊण अङ्गे विअ ण माइ।।

ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः।
अद्य सदृशत्वं प्राप्याङ्ग एव न माति।।) इतिच्छाया।

लीला— पूर्वोदाहृतपद्य उत्प्रेक्षाभावमाशंक्य समादधाति नचैवंविधेदायित्यादिना- न च, एवंविधे= एतादृशे, विषये= प्रसङ्गे, इत्यादिशब्दप्रतीतं इवप्रभृति

नूनं-मन्ये-शङ्के-ध्रुवं-प्रायः शब्दव्यवहारम्= अन्तरेण= विनैव, सम्बद्धता= सम्बन्धाभावत्वम् असङ्गतिः एव, इति= इत्थं, वक्तुं= कथयितुं शक्यते= पार्यते। तत्र हेतुमाह गमकत्वादित्यादि- गमकत्वात्= तेषां इवादिशब्दानामुत्प्रेक्षावाचकानां अप्रयोगे व्यवहाराभावे, तदर्थगतिदर्शनात्= तदर्थागतिदर्शनात्= तदर्थस्य उत्प्रेक्षा-लक्षणगम्यङ्ग्यस्य, अवगतिर्बोधस्तस्या दर्शनात्= व्यवसायविषयत्वादिति। अस्यायमाशयः, उत्प्रेक्षायां साध्ये उपमानस्योपमेयात्मनाऽध्यवसाय एव हेतुर्नतु वाचकशब्दव्यवहारोः यतो वाचकशब्दाप्रयोगेऽपि तत्प्रतीतेस्तादृशशब्दप्रयोगेऽपि अध्यवसायाभावे तदप्रतीतेरिति। तेन उत्प्रेक्षाया उत्प्रेक्षणसद्भाव एव हेतुः। यत्रोत्प्रेक्षणसद्भावस्तत्र वाचकशब्दयोगे वाच्या भवति, तदभावेऽपि वाच्यार्थविबोध ानिर्वाहे सा प्रतीयमाना, प्रकरणमात्रेण प्रतीतौ व्यङ्ग्या चेति।

तदेवोदाहरति यथेत्यादिना— यथा वक्ष्यमाणपद्ये उदाहरणं प्रस्तौति ईसाकलुसस्स इत्यादि—एस (एषः) पुण्णिमाचन्दो (पूर्णिमाचन्द्रः) ईसाकलुसस्स (ईर्ष्याकलुषस्य) वि (अपि) तुह (तव) मुहस्स (मुखस्य) अज्ज (अद्य) सरिसत्तणं (सदृशत्वं) पाविऊण (प्राप्य) अङ्गे विअ (एव) ण (न) माइ (माति) णं (ननु) इति पदव्यवस्था।

एषः= सद्य एव नभोगतः, पूर्णिमाचन्द्रः= ससमग्रकल इन्दु, ईर्ष्याकलुषस्य= ईर्ष्यया सपत्नीजनप्रतिद्वन्द्विभावेन कलुषस्य मलिनस्यः, अपि, तव मुखस्य= वदनस्य, अद्य, सदृशत्वं= तुल्यत्वं, प्राप्य= लब्ध्वा, ननु—निश्चयमेव, अङ्गे= आत्मन्येव, न, माति= समायुक्तो, भवति इति। शशिनः सकलङ्कत्वात्ते मुखस्य निष्कलङ्कत्वात्सदैवात्मनो निर्जितमेव मन्यमानः सोऽद्य ते मुखमीर्ष्याकलुषितं दृष्ट्वा तत्सदृशत्वं प्राप्य स्वाङ्गे एव न तिष्ठति अपितु दश दिशः प्रधावति इति। अत्र पूर्णचन्द्रेणं दिशां पूरण स्वरससिद्धमेवमुत्प्रेक्ष्यते वाचकशब्दाभावेऽमि। अर्थात् तव मुखस्य सादृश्यं प्राप्य इवेति मुखसादृश्यप्राप्तिहेतुकत्वेन उत्प्रेक्ष्यत इत्याशयः।

पूर्वोदाहृत पद्य में उत्प्रेक्षा के अभाव की आशङ्का न हो इस पर कहते हैं—

न तो इस प्रकार के विषय में इव आदि उत्प्रेक्षा वाचक शब्द (मन्ये, शङ्के ध्रुवं, प्रायः, इव, आदि) के अभाव में ही असम्बद्धता अर्थात् उत्प्रेक्षा की असङ्गति का होना ही कहा जा सकता है। प्रमाण की सत्ता के होने पर अन्यत्र भी उसके प्रयोग न होने पर भी उससे अर्थ का अवगमन देखा जाता है।

कहने का आशय यह है कि उत्प्रेक्षण की सत्ता ही उत्प्रेक्षा का हेतु है न कि वाचक शब्द। हाँ, वाचक शब्द के होने से उत्प्रेक्षा वाच्य होती है और न होने से वाच्यार्थ से आक्षिप्त होकर प्रतीयमान होती है और प्रकरण आदि से व्यङ्ग्य। जैसे—

'यह पूर्णचन्द्र ईर्ष्या से कलुषित तुम्हारे वदन का सादृश्य पाकर आज निश्चय ही अपने में समा नहीं पा रहा है।'

चन्द्रमा के कलङ्क से युक्त होने और तुम्हारे वदन के निष्कलङ्क होने से वह कभी भी तुम्हारे वदन की बराबरी न कर पाने से सिकुड़ सा रहता था। आज तुम्हारे वदन की ईर्ष्या से धुमिल होने पर वह इसका बराबरी कर पाया। अतः वह अपने में फूला नहीं समा पा रहा है और दशों दिशाओं में पूरित है।'

यहाँ इव 'आदि वाचक शब्द के न होने पर भी उत्प्रेक्षण भाव के होने से उत्प्रेक्षा है, वह है वदन का सादृश्य पा कर जैसा ही चमकता है। यह उत्प्रेक्षाध्वनि का उदाहरण है।

ध्वन्या०— यथा वा—

त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि।
तस्थौ तथापि न मृगः क्वचिदङ्गनाभि–
राकर्णपूर्णनयनेषु हतेक्षणश्रीः।।

शब्दार्थव्यवहारे च प्रसिद्धिरेव प्रमाणम्।

लीला— पूर्वोदाहरेण इवादिवाचकशब्दाभावेऽपि वितर्कोत्प्रेक्षारूपमाचक्षाणेन ननु शब्देन तस्या असङ्गतिर्निराकृतैव तत्कथमुच्यते वाचकशब्दाभावेऽपि सङ्गतिर्भ वत्येवेत्याशङ्कानिरासायो- दाहरणान्तरं प्रस्तौति यथेत्यादिना- वा= इति पक्षान्तरे, यथा= इति निदर्शने।

उदाहरणमुपस्थापयति त्रासाकुल इत्यादि— त्रासाकुलः निकेतान् परितः परिपतन् मृगः कैश्चित् अपि धन्विभिः पुंभिः न अन्वबन्धित तथापि अङ्गनाभिः आकर्णपूर्णनयनेषु हतेक्षणश्रीः क्वचित् न तस्थौ इति पदव्यवस्था।

त्रासाकुलः= भयातुरः, अतएव, निकेतान्= सेनानिवेशान्, परितः= अभितः, परिपतन्= धावन्, मृगः= हरिणः, कैश्चिदपि, धन्विभिः= धनुर्धारिभिः, पुंभिः= पुरुषैः,तु न अन्वबन्धि= नान्वधावि, तथाापि, अङ्गनाभिः= स्त्रीभिः, आकर्णपूर्णनयनेषु हतेक्षणश्रीः= कर्णपर्यन्तायतलोचनरूपशरबाधितविलोचनः, सन्, क्वचित्= कुत्रचिदपि, न, तस्थौ= स्थितवानिति।

अत्र इवादिवाचकशब्दाभावेऽपि प्रमदानयनबाणहतेक्षणश्रीकत्वस्य स्थित्य-भावहेतुतया सम्भावनादुत्प्रेक्षैव। एवमेव चन्दनेत्यादिपद्येऽपीति भावः। अत्रापि हेतूत्प्रेक्षाध्वनिरेव।

ननु एतदपि असम्बद्धमस्तु इत्याशङ्क्याह शब्देत्यादि—शब्दार्थव्यवहारे= एवमस्य शब्दस्यार्थ इति व्यवहारे, च, प्रसिद्धिः= प्रतिपत्तृणां प्रतीतिः, प्रमाणं, तेन उक्तस्थले इवादिशब्दाभावेऽपि उत्प्रेक्षारूपार्थस्य सहृदयानां प्रतीतेरसम्ब-द्धत्वापादानं न युक्तमिति भावः।

'पूर्वोदाहरण में 'इव' आदि वाचक शब्दों के अभाव होने पर भी वितर्क

उत्प्रेक्षा को जताने वाला 'ननु' शब्द तो है ही जिससे असम्बद्धता हटाई जाती है, तो फिर कैसे मानें कि वाचक शब्द के न होने पर भी सम्बद्धता बन पाती है' इस आशङ्का के निवारण हेतु दूसरा उदाहरण प्रस्तुत करते हैं अथवा जैसे–

डर से आतुर होकर सेना निवेश के चारों ओर घूमते हुए भी मृग का किसी भी धनुर्धारी पुरुष ने पीछा नहीं किया, फिर भी प्रमदाओं के कानपर्यन्त लम्बे नयनरूप बाणों से आँखों की ज्योति आहत होने से वह कहीं भी खड़ा न हो पाया।

यहाँ पर यद्यपि त्रास से चञ्चल होकर दौड़ भागना मृग का स्वभाव है तथापि खड़ा न हो पाने में नयन बाणों से आँखों की ज्योति हत हों जाने रूप कारण उत्प्रेक्षित होने से उत्प्रेक्षाध्वनि है।

'इसको भी असम्बद्ध ही माना जाय' इस पर कहते हैं– शब्द और अर्थ के व्यवहार में प्रसिद्धि ही प्रमाण है। अर्थात् शब्द का यही अर्थ हो, यह प्रतिपत्ताओं की प्रतीति में निर्भर है। अत: जहां पर सहृदयों को सम्बद्धता का आभास हो वहाँ सम्बद्धता बन जाती है और जहाँ पर वैसा आभास न हो वहाँ पर कुछ होने पर भी असम्बद्धता ही मानी जाएगी। इन उदाहरणों में सम्बद्धता का भान होता है, अत: कहीं भी असम्बद्धता नहीं है।

इसका निष्कर्ष यह है कि जहाँ पर उत्प्रेक्षण के रहते हुए वाचक शब्द से उसका प्रकटन हो वहाँ वाच्योत्प्रेक्षा मानी जाती है, जहाँ पर वाचक शब्द तो न हो किन्तु विना उत्प्रेक्षा के अर्थ पूरा न हो वहाँ प्रतीयमानोत्प्रेक्षा होती है और जहाँ वाचक शब्द न हो और अर्थ के पूरे होने पर भी प्रकरण से उत्प्रेक्षा अभिव्यक्त हो वहाँ ध्वन्यमान उत्प्रेक्षा होती है और काव्य सौन्दर्य उसमें निहित होता है।

ध्वन्या०– श्लेषध्वनिर्यथा–

रम्या इति प्राप्तवती: पताका: रागं विविक्ता इति वर्धयन्त:।
यस्यामसेवन्त नमद्वलीका: समं वधूभिर्वलभीर्युवान:।।

अत्र वधूभि: सह वलभीरसेवन्तेति वाक्यार्थप्रतीतेरनन्तरं वध्व इव बलभ्य इति प्रीततिरशब्दाऽप्यर्थसमर्थ्यान्मुख्यत्वेन वर्तते।

लीला– इत्थमर्थशक्त्युद्भवध्वनिप्रकरणे उत्प्रेक्षाध्वनिं सोदाहरणं निरूप्य सम्प्रति श्लेषध्वनेरुदाहरणायोपक्रमते श्लेषतयादिना– श्लेष:– उभयविशेष्यान्वितयोरर्थयोरेकेण प्रोक्तिरूपो योऽलङ्कारस्तस्य व्यङ्ग्यत्वेन यो ध्वनि:, यथा= इति उदाहरिष्यमाणे पद्ये–

उदाहरणं प्रस्तौति 'रम्या' इत्यादि–यस्या युवान: रम्या इति पताका: प्राप्तवती: विविक्तां इति रागं वर्धयन्ती: नम, द्वलीका: वलभी: वधूभि: समम् असेवन्त इति पदव्यवस्था।

यस्यां= यत्र द्वारकायां, युवान:= तरुणा: कामुकाश्च, रम्या:= मनोहरा:, इति= हेतो:, पताका:= ध्वजा: प्रसिद्धीश्च प्राप्तवती: उपलब्धवती:, विविक्ता:=

जनशून्याः विमनाश्च, इति= हेतोः, राग चित्शोभा पक्षे, रमणाभिलाषं, बोयन्तीः= बृंहयन्तीः, नमद्वलीका:= नतनीध्राः नम्रत्रिवलीः, बलभीः= गोपानसीः, वधूभिः= कामुकीभिस्त्रीभिः, समं= साकम्, असेवन्त= आश्रयन्तेति।

तत्राभीष्टं कथयति अत्रेत्यादिना—अत्र= अस्मिन् पद्ये, सह वलभीरसेवन्त= प्रमदाभिः साकं गोपानसीराश्रयन्त, इति वध्वः प्रमदाः इव वलभ्यः—गोपानसीः वाक्याशयबोधस्य, अनन्तरं= पश्चात्, वध्वः= प्रमदाः इव वलभ्यः—गोपानसीः इति इत्थं, श्लेषप्रतीतिः= श्लेषावभासः अशब्दा= शब्दानवबोध्याऽपि, अर्थसाम-र्थ्यात्= अर्थाक्षिप्तत्वेन, मुख्यत्वेन= चारुत्वपर्यवसायितया प्रधानत्वेन, वर्तते= द्योतत इति श्लेषपक्षे सुन्दर्य इति प्रसिद्धाः विमला इति रागवर्धिनीः नतत्रिवलीः वधूः इति वलभीः इवेति।

अत्र तुल्यार्थोऽपि समशब्दः प्रतीतः श्लेषबवलादेवेति नोपमाध्वनिः किञ्च श्लेषस्तु न कदापि अभिधेयोऽपितु अर्थसौन्दर्यबलादिति सर्वणा ध्वन्यमान एवेति।

अलङ्कार ध्वनि के प्रसङ्ग में अब श्लेष ध्वनि की विवेचना करते हैं— श्लेष ध्वनि जैसे—

जिस में (द्वाकापुरी में) नवयुवक सजावट के लिए ध्वजा में युक्त (पक्ष में) सुन्दरता के लिए प्रसिद्ध, निर्जन होने से राग बढ़ी हुई (पक्ष में) विमल होने से रमण का अभिलाष बढ़ी हुई, झुके हुए छादन से युक्त (पक्ष में) नव त्रिवली से सुशोभित वलभी को पक्ष में वलभी की तरह बधुओं के साथ पक्ष में बधुओं का सेवन किया।

यहाँ पर 'वधूओं के वलभियों का सेवन करते थे इस वाक्यार्थ की प्रतीति के बाल बलभियों के समान बधुएँ' यह श्लेष क़ी प्रतीति शब्द के विना ही अर्थ सामर्थ्य से मुख्य रूप में वर्तमान है।

इसका आशय यह है कि जहाँ एक ही शब्द से दो अर्थ बताए जाते हैं वहाँ श्लेष होता है। अतः श्लेष में पहला अर्थ तो सदा वाच्य होता है और दूसरा सदा ध्वन्यात्मक। वाच्य अर्थ तो सर्वसंवेद्य होता है और दूसरा केवल सहृदयसंवेद्य। उक्त पक्ष में 'सजावट के लिए ध्वजा से युक्त जनसञ्चार से शून्य होने क़े कारण राग बनी हुई झुके हुए छात वाली वलभी का युवक युवतियों का सेवन करते थे। यह तो हुआ वाच्यार्थ जो अभिधा से गम्य है। उसके बाद शब्द से कहे विना ही अर्थ सौन्दर्य के बल से रमणीयता में प्रसिद्ध एकान्त होने से राग बढ़ाने वाली झुकी हुई त्रिवलियों से युक्त वलभी के समान वधुओं का युवक सेवन करते थे।' यह दूसरा अर्थ सहृदयों को एक ही प्रयत्न से अवगत होता है। अतः यह श्लेष ध्वऩि का उदाहरण है। यहाँ श्लेष की प्रतीति के कारण समान शब्द के प्रयोग होने पर भी उपमा नहीं है क्योंकि सौन्दर्य का पर्यवसान श्लेष में है न कि तुलना में।

ध्वन्या०— यथासङ्ख्यध्वनिर्यथा—

अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च सहकारः।
अङ्कुरितः पल्लवितः कोरकितःपुष्पितश्च हृदि मदनः।।

अत्र हि यथोद्देशमनूद्देशे यच्चारुत्वमनुरणनरूपं मदनविशेषणभूताङ्कुरितादिशब्दगत तन्मदनसहकारयोस्तुल्ययोगि— तासमुच्चयलक्षणाद्वाच्यादतिरिच्यमानमालक्ष्यते।

लीला— एवं श्लेषध्वनिं निरूप्य अर्थशक्त्याक्षिप्तालङ्कारध्वनिनिरूपणप्रसङ्गे सम्प्रति यथासङ्ख्यध्वनिं निरूपयति यथासङ्ख्यमित्यादिना— यथासङ्ख्यध्वनिः= यथासङ्ख्यं निर्देशक्रमतः समन्वयरूपोऽलङ्कारस्तस्य अर्थशक्त्याक्षिप्तत्वेन व्यङ्ग्यतया यो ध्वनिः, सः, यथा= इति उदाहरिष्यमाणपद्ये।

उदाहरति अङ्कुरित इत्यादिना— सहकारः अङ्कुरितः पल्लवितः कोरकितः पुष्पितः च हृदि मदनः अङ्कुरिनः पल्लवितः कोरिकतः पुष्पितः च इति पदव्यवस्था।

सहकारः—चूतः, अङ्कुरितः= उत्पन्नाङ्कुरः, पल्लवितः= विकसितकिसलयः कोरकितः= समुत्पन्नकुड्मलः, पुष्पितः= उत्पन्नमञ्जरीकः च क्रमेण अभूत् तथैव हृदि= युवकमनसि, मदनः= कामः, अकुरितः= प्रबोधितः, पल्लवितः= उद्दीपितः, कोरकितः= जागरितः, पुष्पितः= विकसितश्चेति क्रमेण अभूदिति।

तत्र पर्यवसितं निर्दिशति अत्रेत्यादिना— अत्र= अस्मिन्नुदाहृतपद्ये, हि= इति वाक्यालङ्कारे, यथोद्देशं= यथोच्चारणं, अनुद्दशे पश्चात्तेनैव क्रमेण कथने, यत् मदनविशेषणभूताङ्कुरितादिशब्दगतं= कामविशेषणभूतं–अङ्कुरित आदिशब्दसम्बद्धं, अनुरणनरूपं= अनुस्वाननिभं, चारुत्वं= सौन्दर्यं तत्प्रतीतिः, तत् वाच्यात्= वाच्यार्थ भूतात्, मदनसहकारयोः= कामचूतयोः, तुल्योगितासमुच्चयलक्षणात्= प्रकृतानां भिन्नानां वा तादृक्त्वं तुल्ययोगिता तथैव एकस्मिन् सति हेतौ हेत्वन्तरगो समुच्चय इति अत्र च- कामसहकारयोरङ्कुरणाद्येकधर्मयोगितया तुल्ययोगिता उभयोर्युगपदेवांकुरणादिना समुच्चयश्च, तयोर्लक्षणात्, अतिरिच्यमानं= विशिष्टत्वेन भिद्यमानं, आलक्ष्यते= व्यञ्जनया प्रतीयत इति। अस्यायमाशयः—

वसन्तवर्णनक्रमे प्रस्तुतयोरुभयोरेव मदनचूतयोरङ्कुरणाद्येक- धर्मयोगितया तुल्ययोगितालङ्कार उभयोर्युगपदेवाङ्कुरणादिना वमुच्चयालङ्कारश्च वाच्यमुखेनैव प्रतीयेते। तदनु क्रमस्योपलक्षितत्वेन ध्वन्यते यथासङ्ख्यमलङ्कार इति यथासङ्ख्यालङ्कारध्वनेरुदाहरणमिदम्।

इस प्रकार अर्थशक्तिमूल अलङ्कारध्वनि के विवेचनक्रम में श्लेषध्वनि के उदाहरण के बाद अब यथासङ्ख्यध्वनि का उदाहरण प्रस्तुत करने का उपक्रम करते हैं—

यथासङ्ख्यध्वनि जैसे—

जिस प्रकार आम्रवृक्ष अङ्कुरित, पल्लवित, कोरकित एवं पुष्पित हुआ उसी तरह युवाओं के हृदय में कामदेव अङ्कुरित, पल्लवित, कोरकित एवं पुष्पित हुआ।'

यहाँ उच्चारण के प्रथम क्रम के अनुसार ही जो बाद में उच्चरित है उससे जा कामदेव के विशेषणभूत अङ्कुरित आदि शब्द गत अनुरणन रूप चारुत्व है, वह वाच्यभूत कामदेव एवं सहकार के तुल्ययोगिता एवं समुच्चय के लक्षण वाले वाच्यालङ्कार से अतिरेक के रूप में प्रतीत हुआ गोचर होता है। उसका आशय यह है कि कामदेव एवं सहकार के अङ्कुरण आदि एक धर्मयोगी होने से तुल्ययोगिता है और दोनों एक ही बार अङ्कुरण आदि होने से समुच्चय अलङ्कार भी वाच्य के द्वारा प्रतीत होते हैं। उसके बाद क्रम के उपलक्षित होने से यथासङ्ख्य अलङ्कार ध्वनित होता है। अतः यह यथासंख्य ध्वनि का उदाहरण है।

ध्वन्या०— एवमन्येऽप्यलङ्काराः यथायोगं योजनीयाः।

लीला— अर्थसामर्थ्याक्षिप्तानुस्वानोपमव्यङ्ग्यालङ्कारध्वनि- प्रकरणमुपसंहरति एवमित्यादिना— एवं= अनेनैव विधिना, अन्ये= इतरे अवशिष्टाः, अपि, अलङ्काराः, यथायोगं= क्वचिदलङ्कारः क्वचिद्वस्तुव्यञ्जकमिति, योजनीयाः= प्रतिपादनीया इति।

तदिदमुक्तं भवति यदेषु तूद्देशतः प्रोक्तः किन्तु नैव नियत विषयीकृतः। वस्तुतस्तु सर्वालङ्काराणामेव ध्वन्यमानत्वमस्त्येव। तत्र कुत्रचिद्वस्तुनो व्यञ्जकत्वं क्वचन तु अलङ्कारस्यापीति युक्त्यनुसारमेव सर्वं समायोजनीयमिति।। २७।।

प्रकरणेऽस्मिन् लोचनकारेण दीपक-अप्रस्तुतप्रशंसा—अपह्नुति अतिशयोक्तिप्रभृत्यलङ्काराणां ध्वनित्वमुदाहृतम्। विशेषस्तत एवसावसेयः अत्र तु ग्रन्थगौरवभिया तन्नैवानूद्यते।। २७।।

अलङ्कारध्वनि निरूपण के प्रसङ्ग का उपसंहार करते हैं—

इसी तरह दूसरे भी अलङ्कारों का युक्ति के अनुसारी संयोजन किया जाना चाहिए।

यह जो विवरण दिया है वह तो उद्देश मात्र है न कि सीमा का निर्धारण। उक्त रीति से सभी अलंकार ध्वनित होते हैं। उसमें कहीं वस्तु व्यञ्जक होता है, कहीं अलङ्कार भी।। २७।।

ध्वन्या०— एवमलङ्कारध्वनिमार्गं व्युत्पाद्य तस्य प्रयोजनवत्तां ख्यापयितुमिदमुच्यते—

कारिका— शरीरीकरणं येषां वाच्यत्वेन व्यवस्थितम्।
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः।। २८।।

ध्वन्या०— ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां व्यञ्जकत्वेन व्यङ्ग्यत्वेन

च। तत्रेह प्रकरणाद्व्यङ्ग्यत्वेनेत्यवगन्तव्यम्। व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्यविवक्षायामेव सत्यां ध्वनावन्त: पात:। इतरथा तु गुणीभूतव्यङ्ग्यत्वं प्रतिपादयिष्यते।

लीला— अलङ्काराणां ध्वनित्वव्युत्पादनफलनिर्देशिकां कारिकामवतारयन् तत्वपूर्वपीठिकां निबध्नाति वृत्तिकार एवमित्यादिना- एवं= इत्थमुक्तक्रमेण, अल-ङ्कारध्वनिमार्ग= अलङ्काराणां अर्थशक्त्याप्तितया व्यङ्ग्यत्वेन यो ध्वनिस्तस्य मार्ग विधिं, व्युत्पाद्य= विशेषेण प्रतिपाद्य, तस्य= तादृशध्वनिमार्गस्य, प्रयोजनवत्ता= फलयुक्तत्वं, ख्यापयितुं= सूचयितुं, इदं= वक्ष्यमाणकारिका, उच्यते=उपस्थाप्यत इति। प्राचीनैरुक्तानामलङ्काराणां व्यङ्ग्यत्वप्रदर्शनेन किं फलमित्याकाङ्क्षा-निरासायेदमुच्यते इत्याशय:।

कारिकामवतारयति शरीरीकरणमिति-येषां वाच्यत्वे शरीरीकरणं न व्यवस्थितं ते अलङ्कारा: ध्वन्यङ्गतां गता: परां छायां यान्ति इति पदव्यवस्था।

येषां= अलङ्काराणां, वाच्यत्वे= वाच्यावस्थायां, शरीरीकरणं= अङ्गावस्थापनं, न= नैव, व्यवस्थितं= निश्चितं, ते= तादृशा: अलङ्कारा:, ध्वन्यङ्गतां= व्यङ्ग्यत्वेन ध्वन्याधारतां, गता:= प्राप्ता:, परां= उत्कृष्टां, छायां= शोभां, यान्ति= प्राप्नुवन्ति इति। अस्यायमाशय: वाच्यदशायां येषामलङ्काराणां संयोजनमपिदुर्घटं त एव ध्वन्यङ्गताप्राप्तौ परां शोभां पुष्णन्त आत्मरूपतां यान्तीति तेषां ध्वन्यङ्गत्व-विवेचनप्रयोजनमिति।

कारिकां व्याचष्टे वृत्तिकार: ध्वन्यङ्गतेत्यादिना— ध्वन्यङ्गता= ध्वनेरङ्गत्वेनाव-स्थितिर्व्यङ्ग्यत्वात्, व्यञ्जकत्वेन, व्यङ्ग्यत्वेन= आक्षिप्तत्वेन,

च उभाभ्यां, प्रकाराभ्यां= भेदाभ्याम्। तत्र= द्वयो: प्रकारयोर्मध्ये, इह= अत्र, प्रकरणात्= प्रकरणवशात्, ध्वन्यङ्गता, तु, व्यङ्ग्यत्वेन= आक्षिप्तरूपेण, इति, अवगन्तव्यं= अवधारयितव्यम्। व्यङ्ग्यत्वे= आक्षिप्तत्वे, अपि, अलङ्काराणां, प्राधान्यविवक्षायां= चारुत्वपर्यवसायितया मुख्यत्वोपपत्तौ, एव, सत्यां= विद्यमा-नायां, एव इत्यवधारणे— नान्यथा, ध्वनौ= ध्वनितत्त्वे, अन्त:पात:= अन्तर्भाव:। इतरथा= अन्यथा अप्राधान्यविवक्षायां तु, गुणीभूतव्यङ्ग्यत्वं= गुणीभावत्वं, एव प्रतिपादयिष्यत= पश्चाद् (विवेचयिष्यते) इति।।२८।।

अलङ्कारों की ध्वन्यङ्गता के प्रतिपादन के प्रयोजन को बताने वाली कारिका के अवतरण के लिए उसकी भूमिका बताते हैं वृत्तिकार—

इस प्रकार अलङ्कारों के ध्वनिमार्ग की विवेचना कर उसके फल को बताने के लिए यह कहा गया है। कारिका का अवतारण करते हैं—

जिन अलङ्कारों की बाल्यावस्था में शरीर का निर्धारण ही निश्चित नहीं है वा दुर्घट है वे ही व्यङ्ग्य होकर ध्वनि के अङ्ग बन जाने से अत्यन्त शोभनीय एवं ग्राह्य बन जाते हैं। (अत: उनका ध्वनि के अङ्ग के रूप में विवेचन फल युक्त है)।

कारिका के आशय का वृत्तिकार विवेचन करते हैं। ध्वनि की अङ्गता व्यञ्जक एवं व्यङ्ग्य के रूप में दो ही प्रकार से होती है। उनमें से यहाँ प्रकरणवश व्यंग्यत्व के रूप में अङ्ग माना गया है ऐसा समझ लेना चाहिए। व्यंग्य होने पर भी अलङ्कार प्रधानता से विवक्षित होने पर ही ध्वनि में अन्तर्भूत हो सकते हैं। अन्यथा अर्थात् प्रधानता से विवक्षित न होने पर गुणीभूतव्यंग्य हो जायगा जिसका कि बाद में विवेचना की जाएगी।। २८।।

ध्वन्या०— अङ्गित्वेन व्यङ्ग्यतायामपि अलङ्काराणां द्वयी गतिः— कदाचिद्वस्तुमात्रेण व्यज्यन्ते कदाचिदलङ्कारेण तत्र—

कारिका— व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा।
ध्रुवं ध्वन्यङ्गता तासां

ध्वन्या०— अत्र हेतुः—

कारिका— काव्यवृत्तिस्तदाश्रया।। २९।।

ध्वन्या०— अलङ्काराणां प्राधान्ये स्थितिनिर्देशिकां कारिकामवतारयन् वृत्तिकारस्तद्भूमिकामारचयति अङ्गित्वेनेत्यादिना—अङ्गित्वेन= वाक्यार्थत्वेन चारुत्वपर्यवसानात्प्राधान्येन, वयङ्ग्यतायां= आक्षिप्तायां, अपि= न केवलं प्रधानगुप्रभावेऽपि, अलङ्काराणां, द्वयी= द्विविधा, गतिः= स्थतिर्भवति। सा च यथा—कदाचित्= कुत्रचित्, तु, वस्तुमात्रेण, व्यज्यन्ते= ध्वन्यन्ते, कदाचितु तु अलङ्कारेणेति। प्राधान्येन व्यङ्ग्यभूतोऽप्यलङ्कारः वस्तुमात्रेण वाऽलङ्कारेणा ध्वन्यते। तत्र= द्वय्यां गतौ सत्याम्—

कारिकामवतारयति व्यज्यन्त इत्यादि—यदा अलङ्कृतयः वस्तुमात्रेण व्यज्यन्ते, तदा तासां, ध्रुवं ध्वन्यङ्गता काव्यवृत्तिः तदाश्रया इति पदव्यवस्था।

यदा= यत्र, अलंकृतयः= अलङ्काराः, वस्तुमात्रेण= वस्तुना केवलेन न तु सालङ्कारेण वस्तुना, व्यज्यन्ते= ध्वन्यन्ते, तदा= तस्यामवस्थायां, तासां=अलंकृतीनां, ध्रुवं=निश्चयमेव, ध्वन्यङ्गता=ध्वन्यवयवत्वं भवतीति शेषः।

तत्र तथामनने हेतुं निर्दिशति काव्येत्यादिना— किञ्च काव्यवृत्तिः— कविव्यापारप्रवृत्तिः, तदाश्रया= तदुद्देश्यपरा भवति इति। कारिकां विवृणोति वृत्तिकृत् यस्मादित्यादिना—यस्मात्= यतः, तत्र= काव्ययप्रसङ्गे, तथाविधव्यङ्ग्यालङ्कारपरत्वेन= तादृश्यवस्तुमात्राक्षिप्तव्यङ्ग्यभूतालङ्कृतिपरायणत्वेन, काव्यं= कविकृतिः, प्रवृत्तं= सम्पन्नं भवति। अन्यथा= तदाभावे— व्यङ्ग्यतात्पर्यकत्वाभावे, तु= इति व्यवच्छेदे, तद् वाक्यमात्र=

कथनमात्रं, एव, स्यात्, न तु काव्यं तस्य व्यङ्ग्यपरत्वेनैव विस्थापितत्वात्।

अस्यायमाशयः— अङ्गित्वेन व्यङ्ग्यतायामपि अलङ्कारस्य द्वयी स्थितिर्भवति वस्तुमात्राक्षिप्तता अलङ्काराक्षिप्तता च। यदा स वस्तुमात्राक्षिप्तो न तु सालङ्कारवस्तुना तदा तस्य नित्यमेव ध्वन्यङ्गता सिध्यति यतः काव्यवृत्तिरेव तदाश्रया भवति अर्थात् तथाविधव्यङ्ग्यालङ्कारपरत्वेनैव काव्यं भवति अन्यथा तद्वाक्यमात्रमेवेति।

अङ्गी रूप से व्यङ्ग्य होने पर अलङ्कार की दो स्थितियाँ होती हैं एक तो यह केवल वस्तुमात्र से आक्षिप्त होता है दूसरा अलङ्कार से! उसमें भी-कारिका का अवतारण करते हैं—

जब अलङ्कार वस्तुमात्र से न कि अलङ्कार युक्त वस्तु से ध्वनित होता है, तब निश्चय ही उनकी ध्वन्यङ्गता होती है।

उसमें कारण बताते हैं- क्योंकि काव्यवृत्ति उन में ही आश्रित होती है। कारिका के आशय का स्पष्टीकरण देते हैं—

क्योंकि वहाँ पर उस प्रकार के व्यङ्ग्य अलङ्कार परक होकर ही काव्य प्रवृत्त होता है अन्यथा वह वाक्यमात्र रह जाता है।

ध्वन्या०— तासामेवालङ्कृतीनां—

कारिका— अलारान्तरव्यङ्ग्यभावे

ध्वन्या०— पुनः—

कारिका— ध्वन्यङ्गता भवेत्।

चारुत्वोकर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते।। ३०।।

ध्वन्या०— उक्तं ह्येतत्—'चारुत्वोत्कर्षनिबन्धना वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा' इति। वस्तुमात्रव्यङ्ग्यत्वे चालङ्काराणामनन्तरोपदर्शितेभ्य एवोदाहरणेभ्यो विषय उन्नेयः। तदेवमर्थमात्रेणालङ्कारविशेषरूपेण वार्थेनार्थान्तरस्यालङ्कारस्य वा प्रकाशने चारुत्वोत्कर्षनिबन्धने सति प्राधान्येऽर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यो ध्वनिरवगन्तव्यः।

लीला— सालङ्कारवस्त्वाक्षिप्तस्य वा अलङ्कारमात्राक्षिप्तस्यालङ्कारस्य स्थितिनिर्देशिकां कारिकामवतारयन् वृत्तिकारः प्रसङ्गं संयोजयति = तादृशानां, एव अलङ्कृतीनां= अलङ्काराणां,

कारिकामवतारयति अलङ्कारेत्यादिना- अलङ्कारान्तरव्यंङ्ग्यभावे, यदि चारुत्वोत्कर्षतः, व्यङ्ग्यप्राधान्यं लक्ष्यते तदा ध्वन्यङ्गता भवेत् इति पदव्यवस्था।

अलङ्कारान्तरव्यङ्ग्यभावे= अन्यालङ्काराक्षिप्तत्वेन व्यङ्गीभवने, तु पुनः, यदि तत्र चारुत्वोत्कर्षतः= सौन्दर्यप्रकर्षात्—चारुत्वपर्यवसायित्वात्, व्यङ्ग्यप्रा-

धान्यं= वाच्यापेक्षया व्यङ्गयस्य मुख्यत्वं, लक्ष्यते= अवगम्यते, तदा तु ध्वन्यङ्गता= ध्वनि–अवयवता, भवेदेवेति।

तदेव विशदयति वृत्तिकार: उक्तमित्यादिना– एतत्, उक्तं= पूर्वमेव कथितं, हि, वाच्यव्यङ्गययो:= अभिधेयप्रतीयमानार्थयो:, प्राधान्यविवक्षा= मुख्यत्वकल्पना, चारुत्वोत्कर्षनिबन्धना= सौन्दर्यकर्षसम्बद्धा इति। यत्र हि काव्यसौन्दर्य पर्यवस्यति तस्यैव प्राधान्यमिति। वस्तुव्यङ्ग्यालङ्कारध्वनेरुदाहरणं निर्दिशति वस्त्वित्या-दिनाअलङ्काराणां, वस्तुमात्रव्यङ्ग्यत्वे= केवलवस्त्वन्तराक्षिप्तत्वेन व्यङ्ग्यभावे, च, अनन्तरोपदर्शितेभ्य:= प्रागेवोपस्थापितेभ्य:, एव, उदाहरणेभ्य:= निदर्शनेभ्य:, प्राप्तश्रीरेष इत्यादिभ्य:, विषय:= प्रसङ्गो लक्ष्यं वा, उन्नेय:= अवगन्तव्य:। चादलङ्काराक्षिप्तत्वेनालङ्कारव्यङ्ग्यध्वनेरपि तथैवावगन्तव्य:।

तदेवं प्रकरणमुपसंहरति तदेवमित्यादिना– तत्= तस्मात्, एवं= इत्थं, अर्थमात्रेण= केवलार्थेन कविप्रौढोक्तिरूपेण कविनिबद्धवक्तृप्रौढोक्तिरूपेण वा स्वत: सम्भविना, वा, अलङ्कारविशेषरूपेण= अलङ्कारान्तररूपार्थेन, अर्थान्त-रस्य= अन्यस्यार्थस्य, वा, अलङ्कारस्य= इतरस्यालङ्कारस्य, प्रकाशने= आक्षेपणे, चारुत्वोत्कर्षनिबन्धने= काव्यसौन्दर्यप्रकृष्टसंयोजने, सति= अर्थशक्ति-मूलानुस्वानसन्निभव्यङ्ग्यरूप:, ध्वनि:, अवगन्तव्य:= ज्ञेय इति।

अस्यायमाशय:– अलङ्कारस्य वस्तुमात्राक्षिप्तत्वे सति तु सदैव ध्वन्यङ्गता भवति अलंकारान्तराक्षिप्तत्वे तु चारुत्वोकर्षप्राधान्ये सति ध्वन्यङ्गताऽन्यथा गुणीभाव एव। किञ्च वाच्यव्यङ्गययो: प्राधान्यं चारुत्वोकर्षपरम्। यत्र चारुत्वं पर्यवस्यति तस्यैव प्राधान्यं भवति। एवमर्थमात्रेणाक्षिप्तस्यार्थान्तरस्य वा अलङ्-कारविोषेणाक्षिप्तस्य अलङ्कारान्तरस्य चारुत्वपर्यवसायित्वेन प्राधान्ये सति अर्थशक्तिमूलानुस्वानरूपव्यङ्ग्यो ध्वनिरित्यिगन्तव्य:, इति।। ३०।।

अलंकार से आक्षिप्त अलंकार की स्थिति को बताने वाली कारिका का अवतारण करने का उपमक्रम करते हैं–

उन अलंकारों की कारिका का अवतारण करते हैं–

अलंकार विशेष के द्वारा आक्षिप्त होकर व्यङ्ग्य होने पर यदि उसमें चारुत्व के उत्कर्ष से व्यङ्ग्य की प्रधानता हो–अर्थात् वह चारुत्वपर्यवसायी व्यङ्ग्य हो तो वह ध्वनि का अङ्ग होता है (अन्यथा गुणीभूतव्यङ्गय ही रह जाएगा)।

इसी को आगे बढ़ाते हैं वृत्तिकार– यह तो कहा ही है– वाच्य एवं व्यङ्ग्य की प्रधानता जो है वह चारुत्व के उत्कर्ष में ही निर्भर है। (जिसमें चारुत्व का उत्कर्ष है वही प्रधान होता है।

अलंकारों के वस्तुमात्र से आक्षिप्त होकर व्यङ्ग्य भाव में पहले उपस्थापित किए गए ही उदाहरणों से ही विषय का उन्नयन कर लेना चाहिए। प्रकरण का उपसंहार करते हैं–

इस प्रकार अर्थ मात्र से आक्षिप्त वा अलंकार विशेष रूप के अर्थ से आक्षिप्त अर्थ का अलंकार का चारुत्व के उत्कर्ष से युक्त प्राधान्य प्रकाशित होने पर अर्थ शक्ति से उत्पन्न अनुरणन स्वरूप व्यङ्ग्य ध्वनि होता है (अन्यथा गुणीभूत व्यङ्ग्य मात्र)।। ३०।।

ध्वन्या०— एवं ध्वने: प्रभेदान् प्रतिपाद्य तदाभासविवेकं कर्तुमुच्यते—

कारिका— यत्र प्रतीयमानोऽर्थ: प्रश्लिष्टत्वेन भासते।
वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वने:।। ३१।।

ध्वन्या०— द्विविधोऽपि प्रतीयमान: स्फुटोऽस्फुटश्च। तत्र य एव स्फुट: शब्दशक्त्याऽर्थशक्त्या वा प्रकाशते स एव ध्वनेर्मार्गो नेतर:।

लीला— सम्प्रति ध्वने: प्रभेदान् निर्दिश्य ध्वन्याभासविवेचककारिकामवतितारयिषुरतद्भूमिकां निबध्नाति एवमित्यादिना— एव= इतथंप्रकारेण, ध्वने:= ध्वनितत्त्वस्य, प्रभेदान्= प्रकारान्, प्रतिपाद्य= विविच्य–तदित्थम् अविवक्षितोवाच्यो विवक्षितान्यपरवाच्यश्चेति ध्वनेद्वौ मूलभेदौ। तत्र अविवक्षितवाच्यस्य द्वावेव भेदौ अत्यन्ततिरस्कृतवाच्योऽर्थान्तरसङ्क्रमितवाच्यश्च। तत्रापि अर्थान्तरसङ्क्रमितवाच्यस्य द्वौ भेदौ अक्ष्यक्रम: अनुरणनरूपश्च। आद्योऽनन्तभेदस्तेन एक एव। अनुरणनरूपो द्विविध: शब्दशक्तिमूल: अर्थशक्तिमूलश्च। अर्थशक्तिमूलस्त्रिविध:= कविप्रौढोक्तिकृतशरीर: कविनिबद्धवक्तृप्रौढोक्तिकृतशरीर: स्वत: सम्भवी च। ते च प्रत्येकं व्यङ्ग्यव्यञ्जकयोर्वस्त्वलङ्कारभेदेन चतुर्धा इति द्वादशधाऽर्थशक्तिमूल:। आद्यांश्चतुर: समाकलय्य षोडश मुख्यभेदा:। ते पदवाक्यप्रकाशकत्वेन प्रत्येकं द्विविधा:। अलक्ष्यक्रमस्य तु वर्ण–पद–वाक्य–सङ्घटना–प्रबन्ध– प्रकाश्यत्वेन पञ्चत्रिंशद्भेदा:। इति। तदाभासविवेक:= ध्वन्याभासविभागं, कर्तुं, उच्यते= कथ्यते इति। कारिकामवतारयति–यत्रेत्यादि–यत्र प्रतीयमान: अर्थ: प्रश्लिष्टत्वेन वा वाच्यस्य अङ्गतया अपि भासते असौ अस्य ध्वने: न गोचर इति पदव्यवस्था।

यत्र–यस्मिन् काव्ये प्रतीयमान:= व्यङ्ग्यरूप:, अर्थ:, प्रश्लिष्टत्वेन= अस्फुटत्वेन, वा= अथवा, वाच्यस्य= वाच्यार्थस्य, अङ्गतया= उपस्कारकत्वेन, अपि भासते= द्योतते, असौ= एतादृशो व्यङ्ग्य:, अस्य= चारुत्वपर्यवसायित्वेन वाक्यार्थीभूतस्य, ध्वने:, न, गोचर:= विषय इति।

कारिकार्थं विशदयति वृत्तिकृत् द्विविध इत्यादिना— प्रतीयमान:= व्यङ्ग्य:, अपि= इति काव्यात्मभूतार्थ इव यथा तस्य वाच्यप्रतीयमानाख्यौ द्वौ भेदौ तथैवास्यापि, द्वौ भेदौ—स्फुट:= स्पष्ट: स्फुटोऽत्र सहृदयेन सुखेनावगम्यो न तु वाच्यार्थवदगोप्य:, अस्फुट:= अस्पष्ट:—सहृदयेनाऽपि कष्टेनावगम्य: प्रतीतमात्र:। तत्र= तयो:, य:, एव, स्फुट:= स्पष्ट:, शब्दशक्त्या= शब्दसामर्थत्, अर्थशक्त्या=

अर्थसामर्थ्यात्, प्रकाशते= अवभासते, सः= तादृशः, एव= इत्यवधारणे'न त्वपर इति, ध्वनेः= काव्यात्मभूतस्य ध्वनितत्त्वस्य, मार्गः= विषयः. न= नैव, इतरः= अपरः इति। अस्यायमाशयः—

यत्र प्रतीयमानोऽप्यर्थः अस्फुटत्वेन वास्योपस्कारकत्वेन भासते स नैव काव्यात्मभूतस्य ध्वनेर्विषयः। प्रतीयमानार्थश्च स्फुटास्फुटभेदेन द्विविधः। स्फुटः सहृदयसुखगोचरः अस्फुटश्च सहृदयेनाऽपि कष्टेन लभ्यः। तत्र शब्दार्थशक्त्या प्रकाशितः स्फुटः प्रतीयमानार्थ एव ध्वनेर्विषयो भवति नापर इति।

इस प्रकार ध्वनि के भेदों का निर्देश कर अब ध्वन्याभास के विवेचक कारिका के अवतरण हेतु उपक्रम करते हैं। इस तरह ध्वनि के भेद उपभेदों का प्रतिपादन करने के बाद अब ध्वनि के आभास के विभाग करने हेतु कहा जाता है—

कारिका का अवतरण करते हैं। जहाँ प्रतीयमान अर्थ भी अस्पष्ट रूप में अथवा वाच्यार्थ के उपस्कारक के रूप में भासित होता है वह काव्य की आत्मभूता ध्वनि का विषय नहीं हो सकता।

कारिका के आशय को वृत्तिकार स्पष्ट करते हैं। प्रतीयमान अर्थ भी दो प्रकार का होता है—स्फुट एवं अस्फुट। स्फुट वह है जो सहृदयों को देखने के साथ ही ज्ञात हो और अस्फुट वह है जो कष्ट से ही गम्य हो। उनमें से स्फुट अर्थ जहाँ शब्दशक्ति वा अर्थशक्ति से प्रकाशित होता है वह ध्वनि का विषय होता है, दूसरा नहीं।

ध्वन्या०— स्फुटोऽपि योऽभिधेयस्याङ्गत्वेन प्रतीयमानोऽवभासते सोऽस्यानुरणनरूपव्यङ्ग्यस्य ध्वनेरगोचरः। यथा—

कमलाअराणं मलिआ हंसा उड्डाविआ ण अ पिउच्छा।
केण वि ग गामतडाए अब्भं उत्ताणअं फलिहम्।।
कमलाकरा न मलिता हंसा उड्डायिता न च पितृष्वसः।
केनापि ग्रामतडागेऽभ्रमुत्तानितं क्षिप्तम्। इतिच्छाया।

ध्वन्या०— अत्र हि प्रतीयमानस्य मुग्धवध्वा जलधरप्रगतिविम्बँ-दर्शनस्य वाच्यालङ्कारत्वमेव।

लीला— स्फुटस्यापि ध्वनेरविषयत्वनिदर्शनायोपक्रमते स्फुट इत्यादिना—स्फुटः स्पष्टः अपि च अभिधेयस्य वाच्यस्य अङ्गत्वेन, उपस्कारकत्वेन, प्रतीयमानः= व्यक्तः अवभासते= प्रकाशते, सः= तादृशः= अस्य= एतत् स्वरू-पस्य, अनुरणनरूपव्यंग्यस्य,= अनुस्वानभिव्यंग्यस्य, ध्वनेः= अगोचरः= अविषयः, एव, यथोदाहरिष्यमाणपद्ये—

कमलाअरा (कमअलाकराः) ण (न) मलिआ (मलिताः) हंसा (हंसाः) अ (च) ण (न) उड्डाविआ (उड्डायिताः) केण केन (केन) वि (अपि) गामतडाए (ग्रामतडागे) अब्भं (अभ्रं) उत्ताणअं (उत्तानितं) फलिहं (क्षिप्तम्) इति पदव्यवस्था।

हे पितृष्वसः ! हे पितृभगिनि ! कमलाकराः= पङ्कजसमूहाः, न= नैव, मलिताः= खण्डिताः, हंसाः= राजहंसाः, च, न, उड्डायिताः= उत्पातिताः, केन अपि=स्फुटः= स्पष्टः, अपि, यः, अभिधेयस्य= वाच्यस्य, अङ्गत्वेन= उपस्कार-कत्वेन, प्रतीयमानः= व्यक्तः, अवभासते= प्रकाशते, सः= तादृशः, अस्य= एतत्स्वरूपस्य, अनुरणनरूपव्यङ्ग्यस्य= अनुस्वाननिभव्यङ्ग्यस्य, ध्वनेः, अगोचरः= अविषयः एव। यथा= उदाहरिष्यमाणपद्ये—

तदेवोदाहरति कमलाअरा इत्यादि— हे पिउच्छा (हे पितृष्वसः ! जवने, ग्रामतडागे= ग्रामवाप्यां, उत्तानितं= उद्वर्तितं, अभ्रं= जलदः, क्षिप्तं= समावेशितमिति।

वृत्तिकारोः लक्ष्ये लक्षणं घटयति अत्रेत्यादिना— अत्र= अस्मिन् वाक्यसमूहे, हि, प्रतीयमानस्य= प्रतीतिमायातस्य, मुग्धवध्वाः निर्बोधप्रमदायाः, जलधरप्रतिवि-म्बदर्शनस्य= मेघप्रतिविम्बविलोकनस्य वाच्याङ्गत्वं= वाच्यार्थोपस्कारकत्वं, एव= न तु प्राधान्यमिति अस्य ध्वनेरविषयत्वम्।

अत्र मेघप्रतिविम्बदर्शनमेव व्यङ्ग्यार्थः स च वाक्यार्थस्यैवोपस्कारकः किञ्च चारुत्वं वाच्यार्थे एवपर्यवस्यति न तु व्यङ्ग्यार्थः स च वाक्यार्थ-स्यैवोपस्कारकः किञ्च चारुत्वं वाच्यार्थे एव पर्यवस्यति न तु व्यङ्ग्ये। विस्म-यभावरूपेण वाच्येनैव मुग्धिमातिशयः प्रतीयत इति वाच्यादेव चारुत्वसम्पन्नं तु प्रतीयमानात्।

व्यङ्ग्य के स्फुट होने पर भी ध्वनि का विषय न बन पाने का विषय सोदाहरण दर्शाते हैं—

स्फुट होकर भी जो प्रतीयमान अर्थ अभिधेय अर्थात् वाच्यार्थ के अङ्ग अर्थात् उपस्कारक के रूप में भासित होता है वह इस अनुरणन रूप व्यङ्ग्य ध्वनि का विषय नहीं बन सकता। जैसे—

न तो कमल ही मलिन हुए हैं न तो हंस ही उडाए गए हैं देखिए न बुआजी ! किसी चतुर ने गाँव के तालाब में मेघ को उत्तान कर के फेंक दिया है।

वक्तव्य को बताते हैं— यहाँ पर प्रतीयमान मुग्धवधू द्वारा मेघ के प्रतिविम्ब दर्शन की वाच्याङ्गता ही है न कि प्रधानता। विस्मयभाव रूप वाच्य के द्वारा ही उसकी मुग्धता का अतिशय द्योतित है अतः चारुत्व वाच्य में ही है।

**ध्वन्या०— एवं विधे विषयेऽन्यत्रापि यत्र व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वोत्कर्षप्रतीत्या प्राधान्यमवसीयते, तत्र व्यङ्ग्यस्याङ्गत्वेन प्रतीते-र्ध्वनेरविषयत्वम्।**

**ध्वन्या०— यथा—**

**बाणीरकुडङ्गोड्डीणसउणिकोलाहलं सुणन्तोए।**
**घरकम्म वावडाए बहुए सोअन्ति अङ्गाई।।**

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्या:।
गृहकर्मव्यापृताया वध्वा: सीदन्त्यङ्गानि।। इतिच्छाया।

लीला— पुनरपि व्यङ्ग्यस्य ध्वनेरविषयत्वं सोदाहरणं निर्दिशति एवंविध इत्यादिना- एवंविध= एतादृशे, विषये= लक्ष्ये, अन्यत्रापि= इतरलक्षणे=पि, यत्र=यस्मिन्, व्यङ्ग्यापेक्षया= प्रतीयमानार्थापेक्षया, वाच्यस्य= वाच्यार्थस्य, चारुत्वोत्कर्षप्रतीत्या= सौन्दर्यप्रकर्षविभासनेन, प्राधान्यं= मुख्यत्वं, अवसीयते= अवभासते, तत्र= तादृशस्थले, व्यङ्ग्यस्य= प्रतीयमानार्थस्य, अङ्गत्वेन= वाच्यार्थावयवत्वेन, प्रतीते:= अवभासनात्, ध्वने:, अविषयत्वं= लक्ष्याभाव एवेति। यथा= इति उदाहरिष्यमाणपद्ये।

तदेवोदाहरति 'वाणीर' इत्यादिना— वाणीरकुडङ्गोड्डीणसउणिकोलाहलं (वानीरकुञ्जोड्डीनशकुनिकालाहलं) सुणन्तीए (शृण्वन्त्या:) बहुए (बध्वां) अङ्गाइं (अङ्गानि), सीअन्ति (सीदन्ति) घरकम्मवावडाए (गृहकर्मव्यापृताया:) इति पदव्यवस्था।

वानीरकुञ्जोड्डीनशकुनिकोलाहलं= वानीरकुञ्जाद्वेतसलताभा- वनात् उड्डीना उत्पतिता ये शकुनय: पक्षिणस्तेषां कोलाहलं कलकलशब्दं, शृण्वन्या:= आकर्णयन्त्या: गृहकर्मव्यापृताया:= गैहिककार्यसंलग्नाया:, वध्वा:= प्रमदाया:, अङ्गानि= सर्वाण्यपि अङ्गानि, सीदन्ति= क्षुब्धा भवन्ति इति। वृत्तं जघनविपुला।

अत्र हि शकुनिकोलाहले कान्तो लतागृहं प्रविष्ट इति यत्प्रतीयते तदपेक्षया शकुनिशब्दश्रवणकालमेव सर्वाङ्गसीदनवाच्यस्यैव चारुत्वमिति नैवासो ध्वनेर्विषय इति।

फिर भी प्रतीयमान अर्थ का ध्वनि के विषय न होने का सोदाहरण पतिपादन करते हैं।

इस प्रकार के विषय में अन्यत्र भी जहाँ व्यङ्ग्य की अपेक्षा वाच्य के चारुत्व के उत्कर्ष की प्रतीति से प्राधान्य होता है, वहाँ व्यङ्ग्य की वाच्य के अङ्ग के रूप में प्रतीति होने से वह भी ध्वनि का विषय नहीं होता। जैसे—

वेतसलता गृह से उड़े हुए पक्षियों के कोलाहल को सुनकर गृहकार्य में व्यस्त विलासिनी के अङ्ग-अङ्ग क्षुब्ध होते हैं

इसमें शकुनियों के कोलाहल से दत्तसंकेत नायक का लता गृह में प्रवेश जो प्रतीत होता है उसकी अपेक्षा प्रमदा के पक्षियों के कोलाहल को सुनते अङ्गों के क्षुब्ध होने में चारुत्व है अत: यह ध्वनि नहीं।

ध्वन्या०— एवंवधिो हि विषय: प्रायेण गुणीभूतव्यङ्ग्यस्योदाहरणत्वेन निर्देक्ष्यते।

लीला— व्यङ्ग्यस्य ध्वनेरविषयत्वप्रकरणमुपसहरति एवंविध इत्यादिना एवंविध:= एतादृश: यत्र व्यङ्ग्यस्य वाच्याङ्गत्वं, विषय:= लक्ष्यं, प्रायेण=

भूम्ना, गुणीभूतव्यंग्यस्य= वाच्यार्थपेक्षया न्यूनचारुत्वोत्कर्षव्यङ्ग्यस्य, उदाहरणत्वेन= निदर्शनत्वेन, निर्देक्ष्यते= उपस्थापयिष्यते।

व्यङ्ग्य के ध्वनि का विषय न हो पाने के प्रकरण का उपसंहार करते हैं। इस प्रकार का विषय प्राय: गुणीभूत व्यङ्ग्य के उदाहरण के रूप में निर्दिष्ट किए जाएँगे।

ध्वन्या०— यत्र तु प्रकरणादिप्रतिपत्त्या निर्धारितविशेषो वाच्योऽर्थ: पुन: प्रतीयमानाङ्गत्वेनैवावभासते सोऽस्यैवानुरणनरूपव्यङ्ग्यस्य ध्वनेर्मार्ग:।

यथा—

उच्चिणसु पडिअ कुसु मा धुणमं सेहालिअं हलिअसुह्णे।
अहं दे विसमविरावो ससुरणे सुओ बलअसद्दो।।

उच्चिनु पतितं कुसुमं मा धुनीहि शेफालिकां हालिकस्नुषे।
एष ते विषमविपाक: श्वसुरेण श्रुतो वलयशब्द:। (इतिच्छाया)

अत्र ह्यविनयपतिना सह रममाणा सखी बहि: श्रुतवलयकलकलया संख्या प्रतीबोध्यते। एतदपेक्षणीयं वाच्यार्थप्रतिपत्ते। प्रतिपन्ने च वाच्येऽर्थे तस्याविनयप्रच्छादनतात्पर्येणाभिधीयमानत्वात्पुनर्व्यङ्ग्याङ्गत्वमेवेत्यस्मिन्ननुरणनरूपव्यङ्ग्यध्वनावन्तर्भाव:।

लीला— एवं व्यङ्ग्यार्थस्य ध्वनेरविषयतां निर्दिश्य सम्प्रति तद्विपरीतं व्यङ्ग्यपरकतात्पर्यस्य ध्वनेर्विषयत्वं सोदाहरणं प्रतिपादयति यत्रेत्यादिना—यत्र= यस्मिन् काव्ये, तु= इति व्यवच्छेदे, प्रकरणादिप्रतिपत्त्या—प्रकरणमादिर्यस्येति प्रकरणादि: शब्दान्तरसन्निधानसा- मर्थ्यलिङ्गादे: प्रतिपत्या अवगमात्, निर्धारितविशेष:= निश्चितसमस्तस्वभाव:, वाच्य:, अर्थ:, पुन: प्रतीयमानाङ्गत्वेन= प्रतीयमानस्य व्यङ्ग्यस्य अङ्गत्वेन उपस्कारकत्वेन, एव, अवभासते= प्रकाशते, स:= तादृश, अस्य= एवंविधस्वरूपस्य, अनुररणनरूपव्यङ्ग्यस्य= अनुस्वानोपमव्यङ्ग्यस्य, ध्वने:, मार्ग:= विषयो भवतीति। यत्र च गृहीतस्वरूपोऽपि वाच्यार्थ: पुन: प्रकरणादिवशाद् व्यङ्ग्यतामुपयाति स तु ध्वनेर्विषयो भवतीति भावार्थोऽस्य। यथा= इति= उदाहरिष्यमाणपद्ये।

तदेवोदाहरति उच्चिणसु इत्यादि— हे हलिअसुह्णे (हे हालिकस्नुषे) पडिअ (पतितं) कुसुमं (कुसुम) उच्चिणसुं (उच्चिनु) सेहालिअं (शेफालिका) मा, धुण (धुनीहि) विसमविरावो (विषमविराव:) अह (एष:) दे (ते) बलअसद्दो (वलयशब्द:) ससुरेण (श्वसुरेण) सुओ (श्रुत:) इति पदव्यवस्था।

हे हालिकस्नुषे ! हे कृषकपुत्रवधु ! पतितं= वृक्षादधीभूतं, पुष्पं= कुसुमं, उच्चिनु, गृह्णीष्व, शेफालिकां= निर्गुण्डी, मा, धुनीहि= कम्पय, विषमविराव:=

तीव्रशब्दः, एषः= श्रूयमाणः, ते= तव, वलयशब्दः= कङ्कणध्वनिः, श्वसुरेण= पतिपित्रा, श्रुतः= आकर्णित इति।

तत्राभीष्टं विवृणोति वृत्तिकृत् अत्रेत्यादिना— अत्र= काव्येऽस्मिन्, हि, अविनयपतिना= उद्धतनायकेन, सह, रममाणा= विहरन्ती, सखी= वयस्या, बहिःश्रुत वलयकलकलया= बहिः बहिप्रदेशे एव श्रुत आकर्णितो वलयस्य कङ्कणस्य कलकलः सङ्घर्षणध्वनिर्यया सा तया, सख्या= वयस्यया, प्रतिबोध्यते= सावधानीक्रियते। एतत्= सावधानीकरणं, वाच्यार्थप्रतिपत्तये= वाच्यार्थावगमनाय, अपेक्षणीयं= आवश्यकम्। वाच्यार्थे, प्रतिपन्ने= सिद्धे सति, तस्य= नायकस्य, अविनयप्रच्छादनतात्पर्येण= औद्धत्यगूहनाभिप्रायेण, अभिधीयमानत्वात्= कथ्यमानत्वात्, पुनः, व्यङ्ग्याङ्गत्वं= व्यङ्ग्योपस्कारकत्वं, एव, इति= हेतोः, अस्मिन्= एतादृशे, अनुरणनरूपध्वनौ= अनुस्वाननिभव्यङ्ग्यध्वनौ, अन्तर्भावः= निवेशनमिति।

अस्यायमाशयः— अत्र शेफालिकाकुञ्जाभ्यन्तरे जारेण सह निर्दयं विहरन्ती सखी श्रुतकङ्कणशब्दया सख्या सावधानीक्रियते इति प्रतीयमानार्थो यस्याभावेन वाच्यार्थ एवाप्रतीतो भवति तदभावे वाच्यार्थस्यैव निष्प्रयोजनत्वात्। इत्थं वाच्योपस्कारकत्वेन गुणीभूतोऽपि व्यङ्ग्यः पुनरौद्धत्यगूह्यतात्पर्येणोक्तमिति तस्य व्यङ्ग्याङ्गत्वं, तेनास्य ध्वनावन्तःपात इति व्यङ्ग्योन्मुखं तात्पर्यमेव ध्वनेरुपनिषदिति।

इस प्रकार व्यंग्य के गुणीभाव की विवेचना कर अब फिर व्यङ्ग्योन्मुख तात्पर्य का ध्वनि के विषय में समावेश होने के विषय में विवेचना करते हैं– जहाँ पर प्रकरण आदि की प्रतिपत्ति से अपने विशेष स्वरूप का निर्धारण किया हुआ वाच्यार्थ फिर व्यङ्ग्य के ही अंग के रूप में अवभासित होता है तो वह उसी अनुरणनरूप व्यङ्ग्य ध्वनि का विषय होता है। जैसे—

हे कृषक की पतोहू ! गिरे हुए फूलों को बीन लो, शेफालिका को मत हिलाओ, यह तीव्र आवाज वाला तुम्हारे वलय का शब्द तुम्हारे ससुर ने सुन लिया है।'

यहाँ पर उद्धत पति अर्थात् जार के साथ रमण करती हुई कोई सखी बाहर ही वलय के कलकल को सुनने वाली सखी के द्वारा सतर्क कराई जाती है। इतना जो है वाच्यार्थ की प्रतिपत्ति के लिए भी आवश्यक है। वाच्यार्थ के सिद्ध हो जाने पर उसके औद्धत्य को छिपाने के तात्पर्य से कहे जाने के कारण उसके फिर व्यंग्य के ही अंग हो जाने से इसका अनुस्वानरूप व्यङ्ग्य ध्वनि में अन्तर्भाव हो जाता है।

इसका आशय यह है कि शेफालिका को न हिलाने की जो बात कही गई उसकी प्रतिपत्ति के लिए ही कुञ्ज के भीतर जो हो रहा है उसकी और सङ्केत रूप जो व्यङ्ग्य है उसके विना वाच्यार्थ का आशय पूरा नहीं होता। इस प्रकार पहले तो व्यङ्ग्य वाच्यार्थ का उपस्कारक हुआ फिर वह कहना जो है। उसके विहार के गोपन के अभिप्राय से कहा होने के कारण उसका तात्पर्य व्यङ्ग्य परक ही हो जाता है। अतः यह अनुरणनरूप व्यङ्ग्य ध्वनि का विषय बन जाता है।

ध्वन्या०— एवं विवक्षितवाच्यस्य ध्वनेस्तदाभासविवेके प्रस्तुते सत्यविवक्षितिवाच्यस्यापि तं कर्तुमाह—

कारिका— अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः।
शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः।। ३२।।

ध्वन्या०— स्खीलद्गतेरुपचरितस्य शब्दस्याव्युत्पत्तेशक्तेर्वा निबन्धो यः स च न ध्वनेर्विषयः।

लीला— अविवक्षितवाच्यध्वन्याभासविवेचिकां कारिकामवतितारयिषुर्वृत्तिकारस्तत्पूर्वपीटिकामुपस्थापयति एवमित्यादिना— एवं= इत्थं, विवक्षितवाच्यस्य= अबाधितव्यङ्ग्यपरवाच्यस्य, ध्वनेः, तदाभासविवेके= गुणीभूतव्यङ्ग्यविचारे, प्रस्तुते= उपास्थापिते, सति, अविवक्षितवाच्यस्य= तद्रूपध्वनेः, अपि, तं कर्तुं तदाभासविवेकं प्रस्तोतुं, आह= कथयति इति।

कारिकामवतारयति अव्युत्पत्तेरित्यादि— अव्युत्पत्ते वा अशक्तेः स्खलद्गतेः शब्दस्य यः निबन्धः च सूरिभिः ध्वनेः विषयः न ज्ञेय इति पदव्यवस्था।

अव्युत्पत्तेः= अनैपुण्यात्, वा= अथवा, अशक्तेः= सामर्थ्याभावात् च, स्खलद्गतेः= बाधितार्थस्य, शब्दस्य, यः निबन्धः= रचना, स, च, सूरिभिः विचक्षणैः, ध्वनेः विषयः= लक्ष्यं, न, ज्ञेयः= अवगन्तव्य इति।

कारिकार्थं विवृणोति वृत्तिकृत् स्खलद्गतेरित्यादिना— स्खलद्गतेः= इति उपचरितस्य लाक्षणिकमात्रस्य, शब्दस्य, अव्युत्पत्तेः= अनैपुण्यात्, वा, अशक्तेः= सामर्थ्याभावात्, यः, निबन्धः= रचना, स= तादृशो निबन्धः, च, न, ध्वनेर्विषयः लक्ष्यमिति।

अस्यायमशयः— कविना विषयनैपुण्याभावात् यदनुप्रासादिनिबन्ध- नतात्पर्यप्रवृत्तिरवलम्ब्यते यच्च कवित्वसामर्थ्याभावात् वृत्तपरिपूरणमात्र- निमित्तमेव शब्दः प्रयुज्यते इति हेतोः यः शब्दः स्खलद्गतिः= गौणो वा लाक्षणिकस्तस्य यो निबन्धः स नैव ध्वनेर्विषयो भवति इति। स च अव्युत्पत्तेर्यथाऽनुप्रासलोभेन 'प्रेङ्खत्प्रेमसंबन्धप्रचुरपरिचये प्रौढसीमन्तिनीनां' इत्यत्र प्रेङ्खदिति लाक्षणिकप्रयोगः, तथैव चित्ताकाशावकाशे विहरति सततं या च सौभाग्यभूमिः। अत्र चित्ताकाश इति गौणप्रयोगश्च नैव ध्वन्यमानरूपप्रयोजनीयावसायी। तथैव अशक्तेर्यथा वृत्तपूरणनिमित्तमेव चलतरङ्गविघूर्णितभाजने 'इत्यत्र भाजनशब्दः।

इस प्रकार विवक्षितवाच्यध्वनि के ध्वन्याभास का विचार कर लेने के बाद अब अविवक्षितवाच्यध्वनि के भी ध्वन्याभास पर विचार करने के लिए कहते हैं—

कारिका का अवतरण करते हैं। व्युत्पत्ति का शक्ति के अभाव के कारण जो बाधित अर्थ वालो शब्दों की रचना है उसे विद्वान् ध्वनि का विषय नहीं मानते।'

कारिका के आशय का स्पष्टीकरण देते हैं वृत्तिकार—

स्खलद्गति अर्थात् उपचरित माने लाक्षणिक वा गौण शब्द का जो व्युत्पत्ति वा शक्ति के अभाव के कारण किया गया निबन्धन है उसे विद्वान् ध्वनि का विषय नहीं मानते।

इसका आशय यह है कि अविवक्षितवाच्यध्वनि का विषय वही शब्द हो सकता है जो केवल लाक्षणिक वा गौण न हो और वाञ्छित तात्पर्य का बोधक हो। व्युत्पत्ति के अभाव में अनुप्रास आदि में ही रह कर किया गया लाक्षणिक वा गौण प्रयोग एवं शक्ति के अभाव में वृत्तमात्र की पूर्ति हेतु रखा गया शब्द की ध्वनि का विषय नहीं होता।

ध्वन्या०— यतः—

कारिका— सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम्।
यद्व्यंग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम्।। ३३।।

ध्वन्या०— तच्चोदाहृतविषयमेव।

इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके द्वितीय उद्योतः।

लीला— स्खलद्गतिः शब्दो नैव ध्वनेर्विषय इति यदुक्तं तस्य हेतुत्वेन ध्वनिलक्षणानुवादककारिकावतारणाय वृत्तिकृदुपक्रमते यत इत्यादिना— यतः= यस्माद्धेतोः।

कारिकामवतारयति सर्वेष्वित्यादिना— अङ्गिभूतस्य, व्यङ्ग्यस्य सर्वेषु एव प्रभेदेषु यत् स्फुटत्वेन अवभानं तत् पूर्णं ध्वनिलक्षणम् इति पदव्यवस्था।

अङ्गीभूतस्य= वाक्यार्थत्वेन चारुत्वपर्यवसायितया प्रधानीभूतस्य, व्यङ्ग्-यस्य= प्रतीयमानार्थस्य, सर्वेषु= निखिलेषु, एव= इत्यवधारणेनत्वेकस्मिन्नेव कस्मिंश्चित्, प्रभेदेषु= प्रकारेषु, यत्, स्फुटत्वेन= सहृदयैः सुखेन ग्राह्यतया, अवभासनं= प्रतीतिः तत्, पूर्णं= समग्रं, ध्वनिलक्षणं= ध्वनिस्वरूपमिति।

वृत्तिकारः कारिकाशयं पूरयति तदित्यादिना— तत्= ध्वनिलक्षणं, च, उदाहृतविषयं= उदाहृताः पूर्वमेव निदर्शिताः विषयाः लक्ष्याणि यस्य तत्, एव= इत्यवधारणे-तेन नात्र तदाभासदिविषयावकाश इति।

अस्यायमाशयः— चारुत्वपर्यवसायितया वाक्यार्थीभूतस्य प्रतीयमानार्थस्य सर्वेष्वेव प्रभेदेषु अक्लिष्टत्वेनावभासनमेव ध्वनेरखण्ड लक्षणन्तेन नात्र गौणला-क्षणिकाद्याभासावकाश इति। तच्च पूर्वोदाहृतलक्ष्येषु स्पष्टमेवेति।

कारिकायां सर्वेष्वेव प्रभेदेषु 'यदुक्तं तस्य प्रकरणसिद्धये संक्षेपतोऽत्र ध्वनेर्भेदा उपस्थाप्यन्ते।

मूलतो ध्वने र्द्वौभेदौ अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च। आद्यस्य द्वौ भेदौ अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्च।

विवक्षितानपरपरवाच्यस्य द्वौ भेदौ असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यंग-

यश्च। असंलक्ष्यक्रमस्य भेदास्त्वनन्ता एवसंलक्ष्यक्रमव्यङ्ग्यस्य द्वौ भेदौ शब्द-शक्तिमूलकोऽर्थशक्तिमूलकश्च। अर्थशक्तिमूलकस्य त्रयो भेदाः कविप्रौढोक्तिसिद्धः कविनिबद्धवक्तृप्रौढोक्तिसिद्धः स्वतः सम्भवी च तेषाञ्च प्रत्येकं व्यञ्जकव्यङ्ग्य-भेदाद्वस्त्वलङ्कारभेदाच्च चत्वारो भेदा इति अर्थशक्तिमूलकध्वनेर्द्वादशभेदाः। आद्यैश्चतुर्भिः सह अर्थान्तरसङ्क्रमित-अत्यन्ततिरस्कृत-असंलक्ष्यक्रमव्यङ्ग्य-शब्दशक्तिमूलकैः ध्वनेः षोडश भेदाः। तेषां प्रत्येकं पदप्रकाश्यत्वेन वाक्य-प्रकाश्यत्वेन द्वौ भेदाविति द्वात्रिंशद्भेदाः। असंलक्ष्यक्रमस्य वर्ण-पद-वाक्यसं-घटना-प्रबन्धप्रकाश्यत्वेन ध्वनेः पञ्चत्रिंशद्भेदा इति।

काव्यप्रकाशकारस्तु ध्वनेरेकपञ्चाशद्भेदान् गणयति। प्रतिहारेन्द्रराजस्तु ध्वनेर्विंशतिमूलभेदान् तावत एव गुणीभूतव्यङ्ग्यभेदान् निर्दिशति।

तत्रापि अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्येन द्वौ, असंलक्ष्यक्रम-व्यङ्ग्यः शब्दशक्त्युद्भवस्य वस्त्वलङ्कारगताविति द्वौ शब्दार्थशक्त्युद्भववस्तुध्वनिः अर्थशक्त्युद्भवध्वनेः द्वादश इति मूलतोऽष्टादशभेदाः ध्वनेः।

श्रीलोकमणिसम्बद्धलीलाऽऽख्यविवृतौ बलात्।
द्वितीयोद्योत आयातो ध्वन्यालोकस्य पूर्णताम्।
विवृत्या लीलया शास्त्रे ध्वनितत्त्वविवेचने।
प्रीयतां देवदेवेशः श्रीकेदारेश्वरः प्रभुः।।

स्खलद्गति अर्थात् उपचरित शब्द ध्वनि का विषय नहीं होता।' ऐसा जो कहा गया उसके हेतु के रूप में ध्वनि के लक्षण का निर्देश करने वाली कारिका के अवतारण का उपक्रम करते हैं। क्योंकि—

कारिका का अवतारण करते हैं- 'वाक्य के अंगी बने व्यङ्ग्य का सभी प्रकार के भेदों में जो प्रतीतियोग्य रूप से अवभासन होता है वही ध्वनि का पूर्ण लक्षण है।'

वृत्तिकार कारिका के आशय का विस्तार करते हैं— वह ध्वनि का लक्षण भी पहले ही उदाहृत विषय है।

इसका आशय यह है कि चारुत्व होने से वाक्यार्थीभूत जो व्यङ्ग्य है उसके सभी प्रकार के भेदों में प्रतीतियोग्य रूप से अवभासित होना ही ध्वनि का पूर्ण लक्षण है और इसमें लाक्षणिक गौण आदि उपचरित शब्दों का कोई स्थान नहीं। यह लक्षण ऊपर प्रस्तुत उदाहरणों से स्पष्ट ही है।

*।। द्वितीय उद्योत समाप्त।।*



# ध्वन्यालोकः

## अथ तृतीय उद्योतः

ध्वन्या०— एवं व्यङ्ग्यमुखेनैव ध्वनेः प्रदर्शिते सप्रभेदे स्वरूपे पुनर्व्य-ञ्जकमुखेनैतत्त्वप्रकाश्यते—

कारिका— अविवक्षितवाच्यस्य पदवाक्यप्रकाश्यता।
तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः।। १ ।।

लीला— इन्द्रकीलाधित्यकायामासीनं सोममव्ययम्।
कदारनाथं सर्वेशं प्रणम्य शिरसा मृदुम्।।
आनन्दाभिनवौ नत्वा ध्वन्यालोके सलोचने।
प्रारभ्यते मया लीला तृतीयोद्योतटिप्पणी।।
पूर्वं व्यङ्गमुखेनैव ध्वनितत्त्वं निरूपतिम्।
तदेव व्यञ्जकमुखादधुनाऽत्र निरूप्यते।।
स्थणाभिखननन्यायादद्योतोऽसौ प्रवर्तितः।
पिष्टपेषणदोषोऽत्र नैव शङ्क्यो मनीषिभिः।।

इत्थं ध्वनेः सूक्ष्मभेदान्निरूप्य सम्प्रति तत्स्थूलभेदनिर्देशककारिकावतारणाय पूर्वोद्योतसङ्गतिप्रदर्शनपूर्वकं वृत्तिकार उपक्रमते एवमित्यादिना-एवं= इत्थं, पूर्वोक्तप्रकारेण, व्यङ्ग्यमुखेन= व्यङ्ग्यपारतन्त्रेण, एव= इति निर्धारणे न तु व्यञ्जकवशादिति—यद्यपि वाच्यमुखेनैव अविवक्षितवाच्यादिभेदा उक्तास्तत्र वाच्योऽपि व्यञ्जक एव तथापि स व्यङ्ग्यदृष्ट्या एव भेदितो न तु व्यञ्जकदृष्ट्येति, ध्वनेः= ध्वनितत्वस्य, सप्रभेदे= भेदोपभेदसहिते, स्वरूपे= प्रकतौ, प्रदर्शिते= विवेचिते, पुनः= भूयः— यद्यपि वाच्यस्याविवक्षादिरूपेण पूर्वं यो भेदः प्रदर्शितस्तत्रापि व्यञ्जकत्वं त्वस्त्वेव तथापि सम्प्रति, व्यञ्जकमुखेन= शुद्धव्यञ्जक-पारतन्त्र्येण— व्यञ्जकमात्रदृष्ट्या— शब्दार्थविव व्यञ्जकौ किन्तु तत्रार्थो व्यञ्जको व्यङ्ग्योऽपि भवति, शब्दस्तु केवलं व्यञ्जक एव न कदापि व्यङ्ग्य इति व्यञ्जकोऽत्र शब्द एव, एतत्= ध्वनितत्वं सभेदं, प्रकाश्यते= विविच्यते इति।

कारिकामवतारयति अविवक्षितेत्यादिना- अविवक्षितवाच्यस्य तदन्यस्य अनुरणनरूपव्यङ्ग्यस्य च ध्वनेः पदवाक्यप्रकाशता भवति इति पदव्यवस्था।

अविवक्षितवाच्यस्य= अववक्षितं लक्षणामूलत्वाद्बाधितवाच्यं यत्र तस्य, वाक्यार्थसिद्धये यत्र वाच्यमविवक्षितं भवति तेन यो ध्वनिस्तस्येति, तदन्यस्य= तद्भिन्नस्य विवक्षितवाच्यस्य, अनुरणनरूपव्यङ्ग्यस्य= अनुस्वानोपमव्यङ्ग्यस्य, च= इति समुच्चये, ध्वनेः, पदवाक्यप्रकाशता= पदं सुप्तिङन्तं वाक्यं सार्थकपदसमूहस्ताभ्यां प्रकाशः प्रतीतिर्यस्यः तस्य भावस्तत्ता प्रत्येकपदाद् वाक्याच्च प्रतीतित्वं, भवतीति शेषः।

अस्यायमाशयः— काव्यस्यात्मा ध्वनिः। स च प्रतीयमानव्यङ्ग्यरूपः। व्यङ्ग्यश्च व्यञ्जकाक्षिप्त एव। तेन व्यङ्ग्यव्यञ्जकयोरुद्भाव्योद्भावकसम्बन्धः। तत्र व्यङ्ग्य वस्त्वलङ्कारसरूपोऽर्थः, व्यञ्जकश्च शब्दोऽर्थश्च। तत्रापि अर्थो व्यञ्जको व्यङ्ग्यश्च, शब्दस्तु केवलं वयञ्जक एव न तु कदापि व्यङ्ग्य इति स शुद्धव्यञ्जकः। स च व्यञ्जकः पदवाक्यभेदेने द्विधा तेन अविवक्षितवाच्यो यो ध्वनिः सभेदः, विवक्षितान्यपरवाच्यो यो ध्वनिरनुस्वानोपमव्यङ्ग्योऽर्थात्सलंक्ष्यक्रमव्यङ्ग्यश्च प्रत्येकं पदप्रकाश्यः वाक्यप्रकाश्यत्वेन द्विविधो भवति। अलक्ष्यक्रमव्यङ्ग्यस्तु वर्णपदवाक्यसंघटनाप्रबन्धप्रकाश्यत्वेन चतुर्विधत्वात्पृथगेवोच्यते।

इस प्रकार ध्वनि के व्यङ्ग्य परक भेदों के बताने के बाद अब व्यञ्जक परक भेदों को बताने वाली कारिका के अवतारण हेतु उपक्रम करते हैं—

इस प्रकार व्यङ्ग्य के द्वारा ध्वनि के भेदों सहित स्वरूप के प्रकाशन करने पर अब फिर व्यञ्जक के द्वारा उसके भेदों का प्रकाशन किया जाता है—

कारिका का अवतारण करते हैं—

वाच्य के अविवक्षित होने से जो अर्थान्तर सङ्क्रमित एवं अत्यन्ततिरस्कृत ध्वनियाँ हैं और उससे भिन्न अर्थात् वाच्य के व्यङ्ग्यपरक हो कर विवक्षित होने से जो क्रम संलक्ष्य होने वाली शब्दशक्तिमूलक एवं अर्थशक्तिमूलक अनुरणनरूपव्यङ्ग्य ध्वनियाँ होती हैं उन प्रत्येक का पद एवं वाच्य के प्रकाशन होता है।

वे प्रत्येक पद एवं वाच्य से प्रकाशित होकर दो प्रकार की होती हैं।

काव्य की आत्मा ध्वनि है और स्वरूप प्रतीयमान अर्थ अर्थात् व्यङ्ग्य। व्यङ्ग्य का प्रकाशन व्यञ्जक से होता है। शब्द और अर्थ दोनों व्यञ्जक तो होते हैं लेकिन अर्थ के व्यङ्ग्य एवं व्यञ्जक दोनों रूप होने एवं शब्द के व्यञ्जक मात्र होने के कारण वही शुद्धव्यंजक है। अतः व्यंजक की दृष्टि से अविवक्षितवाच्य एवं विवक्षितान्यपरवाच्य की अनुरणनरूपव्यङ्ग्य ध्वनियाँ प्रत्येक दो प्रकार की होती हैं पद प्रकाश्य एवं वाक्य प्रकाश्य। उसके व्यञ्जक भी पद एवं वाक्य भेद से दो प्रकार के होते हैं।

ध्वन्या०— अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये प्रभेदे पदप्रकाश्यता यथा महर्षेर्व्यासस्य— 'सप्तैताः समिधः श्रियः', यथा वा कालिदासस्य— 'कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्', यथा वा 'किमिव

हि मधुराणां मण्डनं नाकृतीनाम्।' एतेषूदाहरणेषु 'समिध' इति 'सन्नद्ध' इति 'मधुराणा' मिति च पदानि व्यञ्जकत्वाभिप्रायेणैव कृताननि।

लीला— अथ तान् प्रत्येकमुदाहर्तुमुपक्रमते वृत्तिकारः अविवक्षितेत्यादिना— अविवक्षितवाच्यस्य= वाच्यस्याविवक्षितत्वेन यो लक्षणामूलोध्वनिस्तस्य, अत्यन्ततिरस्कृतवाच्ये= नितान्तमनपेक्षितवाच्यार्थे, प्रभेदे= प्रकारे, पदप्रकाश्यता= पदात्प्रकाशोऽभिव्यक्तिर्यस्य तस्य भावस्तत्ता, यथा= इति उदाहरिष्यमाणपद्ये, यथा, महर्षेः= महामुनेः, व्यासस्य, कृतौ—

'सप्तैता इत्यादि— एताः धृत्यादयः, सप्त, श्रियः ऐश्वर्यस्य, समिधः= उद्दीपका इति। वा इति विकल्पे, यथा= कालिदासस्य, क इत्यादि—त्वयि= भवति, मेघे, सन्नद्धे= समुद्यते सति, विरहविधुरां= वियोगकर्शितां, जायां= पत्नीं, कः= को नाम, उपेक्षेत= अनास्थां कुर्यात् अपितु न कोऽपीति। वा= अथवा,, यथा—कालिदासस्यैव, किमिवेत्यादि— मधुराणां= मनोहराणां, आकृतीनां= स्वरूपाणां, किमिव= किमिति, मण्डनं= भूषणं, न अपितु सर्वमेवेति,।

तत्राभीष्टमाह एतेष्वित्यादिना— एतेषु= उपर्युद्धृतेषु, उदाहरणेषु= निदर्शनेषु, क्रमशः समिध इति, सन्नद्ध इति मधुराणां इति, च पदानि, व्यञ्जकत्वाभिप्रायेण= व्यङ्ग्याक्षेपकाशयेन—अनेन व्यङ्ग्यार्थ आक्षिप्तो भवेत् इत्याशयेन, एव, कृतानि= निहितानि इति।

अस्यायमाशयः—समिध इत्यत्र समिच्छब्दस्य दारुरूपो योऽर्थस्तस्यः सर्वथा तिरस्कारः प्रसङ्गेऽसम्भवात्। तस्य चात्र अनन्यापेक्षोद्दीपको व्यङ्ग्योऽर्थोऽभिप्रतः यथा समिद्भिर्वह्निरुद्दीप्यते तथैव धृत्यादिभिर्लक्ष्मीरपीति पर्यवसितोऽर्थः। एवमेव सन्नद्धपदं चात्रासम्भवत्स्वार्थ यतः सन्नद्धशब्दस्य, युद्धतत्परत्वमर्थः स च चेतन मात्रधर्मो योऽचेतने मेघे बाधित एव वाच्यनैरपेक्ष्येण उद्यतत्व लक्षयन् निष्करुणकत्व-अप्रतिकार्यत्व-अप्रेक्षापूर्वकारित्वादीनि व्यनक्ति। तथैव मधुराणामित्यत्र मधुरशब्दो माधुर्यरसविशिष्टवाची अत्र तु स्वार्थबाधेन रञ्जकत्व लक्षयन् सातिशयाभिलाषविषयत्वं ध्वनति। अतस्तेषामिह व्यञ्जकत्वाभिप्रायता सिध्यति इति, तत्र-तत्र ध्वनेः पदप्रकाश्यत्वञ्चेति।

इनमें से ध्वनि के पदप्रकाश्यता का उदाहरण प्रस्तुत करते हैं।

अविवक्षितवाच्य के अत्यन्ततिरस्कृतवाच्य भेद में पद से प्रकाशता जैसे महर्षि व्यास का—''ये सात लक्ष्मी की समिधाए है।'' अथवा जैसे कालिदास का 'तुम्हारे सन्नद्ध होने पर विरह से आकुल पत्नी की कौन उपेक्षा कर सकता है' अथवा जैसे 'मधुर आकृति के लिए कौन सी चीज भूषण नहीं होती' इत्यादि।

उसमें अभीष्ट आशय को बताते हैं—

इन उदाहरणों में समिधा, सन्न एवं मधुर पद व्यञ्जकत्व के ही अभिप्राय से रखे गए हैं।

कहने का आशय यह है कि 'समिधा' शब्द का अर्थ है लकड़ी जो कि यहाँ सम्भव नहीं है। अतः वह अपने अर्थ का तिरस्कार कर उद्दीपक अर्थ को लक्षित करता हुआ अनन्यक्षमत्व अर्थ ध्वनि करता है। अर्थात् ये सात लक्ष्मी के अनन्य उद्दीपक हैं। इसी तरह सन्नद्ध का अर्थ है लड़ने के लिए तैयार जो कि अचेतन मेघ ये सम्भव नहीं अतः स्वार्थ के वाक्यार्थ में असम्भव होने से उद्यत अर्थ को लक्षित करता हुआ निष्करुणत्व आदि ध्वनित करता है। एवमेव मधुर शब्द अपने मधुर रस विशिष्ट अर्थ के वाक्य में अभिप्रेत न होने से छोड़ कर सर्वरञ्जकत्व अर्थ को लक्षित करता हुआ अत्यन्त अभिलाषा के विषयत्व को ध्वनित करता है। अतः ये पद व्यङ्ग्य के व्यञ्जकत्व दृष्टि से रखे गए हैं। अतः ये अत्यन्त तिरस्कृत वाच्य ध्वनि के पद प्रकाश्यता के उदाहरण हैं।

ध्वन्या०— तस्यैवार्थान्तरसङ्क्रमितवाच्ये यथा—रामेण प्रियजोवितेन तु कृतं प्रेम्णः प्रिये नोचितम्'। अत्र रामेणेत्येतत्पदं साहसैकरसत्वादिव्यङ्ग्याभिसङ्क्रमितवाच्यं व्यञ्जकम्।

लीला— ध्वनेः पद प्रकाश्यत्वोदाहरणक्रमे अत्यन्ततिरस्कृतवाच्यस्योदाहरणं प्रस्तुत्य सम्प्रति अर्थान्तरसङ्क्रमितवाच्यस्योदाहरणं प्रस्तौति तस्यैवेत्यादिना- तस्य= अविवक्षितवाच्यध्वनेः, एव अर्थान्तरसङ्क्रमितवाच्ये= वाच्यार्थस्य वाक्यार्थेऽनुपयोगादन्यस्मिन्नेवार्थे परिणतत्वेन यो ध्वनिस्तस्मिन् पदप्रकाश्यता, यथा, रामेणेत्यादि— हे प्रिये ! प्रियजीवितेन रामेण प्रेम्णः उचितंन कृतमिति। हे प्रिये= हे सीते, प्रियजीवितेनः= जीवनमेव सर्वाधिकं मन्यमानेन अत एव युद्धाद्बिभ्यता, रामेण= रामख्येन, प्रेम्णः= स्नेहस्य, उचितं, योग्यं, न= नैव, कृतं= विहितमिति।

तत्राभिमतं कथयति अत्रेत्यादिना— अत्र= काव्येऽस्मिन्, रामेण इति एतत्पदं, सादृसैकरसस्वादिव्यङ्ग्याभिसङ्क्रमितवाच्यं= सदृसः अभीरुत्वं तस्मिन् एकरसत्व नितान्तपरायणत्व आदिपदात् सत्वसन्धत्व— उचितकारित्वस्यापि ग्रहणं तथाविधोव्यङ्ग्यः प्रतीयमानार्थः तत्र अभिसङ्क्रमितः परिणतो वाच्योऽभिधेयार्थो यस्य तत् तादृशं व्यञ्जकं= अस्तीति शेषः।

अस्यायमाशयः— सीतामुद्दिश्य रामस्य वचनमिदम्। तेनात्र वक्ता राम एव। अतः, मया इति पदस्य प्रयोगस्तत्रोचितः किन्तु आत्मानमेवान्यपुरुषेण कथन वाक्यार्थे नैव सङ्गच्छते। अतस्तस्यार्थबाधो भवति। एवञ्च बाधितामर्थो रामशब्दश्चात्र दशरथतनयत्वेन प्रसिद्धपुरुषमात्रसंसूच्य सादृसप्रियसत्यसन्धोचितकारिव्यक्तिविशेषमपि सकेतयति यतो साहसिना धुनर्धारिणा समर्थेनापि रामेण प्रेम्ण उचित त्वद्रक्षणादिकार्य न कृतं स च केवलं स्वजीवनरक्षार्थमेव धनुराददातीति अर्थान्तरसङ्क्रमितत्वेन व्यङ्ग्य क्षेपणमिति। अत्र केचन आदिपदात् कापुरुषादिधर्मपरिग्रहं निर्दिशन्ति तच्चिन्त्यमेव यतः कापुरुषस्य तु ह्येतदेव

प्रत्युतोचितं स्यात्। मया उचितं न कृतमिति साहसिकपुरुषस्यैव कथनं भवति। प्रसङ्गस्तु एतादृश:रावणेन यत्ते शिर:कर्तनं कृतं तत्तत्स्वभावानुकूलमेव यत: स जात्या एव राक्षस: क्रूरस्वभावस्तत्रापि तत्प्रस्तावास्वीकरणेन व्याहताज्ञतया क्रोधान्धश्च, त्वयापि शिर:कर्तने शीघ्रताहेतो: युदच्चै: शिरो धारितं तदपि त्वदनुकूलमेव। राम एव एतादृशो य: शक्तोऽपि त्वद्रक्षणे नैव कृतप्रयत्नोऽभवत् तस्य धनुर्धरत्वमपि केवलमात्मरक्षार्थमेवाभवत्। अतो रामेण स्नेहस्यानुकूलं नैवाचरितमिति।

ध्वनि के पद प्रकाश्यत्व के उदाहरण के क्रम में वाच्य के वाक्यार्थ में उपयुक्त न होने के कारण अर्थान्तर में सङ्क्रमित होने से जो ध्वनि होती है उसके पद से प्रकाश्यत्व का उदाहरण प्रस्तुत करते हैं।

जैसे—

हे प्रिये ! अपने जीवन को ही ज्यादा प्रिय मानने वाला राम जो है उसने प्रेम के उचित नहीं किया।'

इसमें घटित अर्थ बताते हैं—

यहाँ 'राम ने' 'यह जो पद'' वह साहसिक, सत्यसन्ध आदि धर्म व्यङ्ग्य अर्थ में परिणत है वाच्य जिसका, ऐसा व्यञ्जक है।

इसका आशय यह है कि यहाँ वक्ता हैं स्वयं राम। अपने को 'मैने' न कहकर नाम लेकर कहना वाक्यार्थ में उपयुक्त नहीं बनता वा बनता भी है तो कुछ प्रयोजन को लेकर ही। इसका सीधा अर्थ जो दशरथ का पुत्र राम है, वह बाधित है। उसके बाधित होने पर साहसी सत्यप्रतिज्ञ आदि धर्म वाले राम पर वाच्य के परिणय हो जाने से यह अर्थान्तरसङ्क्रमित वाच्य का पद प्रकाश्य भेद का उदाहरण है।

ध्वन्या०— यथा वा—

एमेअ जणो तिस्सा देउ कवोलोपमाइ ससिबिम्बम्।
परमत्थविआरे उण चन्दो चन्दो विअ वराओ।।
एवमेव जनस्तस्या ददाति कपोलोपमायां शशिविम्बम्।
परमार्थविचारे पुनश्चन्द्रश्चन्द्र इव वराक:।। (इतिच्छाया)

अत्र द्वितीयश्चन्द्रशब्दोऽर्थान्तरसङ्क्रमितवाच्य:।

लीला— अर्थान्तरसङ्क्रमितवाच्यस्य पदप्रकाश्यताया उदाहरणान्तर: प्रस्तुत्यै उपक्रमते यथेत्यादिना— वा= इति विकल्पे, यथा= इति उदाहरिष्यमाणपद्ये।

तदेवोदाहरति एमेअ इत्यादिना= जणो (जन:) तिस्सा (तस्या:) कवोलोपमाइ (कपोलोपमाया) ससिविम्ब (शशिविम्ब) एमेअ (एवमेव) देउ (ददाति) उण (पुन:) परमत्थदिआरे (परमार्थविचारे) चन्दो (चन्द्र:) चन्दो (चन्द्र:) विअ (इव) वराओ (वराक:) इति पदव्यवस्था।

जन:= लोक:, तस्या:= सुन्दर्या:, कपोलोपमायां= मुखमण्डलसादृश्ये,

शशिविम्बं= चन्द्रविम्ब, स्वमेव= सम्यगविचार्यैव, ददाति= प्रस्तौति, पुनः= सावहितत्वेन, परमार्थविचारे= वास्तविकताचिन्तने, तु, चन्द्रः= इन्दुः, चन्द्रः= इन्दुः, इव, वराकः= दयनीय एवेति।

अत्र= काव्येऽस्मिन्, द्वितीयः= अपरः चन्द्रशब्दः, अर्थान्तरसङ्क्रमितवाच्यः= अन्यार्थविघटितस्वार्थ इति।

अस्यायमाशयः— अत्र द्वितीयचन्द्रशब्दः साधारणशशिवाचक एव वाक्यार्थेऽनुपयोगित्वाद्बाधितार्थत्वेन क्षयित्वविलासशून्यमलिनत्वादिधर्मान्तर- सङ्क्रमितार्थः अर्थान्तरसङ्क्रमितवाच्यस्योदाहरणम्। जनस्तु गतानुगतिकः अत एव तस्याः सर्वतोभावेन लावण्यमयकपोलतलस्योपमायां शशिविम्बमुपस्थापयति। वस्तुतस्तु चन्द्रस्तु तदपेक्षया दूरनिकृष्टस्तस्य क्षयित्वसकलङ्कत्वविलासहीनत्वादिध ार्मत्वात् कपोलतले तु निष्कलङ्कलावण्यसनायित्वात्' इति प्रकरणमनुसृत्यैव द्वितीय चन्द्रशब्द साधारणचन्द्रर्थ क्षयशीलसकलङ्कविलासहीनवस्तुनि सङ्क्रामयति इति तस्यायौन्तरसङ्क्रमिततत्वम्।

अर्थान्तरसङ्क्रमितवाच्य के पदप्रकाश्यता का दूसरा उदाहरण प्रस्तुत करते हैं— अथवा जैसे—

'लोग वैसे ही उसके कपोलतल की उपमा में चन्द्रमण्डल को उपस्थापित करते हैं लेकिन ठीक से विचार करने पर तो चन्द्र-चन्द्र की तरह ही बेचारा है।'

उसमें घटित अर्थ को बताते हैं—

यहाँ दूसरा चन्द्रशब्द अर्थान्तरसङ्क्रमितवाच्य है।

इसका आशय यह है कि दूसरा चन्द्रशब्द अपने वाच्यार्थ में ही वाक्यार्थ मे उपयुक्त नहीं होता अतः वह अपने अर्थ को क्षयशील, विलासशून्य एवं मलिन वस्तु विशेष को बुझाने में सङ्क्रमित कर देता है। अतः वह अर्थान्तरसङ्क्रमितवाच्य के पद प्रकाश्यता का उदाहरण है।

ध्वन्या०— अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये प्रभेदे वाक्यप्रकाश्यता यथा—

या निशा सर्वभूतानां तस्यां जागर्ति संयमो।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः।।

अनेन हि वाक्येन निशार्थो न च जागरणार्थः कश्चिद्विवक्षितः। कि तर्हि ? तत्त्वज्ञानावहितत्वमतत्त्वपराङ्मुखत्वं च मुनेः प्रतिपाद्यत इति तिरस्कृतवाच्यस्यास्य व्यञ्जकत्वम्।

लीला— इत्थमविवक्षितवाच्यस्य पदप्रकाश्यत्वमुदाहृत्य सम्प्रति तस्यैव वाक्यप्रकाश्यतामुदाहर्तुमुपक्रमते अविवक्षितेत्यादिना— अविवक्षितवाच्यस्य= न्यवकृतवाच्यार्थस्य अत्यन्ततिरस्कृते= नितान्तमेवोपेक्षितार्थे, प्रभेदेः= प्रकारे, वाक्यप्रकाशयता= वाक्यात्प्रकाशस्तस्य भावस्तत्ता, यथा= इति उदाह्रियमाणपद्ये=

उदाहरति या निशेत्यादि— सर्वभूतानां या निशा तस्यां संयमी जागर्ति यस्यां भूतानि जाग्रति सा पश्यतः मुनेः निशा इति पदव्यवस्था।

सर्वभूतानां= सामान्यप्राणिनां, या, निशा= रात्रि, तस्यां, संयमी= वशेन्द्रिय आत्मारामः= जागर्ति= जागरितो भवति, यस्यां= यत्र, भूतानि= इतरप्राणिनः, जाग्रति= जागरिता भवन्ति, सा, पश्यतः= यथार्थज्ञानवतः, मुनेः= तत्वज्ञस्य, निशा= रात्रिः, भवतीति।

तत्र घटितार्थं निर्दिशति अनेनेत्यादिना— अनने इहोपस्थापितेन, वाक्येन= पूर्णार्थकसमूहेन, न, निशार्थः= स्वापार्थ, न च, जागरणार्थः= अस्वापार्थः, कश्चित्, विवक्षितः= वक्तुमिष्टः, किं तर्हि ?= यदि न स्वापो नैव च जागरणं तदा किमत्रविवक्षितमिति चेदित्थं-तत्वज्ञानावहितत्वं= तत्वज्ञाने तत्वदृष्टौ अवहितत्वं अवधानं, अतत्वपराङ्मुखत्वं= अत एव मिथ्यादृष्टौ पराङ्मुखत्वमप्रवृत्तिः, च मुनेः= तत्वज्ञस्य, प्रतिपाद्यते= निर्धार्यते, इति= इत्थं, तिरस्कृतवाच्यस्य= न्यक्कृताभिधेयस्य, अस्य= ध्वने र्व्यञ्जकत्वं= प्रत्यायकत्वम् इति।

अस्यायमर्थः= अत्र निशायां जागरणमन्यत्र रात्रिवदासनमिति यदुक्तं तस्य वाक्यार्थेऽनुपयोगित्वाद्बाधितार्थमेतद्वाक्यं मुनेः संयमिनो लोकोत्तरतालक्षणेन निमित्तेन तत्वदृष्टावधानं मित्यादृष्टौ च पराङ्मुखत्वं ध्वनति। अत्र निशेति व्यामोहजननी दृष्टिः, जाग्रति इति तत्परत्वेन कार्यं कुर्वन्ति। तेन यत्र साधारणप्राणिनां व्यामोहस्तत्र संयमी सदा सावधानी भवति स तत्वातिरिक्तवस्तुनि कदापि नैवात्मानं योजयति। तथैव यत्र च भूतानि संसक्ता भवन्ति गृहकलत्रादिषु नश्वरवस्तुषु तत्र संयमी असलग्नो भवति अर्थात् साधारणजनसंयमिनोरिदमेवान्तरं यद् यत्र पूर्वस्याप्रवृत्तिस्तत्रोत्तरस्य प्रवृत्तिर्यत्र च पूर्वस्य संलग्नता तत्रापरस्य वैराग्यमित्यस्य ध्वनितोऽर्थः। साधारणो जनः परमतत्वे व्यामूढो भवति संयमी तु तत्परत्वेन अवलोकयति तथैव साधारणजनः कलत्रगृहादिषु प्राणार्पणेनापि तत्परो भवति संयमी तु तन्नश्वरं मत्वा तद्दूरत एवं त्यजति इत्यस्य ध्वनितार्थस्याशयः यति।

इस प्रकार ध्वनि की पद प्रकाश्यता का उदाहरण उपस्थापित कर अब उसकी वाक्य प्रकाश्यता का उदाहरण उपस्थापित करते हैं—

अविवक्षित वाच्य के अत्यन्ततिरस्कृत भेद में वाक्य प्रकाश्यता जैसे—

''जो साधारण प्राणी के लिए रात्रि है उसमें संयमी जागृत रहता है और जिसमें साधारण लोग जागते हैं वह मुनि के लिए रात्रि है।''

इसमें घटित अर्थ का निर्देश करते हैं—

इस वाक्य से न तो कोई रात्रि अर्थ ही न तो जागरण अर्थ ही विवक्षित है। तो फिर है क्या ? मुनि का तत्वज्ञान के प्रति सावधानता एवं तत्व से भिन्न के प्रति पराङ्मुखता प्रतिपादित है। अतः इसका तिरस्कृतवाच्य ध्वनि व्यञ्जकत्व सिद्ध होता है।

इसका आशय यह है कि रात में जागना दिन में रात्रि में जैसे करना अर्थ जो है वह वाक्यार्थ में उपयोगी नहीं है। अत: उसमें अर्थबाध होने से यह ध्वनित होता है कि साधारण जन जिसमें विमुख होता है उसी में संयमी तत्पर रहता है और जिसमें साधारण जन मर पिट के लगता है उसमें मुनि एकदम संलग्न नहीं होता। इसका अशय यह है कि साधारण जन परमतत्व के प्रति विमुख रहता है और गृह कलत्र आदि नश्वर वस्तु के लिए मर–मिटता है और मुनि जन परमतत्व के प्रति सजग रहता है और सांसारिक वस्तु के प्रति उदासीन रहता है। यही ध्वनन है।

ध्वन्या०— तस्यैवार्थान्तरसङ्क्रमितवाच्यस्य वाक्यप्रकाश्यता यथा—

विसमइओ काण वि काण वि वालेइ अमिअणिम्माओ।
काण वि विसामिअमओ काण वि अविसामओ कालो।।

(विषमयित: केषामपि केषामपि प्रयात्यमृतनिर्माण:।
केषामपि विषामृतमय: केषामप्यविषामृत: काल:।। इतिछाया।)

अत्र हि वाक्ये विषामृतशब्दाभ्यां दु:खसुखरूपसङ्क्रमितवाच्याभ्यां व्यवहार इत्यर्थान्तरसङ्क्रमितावाच्यस्यास्य व्यञ्जकत्वम्।

लीला— ध्वनेर्वाक्यप्रकाश्यतोदाहरणप्रसङ्गे वाच्यस्यार्थान्तराविघटितत्वेन यो ध्वनिर्भवति तमुदाहर्तु प्रक्रमते तस्येत्यादिना— तस्य= अविवक्षितवाच्यस्य, एव अर्थान्तरसङ्क्रमितवाच्यस्य= अन्यार्थविघटितवाच्यार्थस्य, ध्वने:, वाक्यप्र-काशता= वाक्यात्प्रकाशो यस्य तस्य भावस्तत्ता, यथा= इति वक्ष्यमाणपद्ये।

तमुदाहरति विसमइओ इत्यादि—कालो (काल:) काणदि (केषामपि) विसमइओ (विषमयित:) काणवि (केषामपि) अमिअणिम्माओ (अमृतनिर्माण:) काणवि (केषामपि) विसामिअमओ (विषामृतमय:) केणावि (केषामपि) अविसा-मओ विषामृत:। वालेइ (प्रयाति) इति पदव्यवस्था।

काल:= समय:, केषामपि= येषां केषां 'तु, विषमयिता= विषरूप: केषामपि तु, अमृतनिर्माण:= पीयूषमय:, केषाञ्च, विषामृतमय:= विषसुधोभयमय:, केषाञ्चितु, अविषामृत:= विषसुधोभयेतर:, प्रयाति= गच्छति इति।

तत्राभीष्टमर्थं निर्दिशति अत्रेत्यादिना— अत्र= अस्मिन्, हि वाक्ये= पूर्णार्थ-कपदसमूहे, विषामृतशब्दाभ्यां, सुखदु:खरूपसडक्रमितवाच्याभ्यां= विषामृतयो-र्वाक्यार्थेऽनुपयोगा सुखदु:खार्थान्तरविघटितार्थाभ्यां, व्यवहार:= प्रयोग:, इति,, अस्य= वाक्यास्य, अर्थान्तरसङ्क्रमितवाच्यस्य= अन्यार्थविघटितार्थध्वने:, व्यञ्-जकत्वं= प्रकाशकत्वमिति।

अस्यायमाशय:— काल: केषाञ्चित्कृते विषं भवति केषाञ्चित्कृतेत्व-मृतमपि, केषाञ्चित्कृते तु विषममृतञ्च मिश्रितरूपं केषाञ्चित्कृते तु अनुभयमेवेति वाक्यस्यास्य वाच्यार्थ:। तत्र विषं सेवनेन जीवनघातकं वस्तु तद्विपरीतममृतं

नाम जीवनसञ्जीवनं वस्तु। कालस्तु न कमपि घातयति नैव च कमपि जीवयति इति तस्य वाक्यार्थेनैवोपयोगः। अतः विषामृतशब्दौ स्वार्थं परित्यज्य तं सुखदुः-खार्थे सङ्क्रामयत इति ताभ्यामादाय वाक्यस्य ध्वनिप्रकाशयतेति।

ध्वनि के वाक्यप्रकाशयता के उदाहरण के प्रसङ्ग मे वाक्य अर्थ के वाक्यार्थ में अनुपयोगी होने के कारण अर्थान्तर में सङ्क्रमित होने से जो ध्वनि होती है उसके उदाहरण के लिए उपक्रम करते हैं—

उस अर्थान्तरसङ्क्रमित वाच्य की वाच्यप्रकाशता जेसे—

''समय किसी के लिए विष के बराबर होता है तो किसी के लिए अमृत का निर्माण करने वाला भी, इसी तरह किसी के लिए विष एवं अमृत दोनों होता है तो किसी के लिए दोनों ही नहीं।''

उसमें घटित अर्थ बताते हैं—

इस वाक्य में सुख एवं दुःख रूप अर्थ मे वाच्य के सङ्क्रमित होने वाले विष एवं अमृत शब्द से व्यवहार है अतः इसका अर्थान्तरसङ्क्रमित वाच्य का व्यञ्जकत्व सिद्ध होता है।

ध्वन्या०— विवक्षितभिधेयस्यानुरणनरूपव्यङ्ग्यस्य शब्शक्त्युद्भवे प्रभेदे पदप्रकाशयता यथा—

प्रातुं धनैरार्थजनस्य वाञ्छां दैवेन सृष्टो यदि नाम नास्मि।
पथि प्रसन्नाम्बुधरस्तडागः कूपोऽथवा किन्न जडः कृतोऽहम्।।

अत्र हि जड इति पदं निर्विण्णेन वक्त्रात्मसमानाधिकरणतया प्रयुक्तम-नुरणनरूपतया कूपसमानाधिकरणतां स्वशक्त्या प्रतिपद्यते।

तस्यैव वाक्यप्रकाशयता यथा हर्षचरिते सिंहनादवाक्येषु 'वृत्तेऽस्मि-न्महाप्रलये धरणीधारणायाधुना त्वं शेषः।'

एतद्धि वाक्यमनुरणनरूपमर्थान्तरंशब्दशक्तयास्फुटमेव ।प्रकाशयति।

लीला— एवमविवक्षितवाच्यध्वनेः पदवाक्यप्रकाशयतामुदाहृत्य सम्प्रति विवक्षितान्यपरवाच्यस्यानुस्वानसन्निभव्यङ्ग्यध्वनेः पदवाक्यप्रकाशयता— मुदाह-र्तुमुपक्रमते विवक्षितेत्यादिना— विवक्षिताभिधेयस्य= अपेक्षितव्यङ्ग्यपरवाच्यस्य, अनुरणनरूपव्यङ्ग्यस्य= अनुस्वानोपमप्रतीयमानार्थस्य, शब्दशक्त्युद्भवे= शब्द-सामार्थ्याक्षिन्तस्वरूपे, प्रभेदे= प्रकारे, पदप्रकाशयता= पदस्य सुप्तिङन्तस्य शब्दस्य प्रकाशयता अभिव्यंजकता, यथा= इति उपस्थाप्यमानपद्ये—

तदोवोदाहरति प्रातुमित्यादि—यदि अहं धनैः अर्थिजनस्य वाञ्छां प्रातुं दैवेन सृष्टेः नाम न अस्मि तदा पथि प्रसन्नाम्बुधरः तडागः अथवा जडः कूपः किं न कृत इति पदव्यवस्था।

यदि, अहं, धनैः= सम्पद्भिः, अर्थिजनस्य,= याचकानां, वञ्छां= आवश्य-कतां, प्रातु= पूरयितुं, दैवेन= विधिना, सृष्टः= विरचितः, नाम= इति सम्भाव्ये,

न, अस्मि, तदा, पथि= मार्गे, प्रसन्नाम्बुधरः= स्वच्छजजलयुतः, तडागः= सरः, अथवा, जडः= प्रवाहहीनः, कूपः= जलाशयः, किं= किमर्थं न, कृतः= विहित इति।

तत्र घटितमर्थं निर्दिशति अत्रेत्यादिना—अत्र= काव्येऽस्मिन्, निर्विण्णेन= जातनिर्वेदेन, वक्त्रा= वक्तृजनेन, आत्मसमानाधिकरणतया= आत्मतुल्यत्वेन, प्रयुक्तं= व्यवहृतं 'जडः' इति पदं, स्वशक्त्या= स्वसामर्थ्यात्, अनुरणनरूपतया= अनुस्वानोपमत्वेन, मकूपसमानाधिकरणतां= कूपतुल्यधर्मितां, प्रतिपद्यते= प्राप्नोति इति।

अस्यायमर्थः— अत्र जड इति पदं मूढार्थं तच्च विषण्णेत वक्त्रा, स्वविशेषणत्वेन प्रयुक्तत्वात्तस्य मुख्यार्थबाधेन अभिधामूलव्यञ्जनया शिशिररूपमर्थं प्रत्याययति इति तस्य वयञ्जकत्वम्। यदि अहं विधिना धनैर्याचकानामिच्छापूर्तिक्षमत्वेन नैव सृष्टस्तदाऽहं जडः (मूढः) एव। एतदपेक्षया तु यदि अहं मार्गगः प्रसन्नजलयुतस्तडागो वा जडः (शिशिरजलः) कूप एव कृतःस्यां तदेव वरं भवेदित्यस्य ध्वनितोऽर्थः।

शब्दशक्तिमूलध्वनेर्वाक्यप्रकाशतामुदाहर्तुमुपक्रमते तस्यैवेत्यादिना— तस्यैव= शब्दशक्तिमूलध्वनेरेव, वाक्यप्रकाशता= वाक्यात्प्रकाशोऽभिव्यञ्जनं तस्य भावस्तता, यथा= इति उपस्थाप्यमानवाक्ये, हर्षचरिते= बाणभट्टप्रणीततदाख्यायिकायां, सिंहनादवाक्येषु= सिंहनादकथनेषु-वृत्त इत्यादि-अस्मिन्= सद्यः घट्यमाने, महाप्रलये= महस्य उत्सवस्य आसमन्तात् प्रलयो नाशस्तस्मिन्,वृत्ते= सञ्जाते, अधुना= सम्प्रति, धरणीधारणाय= धरण्या राज्यधुराया धारणायाश्वासनाय, तवं= भवानेव, शेषः= अवशिष्टः, इति इयतैव वाक्यार्थे पूर्णे कल्पावसाने भूमारोद्वहनक्षमः एक शेष एव यदा दिग्दन्तिनोऽपि विलीयन्त इति अस्यार्थान्तरमेव ध्वनेर्विषय इति।

अत्र घटितमर्थ निर्दिशति एतदित्यादिना— एतत्= पूर्वोक्तं, हि, वाक्यं= उत्सवे विनष्टे राज्याधारस्त्वमेवावषिष्ट इतिरूपं, शब्दशक्त्या= शब्दसामर्थ्यात्, अनुरणनरूपं= अनुस्वानोपमम्, अर्थान्तरं= द्वितीयं व्यङ्ग्यरूपार्थ, स्फुटमेव= स्पष्टमेव, प्रकाशयति= अभिव्यनक्ति इति।

अस्यायमाशयः— महोत्सवे प्रणष्टे राज्यभारवहनाय त्वमेव वशिष्ट इति वाच्यार्थेन कलपावसाने भूभारधारणाय शेषनाग एव प्रभुर्यदा दिग्दन्तिनोऽपि प्रलीयन्त इत्यर्थान्तराक्षेपाद् ध्वनेः, प्रकाश्यत्वम्। अत्र श्लेषमुखतोपमा व्यङ्ग्येति।

इस प्रकार अविवक्षित वाच्य ध्वनि की पद एवं वाक्य से प्रकाश्यता का उदाहरण प्रस्तुत कर अब विवक्षितान्यपरवाच्यध्वनि के शब्दशक्तिमूल अनुरणनोपमव्यङ्ग्य ध्वनि की पद एवं वाक्य से प्रकाश्यता का उदाहरण देने का उपक्रम करते हैं—

विवक्षितवाच्य वाले अनुरणनरूप व्यङ्ग्य के शब्दशक्ति से उत्पन्न भेद में पद की प्रकाश्यता जैसे—

जब कि धनों से अर्थिजन की इच्छा की पूर्ति करने के लिए विधि ने मेरी सृष्टि नहीं की है तो मैं रास्ते के बीच में रहा स्वच्छ जल वाला तालाब वा जड कूप ही क्यों न बनाया गया।।

इसमें घटित अर्थ का निर्देश करते हैं—

इस पद में वैराग्य से खिन्न वक्ता ने अपने समानाधिकरण के रूप में प्रयुक्त 'जड' पद अनुरणनरूप से अपने सामर्थ्य से कूप के समानाधिकरण के रूप में प्राप्त होता है।

इसका आशय यह है कि 'जड' का अर्थ है 'मूढ़' जो कि वक्ता के विशेषण के रूप में बाधित है, वही कूप के समानाधिकरण के रूप में शीतल अर्थ का आक्षेप करता है। इसका अर्थ होता है जब कि मैं याचकों की इच्छा धन से पूरी न कर पाने के कारण जड ही हूँ तो मेरे से अच्छा तो रास्ते के बगल का स्वच्छ जल वाला तालाब है या शीतल जल वाला कूप ही।

उसी की वाक्य प्रकाश्यता का उदाहरण प्रस्तुत करने के लिए उपक्रम करते हैं—

उसी की वाक्य प्रकाश्यता जैसे हर्षचरित में सिंहनाद के कथनों में—

'इस महाप्रलय के घटित हो जाने पर धरणीधारण के लिए अभी आप ही एक शेष हैं।'

इसमें घटित अर्थ का निर्देश करते हैं'

यही वाक्य अनुरणनरूप दूसरा अर्थ शब्दशक्ति के बल पर स्पष्ट रूप में प्रकाशित करता है।

इसका आशय यह है— 'इस महाप्रलय अर्थात् मह याने उत्सव का चारों ओर से नाश हो जाने पर धरणी अर्थात् राज्य के धारण करने में आप ही एक शेष रहे हैं' यह इसका वाच्यार्थ है और वही वाच्यार्थ—'' इस महाप्रलय के घटित हो जाने पर भूपीठ को धारण करने के शेषनाग ही बचे हैं जबकि दिग्दन्ती भी विलीन हो चुके हैं' ऐसा दूसरा अर्थ प्रकट करता है जिसमें उपमा व्यङ्ग्य हो जाती है।

ध्वन्या०— अस्यैव कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा हरिविजये—

चूअङ्कुरावअंसं छणमप्पसरमहग्घणमणहरसुरामोअम्।
असमपिपअं पिं गहिअं कुसुमसरणे महुमासलच्छिमुहम्।।

चूताङ्कुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम्।
असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्मीमुखम्।। (इतिच्छाया)

अत्र ह्यसमर्पितमपीत्येतदवस्थाभिधायिपदमर्थशक्त्या कुसुमशरस्य बलात्कारं प्रकाशयति।

अत्रैव प्रभेदे वाक्यप्रकाश्यता यथोदाहृतम् प्राक्- 'सज्जेहि सुरहिमासो'

इत्यादि। अत्र 'सज्जयति सुरभिमासो न तावदर्पयत्यनङ्गायशरा'- नित्यं वाक्यार्थः कविप्रौढोक्तिमात्रनिष्पन्नशरीरो मन्मथोन्माथमदनावस्थां वसन्तसमयस्य सूचयति।

लीला— इत्थं शब्दशक्त्युद्भवानुरणनरूपध्वनेः पदवाक्यप्रकाश्यतामुदाहृत्य सम्प्रति अर्थशक्त्युद्भवध्वनिमुदाजिहीर्षुस्तत्र कविप्रौढोक्तिमात्रनिष्पन्नशरीरव्यङ्ग्यस्य पदवाक्यप्रकाश्यतामुदाहर्तुमुपक्रमते अस्यैवेत्यादिना— अस्य= अनुरणनरूपव्यङ्ग्यध्वनेः, कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्य= कविप्रौढोक्तिमात्रेण कविकल्पनावशादेव न तु लोकेऽपि प्रसिद्धत्वेन निष्पन्न उद्भूतः शरीरं स्वरूपं यस्य तस्य तादृशस्य ध्वनेः अर्थशक्त्युद्भवे= अर्थसामर्थ्याक्षिप्तत्वेन सञ्जाते, प्रभेदे, पदप्रकाशता= पदात्प्रकाशो यस्य तस्य भावस्तत्ता यथा= इति निदर्शने, हरिविजयः तदाख्ये प्रवरसेनकृते रूपके—

उदाहरति चुअंकुरा इत्यादि-कुसुमसरेण (कुसुमशरेण) चूअंकुराअंसं (चूताङ्कुरावतंसं) छणमप्पसरमहग्घणमणहरसुरामोअं (क्षणप्रसरमहार्घमनोहरसुरामोदं) महुमासलच्छिमुहं (मधुमासलक्ष्मीमुखं) असमप्पिअं (असमर्पितं) पि (अपि) गहिअं (गृहीतम्) इति पदव्यवस्था। कुसुमशरेण= कामेन, चूताङ्कुरावतंसं= सहकारमञ्जरीभूषण, क्षणप्रसरमहार्घमनोहरसुरामोदं= महार्घो: महनीयो यः क्षणः उत्सवः तेन मनोहरसुरस्य सौन्दर्यदेवतायाः— कामस्य आमोदश्चमत्कारो यत्र तत् तादृशं, मधुमासलक्ष्मीमुखं= वसन्तश्रीवदनं, असमर्पितं, अपि, गृहीतं= उपभुक्तमिति। अत्र मुखमिति वदनमारम्भश्च।

अत्र घटितार्थं निर्दिशति अत्रेत्यादिना— अत्र= अस्मिन् वाक्ये, हि 'असमर्पितमपि कुसुमशरेण मधुमासलक्ष्याः मुखं गृहीतं' इति इत्येतस्मिन् कथने, असमर्पितम् इति एतदवस्थाभिधायिपदं= एतादृशावस्थाबोधकपदं, अर्थशक्त्या= अर्थसामर्थ्येन, कुसुमशरस्य= कामस्य, बलात्कारं= स्वेच्छामात्रेण हरणं, प्रकाशयति= अभिव्यनक्ति इति।

अत्रेदमुक्तं भवति— कामेन मधुमासलक्ष्या मुखस्य ग्रहणं कविकल्पितं वस्तु। असमर्पितस्यापि मुखस्य ग्रहणमिति नायिकाया नवोढात्वस्य व्यञ्जना नायकस्य हठित्वस्य च। अनेन च नवोढनायिकोपरिहठधर्मवतो नायकस्य बलात्कारो ध्वन्यते यस्य 'असमर्पितमपि' पदमेव व्यञ्जकमिति कविप्रौढोक्तिसिद्धवस्तुतः पदप्रकाश्यार्थशक्तिमूलकध्वनिरिति।

तस्यैव वाक्यप्रकाश्यतामुदाहरति अत्रैवेत्यादिना— अत्रैव= अस्मिन्नेव, प्रभेदे= प्रकारे, वाक्यप्रकाश्यता= वाक्यादभिव्यङ्ग्यत्वं, यथा, प्राक्= पूर्वमेव, उदाहृतं= निदर्शितं 'सज्जेहि सुरभिमासो:' इत्यादि।

तत्र घटितार्थं निर्दिशति अत्रेत्यादिना— अत्र= वाक्येऽस्मिन्, 'सज्जयति

कुसुममासो न तावदर्पयति अनङ्गाय, शरान् इति अयं= एतादृशे:, कविप्रौढोक्तिमा-त्रनिष्पन्नशरीर:= कवे: प्रौढोक्तिमात्रेण न तु लोकप्रसिद्धत्वेनापि निष्पन्नशरीर: समुद्भूतावयव:, वाक्यार्थ:, वसन्तसमयस्य= मधुकालस्य, मन्मथोन्माथकदनाव-स्थां= मन्मथस्य कामस्य, उन्माथस्तेन मदनावस्थां= कामस्य क्रमप्रगाढावस्थां, 'मन्मथोन्मादकताऽऽपादनावस्थानम् इति, पाठान्तरे= कामोद्दीपकताऽऽपत्तिदशां, सूचयति= अभिव्यनक्ति इति।

अत्रत्यमाशय:— अत्र 'वसन्त: केवलं कामेषूर सज्जयति किन्तु नैवार्पयति' इति वाक्यार्थ: कविप्रौढोक्तिसिद्धवस्तुत्वेन वसन्ते क्रमश: कामस्य प्रगाढावस्थां ध्वनतीति कविप्रौढोक्तिसिद्धवस्तुध्वने: वाक्यप्रकाश्यताया उदाहरणमिदमिति।

इस प्रकार शब्दशक्त्युद्भव अनुरणनरूप व्यङ्ग्य ध्वनि की पदवाक्य प्रकाश्यता का उदाहरपण प्रस्तुत कर अब अर्थशक्त्युद्भव ध्वनि के उदाहरण के उपस्थापन को उपक्रम करते हैं—

इसी के ही अर्थशक्त्युद्भव भेद में कविप्रौढोक्तिमात्रनिष्पन्नशरीर की पदप्रकाश्यता जैसे हरि विजय नामक प्रवरसेनकृत रूपक में—

कामदेव ने सहकार के अंकुरों से विभूषित, बहुमूल्य उत्सव के अवसर से कामदेव का आमोदन करने वाला मधुमास अर्थात् वसन्त की लक्ष्मी का वदन असमर्पित भी पकड़ लिया।

उसमें घटित अर्थ का निर्देश करते हैं—

यहाँ 'कामदेव ने मधुमासलक्ष्मी का असमर्पित भी मुख ग्रहण कर लिया' इस कथन में 'असमर्पित भी' यह अवस्था का अभिधान करने वाला पद अर्थशक्ति से कामदेव का बलात्कार प्रकाशित करता है।

इसका यह आशय है कि असमर्पित अवस्था से नायिका के मुग्धात्व का और नायक के हठिपन का सङ्केत मिलता है और 'असमर्पित भी' पद ही यहाँ ध्वनि व्यञ्जक है।

इसी भेद की वाक्यप्रकाश्यता का उदाहरण देने का उपक्रम करते हैं—

इसी भेद में वाक्यप्रकाश्यता जेसे 'सज्जेहि सुरभिमासो' इत्यादि में जो पहले ही उदाहृत है।

उसमें घटित अर्थ का निर्देश करते हैं—

इसमें वसन्त मास कामदेव के शरों को सज्जित करता है क्निनतु अर्पित नहीं करता' ऐसा जो कवि के प्रौढोक्तिमात्र से निष्पन्न शरीर वाला वाक्यार्थ है वह वसन्त समय के क्रमश: कामावस्था के उद्दीपकत्व को सूचित करता है।

इसका आशय यह है कि 'वसन्त युवतियाँ हैं जिसके लक्ष्य ऐसे वाणों का निर्माण तो करता है लेकिन उन्हें कामदेव को समर्पित नहीं करता' जो वाक्यार्थ है वह मात्र कविप्रोढोक्तिसिद्ध है और वह वसन्त की कामोद्दीपकता ध्वनित करता है। अत: यह कविप्रौढोक्तिमात्रसिद्धवस्तु व्यङ्ग्य ध्वनि के वाक्यप्रकाश्यता का उदाहरण है।

ध्वन्या०— स्वतः सम्भविशरीरार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा—

वाणिअअ हत्तिदन्ता कुतो अह्माण वाघकित्तो अ।
जाव लुलिंआलअमुही धरम्मि परिसक्कए सुह्वा।।
वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च।
यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा।। (इतिच्छाया)।

ध्वन्या०— अत्र लुलितालकमुखीत्येतत्पदं व्याधवध्वाः स्वतः सम्भावितशरीरार्थशक्त्या सुरतक्रीडासक्तिं सूचयंस्तदीयस्य भर्तुः सततसम्भोगक्षामतां प्रकाशयति।

लीला— ध्वनेः पदवाक्यप्रकाश्यतोदाहरणप्रसङ्गे कविप्रौढोक्तिमात्रसिद्धवस्त्वाक्षिप्तध्वनिमुदाहृत्य सम्प्रति स्वतः सम्भविशरीरार्थशक्त्युद्भवध्वनेः पदप्रकाश्यतामुदाहर्तुमुपक्रमते 'स्वत' इत्यादिना— स्वतःसम्भविशरीरार्थशक्त्युद्भवे= स्वतःसम्भविलोकप्रसिद्धमपि न तु कविप्रौढोक्तिमात्रसिद्धं शरीरमुपादानं यस्य तादृशो योऽर्थस्तस्य शक्तेरुद्भवो यस्य तादृशे, प्रभेदे= प्रकारे, पदप्रकाशता= पदात्प्रकाशो यस्य तस्य भावस्वत्ता, यथा= इति उदाह्रियमाणपद्ये—

उदाहरति 'वाणिअअ' इत्यादिना— हे वाणिअअ (हे वाणिजक !) अम्हाण (अस्माकं) घरम्मि (गृहे) जाव (जावत्) लुलिआलअमुही (लुलितालकमुखी) सुह्वा (स्नुषा) परिसक्कए (परिष्वक्कते) ताव (तावत्) हत्तिदन्ताः (हस्तिदन्ताः) बाधकित्ती (व्यार्घकृत्तयः (अ) च) कुत्तो= कुतः इति पदव्यवस्था।

हे वाणिजक ! = वणिज्यारत !, अस्माकं= नः, गृहे= भवने, यावत्= यावत्पर्यन्तं, लुलितालकमुखी= लुलिता इतस्ततो विक्रीर्णा, अलका= चूर्णकुन्तला यंत्र तादृशं मुख यस्याः तादृशी, स्नुषा= पुत्रभार्या, परिष्वक्कते= सविभ्रम चङ्क्रम्यते, ताव (तावत्) हस्तिदन्ताः= गजदशनाः, व्याघ्रकृत्तयः= शार्दूलचर्माणि, च कुतः= कस्मात्सम्भवन्ति इति।

तत्र घटितार्थं निर्दिशति अत्रेत्यादिना— अत्र= अस्मिन् काव्ये, लुलितालकमुखी— इति एतत्, पदं, स्वतः सम्भववितशरीरार्थशक्त्या= औचित्येनापि सिद्धावयवो योऽर्थस्तस्य शवत्या, व्याधवध्वा= व्याधरमण्याः, सुरतक्रीडासक्ति= सम्भोगामोदतत्परतां, सूचयन्= सङ्केतयन्, तदीयस्य= तत्सम्बद्धस्य, भर्तुः= पत्युः, सततसम्भोगक्षमतां= अजस्रव्यवायसामर्थ्यं, प्रकाशयति= प्रकटयति इति।

अस्यायमाशयः— यत्र यावत्स्नुषा लुलितकुत्तलवदना सविभ्रमं चङ्क्रम्यते तावद्गृहे हस्तिदन्तव्याघ्रचर्मादीनामभाव इति वाच्यार्थः। स च पुत्रस्य सततसम्भोगक्षामतया मृगयार्थमसमर्थता सदर्थवप्तेन तेषामभाव इति चकारादात्मनश्च बार्द्धक्यादित्यपि च ध्वनति। तादृश ध्वनञ्च स्वतः सम्भविना तादृशस्नुषास-

त्वादिरूपार्थेन 'लुलितालकमुखी' इति पदेन प्रकाशितमिति स्वतः सम्भवविव-स्तुध्वनेः पदप्रकाश्यताया उदाहरणमिदम्। स्नुषायाश्च युवतित्वेन लुलितालक-मुखित्व तेन च पत्युराकर्षणाधिक्यञ्चेति स्वतः सम्भव्यर्थ इति।

ध्वनि की पदप्रकाश्यता के उदाहरण के प्रसङ्ग में स्वतः सम्भवी अर्थ की शक्ति से आक्षिप्त ध्वनि की पदप्रकाश्यता का उदाहरण प्रस्तुत करने का उपक्रम करते हैं—

स्वतः सम्भवी शरीर वाले अर्थ की शक्ति से उत्पन्न ध्वनि के भेद मूं पद की प्रकाश्यता जैसे—

'हे व्यापारी ! हमारी घर में जब तक चञ्चल अलकों से युक्त मुख वाली पतोहू है तब तक हाथी दाँत वा बाघ की खाल कहाँ से होंगे।'

इसमें घटित अर्थ का निर्देश करते हैं—

यहाँ 'चञ्चल अलकों से युक्त मुख वाली' यह पद जो है वह स्वतः सम्भावित शरीर वाले अर्थ की शक्ति से व्याधवधू की सम्भोग क्रीडा में आसक्ति को सूचित करता हुआ उसके पति की निरन्तर सम्भोग क्षमता को प्रकाशित करता है।

इसका आशय यह है कि पतोहू के लुलितालकमुखी होने से घर में हाथी दाँत एवं व्याघ्रचर्म का अभाव होना इसका वाच्यार्थ है और उससे आक्षिप्त होकर पतोहू के आकर्षक होने से उसके साथ के सतत् सम्भोग कृश होकर लड़के का शिकार में जा न सकना और अपने भी बार्द्धक्य के कारण घर में उन चीजों का अभाव होना' जो दूसरा अर्थ निकलता है, वह व्यङ्ग्यार्थ है और वह व्यङ्ग्यार्थ यहाँ खाश करके लुलितालक मुखी पद से ही आक्षिप्त है। अतः यह स्वतः सम्भवी अर्थ की शक्ति से आक्षिप्त ध्वनि की पदप्रकाश्यता का उदाहरण है।

ध्वन्या०— तस्यैव वाक्यप्रकाशता यथा—

सिहिपिच्छकण्णऊरा बहुआ वाहस्य गव्विरी भमइ।
मुत्ताफलरइअपसाहणाण मज्झे सवत्तीणम्।।

शिखि

ध्वन्या०— अनेनापि वाक्येनप व्याधवध्वाः शिखिपिच्छकर्णपूराया नवपरिणीतायाः कस्याश्चित्सौभाग्यातिशयः प्रकाश्यते। तत्सम्भोगैकरतौ मयूरमात्रमारणसमर्थः पतिर्जात इत्यर्थप्रकाशनात्। तदन्यासां चिरपरि-णीतानां मुक्ताफलरचितप्रसाधनानां दौर्भाग्यातिशयः ख्याप्यते। तत्सम्भो-गकाले स एव व्याधः करिवरवधव्यापारसमर्थ आसीदित्यर्थप्रकाशनात्।

लीला— इत्थं स्वतः सम्भविशरीरार्थशक्त्युद्भवध्वनेः पदप्रकाशतामुदा-हृत्यसम्प्रति तस्यैव वाक्यप्रकाश्यतोदाहरणायोपक्रमते तस्येत्यादिना- तस्यैव= स्वतः सम्भविशरीरार्थशक्त्युद्भवध्वनेरेव, वाक्यप्रकाश्यता= वाक्यात्प्रकाशो यस्य तस्य भावस्तत्ता यथा= इति वक्ष्यमाणोदाहरणे।

उदाहरति 'सिहिपिच्छ'—इत्यादि। पद्यमिदं व्याख्यातपूर्वमेव।

तत्र घटितार्थं निर्दिशति अनेनेत्यादिना— अनेन= प्रस्तुतेन, पाक्येन कस्याश्चित्, नवपरिणीतायाः= सद्य ऊढायाः, शिखिपिच्छकर्णपूरायाः= बर्हविभूषितकर्णायाः, व्याधवध्वाः= व्याधरमण्याः, सौभाग्यातिशयः= सौभागयाधिक्यं, प्रकाश्यते= द्योत्यते। यतः, तत्सम्भोगैकरसः= तया सहैव रमणे एकचित्तः, सन्, पतिः= अत्र व्याधः, मयूरमात्रमारणसमर्थः= शिखिमात्रहननक्षमः, जातः, इति अर्थप्रकाशनात्= आशयद्योतनात्। तदन्यासां= तद्भिन्नानां, चिरपरिणीतानां= बहुकालोढानां, मुक्ताफलरचितप्रसाधनानां= गजमौक्तिकविहितशृङ्गाराणां, दौर्भाग्यातिशयः= दुर्भाग्याधिक्यमेव, ख्याप्यते= प्रकट्यते। तत्सम्भोगकाले= तासां भोगसमये, सः= सम्प्रति मयूरमात्रमारणसमर्थः, एव, व्याधः, करिवधव्यापारसमर्थः= करिवराणां मत्तदन्तिनां वधरूपो यो व्यापारस्तत्र समर्थः क्षमः आसीत् इति अर्थप्रकाशनात्= आशयख्यापनात्।

अस्यायमाशयः= मयूरबर्हभूषणा व्याधवधूः मौक्तिकभूषणानां सपत्नीनां मध्ये गर्विता भ्रमति इत्यस्य वाच्यार्थः। तत्र तस्या गर्वे हेतुश्च सततं परिसान्निध्यमेवान्यथा मौक्तिकभूषणानां पुरः पिच्छभूषणाया गर्वस्यासिद्धेः। तया सह सततविहारात्तत्पतिः क्षामः सन् सम्प्रति मयूरमृगयामात्रक्षमः सञ्जातः। तथापि सा गर्विता भ्रमति सततपतिसान्निध्यादिति द्वितीयार्थो वाच्यार्थाक्षिप्तः। तस्या गर्वश्व स्वतः सम्भव्येव। तेनैवेदं स्वतः सम्भव्यर्यशक्त्युद्भवध्वनेर्वाक्याक्षिप्तत्वस्योदाहरणमिति।

उसी की वाक्यप्रकाश्यता का उदाहरण देते हैं—

उसी की ही वाक्यप्रकाश्यता जैसे—

'मोर के पिच्छ से भूषित व्याधवधू मुक्ताफल से रचित प्रसाधन वाली सपत्नियों के बीच गर्व से घूमती है।'

उसमें घटित अर्थ का निर्देश करते हैं—

इस वाक्य से हाल ही में व्याही गई, मोर के पिच्छ से सजी हुई किसी व्याध वधू के सौभाग्य का अतिशय प्रकाशित होता है। उसके सम्भोग में ही एकचित्त वाला होकर उसका पति मयूर मात्र मारने में समर्थ हो गया ऐसे अर्थ के उससे निकलने से यह ज्ञात होता है।

उससे भिन्न अन्य पहले ही व्याही गई एवं मुक्ताफल से बने आभूषणों से संजी सपत्नियों के दुर्भाग्य का आधिक्य ख्यापित होता है, उनके साथ के सम्भोग के दिनों वही व्याधा मत्त हाथियों के वध के कार्य में भी समर्थ था ऐसे अर्थ के प्रकाशन से यह सिद्ध होता है।

इसका आशय यह है कि व्याधवधू का सौभाग्य इसलिए है कि उसका पति उसे एक क्षण नहीं छोड़ता। अतः वह पिच्छ से सजी हुई भी मुक्ताफल से सज्जित सपत्नियों के बीच गर्व से घूमती हैं। इस अर्थ के स्वतः सम्भवी अर्थ की शक्ति से

आक्षुप्त होकर प्रतीत होने से यह स्वतः सम्भवी अर्थ की शक्ति से आक्षिप्त ध्वनि की वाक्यप्रकाश्यता का उदाहरण है।

लोचनम्— अत्र कविनिबद्धवक्तृप्रौढोक्तिशरीरार्थशक्त्युद्भवे पदवाक्यप्रकाशतायायुदाहरणद्वयं न दत्तम्। 'प्रौढोक्तिमात्रनिष्पन्नशरीरसम्भवी स्वतः' इति प्राच्यकारिकायां इयतैवोदाहृतत्वं भदित्यभिप्रायेण। तत्र पदप्रकाशता यथा—

सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गलोलं हि जीवितम्।।

इत्यत्र कविना यो विरागो वक्ता निबद्धस्तत्प्रौढोक्त्या जीवितशब्दोऽर्थशक्तिमूलतयेदं ध्वनयतिसर्व एवामी कामा विभूतयश्च स्वजीवितमात्रोपयोगिनः तदभावे हि सद्भिरपि तैरसद्रूपताप्यते, तदेव च जीवितं प्राणधारणरूपत्वात्प्राणवृत्तेश्च चाञ्चल्यादनास्थापदमिति विषयेषु वराकेषु किं दोषोद्घोषणदौर्जन्येन निजमेव जीवतमुपालभ्यं, तदपि च निसर्गचञ्चलमिति न सापराधमित्येवता गाढं वैराग्यमिति।

वाक्यप्रकाशता यथा—शिखरिणि 'इत्यादौ।

लीला— कविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्त्युद्भवव्यङ्ग्यध्वनेः पदव्यवाक्यप्रकाशताऽत्र वृत्तिकृता नोदाहृता। तत्र 'कारिकायां' प्रौढोक्तिमात्रनिष्पन्नशरीरसम्भवी स्वतः इति प्रतिपादितत्वात्तस्य कविप्रौढोक्तिमात्रनिष्पन्नशरीरं एवार्थे समाविष्टत्वात्सम्भवति। वृत्तिकारः 'कवेः कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीर एकः।' इति निर्दिश्य उभावेवैकत्र समावेशयति किन्तु प्रकरणे तु उभावेव पृथकत्वेनोदाहरति काममत्र तेनैव तदपेक्षितम्। लोचनकारस्तु स्पष्टमेव उभौ पृथक्पृथगेव विवेचयति। काव्यप्रकारस्यापीदमेवाभीष्टम्। यथोक्तं तत्र—

शर्थशक्त्युद्भवेऽप्यर्थो व्यञ्जकः सम्भवी स्वतः
प्रौढापेक्तिमात्रात्सिद्धो वा कवेस्तेनोम्भितस्य वा।
वस्तुवाऽलङ्कृतिर्वेति षड्भेदौऽसौ व्यनक्ति यत्।
वस्त्वलङ्कारमथवा तेनायं द्वादशात्मकः इति।

हेमचन्द्रस्तु भेदमिमं नैवानुमन्यते। स तु सर्वानेव भेदान् कविप्रौढोक्तावेवान्तर्विभावयिषति। तदनुसारं यदि स्वतः सम्भव्यर्थोऽपि कविप्रौढोक्तौ नान्तर्भवति तदा तस्य व्यङ्ग्यार्थव्यञ्जकत्वमेव न सिध्यति न च सः काव्यत्वप्रयोजको भवितुमर्हति। कविनिबद्धवक्तृप्रौढोक्तिस्तु नितान्तमेव कविप्रौढोक्तेरेवाङ्गं किञ्चैतत्कवेर्विवक्षा कामं सोऽभीष्टमर्थ प्रत्यक्षमेव वदेद्वा वक्तृमुखेन वादयेत्। माणिक्यचन्द्रोऽपि हेमचन्द्रमेवाक्षरशोऽनुसरति। एवमेव जगन्नाथोऽपि तदेव समर्थयति। तदनुसारेण उभयोरेव वस्तुनो निर्माणं कविप्रतिभासम्पन्नमेव। तेनोमयोर्न भेदः।

यथोक्तं-कवितदुम्तिप्रौढोक्तिवक्तृप्रौढोक्तिनिष्पन्नयोर्न पृथग्भावेन गणनोचिता, उम्भितोम्भितादेरपि भेदान्तरप्रयोजकताऽऽपत्तेः' इति। नगेशभट्टस्तु जगन्नाथमतं दूषयन् कथयति- यथा वृद्धोक्त्यपेक्षया शिशूक्तौ काचिच्चमत्कारिता भवति तथैव कविप्रोढोक्त्यपेक्षया कविनिबद्धवक्तृप्रौढोक्तौ अन्यैव विलक्षणतोत्पद्यते। तेनोभयोः पृथक्त्वमेवोचितमिति। वस्तुतस्तु चमत्कृतेर्नवीनतैव भेदस्य प्रयोजिका। यच्च कविप्रत्यक्ष कथयति यच्च वक्तृमुखेनपस्थापयति तत्र चमत्कारस्य स्पष्टमेव पार्थक्यमुन्मीलति। 'रामोऽस्ति सर्वं सहते' इत्युक्तेरपेक्षयः रामोऽस्मि सर्वं सहे' इत्युक्तौ कीदृशश्चमत्कारितातिशयो विलसति इति सहृदयैरेववधातव्यम्। अत्र महादेवः संक्षिपति— 'अत्र केचित् द्वौ भेदावेवोचितौ कविनिबद्धवक्तृप्रौढोक्ति-सिद्धस्य कविप्रौढोक्तिसिद्धभेदेन गतार्थत्वात्। अन्यथा तन्निबद्धनिबद्धादेः पृथ-क्सङ्कलनायामनवस्थाप्रसक्तेर्दुर्निवारत्वात्। तन्निबद्धनिबद्धादेः कविनिबद्धत्वे-नानुगमे तु कवित्वेन प्रथमनिबद्धस्यापि अनुगमसम्भवात् पृथग्गणनाया निर्युक्ति-तकत्वादित्यभिदधते। वस्तु तस्तु जरठभाषाणमपेक्ष्य शिशुशुकभाषणे इव कविभाषणात् कविनिबद्धभाषणे चमत्काराधिक्योदयस्य सकलहृदयानुभवसिद्ध-त्वात् कवितन्निबद्धवक्तृप्रौढो— क्तिसिद्धभेदद्वयं समुचितम्, तनिनबद्धादेस्तु प्रणिधानविशेषप्रययोज्यप्रतिपत्तिकतया चमत्कृत्यनुदयात् नानवस्थादोषप्रसङ्गः- सम्भवतीत्याचार्याशिय इति।

तदित्थं सिद्धस्य— कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुक्षिप्तव्यङ्ग्यस्य पदप्र-काश्यत्वमुदाहरति लोचनकारः सत्यमित्यादिना— कामाः सत्य मनोरमाः विभूतयः सत्यं रम्याः किन्तु जीवितं मत्ताङ्गनापाङ्गभङ्गलोल हि इति पदव्यवस्था।

कामाः—अभिलाषाः सत्य= निश्चयमेव, मनोरमा= हृद्याः, विभूतयः= ऐश्व-र्याणि, सत्यं= निश्चयमेव, रम्याः= मनोहरा, किन्तु जीवितं= जीवनं, तु, मताङ्गना-पाङ्गभङ्गलोलं= मत्ता= यौवनेनोन्मादिता या अङ्गता रमणी तस्याः य अपाङ्गः विलोचनं तस्य भङ्गः पातः इव लोलं चञ्चलं हि= इति अवधारणे इति।

अत्र यो विरागी वक्ता निबद्धस्तप्रौढोक्त्या जीवितशब्दोऽर्थशक्तिमूलतया इदं ध्वनयति यत्काम स्पृहा विभूतयो वा ध्रुवा एव सन्तु किन्तु निसर्गचञ्चलस्य कृते कस्तेषामुपयोग इति। अतोऽय पदप्रकाश्यतायाः कविनिबद्धवक्तृप्रौढो-क्तिसिद्धाक्षिप्तव्यङ्गस्योदाहरणम्।

तस्येव वाक्यप्रकाश्यता—

यथा ':शिखरिणि' इत्यादौ। पद्यं तु पूर्व व्याख्यातमेव। अत्र वक्ता तु कविनिबद्धः विम्बफलनिमित्तं तपश्चर्या केवलं कविनिबद्धवक्तृप्रौढोक्तिसिद्धव-स्त्वेव येन तस्य विम्बफलसदृशाधरचुम्बनविषयकाभिलाषा ध्वन्यत इत्यस्य वाक्यप्रकाश्यत्वमिति।

ध्वन्या०— ननु ध्वनि: काव्यविशेष इत्युक्तं तत्कथं तस्य पदप्रकाश्यता। काव्यविशेषो हि विशिष्टार्थप्रतिपत्तिहेतु: शब्दसन्दर्भविशेष:। तद्भावश्च पदप्रकाशत्वे नोपपद्यते। पदानां स्मारकत्वेनावाचकत्वात्। उच्यते- स्यादोष: दोष: यदि वाचकत्वं प्रयोजकं ध्वनिव्यवहारे स्यात्। न त्वेवम्। तस्य व्यञ्जकत्वेन व्यवस्यानात्। किञ्च काव्यानां शरीराणामिवं संस्थानविशेषाविच्छिन्नसमुदायसाध्यापि चारुत्वप्रतीतिरन्वयव्यतिरे— काभ्यां भागेषु कल्प्यत इति पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारो न विरोधि।

लीला— इत्थं ध्वने: पदवाक्यप्रकाश्यतां सोपपत्तिकमुदाहृत्य सम्प्रति ध्वने: पदप्रकाश्यताविषये सम्भाव्यशङ्कानिरासाय प्रकरणमुपक्रमते नन्वित्यादिना- ननु= इति प्रश्ने, सन्देहेऽपि, ध्वनि:= ध्वनितत्वं, काव्यविशेष:= विलक्षणकाव्यं, इति= इत्थं, उक्तं= कथित, यत्रार्थ: शब्दो वा तमुपसर्जनीकृत: स्वार्थौ। व्यक्त: काव्यविशेष: स ध्वनिरिति सूरिभि: कथित: इत्युक्त्वा, तद्= तेन, तस्य= ध्वने: काव्यविशेषस्य, पदप्रकाशता= पदात्प्रकाशो यस्य तस्य भावस्तत्ता, कथं= केन प्रकारेणेति किञ्च, विशिष्टार्थप्रतिपत्तिहेतु:= विशिष्टो विलक्षणो वाच्यव्यङ्ग्य भेदेन द्विविध: सामान्यशब्दार्थाधिकचमत्कारी य: अर्थो व्यङ्ग्यरूपस्तस्य प्रतिपत्तेरुपपरादनस्यहेतु: कारणभूत:, शब्दसन्दर्भविशेष:= शब्दानां सन्दर्भ:, पूर्णार्थकसमूह: स एव विशेष:= सङ्घटितपदविशेष:, काव्यविशेष:= काव्यव्यपदेश्य:, हि= इति अवधारणे, तद्भाव:= तस्य काव्यस्य भाव: सत्ता, च पदप्रकाशत्वे= पदत्प्रकाशस्तस्य भावस्तत्त्वं तस्मिन्, न= नैव, उपद्यते= सम्भवति। तत्र हेतुरुक्त: पदानामित्यादिना— पदानां= पृथक्त्वेनावस्थितानां, पदानां स्मारकत्वेन= स्मारकरूपेण, अवाचकत्वात्= वाचकत्वाभावात्।

अस्यायमाशय:— भ्वतैवोक्तं यत् काव्यविशेषो ध्वनिरिति काव्यविशेषस्तु विलक्षणार्थनिष्पत्तिकरण: शब्दसमूहविशेष एव न तु शब्दामात्रम्। पदप्रकाश्यत्वे नादृशकाव्यविशेषभावस्तु नैव सम्भवति यत: पदानि तु स्मारकानि एवं न तु वाचकानि। यथा पदे वर्णानां न पृथगर्थस्तथैव वाक्ये पदानामपि। तानि तु केवलं स्मारकान्येव। अपि च, यदि ध्वनि: शब्दप्रकाश्यस्तदा शब्दसमूहनिष्पन्नशरीरं काव्यं ध्वनौ कथं सिध्यति इति पूर्वपक्षशङ्का।

अत्र, एउच्यते= एवं कथ्यते,, यदि, ध्वनिव्यवहारे= ध्वनिप्रयोगे, वाचकत्वं= पदस्य वाचकभाव:, प्रयोजक= आक्षेपकं, स्यात्, तदा, एष: पूर्वपक्षारोपित:, दोष:= त्रुटि: स्यादेव। किन्तु, न तु,, एवं= इत्थं नैव भवति अर्थात् वाचकत्वं नैव ध्वने: प्रयोजकं भवति, तेन पदानां वाचकत्वभावाभावेऽपि का हानिर्ध्वने:। यत:, तस्य= ध्वने:, तु व्यञ्जकत्वेन= प्रत्यायकत्वेन, व्यवस्थानात्= प्रबन्धनात्।

अत्रेदमुक्तं भवति— यदि ध्वनेर्वाचकत्वमेव प्रयोजकं स्यात्तदा पदानां वाचकत्वाभावे आपत्तिरुत्तिष्ठेत किन्तु नैव वाचकत्वं ध्वनेः प्रयोजकमपितु तस्य व्यञ्जकत्वमेव प्रयोजकमिति। यदि पदे व्यञ्जकत्वस्य विद्यमानता तदा तस्य वाचकत्वाभावेऽपि ध्वनिस्तु भवत्येवेति।

इत्थं छलबलेन पूर्वपक्षं निरुत्तरीकृत्य पुनर्वस्तुवृत्तेनापि स्वमतं स्थापयति किञ्चेत्यादिना— किञ्च= यतः, शरीराणां= अवयविनां, इव= यथा, काव्यानां= काव्यव्यपदेश्यवस्तूनां, संस्थानविशेषावच्छिन्नसमुदायसाध्या= संस्थानविशेषेण तत्तदवयवेन अवच्छिन्नो घटितो यः समुदायः समूहोऽङ्गसंस्थानं तेन साध्या प्रतिपाद्या, अपि, चारुत्वप्रतीतिः= सौन्दर्यावभासनं, अन्वयव्यतिरेकाभ्यां= तद्भावे, तद्भावस्तदभावे तदभाव इति नियमेन, भागेषु= अवयवविशेषेषु कल्प्यते= चिन्त्यत इति= इत्थं तथैव, पदानां= पृथक्पृथगेव पदानां, अपि, व्यञ्जकत्वमुखेन= व्यञ्जकत्वद्वारैव, व्यवस्थितः= नियमितः, ध्वनिव्यवहारः= ध्वनिरिति व्यपदेशः, न, विरोधि= नैवानन्वितमिति।

अत्रेदमुक्त भवति— तत्र पूर्वपक्षी कथयितुं शक्नोति न स्यादेवपदानाम-वाचकत्वे ध्वन्यभावे हेतुः किन्तु काव्यं ध्वनिः, तच्च अनाकाङ्क्षप्रतिपत्तिकारि वाक्यमेव, न तु पदमिति तत्कथं तस्य पदप्रकाश्यत्वमिति, अत्रोच्यते— वयमपि पदमेव न ध्वनिव्यपदेश्यं विद्मः। ध्वनिस्तु समुदाय एव। समुदायश्च वाचका-च्यव्यङ्ग्यानाम्। तेनैव पदात्प्रकाशो यस्य पदप्रकाशो ध्वनिरित्युक्तमिति। तत्रापि पूर्वपक्षी कथयितुं शक्नोति— यदि पदस्य ध्वनिप्रकाशनसामर्थ्यं तर्हि तस्य वाक्येन सह कः सम्बन्धो वा कुतः, अखण्ड एव प्रतीतिक्रम इति। अत्रोच्यते काव्यं शरीरम्। तस्य शब्दार्थौ अङ्गम्। शरीरे यथा चारुत्वप्रतीतिः विशिष्टप्रकारस-न्निवेशयुक्तसमुदायद्वारैव भवति तथापि शरीरे कश्चिदवयवविशेष एतादृशो भवति यस्य भावे चारुता प्रतीयते यस्याभावे नैव सा प्रतीयते। अतस्तस्य सौन्दर्यकल्पनाा तदेवाङ्गमधिकृत्य क्रियते तथैव काव्येऽपि चारुता तु अखण्डवाक्य एव भवति किन्तु तत्र हेतुस्तु कस्याऽप्येकस्य पदस्योपस्थितिरेव। अत एव व्यञ्जकत्वहेतोः पदनिमित्तमपि ध्वनिव्यवहार इति नैव तत्र कश्चिद्विरोध इति।

इस प्रकार ध्वनि की पदप्रकाश्यता का उपपत्तिपूर्वक उदाहरण देकर अब ध्वनि की पदप्रकाश्यता के विषय में सम्भाव्यशङ्का के निरास के लिए प्रकरण का उपक्रम करते हैं—

ध्वनि को काव्यविशेष कहा गया है और उस काव्यविशेषणरूप ध्वनि का पद से प्रकाशित होना कैसे हो सकता है क्योंकि काव्यविशेष तो विशिष्ट अर्थ की प्रतिपत्ति का कारण भूत शब्दों का समूह विशेष होता है। पद से प्रकाशित होने में तो उस काव्यविशेष का भाव हो नहीं सकता क्योंकि पद तो केवल स्मारक ही होते हैं वाचक तो नहीं होते ?

इसका आशय यह है कि ध्वनि को काव्यविशेष कहा गया है। काव्य तो विशेष अर्थ के प्रतिपादक शब्दों का समूह अर्थात् वाक्य ही हो सकता है। अत: उस वाक्यरूप काव्य का पद से प्रकाशित होने में तो कोई उपपत्ति नहीं बन पाती। क्योंकि पद तो केवल अर्थ के स्मारक ही होते हैं। वाचक तो नहीं होते। जैसे वर्ण में अक्षर का कोई महत्व नहीं उसी तरह वाक्य में पदों का कोई महत्व नहीं होता। वे तो केवल अखण्ड वाक्यबोध की कड़ियाँ मात्र हैं। तो कैसे वाक्यरूप काव्य ध्वनि का प्रकाशन पद से माना जाय ?

इस पर कहा जाता है कि यह दोष हो सकता यदि ध्वनिव्यवहार में वाचकत्व ही प्रयोजक होता। किन्तु ऐसा तो होता नहीं क्योंकि ध्वनि का तो व्यञ्जकत्व से ही सरोकार है।

यह कहने का विषय नहीं कि पदों का अवाचकत्व ही ध्वनि के अभाव का कारण है किन्तु कहने का आशय यह है कि ध्वनि एक काव्य है और काव्य तो ऐसा पदसमूह है जिसमें आकाङ्क्षा न रही जाय अर्थात् अर्थ की पूरी प्रतीति हो। पद में तो ऐसा नहीं होता तो वह कैसे काव्यरूप ध्वनि का प्रकाशक होगा और कैसे पद को ध्वनि माना जाय ?

यह तो कहा नहीं गया है कि पद ही ध्वनि का काव्य होता है। ध्वनि तो वाचक वाच्य एवं व्यङ्ग्य इनके समुदाय में होती है। किन्तु यह सही है कि ध्वनि पद से भी प्रकाशित होती है। अर्थात् समुदाय में रहते हुए भी ध्वनि पद के द्वारा प्रकाशित होती है।

मान लिया कि ध्वनि पद से भी प्रकाशित होती है तो उसका अवशिष्ट काव्यवाक्य से क्या सम्बन्ध रह जाता है ? उसी पद को काव्य मानने से क्या आपत्ति है क्यों अखण्ड वाक्य को ही काव्य कहा गया ?

यह तो बताया जा चुका है कि काव्य एक शरीर है और शब्द एवं अर्थ उसके अवयव हैं या शब्द एवं अर्थ काव्य के शरीर हैं तो जिस प्रकार शरीर में सौन्दर्य की प्रतीति विशेष प्रकार के सन्निवेश से युक्त समुदाय के द्वारा होती है फिर भी शरीर एक विशेष अवयव ऐसा प्रतीत होता है जिसके होने से सौन्दर्य की प्रतीति होती है और न होने से नहीं। एवं उस शरीर की सौन्दर्यकल्पना उसी अङ्ग के ही रूप में कर ली जाती है। इसी तरह काव्य में भी सौन्दर्य तो सम्पूर्ण वाक्य में ही होता है किन्तु उसमें किसी पद की उपस्थिति ही हेतु होती है। अतएव व्यञ्जकत्व होने के नाते पदों के लिए अगर ध्वनि शब्द का व्यवहार किया जाय तो कोई विरोध नहीं होना चाहिए।

इस प्रकरण का आशय है कि ध्वनि यद्यपि सम्पूर्ण वाक्य में रहकर भी उसी तरह पद से भी प्रकाशित होती है जैसे शरीर का सौन्दर्य सम्पूर्ण अवयव के योग में रह कर भी किसी एक अङ्ग से उसका प्रकाशन होता है। इसको यों भी समझ लिया जाय कि जैसे कामिनी का लावण्य सम्पूर्ण अवयवों के उचित विन्यास में ही है किन्तु उसका प्रकाशन विशेष कर वदन से उसमें भी आँख से होता है। उसी तरह ध्वनि का भी कोई खास एक पद से प्रकाशन होता है जैसे कि ऊपर उदाहरणों में देख लिया गया है।

और यह भी है कि पद स्मारक मात्र हो और उससे यदि सुन्दर व्यङ्ग्यार्थ का स्मरण हो तो उससे चारुत्व की प्रतीति हो ही जाती है।

ध्वन्या०— अनिष्टस्य श्रुतिर्यद्वदापादयति दुष्टताम्।
श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टश्रुतिर्गुणम्।।

लीला— इत्थं ध्वनेः पदप्रकाश्यतां संसाध्य सम्प्रति तत्समर्थकपरिकरश्लोकोद्धरणमुपक्रममाणः प्रथमं स्मारकेष्वपि पदेषु चारुत्वप्रतीत्यारोपणप्रक्रियामुदाहरणमुखेन प्रतिपादयति अनिष्टस्येत्यादिना— यद्वत् श्रुतिदुष्टादिशु अनिष्टस्य श्रुतिः दुष्टता व्यकतम् आपादयति तद्वत् इष्टस्मृतिः गुणम् आपादयति इति पदव्यवस्थां।

यद्वत्= यथा, श्रुतिदुष्टादिषु= श्रुतिदुष्टप्रभृतिदोषेषु, अनिष्टस्य= अहृद्यस्य, श्रुतिः= श्रवणं, दुष्टतां= वैरस्यतां, व्यक्तं= स्पष्टमेव आपादयति= विदधाति, तद्वत्= तथैव, इष्टस्मृतिः= इष्टस्याभीष्टस्य व्यङ्ग्यार्थस्य स्मृतिः स्मरणं, गुणं= चारुत्वोत्कर्षम्, आपादयति= साधयति इति।

अस्यायमाशयः— यथा श्रुंतिदुष्टानां शब्दानामसभ्यार्थ प्रति न वाचकत्वमपितु स्मारकत्वमव किन्तु तद्वशाच्चारु काव्यमेव दुष्ट भवति यद् अन्वयव्यतिरेकभाभ्यां भागेषु व्यवस्थाप्यते तथैव पदानामवाचकत्वेऽवि इष्टस्मृतिस्मारकत्वेनैव काव्ये चारुत्वमावाह्यते। तच्च चारुत्वमन्वयव्यतिरेकाभ्यां भागेषु व्यवस्थाप्यते इति। यदि किञ्चित्पदं चारुत्वं स्मारयति तदा : य चारुत्वप्रतीतिनिबन्धनं न कथमपि निवार्यत इतयाशयः।

इस प्रकार ध्वनि की पदप्रकाश्यता का उपपत्तिपूर्वक सिद्ध कर अब उसी के अवान्तर श्लोकों के उद्धरण का उपक्रम करते हुए पहले वाचक न होकर स्मारक बने भी पदों मे चारुत्व प्रतीति के आरोप की प्रक्रिया को उदाहरण पूर्वक उपस्थापन करते हैं—

जैसे श्रुतिदुष्ट आदि दोषों में अनिष्ट के स्मारक का श्रवण अचारुत्व का सम्पादन स्पष्ट रूप में कहता है उसी तरह इष्ट का स्मरण चारुत्व का सम्पादन करता है।

इसका आशय यह है कि जैसे श्रुतिदुष्ट पद असभ्य अर्थ के प्रति वाचक न हो कर स्मारक ही होते हैं और उन्हीं के चलते चारुत्वरूप काव्य श्रुतिदुष्ट होता है। वह श्रुतिदुष्टत्व अन्वय एवं व्यतिरेक से शेष भागों में व्यवस्थापित होता है उसी तरह पदों के अवाचक होने पर इष्ट के स्मारक होने के कारण चारुमय काव्य ग्राह्य हो जाता है और वह चारुत्व अन्वय एवं व्यतिरेक से भागों में व्यवस्थापित हो जाता है।

ध्वन्या०— पदानां स्मारकत्वेऽपि पदमात्रावभासिनः।
तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता।।

लीला— प्रकरणमुपसंहरति पदानामित्यादिना— तेन पदानां स्मारकत्वे

अपि पदमात्राविभासिनः ध्वनेः सर्वेषु एव प्रभेदेषु रम्यता अस्ति इति पदव्यवस्था।

तेन= इष्टस्मृतश्चारुत्वावाहकत्वेन हुतना, पदानां, स्मारकत्वे= स्मृतिमात्र? हेतुत्वे, अपि, पदमात्रावभासिनः= पदपकाशकस्यापि, ध्वनेः, सर्वेषु= निखिलेष्वेव प्रभेदेषु= प्रकारेषु, रम्यतां= रमणीयकता, अस्ति= व्याप्य तिष्ठति इति।

इष्टस्मृतेश्चारुत्वावाहकत्वेन हेतुना पदानां स्मृतिमात्रहेतुत्वेऽपि दपप्रकाशकस्य ध्वनेर्निखिलेष्वेव प्रकारेषु रमणीयकता विलसतीति।

प्रकरण का उपसंहार करते हैं—

इष्टस्मृति के चारुत्व के आवाहक होने से पदों के स्मृतिमात्र के हुत होने पर भी पद से प्रकाशित होने वाली भी ध्वनि के सभी प्रकारों में रमणीयकता विलसती है।

ध्वन्या०— विच्छित्तिशोभिनैकेन भूषणेनेव कामिनि।
पद्योत्येन सुकवेध्वनिना भाति भारतो।।

इति परिकरश्लोकाः

*लीला*— एवञ्च चारुत्वप्रतीतौ पदस्थान्वयव्यतिरेकौ दर्शयति विच्छित्तीथादिना— विच्छित्तिशोभिना एकेन भूषणेन कामिनी इव सुकवेः पदद्योत्येन ऽवणिव भारती भाति इति पदव्यवस्था।

विच्छितिशिोभिना= चमत्कारातिशययुतेन, एकंन= अनन्येन, एव भूषणेन= अलङ्कारेण, कामिनी= प्रमदा, इव=यथा, सुकवेः= सिद्धहस्तकाव्यशिल्पिनः, पदद्योत्येन= पदप्रकाश्येन, ध्वनिना= ध्वनितत्वेन, सुकवेः= सिद्धहस्तकाव्यशिल्पिनः= भारती= वाणी अर्थात् काव्यं, भाति= अतिशयेन शोभते इति।

यथा एकेनाऽपि सौन्दर्याधायकेनाभूषणेन, प्रमदायाः सौन्दर्यमुद्दीप्तं भवति तथैव सत्स्वपि अन्येषु भागेषु एकेनापि तत्परत्वेन पदेन प्रकाशितेन ध्वनिना सिद्धहस्तकाव्यशिल्पिनो वाणा नितरामेव रमणीयतामावहति इति अन्वयः तदभावे नैवेति व्यतिरेकः।

तदप्युपसंहरति इतीत्यादिना— इति= इत्थ— एतादृशाः, परिकरश्लोकाः= अवान्तरपद्यानि— पूर्वोस्थापितार्थसमर्थकवाक्यानीति।१।।

इसी तरह चारुत्व की प्रतीति में पद की अन्वयव्यतिरेक दिखाते हैं—

जैसे चमत्कारक एक ही आभूषण से प्रमदा का सौन्दर्य झलक उठता है उसी तरह एक ही भी पद से प्रकाशित ध्वनि से अच्छे कवि की वाणी सुशोभित हो जाती है। यह है अन्वय और वैसा न होने से नहीं, यह व्यतिरेक है।

इस तरह ये अवान्तरश्लोक है।१।।

ध्वन्या०— यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु।
वाक्ये संघटनायाञ्च स प्रबन्धेऽपि दीप्यते।। २।।

*लीला*— इत्थमविवक्षितवाच्यस्योभयोरेवप्रभेदयोर्विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमस्य च ध्वनेः पदवाक्यप्रकाश्यतां प्रपञ्च्य सम्प्रति तदसङ्गृहीतम-

संलक्ष्यक्रमव्यङ्ग्यं प्रपञ्चयितुमुपक्रमते यस्त्वित्यादिना— यः तु अलक्ष्यक्रम-व्यङ्ग्यः ध्वनिः सः वर्णपदादिषु वाक्ये सङ्घटनायां च प्रबन्धे अपि दीप्यत इति पदव्यवस्था।

यः= यादृशः, तु= पूर्वोक्तभेदेभ्यो विशिष्टः, अलक्ष्यक्रमव्यङ्ग्यः= अलक्ष्योऽप्रत्येयः, क्रमः द्योतनपौर्वापर्य यस्य तादृशो यो व्यङ्ग्यः प्रतीयमानः तादृशः ध्वनिः= अत्र रसदिरर्थः, सः, वर्णपदादिषु= वर्णाः कखगादयः, पदं वर्णसमुदाय आदिपदात् पदैकदेशपदद्वितयादीनि च तेषु, वाक्ये= पूर्णार्थकपदसमुदाये, सङ्घटनायां= पदवाक्यमतसन्निवेशे, च, प्रबन्धे= सङ्घटितवाक्यसमुदाये अपि, दीप्यते= सकलकाव्यावभासकतया द्योतत इति।

पूर्वोक्तध्वनिप्रकारविलक्षणो योऽसंलक्ष्यद्योतनक्रमव्यङ्ग्यो ध्वनिः स तु वर्ण पद वाक्यसंघटनप्रबन्धादिषु सकलकाव्यावभासकत्वेन द्योतत इति।। २।।

इस प्रकार अविवक्षितवाच्य के दोनों भेद एवं अविवक्षितवाच्य के संलक्ष्यक्रमव्यङ्ग्य ध्वनि के पदवाक्यप्रकाशता का उपपत्ति पूर्वक निरूपण कर अब उसमें असङ्गृहीत अलक्ष्यक्रमव्यङ्ग्य का प्रपञ्चन करते हैं—

जो यह पूर्वोक्त ध्वनि के प्रकार से भी विलक्षण असंलक्ष्यक्रमव्यङ्ग्य ध्वनि है वह वर्ण, पद, पदैकदेश, वाक्य, सङ्घटना, प्रबन्ध आदि में सम्पूर्ण काव्य के ही अवभासक होकर द्योतित होती है।।२।।

ध्वन्या०— तत्र वर्णानामनर्थकत्वाद द्योतकत्वमसम्भवोत्या— शङ्-क्येदमुच्यते—

शषौ सरेफसंयोगो टकारश्चापि भूयसा।
विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युतः।। ३।।
त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा।
तदा तं दोपयन्त्येव तेन वर्णा रसच्युतः।। ४।।

श्लोकद्वयेनान्वयव्यतिरेकाभ्यां वर्णानां द्योतकत्वं दर्शितं भवति।

लीला— वर्णानां रसद्योतकत्वप्रतिपादिकां कारिकामवतारयन् वृत्तिकारस्तद्भूमिकां निबध्नाति तत्रेत्यादिना— तत्र= वर्णादिषु ध्वनिप्रकाशकत्वेन कथितेषु, वर्णानां= अक्षराणां, अनर्थकत्वात्= अर्थहीनत्वात्, तेषां द्योतकत्वं= ध्वनिप्रकाशकत्वं, असम्भवि= अघटनीयं, इति= इत्थं, आशङ्क्य= आशङ्कां सम्भाव्य तन्निरासाय, इदं= वक्ष्यमाणवचनम्, उच्यते= कथ्यते इति।

अस्यायमाशयः—ननु रसप्रतीतौ तु प्रतीयमानबिभावादीनामेव कारणता सर्वत्र प्रतिपादिता। तादृशविभावादिप्रतीयमानरसादीनां प्रतीतौ निरर्थकवर्णानां कथमुपयोग इति सम्भाव्याशङ्कानिरासायेदमुच्यत इति।

कारिकायुगलमवतारयति- 'शषौ' इत्यादिना— शृङ्गारे भूयसा शषौ सरेफु

संयोगः च ढकारः अपि विरोधिनः स्युः ते वर्णाः न रसश्चतुः वा तेन वर्णा रसच्युतः यदा त एव तु बीभत्सादौ रसे निवेश्यन्ते तदा तं दीपयन्ति एवं तेन वर्णाः रसश्युता वा ते वर्णाः न रसच्युतः इति पदव्यवस्था।

शृङ्गारे= रतिस्थायिभावात्मकरसे, भूयसा= बाहुल्येन, इदं प्रत्येकमभिसम्बध्यते सङ्केतयति क्वाचित्कप्रयोगो न दोषायेति, शषौ= शकारषकारौ, सरेफसंयोगः= वर्णानां रेपप्रधानः संयोगो यथा कर्द्दर्ह्र इत्यादिः, च, ढकारः= प्रायेण रेफसंयुक्तो ढवर्णः अपि— अत्र केचित्तु मूल एव 'सरेफसंयोगः' इतीदं 'सरेफसंयोगौ' इति पठित्वा 'सरेफसंयोगौ शषौ' इति पदव्यवस्थां कुर्वन्ति किन्तु तन्नोपयुक्तं प्रतिभाति यतः वर्णोल्लेखेऽय पुरुषा वृत्तिं निर्दिशति। तल्लक्षणञ्च यथोक्तं भट्टोद्भटेन— शषभ्यारेफसंयोगैः टवर्गेण च योजिता। पुरुषा नाम वृत्तिः स्यात्' इति। तेनात्र शषौ रेफप्रधानसंयोगवर्णा इत्येव समीचीन तत्पाठान्तरं तु विद्वत्ताधिक्यपरिचायकमेव। एवमेव 'ढकारः' इत्यस्य स्थाने केचित् टकार इति पठन्ति अपरे तु टवर्गश्चापि' इत्यपि। तत्तु भट्टोद्भटस्याप्यानुकूल्येन समीचीनमेव प्रतिभाति तथापि कारिकाकारस्य ढकार इत्येव पाठः सम्वत इति वय तथैव गृह्णीम इति। विरोधिनः= रसप्रतीत्यवरोधकाः, स्युः= भवेयुः, ते= तादृशाः, वर्णाः= शषादयः, न= नैव, रसश्च्युतः= रसाश्च्योतन्ति स्रवन्ति इति— श्च्युतिर् क्षरणे (भ्वाः पः अक०। सेचने सक०) धातोः क्विबन्तरूपम्, न रसद्योतका इतयाशयः, पक्षे तेन= तेन, हेतुना, वर्णाः= शषादयः, रसच्युतः= रसाच्छृङ्गारा च्यवन्ते दूरं गच्छन्तीति च्युङ्गतौ (भ्वाः अ० सक०) धातोः क्विपि तुकागमः, तं न व्यञ्जयन्तीति भावः। इति व्यतिरेकः। यदा, ते= तादृशाः शषादयो वर्णाः, एव= नान्ये, तु= इति पूर्वोक्तप्रातिकूल्येन, बीभत्सादौ= बीभत्सः जुगुप्सास्थायिभावात्मकः आदिपदात् क्रोधेत्साहस्थायिभावात्मनोः रौद्रवीरयोरपि ग्रहण, रसे निवेश्यन्ते= ग्रथ्यन्ते, तदा, तं= बीभत्सादिक रस, दीपयन्ति= द्योतयन्ति, एव= इत्यवधारणे न तत्र कोऽपि शङ्केति, तेन= तेन हुतना, वर्णाः= शषादयः, रसश्च्युतः= रसाश्च्योतन्ति स्रवन्तिइति-रसोद्दीपकाः पक्ष ते= तादृशाः, वर्णाः, न नैव रसच्युतः= रसव्यञ्जका इति अन्वयः।

तत्र घटितार्थ श्लोकेत्यादिना— अत्र, श्लोकद्वयेन= उपर्युक्तश्लोकयुगलेन- यथासङ्ख्यप्रसङ्गोः न आपतेदिति श्लोकाभ्यामिति नोक्त भवेत्, अन्वयव्यतिरेकाभ्यां= तद्भावे तद्भावस्तदभावे तदभाव इति ताभ्यां, वर्णानां द्योतकत्वं= ध्वनिप्रकाशकत्वं, दर्शितं= दृष्टान्तित भवति इति। अत्र कारिकाकारेण तु व्यतिरेकमुखोऽन्वय एक प्रदर्शितः किन्तु वृत्तिकारेण अन्वयपूर्वको व्यतिरेक इति शैलीमनुसर्तुं पूर्वमन्वय उपात्त इति लोचने स्पष्टम्। वस्तुतस्तु पूर्वेण व्यतिरेको द्वितीयेन अन्वय उक्तः। तच्च यथा— शृङ्गारे तत्समानप्रकृतिके करुणे शान्ते च,

शषादिप्रयोगो न सुकवित्वायेति निर्देशस्य पूर्व व्यतिरेक उक्तः। न च सर्वथा न कर्तव्योऽपितु बीभत्सप्रकृतिके रसादौ तु कर्तव्य एवेति पश्चादन्वयः, इति।

प्रकरणस्यास्यायमाशयः— ननु रसादिस्तु विभावादिप्रत्येयः वर्णास्तु निरर्थका एव भवन्ति। तत्कथं विभावादिप्रत्येयानां रसानां निरर्थकवर्णैः प्रतीतिर्भवितुमर्हति यतो वर्णानां रसप्रकाशकत्वमुक्तमिति पूर्वपक्षः। तत्रेदमुच्यते यद्वर्णानां रसोत्पत्तिं प्रति कारणत्वं तु सर्वथा नैवोक्तमेव। रसोत्पत्तिं प्रति तु विभावादीनामेव हेतुत्वं किन्तु वर्णानामपि तदास्वादे सहकारिता तु घटत्येव यतो 'वर्णपदादिषु इतयादौ निर्मित्तसप्तमी स्वीकृता न तु आधारा। अर्थात् यद्यपि रसस्वादेः विभावानुभाव्यभि-चारिप्रतीतिसम्पदेव निबन्धनं तथापि विशिष्टश्रुतिकशब्दसमर्थ— माणास्ते विभाव-दयस्तथाशक्ता भवन्तीत्यतो वर्णानां रसप्रकाशेन सहकारितोरीकृता। न तु वर्गैरेव रसाभिव्यक्तिः सा तु विभावादिसंयोगादेवेति सिद्धमेव। यदि वर्णानां रसास्वादने सहाकारिताऽपि न स्यात्तदा तेषां प्रयोगे तत्र तत्र न किमपि व्यवहितं वा समर्थितं न स्यात्किन्तु प्रयोगे तु तदिपरीतमेव दृश्यते। यथा शृङ्गारादौ श-ष-रेफप्रध ानसंयोग—ढकारादीनां बाहुल्येन प्रयोगस्तद्व्यवधानाय भवति किन्तु तेषामेव बीभत्सादौ प्रयोगस्तत्समर्थनाय भवति इति वर्णानामपि रसप्रकाशने सहकारित्वं तु सिद्धमेव। नैव च सर्वेषामेव वर्णानामर्थरहितत्वमेव प्रतिपादितमस्ति ग्रन्थेषु। तत्रापि श्रूयमाणा वर्णा अर्थतत्वमनपेक्ष्यैव रसास्वादने सहकारिणो भवन्ति कोमलवर्णा शृङ्गारादेः परुवर्णा बीभत्सादेरिति। यथाऽपदगीतध्वनयः इतरतत्वम-नपेक्ष्यैव रवप्रत्यायका भवन्ति तथैव वर्णा अपि। एवमेव कोमलवर्णानां शृङ्गारादिप्रतीतेः कठोराणां बीभत्सादिप्रतीतेश्च अन्वयव्यतिरेकसम्बन्धभावोऽपि वर्णानां रसव्यञ्जकता प्रति सहकारित्वे हेतुरिति।

कारिका में 'वर्ण' आदि में अलक्ष्यक्रमव्यङ्ग्य ध्वनि दीपित होता है' कहा गया है। वर्ण तो निरर्थक होते हैं, फिर उनसे रस का द्योतन कैसे ? इस आशङ्का के उत्तर में उसके समाधायक कारिका के अवतरण हेतु उसकी पृष्टभूमि बताते हैं—

'उनमें से वर्णों के अनर्थक होने से उनका द्योतकत्व कैसे सम्भव है' ऐसी आशङ्का कर यह कहा जाता है—

कारिका का अवतरण करते हैं—

शृङ्गार रस में शकार, षकार, रकार से वा रेफ से संयुक्त वर्ण जैसे र्क्र, र्ह, र्द्र आदि, ढकार आदि जो हैं वे विरोधी होते हैं अतः वे शृङ्गार रस का क्षरण नहीं करते अथवा ये शृङ्गार के व्यञ्जक नहीं होते और वे ही वर्ण यदि बीभत्स आदि रस में रखे जायें तो रस का उद्दीपन करने वाले होते हैं, अतः वर्ण रस के प्रकाशक होते हैं।।३-४।।

इसमें घटित अर्थ का निर्देश करते हैं—

यहाँ दो कारिकाओं से अन्वय एवं व्यतिरेक से वर्णों का द्योतकत्व दिखाया हुआ होता है।

इस कथन का आशय यह है कि वर्णों की उपस्थिति से रसास्वाद में प्रभाव पड़ता ही है। जैसे श, प, र्क, र्ह, र्द्र, ढ, आदि वर्ण शृङ्गार के व्यवधायक होते हैं तो वे ही बीभत्स आदि के उद्दीपक होते हैं। अतः वर्ण निरर्थक होते हुए भी रस के प्रकाशन में सहकारी होते हैं जैसे बिना पद की ध्वनि रसाभि व्यञ्जन में सहायक होती है। वैसे रस विभावादि के संयोग से प्रतीत होते हैं फिर भी उसके वर्णों की सहाकरति को भी इनकार नहीं किया जा सकता है।।३-४।।

ध्वन्या० पदे चालक्ष्यक्रमस्य द्योतनं यथा-

उत्कम्पिनी भायपरिस्खलितांशुकान्ता ते लोचने प्रतिदिशं विधुरे क्षिपन्ती।
क्रूरेण दारुणतया सहसैव दग्धा धूमान्धितेन दहनेन न वीक्षितासि।।

अत्र हि ते इत्येतत्पदं रसमयत्वेन स्फुटमेवावभासते सहृदयानाम्।

लीला– इत्थं वर्णानां रसप्रकाशकत्वमुपपत्तिपूर्वकं सम्पाद्य सम्प्रति वृत्तिकारः पद रसादिद्योतेनमुदाहर्तु मुपक्रमते पद इत्यादिना– पदे= सार्थकवर्णसमूहे, अलक्ष्यक्रमव्यङ्ग्यस्य, द्योतनं= प्रकाशनं, यथा= इति वक्ष्यमाणपद्ये।

तदेवोदाहरति उत्कम्पिनीत्यादिना– उत्कम्पिनी, भ्यपरिस्खलितांशुकान्ता विधुरे ते लोचने प्रतिदिशं क्षिपन्ति, क्रूरेण दहनेन दारुणतया सहसा एवं दग्धा धूमान्धितेन न वीक्षिता असि इति पदव्यवस्था। उत्कम्पिनी= सञ्जातकम्पा, भयपरिस्खलितांशुकान्ता= भयेन् भीत्या परिस्खलितः= परिभ्रष्टः अंशुकस्य परिधानस्य अन्तः प्रान्तो यस्या सा, विधुरे= विकले रक्षोपायाभावात्, ते= मदनुभूते सौन्दर्यातिशयशालिनी, लोचने= नपयने, क्षिप्रन्ती= इतस्ततः सञ्चारयन्ती– कश्चिद्रक्षको दृश्येतेत्याशयेन, भवती, क्रूरेण= निष्ठुरेण, दहनेन= वह्निना, दारुणतया= निष्करुणत्वेन, सहसा= अकस्मादेव दग्धा= भस्मीकृता, धूमान्धितेन= तर्यु पहतदृष्टिना, न वीक्षितां= दृष्टाः, असि इति। वासवदत्तादाहश्रवणप्रबृद्ध-शोकावर्णस्योदयनस्य परिदेविनवचनमिदम्। तत्र घटितार्थं निर्दिशति– अत्रेत्यादिना– अत्र= पद्येऽस्मिन्, हि, 'ते' इति एतत्पदं, रसमयत्वेन= करुणरसाप्लुतन्वेन, सहृदयानां, रसिकानां, स्फुटं,= सुखवसंवेद्यत्वेन एव= न तु कष्टप्रत्येयत्वेन अवभासते= द्योतत् इति।

अत्रेदं तात्पर्यम्– यथा वर्णा रसप्रतीतौ निमितत्वेन। सहकारितया मता न तु कारणत्वेन तथैव पदान्यपि विभावादिप्रतीतानां रसानां द्योतनत्वे सहकारीणि भवन्त्येव। यथोक्तपद्ये 'ते' इति पदम्। यद्यपि इह तस्या भ्रूक्षेपादयो ये पूर्वं रतिविभावनामवलम्बन्ते स्म किन्त्विदानीं नितान्तविनष्टाः सन्तः स्मृतिगोचरतया करुणमुद्दीपयन्ति तथापि 'ते' लोचने, इत्यत्र 'ते' इति पदं तन्नयनगतस्व-संवेद्यानिर्वचनीयगुणस्मरणहेतुभूतं करुणस्यासाधारणनिमित्तत्वं प्राप्तमिति पदस्य ध्वनिप्रकाशकत्वम्। अत्र इष्टनाशादनिष्टाप्तेश्च करुणो रसो यत्र भयेनोरकम्पि-

त्वोत्प्रेक्षणं विभावः तादृशयोरपि लोचनयोर्विधुरत्वोत्प्रेक्षणमुद्दीपतं, स्मर्यमाणं तदीयसौन्दर्यमपि शोकाधिक्यस्याश्रय एव। सर्वोपरित्वेन 'ते' इत्यस्य सातिशय-विभ्रमैकायतने नयनेऽपि विधुरे सञ्जाते इति सुतरां शोकस्योद्दीपकत्वमिति।

इस प्रकार वर्णो में ध्वनि की द्योत्यता का प्रतिपादन कर अब पदों में ध्वनि की प्रकाश्यता का उदाहरण प्रस्तुत करने का उपक्रम करते हैं—

पद में असंलक्ष्यक्रमव्यङ्ग्य का प्रकाशन जैसे—

भय से काँपती, त्रास से व्यस्त हो गए हैं परिधान जिसके ऐसी उन नयनों से शून्य होकर चारों ओर दूखती, तुम क्रूर अग्नि ने निष्करुण होकर अकस्मात् जलाई गयी और धुयें से ढके होने के कारण देखी न गई हो।

इसमें घटित अर्थ का निर्देश करते हैं—

यहाँ 'उन' यह पद जो है रसमय रूप में स्पष्टतः सहृदयों के हृदय में अवभासित होता है।

इसका आशय यह है कि यहाँ करुण रस का उद्बोधन है और भय से काँपने की उत्प्रेक्षा जो है वह उसका विभाव है लेकिन 'उन' पद उसके आँखों में रहे अपने से अनुभूत लेकिन अनिर्वचनीय गुणों की स्मृति के द्योतक होने से रस के असाधारण निमित्त के रूप में ही हैं। अतः उसमें ध्वनि के प्रकाशन की क्षमता है।

ध्वन्या०— पदावयवेन द्योतनं यथा— व्रीडायोगान्नतवदनया सन्निधाने गुरूणाम्।

> बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य।
> तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य वाष्पं
> मय्यासक्तश्चकितहरिणोहारिनेत्रत्रिभागः।।

ध्वन्या०— इत्यत्र त्रिभागशब्दः।

लीला— एवं पदेऽलक्ष्यक्रमव्यङ्ग्यद्योतनत्वमुदाहृत्सय सम्प्रति पदावयवेन द्योतनमुदाहर्तुमुपक्रमते पदेत्यादिना- पदावयवेन= पदस्य अवयवोऽङ्गं तेन, यथा= इति वक्ष्यमाणपद्ये।

तदुदाहरति व्रीडायोगोदित्यादिना— गुरूणां सन्निधाने व्रीडायोगात् नतवदनया तथा कुचकलशयोः बद्धोत्कम्पं मन्युम् अन्तः निगृह्य वाष्पं समुत्सृज्य चकित-हरिणीहारिनेत्रत्रिभागः मयि आसक्तः किं तिष्ठ इति न उक्तम् इव इति पदव्यवस्था।

गुरुणां= मान्यजनानां, सन्निधाने= समीपे, ब्रीडायोगात्= लज्जावशात्, नतवदनया= नम्रीकृतमुख्या, तया= प्रेयस्या, कुच कलशयोः= स्तनघटयोः, बद्धोत्कम्प= बद्धः कृत उत्कम्पः— कम्पो येन तं मन्युं= शोकं, अन्तः= आभ्यन्तर एव, निगृह्य= निरुध्य, वाष्पं= अश्रुं, समुत्सृज्यं= सन्त्यज्य, मयि= प्रवासपरायणे प्रिये, चकितहरिणीहारिनेत्रत्रिभागः= चकिता त्रस्ता या हरिणी मृगी तस्या इव हारि आकर्षकं यन्नेत्रं नयनं तस्य त्रिभागस्तृतीयो भागः, आसक्तः= संयोजितः,

तत्, किं= इति तर्के, तिष्ठ= मा गाः इति= इत्थं, न, उक्तं= कथितम् इव= इत्युत्प्रेक्षाऽपि तु कथितमेवेति।

तत्र घटितमर्थं विवृणोति इतीत्यादिना— इति= इत्थं, अत्र= पद्येऽस्मिन्, त्रिभागशब्दः= त्रिभाग इति पदाङ्गभूतशब्दः ध्वनेः प्रकाश इति।

अत्रेदमवधेयं यदत्र विप्रलम्भशृङ्गारो रसः। स च नायिकायाः स्मृतिरूपालम्बनेन विभावितः तस्यांश्च विलाकनस्मृत्याऽनुभावितः वाष्पयोचनादिस्मृत्या सञ्चारितोः रतिस्थायिभावः परां कोटिमधिरोहतीति स्फुट एव। तत्रापि तस्याः साभिलाषदैन्यमन्युमन्थरं यद्विलोकनं तस्य स्मरणेन त्रिभागशब्दोपस्थितिहेतोः रसोद्दीपनं स्फुटं भातीति।

इस प्रकार ध्वनि की पद के उपस्थिति के कारण प्रकाश्यता का उदाहरण देकर अब पद के अवयव के द्वारा ध्वनि के प्रकाशन का उदाहरण देने का उपक्रम करते हैं—

पद के अवयव से ध्वनि का द्योतन जैसे—

गुरुजन के सामने होने से लाज से वदन को नीचे किए हुए उसने स्तनों से कम्पन पैदा करने वाले शोक को भीतर ही दबाकर आँसू बहाते हुए जो चकित हरिणी के जैसे मनोहर नेत्र का त्रिभाग अर्थात् तिरछी चितवन मेरे ऊपर फेंका, क्या उसने मत जाओ ऐसा नहीं कहा— अवश्य कहा।

इसमें घटित अर्थ का निर्देश करते हैं।

इसमें त्रिभाग, शब्द (ध्वनि का प्रकाशक है)

कहने का आशय यह है कि यहाँ विप्रलम्भ शृङ्गार रस है और वह नायिका के स्मरण से विभावित, उसके इशारे आदि के स्मरण से अनुभावित वाष्पमोचन आदि की स्मृति से परिपोषित है फिर भी जो उसने नेत्र का त्रिभाग फेंका उसकी स्मृति ही रस के उद्दीपक के रूप में है। और यह त्रिभाग शब्द स्वयं पद होकर भी यहाँ समस्त पद के अङ्ग के रूप में होने से पदावयव है और उसी नाते ध्वनि का प्रकाशक है।

ध्वन्या०— वाक्यरूपश्चालक्ष्यक्रमध्वनिः शुद्धोलङ्कारसङ्कीर्णश्चेति द्विधा मतः। तत्र शुद्धस्योदाहरणं यथा रामाभ्युदये— 'कृतककुपितैः'' इत्यादिश्लोकः। एतद्धि वाक्यं परस्परानुरागं परिपोषप्राप्तं प्रदर्शयत् सर्वत एव परं रसतत्त्वं प्रकाशयति।

लीला— इत्थं पदावयवेन ध्वनेः प्रकाश्यतामुदाहृत्य सम्प्रति वाक्यप्रकाश्यध्वनिमुदाहर्तुमुपक्रमते वाक्येत्यादिना— वाक्यरूपः= वाक्यस्वरूपो वाक्येन प्रकाश्य, अलक्ष्यक्रमव्यङ्ग्यः, ध्वनिः, शुद्धः= अलङ्कारादिनाऽसम्मिश्रः, अलङ्कारसङ्कीर्णः= अलङ्कारमिश्रश्च, इति द्विधा= द्विप्रकारकः, मतः= सम्मत इति।

अत्र वाक्यरूप इत्यस्यायमेवाभिप्रायो यद्ध्वनेर्वर्णादीनां नु निमित्तत्वमात्रमेव वाक्यं तु ध्वनेर्न वर्णादिवन्निमित्तमात्रेणोपकारि किन्तु समग्रविभावादिप्रतिपत्ति व्यापृतत्वाद्रसादिभयमेवेति निर्देशाय।

तत्र शुद्धं प्रथममुदाहर्तु मुपक्रमते तत्रेत्यादिना— तत्र= द्वयोर्भेदयोः, शुद्धस्य= अलङ्कारादिनाऽसम्मिश्रस्य, उदाहरणं= निदर्शनं, यथा, रामाभ्युदये= तदाख्ये काव्ये- कृतककुपितैः' इत्यादि श्लोकः स चेत्थं—

कृतककुपितैर्वाष्पाम्भोभिः सदैन्यविलोकितै
र्वनमपि गता यस्य प्रीत्या धृताऽपि तथाम्बया।
नवजलधरश्यामाः पश्यन्दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः।

हे प्रिये ! कृतककुपितैः वाष्पाम्भोभिः सदैन्यविलोकितैः अपि अम्बया तथा धृता अपि यस्य प्रीत्या वनं गतो कठिनहृदयः स तव प्रियः नवजलधरश्यामाः दिशः पश्यन् अपि भवतीं विना जीवति एवेति पदव्यवस्था।

हे प्रिये= हे प्रेयसी ! कृतककुपितैः= कृत्रिमक्रोधैः, वाष्पाम्भोभिः= अश्रुजलैः सादैन्यविलोकितैः= सखेदावलोकनै अपि= तैस्तैरुपायैः, अम्बया= मात्रा, तथा= सर्वोपायेन, धृता= निरोधिता, अपि, यस्य, प्रीत्या= प्रेम्णा, वनमपि= कण्टकाकीर्णं काननमपि, याता= गता, कठिनहृदयः— कठोरचेताः, सः, तव= भवत्याः,प्रियः= बल्लभः, नवजलधरश्यामाः= नूतनवारिवाहकृष्णाः, दिशः= हरितः, पश्यन्= विलोकयन्, अपि, भवतीं= स्नेहमयीं त्वां, विना, अपि एकाकी एव, जीवति= प्राणिति एवेति।

तत्र घटितार्थं निर्दिशति एतदित्यादिना— एतत्= पूर्वोक्तं, वाक्यं= पूर्णार्थप- दसमूहः, परिपोषप्राप्तं= सर्वत एवं पुष्टं, परस्परानुरागं= अन्योन्यस्नेहं प्रदर्शयत्= प्रकाशयत्, सर्वत एव= सम्पूर्णत्वेनैव, रसतत्वं= विप्रलम्भशृङ्गारं परं= नितान्तमेव, प्रकाशयति= प्रकाशयति= प्रकटयति वा परं रसतत्वं प्रकाशयति इति।

अस्यायमाशयः— मात्रा तथां निवारिताऽपि स्नेहवशात्त्वं वनमेव दाता अहं तु सम्प्रति नवजलधरश्यामा दिशस्त्वां विनैव विलोकयन् जीवामीति किमतः परं मे कठोरहृदयत्वस्य प्रमाणमिति परस्परसम्बद्धो रतिस्थायिभाव उक्तः (नवजलधराणां विप्रलम्भोद्दीपनंत्वमुक्तम्। तेन नावान्यतमस्य पदस्याधिकं किञ्चिद्रसव्यक्तिहेतुत्वमिति अयं वाक्यरूपस्यासंलक्ष्यक्रम— व्यङ्ग्यध्वनेरुदाह- रणमेतत्। अत्र न कश्चिदप्यलङ्कारस्यच्छायेति शुद्धस्योदाहरणमिदम्।

पद एवं पदावयव के ध्वनि के प्रकाशक में निमित्तत्व का उदाहरण देकर अब वाक्यरूप ध्वनि का उदाहरण देने का उपक्रम करते हैं—

वाक्यरूप असंलक्ष्यक्रमध्वनि दो प्रकार का होता है— शुद्ध एवं अलङ्कारसम्मिश्र।

उसमें शुद्ध का उदाहरण जैसे रामाभ्युदय काव्य में 'कृतककुपितैः इत्यादि श्लोक।

जैसे—

माता ने बनावटी कोप, आँशुओं की धारा, खेद के साथ देखना आदि आदि

उपायों से रोकने पर भी जिसके प्रेम से तम वन भी चली गई वह कठोर हृदय वाला तुम्हारा प्रेमी नये बादल से ढकी हुई दिशाओं को देखता हुआ भी तुम्हारे बिना जीता ही है।

उदाहरण में घटित अर्थ का निर्देश करते हैं—

यह वाक्य परस्पर के परिपोष प्राप्त अनुराग का प्रदर्शन करता हुआ सम्पूर्ण भाव से विप्रलम्भ शृङ्गार रस का अत्यन्त प्रकाशन करता है।

कहने का आशय यह है कि यहाँ विप्रलम्भ शृङ्गार के लिए जो आवश्यक है वह—सम्पूर्णत उपस्थित है अर्थात् उसके लिए और किसी पद का अधिक हेतुत्व अपेक्षित नहीं है। हे प्रिये और तुम्हारा प्रेमी' इन से परस्पर का अनुरागातिशयरूप रतिस्थायिभाव कहा गया है और बादल से दिशाओं का ढका जाना उद्दीपन हैं अतः यह वाक्यरूप असंलक्ष्यक्रमव्यङ्ग्यध्वनि का उदाहरण है।

यहाँ यह भी ध्यान देना आवश्यक है कि वर्ण पद आदि तो ध्वनि के प्रकाशन के निमित्त होते हैं लेकिन वाक्य निमित्तमात्र न होकर समग्र विभावादि की प्रतिपत्ति का कारण ही होता है अतः वाक्य के होने पर इस प्रकार निमित्तमात्र का निर्देश न कर वाक्यरूप ही कहा गया है।

यहाँ किसी अलङ्कार की छाया न होने से शुद्ध भेद का उदाहरण है यह।

ध्वन्या०— अलङ्कारान्तरसङ्कीर्णो यथा— 'स्मरनवनदीपूरेणोढाः इत्यादि श्लोकः। अत्र हि रूपकेण यथोक्तव्यञ्जकानुगतेन प्रसाधितो रसः सुतराम-भिव्यज्यते।

लीला— एवं वाक्यरूपध्वनेः शुद्धभेदमुदाहृत्य सम्प्रति तस्यालङ्कारसम्मि-श्रभेदोदाहरणायोपक्रमते अलङ्कारेत्यादिना— अलङ्कारान्तरसङ्कीर्णः= अलङ्कारा-न्तरेण= अन्येनार्थालङ्कारेण सङ्कीर्णः समिश्रः यथा= इति निदर्शने, स्मरनवनदी-पूरेणोढाः' इत्यादिश्लोकः। यथा

स्मरनवनदीपूरेणोढाः पुनर्गुरुसेतुभिः—

वदपि विधृतास्तिष्ठन्त्यारादपूर्णमनोरथाः।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखाः
नयननलिननीनालानीतं पिबन्ति रसं प्रियाः।

स्मरनवनदीपूरेणोढाः= स्मरः काम एव या नवा नदी तस्याः पूरः प्रवाहस्तेन ऊढ़ा स्वत एव परस्परसाम्मुख्यं प्रापिताः यदपि, पुनः= तथासत्वेऽपि, गुरुसेतुभिः= गुरव एव ऐतवो वारकास्तैः, विधृताः= निरुद्धाः, अत एव अपूर्णमनोरथाः= अतृप्तेच्छा, प्रियाः= प्रियाश्च प्रियाश्च ते— प्रमिकाःप्रेयांसश्च, आरात्= दूरे एव, तिष्ठन्ति= कृतासना भवन्ति तदपि= तथापि, लिखितप्रख्यैः= आलेख्यसदृशैः, अङ्गैः= अवयवैः, परस्परं= अन्योन्यं, उन्मुखाः= सम्मुखाः, सन्तः, नयननलिनी-नालानीतं= नयनानि नेत्राणि एव नलिन्याः कमलिन्याः नालानि वृन्तानि तैरानीतं प्रापितं, रसं= विप्रलम्भत्वं, पिबन्ति= आस्वादयन्ति इति।

तत्र घटितार्थं निर्दिशति अत्रेत्यादिना— अत्र= अस्मिन् काव्ये, यथोक्तव्यञ्ज-कक्षानुगतेन= यथोक्तविवक्षातत्परत्वेन नातिनिर्वहैषिता इति रूप यद्व्यञ्जकस्य प्रकाशकस्य लक्षणं तेन अनुगतेन अनुरूपेण, रूपकेण= रूपकालङ्कारेण, प्रसा-धित:= प्रकर्षतामानीत:, रस:= विप्रलम्भशृङ्गाररस:, सतुरां= अतिशयेन अभिव्य-ज्यते= ध्वन्यत इति।

अस्यायमाशय:— स्मर एव नवनदीपुर: गुरव एव सेतव: नयनान्येव नलि-नीनालानि इत्यादौ उपमानोपमेययोरभेदेन रूपकालङ्कार:। यथोक्तलक्षणञ्चवि-वक्षातत्परत्वेन नातिनिर्वहैषिता इत्यनुरूपं तेन च विभावादिभूषणहारेण रसोऽपि प्रसाधित एवात्र विप्रलम्भशृङ्गारो यस्य प्रेमिकाप्रेयासौ परस्परमालम्बनं कामभाव उद्दीपनं परस्परमुन्मुखीभवनमनुभाव: परस्परौत्सुक्याद्या व्यभिचारिणस्तैश्च संयोजितो नयननलिनीनालातीतरसपानरूपरतिस्थायिभावात्मक इति।

केचिदत्र, हंसचक्रवाकादिरूपेण नायकयोरूपितत्वाद्रूपकमनिर्व्यूढमेव मन्यन्ते किन्तु ते विस्मरन्ति यद्रसाङ्गत्वेनालङ्कारस्य प्रयोगस्तु रसपरकत्वेन भवति। तस्या-तिनिर्वहणैषिता तु अलङ्कारस्यैव पोषणाय भवति न तु रसप्रसाधनायेति।।४।।

अब अलङ्कारान्तरणसङ्कीर्ण वाक्यरूप ध्वनि का उदाहरण देने का उपक्रम करते हैं—

'अलङ्कारान्तरसङ्कीर्ण' जैसे—'स्मरनवनदीपूरेणोढ़ा' इत्यादि श्लोक।

कामदेवरूपी नयी नदी के प्रवाह के द्वारा बहा कर लाए हुए गुरुजन रूपी बाँध के द्वारा रोके गए अतएव अपूर्ण मनोरथ वाले जो प्रेमी कुछ दूर ही बैठे हुए हैं वे चित्त में आलिखित जैसे अङ्गों के द्वारा परस्पर उन्मुख होकर नयन रूपी नलिनी की नाल से लाए हुए रस का पान करते हैं'

इसमें घटित अर्थ का निर्देश करते हैं—

यहाँ बताए गए व्यञ्जक के लक्षण के अनुकूल रूपक से प्रसाधित रस सम्पूर्ण रूप से अभिव्यक्त होता है।

इसका आशय यह है कि कामदेव में नवनदीप्रवाह का गुरुजनों में सेतु का, नयनों में नलिनीनाल का आरोप करने का उपमान एवं उपमेय में अभेदकथन के कारण रूपक है और उसका निबन्ध इसी तरह हुआ है कि उसमें विभावादिभूषण के द्वारा विप्रलम्भ शृङ्गार रस भी पूरी तरह प्रसाधित है। अत: यह वाक्यरूप असंलक्ष्यक्रमव्यङ्ग्य ध्वनि के अलङ्कारान्तरसंमिश्र भेद का उदाहरण है।।४।।

ध्वन्या०— अलक्ष्यक्रमव्यङ्ग्य: सङ्घटनायां भासते ध्वनिरित्युक्तं तत्र सङ्घटनास्वरूपमेव तावन्निरूप्यते—

कारिका— असमासा समासेन मध्यमेन च भूषिता।
तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता।। ५।।

कैश्चित्—

लीला— इत्थं वाक्यरूपासंलक्ष्यक्रमव्यङ्ग्यध्वनिं निरूप्य सोदाहरणं सम्प्रति सङ्घट्टनास्वरूपं निर्धारककारिकावतारणायोपक्रमते अलक्ष्येत्यादिना— अलक्ष्यक्रमव्यङ्ग्यः ध्वनिः सङ्घटनायां भासते= द्योतते, इति, उक्तं, तत्र= तत्प्रसङ्गे, सङ्घटनास्वरूपं= पदगता वाक्यगता या संयोजना तस्याः स्वरूपं, एव= इति अवधारणे, तावत्= प्राथम्येन निरूप्यते= गुणेभ्यः पृथग्विविच्य विचार्यत इति।

सङ्घटना रीतिः सा च पदवाक्यगतत्वेन द्विधा। वर्णपदादिष्विव सङ्घटनायामपि असंलक्ष्यक्रमव्यङ्ग्यो भासत इति यदुक्तं तन्निरूपणात्पूर्वं सङ्घटनास्वरूपमेव गुणैर्विविक्ततया विचार्यत इत्यस्याशयः।

सम्बद्धकारिकामवतारयति असमासेत्यादिना— असमासा मध्यमेन समासेन च भूषिता तथा दीर्घसमासा इति सङ्घटना कैश्चित् त्रिधा उदिता इति पदव्यवस्था।

असमासा= समासरहिता, असमस्तपदान्विता 'स्वल्पसमासा, मध्यमेन= अदीर्घेण, समासेन= समस्तपदेन, च भूषिता= संयोजिता, तथा= एवमेव, दीर्घससमासा= समस्तदीर्घपदा, इति, सङ्घटना= पदसंयोजना, त्रिधा= त्रिप्रकारा, कैश्चित्= कतिपयैर्विपश्चिद्भिः उदिता= प्रतिपादिता इति।

पदसंयोजना रीतिः सङ्घटना। सा च असमस्ता वा स्वल्पसमस्ता मध्यम समस्ता दीर्घसमस्तां चेति कैश्चित् त्रिविधं प्रतिपादतेत्याशयः। सैव संघटना क्रमशः बैदर्भी पांञ्चाली गौडी इत्यभिहिता तथैवापरैः उपनागरिका कोमला पुरुषा चेत्यभिहिता अपि। अत्र कानिदिबुद्धरणानि प्रकृतानि। वामनो निर्दिशति।

विशिष्टा पदरचना रीतिः। विशेषो गुणात्मा। सा त्रिधावैदर्भी गौडीया पाञ्चाली च। विदर्भादिषु दृष्टत्वात्तत्समाख्या। समग्रगुणा वैदर्भी। ओजः कान्तीमती गौडीया। माधुर्यसोकुमार्योपपन्ना पाञ्चाली। तासां पूर्वा ग्राह्य गुणसाकल्यात्। इति।

तथैव— अग्निपुराणेऽपि—

वाग्विद्या सम्प्रतिज्ञाने रीतिः साऽपि चतुर्विधा।<br>
पान्चाली गौडदेशीया वैदर्भी लाटजा तथा।<br>
उपचारयुता मृद्वी पाञ्चाली ह्रस्वविग्रहा।<br>
अनवस्थितसन्दर्भी गौडीया ह्रस्वविग्रहा।<br>
उपचारैर्न बहुभिरुपचारैविवर्जिता।<br>
नार्तिकोमलसन्दर्भा वैदर्भी मुक्तविग्रहा। इति।

एता एव— माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते।<br>
ओजः प्रकाशकैस्तैस्तु परुषा कोमला परैः। इत्यप्युक्ताः।। ५।।

इस प्रकार वाक्यरूप असंलक्ष्यक्रमव्यङ्ग्यध्वनि का सोदाहरण निरूपण कर

सङ्घटना के स्वरूप का निर्द्धारण करने वाली कारिका के अवतारण के लिए उपक्रम करते हैं—

असंलक्ष्यक्रमव्यङ्ग्य ध्वनि सङ्घटना के नाते भी अवभासित होती है ऐसा जो कहा गया था उसी सङ्घटना स्वरूप का ही पहले निरूपण किया जाता है अर्थात् गुणों से पृथक् रूप में विचार किया जाता है।—

कारिका का अवतारण करते हैं—

समासरहित, छोटे—छोटे समास से भूषित तथा दीर्घ समास वाली तीन प्रकार की सङ्घटना बतलाई जाती है। कुछ लोगों के द्वारा—।।५।।

ध्वन्या०— तां केवलमनूद्येदमुच्यते—

कारिका— गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।

रसान्—

ध्वन्या०— सा सङ्घटना रसादीन् व्यनक्ति गुणानाश्रित्य तिष्ठन्तीति।

लीला— सम्प्रति सङ्घटनास्वरूपावधारणप्रसङ्गे सङ्घटनायाः ध्वनि प्रकाशकत्वप्रकारनिर्देशिकायाः कारिकाया अवतारणायोपक्रमते तामित्यादिना— तां= सङ्घटनां त्रिविधां, केवलं, अनूद्य= पूर्वोपस्थापितमेव भातं गृहीत्त्वा, इदं= वक्ष्यमाणवचनम्, उच्यते= कथ्यत इति।

रीतिविषये यदुक्तं तदेव यथोदितमत्रोद्ग्रियत इति। कारिकामवतारयति- गुणानित्यादि— माधुर्यादीन् गुणान् आश्रित्य तिष्ठन्ती सा रसान् व्यनक्ति इति पदव्यवस्था।

माधुर्यादीन्= माधुर्यप्रभृतीन् माधुर्यं द्रुतिहेतुः, आदिपदात् ओजः प्रसादावपि यत्र दीप्तिहेतुरोजः विकासहेतुः प्रसादः, इति तत्र माधुर्यव्यञ्जका निजान्त्याक्रान्ता अटवर्गाः वर्गा ह्रस्वान्तरितौ रणावसमासो मृदुरचना च।ओजप्रकाशका आद्यतृतीयाक्रान्तौ द्वितीयचतुर्थौ युक्तो रेफस्तुल्यश्चटवर्गशषावृत्तिदैर्ध्यमुद्धतो गुम्फश्चात्र। प्रसादव्यञ्जका श्रुतिमात्रेणार्थप्रत्यायका सर्ववृत्तिगुम्फाः।तेषाञ्च वक्तृवाच्यप्रबन्धौचित्यादन्यथात्वमपि, गुणान्,=धर्मान्, आश्रित्य= अवलम्ब्य, तिष्ठन्ती= विलसन्ती, सा= सङ्घटना, रीतिः, रसान्= शृङ्गारादिरसान्, व्यनक्ति= प्रकाशयति इति।

तेरैवेदमुक्तं यत्सङ्घटना माधुर्यादिगुणानवलम्ब्य व्यवस्थिता सती काव्यरसान्प्रकाशयति इति।

कारिकार्थं सरलयति— सेत्यादिना— सा= तादृशी विविधरूपा सङ्घटना, गुणान्= माधुर्यादिधर्मान्, आश्रित्य= अवलम्ब्य तिष्ठन्ती= व्यवस्थिता सती, रसान्= शृङ्गारादीन्= व्यनक्ति= प्रकाशयति= इति।

सङ्घटना के स्वरूप के अवधारण के प्रसङ्ग में सङ्घटना के ध्वनि के प्रकाशकत्व के निर्देशक कारिका के अवतारण करने का उपक्रम करते हैं।

सङ्घटना वा रीति के विषय में जो कहा गया है उसी का अनुवाद कर यह कहा जाता है—

''माधुर्य आदि गुणों में आश्रित होकर रहने वाली रीति रसों का अभिव्यञ्जन करती है।''

कारिका के आशय का स्पष्टीकरण करते हैं–

वैसी संघटना जो है वह गुणों में आश्रित होकर रहती हुई रसों का अभिव्यञ्जन करती है।

ध्वन्या०– अत्र च विकल्प्यं गुणानां संघटनायाश्चैक्यं व्यतिरेकेऽपि द्वयी गतिः 'गुणाश्रया सङ्घटना सङ्घटनाश्रया वा गुणा इति। तत्रैक्यपक्षे सङ्घटनाश्रयनुणपक्षे च गुणनात्मभूतानाधेयभूतान् वाश्रित्य तिष्ठन्ती सङ्घटना रसादीन् व्यनक्तीत्ययमर्थः। यदा तु नानात्वपक्षे गुणाश्रयसङ्घटनापक्षः तदा गुणानाश्रित्य तिष्ठन्ती गुणपरतन्त्रस्वभावा न तु गुणरूपैवेत्यर्थः।'

लीला– संघटनागुणविवेकमुपक्रमते अत्रेत्यादिना– अत्र= प्रकरणेऽस्मिन्, च= अपि, गुणानां= माधुर्यादीनां, संघटनायाः= रीतेश्च, ऐक्यं= एकरूपता वा व्यतिरेकः= पार्थक्यमिति, विकल्प्यं= विकल्पेन कल्पयितुं शक्यम्। व्यतिरेके= पार्थक्ये, अपि, द्वयी= द्विविधा, गतिः= अवस्थितिः। तदाह गुणेत्यादिना– गुणाश्रया= गुणावलम्बिता, सङ्घटना= रीतिः, वा गुणाः, सङ्घटनाश्रया इति। गुणा रीतिमाश्रयन्ते वा रीतयो गुणानाश्रयन्ते वा इति द्विविधा गतिरिति। इत्थं त्रयः पक्षाः सम्भाव्यन्तेसङ्घटनागुणयोरैक्यं वा पार्थक्यं, पार्थक्ये गुणाश्रयाः रीतयो व रीत्याश्रया गुणा वेति। तत्र प्रकृतार्थं विविनक्ति सत्तेत्यादिना– तत्र= तेषु त्रिविधपक्षेषु, ऐक्यपक्षे= सङ्घटनारीत्योरकतापक्षे, सङ्घटनाश्रयगुणपक्षे= गुणानां सङ्घटनाश्रयत्वपक्षे, च आत्मभूतान्= स्वाभिन्नान्, आधेयभूतान्= स्वनिष्ठान्– सङ्घटनाया या धर्मा गुणाः धर्माश्च धर्म्याश्रिता इति, गुणान्= माधुर्यादीन्, आश्रित्य= अवलम्ब्य, तिष्ठन्ती= विलसन्ती, सङ्घटना= रीतिः, रसादीन्= रसभावप्रभृतीः, व्यनक्ति= अभिप्रकाशयति, इति= इत्थं, अयं= एषः, अर्थः= कारिकाशय इति। यदा, तु,= इति तद्विपरीतं, नानात्वपक्षे= सङ्घटनागुणयोः गुणाश्रयसङ्घटनापक्षः= गुणा एव आश्रयो यस्याः सा तादृशी या सङ्घटनास्तस्याः पक्षः, रीतीनां गुणाश्रयत्वे, तदा, गुणान्, आश्रित्य, तिष्ठन्ती, गुणापरतन्त्रस्वभावा= गुणाधीनवृत्तिः सङ्घटना, न तु, गुणरूपा= गुणमयी, एव, इति, अर्थः= कारिकाशय इति।

अस्यायमाशयः– अत्र च त्रयः पक्षाः सम्भवन्ति। ते च यथा गुणरीत्योरैक्यं रीत्याश्रया गुणाः वा गुणाश्रया रीतयो वेति। तत्र प्रथमद्वितीयपक्षे कारिकाया इत्थमर्थः–सङ्घटना स्वाभिन्नान् वा स्वनिष्ठान् गुणाानाश्रित्य रसभावादीन् प्रकाशयति। इति तृतीयपक्षे तु–गुणानाश्रित्य तिष्ठन्ती गुणाधीनवृत्ति सङ्घटना रसादीन् व्यनक्तीति कारिकाशयो भवति इति।

सङ्घटना के भेदों का उल्लेचख करने के बाद अब सङ्घटना एवं गुणों का विवेचन का उपक्रम करते हैं–

यहाँ विकल्प होता है, गुण एवं रीति एक ही वा भिन्न है। भिन्न मानने पर दो अवस्थायें आती हैं— सङ्घटना गुण में आश्रित होते हैं उनमें से दोनों के एक मानने पर एवं गुणों के संङ्घटना में आश्रित मानने पर— दोनों अवस्थाओं में कारिका का यह अर्थ होगा कि अपने आत्मभूत अर्थात् अपने से अभिन्न वा अपने में निष्ठित गुणों का आश्रय लेकर रहती हुई सङ्घटना रस भाव आदि का प्रकाशन करती है। जब नानात्व अर्थात् पृथक् मानने के पक्ष में सङ्घटना के गुणों में आश्रित मानने का पक्ष होता है तब कारिका का आशय यह होगा कि सङ्घटना गुणों में आश्रित होकर रहती अर्थात् गुणों की धीन वृत्ति होकर न कि गुणरूप ही होकर रसों की अभिव्यञ्जना करती है।

ध्वन्या०— किं पुनरेवं विकल्पनस्य प्रयोजनमिति ? अभिधीयते-यदि गुणाः सङ्घटना चेत्येकं तत्त्वं, सङ्घटनाश्रया वा गुणाः, तदा सङ्घटनाया इव गुणानामनियतविषयत्वप्रसङ्गः। गुणानां हि माधुर्यप्रसादप्रकर्षः, करुण-विप्रलम्भशृङ्गारविषय एव। रौद्राद्भुतादिविषयमाजः माधुप्रसादौ रसभावत-दाभासविषयावेवेति विषयनियमो व्यवस्थितः। सङ्घटनासु स विघटते।

लीला— इत्थं सङ्घटनागुणावलम्ब्य विविधविकल्पं परिकल्प्य तस्य प्रयोज-ननिर्देशायोपक्रमते किमित्यादिना— पुनः= तथाभूते सत्यपि, एवं= इत्थं, विकल्प-नस्य= विकल्पकल्पनायाः किं= किंमात्रं, प्रयोजनं= फलमिति चेत्, अभिधीयते= कथ्यते— फलं विविच्य उपस्थाप्यत इति। प्रयोजनमाह यदीत्यादिना— यदि= एकपक्षे, गुणाः= माधुर्यादयः, सङ्घटना= रीतिः, च इति, एकं= अभिन्नं, तत्वं= वस्तु, वा= पक्षान्तरे, गुणाः= माधुर्यादयः, सङ्घटनाश्रयाः= रीत्याधाराः, तदा= तदवस्थायां, सङ्घटनायाः= रीतेः, इव, गुणानां= माधुर्यादीनां, अनियतविषय-त्वप्रसङ्गः= अनियतोऽनिश्चितौ विषयो लक्ष्यं यस्य तस्य भावस्तत्त्वं तस्य प्रसङ्गः सम्भावना, उदेति इति।

अस्यायमाशयः— यदि गुणा रीतयश्च एकमेव तत्वमथवा पार्थक्येऽपि तयोः गुणानां सङ्घटनाश्रयत्वञ्च मन्यते तदा प्रथमपक्षे तयोस्तुल्यधर्मत्वादेक-पदार्थत्वेन द्वितीयपक्षे गुणानां सङ्घटनाधर्मत्वेन उभयोरेव तुल्ययोपक्षेमत्वादपि, यथा सङ्घटनाया वक्तृवाच्यौचित्याधीननियमतया अनियतत्वविषयत्वं भवति तथैव गुणानामपि स्यादेवेति।

सत्यपि रीतेरिव गुणानामपि अनियतविषयत्वे का हानिरित्यपेक्षायामाह गुणानामित्यादि-गुणानां= माधुर्यादीनां मध्ये, हि= यतः, माधुर्यप्रसादप्रकर्षः= माधुर्यप्रसादौ चित्तद्रवीभावमयह्लादरूपचित्तविकासस्वभावौ यौ गुणौ तयोः प्रकर्षो द्योतनातिशयः, करुणविप्रलम्भशृङ्गारविषयः= करुणस्य शृङ्गारे विप्रलम्भस्य च विषयः क्षेत्रमेव। ओजः= चित्तदीप्तिहेतुस्तदाख्यो गुणस्तु, रौद्राद्भूतविषयं= रौद्रः क्रोधस्थायिभावात्मको रसः अद्भुतः विस्मयस्थायिभावात्मको रसश्च

तौ एव विषयो लक्ष्यं यत्तादृशं, भवति। तत्रापि माधुर्यप्रसादौ= तत्तदाख्यगुणौ, रसभावतदाभासविषयौ= रसः स्थायिभावोत्कर्षः भावोव्यभिचारिभावप्रकर्षो वा उद्बुद्धमात्र एव स्थायिभावः तदाभासस्तयोः रसभावयोः आभासः अनौचित्यत्वेन प्रवर्तनं स एव विषयो लक्ष्यं ययोस्तौ तादृशौ, एव, इति= इत्थं, विषयनियमः= विषयस्य लक्ष्यस्य नियमो प्रबन्धः, व्यवस्थितः= नियतः, सङ्घटनायाः= रीतेः तु= इति गुणव्यवच्छेदे सः= तादृशविशेषनियमः, विघटते= अनियतो भवतीति।

क्षत्रेदमुक्तं भवति यत्सङ्घटनगुणयोः पृथक्त्वेन विवेचनमेव विकल्पनस्य प्रयोजनन्। अतथाकरणे का हानिरित्यपेक्षाया तयोरैक्यत्वे वा गुणानां सङ्घटनाश्रयत्वे उभयोस्तादात्म्येन वा तयोः समानधर्मत्वेन रीतेरिव गुणानामपि अनियतविषयत्वं स्यात्। तदा काऽपत्तिरित्यपेक्षायामुच्यते यत्तथा सति गुणविषयत्वानियमेन काव्यप्रबन्ध एव विघटितः स्यात् किञ्च करुणविप्रलम्भशृङ्गारयोरेव माधुर्यप्रसादप्रकर्षः रौद्राद्भुतयोरेवौजः प्रकर्षः रसभावरसाभासभावाभासाः केवल माधुर्यप्रसादविषया इति यद्व्यवस्थितं तदपि विचलितं स्यात्। यथारौद्रे माधुर्यप्रसङ्गः करुणे दीप्तिप्रसङ्गः कथमेव स्यात्। तेन गुणानां नियतविषयता कदाप्यपरिहार्या किन्तु सङ्घटनायास्तु वक्तृविषयवशान्नियमेऽपि परिवर्तनं सह्यमेव भवति इति।

इस प्रकार सङ्घटना एवं गुणों के सम्बन्ध में तीन प्रकार के विकल्प की परिकल्पना कर उसके प्रयोजन के निर्देश के लिए उपक्रम करते हैं—

तो फिर इस प्रकार का विकल्प शोचने का प्रयोजन ही क्या है ? इस प्रकार की आशङ्का हो सकती है। उस पर यह कहा जाता है कि यदि गुण एवं सङ्घटना को एक ही तत्व माना जाय अथवा गुणों को सङ्घटन में आश्रित माना जाय तो उस अवस्था में सङ्घटना के जैसे, गुणों के भी विषय का नियत न होने का प्रसङ्ग आ जाता है। तो उसे क्या हानि है ? इस पर कहा जाता है कि गुणों के अनियत हो जाने से तो समूचा काव्य प्रबन्ध ही लड़खड़ा जाएगा। जैसे कि गुणों में से माधुर्य एवं प्रसाद का उत्कर्ष जो है वह करुण एवं विप्रलम्भभ शृङ्गार का ही विषय है और ओज का विषय है रौद्र एवं अद्भुत रस। इसी तरह माधुर्य एवं प्रसाद रस, भाव, रसाभास, भावाभास ही विषय वाले हैं। इस तरह गुणों का विषय सुनियत है। और यदि क्रोध में माधुर्य का प्रसङ्ग आ जाय तो वह केसा काव्य होगा। किन्तु सङ्घटना में सो बात नहीं। (उसमें तो वक्ता एवं वाक्य के हिसाब से उसके स्वरूप में भी हेरफेर हो सकता है।)

ध्वन्या०— तथाहि शृङ्गारेऽपि दीर्घसमासा दृश्यते रौद्रादिष्वसमासा चेति। शृङ्गारे दीर्घसमासा यथा- 'मन्दारकुसुमरेणुपिञ्जरितालका' इति। यथा वा—

अनवरतनयनजलनिपतनपरिमुषितपत्रलेखं ते।
करतलनिषण्णमबले वदनमिदं कं न तापयति।।

इत्यादौ। तथा रौद्रादिष्वप्यसमासा दृश्यते। यथा— 'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः' इत्यादौ। तस्मान्न सङ्घटनास्वरूपा न च सङ्घटनाश्रया गुणाः।

लीला— सङ्घटनायां नियमव्यवस्थाऽनियता इति यदुक्तं तस्यैवोदाहरणमुखेन प्रतिपादनायोपक्रमते तथेत्यादिना— तथा= यद्यपि= शृङ्गारेऽसमासारौद्रादौ दीर्घसमासे रसादिसामान्ये मध्यमसमासा चेति सामान्ये विषये सत्यपि, हि= यतः, शृङ्गारे, यत्र असमस्तपदमपेक्ष्यते तत्र, अपि दीर्घसमासा= समस्त बहुपदा सङ्घटना, दृश्यते, रौद्रादिषु= यत्र दीर्घसमासाऽपेक्ष्यते तत्र, असमासा= समासहीना सङ्घटना, च= अपि, दृश्यते= इति= हेतौ। तत्र= उक्तार्थे शृङ्गारे, दीर्घसमासा=समस्तबहुपदा, यथा= इति वक्ष्यमाणवाक्ये- 'मन्दारकुसुमरेणुपिञ्जरितालका'= मन्दारस्य तदाख्यदेवतरोः, कुसुमानि पुष्पाणि तेषां रेणवः परागाः तै पिञ्जरिताः पिशङ्गिता अलकाश्चूर्णकुन्तला यस्याः सा, इति इत्यत्र समस्तपञ्चषट्वपदा सङ्घटना, नायिकायाः शृङ्गारवर्णनेन शृङ्गारविषयता चेति। तथापि तत्र स्पष्टशृङ्गारभावमाशक्य पुनः उदाहरणान्तरं प्रस्तोतुमुपक्रमते यथेत्यादिना-वा= पक्षान्तरे, विकल्पे, यथा= इति उदाह्रियमाणपद्ये= तदुदाहरति अनवरतेत्यादि— हे अबले ते इदं अनवरतनयनजलवतिपतनपरिमुषित— पत्त्रलेखकरतलनिषण्णं वदनं कं न तापयति इति पदव्यवस्था।

हे अबले= हे कामिनि, 'ते= तव, इदं= पुरोगतं, अनवरतनयनजलवनिपतनपरिमुषितपत्त्रलेखं= अनवरतजस्रमेव नयनयोर्जलमश्रु तस्य लवाः विन्दवस्तेषां निपतनेन प्रवाहेण परिमुषिता अवगता पत्त्रलेखा शृङ्गाररचना यस्य तत् करतलनिषण्णं= करतते वामकरमध्ये निषण्णं स्थितं, वदनं= मुखं, कं= कं सहृदयं, न, तापयति= दुनोति-अपितु सर्वमेवेति।

इत्यादौ= इति वाक्येस्फुटेऽपि ईर्ष्याजनितविप्रलम्भशृङ्गारव्यङ्ग्ये सङ्घटना तु दीर्घसमासा एवेति स्फुट एव व्यभिचार।

इत्थं शृङ्गारे व्यभिचारमुदाहृत्यं पुनः रौद्रेऽपि तमुदाहरणमुखेन प्रतिपादयति तथेत्यादिना— तथा= एवमेव, रौद्रादिषु= रौद्राद्‌भुतप्रभृतिषु, असासा= समासरहिता स्वल्पसमासा वा, सङ्घटना, दृश्यते। यथा= इति निदर्शने। उदाहरति य इत्यादिना— पाण्डवीनां चमूनां स्वभुजगुरुमदः यः यः शस्त्रं बिभर्ति इत्यादि पद्यमिदं पूर्वमेव व्याख्यातम्। इत्यादौ= इत्यादिपद्‌ये, व्यङ्ग्येऽपि रौद्रे समासदैर्ध्याभाव इति व्यभिचार एव।

प्रकरणमुपसंहरति तस्मादित्यादिना- तस्मात् गुणानां नियतविषयत्वात् सङ्घटनायास्तु विषये व्यभिचारात्, गुणाः= माधुर्यादयः, न= नैव, सङ्घटना स्वरूपाः= रीतिरूपाः, न= नैव, च सङ्घटनाश्रयाः= रीत्याधारा इति।

सङ्घटना में नियम की अव्यवस्था जो कही गई थी उसी का उदाहरणों के द्वारा भी प्रतिपादन करने हतु उपक्रम करते हैं—

जैसे कि शृङ्गार में लम्बे समास वाली सङ्घटना पाई जाती है और रौद्र आदि में समासरहित वा अल्पसमास वाली भी। उसमें शृङ्गार में दीर्घसमास वाली जैसे— 'मन्दारकुसुमरेणुपिज्जरितालका' इत्यादि में यहाँ पाँच पदों का समास है जैसे मन्दार के कुसुम के पराग से कपिश हुआ है अलक जिसका। फिर भी नायिका के शृङ्गार के वर्णन होने के कारण यहाँ शृङ्गार का पुट है।

अटावा (स्फुट रूप से शृङ्गार का व्यजक दूसरा उदाहरण) जैसे— हे नारी ! तुम्हारा यह अनवरत नयन के जल की विन्दुओं के गिरने से पोंछी गई हैं वेशरचना जिसका ऐसा करतल के मध्यम में टिका वदन जिसको सन्तप्त नहीं करता— अवश्यमेव सभी को सन्तप्त करता है।

इत्यादि में— यहाँ स्फुट रूप में प्रतीत ईर्ष्या विप्रलम्भ शृङ्गार में भी लम्बे समास वाली सङ्घटना है। अत: यह सङ्घटना के नियम के व्यभिचार का उदाहरण है।

उसी तरह रौद्र आदि में भी असमास वा अल्पसमास वाली सङ्घटना दिखाई पड़ती है। जैसे—'पाण्डवी सेना में अपने बाहुबल के बड़े अभिमान से जो जो शस्त्रों का धारण करता है' इत्यादि में। यह पद्य पहले ही ओजो गुण के उदाहरण में प्रस्तुत एवं व्याख्यात है। इसमें स्पष्ट रौद्र रस व्यङ्ग्य है फिर भी लम्बे समास वाले पद नहीं हैं। उपसंहार करते हैं।

इस कारण न गुण सङ्घटनस्वरूप हैं अर्थात् सङ्घटन के धर्म है न तो सङ्घटन में आश्रित ही है।

ध्वन्या०— ननु यदि सङ्घटना गुणानां नाश्रयस्तत्किमालम्बना एते परिकल्पन्ताम्। उच्यते प्रतिपादितमेवैषामालम्बनम्।

तमर्थवलम्बन्ते येऽङ्गिनं ते गुणा: स्मृता:।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्या: कटकादिवत्।।

लीला— इत्थं सङ्घटनाया गुणानामाश्रयत्वं युक्त्या निषिध्य सम्प्रति तेषामालम्बनं वाचोयुक्त्या निर्देष्टुमुपक्रमते नन्वित्यादिना— ननु= इति सन्देहे, यदि, सङ्घटना= रीति:, गुणानां= माधुर्यादिधर्माणां न, आश्रय:, परिकल्प्यन्तां= विचिन्त्यमताम्। शब्दार्थावलम्बनत्वे हि तदलङ्कारेभ्य: को विशेष इति।

इति चेद्, उच्यते= कथ्यते। किमित्याकाङ्क्षायामाह— प्रतिपातितमित्यादिना— एषां= गुणानां, आलम्बनं= आश्रय:, रसरूपं प्रतिपादितं= सिद्धान्तितमेव मूलग्रन्थकृता इति।

तत्कथमित्यपेक्षायां सम्बद्धकारिकामनुवदति तमर्थमित्यादि—कारिका तु विवृतपूर्वैव। सारस्त्वस्येत्थं-ये धर्मा: अङ्गिनं वाक्यार्थीभूतं तमर्थं रसादिमाश्रयन्ते ते गुणा: ये च अङ्गमवलम्बन्ते तेऽलङ्कारा इति। अनेन प्रतिपादितं यद्रसाद्यर्थमेव गुणानामालम्बनमिति।

इस प्रकार सङ्घटना का गुणों का आश्रय होना युक्ति से निषेध कर अब उनके आश्रय के निर्देश करने का उपक्रम करते हैं—

कोई यह पूछ सकता है कि यदि सङ्घटना गुणों का आश्रय नहीं है तो गुण क्या आश्रय वाले माने जायें— इस पर यह कहा जाता है— गुणों का आलम्बन तो पहले ही प्रतिपादित हैं अर्थात् कारिकाकार ने इसका निर्देश किया ही है।

उसी कारिका का अनुवाद करते हैं—

जो धर्म उस वाक्यार्थीभूत अङ्गी रसादि अर्थ में आश्रित होते हैं वे गुण हैं और जो अङ्ग में आश्रित होते हैं। वे कटक कुण्डल आदि की तरह अलङ्कार हैं।

इससे स्पष्टतः यह प्रतिपादित है कि रसादि अर्थ ही गुणों का आश्रय है।

ध्वन्या०— अथवा भवन्तु शब्दाश्रया एव गुणाः न चैषामनुप्रासादितुल्यत्वम्। यस्मादनुप्रासादयोऽनपेक्षितशब्दधर्मा एव प्रतिपादिताः गुणास्तु व्यङ्ग्यविशेषावभासिवाच्यप्रतिपादनसमर्थशब्दधर्मा एव। शब्दधर्मत्वं चैषामन्याश्रयत्वेऽपि शरीराश्रयत्वमिव शौर्यादीनाम्।

लीला— गुणानां सङ्घनाश्रयत्वेऽसिद्धेऽपि तेषां शब्दाश्रयत्वं मन्यमानानां सन्तोषाय पक्षमपरमुपस्थाप्य तन्निराकरणायोपक्रमते अथवेत्यादिना— अथवा= पक्षान्तरे, ये खलु तस्था मन्यन्ते तेषां पक्षे, गुणाः= माधुर्यादिधर्माः, शब्दाश्रयाः= शब्दावलम्बनाः, एव, भवन्तु= सिध्यन्तु नाम। किन्तु तत्रापि, एषां= गुणानां, शब्दाश्रयत्वे मतेऽपि, अनुप्रासादितुल्यत्वं= शब्दसाम्यमात्राबलम्ब्यनुप्राससमानधर्मत्वं तु, न= सम्भवति। तत्र हेतुमाह यस्मादित्यादियस्मात्= यतः, अनुप्रासादयः= शब्दसाम्यमात्रापेक्षिणोऽनुप्राससमा— नधर्मालङ्काराः, अनपेक्षितार्थशब्दधर्माः= अनपेक्षितः अनाकाङ्क्षितः अर्थो वस्तु येषां ते तादृशा ये शब्दास्तेषां धर्माः प्रकृतिकाः, अर्थानपेक्षकशब्दमात्रधर्माः, एव इत्यवधारणे प्रतिपादिताः= निरूपिताः। तद्विपरीतं, गुणाः, तु= इति व्यवच्छेदे, व्यङ्ग्यविशेषावभासिवाच्यप्रतिपादनसमर्थशब्दधर्माः= व्यङ्ग्यविशेषावभासी प्रतीयमानार्थविशेषद्योती यो वाच्यः शक्यार्थस्तस्य प्रतिपादने प्रकाशने समर्थः क्षमो य शब्दः धर्माः एव= इत्यवधारणे। पुनस्तदेव स्पष्टयति शब्देत्यादिना एषां= गुणानां, शब्दधर्मत्वं= तादृशव्यङ्ग्यापेक्षितवाच्यप्रतिपादनक्षमशब्दधर्मत्वं, अपि, शौर्यादीनां= शौर्यदयादाक्षिण्यादिधर्माणां, अन्याश्रयत्वे= इतराधारत्वेऽपि अर्थात् शौर्यादिपक्षे आत्मनिष्ठत्वे, गुणपक्षे रसादिनिष्ठत्वे, अपि, शरीराश्रयत्वं= देहावलम्बनत्वम्, इव= यथेति।

अस्यायमाशयः— केचित्स्थूलबुद्धयो गुणानां शब्दाश्रयत्वं मन्तुमपि शक्नुवन्ति यद्यपि नैषोऽस्माकमभीष्ट तथापि तत्तोपाय तत्पक्षेणैवेदं कथ्यते यदस्त्वेव गुणानां शब्दाश्रयत्वम्। तत्रापि तेषामनुप्रासादिसाम्यत्वं तु नैव सम्भवति। यतस्तेऽनपेक्षितार्थशब्दानां धर्माः गुणास्तु प्रतीयमानार्थद्योतनक्षमवाच्यार्थप्रतिपादनसमर्थानां शब्दानामेव धर्मा इति तयोर्महदन्तरं स्पष्टमेव। गुणानां शब्दधर्मत्वं तु

शौर्यादीनामात्मनिष्ठत्वेऽपि देहाश्रयत्वमिवेति। न हि एकाश्रितत्वादेव ऐक्यं भवति तथा मते रूपस्य संयोगस्य च ऐक्यप्रसङ्ग आपतेत्। किन्तु तयोः पार्थक्यमेव सिद्धम्। न चात्र द्वितीयाभावेन संयोगाभाव इति वाच्यमिहाव्यङ्ग्यो प्रकारकवाच्यापेक्षा तु भवत्येवेति।

गुणों में शब्द का आश्रयत्व मानने वालों के भी सन्तोष के लिए उनके पक्ष का भी उपस्थापन कर उसका निराकरण करने का उपक्रम करते हैं—

अथवा मान लिया जाय कि गुण शब्द में ही आश्रित होते हैं तो भी उनकी अनुप्रास आदि में समता नहीं हो सकती क्योंकि अनुप्रास आदि जो हैं वे अर्थ की एकदम अपेक्षा न करने वाले शब्द के धर्म अर्थ का द्योतन कर पाने वाले वाच्य अर्थ के प्रतिपादन में समर्थ शब्द के ही धर्म हो सकते हैं। इनका शब्द धर्मत्व तो आत्मा में आश्रित शौर्य आदि धर्मों का शरीर का आश्रय जैसा ही है। अर्थात् देखने में तो शौर्य आदि शरीर में आश्रित जैसे लगते हैं लेकिन वस्तुतः वे आत्मा में आश्रित होते हैं उसी तरह गुण भी व्यङ्ग्य रूप रसादि अर्थ में आश्रित होते हैं न कि शब्दसामान्य में।

ध्वन्या०— ननु यदि शब्दाश्रया गुणास्तत्संघटनारूपत्वं तदाश्रयत्वं वा तेषां प्राप्तमेव न ह्यसङ्घटिताः शब्दा अर्थविशेषप्रतिपाद्यसाश्रितानां गुणानामवाचकत्वादाश्रया भवन्ति। नैवम्। वर्णपदव्यङ्ग्यत्वस्य रसादीनां प्रतिपादितत्वात्।

लीला— गुणानां शब्दाश्रयत्वे तेषां सङ्घटनारूपत्वमाशङ्क्य तन्निरासायोपक्रमते नन्वित्यादिना— ननु= इति सन्देहे, यदि, गुणाः, शब्दाश्रयः= शब्दाधारा एव कामं स शब्दो व्यङ्ग्यप्रत्यायकवाच्यप्रतिपादनक्षप एव किं न स्यात्, सङ्घटनाऽपितु शब्दाश्रया एव, तत्= तस्मात्, तेषां, गुणानां, सङ्घटनारूपत्वं= रीतिस्वरूपत्वं, वा, तदाश्रयत्वं= सङ्घटनाश्रितत्व, प्राप्तं= सिद्ध, एवेति। तत्र हेतुर्यथा हि= यतः, असङ्घटिताः= पृथक्पृथक्स्थिता वाक्यत्वमप्राप्ताः शब्दाः, अर्थविशेषप्रतिपाद्यरसाद्याश्रितानां= अर्थविशेषेण वाच्येतरार्थेन, प्रतिपाद्यः साध्यो यो रसादिस्तत्र आश्रितानामवलम्बितानां, गुणानां, अवाचकत्वात्= अप्रतिवादकत्वात्, आश्रयाः= आलम्बनाः, न भवन्ति इति। अस्यायमाशयः— गुणाः शब्दाश्रया इति तु मतमेव कामं तदुपचारेणैव स्यात्। गुणा व्यङ्ग्यरूपरसादिनिष्ठा अपि मत एव। तादृशा व्यङ्ग्यरूपरसादिनिष्ठगुणाः शब्दैः पृक्पृथगेव तु नैव प्रतिपाद्या अपितु तन्निमितं सङ्घटनाऽप्यपरिहार्यैवेति तेषां सङ्घटनाधर्मत्वं वा सङ्घटनाश्रयत्वं सिद्धमेवेति पूर्वपक्षः। तत्परिहरति नैवमित्यादिना— एवं= तथा, न= नैवेति। तत्र निराकरणे हेतुमाह वर्णेत्यादिना— रसादीनां= व्यङ्ग्यार्थरूपरसभावादीनां, वर्णपदव्यङ्ग्यत्वस्य= वर्णपदपदावयवादि— प्रत्येयत्वस्य, प्रतिपादितत्वात्= साधितत्वाद् इति।

अस्यायमाशयः—वाक्यत्वेन असङ्घटिताः शब्दाः प्रतीयमानार्थमवभाषयितुं नैव क्षमा इति यदुक्तं तन्न, यतो रसादीनां वर्णप्रकाशयत्वस्य पदप्रकाश्यत्वस्य

च सम्भवात्। किञ्च अवाचकस्याऽपि वर्णसमुदायरूपस्य पदस्य श्रवणमात्रा-
वसेयेन वर्णस्येव यद्रसाभिव्यक्तिहेतुत्वं लभ्यते तदेव अपि च शुद्धस्यापि
पदस्य स्वार्थस्मारकत्वेनापि रसाभिव्यक्तियोग्यार्थावभासक्त्वमेव माधुर्यादीनि
हेतोर्न हि तत्र सङ्घटनायाः किमपि प्रयोजनमिति।

गुणों के, उपचार से ही क्यों न हो, शब्दाश्रय हो जाने से फिर उनके सङ्घटनाश्रयत्व
क्यों न माना जाय ऐसी आशङ्का उठाकर उसका समाधान करते हैं।

यदि गुण भी शब्दाश्रय ही है तो फिर उनका सङ्घटनास्वरूप वा उसका आश्रयत्व
तो हो ही जाएगा क्योंकि असङ्घटित शब्द जो है वे अर्थविशेष के रूप में प्रतिपाद्य
रसों में आश्रित गुणों के वाचक न होने से उनके आश्रय नहीं बन पाते, वैसा तो
वाक्यत्व में सङ्घटित शब्द ही कर पाते हैं। ऐसा कहना उचित नहीं क्योंकि रसादि के
वर्ण एवं पद से प्रकाश्यत्व तो प्रतिपादित ही हैं। अर्थात् वर्णों का जो रसाभिव्यक्ति
में हुतत्व है और पदों का जो स्मारक के रूप मं रसाभिव्यक्तियोग्य अर्थ का
अवभासक्त्व है वही माधुर्यादि गुण है और उसमें सङ्घटना का क्या काम है भला।

ध्वन्या०— अभ्युपगते वा वाक्यव्यङ्ग्यत्वे रसादीनां न नियता काचित्
संघटना तेषामाश्रयत्व प्रतिपद्यत इत्यानियतसङ्घटनाशब्दा एव गुणानां
व्यङ्ग्यविशेषानुगता आश्रयाः।

ध्वन्या०— ननु माधुर्ये यदि नामेवमुच्यते तदुच्यमाम् ओजसः पुनः
कथमनियतसङ्घटनशब्दाश्रयत्वम्। न ह्यसमासा सङ्टना कदाचिदोजस
आश्रयतां प्रतिपद्यते। उच्यते-यदि न प्रसिद्धिमात्रग्रहदूषितं चेतस्तदत्रापि
न ब्रूमः। ओजसः कथसमासा सङ्घटना नाश्रयः ? यतो रौद्रादीन् हि
प्रकाशयतः काव्यस्य दीप्तिरोज इति प्राक्प्रतिपादितम्। तच्चौजो
यद्यस्मासायामपि सङ्घटनायां स्यात्तत्को दोषो भवत्। न चाचारुत्वपं
सहृदयहृदयसवेद्यमन्ति। तस्मादनियतसङ्घटनशब्दाश्रयत्वे गुणानां न काचित्
क्षतिः। तेषां तु चक्षुरादीनामिव यथास्वं विषयनियमितस्य न कदाचिद्व्-
यभिचारः। तस्मादन्ये गुणा अन्या च सङ्घटना। न च सङ्घटनाश्रिता गुणा
इत्येकं दर्शनम्।

लीला— ध्वनेः वर्णपदप्रकाश्यतायां कामं सङ्घटनोपेक्षितैव भवेत् किन्तु
तस्य वाक्यव्यङ्ग्यतायां तस्याः प्रतिपाद्यत्वं कथं निराक्रियते इत्याकाङ्क्षायामाह
अभ्युपगत इत्यादिना- रसादीनां वाक्यव्यङ्ग्यत्वे= वाक्यप्रकाश्यत्वे, अभ्युपगते=
सम्मते, वा= अपि, अर्थात् वाक्यरूपध्वनौ सङ्घटनायाः सान्निध्ये अपि, तेषां=
गुणानां नियता= समस्ताऽसमस्ता वा, काचिद् अपि, सङ्घटना= पदसंयोजनाविशेषः,
आश्रयत्वं= आधारत्वं, न, प्रतिपद्यते= कल्पते इति= इति हेतोः अनियतसङ्घटनाः=
अनिश्चितसंयोजनाः, व्यङ्ग्यविशेषानुगताः= रसव्यञ्जकाः, शब्दाः, एव, गुणानाम्
आश्रयाः= आधारा इति।

अस्यायमाशय– रसादेर्व्यञ्जकत्वेन वाक्यस्याभ्युगमेऽपि गुणानामाश्रयत्वेन कस्या अपि सङ्घटनाया अनिवार्यत्वं तु नैव स्वीक्रियते कथमपि तस्याः रसादीन् प्रति निमित्तकारणत्वेनाऽप्यनवस्थितिः। तेन रसव्यञ्जकत्वेन निगताः शब्द एव गुणाश्रया उच्यन्ते न तु सङ्घटना इति।

पुनराशङ्क्य समाधत्ते नन्वित्यादिना– तत्राशङ्का यथा ननु इति प्रश्नो माधुर्ये= चित्तद्रुतिनिमित्ते गुणे, यदि, नाम इति वाक्यालङ्कारे, एव= इत्थं= रसव्यञ्जकत्वेन नियता असङ्घटिता शब्दा एव गुणाश्रया इति, उच्यते कथ्यते चेत्, तत्= तथा, उच्यतां= कथ्यतां– न मे काऽपि हानिः। पुनः= इति पक्षान्तरे, ओजसः= दीप्तिहेतोस्तदाख्यगुणस्य, अनियतसङ्घटनशब्दाश्रयत्वं= अनिश्चितसंयोज– नशब्दाधारत्वं, कथं नाम सिध्यति यतः असमासा= समस्तपदरहितां, सङ्घटना= संयोजना, कदाचित्= केनाप्युपायेन, ओजसः= ओजोगुणस्य, आश्रयतां= आधारत्वं, न, प्रतिपद्यते= कल्पत इति। समाधानञ्च यथा यदीत्थमाशङ्क्यते चेत्– उच्यते= समाधीयते। यदि, चेत्= मानसं न= नैव, प्रसिद्धिमात्रग्रहदूषितं= प्रचलितरूढ्यभिनिवेशप्रणष्टं, तद्= तदा, अत्रापि= विषयेऽस्मिन्नपि, न इति– असमस्तपदेषु ओजो न भवतीति, न, ब्रूमः– अपि तु भवत्येवेति ब्रूम। असमासा= समासरहिता, सङ्घटना= संयोजना, ओजसः= ओजोगुणस्य, कथं= केन प्रकारेण, न= नैव, आश्रयः= आधारः, यतः हि= इति अवधारणे रौद्रादीन्= रौद्रप्रभृतितत्समानप्रकृतिकरसान्, प्रकाशयतः= अभिव्यञ्जतः, काव्यस्य, दीप्तिः= औज्ज्वल्यं, ओजः= ओजोगुणं, इति, प्राक्= पूर्वमेव, प्रतिपादितं= निरूपितम्। तत्= तादृशं रौद्रादिप्रकाशककाव्यदीप्तिरूपं, ओजः, यदि असमासायां= समासहीनायां, सङ्घटनायां= पदसंयोजनायां, अपि, स्यात्, तत् तथाभवनं, कः दोषः= दूषणं, भवेत्= स्यात्= अपितु न कोऽपि दोष इति। न= नैव, च, सहृदयहृयसंवेद्यं= रसिकमानसग्राह्यम्, अचारुत्वं= असुन्दरत्वं, अस्ति तत्र सहृदयानामचारुत्वप्रतीतिः। तस्मात्= तेन हेतुना, गुणानां= माधुर्यादीनां, अनियतसङ्घटने शब्दाश्रयत्वे= अनियतसङ्घटनाः अनिश्चितसंयोजना ये शब्दाः तेषामाश्रयत्वे आधारत्वे, न= नैव, काचित्= काऽपि, क्षतिः हानिः। तेषां= गुणानां, तु= इति व्यवच्छेदे, चक्षुरादीनां= नेत्रप्रभृतीनां, इव यथास्वं= प्रातिस्विकं, एतदुक्तं भवति– यथा नेत्रकर्णत्वग्घ्राणजिह्वानां रूपशब्दस्पर्शगन्धरसास्तथैव, विषयनियमितस्य= विषयेण लक्ष्येण निमित्तस्य व्यवस्थितस्य, स्वरूपस्य= विग्रहस्य, कदाचित्= कथमपि, न नैव, व्यभिचारः= परिवर्तनम्। तेन= हेतुना, अन्ये= इतरे, गुणाः, अपरा, च, सङ्घटना= पदसंयोजना इति। न= नैव, च, गुणाः, सङ्घटना= रीतिः, आश्रिताः= अवलम्बिताः, इति= इत्थं, एकं= प्रथमं, दर्शनं= मतं मान्यता इति।

प्रकरणस्यायमाशयः– असत्यपि प्रवेशे सङ्घटनाया वर्णप्रकाश्यरसे पदप्र–

का- श्यध्वनौ च वाकयव्यङ्ग्ये ध्वनौ तु तथाऽवश्यमेव प्रवेष्टव्यं यतस्तत्र तु मया विना नैव सम्भवति स्वसौन्दर्यं वाच्यसौन्दर्यं वेति आशङ्कानिरासायाह यतत्र तस्या प्रवेशो नैव प्रतयाचक्ष्यते कामं सा प्रविशतु वा नैव वा तस्याः सन्निहिताया अपि रसव्यक्तौ प्रयोजकत्वन्तु नैव सिध्यत्येव। यतो माधुर्यस्य तां विनाऽपि वर्णपदव्यङ्ग्ये भावात्तस्य न कापि नियता सङ्घटना आश्रयः स्वरूपं वा। तेन गुणानां वाक्यव्यङ्ग्येऽपि सङ्घटनां विहायापि वाक्यस्य तद्रसव्यञ्जकत्वम्। तस्माद्रौपचारिकत्वेऽपि शब्दाश्रया एव गुणाः।

पुनश्च स्यादेव माधुर्यविषये ओजोविषये तु अनियतशब्दाश्रयता नैव सिध्यति यतः समासरहितसङ्घटना नैवौजस आश्रयत्वं भजत इति केचित् कथयितु शक्नुवन्ति। इदन्तु वाक्यव्यङ्ग्यध्वन्यभिप्रायेणेति पूर्वव्याख्यातारः। लोचनकृन्मते तु वर्णपदव्यङ्ग्येऽप्योजसि रौद्रादिस्वभावे सङ्घटना विना वर्णपदानां स्वसौन्दर्यमपि न तादृगुन्मीलति यादृक्तेषां सङ्घटनाङ्कित्वे इति आशङ्काविषय इति। वयमपि लोचनमतमेवानुसरामः। अत्रापि नकारात्मकमेवोत्तरम्। तत्केवलं रूढिदूषितचेतसो विषय एव। वस्तुतस्तु ओजसोऽपि नैव सङ्घटनापेक्षा। यतस्तदसमस्ते दीर्घसमस्तेऽपि पदे विलसद् बहुशो दृष्टमेव। यथा यो यः शस्त्रं बिअभर्ति इत्यादौ असमस्ते एव चञ्चद्भुजभ्रमितचण्डगदाभिधातसंचूर्णितोरुयुगलस्थे इत्यादौ दीर्घसमासेऽपि। अपरञ्च रौद्रादीन् प्रकाशयतः काव्यस्य यदौज्ज्वल्यं तदेवौज इति प्रतिपादित्वाद्यदि तदसमासायामपि भवेच्चेतत्र नैव दोषाय यथा योः यः शस्त्रं बिभर्ति इत्यादौ। न च तत्र सहृदयमानसानुभाव्यत्वेन नैव किञ्चिदचारुत्वमपि। तेन नैव गुणानां कृते नियतसङ्घटनाया आवश्यकता। यथा चक्षुरादीनां रूपादीनि नियतविषयता यथा माधुर्यस्य करुणादिवृत्तित्वं कोमल व्यञ्जनैः प्रकाशनञ्च ओजसो रौद्रादिवृत्तित्वं कठोरवर्णप्रकाश्यञ्चेति यत्र न व्यभिचारसम्भवः। नैव कदाचित्कठोरवर्णैः माधुर्यव्यञ्जनं न च कोमलवर्णैः रौद्रादेः। इदमप्यवधेयं यद् 'अनवरत' इत्यादौ दीर्घसमासेऽपि पदानां नैसर्गिकं कोमीलत्वमस्त्येव यतो माधुर्यमभिव्यज्यते तथैव 'यो यः शस्त्रं बिभर्ति इत्यादौ समासाभावेऽपि शब्दानां नैसर्गिकं काठिन्यं यदोजसो विषयः। तेन अन्ये एव गु णा अन्या च सङ्घटनेति।

रस के वर्णों से प्रकाशित होने में और ध्वनि के पदों से प्रकाशित होने में भले ही सङ्घटना उपेक्षित हो लेकिन वाक्य व्यङ्ग्य में तो उसके बिना कैसे सौन्दर्य का प्रकटन माना जाय इस आशङ्का के निवारण हेतु प्रकरण का उपस्थापन करते हैं—

रसादि के वाक्य से व्यंगत्व सिद्ध होने पर भी कोई भी निश्चित सङ्घटना गुणों का आश्रय नहीं बन सकती, अतः अनियत संघटना वाले शब्द ही जो कि रस के व्यञ्जक हैं गुणों के आश्रय होते हैं

'मान लिया कि माधुर्य गुण के विषय में जो कहना है कहा जाय किन्तु

ओजोगुण का अनियत संघटन वाले शब्द आश्रय नहीं बन पायेंगे। समासरहित संघटना ओजो गुण का आश्रय कैसे बन पाएगी'' इस आशङ्का के उत्तर में कहा जाता है कि चित्त रुढ़ि मात्र के ग्रहण से दूषित न हो तो इसमें भी हम 'न' नहीं कहेंगे अर्थात् यह कहेंगे कि असमास संघटना कैसे ओजो गुण का आश्रय नहीं हो सकती क्योंकि रौद्र आदि के प्रकाशन के हेतुभूत काव्य की दीप्ति ही ओज है यह पहले ही प्रतिपादित है। वही ओज यदि असमास संघटना में भी हो तो उसमें क्या दोष है। न तो वैसा होने से कोई सहृदय के हृदय से संवेद्य अचारुत्व भी तो नहीं है। (जैसे 'यो यः शस्त्रं बिभर्ति'' आदि में) इस हेतु अनियत संघटना वाले शब्द के आश्रय होने में गुणों की कोई हानि नहीं हैं। उनमें चक्षुस् आदि की तरह अपने अपने नियमित विषय वाले स्वरूप का कभी भी व्यभिचार नहीं होता। (अर्थात् जैसे आँख, जीभ, नाक, चमड़ा और कान के रूप में रस, गन्ध, स्पर्श एवं शब्द नियत विषय है और उनमें व्यभिचार हो नहीं सकता उसी तरह माधुर्य का करुण आदि वृत्ति एवं कोमल वर्णों से व्यक्त होना एवं ओज का रौद्र आदि रस वृत्ति होना और कठोर वर्णों से व्यक्त होना एकदम निश्चित है और उसमें कभी भी कोई व्यभिचार नहीं। कभी भी कठोर वर्णों से माधुर्य व्यक्त नहीं होता, उनसे तो ओज का ही व्यक्त होना है चाहे संघटना असमासा हो या दीर्घसमासा। इस कारण गुण और ही है और संघटना और ही है।

ध्वन्या०— अथवा सङ्घटनारूप एव गुणाः यत्तूक्तम्— 'सङ्घटना वद्गुणानामप्यनियतविषयत्वं प्राप्नोति लक्ष्ये व्यभिचारदर्शनात्' इति तत्राप्येतदुच्यते— यत्र लक्ष्ये परिकल्पितविषयव्यभिचारस्तुद्विरूपमेवास्तु। कथमाचारुत्वं तादृशे विषये सहृदयानां प्रतिभातीति चेत् ? कविशक्ति तिरोहितत्वात्। दोषः शक्तितिरस्कृतत्वात्कदाचिन्न लक्ष्यते। यस्त्वशक्तिकृतो दोषः स झटिति प्रतीयते।

लीला— पुनश्च गुणसंघटनातादात्म्यपक्षमुद्धरति अथवेत्यादिना— अथवा= पक्षान्तरे, गुण= माधुर्यादयः, संघटनारूपाः= संयोजनास्वरूपाः, एव= इत्यवधारणे।

अस्यायमाशयः— एतदपि कथयितुं शक्यते यद्गुणानामसंघटितशब्दवृत्तित्वेऽपि तेषां संघटनाश्रयत्वं नैवापनेतु शक्यते यः शब्देषु संघटनाया अवयवावयविभावेन गुणानान्च व्यङ्ग्यव्यञ्जकभावने वृत्तित्वात्कथं तेषां वैभिन्यं किञ्च रसाभिव्यक्तावेतदेव शब्दानां सामर्थ्यं यत्तथा तथासंघटनामानत्वमर्थात् शब्दगतमाधुर्यादिकं शृङ्गारादि तत्तद्रसाभिव्यञ्जनसामर्थ्यमेव तच्च तथा तथा संघटना। अतः संघटनारूपा एव गुणा इति।

तत्र कृतपूर्वमाक्षेपमुद्धृत्य खण्डयति पूर्वपक्षी यदित्यादिना— यत्= यथा, तु= इति व्यवच्छेदे, उक्तं= प्रतिपादितं यत्सङ्घटनागुणयोरैक्ये वा गुणानां संघटनाश्रयत्वे संमते संघटनावत= संघटनायामिव, गुणानां, अपि, अनियतवि-

षयत्वं= निश्चितलक्ष्याभावत्यं, प्राप्नोति= उत्पद्यते, यतः लक्ष्ये= उदाहरणे, व्यभिचारदर्शनात्= अनिश्चयावभासनात्, इति= इत्थम्। तद्दूषयति तत्रेत्यादिना तत्र= तद्विषये, अपि= च, एतत्= इत्थं, उच्यते= उवस्थाप्यते यत्र= यस्मिन्, लक्ष्ये= उदाहरणे, परिकल्पितविषयव्यभिचारः= व्यवस्थापितलक्ष्यच्युतिः, तत्= तादृशं, विरूपं= व्यभिचारः असङ्गतमिति, एव, अस्तु= भवतु— तत्र न काऽपि हानिः सत्यां हानौ तादृशं लक्ष्यमेवान्यथाकार्यं किन्तु संस्थापितमतनिरासस्तु एकमेव लक्ष्यमाधृत्य नैवाभीष्ट इति। पुनराशङ्क्य समादधाति कथमित्यादिना- तादृशे= संस्थापितमतव्यभिचरिते, विषये= लक्ष्ये, सहृदयानां= रसिकानां, अचा- रुत्वं= असौन्दर्यं, कथं= केन हेतुना, न, अवभाति= प्रतीयते, इति, चेदत्र हेतुः कथ्यते, कविशक्तितिरोहितत्वात्= कवेः शक्तौ प्रतिभाने तिरोहितत्वात्= अन्तर्हितत्वेनेति। तदेवाग्रे विवेचयति द्विविध इत्यादिना— दोषः= दूषणं, हि, द्विविधः द्विप्रकारकः— कवेः= काव्यकर्तुः अव्युत्पत्तिकृतः= व्युत्पत्तिः= तदुपयो- गिसमस्तवस्तुपौर्वापर्यः परामर्शकौशलम् तस्या अभावस्तया कृतो विहितः, अशक्तिकृतः= शक्तिप्रतिभावर्णनीयवस्तुविषयनूतनोल्लेखशालित्वं तस्या अभावस्तया कृतः चेति। तत्र= द्वयोर्मध्ये, अव्युत्पत्तिकृतः= व्युत्पत्यभावेन विहितः, दोषः= त्रुटिः, शक्तितिरस्कृतत्वात्= शक्त्या आवृतत्वात्, कदाचित्= कुत्रचित्, न लक्ष्यते= नापि दृश्यते, यः तु= इति तद्विपरीतं, अशक्तिकृतः= शक्त्यभावेन विहितो दोषः= त्रुटिः, सः= तादृशस्तु, झटिति= झगित्येव, प्रतीयते= अवभासते नैवान्तर्हितो भवतीति।

अस्यायमाशयः—गुणसंघटनयोरैक्यपक्षसमर्थकः स्वपक्षमुद्भायितुं कथयितुं शक्नोति यद्गुणाः संघटनारूपा एव यतः शब्दगतं माधुर्यादिकं शृङ्गारादि तद्रसाभिव्यञ्जनसामर्थ्यमेव तच्च तथा तथा संघटना। अतः गुणानां संघटनारूपत्वं नैव परिहर्तु शक्यते। यच्च संघटनाया अनियतविषयत्वात्तया सह गुणानामैक्ये तेषामपि अनियतविषयत्वमुदेति लक्ष्ये व्यभिचारदर्शनादि यदुक्तं तन्न युक्तम्। लक्ष्ये यदि कश्चिदपि व्यभिचार उत्पद्यते स तथैवास्तु नैव चैकेन लक्ष्येण लक्षणं दूषयितुमुपयुक्तम्। सत्यपि व्यभिचारे कथं तत्र सहृदयानामचारुत्वस्या- नवभास इति चेदुच्यते तत्कविशक्तिपिहितत्वादेव सम्भवति। किञ्च दोषस्तु द्विविधः कवेर्व्युत्पत्त्यभावजातः शक्त्यभावजातश्च। तत्र व्युत्पत्त्यभावत्तदोषः शक्त्यावृतः सन्नैवाऽप्यवभासते किन्तु शक्त्यभावकृतस्तु सद्य एवावभासते। अत्रापि उदाहृतलक्ष्ये व्युत्पत्यभावादेव व्यभिचरितं यद् 'अनवरत' इत्यादौ 'दीर्घसमासताऽवलम्बिता', यो यः शस्त्रं बिभर्ति 'इत्यादौ असमासैव। तच्च शक्त्यावृतत्वादन्तर्हितमतो नैव तत्रावभासयोज्यमचारुत्वमिति।

इस प्रकार गुण एवं संघटना के पृथक् अस्तित्व की स्थापना के बाद पुनः पूर्वपक्ष का मत उद्धृत करते हैं—

इतना होने पर भी गुण तो संघटनारूप ही होते हैं क्योंकि शब्द एवं संघटना का अवयव एवं अवयवी का सम्बन्ध है और गुण एवं शब्द का व्यङ्ग्यव्यञ्जक सम्बन्ध है। अतः दोनों एक ही मानने चाहिए। अथवा यों कहें शब्दों का जो शृङ्गारादि के अभिव्यक्ति का सामर्थ्य है वह उसके संघटनात्मक सन्निवेश से मिलता है, अतः दोनों एक ही हैं।

जो यह कहा कि 'संघटना के लक्ष्य में व्यभिचार पाए जाने के कारण दोनों का एक मानने से गुणों में भी संघटना की तरह अनिश्चित विषयता आ जाएगी' उसमें हम यह कहते हैं कि जिस लक्ष्य में परिकल्पित विषय का व्यभिचार है वह विरूप ही हो क्योंकि एकाध लक्ष्य की असमञ्जसता से लक्षण बदले नहीं जा सकते। 'तो ऐसे में सहृदयों को अचारुत्व की प्रतीति कैसे नहीं होती' कहकर पूछा जाय तो, हम कहेंगे कि ऐसा कवि की कवित्वशक्ति से तिरोहित होने पर ऐसा होता है। दोष दो प्रकार के होते हैं—कवि की व्युत्पत्ति के अभाव से हुआ और कवि की शक्ति के अभाव से हुआ। उनमें से व्युत्पत्ति के अभाव से हुआ दोष जो है वह शक्ति से तिरस्कृत हो जाने के कारण कभी काल प्रतीत भी नहीं होता और जो शक्ति के अभाव से हुआ दोष है वह तुरन्त ही सामने अउभर आता है। यहाँ के उदाहरणों में भी कवि की व्युत्पत्ति से हुआ दोष है, अतः शक्ति के कारण दब गया है।

ध्वन्या०— परिकरश्लोकश्चात्र—

'अव्युत्पत्तिाकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते।।'

तथा हि— महाकवीमामप्युत्तमदेवताविषयकप्रसिद्धसंभोगशृङ्गारनिबन्धनाद्यनौचित्यं शक्तितिरस्कृतत्वात् ग्राम्यत्वेन व प्रतिभासते। यथा कुमारसम्भवे देवीसम्भोगवर्णनम्।

एवमादौ च विषये यथौचित्यत्यागस्तथादशितमेवाग्रे। शक्तितिरस्कृतत्वं चान्वयव्यतिरेकाभ्यामवसीयते। तथा हि शक्तिरहितेन कविता एवंविधे शृङ्गार उपनिबध्यमानः, स्फुटमेव दोषत्वेन प्रतिभासते। नन्वस्मिन्पक्षे— 'यो यः शस्त्रं बिभर्ति' इत्यादौ किमचारुत्वमप्रतीयमानमेवारोपयामः

तस्माद् गुणव्यतिरिक्तत्वे गुणरूपत्वे च संङ्घटननायां अन्यः कश्चिन्नियमहेतुर्वक्तव्य इत्युच्यते—

लीला— तदेवाग्रे उपस्थाप्यते परिकर इत्यादिना— अत्र= विषयेऽस्मिन्, परिकरश्लोकः= प्रकरणसमर्थकमवान्तरपद्यमिति।

तदवतारयति अव्युत्पत्ति' इत्यादि— अव्युत्पत्तिकृतः दोषः कवेः शक्त्या संव्रियते यः तु तस्य अशक्तिकृतः सः झटितिं एव अवभासते इति पदव्यवस्था।

अव्युत्पत्तिकृतः= व्युत्पत्तिः पौर्वापर्यसमन्वयेन अनुकूलविषयोपस्था- पन- कौशलं तस्या अभावस्तया कृतोः विहितः, यः दोषः, सः, कवेः, शक्त्या=

प्रतिभया, संव्रियते—आवृतो भवति, यः, तु= इति व्यवच्छेदे, तस्य= कवेः, अशक्तिकृतः= प्रतिभाभावेन विहितः, सः= तादृशः, तु, झटिति= सद्यः, एव, अवभासते= प्रतीतिमायाति इति।

तदेव दृष्टान्तमुखेन द्रढयितुमुपक्रमते तथेत्यादिना— तथाहि= इति पक्षोपस्थापने, इवं प्रसिद्धमेवेति, यत्, महाकवीनां= लब्धप्रतिष्ठकाव्यकाराणां, अपि= किमुतान्येषां, उत्तमदेवताविषयप्रसिद्धसम्भोगशृङ्गारनिबन्धनादि= वरिष्ठदैवतसम्बद्धप्रख्यातकेलिग्रथनादि, अनौचित्यं= अनुपयुक्तं चमत्काराभिघातकं, शक्तितिरस्कृतत्वात्= कविप्रतिभानावृतत्वात् ग्राम्यत्वेन= औचित्याभावादचमत्कारित्वेन, न प्रतिभासते= द्योतते अपितु तत्रैव श्रान्तं हृदयं न किमन्यत्स्मरति पौर्वापर्यपरामर्शं वा पात्रापात्रविवेकं तच्च प्रतिभाया एव चमत्कार इति। तदुदाहरति यथेत्यादिना— यथा= यद्वत् कुमारसम्भवे= तदाख्ये कालिदासकृतौ महाकाव्ये, देवीसम्भोगवर्णनं= देव्याः पार्वत्याः सम्भोगो व्यवायस्तस्य वर्णनमुपाख्यानमिति। तच्च कुमारसम्भवेऽष्टसर्गे विद्यते साङ्गोपाङ्ग समुपवर्णितम्। एवमादौ= इतिप्रभृतौ, विषये= प्रसङ्गे, यथा= येन प्रकारणे, औचित्यात्यागः= उपयुक्तताया अनुज्झनं, तथा= तेन विधिना, अग्रे= आगामिप्रकरणें दर्शितं= दृष्टान्तितं, एवेति। शक्तितिरस्कृतत्वं= अव्युत्पत्तिकृतदोषाणां प्रतिभानाच्छादनञ्च, अन्वयव्यतिरेकाभ्यां= अन्वयः सुकवित्वेऽदोषताभावः व्यतिरेकः कुकवित्वेऽदोषताऽभावः इति ताभ्यां, अवसीयते= निर्णीयते। तथाहि= ज्ञातमेव, यत्, शक्तिरहितेन= प्रतिभाहीनेन, कविना= काव्यकारेण, एवंविधे= एतादृशे, विषये= लक्ष्ये, उपनिबध्यमानः= ग्रथ्यमानः शृङ्गारः= रतिस्थायिभावात्मको रसस्तत्रापि सम्भोगरूपं, स्फुटमेव= स्पष्टमेव. दोषत्वेन= दूषणरूपेण, प्रतिभासते= द्योतते एव। उपसर्युक्तोदाहरणे तु प्रतिभानवता कविना विषयान्तरोपघातकत्वेन ग्रथितत्वान्नैव तत्रानौचित्यावसर इति। ननु इति प्रश्ने, अस्मिन्= एतादृशे, पक्षे= प्रसङ्गे 'यो यः शस्त्रं बिभर्ति' इत्यादौ= इत्यादिपद्ये, किं= किन्नाम, अचारुत्वं= असौन्दर्यमर्थादनौचित्यं येन चारुत्वापकर्षः स्यादिति। तत्र स्वयमेवोत्तरयति अप्रतीयमानेत्यादिना अप्रतीयमानं= अननुभूयमानं, एव इत्यवधारणे पूर्वापरविमर्शविवेकशालिभिरपि, आरोपयामः= अनुचिन्तयामः— नैव किञ्चित्प्रतीयमानत्वेनाचारुत्वमिति।

प्रकरणमुपसंहरति तस्मादित्यादिना— तस्मात्= तेन हेतुना, सङ्टनायाः= रीते, गुणव्यतिरिक्तत्वे= गुणभिन्नत्वे गुणरूपत्वे= गुणैक्ये, च= अपि, अन्यः= अपर एव, कश्चित्= कोऽपि प्रभावी, नियमहेतुः= प्रबन्धकारणं, वक्तव्यः= उपस्थापनीयः, इति= हेतोः, उच्यते= कथ्यते इति।

प्रकरणस्थास्यायमाशयः— कवेरव्युत्पत्त्या यः सम्भवी दोषः स तु तस्यैव शक्त्याऽवृतो भवति यदि स एव शक्त्यभाव कृतः स तु प्रागेवावभासते एव।

प्रकृतोदाहरणे तु अव्युत्पत्तिकृत एवेति नास्ति तत्र सहृदयानामचारुत्वप्रतीत्य-वकाश:। एवमेव महाकविकृतं जगद्गुर्वो: सम्भोगवर्णनमपि प्रतिभावृतत्वान्नैव अनुचितत्वेन प्रतीयते किञ्च तत्र कविना प्रतिभावशात् इत्थं प्रवर्तितं विद्यते तद्वर्णनमपि यथा तत्र हृदयं निमग्नं पूर्वापरपरामर्शमेव विस्मरति। तेन कृतो ध्नौचित्यावकाश:। एतद्विधे अनौचित्यात्यागनियमस्तु उपरि निर्दिष्टमेव कारिका-कारेण। शक्त्याऽव्युत्पत्तिकृतदोषसंवरणमपि अन्ययव्यतिरेकाभ्यां भवति अर्थात् कवौ प्रतिभानवति अदोषताभाव: सर्वत्र तस्मिन्नेव तच्छून्ये सर्वत्र अदोषताया अभाव एवेति। यदि एतादृश एव प्रसङ्ग: सामान्यविनोपस्थापित: स्याद्यथा कुमारसम्भवे तदा तत्र दोषकाननमेवोत्पद्येत। एतादृशपक्षावधारणे 'यो य: शस्त्रं बिभर्ति' इत्यादौ न किमपि प्रतीयमानमचारुत्वम्। तेन संघटनाया: गुणै सह भिन्नत्वे वा ऐक्ये यो हेतुरुक्त न स पर्याप्त:, अत कश्चिदपर एव प्रभावी नियमहेतुर्वक्तव्य इत्याक्षेपपरिहारायोपस्थाप्यते वक्ष्यमाणा कारिकेति। अत्रेदमप्य-वधेयं यदन्यहेतुवक्तव्ये अयमेव हेतुर्यद् व्यतिरेकपक्षे संघटनाया नियमहेतुदरेव नास्ति। ऐक्यपक्षेऽपि न रसो नियमहेतुर्लक्ष्येषु व्यभिचारादिति।

उक्त बात के समर्थन के लिए श्लोक का उद्धरण करता है पूर्वपक्षी—

इस विषय में भी कारिका अर्थात् समर्थक श्लोक है—

कवि का व्युत्पत्ति के अभाव से जो दोष होता है वह तो उसकी प्रतिभा के बल से ढका जाता है लेकिन जो दोष कवि की शक्ति के अभाव के कारण होता है वह तुरन्त ही दिखाई पड़ता है।

यह प्रसिद्ध है कि महाकवियों का किया जो उत्तम देवता विषयक प्रसिद्ध सम्भोग शृङ्गार का निबन्धन आदि अनौचित्य है वह उनकी शक्ति से तिरस्कृत होने के कारण ग्राम्य रूप में अवभासित नहीं है। जैसे कुमारसम्भव में पार्वती के सम्भोग का वर्णन। यह यद्यपि माता पिता के सम्भोग की तरह अवर्ण्य है फिर भी कवि की प्रतिमा से वही इस तरह उपस्थापित है कि सहृदय भी पूर्वापरपरामर्श को भी भूलकर उसी में निमग्न हो जाता है और उचित, अनुचित का उस समय ज्ञान नहीं होता। इस प्रकार के विषय में कैसे औचित्य का त्याग न हो वह कारिकाकार ने निर्देश किया ही है आगे। अव्युत्पत्ति से हुए दोष का भी शक्ति से तिरस्कृत होना जो है वह भी अन्वय एवं व्यतिरेक से होता है। अन्वय यह है कि कवि के सिद्धहस्त होने से अदोषता होती है। और उसके वैसे न होने से अदोषता नहीं होती।

यह भी सम्भव है कि अगर इस प्रकार के विषय में शक्तिरहित कवि शृङ्गार का निबन्धन करता तो अवश्य ही दोष आ जाता। तो इस दृष्टि से 'यो य: शस्त्रं बिभर्ति' में क्या अचारुत्व है ? प्रतीयमान रूप में कुछ भी नहीं कर आरोपित कर पायेंगे। इस कारण संघटना के गुण से पृथक् होने एवं गुणरूप होने में कोई नया प्रभावी नियम हेतु कहा जाना चाहिए, इसलिए कहा जाता है।

कारिका— तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः।। ६।।

ध्वन्या०— तत्र वक्ता कविः कविनिबद्धो वा, कविनिबद्धश्चापि रसभावरहितो सभावसमन्वितो ना, रसोऽपि कथानायकाश्रयस्तद्विपक्षाश्रयो वा। कथानायकश्च धीरोदात्तादिभेदभिन्नः पूर्वस्तदनन्तरो वेति विकल्पाः। वाच्यं च ध्वन्यात्मरसाङ्गं रसाभासाङ्गं वा अभिनेयार्थमनभिनेयार्थं वा, उत्तमप्रकृत्याश्रयं तदितराश्रयं वेति बहुप्रकारम्।

लीला— इत्थं संघटनागुणयोरेक्यव्यतिरेकत्वविषयं विविच्य सम्प्रति संघटनाया नियमहेतुनिर्देशककारिकाभागमवतारयति तन्नियम इत्यादिना— वक्तृवाच्ययोः औचित्यं तन्नियमे हेतुः इति पदव्यवस्था।

वक्तृवाच्ययोः= वक्ता वाचकः वाच्यं तत्कथनं तयोः औचित्यं= आनुकूल्यं, तन्नियमे= तस्याः संघटनायाः नियमे नियमने हतुः कारणं भवति इति।

सङ्घटनागुणयोस्तादात्म्यं वा व्यतिरिक्तत्वं यदपि स्यात्तस्या नियामकतत्वं तु वक्तृर्वाच्यस्य वा औचित्यमेव न तु रस इति।

कारिकाशयं विवृण्वन् वृत्तिकारः प्रथमं वक्तृभेदान्निरूपयति तत्रेत्यादिना- तत्र= वक्तृवाच्ययोर्मध्ये, वक्ता= वाचकः, द्विविधः कविः= काव्यकृत् स्वयमेव, वा= इति समुच्चये, कविनिबद्धः= कविना निबद्धः कल्पितः इति। यथा—'अथ प्रजानामधियः प्रभाते' इति अत्र कविर्वक्ता 'यो यः शस्त्रं बिभर्ति' इति कविनिबद्धो वक्ता। तत्र कविनिबद्धवक्ता च द्विविधः रसभावरहितः= रसभावाद्यवस्थाविशेषेणानात्त्लुतः साधारणो यथा 'सर्वत्र कल्याणभवेहि राजन्' इत्यत्र कौत्सः, रसभावसमन्वितः= रसभावाद्यनुकूलचित्तवृत्तिनिर्दिष्टो यथा 'यो यः शस्त्रं बिभर्ति' इत्यत्र अश्वत्थामा क्रोधाभिभूतः, रसः= काव्यरसः, अपि द्विविधः कथानायकाश्रयः= कथां नयतिं स्वकर्तव्याङ्गभावमिति कथानायको निर्बहणे फलभागी यथा बेणीसंहारे भीमः स एव आश्रय आलम्बनं यस्य स तादृशो यथा तत्रैव रौद्रः, तद्विपक्षाश्रयः= तस्य नायकस्य विपक्षः प्रतिस्पर्धी यथा रामायणे रावणः स एव आश्रयः आलम्बनं यस्य तादृशो यथा रामायणे वीररौद्रबीभत्साद्यस्तत्र तत्र प्रकरणानुसारिणः वा= इति सर्वत्र समुच्चये, कथानायकः= फलस्वामी, च, धीरोदात्तादिभेदभिन्नः= धीरोदात्तायः धीरोदात्तः धीरोद्धत— धीरललित-धीरप्रशान्ताः ये भेदाः भेदकधर्मास्तैर्भिन्नो विभक्तश्चतुर्धा इति यत्र धीरोदात्तौ धर्मयुद्धवीररप्रधानः सात्वतीलक्षणवृत्तियुतो यथा रामायणे रामः धीरोद्धतः वीररौद्र प्रधानः आरभटीलक्षणवृत्तियुतो यथा— शाकुन्तले दुश्यन्तः, धीरललितो वीरशृङ्गारप्रधानः कैशिकीलक्षणवृत्तियुतो यथा रत्नावल्यामुदयनः, धीरप्रशान्तः, दानधर्म वीरशान्तप्रधानो भारतीयलक्षणवृत्तियुतो यथा नागानन्दे जीमूतवाहन, पूर्वः प्रथमः कथानायकः तदनन्तरम् उपनायकः, वा इत्यत्रापि समुच्चये, इति= इत्थं, विकल्पाः=

वक्तृभेदा इति। उपनायकश्च धीरोदात्तो यथा मुद्राराक्षसे राक्षसः धीरोद्धतो यथा रामायणे रावणः धीरललितो यथा।

धीरप्रशान्तो यथा

वाच्यं= कथनीयं, च= अपि, धन्वात्मरसाङ्गं= ध्वनेरात्मभूतो वाक्यार्थीभूते यो रसस्तस्य अङ्गमुपस्कारकं यथा 'शिखरिणि क्व न' इत्यादौ शुकशावकेन विम्बफलदशनरूपं, रसाभासाङ्गं= रसाभासस्य अनौचित्यत्वेनोद्भावितरसस्य अङ्गमुपस्कारकं यथा 'मुधद्विरेफः' इत्यादौ द्विरेफस्य प्रियया सह मधुपानवर्णनरूपं वा= इति समुच्चये रसग्रहणमत्र भावादेरपि प्रतिबोधकम्। यथा भावोपस्कारक वाच्यं भावाभासोपस्कारकवाच्यमपि। अभिनेयार्थं= वागङ्गसत्वाहार्यैरभिमुख्यं साक्षात्कारप्रायं नेयोऽर्थो, व्यङ्ग्यरूपो ध्वनिस्वभावो यस्य तदभिनेयार्थं वाच्यं दृश्यकाव्यप्रतिपाद्यं अनभिनेयार्थं, अनिभिनेयार्थं= श्रव्यकाव्यप्रतिपाद्यं, वा उत्तम-प्रकृत्याश्रयं= उत्तमप्रकृतयो देवमुन्यादयः सत्वप्रधाना आश्रयोऽवलम्बनं यस्य तत्तथाविधं, तदितराश्रयं= उत्तमप्रकृतिभिन्नमध्यमाधमप्रकृत्याश्रयं, वा, इति= इत्थं, बहुप्रकारं= अनेकविधम्।

इस प्रकार गुण एवं संङ्घटना के बीच ऐक्य एवं पार्थक्य का उपपत्तिपूर्वक विवेचन कर अब सङ्घटना में नियम के हेतु का निर्देशन करने वाली कारिका का अवतारण करते हैं।

''वक्ता एवं वाच्य का औचित्य उसके नियमन में हेतु होते हैं''

गुण एवं संङ्घटना में चाहे ऐक्य हो या पार्थक्य पार्थक्य में भी चाहे गुण सङ्घटना का नियमन तो वक्ता एवं वाच्य के औचित्य से ही होता है।

कारिका के आशय की व्याख्या करते हुए वृत्तिकार पहले वक्ता एवं वाच्य के भेद का उपस्थापन करते हैं—

उसमें वक्ता अर्थात् कहने वाला कवि होता है वा उसके द्वारा निबद्ध वक्ता, कवि का कविनिबद्ध वक्ता रसभाव आदि के आवेश से हीन अथवा उससे युक्त होता है, रस कथानायक वा उसके प्रतिद्वन्द्वी में आश्रित होता है, कथानायक एवं उसका प्रततिद्वन्द्वी अर्थात् प्रतिनायक भी धीरोदात्त, धीरोद्धत धीरललित एवं धीरप्रशान्त करके चार प्रकार का होता है— (जिसमें धर्मयुद्धवीरप्रधान वाला धीरोदात्त, वीररौद्ररसप्रधान धीरोद्धत, वीरशृङ्गाररसप्रधान धीरललित एवं दानधर्मवीरशान्त प्रधान धीर प्रशान्त होता है)। इस प्रकार वक्ता के अनेक भेद होते हैं।

वाय भी ध्वनि के आत्मभूत रस का अङ्ग वा वा रसाभास का अङ्ग होता है, अभिनेय वा अनभिनेय—अनभिनेय वा किया जाने वला होता है, उत्तम प्रकृति के वक्ता में आश्रित वा मध्यम वा अधम प्रकृति के वक्ता में आश्रित करके अनेक प्रकार का होता है।

ध्वन्या०— तत्र यदा कविरपगतरसभावो वक्ता तदा रचनायाः कामचारः। यदापि कविनिबद्धो वक्ता रसभावरहितस्तदा स एव। यदा तु

कविः कविनिबद्धो वा वक्ता रसभावसमन्वितो रसश्च प्रधानाश्रितत्वाद् ध्वन्यात्मभूतस्तदा ध्वन्यात्मभूततस्तदा नियमेनैव तत्रासमासमध्यसमासे एव सङ्घटने।

लीला– इत्थं कारिकाशयविस्तारप्रसङ्गे वक्तृवाच्ययोः सम्भाव्यमुख्य–भेदानिरूप्य सम्प्रति तद्गतं सङ्घटनानियामकमौचित्यं निर्दिशति तत्रेत्यादिवाक्य–समूहेन–तत्र= तत्प्रकरणे, यदा= यस्यामवस्थायां, कविः= काव्यकारः, अपगत–रसभावः= रसभावाद्यावेशरहितः, यद्यपि इतिवृताङ्गतया स प्रधानरसानुयायी तु भवत्येव तथापि तावति तथाविधावेशरहित इति, वक्ता, तदा= तदवस्थायां, रचनायाः= सङ्घटनायाः, कामचारः= स्वाच्छन्द्यमेव अर्थात् सोऽमल्पमध्यमदीर्घस–मासासु यथेच्छं प्रयुञ्जीत, तन्न व्यभिचाराय भवति। यदा= यत्र कविनिबद्धं वक्ता, अपि, रसभावरहितः= तथैव रसभावाद्यावेशहीनः, तत्र, सः= सङ्घटनायाः कामचार एव। यदा= यत्र, तु= इति पक्षान्तरे कविः, वा, कविनिबद्धः, वक्ता, रसभावसमन्वितः= रसभावाद्यावेशयुतः– (अत्रेदमवधेयं यत्कविस्तु सदा रसाविष्ट एव भवितुमर्हति। तस्मिन् नीरसे तु काव्यमेव नीरसं भवति। तथापि स यमका–दिचित्रप्रधानो रसादिहीन इत्युक्तः। एवमेव तन्निबद्धवक्ताऽपि कदापि तटस्थो नैवोपेक्ष्यते। तनेनाऽपि नियमेन रसभावसमन्विते– नैव भाव्यमेव। तथापि अव–स्थान्तरे तस्य तथा कल्पना।)

रसश्च प्रधानाश्रितत्वात्= वाक्यार्थत्वात्, ध्वन्यात्मभूतः न तु रसवदलङ्कारः प्रायः, तदा= तत्स्थितौ, तत्र= काव्ये, नियमेन= स्थित्या, एव, तत्र= तादृशे स्थले, असमासामध्यमसमासे– असमासा, अल्पसमासा वा मध्यमसमासा च, एव= इतिदीर्घसमासाव्यवच्छेदाय, सङ्घटने, तत्रापि असमासा एव वरम्, अन्यथा अर्थात् तदितरस्थितौ तु दीर्घसमासा अपि योज्यैव। नियमोऽयं रससामान्य सम्बद्धः। रसविशेषे तु अग्रे लक्ष्यते। 'यो यः शस्त्रं बिभर्ति' इत्यादौ कविनिबद्ध–वक्ताऽपि क्रोधाभिभूतो रसश्च वाक्यार्थीभूत इति तत्र अल्पसमासा सङ्घटना उपयुक्तैव। एवमेव रसाविष्टचेतसः कवेर्वाच्ये यथा- अनुभवन्नवदोलमृतूत्सवं पदुरपि प्रियकण्ठजिघृक्षया इत्यत्र अल्पसमासाऽनुकूला सङ्घटना।

इस प्रकार कारिका के आशय का विस्तार करने के क्रम में वक्ता एवं वाच्य के सम्भाव्य मुख्य भेदों को बतलाकर अब उसके कारण सङ्घटना के नियामक औचित्य का निर्देश करते हैं–

उसमें से जब वक्ता कवि रस भाव आदि से अलग रहता है तब सङ्घटना में वह स्वच्छन्द रहेगा चाहे जैसी सङ्घटना रहे। (इसमें यह समझना चाहिए कि कवि एकदम नीरस हो जाय तो काव्य ही बेकार हो जाएगा। अतः कवि के रस आदि से अलग रहने का अशय उसकी उस अवस्था से है जब वह यमक आदि अलङ्कारों के निबन्धन में व्यस्त हो जाता है। जब कविनिबद्ध वक्ता भी रस भाव आदि से

अनभिभूत रहता है तब भी वही बात है। लेकिन जब कवि वा उसके द्वारा निबद्ध वक्ता रस भाव आदि से आवेश में रहता है और रस भी प्रधान वाक्यार्थ में आश्रित होने से ध्वनि की आत्मा बन जाता है और रस भी प्रधान वाक्यार्थ में आश्रित होने से ध्वनि की आत्मा बन जाता है उस अवस्था में नियम से ही वहाँ असमासा वा मध्यम समास सङ्घटना का प्रयोग होना जरूरी है। (यह सभी रसों में सामान्यतः लागू होता है) वैसा न होने से दीर्घ समासा का प्रयोग दूषित नहीं होता।

ध्वन्या०— करुणविप्रलम्भयोस्त्वसमासैव सङ्घटना।

कथमिति चेदुच्यते— रसो यदा प्राधान्येन प्रतिपाद्यस्तदा तत्प्रतीतौ व्यवधायका विरोधिनश्च सर्वात्मनैव परिहार्याः।

एवं च दीर्घसमासा सङ्घटना समासानामनेकप्रकारसम्भावनया कदाचिद्रसप्रतीति व्यवदधातीति तस्यां नात्यन्तमभनिवेशः शोभते। विशेषतोऽभिनेयार्थे काव्ये। ततोऽन्यत्र च विशेषतः करुणविप्रलम्भ– शृङ्गारयोः। तयोहि सुकुमारतरत्वात्स्वल्पायाग़प्यस्वच्छताया शब्दार्थयोः प्रतीतिमंन्थरीभवति।

लीला— एवं सामान्येन सङ्घटनाया नियमेन निर्दिश्य सम्प्रति रसविशेषे तस्या नियमनं निर्दिदिक्षुः प्रथमं करुणशृङ्गारयोस्तन्नियामकत्वं निर्दिशति करुणत्यादिना— पूर्वं निर्देशितं यत्कवौ वा तन्निबद्धवक्तारं रसभावादिसमावेशयुक्ते रसे च वाक्यार्थीभूते सङ्घटनाऽसमासा वा मध्यमसमासाऽभीष्टेति। तथैव तद्विपरीते तु दीर्घसमासापीति किन्तु तद्विपरीतेऽपि, करुणविप्रलम्भशृङ्गारयोः तु= इति व्यवच्छेदे अतथाभूतेऽपि, असमासा= समासरहिता वा अल्पसमासा, एव, सङ्घटना आवश्यकी। यथा बाले ! नाथ विमुञ्च माननि ! इत्यादौ। तत्र तथाकरणे हेतुनिर्देशायोपक्रमते कथमित्यादिना- कथं= किन्निमित्तं इति= इत्थं मा पृच्छ्यते चेत्, उच्यते= कथ्यते, हेतुमाह रसेत्यादिना= यदा= यत्र, रसः, प्राधान्येन= वाक्यार्थत्वेन, प्रतिपाद्यः निरूपणीयः, तदा= तदवसरे,तत्प्रतीतौ= रसावभासने, व्यवधायकाः= विलम्बकारकाः विरोधिनः= प्रतिबन्धकाश्च विषयाः, सर्वात्मना= सर्वतोभावेन, एव, परिहार्याः= दूरे कर्तव्याः। एवञ्च= अनेन हेतुना, दीर्घसमाससङ्घटनासमासानां= दीर्घसमासा या सङ्घटना तत्र ये समासास्तेषां, अनेकप्रकारसम्भावनया= विविधसमासानां सम्भाव्यत्वेन यथा 'राजपुरुषः' इत्यत्र राज्ञः पुरुषः इति षष्ठीतत्पुरुरुषस्य वा राजा पुरुषो यस्य इति बहुव्रीहेर्वा राजा एव पुरुषः इत्यादौ, कदाचित्= यस्मिन्कस्मिन्नवसरे, रसप्रतीतिं= रसावभासनं व्यवदधाति= विलम्बयति, इति= हेतोः तस्यां= दीर्घसमासायां, अत्यन्तं, अभिनिवेशः= आग्रहः, न शोभते= नैव श्लाघ्यो भवति-अतथासम्भावनायां तु न काऽपि हानिः। तत्रापि विशेषं सङ्केतयति विशेषरत इत्यादिना तच्च, विशेषतः= आधिक्येन,

अभिनेयाऽर्थे= दृश्यकाव्यगतप्रतीयमानार्थे, काव्ये श्रव्यकाव्यापेक्षयाऽप्यधिकमेव। ततः= तस्मात्, अन्यत्र= श्रव्यादावपि, च, विशेषतः= आधिक्येन, करुणविप्रल-म्भशृङ्गारयोः, इति। तत्र हेतुं निर्दिशति तयोरित्यादिना— तयो करुणविप्रलम्भ-शृङ्गारयोः हि= यतः, सुकुमारतरतवात्= इतरापेक्षया कोलप्रकृतिकत्वात्, स्वल्-पायां= स्तोकायामपि, अस्वच्छतायां= बाधकाभासेऽपि, शब्दार्थयोः, प्रतीययानता, मन्थरी भवति= विलम्बिता भवति इति।

प्रकरणस्यास्यायमाशयः— सर्वत्रैव कवौ वा तन्निबद्धवक्तरि रसाद्यावे-शयुक्ते रसे च वाक्यार्थीभूते असमासा वा मध्यमसमासा सङ्घटना श्लाघ्या तद्विपरीते दीर्घसमासाऽपि किन्तु करुणविप्रलम्भशृङ्गारयोस्तु सर्वत्रासमासैव सङ्घटना यतः सामान्यतोऽपि यदा रसो वाक्यार्थत्वेन प्रतिपाद्यस्तदा तदास्वादे ये व्यव-धायकाः आस्वादविघ्नरूपाविरोधनश्च तद्विपरीतास्वादमयाश्च सर्वतोभावेन परिहार्या भवन्ति। दीर्घसमासाभ्याशे तत्र विविधप्रकारसम्भावनया विलम्बः सम्भ-वतीति न तत्र विशेषग्रहः कर्तव्यः। तत्रापि अभिनेयेऽर्थे तु कदापि नैव यतोऽत्रुटितेन व्यङ्ग्येन समासार्थाभिनयस्यासम्भवात्। एवमेव अनभिनेयार्थेऽपि तत्रापि विशेषेण करुणविप्रलम्भशृङ्गारयोः यतस्तयोर्माधुर्यप्रकर्षाश्रयत्वेन नितान्त कोमलशब्दार्थ-व्यङ्ग्यत्वात् नितान्तस्वल्पेऽपि विलम्बकाभासे रसास्वादः प्रतिहन्यत इति।

इस प्रकार सामान्य रूप से रस से सङ्घटना का नियमन बताकर अब उसमें भी विशेष स्थिति का निर्देश करते हैं—

करुण एवं विप्रलम्भ शृङ्गार में तो असमासा ही सङ्घटना का प्रयोग होना चाहिए। अगर यह पूछा जाय कि क्यों ? कहा जाता है। किसी भी रस का जब वाक्यार्थ के रूप में प्रतिपादन करना होता है तब उसकी प्रतीति में व्यवधान करने ववाले वा उसके विरोधी आस्वादे वाले प्रतिबन्धक जो भी हैं उन सबका सभी प्रकार से परिहार कर लेना जरूरी हैं, नहीं तो रस आस्वाद्य नहीं रह पाएगा। इसी तरह दीर्घसमासा सङ्घटना में समासों के अनेक प्रकार की सम्भावनायें होने से (जैसे कृष्णाश्व में कृष्ण का घोड़ा काला घोड़ा काला है घोड़ा जिसका ऐसा व्यक्ति आदि।) रस की प्रतीति में व्यवधान होने से बचने के लिए उसमें ज्यादा आग्रह अच्छा नहीं होता, उसमें भी खाश करके अभिनेय अर्थ वाले काव्य में अर्थात् दृश्य काव्य में, उससे अन्यत्र अर्थात् श्रव्यकाव्य में भी और भी ,खाश कर करुण एवं विप्रलम्भ शृङ्गार में तो एकदम नहीं होता क्योंकि ये दोनों नितान्त कोमल पदों से व्यक्त होने वाले होने से थोड़ी सी भी बाधा आ जाने पर शब्द एवं अर्थ की प्रतीति मन्द पड़ जाएगी।

**ध्वन्या०— रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ मध्यमसमासा सङ्घटना कदाचिद्धीरोद्धतनायकाश्रयेण दीर्घसमासापि वा तदाक्षेपाविनाभाविरसो-चितवाच्यापेक्षया न विगुणा भवतीति सापि नात्यन्तं परिहार्या।**

लीला— इत्थं करुणविप्रलम्भशृङ्गारयोः सङ्घटनास्वरूपं निर्दिश्य सम्प्रति रौद्रादावपि तन्नियमं निर्दिशति रसान्तर इत्यादिना— पुनः इति पक्षान्तरे रौद्रादौ= रौद्रप्रभृतौ, रसान्तरे= इतररसे, प्रतिपाद्ये= व्यञ्जनीये, मध्यमसमासा= नातिदीर्घ-समासा, सङ्घटना, प्रशस्यते, कदाचित्= कुचित्स्थले तु, धीरोद्धतनायकसम्बन्ध-व्यापाराश्रययेण= धीरोद्धतप्रकृतिकनायकसम्मतव्यापार— माधृत्य, दीर्घसमासा समस्तबहुपदा अपि प्रशस्यते यथा— चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चू-र्णितोरूयुगलस्य, इत्यादौ, वा= इति पक्षान्तरे, तदाक्षेपाविनाभाविरसोचितवा-च्यापेक्षया= तस्याः दीर्घसमाससङ्घटनायाः य आक्षेपः अनुपपत्तिमूलकोऽध्याहार-स्तेन विना यो न भवति व्यङ्ग्याभिव्यञ्जकस्तादृशो रसोचितो रसव्यञ्जकत-योपादीयमानो यो वाच्यस्तस्यापेक्षया, विगुणा= प्रतिकूला, न, भवति, सा= तादृशी, अपि न, अततरिहार्या= त्याज्या न च तदनुधावने लाभ इति।

अस्यायमाशयः— करुणविप्रलम्भशृङ्गारयोर्माधुर्यगुणप्रसङ्गेन नितान्तकोम-लप्रकृतिकत्वात्स्वल्पेऽपि व्यवधाने तत्प्रतीतेर्मन्थरीभवनसम्भावनया बहुप्रकार-सम्भावनाया दीर्घसमासायाः सङ्घटनायाः प्रयोगो न प्रशस्तः किन्तु रौद्रादीनां तदपेक्षया पुरुषप्रकृतिकत्वात्तद्विपरीतं समान्यतो मध्यसमासा शस्ता धीरोद्धतनाय-कस्योद्धताक्तौ दीर्घसमासाऽपि प्रशस्ता एवमेव सङ्घटनायाः, आक्षेपं विना यदि कुत्राचन्द्रसस्य प्रतीतिर्न सम्भवति तादृशरसोचितवाच्यापेक्षा दीर्घ्यसमासाऽसि न विगुणा भवतीति दीर्घसमासाऽपि प्रकरणानुकूल्येन ग्राह्यैव भवति। सङ्घटना विषये इदमेव सारं यत्सा तथा प्रयोक्तव्या यथा वाच्ये झटिति प्रतीतिर्भवेत् तत्रापि वक्त्राद्यौचित्यमेव तस्य नियामकं तत्वमिति।

इस प्रकार करुण एवं विप्रलम्भ शृङ्गार मे सङ्घटना के स्वरूप का निर्धारण करने के बाद अब रौद्रादि में उसकी स्थिति का निर्देश करते हैं—

इसके विपरीत रौद्र आदि अन्य रसों के प्रतिपादन में मध्यमसमासा सङ्घटना उचित पड़ती है और कहीं—कहीं धीरोद्धत नायक से सम्बन्धित व्यापार के आश्रय से दीर्घसमासा भी उचित होती है और यह भी कि उसके आक्षेप के विना प्रतीत हो न पाने वाले रस के अनुकूल वाच्य में अपेक्षा होने से दीर्घसमासा भी गुणघातक नहीं होती। सार तो यह है कि सङ्घटना के स्वरूप का प्रयोग उस तरह किया जाना चाहिए जिसके कि वाच्य में बिना विलम्ब के प्रतीति हो सके।

ध्वन्या०— सर्वासु च सङ्घटनासु प्रसादाख्यो गुणो व्यापी। स हि सर्वरससाधारणः सर्वसङ्घटनासाधारणश्चेत्युक्तम्। प्रसादातिक्रमे। ह्यसमा-सापि सङ्घटना करुणविप्रलम्भशृङ्गारौ न व्यनक्ति। तदपरित्यागे च मध्यम-समासापि न न प्रकाशयति। तस्मात्सर्वत्र प्रसादोऽनुसर्तव्यः।

लीला— इत्थं वक्तृवाच्याद्यौचित्येन सङ्घटनाया नियमं निर्दिश्य सम्प्रति तत्र प्रसादगुणस्यावस्थितिं निर्दिशति सर्वास्वित्यादिना= सर्वासु= निखिलास्वेव

असमासामध्यमसमासादीर्घसमासासु, च= एव, सङ्घटनासु= रीतिषु, प्रसादाख्य:= समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति स प्रसादो गुणो ज्ञेय: सर्वसाधारणक्रिय: 'इत्युक्तो गुण:, व्यापी= व्यापकत्वेन स्थितो भवेदिति।

सङ्घटनाया ईदृशं स्वरूपमपेक्ष्यते येन झटित्येव वाच्येऽर्थस्य प्रतीतिर्भवेदिति। तथाकथने युक्तिमाह स इत्यादिना— हि= यत:, स:= प्रसादाख्यो गुण: सर्वरस-साधारण:= सर्वेष्वेवसङ्घटनाभेदेषु च समाना च= इति समुच्चये, इति= इत्थं, उक्तं= कथितमस्ति। 'समर्पकत्वं काव्यस्य' इत्यादिकारिकायां, इति। तत्र स्वसोक्तिं निदर्शनमुखेन द्रढयति प्रसादेत्यादिना— हि= यत:, प्रसादातिक्रमे= प्रसादगुणोल्लङ्घने, असमासा= समासरहिता वा अल्पसमासा, सङ्घटना= रीति:, करुणाविप्रलम्भशृङ्गारौ, न, व्यनक्ति= प्रत्याययति तदपरित्यागे= तस्य प्रसाद-गुणस्य अपरित्यागे अनुज्झने, च= तु, मध्यमसमासा, अपि= च सङ्घटना, न, न, प्रकाशयति= अपितु तावपि प्रकाशयत्येव। प्रकरणमुपसंहरति तस्यादित्या-दिना— तस्मात्= कारणात्, सर्वत्र= सर्वास्वेव सङ्घटनासु, प्रसाद:= सर्वसाधार-णव्यापार: प्रसादगुण:, अनुसर्तव्य:= आश्रयणीय इति।

सङ्घटनाया इदमपरं नियमनं यत्तत्र प्रसादगुणेन व्यापिना भाव्यमेव। यदि प्रसाद: प्रसादितस्तदा मध्यमसमासाऽपि करुणविप्रलम्भशृङ्गारावपि व्यनक्ति प्रदुज्झनेऽल्पसमासाऽपि न। तेन सङ्घटनया एतादृश्या भाव्यं यत्तत्प्रयोगे न कदापि प्रसादो विहतो भवेदिति।

इस प्रकार वक्ता एवं वाच्य के औचित्य से सङ्घटना का नियमन बताकर अब प्रसाद गुण से इसका नियमन बताते हैं—

सभी प्रकार की सङ्घटनाओं में प्रसाद गुण व्यापक रूप से अवस्थित होना आवश्यक है। वह जो है सभी रसों में समान एवं सभी सङ्घटनाओं में भी समान कहा गया है। प्रसाद के अतिक्रमण होने से सङ्घटना अल्पसमासा होकर भी करुण एवं विप्रलम्भ शृङ्गार को व्यक्त नहीं कर सकती और उसके अपरित्याग से मध्यम समासा भी उसको प्रकाशित कर सकती है। इस कारण सभी स्थलों में प्रसाद गुण का अनुसरण किया जाना चाहिए।

ध्वन्या०— अत एव च 'यो य: शस्त्रं बिभर्ति' इत्यादौ यद्योजस: स्थितिनेष्यते तत्प्रसादाख्य एव गुणो न माधुर्यम्। न चाचारुत्वम्, अभिप्रेतरसप्रकाशनात्। तस्माद् गुणाव्यतिरिक्तत्वे वा संघटनाया यथोक्ता-दौचित्याद्विषयनियमोऽस्तीति तस्या अपि रसव्यञ्जकत्वम्। तस्याश्च रसाभिव्यक्तिनिमित्तभूताया त्तभूयोऽयमनन्तरोक्तो नियमहेतु: स एव गुणानां नियतो विषय इति गुणाश्रयेण व्यवस्थानप्यविरुद्धम्।

लीला— एवं प्रकरणमुपस्थाप्य तत्र पर्यवसितं निर्दिशति अत इत्यादिना— अत एव= अनेनैव हेतुना, च= अपि 'यो य: शस्त्रं बिभर्ति' इत्यादौ= इत्यादिपद्ये,

यदि, ओजसः= ओजोगुणस्य, स्थितिः= अवस्थानं, न इष्यते= मन्यते तत्र दीर्घसमासाभावात्, तत्= तदा प्रसादाख्यः= तत्कथितः एव, गुणः, न= नैव, माधुर्यम्, ओजोमाधुर्ययोरन्योन्याभावरूपत्वात्। न= नैव, च= माधुर्योभावत्वेनैव ओजसोऽपि प्रकर्षत्वाभावादेव, अचारुत्वं= असुन्दरत्वं सिद्ध्यति तत्र हेतुमाह अभिप्रेतेत्यादिना अभिप्रेतरसप्रकाशनात्= अभिप्रेतोऽभीष्टो यो रसो रौद्रः तस्य प्रकाशनात्= समभिव्यञ्जनात्। प्रसादिनैव स रसः प्रकाशिता इत्याशयः। गुणसङ्घटनयोर्बहुचर्चितप्रकरणमुपसंहृत्य तत्र पर्यवसितं निर्दिशति तस्मादित्यादिना— तस्मात्= तेन हेतुना, सङ्घटनायाः, गुणाव्यतिरिक्तत्वे= गुणैः सह ऐक्ये, वा गुणव्यतिरिक्तत्वे= गुणैः सह पार्थक्येऽपि, यथोक्तात्= वक्तृवाच्यगतात्, औचित्यात्, विषयनिममः= लक्ष्यस्वरूपम्, अस्ति= विद्यते, इति= हेतोः, तस्याः= सङ्घटनायाः, अपि,= च, रसव्यञ्जकत्वं= रसप्रकाशकत्वम्, सिध्यतीति शेषः। रसाभिनव्यक्तिनिमित्तभूतायाः= रसव्यञ्जनाया निमित्तकारणत्वेन सिद्धायाः, तस्याः= सञ्टनाया, च, यः= यादृशः, अयं, अनन्तरोक्तः= सद्य एव व्याख्यातः, नियमहेतुः= विधिकारणम्, सः, एव= नान्यः, गुणानां= माधुर्यादीनां, विषयः= लक्ष्यं इति= हेतोः, तस्याः, गुणाश्रयेण= गुणालम्बनत्वेन, अवस्थानं= स्थितिः, अपि, अविरुद्धं= न असङ्गतमिति।

अस्यायमाशयः— अनेनेदं पर्यवस्यति यद् यदि गुणाः सङ्घटनैकरूपाः तत्र गुणनियम एव तस्या अपि नियमः, यदि सा गुणाधीना तत्रापि स एव। सङ्घटनाश्रयगुणपक्षेऽपि सङ्घटनाया नियामकत्वेन यद्वक्त्रवाच्यौचित्यं हेतुत्वैनौक्तं तदेव गुणानामपि नियमहेतुः, इति त्रिष्वेव पक्षेषु नैव कश्चिद्विरोध इति।। ६।।

अब प्रकरण का उपसंहार करते हुए उसमें पर्यवसित अर्थ का निर्देश करते हैं—

कस कारण से भी 'यो यः शस्त्रं बिभर्ति' इत्यादि पद्य में यदि दीर्घसमासा सङ्घटना न होने के नाते ओजो गुण की स्थिति नहीं मानी जाती तो वहाँ प्रसाद गुण है न कि माधुर्य। क्योंकि ओज एवं माधुर्य में परस्पर अन्योन्याभाव होता है। प्रसाद का सब से अच्छा मेल बैठ जाता है। न तो वहाँ अचारुत्व ही है क्योंकि वहाँ अभीष्ट जो रौद्र रस है उसका पूर्ण रूप से प्रकाशन है ही। इस कारण सङ्घटना के गुणों से ऐक्य वा पार्थक्य जो भी हो उपर्युक्त वक्तृगत एवं वाच्यगत औचित्य से विषय का नियम तो है ही। इस कारण उसका भी रसों का व्यञ्जक होना सिद्ध हो जाता है। इस प्रकार रसों की अभिव्यक्ति के निमित्त बनी सङ्घटना को जो यह पीछे बताया गया नियम हेतु है उसी का ही गुणों भी नियत विषय होने से सङ्घटना का गुणों के आश्रय के रूप में वा गुणों में आश्रित होने के रूप में रहना कभी असङ्गत नहीं होगा। कहने का आशय यह है कि यदि गुण सङ्घटना से एक रूप वाले हैं तो गुणों के जो नियम हैं वे ही सङ्घटना के भी हो जाते हैं और यदि सङ्घटना गुणाधीन है तो भी वही बात होगी और यदि गुणों को सङ्घटना में आश्रित माना जाय तो भी सङ्घटना के नियामक के

रूप में जो वक्तृगत एवं वाच्यगत औचित्य हेतु के रूप में कहे गए हैं वे ही गुणों के भी नियामक हेतु होंगे। इस प्रकार तीनों पक्षों में कोई विरोध वा असङ्गति नहीं है।।६।।

कारिका— विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति।
काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा।। ७।।

ध्वन्या०— वक्तृवाच्यगतौचित्ये सत्यपि विषयाश्रयमन्यदौचित्यं सङ्घटनां नियच्छति। यतः काव्यस्य प्रभेदा मुक्तकं संस्कृतप्राकृतापभ्रंशनिबद्धम। सन्दानितकविशेषककलापककुलकानि। पर्यायबन्धः परिकथा खण्डकथासकलकथे सगबन्धोऽभिनेयार्थमाख्यायि काकथे इत्येवमादयः। तदाश्रयेणापि सङ्घटना विशेषवतो भवति।

तत्र मुक्तकेषु रसबन्धाभिनिवेशिनः कवेस्तदाश्रयमौत्यिम्। तच्च दाशतमेव। अन्यः कामचारः। मुक्तकेषु प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव।

लीला— इत्थं सङ्घटनायाः वक्तृवाच्यौचित्यवशान्नियमनं निर्दिश्य सम्प्रति तस्या अपरमपि नियामकं निर्दिशति कारिकारो विषयेत्यादिना— विषयाश्रयं अन्यत् औचित्यम् अपि तां नियच्छति सा हि काव्यप्रभेदाश्रयतः भेदवती स्थिता इति पदव्यवस्था।

विषयाश्रयं= विषयः सङ्घातविशेषात्मकः प्रबन्धः स एव आश्रय आलम्बनं यस्य तत् तादृशं, अन्यत्= अपरं वक्तृवाच्यौचित्याद्भिन्नं, औचित्यं= योग्यत्वं, अपि= च, तां= त्रिविधरूपां, सङ्घटनां, नियच्छति= नियमयति। सा= तादृशी सङ्घटना, हि,= इति अवधारणे, निश्चयेन, काव्यप्रभेदाश्रयतः— काव्यस्य ये प्रभेदाः मुक्तकादयः तेषां आश्रयतः आलम्बनात्, भेदवती भिन्ना इति।

वक्तृवाच्यौचित्यादन्यमपि विद्यते तत्वं यत्सङ्घटनां नियमयति। तच्च विषयौचित्यमिति विषयो नाम सङ्घातविशेषः। विषयौचित्यं केवलं तारतम्यभेदमात्रव्याप्तं न त्वनेन वक्तृवाच्यौचित्यं निवार्यते। इत्थं विषयौचित्यनियन्त्रिता सङ्घटना मुक्तकादिकाव्यभेदाश्रयणाद् भेदयुता भवतीत्याशयः।

कारिकां विवृणोति वृत्तिकारः वक्त्रित्यादिना— वक्तृवाच्यगतौचित्ये= वक्तृवाच्यसंसाधितयोग्यत्वे, सति= विद्यमाने तस्य त्वविवार्यत्वात्, अपि= इति निर्धारणे वक्तृवाच्यगतौचित्यं तु प्राथम्येन विद्यते एव तदनन्तरमपि इति विषयाश्रयं= सङ्घातविशेषाश्रितं, अन्यत्= अपरं, औचित्यं= योग्यत्वं, सङ्घटना= रीतिः, नियच्छति= नियमयति। यतः= यस्माद्धेतोः, काव्यस्य, प्रभेदाः= प्रकारः, संस्कृतप्राकृतापभ्रंशनिबद्धं= तत्तद्भाषासु ग्रंथितं, मुक्तकं= मुक्तमन्येन अनालिङ्गितमिति,

न तु प्रबन्धमध्यवर्ति, अनेन प्रकरणवशात् स्वतन्त्रपद्यमपि गृह्यते। सन्दानितकविशेषककलापककुलकानि= द्वाभ्यां क्रियासमाप्तौ सन्दानितकं, त्रिभिस्तथैव विशेषकं, चतुर्भिस्तथैव कलापकं, पञ्चप्रभृतिभिस्तथैव कुलकं चेतिद्वन्द्वः पर्यायबन्धः= अवान्तरक्रियासमाप्तावपि एकवर्णनोद्देशेन प्रवृतापर्यायबन्धः परिकथा= कमप्येकं पुरुषार्थमुद्दिश्य प्रकारावैचित्रेण अनन्तवृत्तान्तवर्णनप्रकारा, परिकथा, खण्डकथासकलकथे= खण्डकथा एकदेशवर्णना सकलकथा समस्तफलाऽन्तेविवृत्तवर्णना,- द्वयोरेतयोः प्राकृतप्रसिद्धिः, सर्गबन्धः= महाकाव्यरूपः पुरुषार्थफलः समस्तवस्तुवर्णनाप्रबन्धः, स च संस्कृते एव, अभिनेयार्थं= अवान्तरभेदसहितं दशरूपकमनेकभाषाव्यामिश्ररूपं, आख्यायिकाकथे= आख्यायिका उच्छ्वासविभक्तां वक्त्रायरवक्त्रादिना च युक्ता, कथा तद्विरहिता द्वयोरेव गद्यबन्धस्वरूपतया द्वन्द्वेन निर्देशः, इति, एवमादयः आदिपदाच्चप्पूरपि। अत्र मुक्तकमिति मुक्तकमन्येनलिङ्गितमिति संज्ञायां कन्। तेन स्वतन्त्रतया परिसमाप्तिनिराकाङ्क्षार्थमपि प्रबन्धमध्यवर्ति न मुक्तकभित्युच्यते इति मुक्तकं तु विषयशब्देन यदुक्तं तत्सङ्घाताभावेन स्वातन्त्र्यमात्रं प्रदर्शयितुं स्वप्रतिष्ठितमाकाशमिति यथा। इत्यपि च लोचनकारा अभिनवगुप्तपादाः। अनेन मुक्तकमिति केवलं निराकाङ्क्षप्रतिपत्तये स्वेतरानपेक्षि इति व्यज्यते। किन्तु अस्मद्विवेकेन तु इदं सङ्घातरूपस्य एकेनैव क्रियासमाप्तिमत्पद्यमपि निर्दिश्यते तत्र तथैव प्रसङ्गात्। यथा एकेनैव क्रियासमाप्तौ मुक्तकं तच्च संस्कृतप्राकृतापभ्रंशेषु एकतमे निबद्धं सम्भवति, द्वाभ्यां क्रियासमाप्तौ तु सन्दानितकमित्यादि। मुक्तकस्याऽपि रसस्यन्दित्वात्सङ्घटनानियमे स्वातन्त्र्यमस्तीति वचनं तु सिद्धमेव। सारं तु यथा वक्तृवाच्यौचित्येन सङ्घटना नियम्यते तथैव विषयस्यापि मुक्तकादिप्रभेदेन वैचित्र्यात्तदौचित्येनाऽपि सा नियम्यत एवेति। तत्रापि विषयौचित्यं केवलं तारतम्यभेदमात्रव्याप्तं न तु तद्वक्तृवाच्यौचित्यनिवारकमिति लोचने स्पष्टमेव।

अपि च संस्कृतप्राकृतापभ्रंशशनिबद्धमिति पदं मुक्तकमित्यस्यैव विशेषणं क्रमभावित्वादिति लोचने यदुक्तं, एकवचनान्तत्वेन निर्देशादित्युक्तं तच्च सन्दानितकेत्यादिना तु विपरिणामेन योज्यमिति बालप्रेयायां व्याख्यातमेव। अनेन पूर्वेषां तु मुक्तकादीनां भाषायामनियम, 'इति लोचनकारवचनेन च मुक्तकसन्दानितक— विशेषककलापककुलकानां संस्कृतप्राकृतापभ्रंशेष्वन्यतमे निबन्ध्यतां सिध्यत्येव। सर्गबन्धः संस्कृते एवेति लोचनकारमतं वृत्तितस्तु तनन सिध्यत्येव। अत्र कानिचित्प्रकरणपद्यानि—

यथाग्नेये— मुक्तकं श्लोक एवैकश्चमत्कारक्षमः सताम्।
द्वाभ्यां तु युग्मकज्ञेयं त्रिभिः श्लोकैर्विशेषकम्।।
चतुर्भिस्तु कलापं स्यात् पञ्चभिः कुलकं मतम्।

आख्यायिका कथा खण्डकथा परिकथा तथा
कथानिकेति मन्यन्ते गद्यकाव्ये तु पञ्चधा।। इति।

तत्प्रयोजनं निर्दिशति तदित्यादिना– तदाश्रयेण= तेषां काव्यभेदानां आश्रयेण= आधारेण, सङ्घटना, विशेषवती= विशिष्टस्वरूपयुता स्वापरभेदाद्भिन्ना, भवति इति। तत्तत्काव्यप्रभेदानुकूल्येन सङ्घटनायाः भेदो भवतीत्याशयः।

तदेव निर्दिशति तत्रेत्यादिना– तत्र= तेषु प्रभेदेषु, मुक्तकेषु= एकेनैव क्रियासमाप्तिमत्पद्येषु, रसबन्धाभिनिवेशिनः= रसस्य रसभावादेर्बन्धः ग्रन्थनं तत्र अभिनिवेशिनः प्रवृत्तस्य, कवेः= काव्यकर्तुः, कृते, तदाश्रयं= स एव आश्रय आधारो यस्य तत् तादृशं रसाश्रयं, औचित्यं= योग्यत्वं, तत्= तादृशमौचित्यं, च= तु, दर्शितं= पूर्वप्रकरणे व्याख्यातम्, एव। अन्यत्र= रसबन्धाभिनिवेशातिरिक्तस्थले तु, कामचारः= स्वाच्छन्द्यमेव। मुक्तके इदमैवौचित्यं यद्यत्र रसग्रन्थस्तत्र तदनुकूलमेवौचित्यानुसारेण तदितरस्थले कवेः स्वविवेकमेव सङ्घटनायाः प्रयोग इति। प्रबन्धमध्यवर्ति तु तत्सम्भवति। मुक्तकेषु किन्तु यत्र सङ्घाताभावेन स्वातन्त्र्यं तेषां कथं विभवादिसङ्घटना येन तदायत्तो रसः स्यादित्याशङ्कापरिहाराय कथयति मुक्तकेष्वित्यादिना- मुक्तकेषु= सङ्घातविषयेषु, इव, रसबन्धाभिनिवेशिनः= रसग्रथनरुचयः कवयः, दृश्यन्ते। तत्र निदर्शनं प्रस्तौति यथेत्यादिना- यथा, हि, अमरुकस्य= तदाख्यस्य कवेः, शृङ्गाररसस्यन्दिनः= रतिस्थायिभावात्मकरसाभिवर्षिणः, मृक्तकाः= स्वतन्त्रपद्यानि, प्रबन्धायमानाः= व्यङ्ग्यर्थाक्षेपकत्वात्प्रबन्धगतवैशिष्ट्यसम्भाविताः, प्रसिद्धाः= ख्याताः, एवेति।

इस प्रकार वक्तृवाच्यौचित्य से सङ्घटना के नियम का उपपत्तिपूर्वक प्रतिपादन करने के बाद अब उसके दूसरे नियामक का भी निर्देश करते हैं—

वक्ता एवं वाच्य के औचित्य के अतिरिक्त विषय में आश्रित जो दूसरा औचित्य है वह भी सङ्घटना का नियमन करता है और काव्य के प्रभेदों के आश्रय से वह भिन्न-भिन्न रूप से रहती है।।७।।

वृत्तिकार कारिका के आशय का विस्तार करते हुए स्पष्टीकरण करते हैं— वक्ता एवं वाच्यगत औचित्य गत के रहते हुए भी विषय में आश्रित जो दूसरा औचित्य है वह भी सङ्घटना का नियमन करता है।

काव्य के सम्भावित प्रभेदों को बताते हैं- क्योंकि काव्य के प्रभेद हैं- मुक्तक जो कि संस्कृत, प्राकृत वा अपभ्रंश भाषा में निबद्ध होता है, सन्दानितक विशेषक, कलापक, कुलक आदि, पर्यायबन्ध, परिकथा, खण्डकथा, सकलकथा सर्गबन्ध, अभिनेयार्थ, आख्यायिका, कथा इत्यादि होते हैं। इत्यादि से चम्पू का भी ग्रहण किया है। (उनमें से मुक्तक वह है अपने अर्थ की पूर्ति के दूसरे की अपेक्षा नही करता, दो पद्यों में क्रिया की समाप्ति से सन्दानितक, तीन में विशेषक, चार में कलापक और पाँच वा उससे आगे में कुलक होता है) इन भेदों का प्रयोजन बताते

हैं—इनके आश्रय से भी सङ्घटना विशेष प्रकार की होती है। उनमें से मुक्तकों में रसबन्ध में प्रवृत्त कवि के लिए रस आदि का आश्रय वाला औचित्य ही अनुसरणीय है। वह तो पहले ही दिखाया गया ही है। अन्यत्र अर्थात् रस में अभिनिवेश जहाँ नहीं है वहाँ कवि स्वतन्त्र रहता है चाहे सङ्घटना के जिस भेद का प्रयोग करें।

प्रबन्ध से स्वतन्त्र मुक्तकों में विभाव आदि की सङ्घटना कैसे सम्भव है जिससे रस की प्रतीति हो सके ऐसी आशङ्का कर कहते हैं– मुक्तकों में भी प्रबन्धों में जैसे रस के बन्ध में अभिनिवेश (रुचि) वाले कवि दिखाई पड़ते हैं। जैसे अमरुक कवि के शृङ्गार रस को बरसाने वाले, प्रबन्ध की तरह ही रसाभिव्यञ्जक मुक्तक प्रसिद्ध ही है। (अर्थात् अमरुक के एक–एक मुक्तक अपने ही में स्वयं प्रबन्ध हैं।) अतः स्वतन्त्र मुक्तकों में भी रसाभिनिवेश होता ही है।

ध्वन्या०— सन्दानितकादिषु विकटबन्धनौचित्यान्मध्यमसमासादीर्घ, समासे एव रचने। प्रबन्धाश्रयेषु यथोक्तप्रबन्धौचित्यमेवानुसर्तव्यम्। पर्यायबन्धे पुनरसमासामध्यसमासे एव संघटने। कदाचिदर्थौ चित्याश्रयेण दीर्घसमासायामपि संघटनायां परुषा ग्राम्या च वृत्तिः परिहर्तव्या। परिकथायां कामचारः तत्रेतिवृत्तमात्रोपन्यासेन नात्यन्तरससम्बन्धाभिनिवेशात्। खण्ड-कथासकलकथयोस्तु प्राकृतप्रसिद्धयोः कुलकादिनिबन्धनभूयस्त्वाद्दीर्घस-मासायामपि न विरोधः। वृत्त्यौचित्यं तु यथारसमनुसर्तव्यम् सर्गबन्धे तु रसतात्पर्थे यथारसमौचित्यमन्यथा तु कामचारः, द्वयोरपि मार्गयोः सर्गबन्ध-विधायिनां दर्शनाद्रसतात्पर्यं साधीयः। अभिनेयार्थे तु सर्वथाा रसबन्धेऽ-भिनिवेशः कार्यः। आख्यायिकाकथयोस्तु गद्यनिबन्धनबाहुल्याद् गर्वे च छन्दोबन्धभिन्नप्रस्थानत्वादिह नियमे हेतुरकृतपूर्वोऽपि मनाक्क्रियते।

लीला— एवं काव्यप्रभेदान्निरूप्य तत्र मुक्तकेषु सङ्घटनास्वरूपं निर्धाय सम्प्रति शेषेषु विशेषं क्रियपद्यं आदिपदाद्विशेषककलापककुलकादीनामपि ग्रहणं तत्र, तु= इति व्यवच्छेदे मुक्तकविपरीतमिति, विकटनिबन्धनौचित्यात्= विकटं दृढं यन्निबन्धनं गथनं तस्स्य औचित्याद्रसप्रतीत्यानुकूल्यात्, मध्यमसमाससा-दीर्घसमासे, एव= इति व्यवच्छेदे तेन असमासाय निराकरणं, सङ्घटने= रचने। अनेनेदमुक्तं भवति– अत्र असमासा हि सङ्घटना क्रियाया दविष्ठतया वाच्यार्थप्र-तीतावेव विश्रान्ता सती न रसत्वचर्वणायोग्या स्यादिति तत्र तत्र मध्यमदीर्घसमासे एव सङ्घटने संस्तुते येन बन्धदृढतासम्पादेन वाच्यप्रतीतिमान्थर्यादिपरिहारो भवतीति। तत्रापि विशेषमाह प्रबन्धेत्यादिना– प्रबन्धाश्रयेषु= प्रबन्धगतेषु सन्दानि-तकादिषु तु, यथोक्तप्रबन्धौचित्ये= प्रबन्धस्वरूपानुकूलं, एव= इति व्यवच्छेदे न तु बन्धदार्ढ्याशयमात्रेण अनुसर्तव्यं= सम्प्रयोक्तव्यमति। अत्रापि अस्माकं मते तु प्रबन्धाङ्गभूतमुक्तकस्यापि समावेशः कर्तव्य एव यतो मुक्तकं नाम पूर्वापरनिरपेश्रेणापि येन रसचर्वणा क्रियते इति लोचनेऽपि स्पष्टम्।

पर्यायबन्धे तदौचित्यं निर्दिशति पर्यायेत्यादिना— पर्यायबन्धे= अवान्तरक्रिया समाप्तावपि एकवर्णनोद्देशेन प्रवृत्ते रचनाविशेषः, पुनः= इति पृथङ् निर्देशे, असमासामध्यमसमासे,, एव= इति दीर्घसमासापरिहाराय, सङ्घटने इति तत्र प्राधान्येन शृङ्गारस्येव व्यङ्ग्यत्वात्। तत्रापवादमाह कदाचिदित्यादिना- कदाचित्= कुत्रचित्तु, अर्थौचत्याश्रयेण= अर्थप्रकृत्यानुकूल्याधारेण, दीर्घसमासायां, अपि सङ्घटनायां, प्रयुक्तायामपि, परुषा= कोमलव्यतिरिक्तलक्षणा, ग्राम्या= उभयव्यतिरिक्तलक्षणा, च वृत्तिः वर्णब्धना, च परिहर्तव्या= उज्झितब्या इति। तत्र रसौचित्याधारेण दीर्घसमासायां अपि प्रयोगः सम्भवः किन्तु तत्र परुषा ग्राम्या च वृत्तिर्नाभीष्टा। परिकथायां तदौचित्यमाह परिकथायामित्यादिना— परिकथायां= अनन्तवृत्तान्तवर्णनात्मकरचनाविशेषे, तु= इति इतरव्यतिरिक्तं कामचारः= स्वाच्छन्द्यमेव। तथाकथने हेतुमाह तत्रेत्यादिना— तत्र= परिकथायां, इतिवृत्तमात्रोपन्यासेन= कथावस्तुमात्राधानेन, नात्यन्तं, नातिमात्रं, रसबन्धाभिनिवेशात्= रसग्रथनाप्रसङ्गात्। एवमेव खण्डकथादौ तन्निर्दिशति खण्डेत्यादिना- खण्डकथासकलखण्डयोः— खण्डकथा एकदेशवर्णना सकलकथा समस्तफलान्तेतिवृत्तवर्णना तयोः, प्राकृतप्रसिद्धयोः= प्राकृतभाषानिबद्धत्वेन ख्यातयोः, तु= इति विशेषे, कुलकादिनिबन्धनभूयस्त्वात्= कुलकादिरचनाप्राधान्यात्, दीर्घसमासायां, अपि= इति असमासा मध्यमसमासयोर्ग्राह्यता सूच्यते, तत्रापि, वृत्त्यौचित्यं= वृत्तीनां परुषोपनागरिकाग्राम्याणां औचित्यमुपयुक्तत्वं, तु= इति दीर्घसमासाप्रयोगेऽपि, यथारसं= रसानुकूल्यमेव, अरनुसर्तव्यमिति। सर्गबन्धे सङ्घटनास्थितिं निर्दिशति सर्गेत्यादिना सर्गबन्धे= महाकाव्यादौ, तु= इति पृथक्त्वाय, रसतात्पर्ये= रसादिप्रयोजने, तु, यथारसं= रसानुकूल्येन, औचित्यं= उपयुक्तत्वं, अन्यथा= कथामात्रतात्पर्येण रसतात्र्याभावे, कामचारः= स्वच्छन्द्यमेव। द्वयोः= रसतात्पर्य कथामात्रतात्पर्यसम्बद्धयोः मार्गयोः= वर्त्मनोः, अपि= इति समुच्चये सर्गबन्धविधायिनां= महाकाव्यप्रणेतृणां, दर्शनात् यथा कथातात्पर्येः, जयन्तकस्य कादम्बरीकथासारं रसतात्पर्ये रघुवंशादि, तत्र, रसतात्पर्यं= रसप्रयोजनं, एव साधीयः= अभीष्टम्।

अभिनेयार्थे तन्निर्दिशति अभीत्यादिना— अभिनेयार्थे= दृश्यकाव्यादौ, तु= इति विशेषे, सर्वथा= सर्वत्रैव, रसबन्धे= रससाधने, अभिनिवेशः= प्रयत्नः, कार्यः= विहितव्यः, इति। तद्विरहे तस्य चमत्कारित्वाभवात्। तेन तत्र यथारसमेवौचित्यमिति।।७।।

इस प्रकार के मुक्तक में सङ्घटना के स्वरूप का प्रतिपादन कर अब सन्दानितक आदि में सङ्घटना के स्वरूप का निर्देश करते हैं—

सन्दानितक आदि में तो विकट (गाढ) निबन्धन को ही औचित्य होने से मध्यमसमासा एवं दीर्घसमासा ही सङ्घटना उपयुक्त होती है।

मुक्तक आदि के प्रबन्ध में आश्रित होने पर तो प्रबन्ध को औचित्य का अनुसरण करना चाहिए।

पर्यायबन्ध में शृङ्गार रस के प्राधान्य होने से असमासा एवं मध्यम समासा ही उपयुक्त होती है और कहीं-कहीं रस के औचित्य के आश्रय से दीर्घसमासा सङ्घटना के प्रयोग होने पर भी उसमें परुषा एवं ग्राम्या वृत्ति का तो परिहार होना ही चाहिए। परिकथा में कवि स्वेच्छा से उसका प्रयोग करें क्योंकि उसमें कथानक के ही ज्यादा प्रयोग होने से रस के अभिनिवेश में खाश प्रयत्न नहीं होता। खण्डकथा एवं सकलकथाओं में जो कि प्राकृत भाषा में निबद्धता के लिए प्रसिद्ध हैं, कुलक आदि के निबन्धन के बाहुल्य होने से दीर्घसमासा के प्रयोग में भी कोई खाश विरोध नहीं होता। किन्तु परुषा, उपनागरिका, कोमला वृत्तियां जो हैं उनके औचित्य का तो रस के अनुसार ही अनुसरण किया जाना चाहिए।

सर्गबन्ध अर्थात् महाकाव्य आदि में रस का ही तात्पर्य होने से रस के अनुसार ही औचित्य होना चाहिए, कथानक का मात्र तात्पर्य होने से कवि स्वेच्छा से बरत सकता है। दोनों ही मार्गों में अर्थात् रस तात्पर्य एवं कथानक तात्पर्य दोनों हिी मार्गों में, कवियों की प्रवृत्तता तो देखी जाती है लेकिन उसमें रस तात्पर्य पक्ष श्रेष्ठ हैं।

अभिनेय काव्य में तो सदा एवं सर्वत्र ही रसबन्ध ही में अभिनिवेश करना चाहिए और रस के अनुकूल सङ्घटना ।। ७।।

ध्वन्या०— अख्यायिकाकथयोस्तु गद्यनिबन्धतबाहुल्याद् गद्ये च छन्दोबन्धभिन्नप्रस्थानन्वादिह नियमे हेतुरकृतपूर्वोऽपि मनाक्क्रियते।

कारिका— एतद्योथोक्तमौचित्यमेव तस्या नियामकम्।
सर्वत्र गद्यबन्धेऽपि छन्दोनियमवर्जिते।। ८।।

ध्वन्या०— यदेतदौध्चत्यं वक्तृवाच्यगतं संघटनाया नियामकमुक्त-मेतदेव गद्ये छन्दोनियमवर्जितेऽपि विषयापेक्षनियमहेतुः। तथा ह्यत्रापि यदा कविः कविनिबद्धो वा वक्ता रसभावरहितस्तदा कामचारः। रसभा-वसमन्विते तु वक्तरि पूर्वोक्तमेवानुसर्तव्यम। तत्रापि च विषयौचित्यमेव। आख्यायिकायां तु भूम्ना मध्यमसमासादीर्घसमासे एव संघटने। गद्यस्य विकटबन्धाश्रयेण छायावत्त्वात्। तत्र च तस्य प्रकृष्यमाणत्वात्। कथायां तु विकटबन्धुप्राचुर्येऽपि गद्यस्य रसबन्धोक्तमौचित्समनुसर्तव्यम्।

लीला— इत्थं पद्यात्मकरचनागतं सङ्घटनानियामकं विषयाश्रयमौचित्यं निर्दिश्य सम्प्रति गद्यात्मकरचनायां तादृशौचित्यनिर्देशककारिकावतारणायोपक्रमते आख्यायिकेत्यादिना— आख्यायिकाकथयोः= तत्तदाख्ययोः काव्ययोः, तु= इति पूर्वोक्भेदविपरीतं गद्यनिबन्धबाहुल्यात्= गद्यं गद्यत इति गद्यं तस्मिन् यन्निबन्धनं ग्रथनं तस्य बाहुल्यात् आधिक्यात्, गद्ये= तादृशगद्यकाव्ये, च= तु, छन्छोब-द्धभिन्नप्रस्थानत्वात्= छन्दसि वृत्ते यो बन्धस्तस्माद् यद भिन्नं प्रस्थानं मार्गरूपा रीतिः, तस्य भावस्तत्वं तस्मात्, इह= प्रकरणेऽस्मिन्, हेतुः, अकृतपूर्वः= पूर्वं क्वचिदनुक्तः, अपि, मनाक्= संक्षेपत्, इह= क्रियते= विधीयते उच्यत इति यावत्।

कारिकामवतारयति एतदित्यादिना— छन्दोनियमवर्जिते गद्यबन्धे अपि सर्वत्र, एतत् यथोक्तं औचित्यं एव तस्याः नियामकं भवति इति पदव्यवस्था।

छन्दोनियमवर्जिते= छन्दसां वृतानां यो नियमः विधिः वर्णपात्रागणनारूपस्तेन वर्जिते रहिते, गद्यबन्धे, अपि= व-यथा छन्दोबद्वै बन्धे सर्वत्र= सर्वविधपप्रकारे एव एतत्= अनन्तरनिर्दिष्टं, यथोक्तं= उक्तमततिकन्य— यथा निर्दिष्टं तथैव, औचित्यं= योग्यत्वं, तस्याः= सङ्घटनायाः, नियामकः= नियन्त्रकं, भवतीति।

छन्दोबप्रबन्धे यादृशमौचित्यं सङ्घटनाया नियामकत्वेन निर्दिष्टं तथैव गद्यप्रबन्धेऽपि सर्वत्र भवतीत्याशयः। कारिकां विवृणोति वृतिकृत् यदित्यादिना— यद्= यादुशं, एतत्= अनन्तरनिर्दिष्टं वक्तृवाच्यगतं= वक्तुर्वाच्यस्य च प्रकृतिसम्बद्धं, औचित्यं= योग्यता, सङ्घटनायाः= प्रत्यानस्य, नियामकं= नियन्त्रकं, उक्तं निर्दिष्टं, एतत्= एतादृश्यं, एव= इति व्यवच्छेदे-तान्यं, छन्दोनियमवर्जिते= वृत्तिविधिरहिते, गद्ये= गद्यबन्धे, अपि= च, विषयापेक्षं= प्रबन्धानुकूल्येन, नियमहेतुः= नियमनकारणमिति। प्रसङ्गनिर्देशपूर्वकं तदुपपादयति तथेत्यादिना— तथाहि= इति निदर्शने, अत्रापि= पद्यप्रबन्धेऽपि, यदा, कविः वा= अथवा कविनिबद्धः= कविनोपस्थापितः, वक्ता, रसभावरहितः= रसभावाद्यावेशहीनः, तदा, कामचारः= यथेच्छमेव। वक्तरि= कवौ वा तन्निबद्धे वक्तरि, रसभावसमन्विते= रसभवाद्यविशेषयुक्ते, तु= इति व्यवच्छेदे—पूर्वातिरिक्तमिति, पूर्वोक्तं= प्राक्कथितं, एव, अनुसर्तव्यम्= यथोक्तव्यमिति- रसाद्यनुकूलसङ्घटनैव प्रक्ततव्येत्याशयो यथा करुणविप्रलम्भशृङ्गारयोः असमासा वा प्रसादातिरेके मध्यमसमासापि सङ्घटना रौद्रादौ मध्यमसमासा वा धीरोद्धतोद्दतवाक्ये दीर्घसमासाऽपि सङ्घटना प्रयोक्तव्येति। एवमेव तत्रापि= तादृशस्थलेऽपि, च= अपि, विषयौचित्यं= विषयो गद्यबन्धस्य भेदाः तस्य औचित्यमानुकूल्यन् एवेति। तत्रापि आख्यायिकायां विशेषमाह आख्यायिकायामित्यादिना— आख्यायिकायां= उच्छ्वासादिना वक्त्रापरवक्त्रादिना च युक्तायां, रचनायां तु= इति गद्यकाव्येतरभेदव्यतिरिक्तं, भूम्ना= बाहुल्येन, मध्यमसमासादीर्घसमासे, एव= इति असमासाव्यवच्छेदे, सङ्घटने प्रयोक्तव्ये प्रकरणमनुसृत्य। तत्र हेतुमाहगद्यस्योदिना— गद्यस्य= गद्यनिबन्धस्य, विकटबन्धाश्रयेण= विकटो गाढो यो बन्धः ग्रथनं तस्य आश्रयेण आधारेण, छायावत्त्वात्= विच्छित्तियुक्तत्वात्। नव्यास्तु चूर्णिकाप्रायमेव प्रशंसन्ति इति केचित् तस्य प्रयोजनमाहतत्रेत्यादिना- तत्र= विकटबन्धे एव, तस्य= विच्छित्तिशालितायाः, प्रकृष्यमाणत्वात्= आधिक्यादिति। यथा दशकुमारचरिते राजहंसवर्णनप्रसङ्गे वीरभटपटलोतरङ्ग इत्यादि। पद्ये यच्छब्दोहारेण हृद्यत्वमाकर्षकत्वं वा गद्ये तदेव विकटबन्धेनेत्याशयः। एवमेव कथाभेदे विशेषमाह कथायामित्यादिना— कथायां= आख्यायिकालक्षणरहिते गद्यबन्धे, तु= इति आख्यायिकोक्तव्यतिरिक्तं,

विकटबन्ध प्राचुर्येऽपि= गाढबन्धबाहुल्येऽपि, गद्यस्य, रसबन्धोक्तं= रसबन्धे युदक्तं करुणविप्रलम्भशृङ्गारबाहुल्ये असमासाया: वा प्रसादातिरेके मध्यमसमासा: रौद्रादि प्रसङ्गे मध्यमसमासाया वा धीरोद्धतोद्धतकथने दीर्घसमासाया अपि प्रयोगो यन्निर्दिष्टं तदेव, औचित्यं= उपयुक्तत्वं, अनुसर्तव्यमिति।

अस्यायमाशयः— पद्यबन्धे यदेवौचित्यं सङ्घटनाया नियामकत्वेनोक्तं तदेव गद्यबन्धेऽपि भवति। तत्रापि वक्तृवाक्यगतौचित्यं विषयापेक्षं नियमहेतु:। तत्रापि कवौ वा तन्बिद्धवकतरि रसाद्यावेशयुक्ते रसबन्धोक्तमेवौचित्यं तद्रहिते तु यथारुचि। आख्यायिकायां बाहुल्येन मध्यमसमासादीर्घसमासयो: प्रयोगस्तत्र गाढबन्धेनैव विच्छित्तिमत्त्वात्। कथायां तु गाढबन्धेऽपि रसबन्धोक्तमेवौचित्यं तस्या नियामकमिति।

इस प्रकार पद्यकाव्य में सङ्घटना के नियामकभूत औचित्य का निर्देश कर अब गद्यकाव्य में उसका निर्देश करने वाली कारिका के अवतारण का उपक्रम करते हैं—

आख्यायिका एवं कथा में तो गद्यनिबन्ध के बाहुल्य होने से और गद्य के छन्द में निबद्ध प्रबन्ध से भिन्न ही प्रस्थान होने से सङ्घटना के नियमन में जो पहले बताया न गया औचित्य है उसका यहाँ संक्षेप में निर्देश किया जाता है—

उसी कारिका का अवतारण करते हैं—

छन्दों के नियम से रहित गद्यबन्ध के सभी प्रकारों में भी यह ऊपर जो बताया गया औचित्य है वही सङ्घटना का नियामक होता है।।८।।

वृत्तिकार कारिका के आशय का विस्तार क़रते हैं—

जो यह (पद्यबन्ध के प्रकरण में) वक्तृवाच्यगत औचित्य सङ्घटना का नियामक बताया गया है वही छन्द के नियम से रहित गद्यबन्ध में भी विषय अर्थात् प्रबन्ध से अपेक्षित होकर नियम का हेतु होता है।

निदर्शन पूर्वक उस कथन का प्रतिपादन करते हैं— जैसे कि यहाँ भी जब कवि वा कविनिबद्ध वक्ता रस आदि के आवेश से रहित रहता है तब तो उसमें स्वच्छन्दता है। उसी वक्ता के रस आदि के आवेश से युक्त होने पर तो पहले बताये जैसे का अर्थात् रसबन्ध के औचित्य का अनुसरण करना चाहिए। वहाँ भी विषय का औचित्य तो रहेगा ही।

आख्यायिका में तो बाहुल्य से मध्यमसमासा एवं दीर्धसमासा का ही प्रयोग होना चाहिए क्योंकि गद्य का तो गाढ बन्ध के आश्रय से ही शोभा का उत्कर्ष होता है। (पद्य में छन्द से जो अनकर्षता आती है गद्य में विकट बन्ध से वही आ जाती है) उसी में उसका प्रकर्ष होता है।

कथा में तो गाढ़बन्ध की बहुलता होने पर भी गद्य का रसबन्ध में निर्दिष्ट औचित्य का ही अनुसरण करना चाहिए।

कारिका— रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।
रचना विषयापेक्षं तत्तु किञ्चिद्विभेदवत्।। ९।।

ध्वन्या०— अथवा पद्यवद् गद्यबन्धेऽपि रसबन्धोक्तमौचित्यं संश्रिता रचना भवति। तत्र विषसयापेक्षं किञ्चिद्विभेदवद् भवति, न तु सर्वाकारम्। तथा हि गद्यबन्धेऽप्यतिदीर्घसमासा रचना न विप्रलम्भशृङ्गारकरुणयोराख्यायिकायामपि शोभते। नाटकादावप्यसमासैव संघटना। रौद्रवीरादिवर्णने विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च। तथा ह्याख्यायिकायां नात्यन्तमसमासा स्वविषयेऽपि नाटकादो नातिदीर्घसमासा चेति संघटनाया निगनुसर्तव्या।

लीला— तत्र कारिकाकार: स्थितपक्षं दर्शयति रसबन्धोक्तमित्यादिना रसबन्धोक्तं औविचत्यं संश्रिता रचना सर्वत्र भाति विषयापेक्षं तु तत् किञ्चिचत् विभेदवत् भवति इति पदव्यवस्था।

रसबन्धोक्तं= रसनिबन्धप्रकरणे, कथितं, औचित्यं= योग्यत्वं, संश्रिता= आलम्बिता, रचना= सङ्घटना, सर्वत्र= सर्वेष्वेवकाव्यप्रभेदेषु, भाति= शोभते उपयुक्ता भवति। रसौचित्याश्रिता सङ्घटनैव सर्वत्र प्रयोज्या सुकाव्याय भवति। तर्हि विषयौचित्यं त्यक्तव्यमित्यपेक्षायामाह विषयापेक्षं= प्रबन्धसम्बद्धं, तत्= औचित्यं, तु, किञ्चित्= स्वल्पमेव, विभेदवत्= वैशिष्ट्ययुक्तं भवति इति। विषयापेक्षप्या तु तत्र स्वल्पमेवान्तरं भवति इति।

कारिकां विवृणोति वृत्तिकार: अथवेत्यादिना अथवा= किं बहुनोक्तेन, पद्यवत्= पद्यबन्धे, इव, गद्यबन्धे= वृत्तगन्धोज्झितप्रबन्धे अपि= च, रसबन्धोक्तं= रसनिबन्धनिर्दिष्टं, औचित्यं= योग्यत्वं, सर्वत्र= सर्वेष्वेव काव्यप्रभेदेषु, संश्रिता= समालम्बिता, रचना= सङ्घटना, भवति। विषयापेक्षं प्रबन्धसम्बद्धं, तत्= औचित्यं, तु, किञ्चित्= मनागेव, विशेषवत्= वैशिष्ट्ययुक्तं, भवति, न= नैव, तु, सर्वाकारं= निखिलस्वरूपमिति, काव्यप्रबन्धने गद्ये का पद्येऽपि रसौचित्यमेव सर्वत्र सङ्घटनां नियच्छति, विषयौचित्यमेव किञ्चिदेव तां प्रभावयति न तु सर्वविधत्वेनेति।

तदेव निदर्शयति तथेत्यादिना तथा हि= इदमेव निदर्शनं यत् गद्यबन्धे= वृत्तहीनप्रबन्धे, अपि= च, यद्यपि तत्र गाढबन्ध एव विच्छित्याधिक्याय भवति तथापि, अतिदीर्घसमासा= अत्यन्तदीर्घसमासयुक्ता, रचना= सङ्घटना, विप्रलम्भशृङ्गारकरणयो:= तदाख्ययो: कोमलवर्णप्रकाश्ययो: रसयो:, कृते, आख्यायिकायां, अपि, न, शोभते= उपयुक्ता भवति। नाटकादौ= दृश्यकाव्यविषये, अपि= च, असमासा एव सङ्घटना। रौद्रादिविषयवर्णने= रौद्रादिरसप्रतिपादने, तु, न= नैव अर्थान्मध्यमसमासाऽपि। विषयौचित्यस्थितिं निर्दिशति विषयेत्यादिना विषयापेक्षप्रबन्धसम्बद्धं, औचियं= योग्यत्वं, तु= इति व्यवच्छेदे, प्रमाणत:= रसबन्धौक्तौचित्यरूपात्प्रमाणात्, अपकृष्यते= न्यूनीक्रियते, प्रकृष्यते= अधिकं

त्रियते च। यत्प्रबन्धानुसारि औचित्यं तदपि रसबन्धोक्तौचित्यप्रमाणात् परिवर्तितं भवति अर्थात्तस्य अपकर्षः प्रकर्षो वाऽपि। तन्निर्दिशति तथाहीत्यादिना तथाहि, आख्यायिकायां, न= नैव अतयन्तं, असमासा करणादावपि, न, च नाटकादौ, स्वविषये, अपि रौद्रादेः, न, अतिदीर्घसमासा, च, इति इत्थं, सङ्घटनायाः= रचनायाः, दिक्, अनुसर्तव्या इति।

प्रकरणरयास्यायमाशयः— पद्ये इव गद्येऽपि विशेषेण रसबन्धोक्तमौचित्यमेव सर्वत्र रचनाया नियामकं भवति विशयौचित्यं तु तां स्वल्पमेव प्रभावयति। यथा गाढबन्धप्रधानायामपि आख्यायिकायां विप्रलम्भशृङ्गारकरुणयोर्नातिदीर्घसमासा रचना शोभते। नाटकादावपि सर्वेषामेव असमासैव रचना शोभते। रौद्रादिवर्णने कामं मध्यमसमासा स्यात् तत्र विषयसम्बद्धं यदेवौचित्यं तत् रसबन्धौक्तौचित्यप्रमाणान्यूनं वाऽधिक भवत्येव। अतः सर्वत्र रसबन्धोक्तौचित्यस्यैव प्राधान्येन रचनायां नियमने हुतत्वम्। अनेन विषयौचित्यं सर्वथा निरर्थकमपि नमन्तव्यं यतस्तदपि स्वपक्ष रचनां नियमयत्येव। सयथा सत्यपि रसौचित्यप्राधान्ये आख्यायिकायां करणादावपि नात्यन्तमसमासा शोभते तथैव नाटकादौ रौद्रादावपि नातिदीर्घसमासा शोभते इति तस्यापि महत्वमेव। इत्थं सङ्घटनाविषये यथौचित्यमनुसर्तव्यमिति।। ९।।

इस प्रकार गद्यबन्ध में भी रचना के नियम हेतु का निर्देश कर अब सङ्घटना के विषय में जो स्थिति पक्ष है उसका कारिकाकार निर्देश करते हैं—

रसबन्ध के औचित्य में आश्रित रचना ही सर्वत्र उपयुक्त होती है, विषय की अपेक्षा करने वाला औचित्य तो उसमें थोड़ी ही विशेषता लाता है।। ९।।

कारिका के आशय की वृत्तिकार विवेचना करते हैं—

अथवा यों माना जाय कि पद्य की जगह गद्य में भी रसबन्ध के औचित्य में आश्रित रचना ही उपयुक्त होती है। विषय से सम्बद्ध औचित्य तो कम ही विशेषता रखता है न कि सम्पूर्ण रूप से।

उसका निदर्शन देते हैं— जैसे कि गद्यबन्ध में भी आख्यायिका में भी करुण एवं विप्रलम्भशृङ्गार के लिए अतिदीर्घसमासा रचना ठीक नहीं होती यद्यपि गाढबन्ध उसकी विच्छित्ति का हेतु है। नाटक आदि में भी असमासा ही उपयुक्त होती है, रौद्रवीर आदि के वर्णन को छोड़कर। क्योंकि विषय की अपेक्षा रखने वाला जो औचित्य है वह रसबन्धोक्त औचित्य के प्रमाण से घटता भी है और बढ़ता भी है। जैसे कि आख्यायिका में अपने विषय में भी (करुण आदि का) अत्यन्त असमासा ठीक नहीं होती और नाटक आदि में अपने विषय भी (रौद्र आदि को) अत्यन्तदीर्घसमासा भी ठीक नहीं होती। इस तरह दोनों औचित्य के समन्वय के आधार पर सङ्घटना का प्रयोग करना चाहिए।

अत्रान्तरे दीधितिकारो वृत्तेरवशिष्टभागत्वेनेदं पठति इतिं काव्यार्थविवेको योऽयं चेतश्चमत्कृतिविधायी। सूरिभिरनुसृतसारैरस्मदुपज्ञो न

विस्मार्य इति। पाठोऽयं बालप्रियादौ न दृश्यत इति नेव व्याख्यातमत्र।

ध्वन्या०— इदानीमलक्ष्यक्रमव्यङ्ग्या ध्वनिः प्रबन्धात्मा रामायणमहाभारतादौ प्रकाशमानः प्रसिद्ध एव। तस्य तु यथा प्रकाशनं तत्प्रतिपाद्यते—

कारिका— विभावभावानुभावसञ्चर्यौचित्यचारुणः।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य।। १०।।
इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम्।
उत्प्रेक्ष्योऽप्यन्तराभीष्टरसोचितकथोन्नयः ।। ११।।
सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया।
न तु केवलया शास्त्रस्थितसम्पादनेच्छया।। १२।।
उद्दीपनप्रशमने यथावसरमन्तरा।
रसस्याघधविश्रान्तेरनुसन्धानमङ्गिनः।। १३।।
अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम्।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम्।।१४।।

लीला— इत्थं सङ्घटनायामलक्ष्यक्रमव्यङ्ग्यध्वनेर्दीपनमुपपाद्यं सम्प्रति क्रमप्राप्ते तस्य प्रबन्धाकाश्यत्वे निरूपयितव्ये प्रबन्धे रसो दीप्यत इति निर्विवादत्वेन सिद्धत्वात्तत्र वक्तव्यस्याभावेन केवलं प्रबन्धस्य रसाभिव्यक्तौ येतिकर्तव्यता तन्निरूपककारिकावतारणायोपक्रमते इदानीमित्यादिना इदानीं= तावत्। असंलक्ष्यक्रमव्यङ्ग्यः= अनिरूपणीयद्योतनक्रमव्यङ्ग्यरूपः, यः, प्रबन्धत्मा= प्रबन्धास्वरूपः, स, रामायणमहाभारतादौ तदाख्ये ग्रन्थे प्रकाशमानः= अभिव्यञ्जन्, प्रसिद्धः= सर्वैर्ज्ञात एव। तस्य= ध्वनेः, तु, यथा= येन प्रकारेण प्रकाशनं= द्योतनं, तत्= प्रकारमेव प्रतिपाद्यते= निरूप्यत इति। यः प्रबन्धात्मा असंलक्ष्यक्रमव्यङ्ग्यध्वनिः स तु रामायणमहाभारतादौ प्रकाशमानः प्रसिद्ध एव यतस्तदधिकृत्य तु नैव किञ्चिद्वक्तव्यमस्ति। इह तु तस्य येन प्रकारेण प्रकाशनं सम्भवति तदेवेदानीमुच्यते इति भावः। प्रबन्धे स ध्वनिर्दीप्यते न वेति नात्र विचारणाविषयः स तु निर्विवादसिद्ध एव। अत्र तु केवलं कथं तत्प्रबन्धे दीप्यत इत्येवं विचारणा क्रियत इति। तद्विवेचकं कारिकाषट्कमवतारयति विभावेत्यादिभिः (तत्र लोचने यत्र क्रमेण पञ्चकं व्याचष्टे इति यदुक्तं तदाद्यचतुष्टष्टयं श्लोकचतुय क्रमान्निर्दिष्टं पञ्चमं तु अर्धश्लोकेनेति बोध्यमिति बालप्रियायां स्पष्टम्। वस्तुतस्तु व्याख्यानविषयं तु श्लोकषट्कमेव तथैव तत्रोपन्यासात्) विभाव-भाव- अनुभाव-साञ्चार्यौचित्यचारुणः वृत्तस्य वा उत्प्रेक्षितस्य कथाशरीरस्य विधिः इतिवृत्तवशायातां अननुगुणां स्थितिं त्यक्त्वा उत्प्रेक्ष्य अपि अन्तराभीष्टरसोचितकथोन्नयः, रसाभिव्यक्त्यपेक्षया न तु केवलया शास्त्रस्थितिसम्पादनेच्छया सन्धिसन्ध्यङ्गघटनं

अन्तरा यथावसरं उद्दीपनप्रशसने, आरब्धविश्रान्तेः, अङ्गिनः रसस्य अनुसन्धानं शक्तौ अपि अलंकृतीनां आनुरूप्येण योजनं इति प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनमिति पदव्यवस्था श्लोकषट्कस्य।

विभावभावानुभावसञ्चार्यौचित्यचारुणः= विभावो भावविभावक आलम्ब-नोद्दीपनात्मकः— भावस्य आलम्बनं यमालम्ब्य रत्यादेरुद्बोधनो भवति तथोद्बु-धस्य भावस्योद्दीपनञ्च यतः स स्वाद्यतामापद्येत, यथा रवेर्नायकादिश्च-न्द्रमाल्यादिश्च, भावः तथाविभावेनोद्बोधित उद्दीपितश्च अन्यापेक्षया स्थायी चित्तवृत्तिविशेषः (चित्तं समधिकसंवेदनाशीलं भवति तच्च तदेवानुभवति तत्र तत्र प्रतिकरोत्येव। तत्र तदनुकूलं स्निह्यति प्रतिकूलं विरुणद्धि अनुकूलनाशे शोचति, विप्रियकरणे, क्रुध्यति, प्रसादे हसति, अहृद्यं जुगुप्सते, दुर्दर्शने बिभेति, अतिवस्तुदर्शने विस्मयते, अक्षमत्वे शाम्यति, इत्यादौ बहुविधाः क्रियाश्चेतसि सम्पद्यन्ते। तत्र मुख्यत्वेन नव गृहीताः सन्ति रति–उत्साह–शोक–क्रोध–हासजुगुप्सा–भय–विस्मय—शमाख्याः। एते एव भावशब्दवाच्याः। ते च स्वस्थे मनसि निश्चलत्वेन स्थिता भवन्ति। यदा च कश्चित्तदनुकूलो व्यापारस्तमुद्बोधयति तदैव स उत्तिष्ठते तथैव केनाऽप्युद्दीपितः सन्ननुभवविषयतामापद्यते। तस्य स्थायित्वञ्च अन्यानप्यात्मभावनयनेन सिध्यति। यथाऽनुभवयिषयतामायातो रतिभावः स्वसमयेऽन्यान् भयजुगुप्साक्रोधशोकादीन्विरोधिनस्तिरोधापयति उत्साह-हासविस्मयशमादीननु- कूलानात्मभावं नयति। तेनैवोक्तं— विरुद्धैरविरुद्धैर्वाभा-वैर्विच्छिद्यते न यः। आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः, इति। स एव परां कोटिमधिरुह्य रसतां प्रतिपद्यते। उक्तमेव 'अधिरुह्य परां कोटिं क्रोधो रौद्रात्मतां गतः इति।) अनुभावः अनुभूयतेऽसाविति अर्थात् भावो= द्बोधसं-सूचनात्मको विकारः, सात्विक आङ्गिकश्च, (आलम्बनेनोद्बोतिते उद्दीपके-नोद्दीपिते च भावे चेतांसि ये खलु विकारा भवन्ति ते परै रपि स्पष्टमेवानुभूयन्ते ते च स्तम्भस्वेद- रोमाञ्च–स्वरभङ्ग–कम्प–वैवर्ण्य–अश्रु–प्रलयादयः सात्विका नेत्रविकार लवभावादयः आङ्गिकाः), सञ्चारी सञ्चरति सर्वत्र व्याप्नोति इति, स्थायिनः पोषकः सहचारी च भावो निर्वेदादिः, (उद्बुद्धे उद्दीपिते च स्थायिन आनुकूल्येन उत्तिष्ठन्ते विलीयन्ते च त एव व्यभिचारिणः सञ्चारिणो वा रसस्य सहकारित्वात्सहकारिणोऽपि। उक्तमेव विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः। स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ—' इति। ते च प्राधान्येन निर्वेदा-दयस्त्रयस्त्रिंशत्परिगणनेन एकोनपञ्चाशत् सामान्येनासङ्ख्येचया एव।) तेषां यदौचित्यमुपयुक्तत्व) विभावादीनामौचित्यविषये तत्र—तत्र लक्षणग्रन्थेषु बहुश उक्तमस्ति। तस्य सारत्वेनेदमुच्यते यद् न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत्। रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः, इति।) तेन चारुणः हृत्तस्य,

वृत्तस्य= घटितस्य, वा उत्प्रेक्षितस्य= कविकल्पितस्य, कथाशरीरस्य, वस्तुविग्रहस्य, विधिः= प्रपञ्च इत्येकं,

इतिवृत्तवशायातां— कथावस्तुप्रङ्गेनोपस्थितां, अननुगुणां= अनुपयुक्तां रसादिप्रतिकूलां, स्थिति= वृत्तान्तं, त्यक्त्वा= विहाय, उत्प्रेक्ष्य= अन्यथा प्रकल्प्य, अपि, अन्तरा= मध्ये, अभीष्टरसोचितकथोन्नयः= अभीष्टः संसिसाधयिषितो यो रसः रसादिः तस्य उचिता अनुकूला या कथा वृत्तं तस्या उन्नयऊह इति द्वितीयं उक्तञ्च त्यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा। विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्' इति।

रसाभिव्यक्त्यपेक्षया= रासानां रसस्य वा या अभिव्यक्तिर्व्यञ्जना तस्या अपेक्षया अनुकूल्येन, न= नैव, तु= इति तद्विपरीतं, केवलया= शास्त्रस्थितिसम्पादनेच्छया= लक्षणग्रन्थोक्तसिद्धान्तानुसरणस्पृहया, सन्धिसन्ध्यङ्गघटनं= सन्धीनां मुखप्रतिमुखगर्भविवशोपसंहृत्याख्यानां (उक्तञ्च अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति, इति) सन्ध्यङ्गानां उपक्षेपादीनां चतुषष्टिभेदानाञ्च घटनं योजनमिति तृतीयं (तेषां प्रयोजनं यथोक्तं इष्टस्यार्थस्य रचना गोप्यगुप्तिः प्रकाशनम्। रागप्रयोगस्याश्चर्यं वृत्तान्तस्यानुपक्षयः, इति)

अन्तरा= मध्ये, यथावसरं= यथानुकूलं, रसस्य, उद्दीपनप्रशमने उद्दीपनं उद्द्योतन, प्रशमनं विच्दछेदश्च इति चतुर्थं (यथोक्तं अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः। गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम्' इति।

आरब्धविश्रान्तेः= आरब्धा उपक्रान्ता न तु उपनता विश्रान्तिः प्रशमनं यस्य तस्य, अङ्गिनेः= वाक्यार्थीभूतस्य, प्रधानस्य, रसस्य, उपलक्षणादङ्गभूतस्यापि अनुसन्धानं= निर्वादः इति पञ्चमः।

शक्तौ= सामर्थ्ये, सत्यां, अपि, अलंकृतीनां= अलङ्काराणां, आनुरूप्येण= रसानुकूल्येन, योजन=सङ्घटनं इति षष्ठं (उक्तमेव रसं रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः' इति।)

इत्थं, रसादीनां= रसभावादीनां, व्यञ्जकत्वे= प्रकाशकत्वे, प्रबन्धस्य= प्रकरणसमुदायस्य, निबन्धनं= ग्रथनं व्यवस्थापनमिति।

अस्यायमाशयः— प्रबन्धो नाम सङ्घटितवाक्यसमुदायस्तस्मिन् ध्वनिर्दीप्यत इति नु सर्वसिद्धत्वात्तत्र नैव किञ्चिद्वचनावसरः। अत्र तु कथं स तत्र प्रकाशितो भवतीत्येतावदेव निरूप्यते।

रसादीनां व्यञ्जकत्वे प्रबन्धस्य षड्विधं निबन्धनं भवति तत्र प्रसिद्धेतिवृत्तस्य वा कविकल्पितस्य वा कथाशरीरस्य विभावाद्यौचित्यं सुन्दरत्वेन विधानं, इतिवृत्तप्रसङ्गागतामपि प्रतिकूलां वाऽनुपयोगिनी स्थितिमुज्झित्वा वाऽन्यथा परिकल्प्य अपि रसानुकूलीकरणं, सन्ध्यादीनां रसव्यञ्जनानुकूलमेव सङ्घटनं न तु

परम्परापालनधिया, मध्ये च यथावसरं रसानामुद्दीपनं प्रशमनञ्च नत्वकाण्डे, अङ्गिनो रसस्य आरभ्य समाप्ति यावदनुसन्धानं सामर्थ्ये सत्यपि अलङ्कारणां रसानुकूलतयैव योजनमिति।

इस प्रकार सङ्घटना की रसव्यञ्जता का निरूपण कर अब प्रबन्ध के रसव्यञ्जकत्व के निरूपंण के लिए उपक्रम करते हैं—

अलक्ष्यक्रमव्यङ्ग्य ध्वनि जो कि प्रबन्ध की आत्मा है, रामायण महाभारत आदि में प्रकाशित होता हुआ प्रसिद्ध ही है। (अत: उसके विषय में तो कुछ कहना ही नहीं है) यहाँ तो केवल उसका जैसे प्रकाशन होता है उसी का अभी प्रतिपादित किया जाता है।

प्रबन्ध के द्वारा ध्वनि के प्रकाशन के सम्बन्ध में निर्देश करने वाली छह कारिकाओं का अवतारण करते हैं—

इतिहास पुराण आदि में प्रसिद्ध वा कविकल्पित इतिवृत्त के विभाव, भाव, अनुभाव एवं सञ्चारिभाव के औचित्य से सुन्दर शरीर का विधान, कथानक के प्रसङ्ग में आई हुई भा रस के प्रतिकूल होने वाली वा अनुकूल न होने वाली स्थिति को छोड़कर भी अन्यथा कल्पना करके भी बीच-बीच में अभीष्ट रस के लिए उचित कथा का उन्नयन,

सन्धि एवं उसके अङ्गों में रस की अभिव्यक्ति ही अपेक्षा करके करना न कि केवल शास्त्र की स्थिति के पालन करने की इच्छा मात्र से करना,

अवसर के अनुकूल बीच—बीच में रस का उद्दीपन एवं विच्छेद,

प्रधान रस का प्रबन्ध के आरम्भ से अन्त तक ही अनुसन्धान करते रहना, एवं

सामर्थ्य होने पर भी अलङ्कारों का रस के अनुरूप मात्र समावेश करना,

रसादि के व्यञ्जकत्व के लिए प्रबन्ध का निबन्धन इस प्रकार होना चाहिए।।१०-१४।।

ध्वन्या०— प्रबन्धोऽपि रसादीनां व्यञ्जक इत्युक्तं तस्य व्यञ्जकत्वे निबन्धनम्। प्रथमं तावद्विभावानुभावसञ्चार्यौचित्यचारुण: कथाशरीरस्य विधिर्यथायथं प्रतिपिपादयिषितरसभावाद्यपेक्षया य उचितो विभावो भावोऽनुभाव: सञ्चारी वा तदौचित्यचारुण: कथाशरीरस्य विधिर्व्यंञ्जकत्वे निबन्धनमेकम्। तत्र विभावौचित्यं तावत् प्रसिद्धम्।

भावौचित्यं तु प्रकृत्यौचित्यात्। प्रकृतिर्ह्युत्तममध्यमाधमभावेन दिव्यमानुषादिभावन च विभेदिनी। तां यथायथमनुसृत्यासङ्कीर्ण: स्थायी भाव उपनिबध्यमान औचित्यभाग्भवति। अन्यथा तु केवलमानुषाश्रयेण दिव्यस्य केवलदिव्याश्रयेण वा केवलमानुषस्योत्साहादय उपनिबध्यमाना अनुचिता भवन्ति। तथा च केवलमानुषस्य राजादेर्वर्णने सर्प्वतार्णवलङ्घनादिलक्षणा व्यापारा उपनिबध्यमाना: सौष्ठवभृतोऽपि नीरसा एव नियमेन भवन्ति, तत्र त्वनौचित्यमेव हेतु:।

लीला— कारिकां विवृणोति वृत्तिकारः प्रबन्धेऽपित्यादिना प्रबन्धः सङ्घटितवाक्यसमुदायः, अपि= वर्णपदपदावयववाक्यसङ्घटनावत, रसादीनां= रसभावादीनां, व्यञ्जकः= प्रकाशकः, इति= इत्थं, उक्तं= कथितं, तस्य= प्रबन्धस्य, व्यञ्जकत्वे= प्रकाशकत्वे, निबन्धनं= संयोजनं प्रथमं= आद्यं तावत्= समष्ट्या, विभावभावानुभावसञ्चार्यौचित्यचारुणः= विभावस्य भावोद्बोधकोद्दीपकस्य, भावस्य स्थायिप्रकृतिकचित्तवृत्तिविशेषसय रत्यादेः, अनुभावः भावोद्दीपनानन्तराङ्गिकससात्त्विकविकारनिकरः सञ्चारी भावसहकार्यस्थायिप्र- कृतिकभावो निर्वेदादिः तेषां यदौचित्यमुपयुक्तत्वं तेन चारुणो मनोहरस्य कथाशरीरस्य इतिवृत्तविग्रहस्य, विधिः= विधानं, यथायथं= यथार्थ्येन, प्रतिपिपादयिषितरसभावाद्यपेक्षया= प्रतिपादयिषितः व्यङ्तुमभीष्टो यो रस भावदिस्तस्यापेक्षयाऽऽनुकूल्येन, यः= यादृशः, उचितः उपयुक्तो विभावः भावोद्बोधनोद्दीपनहेतुः भावः= विभावोद्दीपितः स्थायिप्रकृतिकश्चित्तविशेषो रत्यादिः, अनुभावः तत्कार्यरूपोविकारश्चेष्टादिः सञ्चारी भावसहकारिणो भावविशेषाः निर्वेदादयः कः= इति समुच्चये, तदौचित्यचारुणः तेषां विभावादीनामौचित्येनानुकूल्येन चारुणः सुन्दरस्य यथा यत्र शृङ्गारवर्णनमपेक्षितं तत्र तादृशं वस्तु ग्राह्यं यत्र ऋतुमाल्यादेर्विभावस्य लीलादेरनुभावस्य हर्षवृत्यादेः सञ्चारिणः स्फुट एव सद्भावः स्यादिति, कथाशरीरस्य= वस्तुविग्रहस्य, विधिः= विधानं व्यञ्जकत्वे= रसप्रकाशकत्वे, निबन्धनं= सङ्घटनं, एकं= प्रथमनिबन्धनस्य प्रथममौचित्यमिति।

इत्थं समष्ट्या व्याख्याय तदेव व्यष्ट्यपि विवेचयसति तत्रेतयादिना तत्र= विभावादिषु, विभावौचित्यं= विभावसम्बद्धोपयुक्तत्वं, तावत्, प्रसिद्धं= लोके शास्त्रे च ख्यातमेव भावसचेतकरणकारणरूपो विभावो रसाद्यानुकूल्येन ख्यात एवेति। भावौचित्यभावसम्बद्धोपयुक्तत्वं तु= इति व्यवच्छेदे, प्रकृत्यौचित्यात्= प्रकृतिः स्वभावस्तस्या औचित्यादानुकूल्यादेव। विभावश्च भावानुकूलो भावश्य प्रकृत्यनुकूल एवेत्याशयः। प्रकृतिं विवृणोति प्रकृतिरित्यादिना प्रकृतिः हि= इत्यवधारणे, उत्तममध्यमाध्यमभात्नेन, दिव्यमानुषादिभावेन= दिव्यमलौकिकं मानुषं लौकिकमित्यादिभावेन, च= अपि, बिभेदिनीमेदकारिणी भवतीति। प्रथमं तु उत्तम-मध्यम-अधमभेदेन प्रकृतिस्त्रिधा भवति ततश्च सा त्रिविधाऽपि दिव्यमानुषदिव्यादिव्यादिभेदेन च भिन्ना भवति। तत्र दिव्या प्रकृति रमर्त्यैकरूपत्वं यथा श्रीशङ्करादेः, मानुषी मर्त्यैकरूपत्वं यथा माधवादेः, दिव्यमानुषी यथा पाण्डवादेरिति। तदुपयोगमाह तामित्यादिना तां= प्रकृतिं यथायथं= यथाऽस्ति तथैव, अनुसृत्य— अनुगत्य, असङ्कोण= स्वाय्यन्तरा नभिनिविष्टः, स्थायी= इतरापेक्षया स्थायिप्रकृतिको रसास्वादपर्यन्तं मुख्यत्वेनावभासकः, भावः= चित्तवृत्तिविशेषो रत्यादिः, उपनिबध्यमानः= संयुज्यमानः, औचित्यभाक्= योग्यतावान्,

भवति इति। प्रकृत्यनुकूलः स्थाय्यन्तरासङ्कीर्णः, भाव एव औचित्यं भजते नान्य इत्याशयः। अन्यथा= प्रकृत्यनुकूलभावनिबन्धने, केवलमानुषाश्रयेण= केवलमानुषप्रकृत्याधारेण, दिव्यस्य= दिव्यप्रकृत्यनुकूलस्य, उत्साहादयः, वा= इति पक्षान्तरे, केवलदिव्याश्रयेण, केवलमानुषस्यः, उत्साहादयः दिव्यस्योत्सा-हादयः केवलमानुषाश्रयेण केवलमानुषस्योत्साहादयः केवलदिव्याश्रययण वा, उपपनिबध्यमानाः= संयुज्यमानाः, अनुचिताः= अनुपयुक्ता, भवन्ति इति। तथा च= एवमेव, केवलमानुषस्य= मानुषमात्रप्रकृतिकस्य, राजादेः= नृपादेः, वर्णने= प्रस्तावे, सप्तार्णवलङ्घनादि- लक्षणा= सप्तसमुद्रपारगमनादिस्वरूपाः, व्यापारः= क्रियाः, उपनिबध्यमानाः= वर्ण्यमानाः, सन्तिः, सौष्ठवभृतः= वर्णनामहिम्ना चारुतधारिणः, अपि= च, नियमेन यथार्थतः, नीरसाः= रसहीनाः, एवं भवन्ति, तत्र= तेषां नीरसत्वे, अनौचित्यं= अनुपयुक्तता, एवं, हेतुः= कारणमिति।

अस्यायमाशयः— प्रबन्धोऽपि रसादीनां व्यञ्जक इति पसिद्धमेव। तस्य व्यञ्जकत्वे निबन्धनप्रकारेषु प्रथमं यथा विभावा औचित्यचारुणः इतिवृत्तस्य रसाद्यपेक्षया समुचितो यो विभावादिस्तस्य उपयुक्तत्वेन विधानमेव। रसाद्यपेक्षया विभावौचित्यं तु लोके भावोद्बोधनकारणो यः स काव्ये विभावः इति, स च येन 'य' अपेक्षितभाव उद्‌बोध्यते तस्यैव ग्रथनमेव यथा रतेरनुकूलनायक नायिकायाः दर्शनं वा स्मरणं तथैव ऋतुमाल्यालङ्कारैरुपवनविहारप्रभृतिभिश्च तस्य भावस्योद्‌दीपनम्। एवमेव प्रियनाशेन शोकस्योद्‌बाधनमित्यादि। भावौचित्यं तु प्रकृत्यनुकूलभावप्रथनम्। प्रकृतिः स्वभावः, स च उत्तममध्यमाधमभेदेन त्रिविधा दिव्यदिव्यादिव्यमानुषपातालीयादिभेदेन भिन्ना च। प्रकृतिमनुसृत्य भावान्तरासङ्कीर्णत्वेन भावस्य प्रथनमेव तस्यौचित्यम्। दिव्यस्य मानुषाश्र-योत्साहप्रथनं वा मानुषस्य दिव्योत्साहप्रथनं नैवचित्यस्य पदम्। यथा मानुषस्य सप्तसागरोल्लङ्घनादिवर्णनमहिम्ना सौष्ठवमपि अनौचित्यत्वेन नीरसमेव तदेव दिव्यस्य रसातिरेकहेतुस्तत्प्रकृत्यौचित्यादिति। तेन यस्य या प्रकृतिस्तदनुकूलमेव भावस्य प्रथनं भावानुकूलमेव विभावस्य ग्रथनमिति विभावभावयोरौचित्यमिति।

वृत्तिकार कारिका के आशय का स्पष्टीकरण करते हैं—

प्रबन्ध भी रसादि का प्रकाशक होता है और उसका व्यञ्जकत्व निबन्ध में आधारित होता है। निबन्धन का पहला प्रकार जिससे कि प्रबन्ध रसादि का व्यञ्जक होता है, विभाव, भाव, अनुभाव, सञ्चारिभाव आदि के औचित्य से सुन्दर कथा शरीरे का विधान अर्थात् प्रतिपादन किए जाने वाले रस, भाव आदि की अपेक्षा से जो अनुकूल विभाव, भाव, अनुभाव, सञ्चारी भाव आदि हैं उनके औचित्य से सुन्दर कथा शरीर का विधान। उसमें विभाव का औचित्य तो लोक एवं शास्त्रों में प्रसिद्ध ही है। भाव का औचित्य तो प्रकृति के अनुकूल चलने से होता है। प्रकृति का अर्थ है स्वभाव। वह उत्तम, मध्यम एवं अधम के भेद से तीन प्रकार की होती है

और उसके दिव्य, मानुष, दिव्यमानुष, पातालीय आदि अनेक भेद होते हैं। उसके अनुकूल एवं दूसरे स्थायिभावों से असङ्कीर्ण भाव का समावेश ही भावगत औचित्य होता है। उसके अर्थात् प्रकृति के विपरीत भावों के प्रथन से अर्थात् मानुष प्रकृति से दिव्य उत्साह अआदि के वा दिव्य प्रकृति से मानुष उत्साह आदि का वर्णन अनुचित होता है। जैसे कि मानुष प्रकृति के राजा आदि के सात समुद्रों का लङ्घन करना आदि व्यापार वर्णना के चमत्कार से अच्छे लगने पर भी नीरस होते हैं और उसमें अनौचित्य ही हेतु होता है।

ध्वन्या०— ननु नागलोकगमनादयः सातवाहनप्रभृतीनां रूयन्ते, तद-लोकसामान्यप्रभावातिशयवर्णने किमनौचित्यं सर्वोर्वोभरणक्षमाणां क्षमाभु-जामिति ? नैतदस्ति, न वयं ब्रूमो यत् प्रभावातिशयवर्णनमनुचितं राज्ञाम्, किन्तु केवलमानुषाश्रयेण योत्पाद्यवस्तुकथा क्रियते तस्यां दिव्यमौचित्यं न योजनीयम्। दिव्यमानुष्यायां तु कथायामुभयौचित्ययोजनमविरुद्धमेव। यथा पाण्डवादिकथायाम्। सातवाहनादिषु तु येषु यावदपदानं श्रूयते तेषु तावन्मात्रमनुगम्यमानमनुगुणत्वेन प्रतिभासते। व्यतिरिक्तं तु तेषोमे-वोपनिबध्यमानमनुचितम्।

लीला— तदेव विदशदयति सोपपत्तिकं नन्वित्यादिना ननु इति प्रश्ने, सन्देहे च, सातवाहनप्रभृतीनां= सातवाहनो नाम राजा कुन्तलेषु बभूव। स च अलौकिकशक्त्या नागलोकमपि अजैषीदित्यादिकथा प्रचलिताऽस्ति, तदादीनां, नागलोकगमनादयः= पातालविजयप्रभृतयः, श्रूयन्ते= परम्परया आकर्ण्यन्ते, सर्वोर्वीभरणक्षमाणां= समस्तपृथ्वीचालनसमर्थानां, क्षमाभुजां राज्ञां, तदलोकसा-मान्यप्रभावातिशयवर्णने,= तादृशं तथाविधं यदेव अलोकसामान्यप्रभावातिशयस्य लोकोत्तरमाहात्म्यातिरेकस्य वर्णनं प्रथनं तस्मिन्, किम्, अनौचित्यं= अनुपयुक्तत्वं इति चेत् न= नैव, एतत्, अस्ति= तन्नेदृशं, वयं, न, ब्रूमः= कथयामः, यत्, राज्ञां= भूपानां, प्रभावातिशयवर्णनं= माहात्म्यातिरेकग्रन्थनं, अनुचितं अनुपयु-क्तमिति। किन्तु= यथार्थतस्तु, केवलमानुषाश्रयेण मानुषमात्राधरेणा, या= यादृशी, उत्पाद्यवस्तुकथा= उत्प्रेक्षितेतिवृत्तं, क्रियते= विधीयते, तस्यां= तादृशमानुषमा-त्राश्रितकथायां, दिव्यं= दिव्यप्रकृतिकसम्बन्धं, औचित्यं= योग्यत्वं, न= नैव, योजनीयं= संश्लेषणीयमिति। दिव्यमानुष्यायां= दिव्यमानुषोभयप्रकृतिकायां तु= इति व्यवच्छेदे, पूर्वोक्तव्यतिरिक्तं, कथायां= इतिवृत्ते उभयौचित्ययोजनं= दिव्यमानुषोभयप्रकृतिगतोपयुक्तत्वसमायोजनं, अविरुद्धं= उपयुक्तं, एव। यथा= इति निदर्शने, पाण्डवादिकथायां= पाण्डवा खलु मनुष्या दिव्यशक्तियुता इति तत्र उभयौचित्यं समायोजनमुपयुक्तमेवेति। तद्विपरीत, सातवाहनादिषु= सातवाह-नप्रभृतिकेवलमानुषकृतिकेषु, तु, येषु, यावत्, उपदानं= कर्मवृत्तं, श्रूयते=

आकर्ण्यते, तेषु= तथाविधपुरुषेषु, तावन्मात्रं= न तदधिक, अनुगम्यमानं= अनुस्रियमाणं, अनुगुणत्वेन= उपयुक्तत्वेन, प्रतिभासते= द्योतते। व्यतिरिक्तं= तदधिकं, तु, तेषां= तथाविधानां, एव, उपनिबध्यमानं= संयोज्यमानं, अनुचितं= अनुपयुक्तम् एवेति।

एतदुक्तं भवति यो यत्प्रकृतिकस्तस्य तथैव निबन्धनमात्रमौचित्यभावहति तदधिकवर्णनं तु प्रत्ययाभावादनुचितमेव भवति। केवलमानुषाश्रयकथायां दिव्यमौचित्य नैव प्रत्ययमावहति। दिवयमानुष्यसम्बद्धकथायां यथा पाण्डवादीनां तु उभयौचित्यमप्यविरुद्धमेव। केवलमानुषप्रकृतिकानां तु येषां यावदेव श्रूयते तेषां तावदेव निबन्धनमुपयुक्तं भवति तदधिकं तु नैवाचित्यभावहति इति।

यहाँ यह शङ्का होती है कि सातवाहन आदि राजाओं का नागलोक गमन आदि सुने जाते हैं, उस प्रकार समस्त पृथ्वी के ही पालन में समर्थ राजाओं के उस लोकोत्तर प्रभाव के वर्णन में कौन सा अनौचित्य होगा। बात ऐसी नहीं है। हम यह नहीं कहते हैं कि राजाओं के प्रभाव के अतिशय का वर्णन करना ही अनुचित है किन्तु हमारा तो यह आशय है कि केवल मानुष प्रकृति का आश्रय लेकर जो उत्पाद्य वस्तु वाली कथा की जाती है उसमें दिव्य औचित्य न जोड़ा जाय (क्योंकि ऐसा करने से उसमें लोगों का विश्वास नहीं बन पाता, जो कि अनुचित है) दिव्यमानुष प्रकृति की कथा में तो दोनों प्रकृति के औचित्य का समावेश विरुद्ध नहीं होगा जैसे पाण्डवों की कथाओं में। (वे तो दिव्य शक्ति से सम्पन्न मनुष्य थे और उनके लिए सशरीर स्वर्ग जाना, नागकन्या से विवाह करना आदि सम्भव था। वैसा न होने पर भी प्राचीन कथा होने के कारण लोग उसमें विश्वास भी कर लेते हैं) लेकिन सातवाहन आदि में तो जिसके जितने कर्म सुने जाते हैं उनमें उतना मात्र ही निबन्धन करना उचित होने व उपयुक्त जान पड़ता है। उनके बारे में उससे अधिक उपनिबन्धन अनुचित होता है।

प्रचलित प्राचीन कथाओं में जो भी हो, उत्पाद्य अर्थात् कवि कल्पित कथाओं में असम्भव बातें नहीं रहनी चाहिए।

तदयमत्र परमार्थः—

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा।।

लीला— अनौचित्यपरिहाराय यन्निर्दिष्टं तद्धेतुनिर्देशनायोपक्रमते तदित्यादिना तत्= तस्मात्, अत्र= प्रकरणेऽस्मिन्, अयं= निर्दिश्यमाणः, परमार्थः= निष्कर्षः। तदेवोपस्थापयति अनौचित्यादित्यादिना अनौचित्यात् ऋते अन्यत् रसभङ्गस्य कारणं न प्रसिद्धौचित्यबन्धः तु रसस्य परा उपनिषत् इति पदव्यवस्था।

अनौचित्यात्= अनुपयुक्तप्रवर्तनात्, ऋते= विहाय, अन्यत्= अपरं, रसभङ्गस्य= रसास्वादव्यवधानस्य, कारणं= हेतुः, न= नैवास्ति, प्रसिद्धोचित्यबन्धः=

प्रसिद्धं प्रख्यातं सर्वसामान्येनापि यत्प्रत्येय औचित्यं उपयुक्तत्वं तस्य बन्धः ग्रथनं, तु= एव, रसस्य= रसासिद्धेः, परा= परमा, उपनिषत्= रहस्यमिति।

अनौचित्यमेव रसव्यवधानस्य परं हेतुस्तेन ख्यातौचित्यग्रथनमेव रससिद्धेः परं रहस्यमित्यस्याशयः।

प्रकरणस्यायमाशयो यत्काव्यं नाम सतः प्रवृत्तयेऽसतो निवृत्तये च। यदि तद्वृत्ते एव विनेयानां प्रतीतिखण्डना जायते तदा तल्लक्ष्यादेव विचलितं भवति। तेन तादृङ् नैव वर्णनीयं काव्ये येन तस्य प्रत्येयत्वमेव खण्डितं भवेत्। केवलमानुषस्य एकपदे एव सप्तसागरोल्लङ्घनाद्यसम्भाव्यतया तदनृतमिति चतुर्वर्गस्यैवोपादेयताया एव अलीकतां बुद्धौ नि विवेशयति येन काव्यं निरर्थकं भवति। रामादेस्तु तथा प्रसिद्धैव तस्तत् पूर्वख्यातिपरम्परया उपचितविश्वासोपारूढत्वात् नैवासत्यतया चकास्ति किन्तु तस्यैव तादृशप्रभावान्तरोत्प्रेक्षणे तु तत्र प्रत्ययबाह्यत्वमुत्पद्यत एव। तेन काव्ये प्रसिद्धौचित्यवाह्यं न किमप्यसम्भावनापदं, वर्णनीयमिति।

अनौचित्य के परिहार के लिए जो कहा गया उसके हेतु के उपस्थापन के लिए उपक्रम करते हैं—

तो इसका यह निष्कर्ष है—

अनौचित्य को छोड़कर रसभङ्ग का और कोई दूसरा कारण नहीं है और प्रसिद्ध औचित्य का निबन्धन ही रस सिद्धि का सबसे बड़ा रहस्य है।

ध्वन्या०— अतएव च भरते प्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यकर्तव्यतयोपन्यस्तम्। तेन हि नायकौचित्यानौचित्यविषये कविर्न व्यामुह्यति। यस्तूत्पाद्यवस्तु नाटकादि कुर्यात्तस्याप्रसिद्धानुचितनायकस्वभाववर्णने महान् प्रमादः।

लीला— अनौचित्यमेव रसभङ्गस्य हेतुत्वेन यदुक्तं तन्निदर्शनमुखेन समर्थयति अत इत्यादिना अत एव= अनेनैव हेतुना, च= अपि सम्भवन्त्यन्यान्यपि कारणानि, किन्तु मुख्यत्वेनेदमेव, भरते= भरतप्रणीतनाट्यशास्त्रे, प्रबन्धप्रख्यात= वस्तुविषयत्वं= प्रबन्धेषु रामायणमहाभारतपुराणादिषु यत् प्रख्यातं प्रसिद्धं वस्तु इतिवृत्तं तदेव विषयः प्रतिपाद्यं यत्र तस्य भावस्तत्त्वं, प्रख्यातोदात्तनाकत्वं= प्रख्यातः प्रबन्धेषु प्रसिद्धः उदात्तः उत्कृष्टचरितो नायको नेता यत्र तत्तस्य भावस्तत्त्वं, च= इतिसमुच्चये, नाटकस्य= रूपकस्य, अवश्यकर्तव्यतया अपरिहार्यतत्वतया उपन्यस्तं= निर्दिष्टमिति। तेन= प्रख्यातोदात्तनायकवस्तुत्वेन, हिं, नायकौचित्यानौचित्यविषये= नायकस्य उपयुक्तत्वानुपयुक्तत्वविषये, कविः= नाट्यकारः, न= नैव, व्यामुह्यति= किं वर्णयेयमिति नैव मोहमाप्नोति। यः, तु= इति व्यवच्छेदे प्रख्यातोदात्तनायकवस्तुत्वेन नाटक नैव करोति किन्तु, उत्पाद्यवस्तु=

कल्पितेतिवृत्तं, युक्तं, नाटकादि= नाटकं 'नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धि-संगयोरपि ग्रहणं प्रख्यातवस्तुविषयः= प्रख्यातोदात्तनायकः इति डिमस्य 'व्यायोग-वस्तुविधिज्ञैः कार्यं प्रख्यातनायकशरीरः' इति व्यायोगस्य च लक्षणावधारणात्, अत्र केचित्तु नाटकमादिर्यस्येति तद्गुणसंविज्ञानबहुव्रीहिणा प्रकरणं विववक्षितमतो न यथाश्रुतार्थानुपपत्तिररिति वदन्ति, कुर्यात्= प्रणयेत्, तस्य= तादृशस्य कवेः, अप्रसिद्धानुचितनायकस्वभाववर्णने= अप्रख्यातानुप- युक्तनेतृप्रकृतिसमुपस्थाने, महान्= दुर्निवारः, प्रमादः= अनवधानता एव। यस्तु प्रख्यातवृत्तत्वेन परिचितं नाटकं तदुपक्षितौ डिमव्यायोगौ च कल्पितेतिवृत्तनिबन्धनेन चिकीर्षति तस्य महानेव प्रमाद एव स्यात् तेन उत्पाद्यवस्तु नाटकादि न कुर्यात मुनिनाऽतथा-निरूपितत्वादिति लोचनकाराशयः। अन्ये तु उत्पाद्यवस्तु नाटकादि अर्थात् नाटकं आदिर्यस्येति उपलक्षणमुक्तबहुव्रीहिणा प्रकरणमिति मत्वा कविः प्रकरणादौ व्यामुह्यति इतयाशयमपि गृह्णन्ति। दीधितिकारस्तु 'नाटकादीत्यतद्गुणसंविज्ञानो बहुव्रीहिः तेन प्रकरणादीनां कल्पितेतिवृतानामेव परिग्रहः (अन्यथा नाटकस्य ख्यातवृत्तत्वानुशासनादस- ङ्गतिरिति द्रष्टव्यमिति राजशासनमेवाध्यादिशति। वयन्तु नाटकादिपदेन नाटकडिमव्यायोमान् गृहीत्वा मुनिना नाटकादेरुत्पाद्यव-स्तुत्वस्यानिरूपितत्वादुत्पा- द्यवस्तुनाटकादीनि, यथाश्रुतार्थस्या- सङ्गत्या यो नाटकादि उत्पाद्यवस्तु सत् कुर्यात् तस्य महान् प्रमादः स्यादिति नालप्रियानुगतं लोचनकारमतमेव प्राथम्येन गृह्णीमस्तत्र तथैव प्रकरणसिद्धत्वात। ततश्च द्विती-यपक्षमपि ग्राह्यमेव यत उत्पाद्यवस्तुनि प्रकरणादौ कवेर्व्यामोहः सम्भवति तत्र कविना सावधानेन भाव्यमित्याशयेन। वस्तुतस्तु वृत्तौ प्रयुक्तः तुशब्द एव प्रथमपक्षं निर्दिशति। अत्रैव 'नाटकादि' इत्यस्य स्थाने 'नाटिकादि' इति पाठमामनन्ति। तत्र आदिग्रहणं प्रकारसूचकं= सादृश्यबोधकं सादृश्यञ्चोत्पाद्यव-स्तुत्वेनातः प्रकरणादिकमादिपदेन ग्राह्यमतो मुनिनिरूपिते नाटिकालक्षणे प्रकरण-नाटकयोगादुत्पाद्यं वस्तु नायको नृपतिः इत्यत्र यथासङ्ख्येन प्रख्यातोदात्तनृप-तिनायकत्वं बोद्धव्यमिति बालप्रियानुगतलोचने स्पष्टम्।

अनौचित्य को रसभङ्ग कारण जो बताया उसका निदर्शन पूर्वक प्रतिपादन करते हैं—

इसी कारण भरत के नाट्यशास्त्र में रामायण, महाभारत, पुराण आदि में प्रख्यात इतिवृत्त ही प्रतिपाद्य विषय होना एवं प्रख्यात तथा उदात्तचरित्र का नायक होना नाटक के लिए अवश्यकर्तव्य के रूप में निद्रेश किया गया है। इस कारण वहाँ नायक के औचित्य एवं अनौचित्य के विषय में कवि को कोई व्यामोह नहीं होता किन्तु जो कवि उत्पाद्य वस्तु को लेकर नाटक आदि (डिम, व्यायोग) करता है तो वहाँ उसका नायक की अप्रसिद्ध एवं अनुचित प्रकृति के वर्णन में बड़ा ही प्रमाद हो सकता है। अतः कवि कभी भी उत्पाद्य वस्तु को लेकर नाटक न रचा करें। अथवा

जो कवि उत्पाद्य वस्तु में आधारित नाटक है आदि जिसका ऐसे प्रकरण की रचना करता है वह उसका नायक की अप्रसिद्ध एवं अनुचित प्रकृति के वर्णन में बड़ा ही प्रमाद हो सकता है।

ध्वन्या०— ननु यद्युत्साहादिभाववर्णने कथञ्चिद्दिव्यमानुष्याद्यौचित्यपरीक्षा क्रियते तत्क्रियताम्, रत्यादौ तु किं तया प्रयोजनम् ? रतिर्हि भारतवर्षोचितेनैव व्यवहारेण दिव्यानामपि वर्णनीयेति स्थितिः, नैवम्, तत्रौचित्यातिक्रमेण सुतरां दोषः। तथा ह्यधमप्रकृत्यौचित्येनोत्तमप्रकृतेः शृङ्गारोपनिबन्धने का भवेन्नोपहास्यता ? त्रिविधं प्रत्यौचित्यं भारते वर्षेऽप्यस्ति शृङ्गारविषयम्। यत्तु दिव्यमौचित्यं तत्तत्रानुपकारकमेवेति चेत्— न वयं दिव्यमौचित्यं शृङ्गारविषयमन्यत्किञ्चिद् ब्रूमः। किं तर्हि ? भारतवर्षविषये यथोत्तमनायकेषु राजादिषु शृङ्गारोपनिबन्धस्तथा दिव्याश्रयोऽपि शोभते। न च राजादिषु प्रसिद्धग्राम्यशृङ्गारोपनिबन्धनं प्रसिद्धं नाटकादौः, तथैव देवेषु तत्परिहर्तव्यम्। नाटकादेरभिनेयत्वादभिनयस्य च सम्भोगशृङ्गारविषयस्यासभ्यत्वात्तत्र परिहार इति चेत्, न; यद्यभिनयस्यैवंविषयस्यासभ्यता तत्काव्यस्यैवंविषयस्य सा केन निवार्यते? तस्मादभिनेयार्थेऽनभिनेयार्थे वा काव्ये यदुत्तमप्रकृते राजादेरुत्तमप्रकृतिभिर्नायिकाभिः सह ग्राम्यसम्भोगवर्णर्नं तत्पित्रोः सम्भोगवर्णनमिव सुतरामसभ्यम्। तथैवोत्तमदेवताविषयम्।

लीला— तर्हि कथं सम्भोगशृङ्गारो निबध्यतें इत्याशङ्कामुखेन तन्निर्दियशति नन्वित्यादिना ननु= इति प्रश्ने, उत्साहादिभाववर्णने= उत्साहप्रभृतिभावोपस्थापने कथञ्चित्= येन केन प्रकारेण, दिव्यामानुष्यौचित्यपरीक्षा= दिव्यौचित्यमानुष्यौचित्यादिविवेकः, क्रियते= विधीयतां, तत्= तादृशविवेकः, क्रियतां= सुखेन विधीयताम्, रत्यादौ= रतिप्रभृतिभावेषु तु तया= तादृशपरीक्षया, किं, प्रयोजनं= फलम्, यतः, रतिः, हि, भारतवर्षोचितेन= भारतवर्षे यदुचितत्वेन स्वीकृतं तेनैव, व्यवहारेण= प्रकारेण, दिव्यानां= स्वर्गीयाणां, अपि, वर्णनीया= समुपस्थापनीया, इति= इत्थं, स्थितिः= व्यवस्था इति। उत्साहमधिकृत्य दिव्यमानुष्योरौचित्यभेदः कामं स्यात्किन्तु रतिस्तु उभयोरेव समानमेव वर्णनीयेति व्यवस्था विद्यते तत्र कथं विवेकः सम्भवति इति कथ्यते चेत् उच्यते, न= नैव, एवं विवेकभावः। यतः, तत्र= रतावपि, आरैचित्यातिक्रमेण= उपयुक्ततोल्लङ्घनेन, सुतरां= नितान्तमेव, दोषः= दूषणमेव भवतीति। कथमित्यपेक्षायामाह तथेत्यादिना तथा हि स्पष्टमेवैतद्यत्, अधमप्रकृत्यौचित्येन= नीचस्वभावोपयुक्तत्वेन, उत्तमप्रकृतेः= उत्कृष्टस्वभावस्य, शृङ्गारोपनिबन्धने= शृङ्गारवर्णनोपगुम्फने, का= कीदृशी

नाम, उपहास्यता= निन्दनीयता, न भवेदपितु सर्वाविधैव। भारते वर्षे, अपि, शृङ्गाररसलक्ष्यं, त्रिविधं= उत्तममध्यमाधमभेदेन त्रिप्रकारकं, प्रकृत्यौचित्यं= स्वभावोपयुक्तत्वमुक्तं अस्त्येवेति। अस्तु तावत्, किन्तु यत्, तु, दिव्यं= स्वर्गीयं, औचित्यं= उपयुक्तत्वं, तत्, तत्र= शृङ्गारविषये, अनुपकारकं= नैव रत्यादेः प्रकाशक, एव, इति, कथ्यते, चेत्, न= नैव= वयं, शृङ्गारविषयं= शृङ्गारसम्बद्ध, दिव्यं, औचित्यं, अन्यत्= मानवविषयेतरं, किञ्चित्= विशिष्टं ब्रूमः= कथयामः। यर्हि= यदि कथा, किं= किमिवोच्यते ? भारवर्षविषये, उत्तमनायकेषु उत्कृष्टचरित्रनेतृषु, राजादिषु= नृपादिषु, यथा= यादृशः, शृङ्गारोपनिबन्धः= शृङ्गारसमायोजनं. तथा= तादृशं एव दिव्याश्रयः= दिव्यप्रकृतिसम्बद्धः शोभते= श्लाघते इति शृङ्गारविषयो यथोत्तमनायके राजादौ निबध्यते तथैव दिव्याश्रये निबन्धनीयः। उक्तमेव नाट्यशास्त्रे यद्दिव्यनाककृतं काव्यं संक्रामबन्धवधयुक्तम्। तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु। (२०९०९) इति। तत्कथमित्यपेक्षायामाह नेत्यादिना नाटकादौ= नाटकप्रभृतिग्रन्थे, राजादिषु= नृपादिनायकेषु, प्रसिद्धग्राम्यशृङ्गारोपनिबन्धनं= ख्यातव्रीडाजनकदन्तनखच्छेद्यव्रीडाजनकशयनाध— रपानादिसन्निवेशनं, न= नैव, च, प्रसिद्धं= ख्यातं, तथैव= तादृगेव, देवेषु= दिव्यप्रकृतिकनायकादौ, तत्= ग्राम्यशृङ्गारोपनिबन्धनं, परिहर्तव्यं= नैव सयोजनीयम्। तत्रापि नाटकादेः= नाटकप्रभृतिरूपकाणां, अभिनेयार्थत्वात्= अभिनयविषयत्वात्, अभिनयस्य= अनुकरणस्य, च, सम्भोगशृङ्गारविषयस्य= 'अनुकूलं निषेवेते यत्रान्योन्यमनुरक्तौ' इति लक्षणस्य शृङ्गारस्य, असभ्यत्वात्= अश्लीलत्वात्, तत्र= नाटकादौ, परिहारः= त्याग इति= इत्थ, कथ्यते, चेत्, न= नैव तत्, यदि, एवं विषयस्य= ईदृशार्थस्य, अभिनेयस्य= अनुकरणीयार्थस्य, असभ्यता= अश्लीलता, तत्= तथा, एवंविषयस्य= ईदृशसम्भोगशृङ्गारार्थस्य, काव्यस्य, श्रव्यादेरपि सा= असभ्यता, केन, निवार्यते= अपाक्रियते। पर्यवसितार्थं निर्दिशति तस्मादित्यादिना तस्मात्= तत्कारणात्, अभिनेयार्थे= चेष्टाद्यनुकरणविषये, वा, अनभिनेयार्थे= श्रवयमात्ररूपे, काव्ये, यत्= यदेव, उत्तमप्रकृतेः= उदात्तस्वभावस्य, राजादेः= नृपप्रभृतेः, उत्तमप्रकृतिभिः= उदात्तस्वभावाभिः, नायिकाभिः, सह ग्राम्यसम्भोगवर्णन= अश्लीलत्वेन, व्यावायोपन्यसन, तत्= तादृशं वर्णनं, पित्रोः= मातापित्रोः, सम्भोगवर्णन= सुरतक्रीडोपस्थापनं, इव, सुतरां= नितान्तमेव, असभ्यं= अनुपादेयम्। तथा= तादृशं, एव, उत्तमदेवतादिविषयं= उदात्तचरितदेवतादिसम्बद्धं सम्भोगवर्णनमिति।

अस्यायमाशयः प्रकरणस्य— यदि कल्पितेतिवृत्ते कवेर्व्यामोहः सम्भवति तत्केवलमुत्साहादौ एव सम्भवति चेत्सम्भवतु किन्तु रत्यादौ तु नैव तस्य सम्भावना दिव्यानामपि मानुषोचितपद्धत्यैव तस्याः स्थितिः अर्थात् उत्साहमधि-

कृत्य देवनरयोर्भेदः सम्भवति प्रेम्णस्तु समानैव गतिरुभयेति नैव शङ्कनीयम्। यतो रत्यादावपि औचित्योल्लङ्घन दोषायैव भवति यथा अधमप्रकृत्यौचित्येन उत्तमप्रकृतिः शृङ्गारवर्णने अवश्यमेव दूषणं भवति। शृङ्गारविषयेऽपि त्रिनिधौचित्यं मतमेव। तथापि दिव्यमौचित्यमन्यदेव तदत्र तन्नैवोपकारकं भवतीति नैव शङ्कनीयम्। यतो दिव्यमपि शृङ्गारविषयौचित्यं नैवान्यदपितु उदात्तप्रकृतिकराजादिगतमेव। यथा तत्र ग्राम्यशृङ्गारोपवर्णनं नैवोचितं तथैव देवतादावपि। न च नाटकादावेवाभिनेयार्थत्वान्तत्परिहार इति मन्तव्यं, किन्तु काव्यमात्रे एव उत्तमप्रकृतिकयोः ग्राम्यसम्भोगवर्णनं तत्मातापित्रोरिवासभ्यमेव। तथैव देवताविषयकसम्भोगवर्णनमपि इति।

यदि कल्पित इतिवृत्त नाटकादि में कवि को व्यामोह हो सकता है तो फिर कैसे शृङ्गार आदि का निबन्ध हो ? इस पर कहते हैं—

यदि उत्साह आदि भाव के वर्णन में किसी तरह दिव्य और मानुष्य औचित्य की परीक्षा करनी है तो की जाय, लेकिन रति आदि भाव में तो उसका क्या प्रयोजन है ? क्योंकि रति जो है भारतवर्ष में उचित माने गए व्यवहार से ही दिव्यों की भी वर्णन करनी चाहिए, ऐसी व्यवस्था है।

ऐसा नहीं। उसमें भी औचित्य का उल्लङ्घन दोष ही होता है। बात यह है कि अधम प्रकृति के औचित्य से उत्तम प्रकृति के शृङ्गार के वर्णन में कौन सी निन्दनीयता न होगी। भारतवर्ष में भी शृङ्गार का विषय जो है वह तीन प्रकार के प्रकृतिगत औचित्य से युक्त ही है अर्थात् वह भी उत्तम, मध्यम अधम के भेद से तीन प्रकार के औचित्य से ही आवृत है। फिर भी दिव्य औचित्य जो है वह वहाँ उपकारक नहीं होता ऐसा नहीं कहना चाहिए। हम शृङ्गारविषयक दिव्य औचित्य को अलग नहीं मानते।

तो फिर क्या मानते हैं?

भारतवर्ष के विषयभूत उत्तमनायक राजा आदि में जो शृङ्गार का उपनिबन्ध होता है उसी तरह दिव्य में आश्रय वाला भी शोभा पाता है। नाटक आदि में राजा आदि उत्तमप्रकृति के राजा आदि नायक में प्रसिद्ध जो ग्राम्यशृङ्गार है दन्तक्षत, नखक्षत शयन अधरपान आदि उसका निबन्धन प्रसिद्ध नहीं है उसी तरह देवताओं में उसका परिहार होना चाहिए।

नाटक आकदि के अर्थ अभिनेय होने से और सम्भोग शृङ्गारविषयक अभिनय के असभ्य होने से नाटक आदि उसका परिहार किया गया है, ऐसा कहा जाता है तो वैसा नहीं है। यदि ऐसे विषय वाले अभिनय को असभ्य माना जाय तो ऐसे ही विषय के काव्य की असभ्यता कैसे दूर होगी ?

इस हेतु अभिनेयार्थ वा अनभिनेयार्थ काव्य में जो उत्तम प्रकृति के राजा आदि का उत्तमप्रकृति की नायिकाओं के साथ ग्राम्य सम्भोग वर्णन है वह माता पिता के सम्भोग के वर्णन की तरह अत्यन्त ही असभ्य है। वैसे ही देवताओं मे सम्बद्ध शृङ्गार का भी समझना चाहिए।

ध्वन्या०— न च सम्भोगशृङ्गारस्य सुरतलक्षण एवैकः प्रकारः, यावदन्येऽपि प्रभेदाः परस्परप्रेमदर्शनादयः सम्भवन्ति, ते कस्मादुत्तमप्रकृतिविषये न वर्ण्यन्ते ? तस्मादुत्साहवद्रतावपि प्रकत्यौचित्यमनुसर्तव्यम्। तथैव विस्मयादिषु। यत्त्वेवंविधे विषये महाकवीनामप्यसमीक्ष्यकारिता लक्ष्ये दृश्यते स दोष एव। स तु शक्तितिरस्कृतत्वात्तेषां न लक्ष्यत इत्युक्तमेव।

लीला— प्रकारान्तरेण पूर्वोक्तमेव द्रढयन्प्रकरणमुपसंहरति नेत्यादिना न= नैव, च, सम्भोशृङ्गारस्य, सुरतलक्षणः= व्यवायस्वरूपः, एकः= अनन्यः, एव, प्रकारः= प्रबन्धः, अस्ति, यावत्= यत्, परस्परप्रेमदर्शनादयः= अन्योन्यानुरागविलोकनादयः, अन्यें= इतेरे, अपि, प्रकाराः= प्रभेदाः, सम्भवन्ति, ते= तादृशाः परस्परानुरागविलोकनादयः, कस्मात्= कथं, उत्तमप्रकृतिविषये= उदात्तस्वभावलक्ष्ये, न= नैव, वर्ण्यन्ते= उपस्थाप्यन्ते ? अर्थात् अवश्यमेव वर्ण्यन्त एव तस्मात्= येन हेतुना, उत्साहवत्= उत्साहादाविव, रतौ, अपि, प्रकृत्यौचित्यं= स्वभावगतोपयुक्तत्वं, अनुसर्तव्यम् न केवल रतावेव, अपितु तथा एवं विस्मयादिषु= विस्मयप्रभृतिभावेष्वपि। यदि तथा काव्येषु यत्तथाविधसुरतवर्णनमुत्तमदेवतादावपि दृश्यते तत्र किमुच्यते इत्यपेक्षायामाह यदित्यादिना एवंविधे= एतादृशे, विषये= प्रसङ्गे, लक्ष्ये= उद्देश्ये, महाकवीनां= सिद्धहस्तकाव्यकारणां प्रसङ्गात्कालिदासादीनां, असमीक्ष्यकारिता= अविचार्य कर्मविधायिता, दृश्यते= विलोक्यते, सः, दोषः= दूषणं, प्रमादः, एव तेषामिति। तत्कथं तत्राचारुत्वमिति चेत्, तेषां= महाकवीनां, सः= तादृशदोषः, तु, शक्तितिरस्कृतत्वात्= प्रतिभाबलदन्तर्धापितत्वात्, तु, लक्ष्यते प्रतिभाति, इति तु पूर्वं, उक्तं= कथितं, एवेति।

अस्यायमाशयः— एकतस्तु दिव्यानामपि उत्तमप्रकृतिकशृङ्गारोपनिबन्धनं नैव दोषाय भवति प्रतीकेन, अन्यच्च शृङ्गारस्य सुरतातिरिक्तमन्येऽपि अन्योन्यानुरागविलोकनादयः प्रकाराः सन्ति येषामुत्तमप्रकृतिकेऽपि निबन्धन नैव दोषाय भवति। तस्माद्रतावपि उत्साह इव उत्तममध्यमाधमरूपप्रकृत्यौचित्यमनुसर्तव्यमेवेति। न केवलं रतावेव अपितु विस्मयादावपि तथैव प्रकृत्यौचित्यमनुसर्तव्यम्। तच्च स्थैर्येणोत्तममध्यमानां नीचानां तु सम्भ्रमेंणेति।

एवमेव शोकस्य च प्रकाशनं धैर्येण उत्तममध्यमानां रुदितेन नीचानाञ्चेति। स च व्यसनसम्भवस्तु स्त्रीनीचप्रकृतिष्वेवेति।

यत्तु महाकवीनामपि प्रबन्धे एतादृशे विषये प्रसवकारिता तद्दोष एव किन्तु स प्रतिभान्तर्धापितत्वान्नैव प्रतिभाति इति।

दूसरे भी प्रकार के पूर्वोक्त मत को दृढ करते हुए प्रकरण का उपसंहार करते हैं—

न तो सम्भोग शृङ्गार मैथुन ही एक मात्र प्रकार होता है, जब कि उसके परस्पर प्रेम दर्शन आदि और भी भेद होते हैं। वे उत्तम प्रकृति के विषय में भी वर्णित किए

जा सकते हैं। अत एव उत्साह में जैसे रति में भी प्रकृति के अनुसार के औचित्य का अनुसरण करना ही चाहिए।

न केवल रति में ही अपितु विस्मय आदि भाव में भी प्रकृत्यौचित्य का पालन होता है। जैसे विस्मय का प्रकाशन उत्तम एवं मध्यम प्रकृति वालों का स्थिरता से और अधम प्रकृति वाले का हड़बड़ी से होता है।

इसी तरह शोक का भी प्रकाशन उत्तम एवं मध्यम प्रकृति वालों का धैर्य से और नीच प्रकृति वालों का रोदन से होता है।

इस प्रकार के विषय में महाकवियों की भी जो विना विचारे वर्णन करने की प्रवृत्ति देखी जाती है वह दोष ही है किन्तु उनकी शक्ति से तिरस्कृत होकर उसके दब जाने से उससे अचारुत्व अवभासित नहीं होता। वह तो प्रतिपादित है ही।

ध्वन्या०— अनुभावौचित्यं तु भरतादौ प्रसिद्धमेव।

लीला— इत्थं भावौचित्यं निर्वर्ण्य सम्प्रति अनुभावौचित्यं निर्दिशति अनुभावेत्यादिना अनुभावौचित्यं= अनुभावसम्बद्धोपयुक्तत्वं, तु= इति व्यवच्छेदे, भरतादौ= भरतनाट्यशास्त्रादौ, प्रसिद्धं= सम्प्रतिपादितं, एव इति। तत एव बोद्धव्यम्। एवमेव सञ्चारिगतौचित्यविषयेऽपि तत एवावसेयमिति तदनुपादाना-दनुमातव्यमिति दीधितौ स्पष्टम्। यतः अनुभावसञ्चारिणोरपि प्रकृत्यौचित्यं भवत्येव। यत्र उत्तमप्रकृतिका आर्द्रनेत्रा एवं भवन्ति तत्र मध्यमप्रकृतिकाः साश्रुनेत्रा भवन्ति अधमप्रकृतिकास्तु अश्रून्वाहयन्त्येव। तथैव उत्तममध्यमप्रकृतिकयोर्ग्ला-निराकृतावेव दृश्यते नीचस्य तु सम्पूर्णावयवेष्वेव।

इस प्रकार भावौचित्य का विवेचन कर अब अनुभावौचित्य का संक्षेप से निर्देश करते हैं—

अनुभावगत औचित्य तो भरत के नाटयशास्त्र आदि मे प्रसिद्ध ही है।

इसका अशय यह है कि अनुभावसम्बन्धी जो औचित्य है उसे भरत के नाट्यशास्त्र आदि से समझ लेना चाहिए। और प्रसङ्ग से सञ्चारिभाव गत औचित्य को भी।

ध्वन्या०— इयत्तूच्यते-भरतादिविरचितां स्थितिं चानुवर्तमानेन महाक-विप्रबन्धांश्च पर्यालोचयता स्वप्रतिभां चानुसरता कविनावहितचेतसा भूत्वा विभावाद्यौचित्यभ्रंशपरित्यागे परः प्रयत्नो विधेयः। औचित्यवतः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ग्रहो व्यञ्जक इत्यनेनैतत् प्रतिपा-दयति- यदितिहासादिषु कथासु रसवतीषु विविधासु सतीष्वपि यत्तत्र विभावाद्यौचित्यवत् कथाशरीरं तदेव ग्राह्यम्, नेतरत्। वृत्तादपि च कथाश-रीरादुत्प्रेक्षिते विशेषतः प्रयत्नवता भवितव्यम्। तत्र ह्यनवधानात्स्खलतः कवेरव्युत्पत्तिसम्भावना महती भवति।

लीला— विभावाद्यौचित्यप्रकरणोपसंहारायोपक्रमते इयदित्यादिना इयत्=

एतावत्, तु= इति निर्देशे तथा सत्यपि, उच्यते= कथ्यते, भरतादिविरचितां= भरतप्रभृतिसमुपबद्धां, स्थितिं= मर्यादां, च, अनुवर्तमानेन= अनुसरता, महाकविप्रबन्धान्= सिद्धकविप्रणतिग्रन्थान्, च, पर्यालोचयता= समधीयानेन, स्वप्रतिभां= निजप्रज्ञां, च, अनुसरता= अनुवर्तमानेन, च कविना= काव्यकारेण, अवहितचेतसा= सावधानमनसा, भूत्वा, विभावाद्यौचित्यभ्रंशत्यागे= विभावादिसम्बद्धोपयुक्तत्वच्युतिहाने, परः= महान्, प्रयत्नः= उद्यमः, कार्यः= विधेय इति। वृत्तस्य= घटितस्य प्रसिद्धस्य, वा, उत्प्रेक्षितस्य= कविकल्पितस्य, औचित्यवतः= विभावाद्यौचित्ययुक्तस्य, कथाशरीरस्य= वस्तुविग्रहस्य, ग्रहः= समुपन्यासः, रसादीनां, व्यञ्जकः= प्रकाशकः,= इति= हेतोः, अनेन प्रस्तुतकारिकोपस्थापनेन, एतत्= वक्ष्यमाणं, प्रतिपादयति= निरूपयति यत्, इतहासादिषु= इतिहासप्रभृतिग्रन्थेषु, रसवतीषु= तथाकथितरसयुक्तासु अत्र रसवत्त्वञ्च विवेकशून्यजनाभिप्रायेणैव यतो विभावाद्यौचितत्वेन विना रसवत्ता नैव सम्भवति, तेनात्रानादरे सप्तमी ज्ञेया, विविधासु= अनेकप्रकारासु, कथासु इतिवृत्तेषु, सतीषु= विद्यमानासु, अपि तत्र= तासु, यत्= यदेव, विभावाद्यौचित्यवत्कथाशरीरं= विभावादिगतौचित्ययुक्तवस्तुविग्रहं, तत्= तादृश, एव इति व्यवच्छेदे, ग्राह्यं= व्यवहारणीयं, न= नैव, इतरत्= अन्यत् विभावाद्यौचित्यहीनमिति। तत्र च वृत्तात्= प्रसिद्धात्, कथाशरीरात्= वस्तुविग्रहात्, च= इति तदपेक्षया, उत्प्रेक्षिते= कविकल्पिते कथानके, विशेषतः= विशिष्टतया, प्रयत्नवता= सावधानेन,भाव्यमिति। तत्र हेतुमाह तत्रेत्यादिना तत्र= कल्पितकथायां हि= यतः अनवधानात्= प्रमादात्, स्खलतः= विभावाद्यौचित्यनिर्वहणाय च्योततः, कवेः= काव्यकृतः महती= असह्या अव्युत्पत्ति सम्भावना= व्युत्पत्तिहीनोत्प्रेक्षा, भवति इति।

अस्यायमाशयः— काव्यं चिकीर्षता कविना भरतादिनिर्दिष्टस्थितिमनुवृत्य महाकविप्रणीतग्रन्थाञ्च सोपपत्तिकमधीत्य स्वप्रतिभाञ्च अनुसृत्य विभावादिगतत्तौचित्यहानापाकरणाय सावधानतया महान प्रयत्नः कार्यः। वस्तु घटितं वा कल्पितमेव भवेत् किन्तु सौचित्यमेव रसादिप्रकाशकं भवतीति हेतुना कारिकाकारेण निर्दिष्टं यत् प्रसिद्धमपि रसवत्ततया ख्यातमपि वस्तु विभावाद्यौचित्ययुक्तमेव ग्राह्यं नान्यमिति। तत्रापि प्रसिद्धापेक्षया कल्पिते कविना सावधानेन भाव्यं यतस्तत्र महान् प्रमादावसरो येन कवेरव्युत्पत्ति र्द्योत्यत इति।

विभावादि के औचित्य का जो प्रकरण है उसे उपसंहार करने का उपक्रम करते हैं—

फिर भी इतना तो कहा ही जाता है— भरत मुनि आदि के द्वारा निर्दिष्ट स्थिति का अनुपालन करता हुआ, कहपकवियों के प्रबन्धों का भी पर्यालोचन करता हुआ एवं अपनी प्रतिभा का भी अनुसरण करता हुआ कवि सावधान मन से विभावादि के औचित्य की हानि के परित्याग के लिए महान् प्रयत्न करें। घटित वा कल्पित जो भी

कथा हो, औचित्य से युक्त कथा शरीर का ग्रहण ही रसादि के व्यञ्जक होने से कारिका में यह प्रतिपादित किया गया है कि इतिहास आदि में तथाकथित रस से युक्त (जो कि वास्तव में सभी में नहीं होता) अनेक कथाओं के रहने पर भी उनमें से जो विभावादि के औचित्य से युक्त कथाशरीर है उसी को लेना चाहिए दूसरे को नहीं। घटित कथावस्तु की अपेक्षा उत्प्रेक्षित (कल्पित) कथा शरीर में कवि को विशेष प्रयत्न करना चाहिए क्योंकि उसमें अवसावधानी से चूक जाने पर कवि की व्युत्पत्तिहीन होने की सम्भावना बड़ी ही होती है क्योंकि उसमें सभी पक्ष कवि को ही उन्नति करना होता है।

ध्वन्या०— परिकरश्लोकश्चात्र

कथाशरीरमुतपाद्यवस्तु कार्यं तथा तथा।
यथा रसमयं सर्वमेव तत्प्रतिभासते।।

लीला— उत्पाद्यवस्तुविषये पूर्वोक्तमेव संक्षिप्य द्रढयितुमुपक्रमते परिकरइ-त्यादिना अत्र= विषयेऽस्मिन्, परिकरश्लोकः= अवान्तरपद्यम्। तदवतारयति कथेत्यादि उत्पाद्यवस्तु कथाशरीरं तथा तथा कार्यं यथा सर्वं एव तत् रसमयं प्रतिभासत इति पदव्यवस्था।

उत्पाद्यवस्तु= उत्पाद्यमुत्प्रेक्षितं वस्तु इतिवृत्तं यत्र तत्तथा कथाशरीरं= वस्तुविग्रहं, तथा तथा= तादृशं, कार्यं= कल्पनीयं, यथा= यावता, तत् सर्वं= निखिल, एव, रसमयं= रससिक्तं, प्रतिभासते= प्रतीयत इति।

उत्पाद्यवस्तुयुक्तं कथाशरीरं तथोन्नेयं यथा तन्निखिलमेव रसार्द्रं भवेन्न किमपि नीरसमवशिष्येतेति भावः।

उत्पाद्य वस्तु के सम्बन्ध में जो कहा उसका ही संक्षेप कर कहते हैं—

यहाँ अवान्तरश्लोक भी होता है—

कल्पित वस्तु वाला कथा शरीर ऐसा किया जाना चाहिए जैसा कि वह सम्पूर्ण ही रसमय हो जाय और नीरास एवं अनुचित कुछ भी न रहे।

ध्वन्या०— तत्र चाभ्युपायः सम्यग्विभावाद्यौचित्यानुसरणम्। तच्च दर्शितमेव। क़िञ्च—

सन्ति सिद्धरसप्रख्या ये च रामायणादयः।
कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी।।

तेषु हि कथाश्रये तावत्स्वेच्छैव न योज्या। यदुक्तम्— 'कथामार्गे न चाल्पोऽप्यतिक्रमः।' स्वेच्छापि यदि योज्या तद्रसविरोधिनी न योज्या।

लीला— उत्पाद्यवस्तु कथाशरीरं तथा कार्य यथा सर्वमेव रसमयं स्यादिति यदुक्तं तत्रोपायमाह तत्रेत्यादिना तत्र= तथाकरणे, च, अभ्युपायः= प्रविधिः, सम्यक्= समग्ररूपेण, विभावाद्यौचित्यानुसरण= विभावादिगतोपयुक्तत्वानुवर्तन, एवेति। तत्= तादृशं विभावाद्यौचित्यं, च, दर्शितं= निर्दिष्टं, एवेति। तत्रोपा-

यान्तरमपि निर्दिशति किञ्चेत्यादिना किञ्च= इति समुच्चयेऽत्र। उपायोपदेश-कावान्तरपद्यमुपस्थापयति सन्तीत्यादिनरा ये च सिद्धरसप्रख्याः रामायणादयः कथाश्रयाः सन्ति तेषु तैः रसविरोधिनी स्वेच्छा न योज्या इति पदव्यवस्था।

ये, च सिद्धरसप्रख्याः= सिद्धाः सिद्धिरस्त्यस्येति (अर्थआदित्वादच्) ते आस्वाद्यत्वमुपनीताः, च ते रसाः शृङ्गारादयस्तैः प्रख्याः ख्याताः रामायणादयः= रामायणप्रभृतिग्रन्थाः, कथाश्रयाः= इतिवृत्ताधाराः, तैः= तादृशग्रन्थैः (सह) साहित्य-विवक्षामात्रे तृतीया, रसविरोधिनी= रसव्यवधायिका, स्वेच्छा= स्वविवेकः, न, योज्या= नैव प्रयोक्तव्या प्रथमं तु तत्र स्वेच्छैव न योज्याऽपितु यथायथं ग्राह्यं तत्रापि रसप्रतिकूला स्वेच्छा तु नितान्तमेव न योज्या इति। तथाकरणे रसविरो-धसम्भवात्।

तदेव व्याख्याति तेष्वित्यादिना तेष= तादृशेषु कथाश्रयेषु= कथाधारेषु, तावत्= प्रथमं, स्वेच्छा= स्वविवेकः, एव, न योज्या,। यतः, यद्, उक्तं= कथितमेव कथामार्गे= वस्तुवर्त्मनि, अल्पः= मनागपि, अतिक्रमः= उल्लङ्घनं न= नैव भवेदिति। यदि= कारणवशात्, स्वेच्छा= स्वरुचिः, अपि, योज्या= प्रयोज्या भवति, तदापि, तद्रसविरोधिनी= तत्तत्प्रसिद्धरसप्रतिकूला, न, योज्या सन्निवेश्या इति। ते च यथा, विद्यन्ते प्रतिपादितास्तथैव ग्राह्येति भावः। धीरोदात्तत्वेन प्रथितं रामं धीरललि-तत्वयोजनेन कश्चिदपि नाटिकानायकं कर्तुं नोत्सहेतेत्याशयः।

आशयस्त्वित्थमस्य— कल्पितवस्तुकथाशरीरस्य रसमयीकरणे उपायस्तु विभावाद्यौचित्यानुसरणमेव। अपरश्च उत्प्रेक्षाव्याजने कश्चिदपि सिद्धरसत्वेन ख्याताः रामायणादिप्रबन्धाः कथाधारभूताः सन्ति तैः सह स्वेच्छां नैव योजयेद्यदि वा कारणवशाद्योजयत्यपि तत्तत्प्रसिद्धरसप्रतिकूलत्वेन नैव योजयेदिति यतः कथामार्गे स्वल्पोऽप्यतिक्रमो न कल्याणायेति।

कल्पित वस्तु वाले कथा शरीर के रसमय करने का उपाय सूझाते हैं—

उस मे उपाय है विभावादि के औचित्य का सही ढङ्ग से अनुसरण। वह पहले ही दिखाया जा चुका है।

और यह भी कि—

सिद्ध अर्थात् आस्वाद्य बने रसों से प्रसिद्ध जो रामायण आदि ग्रन्थ कथा के आश्रय हैं उनके साथ उनमें प्रसिद्ध रस के प्रतिकूल किसी भी इच्छा का प्रयोजन नहीं करना चाहिए।

कथा के आश्रयभूत उनमें पहले तो इंच्छा का प्रयोग ही नहीं करना चाहिए। जैसे कि कहा गया है— कथामार्ग में थोड़ा सा भी अतिक्रमण न हो।

यदि स्वेच्छा का प्रयोजन करना भी है तो उन-उन प्रसिद्ध रसों के प्रतिकूल स्वेच्छा का तो किसी भी प्रकार से प्रयोजन नहीं होना चाहिए।

ध्वन्या०— इदमपरं प्रबन्धस्य रसव्यञ्जकत्वे निबन्धनम्। इतिवृत्तवशायातां कथञ्चिद्रसाननुगुणां स्थितिं त्यक्त्वा पुनरुत्प्रेक्ष्यान्तराभीष्टरसोचिकतकथोन्नयो विधेय: यथा कालिदासप्रबन्धेषु। यथा च सर्वसेनरचिते हरिविजये। यथा च मदीय एवार्जुनचरिते महाकाव्ये।

कविना काव्यमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्। तत्रेतिवृत्ते यदि रसानगुणां स्थितिं पश्येत्तदेमां भङ्क्त्वापि स्वतन्त्रतया रसानुगुणं कथान्तरमुत्पादयेत्। नहि कवेरितिवृत्तमात्रनिर्वाहिण किञ्चित्प्रयोजनम्, इतिहासादेव तत्सिद्धे:।

लीला— इत्थं प्रबन्धस्य रसाभिव्यञ्जकत्वे प्रथमं विभावाद्यौचित्यरूपं प्रावधानं निरूप्य सम्प्रति वस्त्वनुकूलनरूपं तस्यैव द्वितीयं प्रावधानं निरूपयति इदमित्यादिना प्रबन्धस्य= सङ्घटितवाक्यसमुदायस्य, रसाभिव्यञ्जकत्वे= रसादिप्रकाशकत्वे, इद= वक्ष्यमाणप्रकारं, अपरं= अन्यत्, निबन्धनं= सङ्घटनम्। तच्चेदं, इतिवृत्तवशायातां= कथावस्तुप्रसङ्गप्राप्तां, रसाननुगुणां= रसाद्यनुपस्कारिणीं, स्थितिं= अवस्थां, कथञ्चित= येन केन प्रकारेण, व्यक्त्वा= विहाय पुन: तत्स्थाने, उत्प्रेक्ष्य= परिकल्प्य, अपि, अन्तरा= मध्ये, अभीष्टरसोचितकथोन्नय: अभीष्ट: प्रतिपिपादयिषितो यो रसस्तस्य कृते उचिता उपयुक्ता या कथा तस्या उन्नय: संयोजना, विधेय:= कार्य इति यथा= इति निदर्शनं कालिदासप्रबन्धेषु। यथारघुवंशे अजविवाहप्रसङ्ग:। यथा च= अपरमपि निदर्शनं यथा, सर्वसेनविरचिते, हरिविजये तत्र हि कान्तानुनयाङ्गत्वेन पारिजातहरणप्रसङ्ग:। यथा च= निदर्शनान्तरमपि, मदीये= आनन्दवर्धनेनैव प्रणीते, अर्जुनचरिते महाकाव्ये तत्र हि अर्जुनस्य पातालविजयप्रसङ्ग:। किञ्च, काव्यम्, उपनिबध्नता= प्रणयता, कविना= काव्यकारेण, सार्वात्मना= सर्वविशेषोपायेन, रसपरतन्त्रेण= रसैकयात्ततानेन, भवितव्यम्। तत्र= तस्मिन्नुपनिबध्यमाने,, इतिवृत्ते= वस्तुनि, यदि, रसाननुगुणां= रसप्रतिकूलां, स्थितिं= अवस्थां, पश्येत्= विलोकयेत्, तदा,= यस्यामवस्थायां, इमां= कथां, भङ्क्त्वा= अन्यथाकृत्य, अपि, स्वतन्त्रतया= स्वाच्छन्द्येन, रसानुगुंणं= रसानुकूलं, कथान्तरं= अन्यदेव वस्तु, उत्पादयेत्= परिकल्पयेत। यत:, कवे:= काव्यकारस्य, इतिवृत्तनिर्बहणेन= केवलं कथावस्तुसमायोजनेन, न, हि, किञ्चित्= किमपि, प्रयोजनं= फलमिति। तच्च इतिहासात्= तच्च तत्तद्ग्रन्थात्, एव= हि, प्रसिद्धे: ख्यातेरिति।

अस्यायमाशय:—यदि सङ्घट्यमानकथाप्रवाहे कश्चिद् रसप्रतिकूलपक्ष: समुपतिष्ठते तदा तमन्यथाकृत्वाऽपि तत्र रसानुकूलमेव वस्तु सङ्घटयेत्। केवलेतिवृत्तनिर्वाहस्तु नैव कवे: प्रयोजनम्। तत्तु इतिहासादेव सम्भवत्येव। कविस्तु रससम्बद्धो भवति तेन कविना सर्वं विहायापि रसकैतानेन भाव्यमिति।

अत्र प्रथमकरणे 'कथामार्गे न स्वल्योऽप्यतिक्रमः' इत्युक्तमत्र च इमां भंङ्क्त्वाऽपि स्वतन्त्रतयारसानुगुणं कथान्तरमुत्पादयेत् 'इत्युक्तमिति' वदतो व्याघात, इव दृश्यते। अत्र पूर्वाचार्यैः स्वल्पमपि नैव विचारितम्। वयन्त्वित्थं विचिन्तयामो यत्कथातिक्रमणनिषेधो रससिद्धकथाया एव यथा रामायणगतक-थायाः तथाकरणे तत्र रसभङ्गावसरात्। कथाभङ्गविधिश्च नीरसकथाया एव तत्र रसप्रवेशावसरलाभात्। किन्तु तत्रापि नैव वयं सन्तुष्यामः, किञ्च प्रचलितरमाय-णादिकथास्वपि यदेव नाकस्य रसस्य वा अनुचितं तत्र तत्र कविभिस्तदपि अन्यथाकृतं दृश्यत एव। यथा मायुराजेन उदात्तराघवे रामेण छद्मना बालिवध स्त्यक्त एव। तदेव वीरचरिते तु भवभूतिना रावणसौहृदे न बाली रामवधार्थमागतो रामेण हत इत्यन्यथाकृतः। तथैव कालिदासेन अभिज्ञानशाकुन्तले शकुन्तलां जानतोऽपि अजानत इव तया सह व्यवहरतो महाभारतौयदुष्यन्तस्य दुश्चरि-त्रवगूहनाय दुर्वासः शापः परिकल्पितः। एवञ्च पञ्चवट्यां सीताप्रेरितो लक्ष्मणो रामसाहाय्याय सीतया प्राथितो रामो गतः इत्य यथाकृत मपि दृश्यते। तेन प्रथमपक्षे यदुक्तं तत्प्रसिद्धग्रन्थगौरवरक्षणधिया प्रोक्तं द्विन्तीयपक्षे तु कविहृद-येनोक्तमिति प्रतिभाति।

इस प्रकार प्रबन्ध के रसाभिव्यञ्जकत्व का विभावादिगत औचित्य रूप प्रथम प्रावधान का निरूपण कर अब उसके दूसरे वस्त्वनुकूलनरूप प्रावधान का उल्लेख करते हैं—

प्रबन्ध के रसाभिव्यञ्जकत्व में यह दूसरा निबन्धन। कथा के प्रसङ्ग में प्राप्त किसी भी प्रकार से रस के अनुगुण न बनने वाली स्थिति को छोड़कर फिर कल्पना करके भी बीच में अभीष्ट रस के लिए उचित कथा का उन्नयन करना चाहिए जैसे कि कालिदास के प्रबन्धों में, उसी तरह सर्वसेन के द्वारा प्रणीत हरिविजय में और जैसे कि मेरे (आनन्दवर्धन) द्वारा प्रणीत अर्जुन विजय महाकाव्य में। (रघुवंश में अजविवाह प्रकरण, अभिज्ञानशाकु३न्तल में दुर्वासा का श्राप, हरिविजय में प्रेयसी के अनुनय के अङ्ग के रूप में पारिजात हरण, अर्जुनचरित में अर्जुन का पाताल विजय आदि इसके उदाहरण हैं) काव्य में प्रणयन में लगे कवि को चाहिए कि वह सभी प्रकार से रस में ही एकतान बने। इस इतिवृत्त में कहीं भी रस के अनुकूनल न बनने वाली स्थिति को देखें तो उसको तोड़ कर भी स्वतन्त्र रूप से रस के अनुगुण कथान्तर का उत्पादन कर लेना चाहिए। इतिवृत्त मात्र के निर्वाह से कवि का कोई प्रयोजन नहीं है वह तो इतिहास से सिद्ध होता है। कवि का प्रयोजन तो रससिद्धि है और उसे इस प्रकार से पूरी करती है।

**ध्वन्या०— रसादिव्यञ्जकत्वे प्रबन्धस्य चेदमन्यनमुख्यं निबन्धनं, यत्सन्धीनां मुखप्रतिमुखगर्भावमर्शनिर्वहणाख्यानां तदङ्गानां चोपक्षेपादीनां घटनं रसाभिव्यक्त्यपेक्षया, यथा रत्नावल्याम्। न तु केवलं शास्त्र-**

स्थितिसम्पादनेच्छया, यथा वेणीसंहारे विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य प्रकृतरसनिबन्धाननुगुणमपि द्वितीयेऽङ्के भरतमतानुसरणमात्रेच्छया घटनम्।

लीला— एवं प्रबन्धस्य रसादिव्यञ्जकत्वे वस्त्वनुकूलनरूपं द्वितीय प्रावधानं निरूप्य सम्प्रति सन्ध्यवस्थानरूपं तृतीयं प्रावधानं निरूपयति रसेत्यादिना प्रबन्धस्य= सङ्घटितवाक्यसमुदायस्य, रसादिव्यञ्जकत्वे, रसभावादिप्रकाशकत्वे, इदं= वक्ष्यमाणप्रकारं, अन्यत्= अपरं, मुख्यं= प्रधानं, निबन्धन= सङ्घटनं, च, यत्, मुखप्रतिमुखगर्भाविमर्शनिर्वहणाख्यानां— मुखं नानार्थरससम्भवा बीजसमुत्पत्तिर्यत्र बीजारम्भयोगः, प्रतिमुखं लक्ष्यालक्ष्यतया बीजस्योद्भदो यत्र विन्दुप्रयत्नानुगमः, गर्भोदृष्टनष्टस्य बीजस्य मुहुरन्वेषणं प्रातयाशायुतं, विभर्शो गर्भनिर्भिन्नबीजार्थो, नियतात्रिरूपः, निर्वहणं तद्यत्र बीजवन्तो मुखाद्यर्थाः विप्रकीर्णा यथायथमेकार्थमुपनीयन्ते इति आख्यानां= संज्ञानां, सन्धीनां= अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति इतिलक्षणानां इतवृत्तभेदानां, उत्ण्क्षेपप्रभृतीनां तदङ्गानां= तेषां सन्धीनामङ्गानामवयवानां, तानि च चतुः षष्टिसंख्याकानि, रसाभिव्यक्त्यपेक्षया= रसप्रकाशनपरत्वेन, घटनं= संयोजनं, यथा रत्नावल्यां= तदाख्यायां नाटिकायां, केवलं, शास्त्रसम्पादेनच्छया= शास्त्रानुसरणस्पृहया, तु, न, यथा= इति निदर्शने, वेणीसंहारे= भट्टनारायणप्रणीते, तदाख्ये नाटके, द्वितीये, अङ्के, विलासाख्यस्य= विलाससंज्ञकस्य 'रत्यर्थेहा विलासः' स्यादिति लक्षणस्य शृङ्गारानुगुण्यस्य प्रतिमुखसन्ध्यङ्गस्य, प्रकृतरसनिबन्धनाननुगुणं= प्रकृतः, प्रासङ्गिको यो रस उत्साहस्थायिभावात्मको वीरस्तस्य अननुगुणमनुपस्कारकम्, अपि, भरतमतानुसरणमात्रेच्छया= भरतमुनिमतानुवर्तनमात्रलोभेन, घटनं= संयोजनमिति।

अस्यायमेवाशयः— प्रबन्धकस्य रसव्यञ्जकत्वे इदमपि प्रावधानमावश्यकं यत्तत्र साङ्गानां सन्धीनां प्रयोगो रसाभिव्यक्त्यपेक्षयैव, यथा रत्नावल्यां, कृतः स्यान्नैव च शास्त्रानुसरणेच्छामात्रेण यथा वेणीसंहारे द्वितीयेऽङ्के भानुमतीदुर्वोधनालापरूपो विलासः प्रतिमुखसन्ध्यङ्गं प्रवीररसाननुगुणमपि घटितमिति।

इस प्रकार प्रबन्ध के रसाभिव्यक्ति के लिए आवश्यक वस्त्वनुकूलनरूप दूसरे प्रावधान का निरूपण कर अब सन्धि के अनुकूल प्रयोगरूप तीसरे प्रावधान का उल्लेख करते हैं—

प्रबन्ध के रसादिव्यञ्जकत्व में यह भी एक मुख्य निबन्धन है कि मुख, प्रतिमुख, गर्भ, विमर्श, निर्वहण संज्ञा वाली पाँच सन्धियों का तथा उनके उपक्षेप आदि अङ्गों का ऐसा घटन हो जो कि रस की अभिव्यक्ति के लिए अनुकूल हो जैसे रत्नावली' में, न कि शास्त्र की स्थिति के सम्पादन की इच्छा मात्र से जैसे वेणीसंहार के दूसरे अङ्क में विलास नामक प्रतिमुख सन्धि के अङ्ग का प्रकृत रस (वीर) के निबन्धन के अनुगुण न होने पर भी भरत के मत के अनुसरण मात्र की इच्छा से घटन।

ध्वन्या०— इदं चापरं प्रबन्धस्य रसव्यञ्जकत्वे निमित्तं यदुद्दीपन-प्रशमने यथावसरमन्तरा रसस्य यथा रत्नावल्यामेव।

लीला— इत्थं संन्धिसन्ध्यङ्गानुगुणनरूपं तृतीयं प्रावधानं निरूप्य सम्प्रति यथावसरं रसोद्दीपनप्रशमनरूपं चतुर्थ प्रबन्धस्य रसव्यञ्जकत्वे प्रावधानं निरूपयति इदमित्यादिना प्रबन्धस्य= सङ्घटितवाक्यसमुदायस्य, रसव्यञ्जकत्वे प्रावधान निरूपयति इदमित्यादिना प्रबन्धस्य= सङ्घटितवाक्यसमुदायस्य, रसव्यञ्जकत्वे= रसप्रकाशकत्वे, इदं= वक्ष्यमाणं, च अपरं= पूर्वोक्ताद्भिन्नं, निमित्तं= कारणं यद्, रसस्य= प्रतिपिपादयिषितरसस्य, अन्तरः मध्ये, यथावसरं=अवसरानुकूलं, उद्दीपनप्रशमने= उद्दीपनं दीप्तिः तच्च विभावादिपरिपूरणया प्रशमनं आस्वादधारा-विच्छेदस्तच्च विभावाद्यपाकरणेन च ते, स्त इति। तन्निदर्शयति यथेत्यादिना यथा, रत्नावल्यां, एवं= इति पूर्वप्रावधानवत्, रत्नावल्यामुर्ददीपनं यथा सागरिकायाः अयं स राजा उदयणो त्ति' इति कथने, प्रशमनं वासवदत्तातः पलायने, पुनरुद्दीपनं चित्रफलकोल्लेखे तस्य प्रशमनं सुसङ्गताप्रवेशे। किन्तु ते च यथावसरमेव विधीयतां यतः पुनः पुनस्तथाकरणे तु रसो ग्लानिमवाप्नोति विशेषतः। शृङ्गारः।

इस प्रकार प्रबन्ध के रसाभिव्यञ्जकत्व में तीसरे प्रावधान सन्धि एवं सन्ध्यङ्गों के रसाभिव्यक्ति की अपेक्षा से सन्निवेश का निरूपण कर अब उसके चौथे प्रावधान रस का यथावसर उद्दीपन एवं प्रशमन का निरूपण करते हैं—

प्रबन्ध के रसव्यञ्जकत्व में यह दूसरा ही कारण है जो रस का बीच में अवसर के अनुकूल उद्दीपन एवं प्रशमन करना। जैसे रत्नावली में ही।

उद्दीपन विभावादि के घटना से होता है—जैसे रत्नावली में सागरिका द्वारा उदयन को देखने पर, और प्रशमन का अर्थ है आस्वाादधारा का विच्छेद जैसे वासवदत्ता को देखने से सब का भागना। फिर उद्दीपन चित्रफलक में सागरिका को देखने पर और प्रशमन सुसङ्गता के प्रवेश में।

यह अवसर में ही होना चाहिए क्योंकि ज्यादा उद्दीपन रस को मुरझा देता है, खाश कर शृङ्गार को।

ध्वन्या०— पुनरारब्धविश्रान्ते रसस्याङ्गिनोऽनुसन्धिश्च। यथा तापस-वत्सराजे।

लीला— इत्थं प्रबन्धस्य रसव्यञ्जकत्वे चतुर्थं प्रावधानं यथावसरं रसस्योद्दीपनप्रशमनें निरूप्य सम्प्रति तस्यैव पञ्चमं प्रावधानं रसानुसन्धि निर्दिशति पुनरित्यादिना आरब्धविश्रान्तेः= आरब्धा उपक्रान्ता न तु सर्वथोपनता विश्रान्तिः= प्रशमनं यस्य स तस्य, अङ्गिनः—प्रधानत्वेन गृहीतस्य, पुनः-यत्र-यत्र विच्छेदस्तत्र तत्र, अनुसन्धिः= अनुसन्धानमिति। रसपदेनाऽत्र रसाङ्गभूतस्य कस्यापि ग्रहणमिति लोचने उत्तम्। यथा तापसवत्सराजे तत्र हि शृङ्गारो मुख्यो रसः करुणश्चाङ्गम्। तत्र च तस्य तस्य पुनरभिसन्धिस्तत्रैव द्रष्टव्यः।

प्रधानरसस्य तस्याङ्गभूतस्यापि यदा च विश्रान्तिरारभ्यते तत्र पुनरभिसन्धि-प्रबन्धस्य रसव्यञ्जकत्वे पञ्चमं प्रावधानमिति।

प्रबन्ध के रस के व्यञ्जकत्व में एक कारण यथावसर रस का उद्दीपन एवं प्रशमन को बताकर अब पाँचवाँ कारण विश्रामोन्मुख रस का पुनरभिसन्धि को बताते हैं।

प्रशमन की ओर बढ़ते हुए लेकिन अभी न पहुँचें मुख्य रस का, उपलक्षण से अङ्ग रसों का भी फिर से उज्जीवन करना भी (प्रबन्ध के रसव्यञ्जकत्व में एक कारण होता है।) जैसे तापसवत्सराज में।

ध्वन्या०— प्रबन्धविशेषस्य नाटकादेर्रसव्यक्तिनिमित्तमिदं चापरमवगन्तव्यं यदलङ्कृतीनां शक्तावप्यानुरूप्येण यचोजनम्। शक्तो हि कविः कदाचितदलङ्कारनिबन्धने तदाक्षिप्ततयैवानपेक्षितरसबन्धः प्रबन्धमारभते, तदुपदेशार्थमिदमुक्तम्। दृश्यन्ते च कवयोऽलङ्कारनिबन्धनैकरसा अनपेक्षितरसाः प्रबन्धेषु।

लीला— इदानीं प्रबन्धस्य रसव्यञ्जकत्वे रसस्य पुनरभिसन्धिरूपं पञ्चमं प्रावधानं निरूप्य सम्प्रति तस्यैव रसानुरूप्येणालङ्कारयोजनरूपं षष्ठं प्रावधानं निरूपयति प्रबन्धेत्यादिना नाटकादेः नाटकप्रभृतेः, प्रबन्धविशेषस्य- सङ्घटितवाक्यसमुदायस्य, रसव्यक्तिनिमित्तं-रसप्रकाशनहेतुः, इदं— वक्ष्यमाणं, च-इति समुच्चये, अपरं— अन्य, अवगन्तव्यं-ज्ञातव्यं, यद्, शक्तौ-सामर्थ्ये, सत्यां,

अपि, अलंकृतीनां-अलङ्काराणां, आनुरूप्येण-रसानुकूल्येन, योजनं-घटनंमिति। तत्प्रतिपादने हेतुमाह शक्त इत्यादिना शक्तः-अलङ्कारयोजनक्षमः, कविः, हि, कदाचित्-प्रायः, अलङ्कारनिबन्धने-अलंकृतिसंयोजने, तदाक्षिप्ततया-तेन अलङ्कारेण आक्षिप्ततया निर्दिष्टत्वेन अलङ्कारव्यासङ्गेन, अनपेक्षितरसबन्धः-कृतरसोपेक्षः, सन्, प्रबन्धम्, आरभते— प्रणेतुमुपक्रमते, तदुपदेशार्थं- तादृशकविशिक्षार्थम्, इदं— अलङ्काराणां शक्तावपि रसानुगुण्यमेव योजनमिति, उक्तं-कथितमिति। यतः प्रबन्धेषु, अलङ्कारनिबन्धनैकरसाः- अलङ्काराणां निबन्धते प्रयोजने एव एकरसाः अद्वितीयानुरागाः अनपेक्षितरसाः नितान्तमुपेक्षिरसाः, कवयः, दृश्यन्ते, अत एवेदमुक्तमिति। यथा स्वप्नवासवदत्ताख्ये नाटके—

स्वञ्चितपक्ष्मकपाटं नयनद्वार स्वरूपताडेन।

उद्घाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजा। इति लोचने।

इयं वत्सराजोक्तिः।सा नृपतनूजा वासवदत्ता, स्वञ्चितपक्ष्मकपाटं— मिथः-सम्बद्धनेत्ररोमरूपकवाटं, नयनद्वारं, स्वरूपताडेन—निजाकृतिरूपताडनेन, उद्घाट्य, मे, हृदयगृहं— हृद्रूपभवनं, प्रविष्टेति। अत्र नयनद्वारमित्येतावदेव रूपणं शृङ्गारानुगुणतया सुन्दरं शेषमलङ्कारभारमात्रमिति बालप्रियायांस्पष्टम्।।१०-१४।।

इस प्रकार प्रबन्ध के रसव्यञ्जक होने में रस की पुनः अभिसन्धि रूप पाँचवें प्रावधान का निरूपण कर अब उसके छठवें प्रावधान का निर्देशन करते हैं—

नाटक आदि रूप प्रबन्ध विशेष के रस के अभिव्यञ्जक होने के लिए यह और भी कारण समझना चाहिए कि सामर्थ्य होने पर भी अलङ्कारों का रस की अनुगुणता से ही संयोजन हो। समर्थ भी कवि कभी काल अलङ्कारों के निबन्धन में अलङ्कारों के ही द्वारा प्रभावित रह कर रसबन्ध की उपेक्षा करता हुआ प्रबन्ध का आरम्भ करता है उसी के उपदेश के लिए यह कहा गया है। कई प्रबन्धों में अलङ्कारों के निबन्धन में एक मना होकर, रस की नितान्त उपेक्षा करते हुए कवि देखे गए हैं। अतः यह कहना पड़ा है। जैसे—

'जुड़े हुए बरौनी रूप कपाटों वाले नयन रूपी द्वार को अपनी आकृति रूप ताडन से खोलकर वह राजकुमारी मेरे हृदय रूपी भवन में प्रवेश कर गई है।'

यहाँ 'नयनरूप द्वार' में जो रूपण वह शृङ्गार के अनुगुण होने से सुन्दर है शेष सब अलङ्कार का भार मात्र है।। ९०-१४।।

ध्वन्या०— किञ्च

कारिका— अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित्।। १५।।

लीला— इत्थं प्रबन्धस्य असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्व्यञ्जकत्वमुपपाद्य सम्प्रति तत्प्रसङ्गे न तस्य लक्ष्यक्रमव्यङ्ग्यद्योत्यत्वनिर्देशककारिकावतारणा-योपक्रमते किञ्चेत्यादिना-किञ्च-न केवल तावदपितु एतावदपि।

कारिकामवतारयति अनुस्वानेत्यादिना अस्याः ध्वनेः अनुस्वानोपमात्मा अपि यः प्रभेदः उदाहृतः सः अपि केषुचित् प्रबन्धेषु भासत इति।

ध्वनेः, अनुस्वानोपमात्मा अपि यः प्रभेदः उदाहृतः सः अपि केषुचित् प्रबन्धेषु अस्य (व्यञ्जकतया) भासते इत्यपि पदव्यवस्था।

(अत्रेदमवधेयं यत्कारिकेयं द्वेधा व्याख्याता दृश्यते। तत्र प्रथमः पक्षस्तु प्रबन्धस्य अनुस्वानोपमव्यङ्ग्यध्वनेरपि प्रकाशकत्वमिति यथाश्रुतार्थत्वेन व्याख्याति। अपरस्तु तथाव्याख्याने पूर्वोत्तरस्यासंलक्ष्यक्रमविषयस्य मध्ये पतितस्यास्य ग्रन्थस्यासङ्गतिः सञ्जायते तथैव पाञ्चजन्योक्त्यादिषु नीरसत्वञ्च जायते इति तामितरथा व्याख्याति संलक्ष्यक्रमव्यङ्ग्यस्य असंलक्ष्यक्रमव्यङ्ग्यद्योतकत्वेन। वस्तुतस्तु यथाश्रुतार्थस्तु पूर्वपक्षमेव समर्थयति किन्तु प्रसङ्गस्तु अपरपक्षम्। तेनाऽत्र द्वावेव पक्षौ व्याख्यायेते पृथक्पृथक्त्वेन।) प्रथमपक्षीयव्याख्या यथा।

अस्य—विवक्षितान्यपरवाच्यस्य, ध्वनेः, अनुस्वानोपमात्माअनुरणनस-न्निभस्वरूपः संलक्ष्यक्रमः अपि, यः, प्रभेदः— प्रकारः, उदाहृतः-कथितः सः, अपि, केषुचित्= कतिपयेषु न तु सर्वत्र, प्रबन्धेषु, भासते= द्योतते इति।

प्रबन्धेषु केवलमलक्ष्यक्रमव्यङ्ग्यध्वनिरेवापितु कुत्रचित्तु संलक्ष्यक्रमव्य-ङ्ग्यध्वनिः सोपभेदोऽपि भासत इत्याशयः।

द्वितीयपक्षीयव्याख्या यथा—

ध्वनेः, अनुस्वानोपमात्मा, अपि, य, प्रभेदः उदाहृतः सः, अपि, केषुचित्, प्रबन्धेषु, अस्य= अलक्ष्यक्रमध्वनेः, भासते= व्यञ्जकत्वेन द्योतत इति।

न केवल प्रबन्धेन साक्षाद्व्यङ्ग्यो रसोऽपितु संलक्ष्यक्रमव्यङ्ग्यपरम्परयाऽपि व्यज्यत इति भावः। अथवा प्रबन्धेन कदाचिदनुरणनरूपव्यङ्ग्यो ध्वनिः साक्षाद्व्यज्यते स तु रसादिध्वनौ पर्यवस्यतीति।

अत्र प्रथमपक्षत्वेन यथाश्रुतार्थो 'गृहीतोऽपरपक्षत्वेन लोचनकारमतम्। तत्र लोचने उक्तं—

''न केवलं प्रबन्धेन साक्षाद्व्यङ्ग्यो रसो यावत्पारम्पर्येणापीति दर्शयितुमुपक्रमते किञ्चेति। अनुस्वानोपमः— शब्दशक्तिमूलोऽर्थशक्तिमूलश्च, यो ध्वनेः प्रभेद उदाहृतः सः केषुचित्प्रबन्धेषु निमित्तभूतेषु व्यञ्जकेषु सत्सु व्यङ्ग्यतया स्थितः सन् अस्येति रसादिध्वनेः प्रकृतस्य भासते व्यञ्जकतयेति शेषः। वृत्तिग्रन्थोऽप्येवमेव योज्यः। अथवानुस्वानोपमः प्रभेद उदाहृतो यः प्रबन्धेषु भासते अस्यापि 'द्योत्वोऽलक्ष्यक्रमः क्वचित्' इत्युत्तरश्लोकेन कारिकावृत्त्योः सङ्गतिः।

एतदुक्त भवति—प्रबन्धेन कदाचिदनुरणनरूपव्यङ्ग्यो ध्वनिः साक्षाद्व्यज्यते स तु रसादिध्वनौ पर्यवस्यतीति। यदि तु स्पष्टमेप व्याख्यायते तदा ग्रन्थस्य पूर्वोत्तरस्यालक्ष्यक्रमविषयस्य मध्ये गग्रन्थोऽयमसङ्गतः स्यात्, नीरसत्वं च पाञ्चज्ञान्योक्त्यादीनामुक्तं स्यादित्यलम्।

तत्र प्रथमपक्षधरो भूत्वा दीधितिकारोऽधिवक्ति—

केचित्तु— द्योत्योऽलक्ष्यक्रमः क्वचिद् 'इत्यग्रिमकारिकायां पाठमवधार्य तत्पौनरुक्त्यपरिजिहीर्षया, पाञ्चजन्योक्तिषु नीरसत्वप्रसक्तिमपासितुम्, असंलक्ष्यक्रमप्रस्तावे संलक्ष्यक्रमविचारानौचित्यनिराकरणाय चास्याः कारिकायाः' न केवलं प्रबन्धेन साक्षाद् व्यङ्ग्यो रसो, यावत् पारम्पर्येणापीति दर्शयितुमुपक्रमते— 'किञ्चेति' इत्यवतरणमुक्त्वा अतुस्वानोपमः शब्दशक्तिमूलोऽर्थशक्तिमूलश्च यो ध्वनेः प्रभेद उदाहृतः, स केषु प्रबन्धेषु निमित्तभूतेषु व्यञ्जकेषु सत्सु, व्यङ्ग्यतया स्थितः सन् अस्येति रसादिध्वनेः प्रकृतस्य भासते। व्यञ्जकतयेति शेषः 'इति व्याख्यां च विधाय वृत्तिग्रन्थोऽप्येवमेव योज्यः, इत्यादिशन्ति।

तत्र विचारयामः— अग्रिमकारिकायां वृत्तिनिर्णीतः 'अलक्ष्यक्रमः' इत्ययमेव पाठः। न च पौनरुक्त्यप्रसङ्गः अत्र लक्ष्यक्रमस्योपादानात्। नापि पाञ्चजन्योक्तिषु नीरसत्वापत्तिः, तत्र वस्तुरूपसंलक्ष्यक्रमध्वनिसत्त्कथनेनासंलक्ष्यक्रमा— सत्त्वस्याकथनात्। न हि देवदत्तस्तिष्ठतीत्युक्त्या यज्ञदत्तादिस्थितिनिषेधः प्रतीयते। तथा विवक्षायान्तु पञ्च पञ्चनखा भक्ष्याः 'इत्यादौ स प्रतीयत एव। किन्त्विह तथाविवक्षायामेव प्रमाणविरहः। न वा मन्ये लक्ष्यक्रमोपन्यासे प्रकरणासङ्गतिः प्रबन्ध-

द्योत्यत्वेनालक्ष्यक्रमानन्तरमेतदुपादानस्यान्तराऽपि स्मृतिविषयत्वे सत्युपेक्षाऽन-र्हत्वरूपप्रसङ्गसङ्गतिक्रोडीकरणेनासङ्गत्यभावात्।

तस्मात् तदनुरोधेन ग्रन्थान्यथायोजनमग्रिमकारिकाऽवतरणेऽनुपपत्त्या कल्पनं चापि नोचितम् (अत एव 'प्रबन्धोऽप्यर्थशक्तिभूः' इति प्रबन्धव्यङ्ग्ययार्थश-क्त्युद्भवरूपलक्ष्यक्रमध्वनेरुदाहरणे मम्मटोऽपि गृध्रगोमायुसंवादमेव व्याजहार अन्यथा तन्न सङ्गच्छेत। लक्ष्यक्रमः' इति पाठेऽपि न पौनरुक्त्यम्, सुवादिव्यञ्ज-कविशेष प्रदर्शनप्रसङ्गेन तदुपादानात्।

वस्तुतस्त्वत्रोत्तरत्र कारिकायां चोभयविधस्यापि ध्वनेर्व्यञ्जकप्रकाशन-मभिप्रेतेन (अत एवोभयत्रोभयं ध्वन्यत इति दर्शयिष्यामः। प्राधान्यानुरोधेन तु व्यपदेशोऽवगन्तव्य इति।

वयन्तु दीधितिकारेण सहापि कतिपयपक्षमधिकृत्यासहमतिमेव प्रकटयामः। पुनरुक्तिदोषस्य तु लोचनकारेणाऽपि नैवोल्लेखः कृतः। स कुत इति दीधितिकार एव जानातु। लोचनकारेण यथाश्रुतार्थमात्रग्रहणे यद्ग्रन्थस्य असङ्गतत्वसम्भावना निर्दिष्टा तत्र दीधितिकारेण प्रबन्धव्यञ्जकता— प्रकरणादप्राकरणिकदोषस्या-सम्भावना यन्निर्दिष्टा तत्र वयं कथयामो यद् दीधितिकारेण यदुक्त तन्नैव सुसङ्गतं प्रतिभाति यतः प्रकरणोऽयं तु असंलक्ष्यक्रमव्यङ्ग्यध्वनेः के के व्यञ्जको भवतीति न तु प्रबन्धः कस्य कस्य व्यञ्जको भवतीति। तेन यथाश्रुतार्थग्रहणे ग्रन्थस्यासङ्ग-तिदोषस्त्वापतत्येव। पाञ्चजन्योक्तिषु यथाश्रुतार्थग्रहणे नीरसता आपतति इति यल्लोचनकारेणोक्तं तत्र दीधितिकारेण तत्र रसाद्यसत्वस्याकथनान्नैव नीरसत्वा-पत्तिरिति यदुक्तं तत्रापि वयं वदामो यत्सत्यमेव रसादितत्वं तत्र नैव निषिद्धं, देवदत्तोपस्थित्यैव यज्ञदत्तोपस्थितिर्नैव निवारिता भवति तथापि 'लीलादाढा' इति पद्ये यत्स्फुटमेव कृष्णस्य विप्रलम्भशृङ्गारो वाच्याक्षिप्तवस्तुना ध्वन्यते तदुपेक्षया वाक्यसौन्दय विहन्यत एव। अस्य प्रधानं लक्ष्यं तु रस एवेति कथ वस्तुध्वनावेव पर्यवसायित्व तस्य मन्यते। अतः पकरणसिद्धये तु लोचनकारस्यैव मत समीचीनं प्रतिभाति तथापि दीधितिकारकथनेऽपि यथाश्रुतार्थपक्षे ग्राह्यता नेति न, इति।

इस प्रकार प्रबन्ध के द्वारा असंलक्ष्यक्रमव्यङ्ग्य ध्वनि के द्यसोतन का प्रतिपादन कर अब उसके द्वारा कभी काल लक्ष्यक्रमव्यङ्ग्यध्वनि के प्रकाशन का भी निर्देश करने वाली कारिका के अवतारण हेतु उपक्रम करते हैं।

इतना ही नहीं, और यह भी कि—,

कारिका के अवतारण करते हैं—

(इस कारिका की दो व्याख्यायें प्रचलित हैं। उनमें से पहला पक्ष यह मानता है कि प्रबन्ध से न केवल रसादि का ही अपितु कभी कभी अनुरणनरूप व्यङ्ग्य ध्वनि का भी प्रकाशन होता है। दूसरा पक्ष यह मानता है कि प्रबन्ध न केवल प्रत्यक्ष रूप

से रसादि का प्रकाशन करता है अपितु वह संलक्ष्यक्रमव्यङ्ग्य ध्वनि का भी प्रकाशन करता है जो कि रसादि ध्वनि का व्यञ्जक होता है।)

पहले पक्ष में इसकी व्याख्या होती है—

इस विवक्षितान्यपरवाच्य ध्वनि का जो यह अनुरणन रूप आत्मा वाला प्रभेद कहा गया है वह भी किसी-किसी प्रबन्धों में भासित होता है।

न केवल रसादि ध्वनि ही प्रबन्धों में भासित होती है अपितु किसी—किसी प्रबन्धों में अनुरणन रूप व्यङ्ग्य ध्वनि भी भासित होती है।

दूसरे पक्ष में इसकी व्याख्या होगी—

ध्वनि का जो अनुरणन रूप आत्मा वाला प्रभेद बताया गया है वह भी किसी किसी प्रबन्धों में इस रसादि ध्वनि का व्यञ्जक होता है। (यहाँ मतभेद है मात्र, पर्यवसान में। पहला पक्ष प्रबन्ध के द्वारा संलक्ष्यक्रमव्यङ्ग्यध्वनि के भासन में ही पर्यवसान मानता है ओर दूसरा पक्ष उस तरह प्रबन्ध के द्वारा भासित संलक्ष्यक्रमव्यङ्ग्य ध्वनि का रसादिरूप ध्वनि के व्यञ्जकत्व में पर्यवसान मानता है।

यथाश्रुत अर्थ की दृष्टि से पहला पक्ष ठीक है और प्रसङ्ग की दृष्टि से दूसरा पक्ष भी ठीक है। रहे हम, हम दोनों को मानने के पक्ष में क्योंकि प्रबन्ध से अलक्ष्यक्रमव्यङ्ग्य ध्वनि का भी प्रकाशन होता है इस पर किसी को आपत्ति नहीं है और हमें भी। रही उस से रसादि ध्वनि की व्यञ्जना की बात, कहीं करनी है तो ठीक है नहीं तो अपने में ही पर्यवसित हो जाएगी।

ध्वन्या०— अस्य विवक्षितान्यपरवाच्यस्य ध्वनेरनुरणनरूपव्यङ्ग्योऽपि यः प्रभेद उदाहृतो द्विप्रकारः सोऽपि प्रबन्धेषु केषुचिद् द्योतते। तद्यथा मधुमथनविजये पाञ्चजन्योक्तिषु। यथा व ममैव कामदेवस्य सहचरसमागमे विषमवाणलीलायाम्।

यथा च गृध्रगोमायुसंवादादौ महाभारते।

लीला— कारिकाशयं विवृणोति वृत्तिकारः अस्येत्यादिना अस्य, विवक्षितान्यपरवाच्यस्य, ध्वनेः अनुरणनरूपव्यङ्ग्यः, अपि, यः, प्रभेदः, उदाहृतः= कथितः, द्विप्रकारः= शब्दार्थशक्त्युद्भवत्वेन द्विविधः, सः अपि= इति न केवलम्- सलक्ष्यक्रमव्यङ्ग्या एव, केषुचित्= कतिपयेषु न तु सर्वेषु, प्रबन्धेषु, द्योतते= अवभासते। तद्= अनुस्वानसन्निभव्यङ्ग्यद्योतनं, च, यथा, मधुमथनविजये= तदाख्ये काव्ये, पाञ्चजन्योक्तिशु= पाञ्चजन्यकथनेषु, यथा, वा, मम (आनन्द-वर्धस्य) एव विषमबाणलीलायां= तदाख्ये ग्रन्थे, कामदेवस्य= मदनस्य, सहचर-समागमे= वसन्तसङ्गमे, यथा, च, महाभारते= तदाख्ये व्यासप्रणीते काव्ये, गृध्रगोमायुसंवादादौ चेति। तत्र-तत्र प्रबन्धेन अनुस्वानोपमव्यङ्ग्य ध्वनिर्वाच्या-र्थाक्षिप्तत्वेन व्यज्यते यश्च रसादिध्वनौ पर्यवस्यतीति।

तानि तान्युदाहणानि लोचने यथा,

लीलादाढा शुध्यूड्ढासअलमहिमण्डलसश्चिअ अज्ज।
कीस्मसुणालाहरतुज्जआइ अङ्गम्मि।
(लीलादंष्ट्राग्रोद्धृतसकलमहीमण्डलस्यैवाद्य।
कस्मान्मृणालाभरणमपि तव गुरु भवत्यङ्गे।) (इतिच्छाया)

लीलाया हेलयैव दंष्ट्राग्रेण उद्धृतं सकलमेव महीमण्डलं येन तस्य तादृश-गुरुतमभारवहनेऽपि अननुभूतायासस्य, एव= नान्यस्य, तव= भवतः= अङ्गे= शरीरे, अद्य, कस्मान्मृणालाभरणमपि गुरु भवति इति वाच्यार्थो येन भगवतो रूक्मिण्यामतिशयाभिलाषो व्यज्यते वस्तुध्वनिरूपेण, यश्च विप्रलमीश्रृङ्गारध्वनौ पर्यवस्यति। कामदेवस्य सहचरसमागमे यथा—

मिअवहण्डिअरोरोणिरअंकुसो अविवेरहिओ वि।
साविण वि तुमम्मि पुणोवन्ति अतन्ति पंमुसिम्मि।
(हुम्मि अवहत्थिअरे होणिरअंकुसो अहविवेअरहिओऽवि।
सिणिवेणि तुमम्मि पुणो णन्ति णपसुमरामि।) (इति पाठः)
(भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि।
स्वप्नेऽपि तव पुनर्भक्तिं न प्रस्मरामि। इतिच्छाया)।

अहम् अपहस्तिततरेखोऽतिक्रान्तमर्यादः निरंकुशः अय विवेकरहितः अपि भवामि किन्तु तव भक्तिं स्वप्ने अपि न प्रस्मरामि इति। इति यौवनोक्ति— स्तन्नि-जस्वभावव्यञ्जिका। स च स्वभावः प्रकृतश्रृङ्गाररसपर्यवसायीति।

गृध्रगोमायुसंवादादौ यतः मृतपुत्रशरीरमादाय विलपतो जनान् विप्रलब्धुं गृध्रो दिवा शवशरीरभक्षणार्थी धीघ्रमेवापसरतास्मात्स्थानादिति कथयति। गोमायुश्च निशागमनावधि जनास्तत्र तिष्ठन्तु ततोऽहं गृध्रादपहृत्यैनं भ्खयिष्यामी-त्याशयेन तांस्तत्रैवावरोधाय प्रत्युज्जीवनाशां ददाति। स च व्यक्तोऽभिप्रायः शान्तरसे एव परिनिष्ठतां प्राप्त इति।। १५।।

वृत्तिकार कारिका के आशय का स्पष्टीकरण करते हं—

इस विवक्षितान्यपरवाच्य ध्वनि का अनुरणन रूप व्यङ्ग्य भी जो शब्द शक्त्युद्भव एवं अर्थशक्त्युद्भव दो प्रकार वाला प्रभेद बताया गया है वह भी किसी-किसी प्रबन्धों में द्योतित होता है। वह जैसे मधुमथनविजय में पाञ्चाजन्य की उक्तियों मं। अथवा जैसे मेरा (आनन्दवर्धन का) ही गृध्रगोमायु संवाद आदि में।

पाञ्चजन्य की उक्ति जैसे—

पाञ्वचजन्य भगवान् कृष्ण को कहता है—

लीला से ही दाढ के अग्रभाग से सम्पूर्ण पृथ्वी मण्डल को धारण करने वाले आपके अङ्ग में आज क्यों मृणाल का अभररण भी भारी लग रहा है।

इससे भगवान् के विरह की अतशयता द्योतित होती है जो कि स्वयं प्रकृत रस विप्रलम्भ शृङ्गार में पर्यवसित होता है।

विषमबाणलीला में यौवनोक्ति जैसे—

मैं मर्यादा को लाँघने वाला हो सकता हूं, निरंकुश हो सकता हूँ वा विवेकरहित भी, फिर भी स्वप्न में भी तुम्हारी भक्ति को नहीं भूलुंगा।

इत्यादि यौवनोक्तियाँ अपने-अपने स्वभाव को व्यक्त करने वाले हैं, वह स्वभााव ही प्रकृत रस में पर्यवसायी है।

गृध्रगोमायुसंवाद में जैसे—

श्मशान में मृतशिशु के शव को लेकर बैठे लोगों को गृध्र कहता है—

'श्मशान में रहने से क्या लाभ ? मरा हुआ कोई भी जीवित होता तो नहीं। अत: तुम सब इसे छोड़ लौट जाओ।' उसी पर गोमायु कहता है—

''कौन जानता है क्या होगा ? अभी दिन बाँकी है अत: इसे छोड़कर मत जाओ।''

इस कथन में गृध्र का अभिप्राय यह था कि सब लोग छोड़ लौटे तब शव को वह खा ले, इसी तरह गोमायु का यह अभिप्राय था कि किसी तरह दिन टल जाय तब वह उसे गृध्र से छिन कर खा ले। दोनों का जो व्यक्त अभिप्राय है वह शान्त रस में पर्यवसित है।।१५।।

कारिका— सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभि:।
कृत्तद्धितसमासैश्च द्योत्योऽलक्ष्यक्रम: क्वचित्।।१६।।

ध्वन्या०— अलक्ष्यक्रमो ध्वेनरात्मा रसादि: सुब्विशेषैस्तिङ्विशेषैर्वचनविशेषै: सम्बन्धविशेषै: कारकशक्तिभि: कृद्विशेषैस्तद्धितविशेषै: समासश्चेति। चशब्दान्निपातोपसर्गकालादिभि: प्रयुक्तैरभिव्यज्यमानो दृश्यते।

लीला— रसादिध्वनेर्व्यञ्जकान्तरं निर्दिशति कारिकाकार: सुवित्यादिना क्वचित् अलक्ष्यक्रम: सुप्तिङ्वचनसम्बन्धै: तथा कारकशक्तिभि: कृत्तद्धितसमासै: च द्योत्य: इति पदव्यवस्था।

अलक्ष्यक्रम:= असंलक्ष्यक्रमव्यङ्ग्यध्वनि:, सुप्तिङ्वचनसम्बन्धै:= सुब् च तिङ् चा वचनानि च सम्बन्धाश्च तै:, सुप्= स्वौजसादय: एकविंशति: तिङ्= तिप्तस्झिप्रभृतयो महिङ्पर्यन्ता: अष्टादश, वचनानि एकद्विबहुवचनानि, सम्बन्धा: स्वस्वामिभावादय: षष्ठ्यर्था:, तथा= एवमेव, कारकशक्तिभि:= कर्तुप्रभृतिषट्कारकै:, कृत्तद्धितसमासै:= कृत: धातो: कर्तृकर्मभावादिषु विहिता तिङ्भिन्ना: प्रातिपदिकत्वोत्पादका: प्रत्यया:, तद्धिता: त्वतल्प्रभृतय: प्रत्ययास्तिप्रत्ययश्च, समासा: अव्ययीभावादय: षड्विधास्तै:, च= इति नपीतोपसर्गकालसर्वनामभिश्च यत्र निपाताश्चादयोऽसत्वार्था:, उपसर्गा: प्रादय: क्रियायुक्ता:, काला भूतादयस्त्रिविधा:, द्योत्य:= प्रकाश्य:, भवतीति शेष:।

अस्यायमाशयो लोचनकारदृशा यथा वर्णादिभि: प्रबन्धान्तै: साक्षाद्वा

रसोऽभिव्यज्यते विभावादिप्रतिपादनद्वारेण यदि वा विभावादिव्यञ्जनद्वारेण परम्परयेति तत्र बन्धस्यैतत्परम्परया व्यञ्जकत्व प्रसङ्गादादावुक्तम्। अधुना तु वर्णपदादीनामुच्यत इति। तत्रेदं पर्यवसितं विभावादिप्रतिपादनद्वारेण साक्षाद्वा विभावादिव्यञ्जनद्वारेण परम्परया वा रसोऽभिव्यज्यत इति। अथवा वर्णादिप्रबन्धान्ता यथा वाच्यरूपान् विभावादीन् बोधयित्वा तत्सम्बन्धेन साक्षाद्रसादिर्व्यज्यते वा वाच्यार्थद्वारेण विभावादीन् वस्तुरूपेण व्यञ्जनयाऽऽक्षिप्य तत्सम्बन्धेन परम्परया रसादिर्व्यज्यते तथैव तिङादिभिरपि विभावादिप्रतिपादनद्वारेण साक्षाद्वा विभावादिव्यञ्जनद्वारेण परम्परया वा रसोऽभिव्यज्यत इति।

कारिकां विवृणोति वृत्तिकृत् अलक्ष्यक्रम इत्यादिना असलक्ष्यक्रमः असंलक्ष्यद्योतनक्रमव्यङ्ग्यः यो ध्वनेः, आत्मा= आत्मभूतो रसादिः, सः, सुब्विशेषैः= विशिष्टरूपेणप्रयुक्तसुबादिभिः, एवमेव तिङादिभिर्विशिष्टार्थत्वेन प्रयुक्तैः, चशब्दात्, निपातोपसर्गकालादिभिः विशिष्टत्वेन प्रयुक्तैः, अभिव्यज्यमानः= विभावादिप्रतिपादनद्वारा साक्षाद्वा विभावादिव्यञ्जनद्वारतया पारम्पर्येण प्रकाश्यमानः, दृश्यत= लक्ष्यत इति।

इस प्रकार अलक्ष्यक्रमव्यङ्ग्य रसादि ध्वनि के वर्णों से लेकर प्रबन्धों तक के व्यञ्जकवर्ग के सोपपत्तिक निरूपण करने के बाद अब उसी के व्यञ्जकवर्ग का सूक्ष्मरूप से भी निरूपण करते हैं—

कहीं कहीं अलक्ष्यक्रमव्यङ्ग्य ध्वनि सुब्विभक्ति, तिङ्विभक्ति, वचन, सम्बन्ध कारकशक्ति, कृत्प्रत्यय, तद्धितप्रत्यय एवं समासों के विशिष्ट प्रयोग से भी प्रकाश्य होता है।।१६।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

अलक्ष्यक्रमव्यङ्ग्यरूप ध्वनि की आत्मा जो है वह सुप्, तिङ्, वचन, सम्बन्ध, कारकशक्ति, कृत्प्रत्यय, तद्धितप्रत्यय, समास एवं निपात, उपसर्ग, काल, आदि के विशेष प्रयोग से प्रकाशित होता हुआ भी दिखाई पड़ता है।

ध्वन्या०— यथा—

नयक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिक्—धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छनैः किमेभिर्भुजैः।।

अत्र हि श्लोके भूयसा सर्वेषामप्येषं स्फुटमेव व्यञ्जकत्वं दृश्यते। तत्र 'मे यदरय' इत्यनेन सुप्सम्बन्धवचनानामभिव्यञ्जकत्वम्। 'तत्राप्यसौ तापस' इत्यत्र तद्धितनिपातयोः। 'सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः' इत्यत्र तिङ्कारकशक्तीनाम्। 'धिक्-धिक् शक्रजितम्' इत्यादौ

श्लोकार्धे कृत्तद्धितसमासोपसगार्णाम्। एवंविधस्य व्यञ्जकभूयस्त्वे च घटमाने काव्यस्य सर्वातिशायनी बन्धच्छाया समुन्मीलति। यत्र हि व्यङ्ग्यावभासिनः पदस्यैकस्यैव तावदाविर्भावस्तत्रापि काव्ये कापि बन्धच्छाया, किमुत यत्र तेषां बहूनां समवायः। यथात्रानन्तरोदितश्लोके। अत्र हि रावण इत्यस्मिन् पदेऽर्थान्तरसंक्रमितवाच्येन ध्वनिप्रभेदनालङ्कृतेऽपि पुनरनन्तरोक्तानां व्यञ्जकप्रकाराणामुद्भासनम्। दृश्यन्ते च महात्मनां प्रतिभाविशेषभाजां बाहुल्येनैवंविधा बन्धप्रकाराः।

लीला— सुबादिविशेषैर्यद्विभवादिप्रतिपादनेन साक्षाद्वा विभवादिव्यञ्जनया परम्परया वा रसादिर्द्योत्यत इति यदुक्त तदेवोदाहरति यथेत्यादिना यथा= इति निदर्शने,

उदाहरणं प्रस्तौति न्यक्कार इत्यादिना अयम् एवं हि मे नयक्कारः यत् मे अरयः तत्र अपि असौ तापसः, सः अपि अत्र एव, राक्षसकुल निहन्ति, अहो, रावणः जीवति शक्रजितं धिक्-धिक् वा प्रबोधितवता कुम्भकर्णेन किं स्वर्गग्रामटिका विलुण्ठनवृयोच्छूनैः एभिः भुजैः किं इति पदव्यवस्था।

अयं एषः, एव= नान्यः, मे, न्यक्कारः= अपमानं, यद्, मे मादृशस्य त्रैलोक्यविजयिनी वीरस्य अपि, अरयः= शत्रवः सन्ति, प्रथम त्वयमेव लज्जास्पदं यन्मे कश्चिद् द्रुह्यति यस्य रिपुरेव नोचितस्तस्य बहवो रिपवस्तु किं पुनः, तत्र, अपि, असौ= दीनः, तापसः= वराकः— यदि सम्भवत्यपि रिपौ कश्चिद्वीरो राजादिः स्यात्तदा शोभनमपि स्थात्किन्तु स च वराकस्तपस्वी इति तस्मादपि लज्जास्पदं, सः= शत्रुः, अपि, अत्र= लङ्कायां, एव= नातिदूरे स च तापसोऽपि दूरे यत्र, कुत्रात्मानं प्रच्छाद्य स्थितः स्यात्तदपि शोभनमेव स्यात्किन्तु स मत्पुर एव वर्तते इति तस्मादपि अधिकलज्जास्पदं, राक्षसकुलं= मदीयवंशं, निहन्ति= घातयति अत्रैव स्थितोऽपि यदि तूष्णीं स्थितो भवेत्तदपि शोभनमेव स्यात् किन्तु स राक्षसवश निश्शेषमेव मारयति इति तु समधिकलज्जास्पदमेव, तथापि, अहो= आश्चर्यमेतत्, रावणः= जगदेकवीरत्वेन ख्यातो योद्धा, जीवति= प्राणिति, शक्रजितं= इन्द्रजित तदाख्यं मत्पुत्रं, धिक्, धिक् अतिशयद्योत्याय द्विरुक्तिः यो मया शक्रो जित इति शौर्याभिमानेन आत्मानं श्लाघते स्म स सामान्यमनुष्य तपस्विनमपि जेतुं न शशाक इति किं तेन वीरतोच्छूनेनेति, वा, विबोधितवता निद्रात उत्थापितेन, कुम्भकर्णेन= तदाख्येन वीरेण, किं= किं प्रयोजनम्, अथवा किमन्यालापेन, स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः= स्वर्गः नाक एव ग्रामटिका स्वल्पग्रामः तस्य विलुण्ठनेन जयेन वृथा व्यर्थमेव उच्छूनैः पुष्टैः, एभिः= मदीयैः, भुजैः= बाहुभिः विंशतिसङ्ख्याकैः, किं= किं प्रयोजनमिति।

तत्र पर्यवसितमर्थं निर्दिशति अत्रेत्यादिना अत्र= अस्मिन् हि, श्लोके=

पद्ये, सर्वेषां= निखिलानां, अपि, एषां= सुप्तिङादीनां, भूयसा= प्राशस्त्येन, स्फुटं= स्पष्टं, एव,= न तु अनुमातव्येन, व्यञ्जकत्वं= रसादिप्रकाशकत्वं, दृश्यते= अनुभूयते इति। तदुदाहरणमुखेन द्रढयशति तत्रेत्यादिना तत्र, 'मे यदरयः' इत्यनेन सुप्सम्बन्धवचनानां सुपः, सम्बन्धस्य, वचनस्य च अभिव्यञ्जकत्वंऽ प्रकाश-कत्वम्। सुपोऽभिव्यञ्जकत्वं यथा 'मे इत्यत्र ङसः सम्बन्धस्य' अरिभिः सह वध्यघातकभावसम्बन्धः वचनस्य तु अरय इत्यत्र बहुवचनमिति एवकारेण सह सम्भूय एतत्प्रकाशयन्ति य मादृशेन जगदेकवीरेण सह नोचितमेकस्यापि वध यघातकभावं किं पुनर्बहूनामिति। अनेन मम शत्रुभावो नोचित इति अरय इति बहुवचनं सम्बन्धानौचित्यं क्रोधविभावं व्यनक्ति। तदित्थं मे इत्यत्र एकवचन-विभक्तिर्व्यनक्ति यदहं जगदेकवीरः ममाप्यरिरितीदमेवाश्च को नाम मया सह विंरुध्य जीवितो गत इति, 'मे' इत्यत्र सम्बन्धो व्यनक्ति यद् ममापि कश्चिदरि-र्जीवति यस्य मया सह वध्यघातकसम्बन्धभावो भवतीत्याश्चर्मेव, 'अरयः' इत्यत्र बहुवचनं व्यनक्ति यन्मम एकोऽपि शत्रुर्जीवतीत्येतावदेवाश्चर्यं बहूनां तु का वार्ता इति। 'तत्राप्यसौ तापसः' इत्यत्र तद्धितनिपातयोः= तद्धितस्य निपातस्य च व्यञ्जकत्वम्। तद्यथा तापस इत्यत्र मत्वर्थीयः, अण्प्रत्ययः, अपि इति निपातः। तपोऽस्त्यस्मिन्निति विग्रहे मत्वर्थीये :तपः सहस्राभ्यां विनीनी' इत्यधि ाकृत्य 'अण् च' इात अण्। एतत्व्यञ्जयति यदरिरपि पौरुषहीनो वराक स्तपस्वी। 'अपि' इति निपातो व्यनक्ति यत् केवलं तुच्छमनुष्यो यो राक्षसानां भोजनत्वेन प्रसिद्धः। उभेऽपि अनुचिते एवेति। तेनैतदपि नितान्तमेवासम्भावनीयत्वम्। एवञ्च 'सोऽयत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः' इत्यत्र तिङ् कारकशक्तीनां व्यञ्जकत्वमिति। तदित्थं निहन्ति, जीवति इति क्रिया विभक्तेर्व्यञ्जकत्वं, अत्रेति अधिकरणकारकस्य राक्षसकुलमित्यत्र कर्मकारकस्य राक्षसकुलअिमत्यत्र कर्मका-रकस्य व्यञ्जकत्वं। अत्रेति यत्राहं विद्यमानो यत्र मम अव्याहताज्ञता। निहन्ति इत्यत्र 'नि' उपसर्गेण निश्शेषमिति व्यज्यते, राक्षसकुलमित्यत्र यत्कर्मकारकं तेन व्यज्यते यत्समस्तो 'राक्षसवंश एव संहारस्य लक्ष्यम्। रावण' इति स्वयं रावणेनैवोक्तत्वाद् बाधितार्थः अर्थान्तरसङ्क्रमितत्वेन अतुल्यपराक्रम इजून्यवपरा-क्रतयुक्तत्वादिगुणा— नभिव्यनक्ति। एवमेव 'अहो' इयत्यादिनामपि व्यञ्जकत्वं सिध्यति। सर्वेषां सम्भूय प्रकाशनमिदमेव यद् जगद्विजेतुर्रावणस्य अरेरेव सम्भवत इति परमाश्चर्य तत्रापि स नैव एकाकी किन्तु बहुभिर्वृत इत्यपरमाश्चर्य, सोऽपि दूरे एव स्थितो भवेत् यत्र रावणस्योपस्थितिर्नास्तीति सम्भवति सामान्यमेव किन्तु स तु तत्रैव स्थितोऽस्ति यत्र रावणस्य प्रत्यक्षं शासनं इत्यपि महदाश्चर्यम्। तत्र स्थित्वाऽपि तूष्णीमेव स्थितश्चेदपि सम्भवेत्सामान्यमेवं किन्तु राक्षसकुलमेव निश्शेषं हन्ति नैवाप्येकं कञ्चन राक्षसमिति सुमहदाश्चर्यम्। तत्रापि शत्रुः

कश्चिद्वीरो नृपतिरेव स्यात्तदापि सम्भवेत्सामान्यमेव किन्तमु स तु वराकस्तापसो यस्मिन् युद्धकौशलं तु वीरत्वं च चिन्तयितुमपि व्यर्थमिति अत्यन्तातश्र्यम्। यदि रावणमरणानन्तरमेतत्सर्वं घटितं भवेत्तदापि सम्भवेत्सामान्यं किन्तु स तु जीवत्येवेति तु अनुपममाश्चर्यमिति। एवमेव 'धिक्धिक्छक्रजितं' इत्यादौ, श्लोकार्धे, कृत्तद्धितसमासोपसर्गाणां= कृतः तद्धितस्य, समासस्य उपसर्गस्य च तेषां व्यञ्जकत्वमिति। तदित्थं 'धिग्धिक्' इत्यत्र निणतेन वीप्सया च तस्य परमगर्हणीयता व्यज्यते। शक्रं जयति तच्छील इति शक्रजित् इत्यत्र उपपदसमासेन व्यज्यते यद् तेन कृतः शक्रजयस्तु कपोलकल्पितकथेवेति ध्वन्यते। तच्च शक्रजित् इत्यत्र क्विप्प्रत्ययेन द्योत्यते। 'जि' धातोः ताच्छील्यार्थे क्विपि सर्वापहारिलोपे तुकि रूपम्। यो रामं तापसमपि जेतुं नाशक्नोत्स कथं शक्तं (शक्नोति शत्रूञ्जेतुमिति शक्+रम्) अजैषीदिति शङ्कैवोत्पद्यत इति। शक्रजितोऽपि मेघनादस्य रामे शक्तिः कुण्ठताऽभवदिति उपपदसमासेन सह क्विप्प्रत्ययस्य प्रयोगेण व्यज्यते इति। एवमेव प्रबोधितवता इत्यत्र कालोपसर्गादिवशाद्व्यञ्जना। तदित्थं प्रइत्युपसर्गः क्रियायुक्तत्वात् तत्पूर्वकाद् 'बुद्ध' धातोर्णिचि हेतुमति, क्तवतुप्रत्ययो भूतकालिकः इति सोद्योगं प्रबोधितोऽपि स आशानुकूलं न किमपि कर्तुं प्राभूदिति तस्य प्रबोधनस्य निरर्थकं ध्वन्यते। स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभि र्भुजैः 'इत्यस्यापि तथैव व्यञ्जकत्वम् 'स्वर्गग्राम' इत्यत्र स्वर्ग एव ग्राम इति कर्मधारयसमासः 'ग्रामटिका' इत्यत्र अल्पार्थः तद्धितटिकच्प्रत्ययः, अनेन स्वर्गस्य तुच्छ ग्रामत्वं स्वल्पायासेन तस्य विलुण्ठनीयत्वञ्च ध्वन्यते। विलुण्ठनमित्यत्र वि उपसर्गः सर्वनाशद्योतकः वृथा इति पौरुषनिन्दा व्यञ्जको निपातः। एभिरित्यनेन केवल भाररूपेण धारितैरिति व्यज्यते, भुजैः इत्यनेन सङ्ख्या बाहुल्यं किन्तु वस्तुतस्तैषां शक्तिहीनत्वमपि व्यज्यते। किञ्च एभिर्विंशतिसङ्ख्याकैर्भुजैरिपि द्विभुजो मनुष्योऽपि न निर्जित इति किं तेषामुपयोगः। इति इत्थमस्य सर्वोप्यंशो व्यञ्जक एव। अत्र हि व्यङ्ग्यत्वेनोक्तानामर्थानां रावणगतक्रोधनिवेदातिशय व्यञ्जकत्वं पर्यवस्यति इति।

उक्तार्थप्रकाशनस्य फलं दर्शयति एतदित्यादिना एवविधस्य= एतादृशस्य सुपादेः, व्यञ्जकभूयस्त्वे= ध्वनिप्रकाशकप्राशस्त्ये, च, घटमाने= सम्पद्यमाने, काव्यस्य, सर्वातिशायिनी= निखिलातिरिक्ता, बन्धच्छाया= प्रबन्धविच्छित्तिः, समुन्मीलति= प्रकटीभवति इति। यत्र, हि, व्यङ्ग्यावभासिनः= प्रतीयमानार्थद्योतकस्य, एकस्य, एव, पदस्य, आविर्भावः= अस्तित्वं, तावत्, सम्भवति, तत्र= तादृशे, काव्ये, अपि, का= अनिर्वचनीया, अपि, बन्धच्छाया= प्रबन्धविच्छित्तिः, भवति, किमुत, यत्र, तेषां= तादृशानां, बहूनां= अनेकेषां, समवायः= समुदाय यत्र एकमेव व्यङ्ग्यावभासकपदमपि काव्यस्य शोभातिशयमादधाति चेद्यत्र

तादृशानामेकाधिकानां पदानां समुदायस्तत्र तु का वार्ता। तदुदाहरति यथेत्यादिना— यथा, अत्र= इहैव, अनन्तरोदितश्लोके= प्रकरणे निदर्शनत्वेनोपस्थापिते न्यक्कार इत्यादिपद्ये। अत्र= अस्मिन्, पद्ये, हि, 'रावण' इत्यस्मिन् पदे, अर्थान्तरसङ्क्रमितवाच्येन= वाच्यार्थबाधात्तत्सम्बद्धार्थान्तरघटित- वाच्यार्थेन यथा रावणेन स्वयमेव अहं इत्यस्य 'रावण' इत्क्युत्वा कथनादत्र मुख्यार्थबाधेन अर्थान्तरसङ्क्रमणस्यावश्यकतया महायशक्रमशालित्वादिगुणयुक्त इति व्यज्यते, तेन ध्वनिप्रभेदेन, अलंकृते= शोभिते, अपि, पुनः, अनन्तरोक्तानां= उपरिकथितानां व्यञ्जकप्रकाराणां= सुबादिव्यञ्जकभेदानां, उद्भासनं= प्रकाशनमिति सर्वातिशायिबन्धविच्छित्तिः प्रसिद्धैव। एतादृशः प्रबन्धस्तु विरल एव भवति तत्किमेतावदुक्तेनेत्याशङ्कानिरासाय कथयति प्रतियेत्यादिना प्रतिभाविशेषभाजां= कवित्वशक्तिसम्पन्नानां, महात्मनां= महाकवीनां, एवंविधाः= ईदृशाः शोभातिशययुक्ताः, बन्धप्रकाराः= प्रबन्धये बाहुल्येन= भूयसा, दृश्यन्ते= विलोक्यन्त एवेति। तेन ते नैव असम्भवे इति। वाक्ये यदा एकमपि पदं ध्वन्यभिव्यञ्जकं भवति तदापि तत्सौन्दर्यातिशायि भवति यदा तु सर्वेषामेव पदानां व्यञ्जकत्वं सम्भवति यथानन्तरोदाहृतपद्ये तदा तस्य विच्छित्यतिशयस्त्ववर्णनीय एव भवति। काव्यसंसारे तादृशप्रबन्धानां बाहुल्यमस्त्येव।

सुबादि विशेष से विभावादि के प्रतिपादन द्वारा साक्षात् वा विभावादि की व्यञ्जना से परम्परा से रसादि द्योतित होने की जो बात कही गई थी उसका उदाहरण प्रस्तुत करते हैं—

यह ही तिरस्कार है जो मेरे शत्रु हैं, उसमें भी यह तापस, वह भी यहीं ही, राक्षस कुल को मारता है रावण जीवति है, शक्रजित् को धिक्कार धिक्कार है, जगाए गए कुम्भकर्ण से क्या हुआ, स्वर्ग रूपी तुच्छ गाँव को लूट ले पाने से बेकार फूले हुए इन हाथों का ही क्या काम।

(यह रावण की उक्ति के रूप में निबद्ध है।)

इस श्लोक में इनमें से सभी का प्रायशः स्पष्ट रूप से व्यञ्जकत्व देखा जाता है। उसमें 'मेरे जो शत्रु हैं' इससे सुप्‌विभक्ति, सम्बन्ध एवं वचन का व्यञ्जकत्व है। उसमें भी यह तापस 'इसमें तद्धित एवं निपात का व्यञ्जकत्व है। वह भी यहीं राक्षस कुल को मारता है, रावण जीवित है' में तिङ् विभक्ति एवं कारक शक्तियों का व्यञ्जकत्व है। 'शक्रजित् को धिक्कार धिक्कार है' 'इत्यादि आधा श्लोक में कृत् तद्धित, समास एवं उपसर्गों का व्यञ्जकत्व है।

इसका आशय यह है कि 'मेरे शत्रु है' इसमें 'मेरे' में सम्बन्ध कारक है और इसकी व्यञ्जना यह है कि मेरे कोई भी शत्रु नहीं होने चाहिए क्योंकि मेरे से दुश्मनी कर कोई भी जी नहीं सकता। इसी तरह 'भी' निपात जो है वह यह व्यक्त करता है कि मेरे शत्रु का होना सम्भव ही नहीं है, मेरे से कौन टक्कर ले सकता है, 'शत्रु' में जो बहुवचन है, उसका यह अर्थ है कि जहाँ एक भी शत्रु का होना सम्भव नहीं है

वहाँ इतने शत्रु कैसे हो गए। पूरे वाक्य की व्यञ्जना यह है कि पहली बात तो यह है कि मेरा शत्रु का ही होना सम्भव नहीं तो फिर ज्यादे शत्रुओं की तो कल्पना भी नहीं की जा सकती।

'उसमें भी यह तापस' इस वाक्य में 'भी' निपात है और उसकी यह व्यञ्जना है कि वह भी एक साधारण आदमी हैं जो कि मेरे दुश्मनी के लायक नहीं। इसी तरह 'तापस' शब्द तद्धित है और इसका निर्वचन है तप ही जिसके अन्दर अर्थात् तपस्या के अलावा उसमें कोई वीरता नाम की वस्तु नहीं है।

'वह भी यहीं है और राक्षसकुल को मारता है और रावण जीवित है' इसमें तिङ् और कारकशक्तियों की व्यञ्जना है। इसकी व्यञ्जना यह है कि वह कोई दूर दराज में छिपा होता तो एक बात होती लेकिन वैसा न होकर यहीं है। 'यही' की व्यञ्जना यह है कि मेरे प्रभुत्व वाले स्थल पर है या मेरे सामने है। 'राक्षस कुल को मारता है' इसकी व्यञ्जना यह है कि यहीं रहकर चुपचाप बैठता तो एक बात होती, लेकिन राक्षसकुल को मारता है। 'राक्षसकुल' यह व्यञ्जना है कि कोई एक राक्षस को मारता तो भूले भड़के हुआ भी समझ जाता, लेकिन पूरे के पूरे राक्षसकुल को ही मार रहा है। 'मारता है कि व्यञ्जना यह है कि निर्मूल कर रहा है।' रावण जीवित है इस प्रकार के व्यञ्जक के समूह के घटित होने पर काव्य की सर्वातिशायिनी प्रबन्ध शोभा उभर आती है। जहाँ इसकी यह व्यञ्जना है कि यदि रावण के मरने के बाद यह सब होता तो मान भी लिया जाय कि हो भी सकता है। लेकिन वह अभी जीवित है और यह असम्भव बात हो रही है। 'शक्रजित्' को धिक्कार धिक्कार है' इसकी यह व्यञ्जना है कि शक्रजित् अर्थ शक्र याने शक्+र, जो कि शत्रुओं के दमन करने में तेज है उसको भी जीत लिया तो उससे जो ख्याति उसने पाई थी वह एक साधारण तापस को भी नहीं हरा पाया तो उसने शक्र को क्या जीता होगा। उसके बहाने उसे जो घमण्ड वह सब बेकार था। अतः उसे धिक्कार धिक्कार है।

जगाए गए कुम्भकर्ण से ही क्या हुआ ? इसी यह व्यञ्जना है कि कुम्भकर्ण को महावीर समझ कर बड़े प्रयत्न से जगाया था, लेकिन उससे भी आशा के विपरीत ही काम हुआ।

सवर्गरूपी छोटे गाँव को लुट पाने से बेकार ही फूले इन हाथों से ही क्या हुआ? इसकी यह व्यञ्जना है कि हमने इन हाथों से स्वर्ग नाम के एक छोटे से गाँव को तहस नहस कर डाला, बस इसी में वीरता के नाम पर ये हाथ फूले न समाए थे। वह सब बेकार था और अभी इन हाथों से क्या हो रहा है। 'हाथों से' का आशय यह है कि मेरे बीस हाथ हैं और दुश्मन के दो ही हाथ हैं फिर भी मैं उनको कोई हानि नहीं पहुँचा सका, तो ये किस काम के हैं। यहाँ 'इन' का अर्थ है बेकार और भार मात्र। पूरे वाक्य की यह व्यञ्जना है कि दूसरों को कया कहूँ मैं ही क्या कर सका आदि। इस तरह देख लेने पर इस पद्य के प्रत्येक पद पद अपनी विशिष्ट वयञ्जना के द्योतक हैं।

इस विवेचन का प्रयोजन बताते हैं—

व्यङ्ग्य के अवभासक एक ही पद का भी प्रयत्न हो वहाँ भी काव्य में विलक्षण ही बन्ध शोभा होती है, जहाँ वैसे बहुतों का समुदाय हो तो फिर कहना ही क्या है। जैसे कि यहाँ अभी उपस्थापित श्लोक में। यहाँ 'रावण' इस पद में अर्थान्तरसङ्क्रमितवाच्य ध्वनि प्रभेद से अलंकृत में भी फिर ऊपर बताए गए व्यञ्जक प्रकारों का उद्भासन है। प्रतिभा विशेष से युक्त महात्माओं के इस कोटि के प्रबन्ध बहुतायत से देखे गए हैं। अत: उनको असम्भव नहीं मानना चाहिए।

ध्वन्या०— यथा महर्षेर्व्यासस्य—

अतिक्रान्तसुखा: काला: प्रत्युपस्थितदारुणा:
श्व: श्व: पापीयदिवसा पृथिवी गतयौवना।।

अत्र हि कृत्तद्धितवचनैरलक्ष्यक्रमव्यङ्ग्य:, 'पृथिवी गतयौवना' इत्यनेन चात्यन्ततिरस्कृतवाच्यो ध्वनि: प्रकाशित:।

लीला— कृत्तद्धितादीनां रसादिप्रकाशनस्योदाहरणान्तरं प्रस्तोतुमुप क्रमते यथेत्यादिना यथा= इति निदर्शने, महर्षे:= महामुने:, व्यासस्य= तदाख्यस्य।

उदाहरणं प्रस्तौति अतिक्रान्तेत्यादिना अतिक्रान्तसुखा: प्रत्युपस्थितदारुणा: काला: श्व:, श्व: पापीयदिवसा पृथिवी गतयौवना विद्यते इति पदव्यवस्था।

अतिक्ररान्तसुखा:= अतिक्रान्तं व्यतीतं न तु लेशमात्रमपि विद्यमानं सुखं मन: प्रसादनं यत्र तादृशा:, प्रत्युपस्थितदारुणा:= प्रति प्रतीपतया उपस्थितानि वृत्तानि सद्य: प्रत्यावर्तमानानि दूरभाविन्यपि उपतिष्ठायमानानि, दारुणानि भीषण-दु:खानि येषु ते तादृशा:, काला:= समया:, श्व: श्व:= प्रत्यागामिदिन, दिनाद्दिनं, पापीयदिवसा= पापीया दुराचारातिशययुक्ता: दिवसा: वासरा यस्यां सा तादृशी, गतयौवना= गतं नितान्तमेव व्यतीतं यौवनं तारुण्यं उपभोगक्षमत्वं यस्या:सा, तादृशी पृथिवी= धरित्री, विद्यते इति।

तत्राभीष्टमर्थमाह अत्रेत्यादिना अत्र= अस्मिन् पद्ये, हि, कृत्तद्धितवचनै:= कृता, तद्धितेन वचनैश्च, अलक्ष्यक्रमव्यङ्ग्य:= रसादिध्वनि:, 'पृथवी गतयौवना' इति= इत्थं, अनेन= पदावल्या, च, अत्यन्ततिरस्कृतवाच्य:= वाच्यार्थबाधात्त-स्याविवक्षितत्वेन नितान्तत्यक्तवाच्यो यो लक्षणामूलो, ध्वनि:, प्रकाशित:= समभिव्यक्त इति।

अस्यायमाशय:— अत्र यौवनत्वं तु सजीवस्यैव सम्भवान्निर्जीवत्वेन पृथिव्यास्तदसम्भवाद् गतयौवना इत्येतस्य वाक्यस्याविवक्षितत्वेन तमत्यन्तं तिरस्कृत्य असम्भाव्यमानसम्भोगेऽर्थे प्रतिष्ठापनादत्यन्ततिरस्कृतवाच्यरूपो ध्वनि-स्तु व्यक्त एव तत्रापि अतिक्रान्त इत्यत्र प्रत्युपस्थित इत्यत्र च क्तरूपस्य कृत: पापीयेत्यत्र छप्रत्ययरूपतद्धितस्य काला इत्यत्र बहुवचनस्य च रसादिध्वनि-व्यञ्जकत्वमप्यस्ति। तद्यथा अतिक्रान्तेत्यत्र भूतार्थक्तप्रत्ययेन सुखस्य सदैवाविद्य-

मानत्वं ध्वनितं, उपस्थितेत्यत्र तेनैव दुःखानां पूर्वकालादेव विद्यमानत्वं तस्य केनाऽप्युपायेनानिराकरणीयत्वञ्च ध्वन्यते, गतेत्यत्र तेन यौवनस्य व्यतीतस्य उपायबाहुल्येनापि नितान्तमेवापरावर्तनीयता तेन तस्य क्षणिकत्वादग्राह्यता हेयता च व्यक्ता। एवमेव पापीयेत्यत्र छप्रत्ययरूपतद्धितेन दिवसानां पापिष्ठजननियन्त्रितत्वं ध्वन्यते। इदं तु ममापि गतानुगतिकत्वमेव। वस्तुतस्त्वत्र पापीय इति ईयसुन्प्रत्ययान्तोऽभीष्टो मुनेः। स चातिशयताबोधकः सकारलोपश्चार्षः किञ्च श्वः श्वः पापीयदिवसा= दिनानुदिनं प्रवृद्धपापाचारवासरा इत्याशयात् यो यो दिवस आगच्छति स स पूर्वपूर्वापेक्षया पापीयान्निकृष्टत्वादित्यस्याशयः, काला इत्यत्र बहुवचनं ध्वनति यत्कालस्य न कश्चिदप्यंशः सुखाय भवति। अनेन समग्रतया कालस्य भीषणता देशस्याव्ययवहार्यता च ध्वन्यते येन कालदेशयोरुभयोरेव वैपरीत्यप्रदर्शनेन शान्तरसो व्यज्यत इति अलक्ष्यक्रमव्यङ्ग्यः।

सुप् तिङ् आदि से रसादि ध्वनि के प्रकाशन का दूसरा भी उदाहरण प्रस्तुत करते हैं— (ऊपर जो कहा था कि ऐसे प्रबन्ध बहुतायत से देखे जाते हैं उसी के समर्थन में इसे प्रस्तुत किया गया है)—

जैसे महर्षि व्यास का—

काल ऐसे हैं जब कि सुख समाप्त हो चुका है और भीषण दुःख उसके प्रतिकूल उपस्थित है, पहले के अपेक्षा दिन—दिन पाप से आक्रान्त दिन वाली पृथ्वी भी समाप्त हुआ यौवन जिसका ऐसी है।

उसमें अभीष्ट आशय को बताते हैं—

इसमें कृत्, तद्धित एवं वचनों के द्वारा अलक्ष्यक्रमव्यङ्ग्य अर्थात् रसादिध्वनि व्यक्त है और 'पृथ्वी भी समाप्त हुआ है यौवन जिसका ऐसी' से अत्यन्ततिरस्कृत वाच्य ध्वनि प्रकाशित की गई है।

आशय यह है कि मूल में अतिक्रान्त' 'उपस्थित' 'गत' में जो भूतार्थक्तप्रत्ययरूप कृत् है उससे क्रमशः सुख का कभी न होना, दुःख का पहले से होना एवं यौवन के अस्थिन होने से हेयता आदि व्यक्त होते हैं। इसी तरह मूल में पापीय शब्द में 'छ' प्रत्यय वा 'ईयसुन्' प्रत्यय है जो कि पाप के दिनानुदिन अतिशयता प्राप्त करने का अर्थ समर्पित करता है और 'काल में जो बहुवचन है वह काल के प्रत्येक अंश का बोध कराता है। इस तरह सब मिलकर काल का कोई भी क्षण सुखमय का होना एवं सदा दारुण दुःख की ही विद्यमानता रहना तथा देश का भी पापियों से दिन पर दिन आक्रान्त होने से अव्यवहरणीय होना आदि सब मिलकर शानत रस की अभिव्यञ्जना करते हैं।

**ध्वन्या०— एषां च सुबादीनामेकैकशः समुदितानां च व्यञ्जकत्वं महाकवीनां प्रबन्धेषु प्रायेण दृश्यते।**

**लीला— तस्यैव अन्यान्यपि उदाहरणानि प्रस्तोतुमुपक्रमते एषामित्यादिना एषां= रसादिध्वनिव्यञ्जकत्वेन कथितानां, सुबादीनां= सुप्तिङ् भृतीनां, एकैकशः=**

प्रत्येक, समुदितानां= समूहगतानां, च व्यञ्जकत्वं= ध्वने: प्रकाशकत्वं, महाक-वीनां= सिद्धहस्तकाव्यकाराणां, प्रायेण= बाहुल्येन, दृश्यते= अवलोक्यत इति। सुबादय: समस्ता व्यस्ता वा तथाविधत्वेन प्रयुक्ता रसं प्रकाशयन्ति इति भाव:।

सुबादि के रसादि ध्वनि के प्रकाशक होने के और भी उदाहरण प्रस्तुत करने हेतु उपक्रम करते हैं—

इन सुप् आदि का एक-एक करके वा समूह में भी रसादि के व्यञ्जक होना महाकवियों के प्रबन्धों में प्राय: देखा जाता है। अर्थात् केवल समूह में ही नहीं, अलग-अलग भी ये रसादि के व्यञ्जक होते हैं, यदि उनका प्रयोग उस प्रकार से हो।

ध्वन्या०— सुबन्तस्य व्यञ्जकत्वं यथा—

तालै: शिञ्जावलयसुभगै: कान्तया नर्तितो मे।
यामध्यास्ते दिवसविगमे नीलकण्ठ: सुहृद् व:।।

लीला— तत्र सुम्मात्रस्य व्यस्तत्वेऽपि रसादिध्वनिव्यञ्जकत्वमुदाहर्तुमुपक्रमते सुबन्तस्येत्यादिना सुबन्तस्य= सुब्विभक्त्यन्तपदस्य, व्यञ्जकत्व= रसादे: प्रकाश-कत्वं, यथा= इति वक्ष्यमाणपद्ये।

तदेवोदाहरति तालैरित्यादिना मे कान्तया शिञ्जद्वलयसुभगै: तालै: नर्तित: व: सुहृद् नीलकण्ठ: दिवसविगमे या अध्यास्ते इति पदव्यवस्था।

मे, कान्तया= प्रियया, शिञ्जद्वलयसुभगे:= शिञ्जस्ती शब्दायमानानि वलयानि कङ्कणानि तै: सुभगै: मनोहरै:, तालै:= करतलवादनै:, नर्तित:= नृत्यन् कृत:, व:= युष्माक मेघस्येत्याशय:, सुहृद्= मित्रं, नीलकण्ठ:= मयूर:, मेघमयूर-योर्मैत्री कविप्रौढोक्तिसिद्धा, दिवसविगमे= घस्त्रावसाने, यां, अध्यास्ते= अधिवसति यष्ट्येति।

अत्र तालैरिति भिस: प्रयोगेण बहुवचनान्त पदं तालस्य बहुविधज्ञानवैदग्ध्य ध्वानत् विप्रलम्भोद्दीपकतामाप्नोति। तेनास्य विप्रलम्भशृङ्गारव्यञ्जकत्वम्।

अब सुबादि के प्रत्येक का रस के व्यञ्जकत्व होने का उदाहरण प्रस्तुत करते हैं—

सुबन्त का रसादिव्यञ्जकत्व जैसे—

मेरी प्रेयसी ने परस्पर टकराने से आवाज करते हुए वस्तुओं से सुन्दर बने तालों से नचाया गया आपका मित्र मयूर रात हो जाने पर जिनके आशरे पर बैठ जाता है।

यहाँ 'तालों से' पद सुबन्त है और यह अनेक प्रकार के तालों के ज्ञान को दर्शाता हुआ विप्रलम्भ शृङ्गार का उद्दीपन करता है। अत: इसका अकेले ही रसव्यञ्जकत्व। है।

ध्वन्या०— तिङन्तस्य यथा—

अवसर रोउं चिअ णिम्मिआइं मा पुंस मे हअच्छीइं।
दसंणमेत्तुम्भत्तेहिं जहिं हिअअं तुह ण णाअम्।।

(अपसर रोदितुमेव निर्मिते मा पुंसय हताक्षिणी मे।
दर्शनमात्रोन्मत्ताभ्यां याभ्यां तव हृदयमेवं रूपं न ज्ञातम्।। (इतिच्छाया)

लीला— एवं केवलस्याऽपि सुबन्तस्य रसादिव्यञ्जकत्वं निरूप्य सम्प्रति केवलस्य तिङन्तस्य र ध्वमिव्यञ्जकत्वेदाहरणायोपक्रमते तिङन्तस्येत्यादिना- तिङन्तस्य= तिङ् विभक्त्यन्तपदस्य, यथा= रसव्यञ्जकत्वं यथेति।

तदेवोदाहरति अवसर इत्यादिना अवसर (अपसर) मे, रोउ (रोदितुं) विअ (एव) णिम्मिआईं (निर्मिते) हअच्छीइं (हते अक्षिणी) मा, मा, पुंस (पुंसय) दंसणमेत्तुम्मत्तेहिं (दर्शनपमात्रोन्मताभ्यां जहिं यां (याभ्यां) तुह (तव) हिअअं (हृदयं) ण (न) णाअं (ज्ञातम्) इति पदव्यवस्था।

अपसर= निरर्थकेनानुनयव्याजेन मान्तिकमागाः, मे= मम, रोदितुं= केवलमश्रु पातयितुं, एव न तु यमर्थं रुदितं तज्जन्यानन्दमप्यनुभवितुं, निर्मिते= सृष्टे, मे, हताक्षिणी= भाग्यहीननेत्रे, मा पुंसय= मा त्वदाभिमुखं विकासय, दर्शनमात्रोन्म- त्ताभ्यां= विलोकनमात्राधैर्याभ्यां न तु यथार्थज्ञानपराभ्यां, याभ्यां= नेत्राभ्यां, तव, हृदयं,= मनः, एवं कपटपूर्णमिति, न ज्ञातं= नैवावगतमिति।

काचिद्विरहिणी गूढविप्रियकारिणं नायकमाक्षिपति यत्त्वं दूरमपेहि रोदनायैव प्रणीते मे भाग्यहीननयने पुनः पुनरलीकाश्वासनेन रोदननिमित्तमुत्पाद्य मा ऽभिव- र्धय।अत्र तव कश्चिदपराधो यन्ममैवैताभ्यां विलोकनमात्रातुराभ्यां न तु यथार्थज्ञा- नक्षमाभ्यां नयनाभ्यां त्वमेतादृशः कपटीति न ज्ञातमिति।

अत्र अपसर इति तिङन्तशब्दः ईर्ष्याविप्रलम्भव्यञ्जकः पदान्तराणि तु तदनुगृहीतान्येवेति।

इस प्रकार केवल सुबन्त पद के रसादिव्यञ्जकत्व का उदाहरण प्रस्तुत कर अब तिङन्त मात्र के व्यञ्जकता का उदाहरण देने का उपक्रम करते हैं—

तिङन्त का (रसादिव्यञ्जकत्व) जैसे—

दूर हटो, रोने ही के लिए बनाए गए मेरी आँखों को (और रुला के) मत बढ़ाओ देखने मात्र के लिए उतावले बने जिन्होंने तुम्हारे (कपटी) हृदय को नहीं जाना। यहाँ 'हटो' पद ईर्ष्याविप्रलम्भ का व्यञ्जक है और शेष पद उसके ही द्वारा अनुगृहीत है।

ध्वन्या०— यथा वा—

मा पन्थं रुन्धीयो वेहि वालअ अहोसि अहिरीयो।
अम्हेअ णिरिच्छाओ सुण्णघरं रक्खिदव्वं णो।।

(मा पन्थानं रुधोऽपेहि बालक ! अहोऽस्यह्रीकः।
वयं निरिच्छाः शून्यगृहं रक्षितव्यं नः। (इतिच्छाया)

लीला— सम्प्रति केवलस्य तिङन्तस्य रसव्यञ्जकत्वोदाहरणान्तरप्रस्तुतये

उपक्रमते यथेत्यादिना वा= इति पक्षे, यथा उदाहरणान्तर यथेति। तदेवोदाहरति 'मा पन्थं' इत्यादिना हे बालक= हे अवसरानभिज्ञ ! अपेहि= अपसर, मा, पन्थानं= मार्गं, रुधः= अवरुद्धं कुरु, अहो= आश्चर्यं, अह्रीकः= विलज्जः, असि, वयं, निरिच्छाः= स्पृहाशून्याः, यतः, नः, शून्यगृहं= जनहीनभवनं, रक्षितव्यं= गोपायितव्यमिति।

अत्रापि 'अपे हि' इति पदमेव सम्भोगशृङ्गारस्य व्यञ्जकमन्ये तु तदनुगृहिता एवेति, यत एतदेव ध्वनति यत्त्वमप्रौढोसि यतो लोकदृश्ये मार्गे इत्यथमाचरसि। यदि तेऽभिलाषो मयि तर्हि गृहेऽहमेकाकिन्येव। तत्तत्रैवागच्छेति।

तिङन्त के रसादि के व्यञ्जक होने का दूसरा भी उदाहरण प्रस्तुत करते हैं—

हे बालक ! हटो, मेरा रास्ता मत रोको, बढे ढीढे हो, हमको तुमसे बात नहीं करनी चाहिए, हमें अपने शून्य घर की रखवाली करनी है।

यहाँ भी हटो पद ही रसादि का व्यञ्जक है क्योंकि वही शेष पदों का सम्भोग शृङ्गार की व्यक्तिहेतु प्रेरित करता है।

ध्वन्या०— सम्बन्धस्य यथा—

अण्णत्त वच्च वालअ ह्णाअन्ति किं मं पुलोएसि एअम्।
भो जाआभीरुआणं तड विअण होई।।
(अन्यत्र व्रज बालक स्नान्तीं मां किं प्रलोकयस्येतत्।
भो जायाभीरुकाणां तटमेव न भवति।) (इतिच्छाया)

लीला— सुबादीनां व्यस्तत्वेऽपि रसादिव्यञ्जकत्वोदाहरणप्रसङ्गे केवलस्य सम्बन्धस्य= षष्ठ्यर्थसम्बन्धस्य, यथा= इति केवलस्य रसव्यज्जकत्वं यथेति।

तदेवोदाहरति अण्णत्त इत्यादिना बालअ (बालक) अण्णत्त (अन्यत्र) वच्च (व्रज) ह्णाअन्तौं (स्नान्तीं) म (मां) किं, पुलोएसि (प्रलोकयसि) भो, जाआभी-रुआणं (जायाभीरुकाणां) एअं (एतत्) तडं (तटं) पाठान्तरे तित्थं (तीर्थं) विअ (एव) ण (न) होई (भवति) इति पदव्यवस्था।

हे बालक 'हे जीवनरहस्याभिज्ञ' अन्यत्र= अपरत्र स्थाने, ब्रज= याहि, स्नान्तीं= स्नानपरायणां, मां, किं= किमर्थं, एतत्= ईदृक्प्रकारेण, विलुब्धेन विलोकनेन, प्रलोकयसि, भो= इति सोल्लुण्ठनया ह्वानं, जायाभीरुकाणां= जायायाः पत्नीतो ये भीरुका भयशीलास्तेषां तादृशानां, एतत्= इदं, तटं= तीरं, एव, न भवति= नैव सिध्यति इति।

जलाशये स्नानपरां काञ्चिदाभिलाषेण विलोकयन्तं कञ्चन जनं प्रति तमभिलषन्त्याः कस्याश्चित्कथनमिदम्। ये खलु पत्नीतो विभ्यन्ति तेषां कृते एतत्तटमेव न भवति इति षष्ठ्यर्थसम्बन्धेन तस्याः तं प्रति कामुकत्वं तस्य च स्वपत्नीभयात्तस्याः कामयमानस्यापि अभिलाषस्यापूरणं तेन तस्या ईर्ष्यातिशयत्वं

व्यज्यते। जायातो ये भीरवस्तेषामेतत्स्थानमिति दूरापेतः सम्बन्ध इति तस्यो-पालम्भनम्।

सुप् आदि का पृथक्-पृथक् भी रसादि के व्यञ्जकत्व के उदाहरण के प्रसङ्ग में अब सम्बन्ध के रसादिव्यञ्जकत्व का उदाहरण प्रस्तुत करते हैं—

हे बालक ! अन्यत्र ही चले जाओ, नहाती हुई मुझे क्यों इस तरह घूर घूर के देख रहे हो, ए ! यह तट पत्नी से डरने वालों का स्थान नहीं है।

यह किसी प्रमदा की उक्ति है जो उसे चाहती थी और वह भी उसे चाहता था लेकिन अपनी गृहिणी के डर से मिलन के लिए डरता था। यहाँ 'पत्नी से डरने वालों को' कह के जो उसका तट से सम्बन्ध न होना बताया गया है उससे ईर्ष्या की अभिव्यक्ति होती है। अतः यह सम्बन्ध का रसाभिव्यञ्जकत्व का उदाहरण है।

ध्वन्या०— कृतकप्रयोगेषु प्राकृतेषु तद्धितविषये व्यञ्जकत्वमावेद्यत एव। अवज्ञातिशये कः। समासानां च वृत्त्यौचित्येन विनियोजने।

लीला— एवं सम्बन्धमात्रस्य रसाभिव्यञ्जकत्वमुदाहृत्य सम्प्रति केवलत-द्धितस्यापि रसादिव्यञ्जकत्वं निर्दिशति कृत्रकेत्यादिना कृतकप्रयोगेषु= कृतः विहितः कप्रयोगः कप्रत्ययविधानं येषु-तेषु, प्राकृतेषु= प्राकृतप्रयोगेषु, तद्धित-विषये= तद्धितलक्ष्ये, व्यञ्जकत्वं= रसादिद्योतकत्वं, आवेद्यते= कथ्यत एव। तत्र कः= कप्रत्ययः, अवज्ञातिशये= अवज्ञाया अनादरस्य अतिशयः प्रकर्षस्त-स्मिन्, अनादराधिक्यद्योत्ये, भवतीति शेषः। यथा 'जायाभीरुकाणां इत्यत्र पूर्वोदाहृतपद्ये। अस्य च ये हि स्वजायातो विभ्यन्ति तेभ्यः कोऽन्यो भवति कुत्सित इत्यस्य अनदरातिशयद्योतनम्।

तथैव समासविषये निर्दिशति समासानामित्यादिना समासानां= अव्ययीभा-वादीनां, वृत्यौचित्येन= परुषाः कोमलोपनागरिकेतिवृत्त्यानुकूल्येन, विनियोजने= प्रयोगे, केवलानामपि रसाभिव्यञ्जकत्वं भवतीति शेषः। तद्बहुश उदाहृतमेव।

इस प्रकार सम्बन्ध मात्र के रसाभिव्यञ्जकत्व का उदाहरण प्रस्तुत कर अब तद्धित के विषय में कहते हैं—

'क' प्रत्यय किए गए प्राकृत प्रयोगों में तद्धित के विषय में भी रसादि का व्यञ्जकत्व होता ही है। क प्रत्यय ज्यादा अनादर का द्योतन करता है। जैसे ऊपर के उदाहरण में ही जाया भीरुकाणां में भीरु से जो कप्रत्यय है वह अवज्ञा के अतिशय का द्योतक है। उसका द्योतन है— 'जो नीरस लोग अपनी पत्नी से डर कर रसक्रिया में पीछे पड़ते हैं उनसे निन्दित कौन होगा।'

इसी तरह समास के विषय में भी कहते हैं—

समासों का भी वृत्ति के अनुकूल प्रयोग होने पर उसी तरह केवल उनका मात्र भी रसादि का व्यञ्जकत्व सिद्ध होता है। उदाहरण पहले ही दिये जा चुके हैं।

ध्वन्या०— निपातानां व्यञ्जकत्वं यथा—

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुस्सहो मे।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपार्धरम्यैः।।

इत्यत्र चशब्दः।

लीला— इत्थं सम्बन्धतद्धितसमासानां पृथगपि रसादिव्यञ्जकत्वं निर्दिश्य सम्प्रति निपातानामपि तथोदाहर्तुमुपक्रमते निपातानामित्यादिना निपातानां चादीनामसत्वार्थानां, व्यञ्जकत्वं= रसादिप्रकाशकत्वं, यथा= इति उपस्थाप्यमानपद्ये।

तदेवोदाहरति अयमित्यादिना= एमपदे तया प्रियया अयं वियोगः ये सुदुःसहः उपनतः, च नववारिधरोदयात् अहोभिः च निरातपार्धरम्यैः भवितव्यं च इति पदव्यवस्था।

उर्वशीविरहव्याकुलः पुरुरवाः कथयति तया= तादृश्या हृदयगतया प्रियया= प्रेयस्या ऊर्वश्या, एकपदे= अकस्मादेव अविचिन्तितत्वेन, अयं= एतादृशो दारुणः, वियोगः= विरहः मे= मम, सुदुःसहः= दुःखेनाऽपि सोढुमशक्यः, उपनतः= परिणतः, च= एव, अहोभिः= दिवसैः आगामिदिनैः नववारिधरोदयात्= नवा नूतना अतएव श्यामाश्च ये वारिधरा मेघास्तेषामुदयादुत्थानात् आसन्नवर्षाकालत्वात्, निरातपत्वरम्यैः= दिर्गतो मेघावृतत्वेनापगत आतपो धर्मः येषु तत्तथात्वेन रम्यैः मनोहरैः, च, भवितव्यं= भाव्यमेवेति। एकतः दुर्विषह्यः प्रियावियोगोऽपरत आसन्नप्रावृट्कालश्चेति गण्डस्योपरि स्फोट एवेति।

तत्र व्यञ्जकत्वं निर्दिशति इतीत्यादिना इति अत्र= पद्येऽस्मिन्, चशब्दः= च इति निपातो विप्रलम्भस्य व्यञ्जक इति। यतः प्रियावियोगश्च वर्षाकालश्चेत्युभौ सममेवोपनताविति द्विप्रयुक्तचशब्दद्योतितत्वाद्रम्यपदेन सुतरामुद्दीपनविभावत्वमुक्तमिति।

अब निपातो की रसादिव्यञ्जकता का उदाहरण देने का उपक्रम करते हैं— निपातों का व्यञ्जकत्व जैसे—

'मेरे लिए अकस्मात् उस प्रेयसी से वियोग भी अविषह्य था ही और दिन भी नये बादलों के आ जाने से धूप से रहित होकर रमणीय होंगे भी।''

यहाँ भी शब्द विप्रलम्भ का व्यञ्जक है। अर्थात् दो बार प्रयुक्त 'भी' शब्द यह व्यक्त करते हैं कि एक तो प्रिया का वियोग अविषह्य था ही और उसके ऊपर यह वर्षा काल भी निकट है। अतः एक ही समय उपस्थित दोनों मिलकर प्राणहरण के लिए पर्याप्त हैं। अतः रमणीय पद से उद्दीपन विभाव का निर्देश होता है।

ध्वन्या०— यथा वा—

मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखं मंसविवर्तिपक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु।।

अत्र तुशब्दः।

लीला— निपातानां रसादिव्यञ्जकत्वस्योदाहरणान्तर प्रस्तौति यथेत्यादिना वा, यथा= इात उच्यमानपद्ये,

तदुपस्थापयति मुहुरित्यादिना पक्ष्मलाक्ष्याः मुहुः अंगुलिसंवृताधरोष्ठः।

प्रतिषेधाक्षरविक्लवाभिरामं अंसविवर्ति मुखं कथमपि उन्नमितं चुम्बितं तु न इति पदव्यवस्था।

पक्ष्मलाक्ष्याः= पक्ष्मले पक्ष्मयुक्तत्वेन मनोहरे अक्षिणी यस्यास्तस्याः तादृश्याः शकुन्तलायाः, मुहुः= भूयोभूयः, अंगुलिसंवृताधरौष्ठं= अंगुलिनभिः करशाखाभिः संवृतं चुम्बननिषेधाय पिहितं अधरोष्ठे वस्य तत् तादृश, प्रतिषेधाक्षरविक्लवाभिरामं प्रतिषेधाक्षरस्य न न इति चुम्बननिषेधकवर्णस्य विक्लवेन अस्पष्टोच्चारणेन अभिरामं 'सुन्दरं', हृद्यमिति यावत्, अंसविवर्ति= स्कन्धप्रदेशपरावर्तितं, समुखं= वदनं, कथमपि= यत्नतः, उन्नमितं= ऊर्ध्व नीत, चुम्बितं= आस्वादित, तु= इति व्यवच्छेदे, न= नैवेति।

तत्र व्यञ्जकशब्दं निर्दिशति अत्रेत्यादिना अत्र= पद्येऽस्मिन्, तुशब्द= तु इति शब्दो व्यञ्जक इति। अस्यायमाशयो यदत्र 'तु' शब्दः पश्चातापसूचकः सन् परिचुम्बनमात्रलाभेनाऽपि कृतकृत्यता स्यादिति ध्वनति। उक्तिरियं दुष्यन्तस्य शकुन्तलामधिकृत्य।

निपात की रसव्यञ्जकता का दूसरा उदाहरण प्रस्तुत करते हैं– अथवा जैसे–

उस बरौनियों से युक्त सुन्दर आँखों वाली सुन्दरी का अंगुलियों से ढके हुए होंठ वाला निषेध के लिए कहे गए वर्णों के व्याकुलता पूर्वक उच्चारण करने से और भी सुन्दर बना चुम्बन के परिहार के लिए कन्धे की ओर ले जाया गया मुख किसी प्रकार मैंने ऊपर तो उठाया लेकिन चुम्बन तो नहीं कर पाया।

यहाँ तो शब्द रसादि का व्यञ्जक है। यह शब्द पश्चाताप को सूचित करता हुआ 'चुम्बन भर भी मिल जाता तो कृतकृत्यता होती' ऐसा ध्वनित करता है। अतः यह विप्रलम्भ का व्यञ्जक है।

ध्वन्या०– निपातानां प्रसिद्धमपीह द्योतकत्वं रसापेक्षयोक्तमिति द्रष्टव्यम्।

'लीला– ननु व्याकरणादौ निपातानां तु केवलमर्थस्य द्योतकत्वमेव प्रसिद्धं न तु वाचकत्वं तत्कथं तेषां रसादिव्यञ्जकत्वमित्याशङ्कापरिहाराय कथयति निपातानामित्यादिना निपातानां= असत्वार्थानां चादीनां, द्योतकत्वं= अर्थस्य द्योतनमात्रमेव न तु वाचकत्वं, प्रसिद्धं= ख्यातं, अपि, इह= प्रकरणेऽस्मिन्, रसाद्यपेक्षया= रसादिगतापेक्षया, व्यञ्जकत्वं, उक्तमिति द्रष्टव्यं 'इति।

अस्यायमाशयः– व्याकरणादौ निपाता निरर्थका अतएव नार्थस्य वाचकाः किन्तु वाचकेन सह प्रयुक्तास्तद्वैलक्ष्यण्येन द्योतका एव। तेषां विलक्षणतायां तु चत्वारो हेतवो भवन्ति प्राक्प्रयोगः स्वातन्त्र्यप्रयोगाभावः षष्ठ्याद्यश्रवण लिङ्गसङ्ख्याविरहश्च। तत्र केषाञ्चित्प्राक्प्रयोगो यथा प्रादीनामुपसर्गसंज्ञाविशिष्टानां साक्षादन्यथावप्रभृतीनां धातोः प्रागेव प्रयोगः यथा प्रभवति, साक्षात्करोति इत्यादि. स्वातन्त्रेण प्रयोगाभावो यथा एव एवमादीनां प्रतियोग्यादिवाचकपदं विना

स्वतन्त्रतया प्रयोगस्याभावः षष्ठ्याश्रवणं यथा चन्द्र इव इत्यत्र नैव षष्ठी श्रूयते इति किन्तु चन्द्रस्य चन्द्रेण वा सदृश मुखमित्यादौ तु श्रूयते एव, लिङ्सङ्ख्याविरहश्चेति तेषां नैव लिङ्गं नैव सङ्ख्या च तद्विपरीतं वाचकशब्दस्य प्राग्वा पश्चाद्वा प्रयोगः, स्वातन्त्र्येण प्रयोगभावः षष्ठ्यादिश्रवणं लिङ्गसङ्ख्यावत्त्वञ्च भवति। तेन निपाता वाचकेभ्यो विलक्षणाः सन्तः तदर्थमेव द्योतयन्ति न तु पृथगर्थमर्पयन्ति। तत्कथमवाचकानां निपातानां रसादिव्यञ्जकत्वमिति चेदित्यम्। काममन्यत्र द्योतकत्वमात्रं स्यादत्र तु रसापेक्षया व्यञ्जकत्वमेव भवति विभावाद्युपस्थापनमुखेन यथा अन्तरोदीरितपद्ययोरन्यत्र चेति।

व्याकरण आदि में तो निपातों का द्योतकत्व माना गया है और उनका वाचकत्व निषिद्ध है तो फिर उनसे रसादि का व्यञ्जकत्व कैसे हो सकता है ? इस पर कहते हैं कि रसादि में उनका व्यञ्जकत्व विभावादि की उपस्थापना के द्वारा होता है।

ध्वन्या०— उपसर्गाणां व्यञ्जकत्वं यथा—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा—
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दलेखाङ्किताः।।

इत्यादौ।

लीला— निपातानां विभावाद्युपस्थापनमुखेन रसाभिव्यञ्जकत्वोदाहरणप्रसङ्गे सम्प्रति उपसर्गाणां= प्रादीनामुपसर्गसंज्ञाविशिष्टानां, व्यञ्जकत्वं= रसादिप्रकाशकत्वं यथा= इति उच्यमानपद्ये।

उदाहरणं प्रस्तौति नावारा इत्यादिना शुकगर्भकोटरमुखभ्रष्टाः नीवाराः तरूणां अधः क्वचित् इङ्गुदीफलभिदः प्रस्निग्धाःउपलाः सूच्यन्त एव विश्वासोपगमात् अभिन्नगतयः मृगाः शब्दं सहन्ते तोयाधारपथाः वल्कलशिखानिष्यन्दलेखाङ्किताः च इति पदव्यवस्था।

शुकगर्भकोटरमुखभ्रष्टाः= शुकाः कीरा गर्भेऽन्तर्येषान्ते तादृशान्ति यानि कोटराणि विवराणि तेषां मुखेभ्योऽग्रभागेभ्यो भ्रष्टाः च्युताः नीवाराः= तृणधान्यविशेषाः, तरूणां= वृक्षाणां, अधः= अधस्तात्, सन्तीति, क्वचित्= कुत्र चित्स्थले तु इङ्गुदीफलभिदः= इङ्गुदीफलं तापसफलं भिन्दन्ति चूर्णीकुर्वन्ति यत्रेति तादृशाः अत एव प्रस्निग्धाः चिक्कणाः, उपलाः पाषाणखण्डानि, सूच्यन्ते प्रकाश्यन्ते, एव, विश्वासोपगमात्= विश्वासस्य हान्यभावविश्रम्भस्य उपगमादुदयात्, अभिन्नगतयः= अभिन्ना अस्खलिता अत एव सदा समाना गतिः येषान्ते, मृगाः= हरिणाः, शब्दं= रथादिध्वनिं, सहन्ते= नैव प्रतिकुर्वन्ति, तोयाधारपथाः= जलाधारमार्गाः, च= अपि, वल्कलशिखानिष्यन्दलेखाङ्किताः= वल्कलानां कषायि-

ततरुत्वचां शिखा अग्रभागास्तेभ्यो निष्यन्दा समुत्पन्ना या लेखा पंक्तिस्तया अङ्किताश्चिाह्नता: सन्तीति शेष:। तेनानेनावश्यमेवाश्रमेण भवितव्यमिति। उक्तिरियं राज्ञो दुष्यन्तस्य तपोवनमधिकृत्य सारथिनं प्रति। अत्रतपोवनस्य याथातथ्य-वर्णनविच्छित्या स्वभावोक्तिरलङ्कार:, तथैव सर्वेषामेवतपोवनसंसूचनरूपफलैक्य-वर्णनात्समुच्चयश्च। वृत्तं शार्दूलविक्रीडितम्। तदेवविवृणोति इत्यादाविति इत्यादौ= अस्मिन् पद्ये। अस्यायमाशय:- अत्र उपसर्गसंज्ञाविशिष्ट: प्रशब्द: उपलानामत्यन्तस्निग्धताबोधनेन इंगुदीफलाना- मत्यन्तसरसत्वं तेन च शान्तरसत्व ध्वनतीति उपसर्गस्य पारम्पर्येण रसादिव्यञ्जकत्वस्योदाहरणमिदम्।

निपातों के द्वारा विभावादि के संसूचना के द्वारा रसादि की व्यञ्जकता के उदाहरण के क्रम में उपसर्ग की रसादि व्यञ्जकता का उदाहरण प्रस्तुत करने का उपक्रम करते हैं—

उपसर्गों का रसादिव्यञ्जकत्व जैसे—

शुक पक्षी है भीतर जिसके ऐसे वृक्ष कोटर के अग्रभाग से गिरा हुआ नीवार (वनधान्य) पेड़ के नीचे गिरे हैं, कहीं इङ्गुदी (चिडरी) के फल तोड़ें जाने वाले नितान्त चिकने पत्थर दिखाई पड़ते ही हैं, किसी भी हानि के न होने का विश्वास उपजने से अस्खलित गति वाले मृग विना किसी सङ्कोच के रथ आदि का शब्द सह लेते हैं और जलघाट तक जाने आने के मार्ग बल्कल के अग्रभाग से बनी रेखा से चिह्नित है।

इत्यादि में—अर्थात् इसमें 'मूल में' 'प्रस्निग्ध' शब्द में 'प्र' उपसर्ग पत्थरों को अत्यन्त स्निग्धता को बताते हुए चिउरी फलों के सरसतातिशयता एवं उसके द्वारा शान्त रस की व्यञ्जना करता है। अत: यह उपसर्ग के द्वारा विभावादि का आक्षेप कर उसके माध्यम से रसादि की व्यञ्जना का उदाहरण है।

ध्वन्या०— द्वित्राणां चोपसर्गाणामेकत्र पदे य: प्रयोगे: सोऽपि रसव्य-क्त्यनुगुणतयैव निर्दोष:।

यथा— 'प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन्द्राग्जन्तून्' इत्यादौ।

यथा वा 'मनुष्यवृत्त्या समुपाचरन्तम' इत्यादौ।

लीला— उपसर्गे विशेषं निर्दिशति द्वित्राणामित्यादिना एकत्र= एकस्मिन्नेव, पदे द्वित्राणां= द्वौ वा त्रयो वा द्वित्रास्ते द्वयोस्त्रयाणां वा, च, उपसर्गाणां= तत्संज्ञक-प्रादीनां, य:, प्रयोग:= व्यवहार:, स:= तादृशप्रयोग:, अपि, रसव्यक्त्यनुगुण-तया= रसादिव्यञ्जनानुकूल्येन, एव= इति व्यवच्छेदे, नान्यथा, निर्दोष:= दोषरहितो भवति इति।

अस्यायमाशय:— सामान्यत एकपदे एकाधिकानामुपसर्गाणां प्रयोगो दोषाय भवति किन्तु रसानुकूल्येन यदि द्वयोर्वा क्वचित्त्रयाणामपि तेषां प्रयोगो नैव

दोषाय किन्तु रसाद्यानुकूल्यं विनैव तथा प्रयोगो वा तथात्वेऽपि चतुरादीनां प्रयोगो नितान्तं दोषायैवेति। तदुदाहरति यथेत्यादिना— यथा त्रयाणामुपसर्गाणामेकत्र प्रयोगो यथा निम्नाङ्कितनिदर्शने,

उदाहरण प्रस्तौति प्रभ्रश्येत्यादि उत्तरीयत्विषि तमसि प्रभ्रश्यति द्राक् वीतावृतीन् जन्तून् समुद्वीक्ष्य..........इति पदव्यवस्था।

उत्तरीयत्विषि= उत्तरीयवस्त्रतुल्यकान्तौ, तमसि= अन्धकारे, प्रभ्रश्यति= विनष्टे सति, द्राक्= नूर्णमेव, वीतावृतिन्= हीनावरणान्, जन्तून्= प्राणिनः, समुद्वीक्ष्य= सम्= उद्=वि=ईक्ष्य=सम्यगुच्चैर्विशेषेण दृष्ट्वा.....इत्यादि। पद्यखण्डमिदं मयूरभट्टप्रणीतसूर्यशतकान्तर्गतश्लोकभागः। अवषिष्टभागस्तु यथा—

तन्तून् यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन्।
ते सान्द्रीभूय सद्यः क्रमविशददशाशादशाली विशालं
शन्धत्सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु।''

तत्राभीष्टं निर्दिशति इत्यादौ ति इत्यादौ= इति पद्यखझउे यत्त्रयाण उपसर्गाणां समाहारो विद्यते तद्भगवतश्चण्डांशोः प्राणिविषयककृपाऽऽधिक्यं जनयन् तद्विषयकरतिभावव्यञ्जकत्वाद्रसानुकूल्येन न दोष इति। उदाहरणान्तरं तस्यैव निर्दिशति यथेत्यादिना, वा= अथवा, यथा= इति उच्यमानपद्ये। तदवतारयति 'मनुष्येदित्या मनुष्यवृत्या= नरप्रकृत्या सम्=उप= आ=चरन्तं= सग्यग्भूतं उपाशुकृत्वा आसमन्ताच्चरन्तं व्यवहरन्तमिति।

तत्राभीष्टमाह इत्यादौ इति इत्यादौ= इत्यादिपद्ये त्रयाणामुपसर्गाणां यः समुदायः समुपाचरन्तमित्यत्र तेन भगवतो लोकानुग्रहेच्छातिशयो ध्वन्यत इति तस्य रसानुकूल्यात्र दोषायेति। अस्य शेषभागस्तु यथा स्वबुद्धिसामान्यकृतानुमानाः।

योगीश्वरैरप्यसुबोधमीश त्वां बोद्धुमिच्छन्त्यबुधाः स्वतर्कैः। इति। दीधितिकारस्तु।

'यः स्वप्ने सदुपानतस्य इत्यादौ च' इति उदाहरणान्तरमपि व्याख्याति तत्प्रक्षिप्तं मत्वैव। तत्रापि सत्=उप=आ=नतस्य इत्यत्र उप समीपे आ समन्तात् नतस्य प्राप्तस्येत्युपस्थितेः सर्वतोमुखतया रसाद्युपकारकमेवेति।

उपसर्ग के विषय में और विशेष बताते हैं—

एक पद में दो तीन उपसर्गों का एक साथ जो प्रयोग होता है वह भी रस की व्यक्ति के अनुरूप होने से ही निर्दोष होता है अन्यथा वा उससे अधिकों का प्रयोग रस के अनुकूल होने पर भी दोष ही माना जाता है। जैसे (तीन उपसर्गों का प्रयोग)

उत्तरीय के समान कान्ति वाले अन्धकार के नष्ट होने पर आवरण हटे हुए प्राणियों का समुद्वीक्षण कर......इत्यादि में यहाँ 'सम्=उद्=वि=ईक्षण कर......, का अर्थात् ठीक प्रकार से ऊपर से विशेष प्रकार से देखकर है जो कि प्राणियों के प्रति

भगवान् सूर्य की विशेष कृपा प्रकट होता है और उससे उनके प्रति रतिभाव ध्वनित होता हैं।

अथवा जैसे—

'मनुष्य की वृत्ति से समुपाचरण करते हुए' इत्यादि में। यहाँ भी सम्= उप= आन चरण का विशेषं अर्थ 'सही ढङ्ग से नजदीकी से सभी पक्ष में चरण कर' है जो कि भगवान् की लोक को अनुग्रह करने की कृपा के अतिशय का बोध कराता है जिससे भगवान् के प्रति रतिभाव ध्वनित होता है।

ध्वन्या०— निपातानामपि तथैव। यथा 'अहो बतासि स्पृहणीयवीर्यः' इत्यादौ।

यथा वा—

ये जीवन्ति न मान्ति ये स्ववपुषि प्रीत्या प्रनृत्यन्ति च
प्रस्यन्दिप्रमदाश्रवः पुलकिता दृष्टै गुणिन्यूर्जिते।
हा धिक्कष्टमहो क्व यामि शरणं तेषां जनानां कृते
नीतानां प्रलयं शठेन विधिना साधुद्विषः पुष्यता।।

इत्यादौ।

लीला— एवमुपसर्गाणां प्रयोगे विशेषं निर्दिश्य सम्प्रति निपातानां प्रयोगेऽपि विशेषं निर्दिशति निपातामित्यादिना निपातानां= चादीनामसत्वार्थानां, अपि= च, तथैव= उपसर्गविषये यदुक्तं तादृशमेव= द्वित्राणां रसानुकूल्येन प्रयोगे न दोषः, चतुरादीनां तु तथात्वेऽपि दोष एवेति। यथा= इति निदर्शने,

उदाहरति अहो इत्यादि, अहो वत स्पृहणीयवीर्यः असि इति। इत्यादौ= इत्यत्र अहो वत इत्येताभ्यां सम्भूय श्लाघातिशयो ध्वन्यते। पद्यमिदं कुमारसम्भवे पुरन्दरकामसंवादगतम्। पुरन्दरः कामं हरधैर्यभङ्गाय प्रेरयन् कथयति—

सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम्।
चापेन ते कर्म न चातिहिंस्रं, अहो वतासि स्पृहणीयवीर्यः।

उदाहरणान्तरं निर्दिशति यथेत्यादिना वा= इति विकल्पे, यथा= इति उच्यमानपद्ये।

उदाहरणं प्रस्तौति 'ये' इत्यादिना ये ऊर्जिते गुणिनि दृष्टे जीवन्ति (स्म) प्रस्यन्दिप्रमदाश्रवः पुलकिताः प्रीत्या प्रनृत्यन्ति (स्म) ये स्ववपुषि न मान्ति (स्म) तेषां साधुद्विषः पुष्यता शठेन विधिना प्रलयं नीतानां जनानां कृते क्व शरणं यामि हा धिक् अहो कष्टमिति पदव्यवस्था।

ये= जनाः, ऊर्जिते= महीयसि, गुणिनि= गुणवात्, जने, दृष्टे= नयनगोचरीभूते, जीवन्ति= उत्कृष्टजीविता भवन्ति वर्तमानसामीप्ये भूते लट्, प्रस्यन्दिप्रमदाश्रवः= अविरलनिपतदानन्दवाष्पाः, पुलकिताः= प्रहृष्यद्रोमाणः, सन्तः, प्रीत्या=

गुणिजनदर्शनजन्यानन्दातिरेकेण, प्रनृत्यन्ति= नटन्वतीवाचरन्ति= अतीव प्रसन्ना भवन्ति, ये, स्ववपुषि= निजशरीरे, निजभौतिकवैभवे, न मान्ति= नैव प्रमाद्यन्ति न किञ्चिदपि गणयन्ति, तेषां= तादृशानां महात्मनां, साधुद्विषः= सज्जनद्वेषिणः, पुष्यता= वर्धयता, शठेन= क्रूरेण, विधिना= नियत्या, प्रलयं= विनाशं, नीतानां= प्रातितानां, जनानां, कृते= निमित्तं, क्व= कुत्र, शरणं= आश्रयं, यामि= व्रजामि, हा ! इति दैन्ये, धिक्= दुर्भाग्य, अहो ! इत्याचर्ये, कष्टं= क्लेश इति। गुणग्राहिणो जना अस्तं गता इति महान् क्लेश इत्याशयः।

तत्राभीष्टमाचष्टै 'इत्यादौ' इत्यादिना इत्यादौ= इति पद्ये। अत्र हा धिक् इति निपातद्वयप्रयोगो दैव प्रत्यसूयाधिक्यं सत्कृत्यविवेकेन निर्वेदातिशयञ्च ध्वनतीति नैव दोषाय रसानुगुण्यादिति।

इस प्रकार उपसर्गों के प्रयोग के विषय में निर्देश कर अब निपातों के विषय में भी विशेष बताते हैं।

निपातों का भी वैसा ही होता है अर्थात् दो या तीन निपातों का एक जगह प्रयोग रस के अनुगुण होने से दोष नहीं होता और रस के अनुगुण न होने से वा उससे अधिक एक साथ प्रयुक्त होने से दोष हो जाता है। जैसे—

अहो 'आप', बड़े ही सराहनीय पराक्रम वाले हैं।

इत्यादि में। यहाँ 'मूल में' अहो वत' दो निपात हैं फिर भी 'अहो' से आश्चर्य एवं 'वत' से आमन्त्रण एवं दोनों से प्रशंसा की अतिशयता का द्योतित कर उससे अद्भुत रस की व्यञ्जना होती है। अत: यहाँ दोष नहीं आता।

और जैसे—

'जो महिमा से युक्त गुणी को देख कर जिन्हें रहने का अनुभव करते थे और आनन्द की आंशू बहाते हुए पुलकित होकर प्रेम से नाचते—से थे, जो अपने शरीर तक के लिए कोई अभिमान नहीं करते थे, उन दुर्जन के पोषक क्रूर दैव ने नाश को पहुँचाये गए सज्जनों के लिए मैं जिसके शरण में जाऊँ, हा ! धिक्कार है और बहुत बड़ा कष्ट है।

इत्यादि में। इसमें 'हा धिक्' दो निपात हैं और दोनों मिल कर दुष्ट के पोषक विधि के प्रति असूया एवं उसके आचरण के विचार से निर्वेद की व्यञ्जना होती है। अत: उनके प्रयोग में कोई दोष नहीं है।

''अत्रान्तरे दीधितिटीकायां छन्दसो व्यञ्जकत्वमिति निर्दिश्य अग्राङ्कितं पद्यमुदाहृतं वृत्तिश्च योजिता दृश्यते।

मदमुखरकपोतमुन्मयूरं प्रविरलवामनवृक्षसन्निवशम्।
वनमिदमवगाहमानभीसं व्यसनमिवोपरि दारुणत्वमेति।''

इत्यादौ प्रशब्दस्यौपक्छन्दसिकस्य च व्यञ्जकत्वमधिकं द्योतते। मदमुखर-कंपोतं= मदेन मुखरः शब्दायमानाः कपोताः पारावता यस्मिंस्तत् उन्मयूरं= उत् उत्सुका मयूरा बर्हिणो यस्मिंस्तत्, प्रविरलवामनवृक्षसन्निववेशं= प्रकर्षेण विरलः

स्वल्पः वामनानां खर्वाणां वृक्षाणां तरुणां सन्निवेशः न्यासो यस्मिंस्तत् अत्युच्च-वृक्षाधिक्यं, व्यसनं= पानादि, इव, अवगहानमानभीमं= अवगाहमानानां प्रविशतां भीमं भयावहं, उपरि= परिवामे दारुणत्वं= 'श्वापदाद्याक्रान्तत्वाद्, घोरत्वं, एति= प्राप्नोति इति व्याख्या। इत्यादौ, प्रशब्दस्य औपच्छन्दसिकस्य, च, अधिकं व्यञ्जकत्वं द्योतते प्रशब्दस्य 'प्रविरल' इत्यत्र औपच्छन्दसिकस्य पद्ये एव वस्तुव्यञ्जनमुखेन भयानकरसव्यञ्कत्वमिति।

छन्द का व्यञ्जकत्व जैसे—

मदमुखरकपोत उन्मयूर प्रविरलवामनवृक्षसन्निवेश।

यह वन अवगाहमान भीम व्यसन सरी 'तव दारुणत्व पाता।' यहाँ 'प्रविरल में 'प्र' उपसर्ग एवं पूरे पद्य में औपच्छन्दसिक छन्द वस्तु की व्यञ्जना के द्वारा भयानक रस का द्योतन करते हैं।

ध्वन्या०— पदपौनरुक्त्यं च व्यञ्जकत्वापेक्षयैव कदाचित्प्रयुज्यमानं शोभामावहति। यथा—

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति।
तत्साधवो न न विदन्ति विदन्ति किन्तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति।।

इत्यादौ।

लीला— इत्थमुपसर्गनिपातानां प्रयोगे विशेषं निर्दिश्य सम्प्रति प्रसङ्ग= सङ्गत्या पदपौनरुक्तये विशेषं निर्दिशति पदेत्यादिना पदपौनरुक्त्यं= एकस्यैव पदस्य पुनः कथनं, च= अपि, तथैव, व्यञ्जकत्वापेक्षया= रसादिद्योतकत्वेन, एव= त्यवच्छेदे नान्यथा, कदाचित्= क्वचिदेव न तु बहुत्र, प्रयुज्यमानं= उपन्यस्यमानं, शोभां= विच्छित्तिं, आवहति= धत्ते इति। पदग्रहणाद्वाक्यादेरपि यथासम्भवमुपलक्षणमिति लोचनकारः।

अस्यायमाशयः— रसव्यञ्जकत्वेन क्वचित्पदस्य वाक्यस्यापि पुनरुक्तिर्न दोषाय भवति न तु बाहुल्येनेति।

पदव्यञ्जकत्वमुदाहरति यथेत्यादिना यथा= इति निम्नाङ्कितपद्ये।

उदाहरणं प्रस्तौति यदित्यादिना वञ्चनाहितमतिः कार्योन्मुखः खलजनः यद् बहुचाटुगर्भं कृतकं ब्रवीति तत् साधवः न विदन्ति न विदन्ति किन्तु अस्य प्रणयं वृथा कर्तुं न पारयन्ति इति पदव्यवस्था।

वञ्चनाहितमतिः= वञ्चनायां प्रतारणायां आहिता निहिता मतिर्बुद्धिर्येन सः, प्रतारणापरः, कर्योन्मुखः= कार्यं स्वार्थसाधनं तत्र उन्मुखः तत्परः, खलजनः= दुष्टः, यद् बहुचाटुगर्भं= बहूनि अनेकविधानि कूटानि मिथ्याप्रशंसावचनानि

गर्भे अन्तर्यस्य तथाविधं, कृतकं= कृत्रिमवचनं, ब्रवीति= वदति, तद्, साधवः= सज्जनाः, न विदन्ति= नैव जानन्ति इति न= अपितु, विदन्ति= जानन्त्येव, किंतु= ज्ञात्वाऽपि ते, अस्य= खलस्यापि, प्रणयं= अनुरोधं, वृथा= निष्फलं, कर्तु= विधातुं, न, पारयन्ति= शक्नुवन्ति इति।

सज्जनाः खलु दुष्टस्य कार्यसिद्धये प्रयुक्तं कृत्रिमवचनमवश्यमेव जानन्ति किन्तु ते सौजन्यवशात् तदपि निष्फलं नैव कुर्वन्ति।

पद्यमिदं काव्यप्रकाशेऽप्युदाहतम्। तत्राभीष्टमाह 'इत्यादौ' इत्यादिना इत्यादौ= इति पद्ये 'न न विदन्ति विदन्ति' इति यद् द्विरुक्तं तत्र नञ् द्विप्रयुक्तो दार्ढ्यायेति कथनाद् 'न विदन्ति न' इत्येतावतैव सिद्धेऽर्थे पुनः 'विदन्ति' इति ग्रहणं सज्जनानामज्ञत्वप्रतिषेधपूर्वकं त एव हि सर्वं सतुरां विन्दतीति व्यञ्जनाय एव, तेनैतन्न दोषः।

एवमेव लोचनकारो वाक्यद्विरुक्तेरपि तथैवोदाहरति यथा रत्नावल्यां 'पश्यद्वीपादन्यस्यमादपि' इति वचनानन्तरं कः सन्देहः द्वीपादन्यस्मादिति कथनं येनाविघ्नतयैव ईप्सितप्राप्तिर्ध्वन्यते। तथैव वेणीसंहारे, किं किं ? स्वस्था भवन्ति मयि जीवति' इत्यनेन द्विरुक्तेन भमस्य अमर्षातिशयो ध्वन्यते। एवमेव विक्रमो-र्वश्यां— 'सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी' इत्यनेन द्विरुक्तेन उन्मादातिशयो ध्वन्यते।

इस तरह निपातों के प्रयोग के विषय में बता कर अब प्रसङ्ग से पदपौनरुक्त्य के विषय में भी बताते हैं।

पदपौनरुक्त्य भी एक ही पद की दुहरा कर उक्ति भी व्यञ्जकत्व की अपेक्षा से ही कहीं प्रयुक्त होता हुआ शोभा पा सकता है। ज्यादा पुनरुक्ति दोष हो जाती है। जैसे—

वञ्चना में लगी है बुद्धि जिसकी ऐसा स्वार्थ परायण दुष्ट जन जो अत्यधिक चाटुकारी से भरी बनावटी बात करता है तो उसे सज्जन समझते हैं नहीं, समझते हैं किन्तु उसके उस तरह के प्रणय को भी निष्फल कर नहीं पाता है। इत्यादि में। इसका आशय यह है कि दो बार 'नहीं' का प्रयोग अर्थ की दृढ़ता के लिए होता है और 'नहीं समझते हैं, नहीं' का अर्थ है एकदम समझते हैं जो कि अपने में पर्याप्त है, फिर भी 'समझते हैं' का दुबारा प्रयोग यह बताने के लिए है कि वही लोग सब अच्छी तरह समझ-पाते हैं। इस तरह की व्यञ्जना के कारण यहाँ दुबारा प्रयोग दोष नहीं है।

इसी तरह वाक्य का भी समझना चाहिए। जैसे 'रत्नावली' में 'देखो, दूसरे द्वीप से भी' इस कथन के बाद 'क्या सन्देह है, दूसरे द्वीप से भी' इस कथन से विना विध्न के ही इष्टप्राप्ति हो जाने की बात ध्वनित होती है। इसी तरह वेणीसंहार में 'क्या क्या, मेरे जीते जी धृतराष्ट्र के पुत्र स्वस्थ रहेंगे इसकी पुनरुक्ति भीम के अमर्ष के अतिशय को व्यक्त करती है। इसी तरह विक्रमोर्व शीय में 'सभी राजाओं के नाथ सर्वाङ्ग सुन्दरी देखी गई है कि पुनरुक्ति जो है पुरुरवा के उन्माद के अतिशय का बोध कराती है।

ध्वन्या०— कालस्य व्यञ्जकत्वं यथा—

समविसमणिव्विसेसा समन्तओ मन्दमन्दसंआरा।
अइरा होहिन्ति पहा मणोरहाणं पि दुल्लङ्घ्या।।

(समविषमनिर्विशेषाः समन्तो मन्दमन्दसञ्चाराः।
अचिराद्भविष्यन्ति पन्थानो मनोरथानामपि दुर्ल्लंघ्याः।। इतिच्छाया।

अत्र ह्यचिराद्भविष्यन्ति पन्थान इत्यत्र भविष्यन्तोत्यस्मिन् पदे प्रत्ययः कालविशेषाभिधायी रसपरिपोषहेतुः प्रकाशते। अयं हि गाथार्थः प्रवास-विप्रलम्भशृङ्गारविभावतया विभाव्यमानो रसवान्।

लीला— इत्थं पदपुनरुक्तेरुपादेयत्वमभिधाय सम्प्रति प्रकरणप्राप्तं भूतादि-कालव्यञ्जकतोदाहरणायोपक्रमते कालस्येत्यादिना कालस्य= भूतादिकालस्य व्यञ्जकत्वं रसादिद्योतकत्वं रसादिद्योतकत्वं, यथा= इति निदर्शने।

तदुदाहरति सम इत्यादिना समविसमणिव्विसेसा (समविषमनिर्विशेषा) समन्तओ (समन्ततः) मन्दमन्दसंआरा (मन्दमन्दसञ्चारा) पहा (पन्थानः) अइरा (अचिरात्) मणोरहाणं (मनोरथानां) पि (अपि) दुल्लङ्घया: (दुर्लङ्घ्याः) होहिन्ति (भविष्यन्ति) इति पदव्यवस्था।

समविषमनिर्विशेषाः= समा अनुच्चावचा विषमा निम्नोन्नता निर्विशेषा भेदहीना यत्र, समन्ततः= परितः मन्दमन्दसञ्चारा= अतिमन्थरसञ्चलना स्खलना-दिभयात्, पन्थानः= मार्गाः अचिरात्= अविलम्बेन, मनोरथानां= अभिलाषाणां, अपि, दुर्लङ्घ्याः= अलङ्घनीयाः, भविष्वन्ति= सम्पत्स्यन्ते, इति।

तत्र पर्यवसितमाह अत्रेत्यादिना अत्र= अस्मिन्, पद्ये, हि, 'अचिराद् भवि-ष्यन्ति पन्थानः' इत्यत्र, 'भविष्यन्ति' इति अस्मिन् पदे प्रत्ययः= स्यप्रत्ययः 'स्यतासी लृलुटोः' इति कृतः कालविशेषाभिधायी= भविष्यत्कालनिर्देशकः, सन्, रसपरिपोषहेतुः= उत्प्रेक्ष्यमाणो वर्षाकालः विरहिजनानां कम्पकारी किमुत वर्तमान इति ध्वनिः प्रकाशते द्योतत इति। अय= एषः, गाथार्थः= गाथाशयः, प्रवासविप्रलम्भशृङ्गारविभावतया= प्रवासो दूरदेशवासस्तेन जनितो यो विप्रलम्भशृङ्गारः तस्य विभावतया उद्दीपनत्वेन, विभाव्यमानः= उत्प्रेक्ष्यमाणः, रसवान्= रसयुक्त इति।

अस्यायमाशयः— अत्र पन्थानः अविलम्बनैव निम्नोन्नतसमाना मन्थरस-ञ्चलना मनोरथामपि अलङ्घ्या भविष्यन्ति किमुत जनानामिति गृहप्रत्यागयनस-म्भवक्षीणतया विरहिणां कृते उत्प्रेक्ष्यमाणोऽपि वर्षासमयः कम्पकारीति प्रवासज-न्यविप्रलम्भशृङ्गारविभावतया रसव्यञ्जक इति भविष्यत्कालबोधकः स्यप्रत्ययः इति।

इस प्रकार पदों की पुनरुक्ति की उपादेयता बता कर अब प्रसङ्ग प्राप्त काल की रसव्यञ्जकता उदाहरण प्रस्तुत करने का उपक्रम करते हैं—

काल की व्यञ्जकता जैसे—

"ऊँचाई और गहराई में विशेष भिन्नता रहित चारों ओर धीरे-धीरे ही चलने योग्य मार्ग अविलम्ब ही मनोरथों के भी अगम्य हो जाएंगे, लोगों की तो कौन बात।"

उसमें अभीष्ट अर्थ बताते हैं—

इसमें 'शीर्घ ही मार्ग हो जायेंगे' में 'हो जायेंगे' इस पद में जो कालविशेष का बोधक प्रत्यय है वह रस के परिपोष का हेतु बन कर प्रकाशित करता है। इस गाथा का अर्थ जो है वह प्रवास विप्रलम्भ शृङ्गार के विभाव के रूप में विभावित होकर रस वाला होता है।

इसका आशय यह है कि रास्ते के वैसे दुर्गम हो जाने कीद निश्चित उत्प्रेक्षा से परदेशी के मन में घर लौट न पाने की भीति में उसका हृदय काँप उठता है और वह उत्प्रेक्षा प्रवासजन्य विप्रलम्भ शृङ्गार का विभाव अर्थात् उद्दीपक बन जाता है और उससे वह रसवाला होता है।

ध्वन्या०— यथात्र प्रत्ययांशो व्यञ्जकस्तथा क्वचित्प्रकृत्यंशोऽपि दृश्यते। यथा—

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावगाहं दिवः
सो धेनुर्जरती चरन्ति करिणामेताः घनाभाः घटाः।
सक्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषिता
माश्चर्यंदिवसैर्द्विजोऽयमियती भूमिं समारोपितः।।

अत्र श्लोके दिवसैरित्यस्मिन् पदे प्रकृत्यंशोऽपि द्योतकः।

लीला— इत्थं कालविशेषबोधकप्रत्ययांशस्य व्यञ्जकत्वमुदाहृत्य सम्प्रति तादृशप्रकृत्यंशस्यापि व्यञ्जकत्वमुदाजिहीर्षुस्तन्निमित्तमुपक्रमते यथेत्यादिना यथा= यद्वत्, अत्र= अनन्तरोक्तपद्ये, प्रत्यांशः= कालविशेषबोधकप्रत्ययभागः, व्यञ्जकः= रसादिप्रकाशकः, तथा= तद्वत्, क्वचित्= कुत्रचित्तु, प्रकृत्यंशः= यस्मात्प्रत्ययः क्रियते सा प्रकृतिः सैव अंशः भागः अपि= च, दृश्यते= विलोक्यत इति। कालविशेषबोधकप्रत्ययवत्तत्प्रकृतिभागोऽपि कुत्रचित्तु रसादिव्यञ्जको भवति पारम्पर्येणेति। यथा= इति उच्यमानपद्ये।

उदाहरणं प्रस्तौति तत् नतभित्ति गेहं, दिवः लब्धावगाहं इदं मन्दिरं, सा जरती धेनुः, एताः घनाभाः करिणां घटा चरन्ति, स क्षुद्रः मुसलध्वनिः योषितां इदं कथं सङ्गतिकं, आश्चर्यं, दिवसैः अयं द्विजः इयतीं भूमिं समारोपितः इति पदव्यवस्था।

तद्= तादृशं, नतभित्तिः= नपता पतितप्राया भित्तिः कुड्य यस्य तत्, गेहं= गृहं क्व, इदानीन्तु, दिवः= गगनस्य, लब्धावगाहं= लब्धः पव्राप्तः अवगाहः प्रवेशो येन तत् गगनचुम्बि, इदं= पुरो विलसत्, मन्दिरं= हर्म्यं, तथैव, सा

पूर्वपरिचिता, जरती वृद्धा, धेनुः= गौः, इदादीन्तु एताः= पुरो दृश्यमानाः घनाभाः= मेघतुल्यच्छवयः, करिणां= हस्तिनां, घटाः= षङ्क्तयः, चरन्ति, तथा च सः= सदा श्रुतः, क्षुद्रः= तुच्छः, मुसलध्वनिः= धाव्यादिकुट्टनजातमुसलशब्दः क्व, इदानीन्तु, इदं= पुरःश्रूयमाणं योषितां= मत्तकाशिनीनां, कल= मधुरं, सङ्गीतकं= गानं, इति, आश्चर्यं= अद्‌भुतमेव, दिवसैः= स्वल्पदिनैर्नतु पक्षेणाऽपि, अयं= एषः दरिद्रतमः, द्विजः= ब्राह्मणः, इयतीं= एतादृशीं, भूमिं= प्रतिष्ठां, समारोपितः= प्रापित इति।

यत्र पतितप्रायकुड्यं गृहमासीत्तत्राधुना गगनचुम्बि हर्म्यं विलसति, यत्र च वृद्धा गौः साप्यैकैवासीत्तत्राधुना गजसमूहो भ्रमति, यत्र च क्षुद्रमुसलध्वनिरेव श्रूयते स्म अधुना कलकण्ठीनां गानं श्रूयते इति महदाश्चर्यमेव, स्वल्पैरहोभिरेवासौ दरिद्रविप्रः एतादृशीमसम्भाव्यामुन्नतिं नीत इति।

तत्राभीष्टं निर्दिशति अत्रेत्यादिना अत्र= अस्मिन्, श्लोके= पद्ये, 'दिवसैः इत्यस्मिन् पद्ये, प्रकृत्यंशः= प्रकृतिभागः, अपि= च द्योतकः= रसादिव्यञ्जकः।

अस्यायमाशयः— अत्र यद्‌द्विजस्य विभूतिर्वर्णिता सा दिवसैरेव जातेत्यत्र 'दिवसैः' इत्यत्र दिवस+ऐश् इति प्रकृतिभागभूतो दिवस एव पक्षमासादीनपवार्य अस्यार्थस्य अत्यन्तासम्भाव्यमानतां ध्वनति इति तस्य व्यञ्जकत्वम्। अल्पीयसैव समयेन तादृशविभूतिलब्धिरद्‌भूतातिशयस्य विषय एवेति।

प्रत्यय का व्यञ्जकत्व उदाहरण द्वारा सिद्ध कर अब उसके प्रसङ्ग से प्रकृति के भी व्यंजकत्व के निरूषण हेतु उपक्रम करते हैं—

जैसे यहाँ (उपर्युक्त पद्य में) प्रत्यय का व्यंजकत्व कहा गया वैसे ही कहीं तो प्रकृति का अंश भी व्यंजक के रूप में दिखाई पड़ता है।

जैसे—

'वह गिरती—सी दीवाल वाला घर, यह गगनवचुम्बी आलीशान महल, वह ढलती-सी बूढी गाय, वह मेघ की-सी कान्तिवाला हाथियों का झुण्ड जो घूम रहा है। वह तुच्छ मुसल की आवाज, यह सुन्दरियों का मीठा संङ्गीत, आश्चर्य है ये ब्राह्मण कुछ ही दिनों से ही इस प्रकार की स्थिति में पहुंचाए गए।

उसमें अभीष्ट प्रयोजन बताते हैं—

इस श्लोक में 'दिनों से' इस पद में प्रकृति अंश रसादि का द्योतक है। कहने का आशय यह है कि यहाँ प्रकृति अंश 'दिन' पक्ष, मास आदि का निवारण कर इस पद्य के अर्थ को अत्यन्त असमान्यमानता में पहुँच देता है अर्थात् चन्द ही दिनों में ऐसा होना अद्‌भुत है और अद्‌भुत का द्योतक है।

ध्वन्या०— सर्वनाम्नां च व्यञ्जकत्वं यथानन्तरोक्ते श्लोके। अत्र च सर्वनाम्नामेव व्यञ्जकत्वं हृदि व्यवस्थाप्य कविना क्वेत्यादिशब्दप्रयोगो न कृतः।

लीला— पूर्ववाक्ये प्रकृत्यंशोऽपि द्योतक इति यदुक्तं तत्र 'अपि' शब्दबोध्यं सर्वनामव्यञ्जकत्वं निर्दिशति सर्वनाम्नामित्यादिना= 'सर्वनाम्नां तदिदमेतदादीनां, च= अपि, व्यञ्जकत्वं= रसादिप्रकाशकत्वं, यथा, अनन्तरोक्ते, उपर्युक्ते, पद्ये। अत्र= पद्येऽस्मिन्, च, सर्वनाम्नां= तदिदमेतदादीनां व्यञ्जकत्वं= रसादिप्रकाशकत्वं, हृदि= मनसि, व्यवस्थाप्य= निधाय, कविना= काव्यकर्त्रा, 'क्व' इत्यादिशब्दप्रयोगः= क्व तद् क्व इदमित्यादिप्रयोगः न कृतः= विहित इति।

अस्यायमाशयः— सामान्यतो वैषम्यातिशयबोधनाय क्व, कुत्र प्रभृतिशब्दप्रयोगः कृतो दृश्यते यथा 'क्वाकार्थ्यं शशलक्ष्मणः क्व च कुल' इत्यादौ। अत्र तु कविना तथाविधायामेव स्थितावपि तस्य प्रयोगो यत्र कृतस्तदत्र सर्वनाम्नां रसादिव्यञ्जक मनस्यवधार्यैव न कृतो दृश्यते। तेन तत्र तदादीनां सर्वनाम्नामपि व्यंजकत्वं दृश्यते किन्तु तद् प्रकृत्यंशेन सम्भूय सर्वनाम्नां न तु पृथक्पृथक्त्वेन। तत्र तदिति नत भित्तीत्येतत्प्रकृत्यंशसहायं तस्या मूषकाद्याकीर्णतां ध्वनति यतः केवलं तदिति च उत्कर्षजनकमपि सम्भवेत्। न च केवलं नतभित्तिमात्रेण तादृशं दारिद्र्यमवगम्यते। एवञ्च सा इति धेन्वा सह। तथैवान्येऽपि। एवं तदिदंशब्दादिना तत्र स्मृतेरनुभवस्य नितान्तविपरीतविषयतासूचनेन तेषामाश्चर्यविभावता स्थापिता यत्र द्वयोः सम्भूय त्रयाणां वा सम्भूय व्यञ्जकत्वमिति।

पहले वाक्य में जो प्रकृति अंश भी कहा था उस 'भी' से सर्वनामों का भी ग्रहण कर उनकी भी उसी पद्य में व्यञ्जकता बताते हैं—

सर्वनामों की भी व्यञ्जकता जैसे अभी प्रस्तुत पद्य में। यहाँ भी सर्वनामों का ही व्यञ्जकत्व मन में सोचकर कवि ने 'कहाँ' इत्यादि वैशम्यातिशय बोधक शब्दों का प्रयोग किया नहीं है।

इस कथन का यह आशय है कि उक्त पद्य में प्रकृत्यंश का सर्वनामों से मिल कर व्यञ्जकता है न कि अलग-अलग। जेसे कि गिरती-सी दीवाल से मिलकर' 'वह' शब्द उसका चूहों आदि से नष्ट किया जना ध्वनित करता है और ढलती-सी शब्द के साथ मिलकर वह शब्द गाय का निकम्मा पन ध्वनित करता है। उसी तरह क्षुद्र शब्द साथ मिलकर 'वह ' शब्द मुसल ध्वनि की एकदम तुच्छता ध्वनित करता है।

यदि केवल 'वह' शब्द का ही प्रयोग किया होता तो वह अच्छापन द्योतित कर सकता था और सर्वनाम को छोड़कर केवल गिरती-सी, डढलती-सी आदि विशेषण मात्र का प्रयोग होता तो भी वह स्मृति एवं अनुभव की सङ्गति बैठ नहीं पाती। अतः दोनों मिलकर स्मृति एवं अनुभव के अत्यन्त ही विपरीत विषयत्व की सूचना से वह आश्चर्य का विभाव बन जाता है। अतः यहाँ प्रकृत्यंश का सर्वनामों के साथ मिलकर ही व्यञ्जकता है।

**ध्वन्या०— अनया दिशा सहृदयैरन्येऽपि व्यञ्जकविशेषाः स्वयमुत्प्रेक्षणीयाः। एतच्च सर्व पदवाक्यरचनाद्योतनोक्त्यैव गतार्थमपि वैचित्र्येण व्युत्पत्तये पुनरुक्तम्।**

लीला— प्रकरणमुपसंहरंस्तस्य प्रयोजनञ्च निर्दिशति अनयेत्यादिना अनया= अनन्तरोक्त्या, दिशा= प्रकारेण, सहृदयैः= रसिकैः, अन्ये= इतरे, अपि= च, व्यञ्जकविशेषाः= रसादिप्रकाशकाः, स्वयमेवापि, उत्प्रेक्षणीयाः= उन्नेयाः। एतत्= सुबादीनां व्यञ्जकत्वं, सर्वं= समस्तमेव, पदवाक्यरचनाद्योतनोक्त्या= पदस्य वाक्यस्य रचनायाः सङ्घटनायाश्च द्योतनोक्तिः रसादिप्रकाशनकथनं तया, एव, गतार्थं= सिद्धं, अपि=च, वैचित्र्येण= विचित्रतया, नैपुण्यातिशयत्वेन, व्युत्पत्तये= विशिष्टज्ञानाय, विनेयानामिति यावत्, पुनः, उक्तं= प्रतिपादितमिति।

अस्यायमाशः— व्यञ्जकास्त्वसङ्ख्यास्तेषां साकल्येन कथनं नैव सम्भवतीति दिङ्मात्रमिह दर्शितमन्यं तु शास्त्राण्यनुवृत्य ग्रन्थान समालोच्य स्वप्रतिभाञ्चोपयुज्य स्वयमेवोन्नेयाः। पदवाक्यसङ्घटनादीनां व्यञ्जकत्वप्रतिपादने एव सुबादीनां गतार्थत्वेऽपि विनेयानां विशेषव्युत्पत्तयेऽत्र पुनः प्रतिपाद्य केचिद्दर्शिता इति।

प्रकरण का उपसंहार करते हुए उसका प्रयोजन भी बताते हैं—

यहाँ बताए गए प्रकार से सहृदय और भी जो रसादि के व्यञ्जक होते हैं उनका अन्वेषण कर लें। यह सब पद, वाक्य एवं सङ्घटना आदि के द्योतन की उक्ति से ही सिद्ध हैं, फिर भी विशेष प्रकार की व्युत्पत्ति के लिए दुबारा यहाँ कहा गया।

कहने का अशय यह है कि रसादि के जो व्यञ्जक हो सकते हैं उनक सबका यहाँ उल्लेख करना सम्भव नहीं है अतः यहाँ दिशाबोध ही कराया गया है और इसे भी हृदयङ्गम करते हुए, ग्रन्थों का भी पर्यालोचन कर, अपनी प्रतिभा का भी उपयोग करते हुए सहृदयों को चाहिए कि वे रसादि के और भी व्यञ्जकों का पता कर लकें। वैसे तो सुबादि का व्यञ्जकत्व भी पहले पद वाक्य आदि की व्यञ्जकता के कथन से सिद्ध ही था, फिर भी उसे विशेष व्युत्पत्ति हेतु यहाँ दुबारा कहा गया है।

ध्वन्या०— ननु चार्थसामर्थ्याक्षेप्यां रसादय इत्युक्तम्, तथा च सुबादीनां व्यञ्जकत्ववैत्रित्र्यकथनमनन्वितमेव। उक्तमत्र पदानां व्यञ्जकत्वोक्त्यवसरे। किञ्चाथविशेषाक्षेप्यत्वेऽपि रसादीनां तेषामर्थविशेषाणां व्यञ्जकशब्दाविनाभावित्वाद्यथाप्रदर्शितं व्यञ्जकस्वरूपपरिज्ञानं विभज्योपयुज्यत एव। शब्दविशेषाणां चान्यत्र च चारुत्वं यद्विभागेनोपदर्शितं तदपि तेषां व्यञ्जकत्वेनावस्थितमित्यवगन्तव्यम्।

लीला— सुबादीनां रसव्यञ्जकत्वे पुनीराशङ्क्य समासधत्ते अविस्मरणार्थमधिकाभिधानार्थञ्च नन्वित्यादिना ननु च इति विरोधोक्तौ, रसादयः= रसभावादयः, अर्थसामर्थ्याक्षेप्याः= अर्थस्य वाच्यार्थस्य सामर्थ्येन शक्त्या आक्षेप्याः व्यङ्ग्या न तु वाच्या इति= इत्थं, उक्तां= प्राक्कथितम्। तथा, च, सुबादीनां= सुप्तिङादीनां अवाचकानां, व्यञ्जकवैचित्र्यकथनं= रसप्रकाशकविचित्रता— प्रतिपादनं, अनन्वितं= असङ्गतं, एवेति।

रसादिस्तु वाच्यार्थाक्षिप्तत्वेन प्रतीयते इति यदुक्तं तत्कथमवाचकानां सुबादीनां रसव्यञ्जकत्वकथनेनान्वेति इति शङ्का। समाधत्ते उक्तमित्यादिना अत्र= अस्मिन्, विषये, पदानां, व्यञ्जकोक्त्यवसरे= रसादिव्यञ्जकत्वप्रतिपादन-नसमये, उक्तं= कथितमेव यद्पदानामवाचकत्वेऽपि रसप्रकाश्यता सम्भवति, यतो नैव वाचकत्वं तु ध्वनिव्यवहारोपयोगि यत्कृतेऽवाचकस्य व्यञ्जकत्वेमेव न स्यादिति।

किञ्च, रसादीनां= रसभावादीनां, अर्थविशेषाक्षेप्यत्वे= वाच्यार्थेन प्रक्षिप्तत्वे, अपि, तेषां= तादृशानां रसाद्याक्षेपकाणां, अर्थविशेषाणां= वाच्यार्थानां, व्यञ्जक-शब्दाविनाभावित्वात्= प्रकाशकशब्दं विना असम्भवात्, तेषामर्थानां शब्दद्वारैव प्रकाशनसम्भवात्, यथाप्रदर्शितं= यथानिर्दिष्टसुदाहृतञ्च, व्यञ्जकस्वरूपपरिज्ञानं= रसादिप्रकाशकशरीरावधारणं, विभज्य= शब्दार्थयोर्विभागं कृत्वा, उपयुज्यते= उपयोगः क्रियते, एव= इत्यवधारणे इति। अयमाशयः= रसादीनामर्थविशेषाक्षे-प्यत्वेऽपि तादृशव्यङ्ग्याक्षेपकार्थस्यापि शब्दं विनाऽसम्भवात् तत्र शब्दस्यापि व्यापारस्त्वस्त्येव। तेन स च व्यञ्जकनात्मैव भवतीति। तेनैवोक्तं अर्थस्य व्यञ्जकत्वे तच्छब्दस्य सहकारिता' इति। अर्थानां व्यञ्जकत्वोपर्वणनप्रकरणे तत्सहकारिणां शब्दानामपि तथैव विभागशः प्रदर्शनं प्रासङ्गिकमेवेति। न चेदमपूर्वमेवोक्तं यतः शब्दविशेषाणां= विषिष्टशब्दानां, च= अपि, अन्यत्र= भामहप्रणीतग्रन्थादौ, च= अपि, यत चारुत्वं= सौन्दर्यावस्थितिः= रसाद्यनुकूल-स्थितिः, विभागेन= कुत्र कस्य सामञ्जस्यं कुत्र नेति विभज्य यथा माल्यचन्दनादि-शब्दानां शृङ्गारे चारुत्वहेतुत्वं बिभत्से तु नैवेति, उपदर्शितं= निर्दिष्टं, तदपि= तादृशस्थितित्वं शब्दानां, तेषां= शब्दानां, व्यञ्जकत्वेन= रसादिप्रकाशकत्वेन, एव= नान्यथा, अवस्थितं= सञ्जातं, इति= इत्थं अवगन्तव्यं= ज्ञातव्यमिति। यत्रापि अर्थशक्तिमूला व्यञ्जना तत्रापि अर्थस्य व्यञ्जकत्वे शब्दानां सहकारिता भवत्येव यत्र च शब्दशक्तिमूला व्यञ्जना तत्र तु शब्दे व्यञ्जनायाः कारणत्वमेव भवत्येव।

सुबादि के रसव्यञ्जकत्व के विषय में फिर आशङ्का उठाकर उसका समाधान करते हैं—

आशङ्का यह है कि पहले कहा गया है कि रसादि जो है वह अर्थ सामर्थ्य से आक्षिप्त होता है। उसको मानने पर सुबादि की व्यञ्जकता का जो वैचित्र्य अभी कहा गया उसको अन्वित कैसे माना जाय ?

इस विषय में तो पदों के अवाचक मानने पर भी उनके व्यञ्जकत्व की उक्ति के अवसर पर बहुत कुछ कहा गया है। बात यह है कि रसादि के अर्थविशेष से आक्षिप्त होने पर भी उन अर्थ विशेषों का व्यञ्जक शब्दों के विना अविनाभाव होने से जो बताया गया व्यञ्जकतालक्षण का ज्ञान है उसका विभाग कर उपयोग किया

ही जाता है। केवल यहाँ ही नहीं, अन्यत्र भामहविवरण आदि में भी चारुत्व का जो विभाग करके दिखलाया गया है अर्थात् माला, चन्दन आदि शब्द शृङ्गार में चारुत्व के व्यञ्जकत्व के ही कारण हुआ समझना चाहिए।

ध्वन्या०— यत्रापि तत्सम्प्रति न प्रतिभासते तत्रापि व्यञ्जके रचनान्तरे यद् दृष्टं सौष्ठवं तेषां प्रवाहपतितानां तदेवाभ्यासादपोद्धृतानामप्यवभासत इत्यवसातव्यम्।

कोऽन्यथा तुल्ये वाचकत्वे शब्दानां चारुत्वविषयो विशेषः स्यात्? एवासौ सहृदयसंवेद्य इति चेत्! किमिदं सहृदयत्वं नाम ? किं रसभावानपेक्षकाव्याश्रितसमयविशेषाभिज्ञत्वम्। ? उत रसभावादिमयकाव्यस्वरूपपरिज्ञाननैपुण्यम् ? पूर्वस्मिन् पक्षे तथाविधसहृदयव्यवस्थापितानां शब्द विशेषाणां चारुत्वनियमो न स्यात्। पुनः समायान्तरेणान्यथापि व्यवस्थापनसम्भवात्। द्वितीयस्मिंस्तु पक्षे रसज्ञतैव सहृदयत्वमिति। तथाविधैः सहृदयैः संवेद्यो रसादिसमर्पणसामर्थ्यमेव नैसर्गिकं शब्दानां विशेष इति व्यञ्जकत्वाश्रय्येव तेषां मुख्यं चारुत्वम्। वाचकत्वाश्रयाणान्तु प्रसाद एवार्थापेक्षायां तेषां विशेषः। अर्थानपेक्षायां त्वनुप्रासादिरेव।

लीला— यदि शब्दानां तथाविधत्वं चारुत्वं, तर्हि यत्र व्यञ्जकताऽऽभावस्तदा को विधिश्चारुत्वप्रतीतेरिति आशङ्कानिवारणाय कथयति यत्रापीत्यादिना यत्रापि= यस्मिंश्च, तत्= शब्दानां व्यञ्जकत्वं, सम्प्रति= तत्कालं, न, प्रतिभासते= द्योतते, तत्रापि= तादृशस्थलेऽपि, व्यञ्जके= व्यञ्जकशब्दे, रचनान्तरे= इतररचनायां, यत्= यादृशं, सौष्ठवं= लालित्यं, दृष्ट= विलोकितं, यत्र, प्रवाहपतितानां= सम्यगविचार्यैव इतरत्र प्रयुज्यमानानां, तेषां= एकत्र व्यजकत्वेन परिचितानां शब्दानां, अपोद्धृतानां= पृथगवगतानां, अपि, तत्= व्यञ्जकत्वं, एव, अवभासते== द्योतेत, इति= इत्थं, अवसातव्यं= स्वीकर्तव्यमेव। अयमाशयः— एकत्र शृङ्गाररसव्यञ्जकत्वेन परिचितानां माल्यचन्दनादिशब्दानां प्रवाहपतितया शृङ्गारातिरिक्तस्थले तादृशरसव्यञ्जकत्वाभावेऽपि तेषां व्यञ्जकत्वशक्तेर्भूयसा दर्शनात् तदिधिष्ठितचारुत्वार्थं निर्दिष्टं सामर्थ्यं भवत्येव। अन्यथा= अतथाभावे, तुल्ये= समाने, वाचकत्वे= वाचकशक्तौ, शब्दानां, कः= विशेषः= अन्यव्यतिरिक्तः, चारुत्वविषयः= सौन्दर्यलक्ष्यं, स्यात्= समीवेदिति। यदि तथा नाम अभ्यासवशाच्छब्दानामव्यञ्जकत्वेऽपि चारुत्वप्रतीतिर्न स्यात्तदा समानेऽपि वाचकत्वे तेषां चारुत्वसम्बद्धौ विशेष एक कतमः स्यात्। यथा तट शब्दापेक्षया 'तटी' शब्दस्य प्रयोगः साधु मन्यते 'स्त्रीति नामैव पेशलं' इति कृत्वा। तेन 'तटी तारं ताम्यति' इत्यत्र तटीशब्दः अव्यञ्जकत्वेऽपि तथात्वेन परिचितत्वात्सौष्ठवामावहत्येवेति। यदि शब्दानां चारुत्वे व्यञ्जकत्वनिबन्धनमेव विशेषत्वेन अनूरीकृत्यं समानवाच–

कशब्दानां चारुत्वविषये यो विशेषः सः अन्यः= व्यञ्जकत्वसम्बद्धाद्भिन्नः, एव, असौ= विशेषः, सहृदयसंवेद्यः= सहृदयानुभाव्यः, इति कथ्यते चेत् इदं= तथाविधविशेषपरिचायकत्वेन सम्मतं, सहृदयत्वं, नाम, किम् ? किं, रसभावानपेक्षकाव्याश्रितसमयविशेषाभिज्ञत्वं= रसभावानपेक्षं रसभावव्यञ्जकत्वेन अविवक्षितं यत्काव्यं तस्मिन् आश्रितोऽवलम्बितो यः समयविशेषः= विलक्षणाचारस्तस्य अभिज्ञत्वमवबोद्धृत्यं, उत= इति विकल्पे, रसभावादिव्यञ्जकं यकाव्यं तस्य स्वरूपस्य ज्ञाने नैपुण्यं दाक्षिण्यं वेति। किं सहृदयत्वस्य रसभावादिज्ञानं हेतुरुत तदनपेक्षकाव्यज्ञानमेवेति। त, पूर्वस्मिन्= प्रथमे, पक्षे= मते, तथाविधसहृदयव्यवस्थापितानां= तथाविधाः रसभावानपेक्षकः ये सहृदयास्तैर्व्यवस्थापितानां प्रयुक्तानां, शब्दविशेषाणां, चारुत्वनियमः= सौन्दर्याचारः, न, स्यात्, तत्र, पुनः= भूयः, समयान्तरेण= अन्याचारेण, अन्यथाऽपि= तस्मादपि भिन्नत्वेन, व्यवस्थापनसम्भवात्= नियमनसम्भवात्। अनियमितेच्छापरवशः समयः नियमितः कथं नाम स्यादिति।

द्वितीयस्मिन्= अपरे, पक्षे, तु, रसज्ञता= रसभावप्रवीणता, एव, सहृदयत्वं= सहृदयस्य लक्षणमिति। तथानविधैः= तादृशैः रसभावप्रवीणैः सहृदयैः, संवेद्यः= अनुभाव्यः, शब्दानां, विशेषः, नैसर्गिकं= स्वाभाविकं, रसादिसमर्पणसामर्थ्यं= रसभावप्रकाशनशक्तिः, एव, इति= हेतोः, तेषां शब्दानां, मुख्यं= प्रधानं, चारुत्वं= लालित्यं, व्यञ्जकत्वाश्रयि= रसादिप्रकाशकत्वापेक्षि, एवेति। वाचकत्वाश्रयाणां= केवलं वाचकत्वमेवावलम्ब्यस्थितानां, तेषां= शब्दानां, तु, अर्थापेक्षायां= वाच्यापेक्षायां, प्रसादः= झगित्यर्थसमर्थकत्वं, एव, विशेषः अर्थानपेक्षायां= वाच्यार्थस्याप्युपेक्षायां, तु, अनुप्रासादिः= शब्दसाम्यलक्षणालङ्कारादिः, एवेति। अस्यायमाशयो यद्ये खलु शब्दाः व्यञ्जकत्वहीनास्तेषामपि चारुत्वं वाच्यार्थापेक्षापेक्षायां झगित्यर्थसमर्पकतैव तदनपेक्षायां तु अनुप्रासाद्यलङ्कारपर्यवसाय्येवेति।।१६।।

यदि व्यञ्जकत्वनिबन्धन ही शब्दों के चारुत्व में विशेष है तो जहाँ वैसा नहीं होता वहाँ उनकी चारुत्व प्रतीति कैसे होगी' इस आशंका के समाधान हेतु कहते हैं—

जहाँ भी उस समय व्यञ्जकत्व प्रतिभासित न हो वहाँ दूसरे प्रकार में भी व्यञ्जक शब्द के सन्निवेश में जो चारुत्व दिखाई पड़ता है वैसे प्रवाह से पड़े पृथक् रखे गए भी शब्दों के चारुत्व अभ्यासवश अवभास होना समझ लेना चाहिए। यदि ऐसा नहीं होता तो शब्दों के समानवाचकत्व में चारुत्व विषय किसी खाश शब्द का विशेष क्यों होता अथवा कौन सा विशेष होता। (जैसे कि तटवाचक शब्द तीनों लिङ्गों में है। जैसे तट तट तटी। उनमें से पुं तथा नपुंसक लिङ्ग की उपेक्षा कर 'तटी' अर्थात स्त्रीत्ववाचक शब्द का ही लेना 'स्त्री जो है नाम भी मधुर होता है' वाला कथन के चलते है। अर्थात तटी शब्द रस विशेष का व्यञ्ज़क एकाध जगह मान लेने से दूसरे

जगह जहाँ भी वह रस का व्यञ्जक नहीं है वहाँ भी उसके संस्कार के चलते चारुत्व का केन्द्र होता है। उसी तरह माल्य, चन्दन आदि शब्दों का भी जान लेना चाहिए।

उस तरह शब्दों के चारुत्व में जो विशेष है उसका कारण उसके कहीं एक जगह रस के व्यञ्जकत्व होने के संस्कार को न मानकर दूसरा ही अर्थात् सहृदयों की संवेद्यता को माना जाय तो यह प्रश्न उठता है कि यह सहृदयत्व है क्या ? क्या रस भाव में अनपेक्ष जो काव्य होता है उसमें आश्रित समयविशेष का ज्ञान होना ही सहृदयत्व है या उसके विपरीत रसभावादिमय जो काव्य होता है उसके स्वरूप के सम्यर्क ज्ञान की निपुणता ही सहृदयत्व है ? पहले पक्ष के मान लेने पर उस प्रकार के सहृदयों से व्यवस्थापित शब्द विशेष का चारुत्वनियम नहीं बन पाएगा। क्योंकि फिर दूसरे समय के चलते उसमें अन्यथा की भी व्यवस्था सम्भव होती है। क्योंकि उसका मानक तो कोई नहीं होता और अनियन्त्रित पुरुष की इच्छा में निर्भर समय कैसे नियत हो सकता है ? दूसरे पक्ष में तो रसज्ञता ही सहृदयत्व है। उस प्रकार के सहृदयों से संवेद्य, शब्दों के स्वाभाविक रसादि समर्पण सामर्थ्य जो है वही विशेष है जिसके चलते तत्काल व्यञ्जकत्व न होने पर भी औरों की अपेक्षा चारुत्व का अवभासन होता है। इस कारण उन शब्दों का मुख्य चारुत्व व्यञ्जकत्व में आश्रय वाला होता है।

रस में आश्रित न हाकर केवल वाचकत्व में ही आश्रित होने वाले शब्दों का अर्थ की अपेक्षा होने की स्थिति में प्रसाद अर्थात् अर्थ की प्रसन्नता ही शब्दों का विशेष है जिससे चारुत्व का अवभासन होता है। और जहाँ अर्थ की अपेक्षा नहीं है वहाँ तो अनुप्रास आदि ही उनके विशेष हैं जिसमें चारुत्व का अवभासन होता है।

कहने का आशय यह है कि रसभाव व्यञ्जक शब्दों का कहीं व्यञ्जकत्व न होने पर भी रसभाव के संस्कार से ही चारुत्व होता है और वाचकत्व में ही आश्रित शब्दों का अर्थ की अपेक्षा में अर्थ की प्रसन्नता से अर्थ की अनपेक्षा में अनुप्रास आदि से ही चारुत्व झलकता है।१६।।

ध्वन्या०— एवं रसादीनां व्यञ्जकस्वरूपमभिधाय तेषामेव विरोधिरूपं लक्षयितुमिदमुपक्रम्यते—

कारिका— प्रबन्धे मुक्तके वापि रसादीन् बन्धुमिच्छता।
यत्नः कार्यः समुतिना परिहारे विरोधिनाम्।। १७।।

प्रबन्धे मुक्तके वापि रसभावनिबन्धनं प्रत्याहतमना कविर्विरोध-परिहारे परं यत्नमादाधीत। अन्यथा त्वस्यरसमयः श्लोके एकोऽपि सम्यङ् सम्पद्यते।

लीला— इत्थं रसादीनां व्यञ्जकत्वमभिधाय तदुपघातकविरोधिस्वरू-पावधारणप्रयोजननिर्देशककारिकावतारणायोपक्रमते वृत्तिकारः एवमित्यादिना एवं= इत्थं, रसादीनां= रसभावादीनां, व्यञ्जकस्वरूपं= प्रकाशकलक्षणं, अभिधाय=

उक्त्वा, तेषां= रसादीनां, एव, विरोधिरूपं= परस्परवैरोध्येन स्वरूपोपघातकलक्षणं, लक्षयितुं= प्रवर्तयितुं, इदं= अपरं प्रकरणं, उपक्रम्यते= प्रारभ्यते। वस्तुतस्तु विरोधिनां लक्षणकरणे प्रयोजनमुच्यते शक्यहीनत्वं नामेति यतो लक्षणं तु अग्रिमकारिकयोपस्थापयिष्यमाणत्वात्।

कारिकामवतारयति प्रबन्ध इत्यादिना मुक्तके वा प्रबन्धे अपि रसादीन् बद्धुं इच्छता सुमतिना विरोधिनां परिहारे यत्नः कार्य इति पदव्यवस्था।

मुक्तके= क्रियासमाप्त्यर्थं वा अर्थपूर्णताऽर्थं परस्परनिरपेक्षपद्ये, वा, प्रबन्धे= परस्परसापेक्षवाक्यसमूहे, अपि, रसादीन्= रसभावादीन्, बद्धुं= सन्निवेशयितुं, इच्छता= कामनमानेन, सुमातिना= विशदबुद्धिना कविना, विरोधिनां= विरोधिरसानां, परिहारे= निराकरणे, यत्नः= प्रयत्नः, कार्यः= विधेय इति।

कारिकां व्याख्याति वृत्तिकत् प्रबन्ध इत्यादिना प्रबन्धे= सङ्घटितवाक्य-समुदाये, वा, मुक्तके पूर्वापरनिरपेक्षवाक्ये वा एकेनैव क्रियासमाप्तिलक्षणे वाक्ये, अपि, रसभावनिबन्धन= रसभावादिसन्निवेशनं, प्रति, आहतमनाः= संलग्नचित्तः, कविः= काव्यकृत्, विरोधिपरिहारे= विरोधिनां परिपन्थिनां रसानां परिहारे निराकरणे, परं= नितान्तं, यत्नं= आयासं, आदधीत= कुर्यादिति। तत्र तथाकरणे हेतुं निर्दिशति अन्यथेत्यादिना अन्यथा= अतथाभवने विरोधिरसानामपरिहारे, अस्य= कवेः, एकः, श्लोकः,= वाक्यं, अपि, सम्यक्= यथौचित्यं, रसमयः= रसाप्लावितः, न, सम्पद्यते= न जायते विरोधिनां रसादिसन्निवेशस्यैव व्याघातत्वात्।

इत्थमुक्तं भवति कविना यथा रसनिबन्धने यत्नः कार्यस्तदपेक्षया तद्विरोध-परिहाराय महत्तर आयासः कार्योऽतथाकरणे रसनिबन्धनमेव व्याहतं भवति विरोधिप्रभावेणेति।

इस प्रकार रस के व्यञ्जकत्व के विषय में बताकर अब रसों के परस्पर विरोध एवं उसके परिहार के निर्देशन करने वाली कारिका के अवतरण हेतु वृत्तिकार उसकी पूर्वयोजना बताते हैं—

इस प्रकार रसादि के व्यञ्जकत्व को बताकर अब उन्हीं का विरोधिरूप के लक्षण करने के लिए उपक्रम करते हैं—

कारिका का अवतारण करते हैं—

मुक्तक अथवा प्रबन्ध में रसादि के निबन्ध करने में इच्छुक अच्छी बुद्धिवाले कवि को चाहिए कि वह विरोधी रस के परिहार में भी उससे ज्यादा प्रयास करें।१७।।

कारिका का आशय वृत्तिकार विस्तार करते हैं—

मुक्तक अथवा प्रबन्ध में भी रसभाव आदि के निबन्धन के प्रति उत्सुक कवि विरोधि रस के परिहार में भी उतना ही यत्न करें। अन्यथा अर्थात् विरोधिरस के परिहार न होने से इसका एक भी श्लोक ठीक प्रकार से रसवान् नहीं बन पाएगा।

ध्वन्या०— कानि पुनस्तानि विरोधीनि यानि यत्नतः कवेः परिह-र्तव्यानीत्युच्यते—

कारिका— विरोधिरससम्बन्धिविभावादिपरिग्रहः।
विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम्।।१८।।
अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्।
परिपोषं गतस्यापि पौनःपुन्येन दीपनम्।।
रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च।। १९।।

लीला— पूर्वकारिकायां रसविरोधपरिहाराय यदुक्तं तद्विवेचककारिकावतारणाय वृत्तिकार उपक्रमते कानीत्यादिना-पुनः= इत्युपस्थापने, तानि= तादृशानि रसोपघातकानि, विरोधीनि= प्रतिकूलानि, यानि, कवेः, यत्नतः= आयासादपि, परिहर्तव्यानि= निराकरणीयानि, इति, उच्यते= कथ्यते।

कारिकामवतारयति विरोधीत्यादिना— विरोधिरससम्बन्धिविभावादिपरिग्रहः= विरोधिनः प्रतिकूलप्रकृतयो ये रसास्तेषां ये सम्बन्धिनः सम्बद्धाः विभावादयः आलम्बनोद्दीपनपोषकसहचारिभावादयस्तेषां परिग्रहः= संयोजनं, यथा शृङ्गारबीभत्सयोः स्वाभाविको विरोधः, तेन शृङ्गारे जुगुप्साकारणादिवर्णनं वा बीभत्से माल्यचन्दनादीनां, इति प्रथमं,

अन्वितस्य= प्रसङ्गायातस्य, अपि अन्यस्य= रसाद्यनुपस्कारकस्य, वस्तुनः= इतिवृत्तस्य, विस्तरेण= अनावश्यकविस्तीर्णरूपेण, वर्णनं= प्रकाशनं इति द्वितीयं,

अकाण्डे= असमये एव पूर्णपरिपाकात्प्रागेव, रसस्य, विच्छित्तिः= विच्छेदः, इति तृतीयं, अकाण्डे= अनवसरे, एव, रसस्य, प्रकाशनं= द्योतनमिति चतुर्थम्,

परिपोषं= सुपुष्टतां, गतस्य= प्राप्तस्य, अपि, रसस्य, पौनः पुन्येन= भूयोभूयः, दीपनं=उद्बोधनं, इति पञ्चमं।

तथा वृत्यमौचित्यं= वृतीनां शिष्टाचारादिव्यवहाराणां, कोमलातिवृत्तीनाञ्च अनौचित्यं रसाद्यनानुकूल्येन प्रयोगः इति षष्ठञ्च,

रसस्य= काव्यात्मभूतरसादिध्वनेः, वरोधाय= प्रतिकूलाय, स्याद्= भवेदिति।

अत्र च रसविषये आनुकूल्यप्रातिकूल्येऽधिकृत्य निम्नाङ्किता तालिका भवति। तत्र रसस्य।

### आनुकूल्यं यथा

(१) विभावभावानुभावसञ्चार्यौचित्यचारुणः। विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा। (२) इतिवृत्तवशायातां त्यक्त्वाऽननुगुणां स्थितिम्। (३) उत्प्रेक्षाऽप्यन्तराभीष्टरसोचितकथोन्नयः।। (४) उद्दीपनप्रशमने यथावसरमन्तरा (५) रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः— (६) अलंकृतीनां शक्तावप्यानुरूपयेण योजनम्।

प्रातिकूल्यं यथा—

(१) विरोधिरससम्बन्धिविभावादिपरिग्रहः (२) विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम्। (३) अकाण्डे च प्रकाशनम्। (४) आकण्डे एव विच्छित्तिः। (५) परिपोषं गतस्याऽपि पौनः पुन्येन दीपनम्। (६) वृत्यनौचित्यमेव च।

पूर्व कारिका में जो रस के विरोध के परिहार के लिए कहा गया था अब उसकी विवेचना करने वाली कारिका के अवतारण हेतु उपक्रम करते हैं—

तो फिर कौन-कौन वे विरोधी तत्त्व हैं जिनका कवि को यत्न पूर्वक परिहार करना चाहिए, इस आकांक्षा में कहा जाता है—

कारिका का अवतारण करते हैं—

विरोधी रस सम्बन्धी विभाव अनुभाव आदि का परिग्रह, अन्वित भी अनुपयोगी इतिवृत्त का विस्तार से वर्णन, रस का अनवसर में विच्छेद, रस का असमय में ही प्रकाशन, परिपुष्ट रस का फिर-फिर दीपन, और वृत्तिगत एवं व्यवहार सम्बन्धी अनौचित्य ये जो हैं रस के विरोध के लिए होते हैं।।

ध्वन्या०— प्रस्तुतरसापेक्षया विरोधी यो रसस्तस्य सम्बन्धिनां विभावभावानुभावानां परिग्रहो रसविरोधहेतुकः सम्भवनीयः। तत्र विरोधहेतुकः सम्भवनीयः। तत्र विरोधिरसविभावपरिग्रहो यथा शान्तरसविभावेषु तद्विभावतयैव निरूपितेष्वनन्तरमेव शृङ्गारादिविभाववर्णने। विरोधिरसभावपरिग्रहो यथा प्रियं प्रति प्रणयफलहकुपितासु कामिनीषु वैराग्यकथाभिरनुनये। विरोधिसानुभावपरिग्रहो यथा प्रणयकुपितायां प्रियायामप्रसीदन्त्यां नायकस्य कोपावेशविवशस्य रौद्रानुभाववर्णने।

लीला— कारिकार्थं विवृणोति वृत्तिकारः प्रस्तुतेत्यादिना प्रस्तुतरसापेक्षया= प्रकृतरसाकाङ्क्षया, विरोधी= प्रतिकूलप्रकृतिकः, यः, रसः, यथा शृङ्गारे प्रस्तूयमाने शान्तबीभत्सरौद्रभयानककरुणाः वीरश्च, एवमेव करुणे हास्यशृङ्गारौ, वीरे भयानकशान्तौ, शान्ते वीरशृङ्गाररौद्रहास्यभयानकाः, हास्ये भयानककरुणै, रौद्रे हास्यशृङ्गारभयानकाः भयानके शृङ्गाररौद्रहास्यशान्ताः इति, तादृशश्च विरोधआलम्बनैक्ये आश्रयैक्ये नैरन्तर्ये च भवति, तस्य, विभावभावानुभावानां= विभावः आलब्नमुद्दीपनञ्च, भावः अन्यापेक्षया स्थायिप्रकृतिको रत्यादिचित्तवृत्तिविशेषः अनुभावो भावोद्बोधनान्तरविकारो भावपोषकश्च तेषां परिग्रहः= आदानमुपयोगः रसविरोधहेतुकः रसप्रातिकूल्यकारणः, सम्भावनीयः= मन्तव्यः। तत्र, विरोधिरसाविभावपरिग्रहः= प्रतिकूलरसस्यालम्बनोद्दीपनादिग्रहणं, यथा-शान्तरसविभावेषु= निर्वेदस्थायिभावात्मकशान्तरसविभावादिशु रागादिषु, तद्विभावतया= तस्य शान्ताऽऽख्यरसस्य विभावतया आलम्बनोद्दीपनत्वेन, एव, निरूपितेषु= प्रसाधितेषु, अनन्तरं= सद्य, एव, शृङ्गारादिविभाववर्णने= रतिस्थायिभावात्मकशृङ्गाराख्यरसादि-

विभावानां प्रसङ्गे। अत्र शान्तशृङ्गारयोर्ग्रहणञ्च हास्यशृङ्गारयोर्वीराद्भूतयोः रौद्रकरुणयोः भयानकबीभत्सयोश्च नैवविभावाविरोध इति तात्पर्येण रतिरागयोरेव नितान्तविरोधात्। एवञ्च विरोधिरसभावपरिग्रहः= विरोधी प्रतिकूलप्रकृतिको यो रसस्तस्य भावस्य रत्यादेः परिग्रहः= उपयोगः, यथा प्रियं= दयितं, प्रति, प्रणयकलहकुपितासु= प्रणयार्थं प्रणयेन वा यः कलहो विवादस्तेन कुपितासु क्रोधितासु— कृत्रिमक्रोधितासु कामिनीषु= प्रमदासु, वैराग्यकथभिः= निर्वेदवार्ताभिः यथा मानं मा कुरु तन्वङ्गि ज्ञात्वा यौवनमस्थिरम्' इत्यादिभिः अनुनये= विनये। एवमेव, विरोधिरसानुभावपरिग्रहः= विरोधिनो रसस्य यः अनुभावस्तस्य परिग्रहः यथा प्रणयकुपितायां= कृतकक्रोधयुक्तायां, अप्रसीदन्त्यां= कथमपि प्रसादम-कुर्वन्त्यां, प्रियायां= प्रेयस्यां, कोपावेशचित्तस्य= क्रोधाभिभूतमनसः, नायकस्य= प्रियस्य, रौद्रानुभाववर्णने= रौद्ररसस्य येऽनुभावाः तर्जनप्रभृतयस्तेषां वर्णने।

अस्यायमाशयः— प्रकृतरसापेक्षया विरोधिनो रसस्य विभावस्य, भावस्य वा अनुभावस्य ग्रहस्तु रसविरोधस्य प्रथमो हेतुः। भाव इत्यत्र व्यभिचारिणी ग्रहणं स्थायिनस्तु तथा परिग्रहस्यासम्भवनीयत्वात् तदनुत्थानप्रसङ्गेन। अपरञ्च कथञ्चित्तदुत्थाने तु प्रकृतस्थायिन एव विच्छेदनात्। तत्र विभावस्य यथा शान्त-विभावे वर्णिते तदनन्तरमेव शृङ्गारादिविभाववर्णनम्। व्यभिचारिभावस्य यथा प्रणयकुपितां निवेदादिस्मारणेनानुनयः। अनुभावस्य यथा कथमपि प्रसादमकुर्वतीं प्रणयकुपितां प्रियां तर्जनादिरौद्रानुभावप्रयोगः इति।

वृत्तिकार कारिका के आशय का पल्लवन करते हैं—

प्रस्तुत रस की अपेक्षा से जो विरोधी अर्थात् प्रतिकूल प्रकृति का रस होता है (जैसे शृङ्गार का शान्त रौद्र आदि) उसके सम्बन्धी जो विभाव व्यभिचारी भाव एवं अनुभाव हैं उनका ग्रहण रस विरोध का हेतु बन जाता है। उनमें से विरोधी रस के विभाव का परिग्रह जैसे शान्त रस के विभाव जो हैं उसी के विभावत्व से ही निरूपित कर लेने के तुरन्त बाद शृङ्गार आदि के विभाव के वर्णन में।

विरोधी रस के भाव (व्यभिचारी भाव) का परिग्रह जैसे प्रियतम के ऊपर प्रणय से कुपित कामिनियों में वैराग्य (निर्वेद) आदि के प्रसङ्ग से अनुनय करने में।

विरोधी रस के अनुभाव का परिग्रह जैसे प्रणयकुपिता किन्तु किसी भी प्रकार से प्रसन्न न होने वाली प्रेयसी में कोप के वशीभूत नायक का रौद्ररस के अनुभाव के वर्णन में।

**ध्वन्या०— अयं चान्यो रसभङ्गहेतुर्यत्प्रस्तुतंरसापेक्षया वस्तुनोऽन्यस्य कथञ्चिदन्वितस्यापि विशेषेण कथनम्। यथा विप्रलम्भशृङ्गारे नायकस्य कस्यचिद्वर्णयितुमुपक्रान्ते कवेर्यमकाद्यलङ्कारनिबन्धनरसिकतया महता प्रबन्धेन पर्वतादिवर्णने।**

लीला— रसविरोधस्य द्वितीयं पक्षं विवृणोति अयमित्यादिना अयं= वक्ष्य-

माण:, च= अपि, अन्य:= अपर: रसभङ्गहेतु:= रसतिरोधानकारणं, यत्, प्रस्तुतर-सापेक्षया= प्रकृतरसदृष्ट्या, अन्यस्य= इतरस्य स्वाङ्गाद्भिन्नस्य कथञ्चिद्= येन केनाप्युपायेन, अन्वितस्य= प्रसङ्गसम्बन्द्धस्य, अपि, वस्तुन:= इतिवृत्तस्य, विस्त-रेण= अत्यन्तविस्तृत्या, कथनं= उपस्थापनम्। यथा विप्रलम्भशृङ्गारे प्रकृते रसे, कस्यचित्, नायकस्य, वर्णितुं, उपक्रान्ते= प्रारब्धे, कवे:, यमकाद्यलङ्कारर-सिकतया= यमकप्रभृत्यलङ्कारनिबन्धनपरायणतया, महता= सुविस्तृतेन, प्रबन्धेन, पर्वतादिवर्णने= पर्वतस्य साङ्गोपाङ्गोपस्थापने।

यह है दूसरा रसभङ्ग अर्थात् रसविरोध का कारण जो कि प्रस्तुत रस की अपेक्षा किसी तरह जुड़ा हुआ भी दूसरे वस्तु का विस्तार पूर्वक वर्णन। जैसे विप्रलम्भ शृङ्गार में किसी नायक के वर्णन के प्रारम्भ होने पर कवि का यमक आदि अलङ्कारों के निबन्धन में ज्यादा रुचि होने से लम्बे प्रबन्ध से पर्वत आदि के वर्णन में।

ध्वन्या०— अयं चापरो रसभङ्गहेतुरवगन्तव्यो यदकाण्डा एव विच्छित्ति: रसस्याकाण्ड एव च प्रकाशनम्। तत्रानवसरे विरामो रसस्य यथा नायकस्य कस्यचित्स्पृहणीयसमागमया नायिकया कयाचित् परां परिपोषपदवी प्राप्ते शृङ्गारे विदिते च परस्परानुरागे समागमोपायचिन्तोचितं व्यवहारमृत्सृज्य स्वतन्त्रतया व्यापारान्तरवर्णने। अनवसरे च प्रकाशनं रसस्य यथा प्रवृत्तविविधवीरसङ्क्षये कल्पसङ्क्षयकल्पे सङ्ग्रामे रामदेव-प्रायस्यापि तावन्नायकस्यानुपक्रान्तविप्रलम्भशृङ्गारस्य निमित्तमुचितमन्तरेणैव शृङ्गारकथायामवतारवर्णने। न चैवंविधे विषये द्रवव्यामोहितत्व कथापुरुषस्य परिहारो यतो रसबन्ध एव कवे: प्राधान्येन प्रवृत्तिनिबन्धं युक्तम्। इतिवृ-त्तवर्णनं तदुपाय एवेत्युक्तं प्राक्- 'आलोकार्थी यथा दीपशिखायां यत्नवान् जन:' इत्यादिना।

लीला— राविरोधस्य तृतीयचतुर्थपक्षौ विवृणोति अयमित्यादिना अयं= उपस्थाप्यमान:, च= अपि, अपर:= इतर:, रसभङ्गहेतु:= रसविच्छेदकारणं, अवग-न्तव्य:= ज्ञातव्य:, यद्, रसस्य= अङ्गिनो वा अङ्गभूतस्याऽपि, रसस्य, अकाण्डे= अनवसरे, एव, विच्छत्ति:= विच्छेद: प्रशमनं, अकाण्डे= अनवसरे, एव, प्रकाशनं= दीपनं, च। तत्र प्रथममुदाहरति तत्रेत्यादिना तत्र= तयो: पक्षयो:, रसस्य, अनवसरे असमये, विराम:= प्रशमनं, यथा कस्यचित्, नायकस्य= कथानेतु: कयाचित्, स्पृहणीयसमागमया= वाञ्छनीयसङ्गमयनायिकया= कथानेत्र्य: परिपोषपदवी= परकाष्ठां, प्राप्तं= अधिरूढे, शृङ्गारो= अयोगशृङ्गारे वा पूर्णरागशृङ्गारे, परस्परानुरागे= अन्योन्यस्नेहे, विदिते= ज्ञाते च, समानगमोपायचिन्तोचितं= समागमस्य मिलनस्य उपायस्योपगमस्य चिन्ता ध्यानं विचारस्तस्योचितं योग्यं, व्यवहारं= करणीयं, उत्सृज्य= त्यक्त्वा उपेक्ष्य। स्वतन्त्रतया= तदसम्बद्धत्वेन पृथगेव, व्यापारान्तर-

वर्णने= अन्यक्रियोपस्थापने। तदुदाहृतं यथा लोचने यथा रत्नावल्यां चतुर्थेऽङ्के विदिते रत्नावल्युदयनयोः परस्परानुरागे तदुपेक्ष्यैव रत्नावलीनामाप्यगृहणतो विजयवर्मवृत्तान्तवर्णने, एतादृशेन वस्तुना दर्शकेषु सुसमुद्भूतो रसो विच्छिन्नतां यातीत्यस्याशयः।

तथैव, अनवसरे= अकाण्डे, एव, रसस्य, प्रकाशनं= दीपनं, यथा, प्रवृत्त विविधवीरसङ्क्षये= प्रवृत्तः समुपक्रान्तः विविधानामनेकेषां वीराणां योद्धृणां सङ्क्षयो विनाशो यस्मिन् तादृशे, कलपसङ्क्षयकल्पे= कल्पान्तसदृशे, संग्रामे युद्धे, रामदेवप्रायस्य= रामसदृशधीरोदात्तप्रकृतिकस्य, अनुपक्रान्तविप्रलम्भ-शृङ्गारस्य= अनुपक्रान्तोऽनारब्धः विप्रलम्भशृङ्गारो वियोगशृङ्गारो यस्य तस्य, नायकस्य, उचितं= उपयुक्तं, निमित्तं= कारणं, अन्तरेण= विना, एव, शृङ्गारकथायां= शृङ्गारानुकूलवृत्तमध्ये, तावत्, अवतारवर्णने= अवतारकथासमावेशने। यथा वेणी-संहारे दुर्योधनस्य द्वितीयेऽङ्के भानुमत्या सहेतयुदाहरणं लोचने। तत्र प्रतिमुखसन्ध्-यङ्गविन्यासायैव तत्प्रसङ्गो न रसप्रकर्षायेति।

एवंविधे= एतादृशे, विषये= लक्ष्ये, कथापुरुषस्य= नायकस्य, दैवव्यामो-हितत्वं= दुर्भाग्योपहतबुद्धित्वं, न= नैव, परिहारः= दोषमुक्तिः अतथाभवने कारणं निर्दिशति यतः= यस्मात्, रसबन्धे= रससिद्धौ, एव= इति व्यवच्छेदे न तु कथाबन्धः, प्राधान्येन= मुख्यतया, प्रवृत्तिनिबन्धनं= प्रवर्तनव्यापारः, युक्त= अनुरूपं भवति। तथा सति किमितिवृत्तं निरर्थकमित्याशङ्कापरिहारायाह इतिवृत्तवर्णनं= कथाबन्धः, तु, तदुपायः= तस्य रससिद्धेः, उपायः साधनं, एव= इत्यवधारणे न तु प्रयोजनं, इति, प्राक्= पूर्वमेव 'आलोकार्थी= प्रकाशेप्सुः, जनः, यथा दीपशिखायां= वर्तिकाप्रज्वालने, यत्नवान्= सायासः, भवति, इत्यादिना= इत्यादिकथनेन, उक्तं= प्रतिपादितं, एवेति। यथा जनः, प्रकाशननिमित्तमेव दीपं प्रज्वालयति न तु दीपार्थमेव तथैव कथा तु रससिद्धये बन्ध्यते न तु कथाप्रसङ्गनिर्वाहायेत्याशयः।

रसविच्छेद के तृतीय एवं चतुर्थ घटक का विश्लेषण करते हैं— इसको भी रसभङ्ग का और हेतु समझना चाहिए जो रस का अनवसर में ही विच्छेद होता है और अनवसर में ही उसका दीपन भी किया जाता है।

उनमें से रस का अनवसर में विराम जैसे किसी नायक का समागम के लिए कमनीय किसी नायिका से शृङ्गार रस के परिपोषण की स्थिति में पहुँचने पर भी और उन दोनों के परस्पर के अनुराग के प्रकट होने पर भी उन दोनों के समागम के उपाय के विचार के अनुकूल व्यवहार को छोड़कर स्वतन्त्र रूप से दूसरे ही व्यापार के वर्णन में। जैसे रत्नावली में सागरिका की बातें एवं और रखकर विजयवर्मा के वृत्तान्त के सन्निवेश में।

रस का अनवसर में ही प्रकाशन जैसे प्रवृत्त है अनेक वीरों का नाश जिसमें ऐसे कल्पान्त तुल्य संग्राम के प्रवृत्त होने पर राम जैसे धीरोदात्त प्रकृति के भी

जिसका ऊँची विप्रलम्भ शृङ्गार का प्रारम्भ ही नहीं हुआ है वैसे नायक की विना उचित निमित्त के ही शृङ्गार का कथा में अवतार (कथान्तर) के वर्णन में जैसे कि वेणी संहार से दुर्योधन आदि का।

इस प्रकार के विषय मे दैव अर्थात् दुर्भाग्य से मोहित होना जो कथापुरुष के लिए एक दोष का परिहार है, उसको अपनाना ठीक नहीं है, क्योंकि कवि का मुख्य प्रवृत्तिनिबन्धन तो रसबन्ध ही होना ठीक है न कि घटनाक्रम। इतिवृत्त का वर्णन तो रसबन्ध का एक मार्ग ही है। यह पहले भी कहा जा चुका है 'प्रकाश को चाहने वाला व्यक्ति जैसे दीपशिखा में यत्न करने वाला होता है' इत्यादि से। अर्थात् बत्ती जलाने का अर्थ है प्रकाश उसी तरह कथा का निबन्धन का अर्थ है रससिद्धि न कि कथा का निर्वाह।

ध्वन्या०— अत एव चेतिवृत्तमात्रवर्णनप्राधान्येऽङ्गाङ्गिभावरहितरस-भावनिबन्धेन च कवीनामेवंविधानि स्खलितानि भवन्तीति रसादिरूपव्य-ङ्ग्यतात्पर्यमेवैषां युक्तमिति यत्नोऽस्माभिरारब्धो न ध्वनिप्रतिपादनमात्रा-भिनिवेशेन।

लीला— रसबन्धे निर्देशस्य प्रयोजनं निर्दिशति अत इत्यादिना अतः एव= अनेनैव हेतुना, च= अपि, इतिवृत्तमात्रवर्णनप्राधान्ये= इतिवृत्तमात्रस्य कथामात्रस्य वर्णनस्य प्राधान्यं मुख्यत्वं, तस्मिन्, अङ्गाङ्गिभावरहितसभावनिबन्धनेन= अङ्गमुप-स्कारकं अङ्गी प्रधानभूतः यो रसभावादिस्तस्य निबन्धनेन गुम्फनेन, च, कवीनां, एवंविधानि= ईदृशानि स्खलितानि= त्रुटितानि, भवन्ति= जायन्त इति= हेतो, एषां= कवीनां, रसादिरूपव्यङ्ग्यतात्पर्यं= रसभावादिरूपो यो व्यङ्ग्यः प्रतीयमानार्थः स एवं तात्पर्य प्रयोजनं, युक्तं= उपयुक्तं, इति, अस्माभिः= ध्वनिकारैः, यत्नः= आयासः, आरब्धः= उपक्रान्तः, न, तु, ध्वनिप्रतिपादनमात्राभिनिवेशेन= ध्वनेः प्रतिपादनं साधन तदेव अभिनिवेशः आग्रहस्तेनेति।

रसबन्ध एव कवेर्मुख्यव्यापारः। तस्मिन्निति वृत्तवर्णनैकतानत्वे सति यदवि-चारितगुणप्रधानभावानां रसभावादीनां निबन्धनं सर्वे दोषास्तन्मूला इति तत्परिहारा-यायमायासः व्यङ्ग्यार्थोऽपि तत्पर एव। कामं तद् व्यर्थकार्यमेव स्यात्किन्तु कविना रसादिव्यङ्ग्यतात्पर्यैकतानेन भाव्यमित्यस्माकमभिमतमिति।

इस हेतु ही कथावस्तु के निर्वाह मात्र की प्रधानता होने पर रसभावादि का अङ्ग एवं अङ्गी भाव के विना तय किए ही यद्वा तद्वा निबन्धन होने से कवियों की इस प्रकार की त्रुटियाँ हो सकती हैं, अतः उनको उनका रसादिरूप व्यङ्ग्य के प्रति तात्पर्य वाले होना ठीक पड़ता है। यही कहने हमने यह प्रयास शुरू किया है न कि ध्वनि प्रतिपादन मात्र के आग्रह से।

ध्वनि चाहे हो न हो उसमें कोई आग्रह नहीं है, आग्रह तो इस बात पर है कि कवि को रसभावादि व्यङ्ग्य के तात्पर्य के प्रति सजग होकर काव्य की रचना करनी चाहिए। यह हमें अभिप्रेत है।

ध्वन्या०— पुनश्चायमन्यो रसभङ्गहेतुरवधारणीयो यत्परिपोषङ्गतस्यापि रसस्य पौनःपुन्येन दीपनम्। उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृश्यमाणः परिम्लानकुसुमकल्पः कल्पते।

लीला— रसविरोधस्य पञ्चमं घटकं विवृणोति पुनरित्यादिना पुनश्च= पक्षान्तरे, अयं= उच्यमानः, अन्यः= अपरः, रसभङ्गहतुः= रसविच्छेदकारणं, अवधारणीयः= निश्चेयः यद्, परिपोषं= परां पुष्टिं, गतस्य= प्राप्तस्य, अपि, रसस्य, पौनःपुन्येन= भूयोभूयः, दीपनं= प्रकाशनं विशेषत उद्दीपनमिति। तत्र हेतुमाह उपभुक्त इत्यादिना स्वसामग्रीलब्धपरिपोषः= स्वविभावादिसाधितपूर्ण-पुष्टिः, उपभुक्तः= आस्वादितः, रसः, पुनः पुनः= मुहुर्मुहुः, परामृश्यमाणः= निबन्ध्यमानः, परिम्लानकुसुमकल्पः= मलिनकान्तिपुष्पतुल्यः आस्वादरहितः, कल्पते= सम्पद्यते। यथा रतिविलापे मुहुर्मुहुः करुणरसस्योद्दीपनमिति दीधितौ।

अस्यायमाशयो यत्सकृदुपभुक्तः पूर्णपरिपुष्टो रसस्तत्रैव पुनरुद्दीपिते अवशीर्णपुष्पवन्नैवास्वादाय भवति। प्रकरणान्तरावृते तु न दोष इति।

रस विरोध के पाँचवाँ घटक को बताते हैं-

फिर यह दूसरा ही रस विच्छेद का हेतु समझ लेना चाहिए जो परिपोष को प्राप्त रस का फिर-फिर उद्दीपन किया जाता है। एक बार आस्वादित अपनी सामग्रियों से पूर्ण परिपोष को प्राप्त हुआ रस फिर-फिर परामृष्ट किए जाने से मुरझाए हुए फूल की तरह आस्वाद हीन हो जाएगा। जैसे मुरझाए हुए फूल में कोई रस नहीं होता वैसे ही परिपुष्ट होने पर भी फिर-फिर जगाए गए रस में कोई आकर्षण नहीं रहता।

ध्वन्या०— तथा वृतेर्व्यवहारस्य यदनौचित्यं तदपि रसभङ्गहेतुरेव। यथा नायकं प्रति नायिकायाः कस्याश्चिदुचिता भङ्गिमन्तरेण स्वयं सम्भोगा-भिलाषकथने। यदि वा वृत्तीनां भरतप्रसिद्धानां कैशिक्यादीनां काव्यालङ्का-रान्तरप्रसिद्धानामुपनागरिकाद्यानां व यदनौचित्यमविषये निबन्धनं तदपि रसभङ्गहेतुः। एवमेषां रसविरोधिनामन्येषां चानया दिशा स्वयमुत्प्रेक्षितानां परिहारे सत्कविभिरवहितैर्भवितव्यम्।

लीला— रसविच्छेदे षष्ठं घटकं विवृणोति तथेत्यादिना तथा= एवमेव, वृत्तेः= वृत्तिर्वर्तनं समुचितशिष्टाचारः कोमलादिसङ्घटनाविशेषश्च, तस्याः यत्= यादृशं, अनौचित्यं= अनुपयुक्तत्वं, तद्= तादृशं, अपि, रसभङ्गहेतुः= रसविच्छेद-कारणं, एवेति। यथा नायकं, प्रति, कस्याश्चित्, नायिकायाः, उचितां, समुपयुक्तां, भङ्गी= व्याजं, अन्तरेण= बिनैव, संकेताद्युपायं विनैव स्वयं= प्रत्यक्षतः, सम्भोगा-भिलाषकथने= व्यवायेच्छाप्रकटने। काव्ये नायकयोः शिष्टाचारो निर्दिष्टः। ताभ्यां धीरोदात्तादिप्रकृतिष्वन्यतमयुक्ताभ्यां भाव्यमिति। यदि तदुल्लङ्घ्य काचिन्नायिका

व्यवायधृतप्राणा वारवनितावन्नायकं तदर्थमाह्वति तत्र जुगुप्सोदयाद्रतेरवान्तर्भावः किमुत विभावादीनाम्। यदि वा= पक्षान्तरे, वृत्तीनां भाव्यवृत्तीनां, भरतप्रसिद्धानां= भरप्रणीतशास्त्रख्यातानां, केशिक्यादीनां= कौशिकीप्रभृतीनां वो= अथवा काव्यालङ्कारान्तरप्रसिद्धानां= काव्यालङ्कारग्रन्थे उद्भटप्रणीते ख्यातानां, उपनागरिकादीनां= उपनागरिकापरुषाकोमलादीनां, यद्= यदेव, अनौचित्यं= अविषये= स्वतेतरवर्णमादाय, निबन्धनं= गन्थनं, तदपि, रसभङ्गहेतुः= रसविच्छेदकारणमिति। यस्या यादृशं सङ्घटनमुक्तं तस्यास्मतादृशमेवौचित्यं रसप्रकाशकं भवति यथा ओजः प्रकाशकैर्वर्णैः परुषा सा च वीररौद्रादिप्रकाशिका, तथैव माधुर्यव्यञ्जकैर्वर्णैरुपनागरिका सा च शृङ्गारकरुणशान्तादिष्वभीष्टा, द्वयोः शेशैर्वर्णैः कोमला सा च हास्यभयानकादिष्वभीष्टा तद्भिन्नवृत्तित्वमेव तासामनौचित्यमिति।

अत्र वृत्तिमुद्दिश्य किञ्चिदुच्यते व्युत्पत्तये। तत्र वृत्तिर्नाम वर्तनं सा चात्र गुणहेतुको वर्णविन्यासविशेष। एव सा च त्रिधा उपनागरिकापरुषाकोमलाभेदात्। केषाञ्चिन्मते विशेषतो वामनस्य मधुरापि। एता एव प्रकारान्तरेण वैदर्भी गौडी–पाञ्चालीभेदाद्रीतयोऽप्युच्यते। केषाञ्चिन्मते लाट्यपि। भरतमुनिस्ता एव अवस्थाविशेषेण संयोज्य कैशिकी आरभटी–सात्वतीभारतीभेदान्निर्दिशति। अथ तत्र–तत्र प्रतिपादितानि तल्लक्षणान्यत्रोद्ध्रियन्ते तुलनात्मकाध्ययनाय।

| वृत्तिलक्षणं भरतसम्मतं | वृत्तिलक्षणमुद्भटादिसम्मतं |
|---|---|
| १. सात्त्वती– | १. उपनागरिका– |
| या सत्वजेनेह गुणेन युक्ता<br>न्यायेन वृत्तेन समन्विता च। | सरूपसंयोगयुतां<br>मूर्ध्निवर्गान्त्य योगिभिः<br>स्पर्शयुताञ्च मन्यन्ते<br>उपनागरिका बुधाः।<br>माधुर्यव्यञ्जकैर्वणैरूपनागरि–<br>केष्यते। |
| २. आरभटी– | २. परुषा– |
| या चित्तयुद्धभ्रमशस्त्रपातमायेन्द्र<br>जालप्लुतिलङ्घिताढ्या। ओज–<br>स्विगुर्वक्षरबन्धगाढा ज्ञेया बुधैः<br>साऽरभटीति वृत्तिः। | शषाभ्यां रेफसंयोगै ष्टवर्गेण<br>च योजिता। परुषा नाम वृत्ति<br>स्याद् ह्वह्वह्याद्यैश्च संयुता। |
| ३. कैशिकः– | ३. कोमला– |
| याश्लक्ष्णनेपथ्यविधानचित्रा<br>स्त्रीसङ्कुला पुष्कलनृत्यगीता।<br>कामोपभोगप्रभवोपचारा<br>सा कैशिकी चारु विलासयुक्ता।। | शेषैर्वर्णैर्यथायोगं<br>कथितां कोमलाख्यया।<br>ग्राम्यां वृत्तिं प्रशंसन्ति<br>काव्येष्वाहतबुद्धयः। |

| ४. मधुरा— | ४. भारती— |
|---|---|
| मधुरा ललितात्मिका | लाटी— या वाक्यप्रधाना |
| पुरुषप्रयोज्या | लाटीया सस्फुटसन्दर्भा |
| स्त्रीवर्जिता संस्कृतवाक्ययुक्ता। | नातिविस्फुटविग्रहा। |
| स्वनामधेयैर्भरतैः प्रयुक्ता | ओजः प्रकाशकैस्तैस्तु |
| सा भारती नाम भवेत्तु वृत्तिः। | परुषा कोमला परैः। |
| वैदर्भी— | पाञ्चाली— |
| उपचारैर्नबहुभि—रुपचारैर्विवर्जिता | उपचारयुता मृद्वी |
| नातिकोमलासन्दर्भा, वैदर्भी मुक्तविग्रहा। | पाञ्चाली ह्रस्वविग्रहा |
| | गौडी— |
| | अनवसथितसन्दर्भा |
| | गौडी या दीर्घविग्रहा। |

अनेनैतद् दृश्यते यद् सात्त्वत्युपनागरिकावैदर्भीणां आरभटबीपरुषागौडीनां कैशिकीकोमलापाञ्चालीनां भारतीमधुरालोटीनाच्च सङ्घटनैक्यमिति।

अत्रेदमधेयं यद्रसविच्छेदेनैतावन्मात्रहेतुः। सम्भवन्त्यन्येऽपि एतादृशा येषामत्रोल्लेखो न सम्भवः। अयं तु विषये सामान्यो दिशाबोध एव। कविभिरेतदालोच्य स्वयं च तानुत्प्रेक्ष्य तेषां परिहारे सुयत्नः कार्य इति।

प्रकरणमुपसंहरति एवमित्यादिना एवं= इत्थं, एषां= पूर्वोक्तानां, रसविरोधिनां= रसप्रतिकूलप्रकृतीनां, अनया= एतसा, दिशा= प्रकारेण, स्वयं= आत्मनैव, उत्प्रेक्षितानां= उन्नीतानां च अन्येषां= एतादृशप्रकृतिकानमपरेषां, परिहारे= निराकरणे, सत्कविभिः= सिद्धहस्तकाव्यकारैः, अवहितैः सावधानैः, भवितव्यमिति।

रसविच्छेद के छठवें घटक का विश्लेषण करते हैं—

इसी तरह वृत्ति अर्थात् व्यवहार—शिष्टाचार आदि का जो अनौचित्य पात्र की प्रकृति के अनुसार का आचरण न होना, है, वह भी रसविच्छेद का कारण होता है। जैसे नायक के प्रति किसी नायिका का उपयुक्त भङ्गिमा, सङ्केत आदि के सहारे न होकर सीधे स्वयं ही सम्भोग की इच्छा का व्यक्त करना या उसके स्पष्ट शब्दों में बुलाना। नियत तो यह है कि स्त्री पहले अनुरक्त हो और उसके बाद पुरुष उसकी चेष्टाओं से। चेष्टा के बदले जहाँ सीधे शब्दों का प्रयोग हो तो वह रति के बदले जुगुप्सा का क्षेत्र बन जाता है। दूसरी बात यह भी है कि पुरुष को ही पहले सम्भोग का प्रस्ताव रखना चाहिए। स्त्री को उसे मधुर इनकार करना चाहिए। नकार ही स्त्रियों के मुख का अलङ्कार है। उसके बदले स्वयं वैसा प्रस्ताव रखना रस के विपरीत है।

अथवा वृत्तियों का जो भरत आदि के प्रणीत शास्त्रों में चर्चित कैशिकी आदि है वा काव्यालङ्कारस्तरसङ्ग्रह में उद्भट आदि से उल्लिखित उपनागरिका, कोमला, परुषा आदि है उनका अनौचिय अर्थात् अपने विषय से बाहर का निबन्धन भी

रसविच्छेद में कारण होते हैं। नियत यह है कि माधुर्यव्यञ्जक वर्णों से उपनागरिका का उससे भिन्न वर्णों से परुषा का सङ्घटन होना चाहिए। उसके विपरीत गठन रास के विच्छेद का हेतु होता है।

प्रकरण का उपसंहार करते हैं—

इस प्रकार इन रस के विरोधी घटकों का और इसी प्रकार से अपने से भी उत्प्रेक्षित अन्य रसविच्छेदक घटकों का भी परिहार करने में सिद्धहस्त कवियों को सदा सावधान रहना चाहिए।

रसविच्छेदक हेतु इतने ही नहीं, और भी हो सकते हैं। उन सबका यहाँ उल्लेख करना सम्भव नहीं है। यह तो एक दिशाबोध मात्र है और इससे दिशाबोध लेकर कवियों को स्वयं भी ऐसे घटकों का अन्वेषण कर रचना में उनका परिहार करना चाहिए।

ध्वन्या०— परिकरश्लोकाश्चात्र—

मुख्या व्यापारविषयाः सुकवीनां रसादयः।
तेषां निबन्धने भाव्यं तैः सदैवप्रमादिभिः।।
नीरसस्तु प्रबन्धोः यः सोऽपशब्दो महान् कवेः।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः।।
पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः।
तान् समाश्रित्य न त्याज्या नीतिरेषा मनीषिणा।।
वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः।
तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः।। इति।

लीला— पूर्वोक्ततथ्यदार्ढ्याय तत्समर्थकानवन्तरश्लोकान् सनिवेशयितुमुपक्रमते परिकरेत्यादिना अत्र= अस्मिन् विषये, परिकरश्लोकाः= अवान्तरपद्यानि, भवन्तीति शेषः।

तान् क्रमेणोपस्थापयति मुख्येत्यादिश्लोकचतुष्टयेन मुख्या इत्यादि सुकवीनां मुख्याः व्यापारविषया रसादयः (एव तेन) तैः तेषां निबन्धने सदैव अप्रमादिभिः भाव्यमिति पदव्यवस्था।

सुकवीनां= सिद्धहस्तकाव्यकाराणां, मुख्याः= प्रधानत्वेन विवक्षिताः, व्यापारविषयाः= व्यवहरणलक्ष्याणि, रसादयः= रसभावादय एव न तु कथा प्रबन्धनमेव, तेन तेषां= रसाणां, निबन्धने= संयोजने, गुम्फने, तैः= कविभिः सदैवं= नियमेव, अप्रमादिभिः= सावधानैः, भाव्यमिति।

प्रमादे दोषं निर्दिशति नीरस इत्यादिना यः नीरसः प्रबन्धः सः कवेः महान् अपशब्दः, तेन स अन्येन अस्मृतलक्षणः अकविः एव स्याद् इति पदव्यवस्था।

यस्तु, नीरसः= रसभावाभिव्यक्तिहीनः, प्रबन्धः= रचना, सः, कवेः= काव्यकर्तुः, महान्= दुर्निवारः, अपशब्दः= अयशः तज्जनकत्वेनात्र साध्यवसाना

लक्षणा, तेन= तादृशदुर्यशोजनकप्रबन्धेन, सः= कविः, अन्येन= स्वपश्चाद्भाविना केनापि, अस्मृतलक्षणः= अगृहीतनामधेयः, अकविः= अप्रशस्तकविः, एव= इति व्यवच्छेदे न तु सुगृहीतनामा, स्याद् भवदिति।

पूर्वैरपि रसप्रातिकूल्येन रचना कृत ख्यातिञ्चोपगता इति किमर्थमस्मान्निवार्यत इत्याशङ्कायामाह पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः इति तान् समाश्रित्य मनीषिणा एषा नीतिः न त्याज्या इति पदव्यवस्था।

पूर्वे= प्राचीनाः कालिदासश्रीहर्षभट्टनारायणादयः, विशृङ्खलगिरः= विन्यासनियमाप्रतिबद्धाः यथा कालिदासेन परिपोषं गतस्यापि करुणस्य रतिविलापे पुनः पुनः पोषणं कृतं, श्रीहर्षेण रसमन्तरा विजयवर्मवृत्तान्तो वलात्समुपन्यस्तः, भट्टनारायणेन युद्धान्तरे विलासप्रतिसन्ध्यङ्गमन्तः प्रवेशतमिति कवयः= काव्यकाराः, अपि, प्राप्तकीर्तयः= लधप्रतिष्ठा एव अभूवन्निति, तान्= तादृशानपि प्रतिभातिरेकोन्मीलितदोषान् समाश्रित्य= आधृत्य, मनीषिणा= विचक्षणेन, एषा= रसविरोधपरिहाररूपा नीतिः= मार्गः, न, त्याज्या= नोपेक्षणीया इति। तेषां तु किञ्चित् स्खलितमपि गुणसन्निपाते निमग्नं किन्तु सर्वेषां न तथा सम्भवति। इति।

तर्हि यद्भवतोक्तं किं तदपि प्राचीनमित्याकाङ्क्षायामाह वाल्मीकोत्यादिना ये वाल्मीकिव्यासमुख्याः प्रख्याताः कवीश्वराः अयं नयः तदभिप्रायग्राह्यः अस्माभिः न दर्शित इति पदव्यवस्था।

ये, वाल्मीकिव्यासमुख्याः= वाल्मीकिव्यासप्रधानाः, प्रख्याताः= सुगृहीतनामधेयाः, कवीश्वराः= काव्यकारमूर्द्धन्याः आसन्, अयं= एषः, नयः= कविना रसभावादिव्यङ्ग्यतात्पर्येण भाव्यमिति मार्गः, तदभिप्रायग्राह्यः= तेषां वाल्मीकिप्रभृतीनामभिप्रायेणाशयेन ग्राह्यः स्वीकार्यः, अस्ति, अस्माभिः नैव दर्शितः इति।

इति= इति परिकरश्लोकसमाप्तौ।

एतेषामयमाशयः— कवीनां रसादय एव प्राधान्येन व्यापारविषया इतिवृत्तं तु तत्साधकमेव। नीरसप्रबन्धस्तु अकवित्वायैव भवति पूर्वेषां सिद्धानां दोषान्समाश्रित्य तथा न कर्तव्यं तेषां तु उपरिचरितानामचिन्त्यहेतुकत्वात्। अत्र यदुक्तं तद्वाल्मीकिप्रभृतिकवीन्द्रसम्मतमेवोक्तं न तु नवीनमिति च तेषां ग्राह्यत्वम्। अतः कविना रसनिबन्धने प्रमादो नैव कर्तव्यं इति।। १९।।

उक्त मत के समर्थन में परिकर श्लोकों का उद्धरण करते हैं—

इस विषय में परिकरश्लोक होते हैं—

रसादि ही कवि के व्यापारर के मुख्य विषय होता है और उसके निबन्धन में कवि को जरा-सा भी प्रमाद करना नहीं चाहिए। क्योंकि—

नीरस प्रबन्ध कवि का महान् दुर्यश है उससे वह दूसरे से नाम तक याद न किया गया अकवि होता है,

प्राचीन कवि यत्र कुत्र ऐसी त्रुटि करके भी प्रसिद्ध हुए हैं कह कर उनके आश्रय

से विद्वान् को यह नीति (मार्ग) त्यागना नहीं चाहिए। क्योंकि ये तो सिद्ध थे और गुण के समूह में एकाध दोष दब भी जाता है, लेकिन सब के साथ ऐसा नहीं होता।

यह मार्ग वाल्मीकि व्यास आदि प्रख्यात कवीश्वर हुए हैं उनके ही आशय से ग्राह्य है, हमारा दिखाया हुआ नहीं है।। १९।।

इति परिकरश्लोक समाप्त हुए।

कारिका— विवक्षिते रसे लघप्रतिष्ठे तु विरोधिनाम्।
बाध्यानामङ्गभाव प्राप्तानामुक्तिरच्छला।। २०।।

ध्वन्या०— स्वसामग्र्या लब्धपरिपोषे तु विवक्षिते रसे विरोधिनां विरोधिरसङ्गानां बाध्यानामङ्गभावं वा प्राप्तानां सतामुक्तिरदोषा।

बाध्यत्वं हि विरोधिनां शक्याभिभवत्ये सति नान्यथा। तथा च तेषां युक्तिः प्रस्तुतरसपरिपोषायैव सम्पद्यते। अङ्गभावं प्राप्तानां च तेषां विरोधित्वमेव निवर्तते।

अङ्गभावप्राप्तिर्हि तेषां स्वाभाविको समारोपकृता वा।

लीला— इत्थं रसविरोधपरिहारं सामान्येनोक्त्वा निषिद्धस्य पुनः सम्भावनां निर्दिशति कारिकाकारः विवक्षित इत्यादिना विवक्षिते रसे लब्धप्रतिष्ठे, तु, बाध्यानां अङ्गभावं वा प्राप्तानां विरोधिनां उक्तिः अच्छला इति पदव्यवस्था।

विवक्षिते= प्रधानत्वेन सिसाधयिषिते, रसे, लब्धप्रतिष्ठे= प्राप्तपूर्णपरिपोषे, सति, तु= इति संविदे असति तु दोष एवेति, बाध्यानां= बाधितुं शक्यानां मुख्यरसतदङ्गादिभिरभिभवितुं योग्यानां, वा= अथवा, अङ्गभावं= अङ्गत्वं मुख्यरसस्योपस्कारकत्वात्स्वभावादेव वाऽऽरोपाद्वापि तदङ्गरसत्वमुपगतानां, उक्तिः= कथनं प्रतिपादनं, अच्छला= निदोषा इति।

इदमुक्तं भवति— न तु सदैव विरोधिरसविभावादिपरिग्रहो दोषायैव भवति। अभीष्टरसपूर्णपरिपाकानन्तरं तदभिभाव्यानां वा तदुपस्कारकरूपेण तदङ्गत्वमाप्तानामपि विरोधिनां परिग्रहस्तु गुणायैव भवतीति।

कारिकाशयं स्पष्टयति वृत्तिकारः स्वसामग्र्येत्यादिना— विवक्षिते= प्रधानत्वेन प्रतिपिपादयिषिते, रसे, स्वसामग्र्या= स्वसाधनेन विभावादिना, लब्धपरिपोषे= प्राप्तपूर्णपुष्टौ, तु, विरोधिनां= विरोधिरसाङ्गानां विरोधीप्रतिकूलप्रकृतिको यो रसस्तस्य अङ्गानां विभावादीनामवयवादीनां बाध्यानां= मुख्यरसेन तदङ्गैर्वाऽभिभाव्यानां, वा= अथवा, अङ्गभावं= मुख्यरसस्योपस्कारकत्वेन तदङ्गत्वं, प्राप्तानां= उपगतानां, सतां= विद्यमानानां, उक्तिः= प्रतिपादनं, अदोषा= दोषरहिता एवेति। बाध्यत्वं विवृणोति बाध्यत्वं= अभिभाव्यत्वं हि, विरोधिनां= प्रतिकूलप्रकृतिरसानां, शक्याभिभवत्वे= शक्यः सम्भवः अभिभवो बाधो येषां तेषां भावस्तत्वं, तस्मिन्, सति एव सम्भवति, अन्यथा= असति शक्याभिभवत्वे, तु, न= नैवेति। बाध्यत्वं

तदेव भवति यदा तेषां स्वदौर्वल्यात्प्रधानरसाङ्गानां प्राबल्याद्वा तेषामभिभवः शक्यो भवति, अतथाभवने तु नैवेति। तत्र निर्दोषताया हेतुमाह तथा च= तथाभूते सति विरोधिनां प्रधानरसापेक्षया दौर्बल्येन तेषां शक्याभिभवत्वे सति, तेषां= विरोधिरसानां, उक्तिः= प्रतिपादनमपि, प्रस्तुतरसपरिपोषाय= प्रकृतरसाभिपुष्टये, एव, सम्पद्यते= सञ्जायते। इत्थं बाध्यन्वाभिप्रायमुक्त्वा आङ्गभावाभिप्रायं विवृणोति चोभयथा अङ्गभावं= उपस्कारकत्वेनावयवत्वं, प्राप्तानां= उपगतानां, च= अपि, तेषां= प्रतिकूलप्रकृतित्वेन सम्मतानां रसानां, विरोधित्वं= विरोधिभावं, एव, निवर्तते= प्रतिप्रतिगच्छति। तेषां= विरोधिरसानां, अङ्गभावप्राप्तिः= अङ्गत्वोपलब्धिः, हि स्वाभाविकी= प्रकृतिसिद्धा, वा= अथवा, समारोपकृता= तथात्वेनारोपिता, चेति।

कारिका के आशय का पल्लवन करते हैं वृत्तिकार—

विवक्षित रस अपने विभावादि से परिपुष्ट होकर प्रतिष्ठित होने कके बाद विरोधी रस= विरोधी रस के अङ्गों जो कि बाधित होने योग्य हों वा अङ्गभाव को प्राप्त हुए हों, कि उक्ति निर्दोष होती है। बाधित होने योग्य की अवस्था तब होती है जब उनका अभिभव अर्थात् दबाया जाना उनकी ही दुर्बलता के कारण शक्य हो, अन्यथा नहीं, वैसा होने पर उनकी उक्ति प्रस्तुत रस के परिपोष के लिए ही हो जाती है। अङ्गभाव में प्राप्त हुए विरोधी रसों का तो विरोधित्व ही लौट जाता है। विरोधी रसों की अङ्गभाव की प्राप्ति दो प्रकार की होती है स्वाभाविक और समारोपित। स्वाभाविक तो प्रकृति के थोड़ा बहुत अनुकूल होने के कारण होती है और समारोपित उस तरह सन्निवेश किए जाने से।

ध्वन्या०— तत्र येषां नैसर्गिकी तेषां तावदुक्तावविरोध एव। यथा विप्रलम्भशृङ्गारे तदङ्गानां व्याध्यादीनाम। तेषाञ्च तदङ्गानामेवादोषो नातदङ्गानाम्। तदङ्गत्वे च सम्भवत्यपि मरणस्योपन्यासो न ज्यायान्। आश्रयविच्छेदे रसस्यात्यन्तविच्छेदकप्राप्तेः।

करुणस्य तु तथाविधे विषये परिपोषो भविष्यतीति चेत्, न, तस्याप्रस्तुतत्वात्, प्रस्तुतस्य च विच्छेदात्। यत्र तु करुणरसस्यैव काव्यार्थत्वं तत्राविरोधः। शृङ्गारे वा मरणस्यादीर्घकालप्रत्यापत्तिसम्भवे कदाचिदुपनिबन्धो नात्यन्तविरोधः। दीर्घकालप्रत्यापत्तो तु तस्यान्तरा प्रवाहविच्छेद एवेत्येवंविधेतिवृत्तोपनिबन्धनं रसबन्धप्रधानेन कविना परिहर्तव्यम्।

लीला— विरोधिरसस्य स्वाभाविकाङ्गभावप्राप्ति विवृणोति तत्रेत्यादिना तत्र= स्वाभाविकसमारोपिताऽङ्गभावयोः, येषां= रासानां, नैसर्गिकी= स्वाभाविकी अङ्गत्वप्राप्तिः तेषां, तावत्= तदा, उक्तौ= प्रतिपादने, अविरोधः= विरोधाभावः, एवेति। तदुदाहरति यथा, विप्रलम्भशृङ्गारे, तदङ्गानां= तस्य विप्रलम्भशृङ्गारस्य

अङ्गानां विभावादीनां, व्याध्यादीनां= व्याधिः सन्निपातादिलक्षणो दशकामदशास्वेकः तदादीनां तदनुरूपाणामन्येषामपि, ग्रहणे न दोष इति। तेषां व्याध्यादीनां त्रयस्त्रिंशद्भावानां= मध्ये तदङ्गानां= तस्य विप्रलम्भशृङ्गाराणामेव अङ्गानामनुरूपावयवानां, एव, अदोषः, न= नैव, अतदङ्गानां= तदङ्गबाह्यानां= आलस्यौग्र्यजुगुप्सानाम्। सञ्चारिणो निर्वेदादयस्त्रयस्त्रिंशन्मताः प्राधान्येन। तेषु आलस्यादित्रयवर्ज सर्वे एव शृङ्गारेऽभीष्टाः। तेन येऽभीष्टास्तेषामुपादाने नैव दोषोऽनभीष्टानां ग्रहणे तु दोष एवेत्याशयः। तदङ्गत्वे= तस्य विप्रलम्भशृङ्गारस्य अङ्गत्वे आनुकूल्येन अङ्गभावे सम्भवति= सम्भवेऽपि, मरणोपन्यासः= मरणस्य-व्याध्यादेर्मृत्युसङ्कल्पो मरणं विकलेन्द्रियं इति लक्षणस्य व्यभिचारिभावस्य उपन्यासः सन्निवेशः, न= नैव, ज्यायान्= वरः। तत्र हेतुमाह आश्रयविच्छेदे= मरणे आश्रयस्य आलम्बनस्य विच्छेदे अत्यन्तगतत्वेन भङ्गे, रसस्य शृङ्गारस्य, अत्यन्तविच्छेदप्राप्तेः= नितान्तभङ्गोपस्थानात्। इति।

इत्थमुक्तं भवति ये खलु सञ्चारिणो निषिद्धाः शृङ्गारस्य व्यभिचारित्वेन= आलस्यौग्र्यजुगुप्सास्तेषां निबन्धनं तु दोषायैव भवति। संग्राह्यत्वेन स्वीकृतेऽपि शेषे मरणं नैवोपनिबन्धनीयं यतो मरणं नामात्यन्तगमनं यतः पुनरागमनस्य सम्भावना न शिष्यते। तेन तस्माद्रसस्य आश्रय एव विचिछद्यत इति। विप्रलम्भशृङ्गारकरुणयोरिदमेवान्तरं यत्पूर्वः पुनर्लभ्यवियोगे भवति अपरस्तु अत्यन्तगत एव। तथाविधे= तादृशे मरणरूपे, विषये, करुणस्य, तु, परिपोषः= पुष्टिरेव, भविष्यति= सम्पद्यते, इति= इत्थं कथ्यते, चेत्, न= नैव तथाऽत्रोपयुक्तम्। अनुपयुक्तत्वे हेतुमाह तस्य= करुणस्य, अप्रस्तुतत्वात्= अप्रकृतत्वात्, प्रस्तुतस्य= प्रकृतस्य विप्रलम्भशृङ्गारस्य, च, विच्छेदात्= भङ्गादिति। तर्हि किं मरणस्य कुत्रापि नैवोपयोग इत्याशङ्कायामाह— यत्र, तु, करुणरसस्य= शोकस्थायिभावात्मनो रसस्य, काव्यार्थत्वं= काव्यस्य प्रयोजनत्वेन प्राधान्यं प्रकृतत्वात्, तत्र= तादृशकाव्ये, तु, अविरोधः= विरोधाभावस्तस्य तथालम्बनत्वात्। कुत्रचित्तु शृङ्गारेऽपि मरणमुपनिबद्धं दृश्यते, मुनिनाऽपि तस्य तत्र व्यभिचारित्वे नैव निषेधः कृत इत्याशङ्कानिवारणाय कथयति वा= इति पक्षान्तरे, मरणस्य= मृतेः, अदीर्घकालप्रत्यापत्तिसम्भवे= शीघ्रमेव पुनरुज्जीवनसम्भवे शृङ्गारे= विप्रलम्भशृङ्गारे, अपि, कदाचित्= क्वाचित्कत्वेन न तु प्राशस्त्येन तत्रानार्थस्य सम्भवात्प्राशस्त्ये, उपनिबन्धः= संयोजनं, न= नैव, अत्यन्त विरोधी= नितान्तप्रतिकूलः। दीर्घकालप्रत्यापत्तौ= चिरकालपुनरुज्जीवने, तु, तस्य= चिरप्रत्यापत्तेः, अन्तरा= मध्ये, प्रवाहविच्छेदः= धाराभङ्ग,, एव,, इति= हेतोः, रसबन्धप्रधानेन= रसैकतानेन, कविना= काव्यकर्त्रा, एवंविधेतिवृत्तोपनिबन्धनं= एतादृशकथावस्तुयोजनं, परिहर्तव्यं= निराकरणीयमिति।

वस्तुतस्तु शृङ्गारे प्रत्यक्षमेव मरणं तु नैवोपस्कारकमत्यन्तगतस्य पुनरुज्जीवनासम्भवात्। तत्र यदि प्रसङ्गान्मरणमन्वेत्यपि तत् जातप्रायं अर्थात् मरणोन्मुखत्वं, मनः सङ्कल्पितमेवोपनिबन्धनीयं वा मरणेऽपि अतथाविलम्बेन प्रत्युज्जीवनं दर्शयितव्यं यथा बाणभट्टेन महाश्वेतापुण्डरीकवृत्तान्ते दर्शितमिति। कालिदासेनाऽपि अचिरादेव संयोगकारि मरणमुपनिबद्धमेव। यथा रघौ अजप्रसङ्गे।

तत्रापि मरणं कविना पदबन्धत्वेन नैवोपस्थापनीयं केवलमनूद्यमानत्वेनैव तस्योपनिबन्धनं शोभते। पदबन्धनिवेशे तु सर्वथा शोकादय एव दीर्घकालप्रत्यापत्तिलाभेऽपि। यथा तत्रैव अजेन्दुमतीप्रसङ्गे। अनूद्यमानत्वेनोपनिबन्धनस्योदाहरणं यथा दीधितावुद्धृतं—

दयितस्य गुणाननुस्मरन्ती शयने सम्प्रति या विलोकिताऽऽसीत्।
अधुना खलु हन्त सा कृशाङ्गी गिरमङ्गीकुरुते न भाषिताऽपि।

अत्र साक्षान्मरणमनुक्त्वा भाषिताऽपि गिरं नाङ्गीकुरुते इति अनूद्यमानत्वेनैवोक्तमिति।

विरोधिरसों का प्रधान रस की अङ्गत्वप्राप्ति के दो उपायों में से स्वाभाविक का विश्लेषण करते हैं—

उसमें भी जिसका स्वाभाविक रूप से अङ्गप्राप्ति सम्भव है उस अवस्था में विरोधी रसों की उक्ति में विरोध नहीं होता। जैसे विप्रलम्भ शृङ्गार में उसके अङ्गभूत व्याधि आदि के सन्निवेश में। उसमें अर्थात् व्यभिचारिभावों में से भी जो विप्रलम्भ करुण के अङ्ग हैं उनके ही सन्निवेश में दोष नहीं है, जो उसके अङ्ग नहीं बन पाते जैसे आलस्य औग्र्य जुगुप्सा, उनका सन्निवेश तो दोष ही होता है। मरण के उसके अङ्गत्व के सम्भव होने पर भी उसका सन्निवेश ठीक नहीं पड़ता। क्योंकि आश्रय के विच्छेद से रस का भी नितान्त विच्छेद हो जाता है। हाँ, वैसे विषय में करुण का तो परिपोष हो जाता है, तो भी ठीक नहीं क्योंकि यहाँ करुण प्रस्तुत नहीं है और प्रस्तुत विप्रलम्भ शृङ्गार का तो विच्छेद ही हो जाता है। जहाँ करुण रस का प्रतिपादन ही काव्य का प्रयोजन होता है वहाँ मरण के सन्निवेश में कोई दोष नहीं है। शृङ्गार में भी बिना लम्बे समय के ही प्रत्यापत्ति के सम्भव होने पर कहीं कहीं बहुतायत से नहीं, मरण का भी सन्निवेश उतना विरोधी नहीं होता। दीर्घकाल में ही प्रत्यापत्ति होने पर तो उसके बीच में रस के प्रवाह का विच्छेद ही हो जाता है। इस कारण रसबन्ध की प्राधान्य से काव्य रचने वाले कवि को चाहिए कि वह इस प्रकार के इतिवृत्त के निबन्धन का परिहार करें।

निर्वेद आदि तैंतीस भावों में से औग्र्य, आलस्य एवं जुगुप्सा को छोड़कर शेष तीस भाव शृङ्गार में अभीष्ट तो हैं लेकिन उसमें 'मरण' की स्थिति में सावधानी जरूरी है। एक तो 'मरण' साक्षात् पद से न कहा जाय और दूसरा, उसमें इतना जल्दी प्रत्युज्जीवन दिखाया जाय जिससे कि रसतानता का विच्छेद न हो पाए।

ध्वन्या०— तत्र लब्धप्रतिष्ठे तु विवक्षिते रसे विरोधिरसाङ्गानां बाध्यत्वेनोक्तावदोषो यथा—

क्वाकार्यं शशलक्ष्मणः क्व कुलं भूयोऽपि दृश्यते सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽसि सा दुर्लभा।
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं पास्यति।।

यथा वा पुण्डरीकस्य महाश्वेतां प्रति प्रवृत्तनिर्भरानुरागस्य द्वितीयमुनिकुमारोपदेशवर्णने।।

लीला— इत्थं बाध्यत्वेन स्वाभाविकाङ्गत्वेन समोरोपिताङ्गत्वेन च विरोधिरसानां सन्निवेशेऽदोषतामुपवर्ण्य तत्क्रमेणोदाहरणायोपक्रमते तत्रेत्यादिना तत्र= प्रकारत्रये, विवक्षिते= वक्तुमभीष्टे, रसे, लब्धप्रतिष्ठे= स्वविभावादिना पूर्णपरिपुष्टे, तु, विरोधिरसङ्गानां= प्रतिकूलप्रकृतिकरसविभावादीनां बाध्यत्वेन= शक्यभिभवत्वेन, उक्तौ= कथने, अदोषः= दोषाभावः, यथा= इति निम्नाङ्कितपद्ये।

तदुदाहरति क्वाकार्यमित्यादिना क्व अकार्यं क्व च शशलक्ष्मणः कुलं सा भूयः अपि दृश्यते, दोषाणां प्रशमाय नः श्रुतं अहो ! कोपे अपि कान्तं मुखम्, अपकल्मषाः कृताधियः किं वक्ष्यन्ति सा स्वप्ने अपि दुर्लभा हे चेतः स्वास्थ्यं उपैहि कः खलु धन्यः युवा अधरं इति पदव्यवस्था।

क्व, अकार्यं= परस्त्रीलम्पटरूपकुकृत्यं, क्व, च, शशलक्ष्मणः= चन्द्रमसः पवित्रं कुलं= वंशः, चन्द्रवंश्यानामिदमशोभनं कार्यमिति, सा= उर्वशी, भूयः= पुनः, अपि, दृश्यते= नयनगोचरीभूयेत, दोषाणां= दूषिताचाराणां, प्रशमाय= अपाकरणाय, नः= अस्माकं, श्रुतं= अध्ययनं शास्त्राणां, अहो ! कोपे= क्रोधे, अपि, मुखं= वदनं, कान्तं= सुन्दरम्, अपकल्मषाः पापरहिताः, कृतधियः= विद्वांसः, किं, वक्ष्यन्ति= कथयिष्यन्ति, सा, स्वप्ने अपि दुर्लभा किमुत प्रत्पक्षं तु, हे चेतः ! स्वास्थ्यं= स्वस्थतां, उपैहि= प्राप्नुहि, कः= को नाम, खलु धन्यः= भाग्यवान्, युवा= तरुणः, अधरं, पास्यति= पानं करिष्यतीति।

अत्र क्वाकार्यं शशलक्ष्मणः क्व च कुलमित्यत्र वितर्कः स च 'भूयोऽपि दृश्यते सा' इति औत्सुक्येन, 'दोषाणां प्रशमाय नः श्रुतं इति मतिः' अहो ! कोपेऽपि कान्तं मुखं' इति स्मृत्या, 'किं वक्ष्यन्त्यपकल्मषाः कृतधियः' इति शङ्का 'स्वप्नेऽपि सा दुर्लभा' इति दैन्येन, 'चेतः, स्वास्थ्यमुपैहि' इत्यत्र धृतिः कः खलु युवा धन्योऽधरं पास्यति 'इति चिन्तया च बाधिता इति न दोषस्तेषां वितर्कमतिशङ्का धृत्यादीनां प्रयोगोऽत्र। तत्र 'एकसम्भावनं तर्कः इष्टाभिमुख्यमौत्सुक्यं, 'प्रतिभानं मतिः' : 'दृष्टाभासः स्मृतिः' शङ्का स्वपरदौरात्म्याद् दोलनं, 'आपदः स्वान्तनीचत्वं दैन्यं' इति दैन्यं, 'धृतिर्ज्ञानेष्टलाभादेः सन्तुष्टिः' इति धृतिः 'आधिश्चिन्ता प्रियानाप्तेः' इति चिन्ता इति।

उदाहरणान्तरं प्रस्तौति यथा वा, कादम्बर्यां महाश्वेतां, प्रति, प्रवृतनि-र्भरानुरागस्य= सञ्जातस्नेहातिशयस्य, पुण्डरीकस्य, द्वितीयमुनिकुमारोपदेशवर्णने। तत्र विपक्षीभूवैराग्यविभावाद्यनुधारणेऽपि हि अशक्यविच्छेदत्वेन दार्ढ्यमेवानुरा-गस्योक्तं भवतीति भावः इति लोचने। भूयस्त्वेन शृङ्गारापेक्षया प्रतिकूलप्रकृतिक-शान्तरसविभावभूतवैराग्यस्य वर्णनेऽपि पर्यवसाने शृङ्गार एव सुतरा मविच्छिन्नो वर्तते, नैष तेन दोष इति।

इस प्रकार शक्याभ्रिभभव होने पर, अङ्ग होने पर विरोधी रस का समावेश भी दोष न होने की और अङ्गभाव भी स्वाभाविक एवं समारोपित होने से हो पाने की बात बता कर अब क्रम से उसका उदाहरण देने का उपक्रम करते हैं।

उनमें से विवक्षित रस के लब्धप्रतिष्ठ होने पर विरोधी रस के अङ्गों में बाध्यत्व होने से उनकी उक्ति में दोष का अभाव जैसे–ऊर्वशी की याद में पुरूरवा कहते हैं–

कहाँ यह अकार्य और कहाँ चन्द्र से निष्पन्न यह कुल ? (वितर्क) क्या फिर भी वह देखी जा सकती है (औत्सुक्य), ऐसे दोष को दूर करने के लिए ही तो हमने शास्त्रों का अभ्यास किया है, (मति) अहो क्रोध में उसका मुख कितना सुन्दर था (स्मृति), वे निष्पात विद्वान् हमें क्या कहेंगे (शङ्का) अरे ! अब तो वह स्वप्न में भी दुर्लभ है (दैन्य) हे मन ! स्वस्थ बनो (धृति) कौन सा धन्य युवक उसके अधर का पान कर लेगा (चिन्ता) इसमें इस तरह वितर्क को औत्सुक्य से, मति को स्मृति से, शङ्का को दैन्य से एवं धृति को चिन्ता से बाधित किए जाने के कारण उनका समावेश दूषित नहीं है।

अथवा जैसे 'कादम्बरी' में महाश्वेता के प्रति अत्यन्त अनुराग बढ़े पुण्डरीक का द्वितीय मुनिकुमार के उपदेश वर्णन में।

यहाँ अनेक प्रकार के शान्त रस के वैराग्य का अवधारण होने पर भी शृङ्गार अविच्छिन्न रहता है। अतः वैराग्य का समावेश दोषपूर्ण नहीं है।

**ध्वन्या०– स्वाभाविक्यामङ्गभावप्राप्तावदोषो यथा–**

**भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।**
**मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्।।**

**इत्यादौ–**

**लीला– स्वाभाविकाभिप्रायेणाङ्गत्वप्राप्तेरुदाहरणायोपक्रमते स्वाभाविक्या-मित्यादिना स्वाभाविक्यां= स्वभावसिद्धायां, अङ्गभावप्राप्तौ= अङ्गत्वलब्धौ, यथा= इति उच्यमानपद्ये।**

**उदाहरणं प्रस्तौति भ्रमिमेत्यादिना–जलदभुजगजं विषं वियोगिनीनां भ्रमिं अरतिं अलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादं मरणं च प्रसह्य कुरुत इति पदव्यवस्था।**

**जलदभुजगज= जलदो मेघ एव भुजगःसर्पस्तस्माज्जात इति तादृशं**

अन्यत्रापि दुश्यते इति डः, विषं= गरलं, वियोगिनीनां= विरहिणीनां, भ्रमिं= घूर्णनां, अरतिं= कस्मिन्नपि वस्तुन्यरुचिं, अलसहृदयतां= अकिञ्चित्करत्वं, प्रलयं= नष्टसंज्ञत्वं, मूर्च्छां= इन्द्रियव्यापारनिरोधं, तमः= आन्ध्यं, शरीरसादं= श्रान्ततां, मरणं= मरणासन्नावस्थां, च, प्रसह्य= विधन्ते इति।

तत्र प्रकरणपर्यवसितमाह इत्यादावित्यादिना= इत्यादौ=इतिपद्ये— अत्र करुणोचितव्याधेरनुभावादीनां भ्रमिप्रभृतीनां विप्रलम्भशृङ्गारेऽपि सम्भावान्नैसर्गिकी अङ्गता इति न दोषः।

स्वाभाविक अङ्गभावप्राप्ति में जैसे—

बादलरूपी साँप से निकला विष वियोगिनियों को चक्कर, अरुचि, आलस्य चेतना का खोना, इन्द्रियों का निष्क्रिय होना, अन्धता, ग्लानि, मरण की अवस्था आदि बलपूर्वक कर देता है।

इत्यादि में— यहाँ करुणरस में उचित व्याधि के भ्रमि आदि अनुभावों का विप्रलम्भ में भी सम्भव होने से इनकी अङ्गता स्वाभाविक है।

ध्वन्या०— समारोपितायामप्यविरोधो यथा 'पाण्डुक्षामम्' इत्यादौ। यथा वा 'कोपात्कोमललोलबाहुलतिकापाशेन' इत्यादौ।

लीला— अङ्गत्वस्य द्वितीयप्रकारमुदाहर्तुमुपक्रमते समारोपितायामित्यादिना— समारोपितायां= श्लेषादिनाऽरोपितत्वेन, अङ्गभावप्राप्तौ, अपि, अविरोधः= विरोधाभावः, यथा= उपस्थाप्यमानपद्ये— 'पाण्डुक्षामं' इत्यादौ= इत्यादि पद्ये। पद्यन्तु यथापाण्डुक्षामं वक्त्रं हृदयं तवालसञ्च वपुः।

आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदयन्तः।'' इति।

हे सखि ! तव, पाण्डुक्षामं= पाण्डु पिशङ्गं क्षामं कृशं च, वदनं= मुखमण्डलं सरसं= चन्दनादिलिप्तं यद्वा विरहवारिणा सिक्तं, हृदयं= उरो वा स्वान्तं, आलसं= अकर्मण्यं, वपुः= शरीरं, हृदयतः= अन्तर्हृदये, क्षेत्रियरोगं= देहान्तरमात्रचिकित्स्यमसाध्यं वा क्षयारोगं, नितान्तं= अत्यन्तमेव, आवेदयति= सूचयतीति। अत्र प्रत्येकमन्वयाभिप्रायेणैकवचननिर्देशः।

इत्यादाविति करुणोचितव्याधेः विप्रलम्भे श्लेषभङ्ग्या= उभयसाधारणानुदर्शनेन 'समारोपादङ्गता न दोषायेति।

उदाहरणान्तरं यथा कोपादित्यादौ। पद्यमिद 'नातिनिर्वहणैषिता' इत्यत्रन्तरे व्याख्यातमेव। इत्यादाविति अत्र कोदाप् बहवा हसन् धन्यः कोमललोलबाहुलतिकापाशेन बद्ध्वा हयन्ते इति बन्धनहननादीनां रौद्रानुभावानं रूपकबलादारोपितानां तदनिर्वाहादेव शृङ्गाराङ्गत्वमिति नात्र दोषः।

अङ्गत्व के समारोपित प्रकार का भी उदाहरण देते हैं—

समारोपित होकर अङ्गत्वप्राप्ति में भी अविरोध जैसे—

पाण्डुक्षाम इत्यादि में—

हे सखी ! तुम्हारा यह फीका एवं दुबला मुख, सरस छाती, अलस शरीर हृदय के भीतरे क्षय जैसे असाध्य रोग का होना अत्यन्त ही सूचित करते हैं।

यहाँ करुण रस के लिए उचित व्याधि के श्लेष की भङ्गी: अर्थात् दोनों में साधारण रूप के अनुभावों के प्रदर्शन से आरोप के द्वारा अङ्ग के रूप में प्रदर्शित किए गए हैं। अत: इसमें दोष नहीं है।

और जैसे—

क्रोध से कोमल, चञ्चल बाहुरूपी लतारूप पाश से इत्यादि में— यह पद्य पहले ही अलङ्कारों के अत्यन्त निर्वाह न करने के निर्देश के प्रकरण में व्याख्यात है।

यहाँ "वधू से कोप से बाहुपाश से बांध कर हँसता हुआ प्रियतम मारा जाता है" में रौद्र के अनुकूल बन्धन हनन आदि रूपक के बल से आरोपित अनुभावों का रूपक के निर्वाह न होने से ही शृङ्गार का अङ्गत्व हो जाता है। अत: दोष नहीं है।

ध्वन्या०— इयं चाङ्गभावप्राप्तिरन्या यदाधिकारिकत्वात् प्रधान एकस्मिन् वाक्यार्थे रसयोर्भावयोर्वा परस्परविरोधिनोर्द्वयोरङ्गभावगमनं तस्यामपि न दोषः। यथोक्तम्— 'क्षिप्तो हस्तावलग्नः' इत्यादौ। कथं तत्र विरोध इति चेत्— द्वयोरपि तयोरन्यपरत्वेन व्यवस्थानात्। अन्य परत्वेऽपि विरोधिनोः कथं विरोधनिवृत्तिरिति चेत्—उच्यते। विधौविरुद्धसमावेशस्य दुष्टत्वं नानुवादे।

यथा—

एवि गच्छ पतोत्तिष्ठ वद मौनं समाच।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः।।

इत्यादौ। अत्र हि विधिप्रतिषेधयोरनूद्यमानत्वेन समावेश न विराधस्तथेहापि भविष्यति। श्लोके ह्यस्मिन्नीर्ष्याविप्रलम्भशृङ्गार— करुणवस्तुनोन विधीयमानत्वम्। त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वात्तदङ्गत्वेन च तयोर्व्यवस्थानात्।

लीला— इत्थं वस्त्वैके द्वयोर्विरोधिनोरङ्गमङ्ग्यभावमुक्त्वा सम्प्रति तयोर्वस्त्वन्तरेऽप्यङ्गभावे निर्दिशति इयमित्यादिना इयं= उच्यमाना, च, अन्या= अपरा, तृीया, प्रकारस्तु चतुर्थः बाध्यत्वस्वाभाविक समारोपिताङ्गभावादपरः, अङ्गभावप्राप्तिः= अङ्गत्वलाभः, यत्, आधिकारिकत्वात्= प्राधान्येन विवक्षितत्वात, प्रधाने= मुख्ये, एकस्मिन्, वाक्यार्थे= चारुत्वपर्यवसायित्वेन काव्यात्मभूते रसे, परस्परविरोधिनोः= अन्योन्यप्रतिकूल— प्रकृतिकयोः, द्वयोः, रसयोः, वा भावयोः = अङ्गभावगमनं= उपस्कारकत्वेनाङ्गत्वप्राप्तिः, भवति, तस्यां= तादृश्यामपि स्थितौ, न, दोष इति। एकेऽङ्गिनि अङ्गत्वमापन्नौ विरोधिनौ रसावपि परस्परं न दुष्टाविति।

तदुदाहरति यथा उक्तं= कथित, क्षिप्तो हस्तावलग्नः 'इत्यादौ।'

पद्यमिदं प्रधानेऽन्यत्र वाक्यार्थे, इत्यत्रान्तरे व्याख्यातमेव।

अत्र च शृङ्गारकरुणौ परस्परविरोधिनावपि स्थितस्य शम्भोः प्रभावातिशयस्य अङ्गत्वेवोपस्थापितत्वान्न दिृष्टाविति विरोधिरसयोरुदाहरणम्। भावयोस्तूह्यम्।

तत्राभीष्टमाह कथमित्याद्यसाशङ्कातत्समाधानमुखेन तव, कथं, अविरोधः= विरेधाभावः, इति= इत्थमाशङ्क्यते, चेत् इत्थम्। द्वयोः= उभयोः, तयोः= करुण-शृङ्गारयोः अपि, अन्यपरत्वेन= पराङ्गत्वादस्वन्त्रयेण, व्यवस्थानात्= विधानात्। तत्रापि अन्यपरत्वे= पराधीनत्वे अपि स्वभावस्य दुर्निवारत्वात्कथं, विरोधिनोः= प्रतिकूलप्रकृतिकयोः, विरोधनिवृत्तिः= विरोधित्वपरिहारः, इति= इत्थमाशङ्क्यते चेत्, उच्यते= कथ्यते विधौ= विधेयभावे, विरुद्धसमावेशस्य= प्रतिकूलप्रकृति-करसस्य सामानाधिकरण्येनावस्थितिः, दुष्टत्वं= दोषावहत्वं, अनुवादे= उद्देश्य-त्वेन प्रयुक्ते तु तथा न दोष इति। यथा-- तजदुदाहरति एहीत्यादिना धनिन आशाग्रहग्रस्तैः अर्थिभि एहि गच्छ पत उत्तिष्ठ वद मौनं समाचर एवं क्रीडन्ति इति पदव्यवस्था।

धनिनः= वैभवशालिनो जनाः, आशाग्रहग्रस्तैः= आशा अभीप्सा एव ग्रहो राहुस्तेन ग्रस्तैः पीडितैः, अर्थिभिः= चाचकैः, सह, एहि= आगच्छ, गच्छ= याहि, पत= भूमौ च्यवस्य, उत्तिष्ठ= उत्थानं कुरु, वद= जल्प, मौन= तूष्णीं, समाचर= विधेहि= तूष्णीं भव इति, एवं= एवविधैः प्रकारैः, क्रीडन्ति= विहरन्तीति।

तत्र पर्यवसितं निर्दिशति इत्यादावित्यादिना इत्यादौ= इत्यादिपद्ये। अत्र= अस्मिन् पद्ये, हि, विधिप्रतिषेधयोः, अनूद्यमानत्वेन= उद्देश्यत्वेन परकथनस्य पुनरुत्पादत्तत्वेन, समावेशे= समानाधिकरण्येनावस्थितौ, न, विरोधः। तथा= तथैव, इह= क्षिप्तो हस्तावलग्न इत्यादावपि, भविष्यति, यतः, अस्मिन्= प्रस्तुते, श्लोके, हि, ईर्ष्याविप्रलम्भशृङ्गारकरुणवस्तुनोः= ईर्ष्याजनितविप्रलम्भशृङ्गारस्य करुणस्य च वस्तुनोर्विषययोः, न= नैव, विधीयमानत्वं= प्राधान्यम्। तथाभवने तयोर्हेतुमाह— त्रिपुररिपुप्रभावातिशयस्य= त्रिपुरस्य रिपुध्वंसको रुद्रस्तस्य प्रभावा-तिशयः प्रतापाधिक्यं तस्य वाक्यार्थत्वात्= प्राधान्येन विवक्षितत्वात्, तदङ्गत्वेन= तस्य रुद्रप्रभावातिशयस्य अङ्गत्वेन उपस्कारकत्वेन, च, तयोः= विप्रलमभशृङ्गा-रकरुणयोः, व्यक्तस्थानात्= नियमनात्।

अत्रेदमुक्तं भवति विराधिनोऽङ्गत्वेऽयमपि विधिर्यत्प्रधानस्याङ्गत्वेन परस्परवि-रोधिनोरपि रसयोर्भावयोर्वा ग्रहणे नैव दोषः। तत्र द्वयोरपि तयोरन्यमुखापेक्षितया व्यवस्थानात्। यतः विधयत्वेन तथा ग्रहणे दोषो भवति किन्तु अनूद्यमानत्वेन व्यवस्थाने नैव। यथा 'एहि गच्छ पत्तोत्तिष्ठ वद मौन समाचर। एवमाशांग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः इति कथने परस्परविरुद्धानामप्यर्थानां क्रीडाङ्गत्वेनानूद्य कथनान्नदोषस्तथैव क्षिप्तो हस्तावलग्न इति पद्ये रुद्रप्रभावातिशयस्य वाक्यार्थस्यो-

पस्कारकत्वेन समावेशात्परस्परप्रतिकूलप्रकृतिकयोरपि ईर्ष्याविप्रलम्भशृङ्गारकरु-णयोः व्यवस्थानान्न दोष इति। यथा राजसमक्षस्थितं क्रोधाभिभूतमपि आततायिद्वय नैव विरोद्धुं परस्परं प्रभवतस्तयैव प्रधानपरतन्त्रावङ्गरसावपि इति।

विरोधी रस के अङ्गत्व में चौथे प्रावधान का भी विश्लेषण करते हैं—

यह भी एक अङ्गत्वप्राप्ति की और विधि है जो आधिकारिक होने से प्रधान वाक्यार्थभूत एक रस में दो परस्पर विरोधी रसों अथवा भावों का अङ्गभाव होता है उसमें भी दोष नहीं होता। जैसे कि पहले कहा गया है 'क्षिप्तो हस्तावलग्न' इत्यादि में। उसमें कैसे विरोध नहीं कहकर पूछा जाय तो उत्तर यह है कि उन दोनों के ही दूसरे में निर्भर बना कर व्यवस्थापन होने से दूसरे में निर्भर होने पर भी विरोधियों का विरोध कैसे हट जाता है ? इस पर कहा जाता है—विधि में विरुद्धों का समावेश दोष होता है अनुवाद करके कहने में नहीं। जैसे—

'धनी लोग आशा रूप ग्रह से ग्रस्त याचकों से "आओ, जाओ, गिरो, उठो, बोलो, चूप रहो' इत्यादि प्रकार से खेला करते हैं।'

इत्यादि में। यहाँ विधि एवं प्रतिषेध का अनूद्यमान दूसरे से कहे हुए वचन का फिर कहना, के रूप में समावेश होने से विरोध नहीं, उसी तरह यहाँ भी होगा। 'इस क्षिप्तो हस्तावलग्न' आदि श्लोक में ईर्ष्या विप्रलम्भ शृङ्गार एवं करुण के वस्तु की विधीयमानता अर्थात् प्रधानता नहीं है। उसमें त्रिपुर के शत्रु भगवान् शम्भु के प्रभाव के अतिशय के वाक्यार्थ होने से (दोष नहीं होता)।

जब किसी प्रधान के अधीन दो विरोधी भी रसों का समायोजन भी किया जाता है तो भी वह दोष नहीं होता। विधि में उस अवस्था में दोष आता है अनुवाद एव अङ्गभाव में नहीं।

**ध्वन्या०**— न च रसेषु विध्यनुवादव्यवहारो नास्तीति शक्यं वक्तुम्, तेषां वाक्यार्थत्वेनाभ्युपगमात् वाक्यार्थस्य वाच्यस्य च यौ विध्यनुवादौ तौ तदसाक्षिप्तानां रसानां केन वार्येते। यैर्वा साक्षात् काव्यार्थता रसादीनां नाभ्युपगम्यते तैस्तषां तन्निमित्तता तावदवश्यमन्युपगन्तव्या। तथाप्यत्र श्लोके न विरोधः। यस्मादनूद्यमानाङ्गनिमित्तोभयरसवस्तुसहकारिणो विधी-यमानांशाद् भावविशेषप्रतीतिरुत्पद्यते। ततश्च न कश्चिद्विरोधः। दृश्यते हि विरुद्धोभयसहकारिणः कारणात्कार्यविशेषोत्पत्तिः। विरुद्धफलोत्पाद-नहेतुत्वं हि युगपदेकस्य कारणस्य विरुद्धं न तु विरुद्धोभयसहकारित्वम्।

लीला— वाच्यविषयभूतयोर्विध्यनुवादयोर्व्यङ्ग्यस्य रसस्य च कथं सम्बन्ध इत्याकाङ्क्षानिवारणायाह न चेत्यादिना— रसेषु= व्यङ्ग्यर्थभूतेष्वपि, रसभावादिषु, विध्यनुवादव्यवहारः= विधिः= प्रधानतया वाच्यः अनुवादः अप्रधानत्वेन वाच्यश्च तयोर्व्यवहारः सम्प्रयुक्तिः न, अस्ति= विद्यते, इति= इत्थं, वक्तु= साधयितुं, शक्य= पार्यम्। तत्र हेतुं निर्दिशति— तेषां= रसभावादीनां, वाक्यार्थत्वेन=

वाक्यप्रयोजनत्वेन, अभ्युपगमात्= स्वीकरणात्। अपि च, वाक्यार्थस्य= वाक्यतात्पर्यस्य, वाच्यस्य= अभिधेयस्य, च, यौ, विध्यनुवादौ= प्रधानाप्रधानभावौ, तौ, तदाक्षिप्तानां= वाच्यार्थाक्षिप्तानां, रसानां= रसभावादीनां, केन, वार्येते= निरुध्येते।

इदमुक्तं भवति वाच्यविषयभूतयोर्विध्यनुवादयोर्व्यङ्ग्ये रसादौ नैव व्यवहार इति नाशङ्कनीयम्। यतो रसादीनामपि वाक्यार्थरूपेणैव स्वीकारात्। तेन तौ व्यङ्ग्यतायामपि भवत एव। मुख्यतया रस एव काव्यवाक्यार्थस्तेन अमुख्यतया यत्र सोऽर्थस्तस्य रसस्यापि अनूद्यमानत्वं सिध्ययत्येव। अथवा अनूद्यमानविभावादिसभाक्षिप्तत्वाद्रसस्य अनूद्यमानता सिध्यत्वमेव। यत्र वाक्यार्थे वाच्यार्थे च विध्यनुवादौ स्वीक्रियेते तदा तदाक्षिप्तरसादौ तयोः स्वत एवास्तित्वं भवत्येव।

तत्र पक्षान्तरं विवृणोति यैः= आलोचकैः, वा= इति पक्षान्तरे, रसादीनां= रसभावप्रभृतीनां, साक्षात्= प्रत्यक्षमेव, काव्यार्थता= काव्याशयता, न, अभ्युपगमते= स्वीक्रियते, तैः= तादृशैर्जनैरपि, तेषां= रसादीनां, तन्निमित्तता= तस्य काव्यार्थस्य विभावादेः निमित्तता हेतुता, तु, तावत्= साकल्येन, अवश्यं= निश्चयमेव, अभ्युपगन्तव्या= ऊरीकर्तव्या।

अस्यायमाशयः— यैरपि रसादयः काव्यार्थस्य नैव साक्षाद्विषयाः तस्य तु विभावादय एव विषयास्तेषामेव विषया रसा इति काव्यार्थेन सह रसादीनां परस्परयैव सम्बन्धः स्वीक्रियते, तन्मतेऽपि काव्यार्थीभूतविभावादीनां रसनिमित्तता तु स्वीकर्तव्यैव। तेन यदि विरुद्धरसयोरनूद्यमानतया समावेशो मा भूदेवाऽपि सहकारितया तु भविष्यत्येव। तेन विरुद्धयोरङ्गाङ्गिभावः सर्वथा युक्तियुक्ता एवेतिं लोचनव्याख्यानसंक्षेपः।

प्रकृतमनुसरति— तथापि= तथाभूते सत्यपि रसादीनां सहकारितया समावेशेतेऽपि, अत्र= 'क्षिप्तो हस्तावलग्न' 'इति, श्लोके, न, विरोधः= प्रातिकूल्यं, तयोः। तत्र हेतुं परिणतिञ्च निर्दिशति— तस्माद= यतः, अनूद्यमानाङ्गनिमित्तोभयरसवस्तुसहकारिणः= अनूद्यमाना ये हस्तक्षेपादयो रसाङ्गभूता विभावादयस्तिन्निमित्त यदुभयं विप्रलम्भकरुणात्मकं रसवस्तु रससजातीयं तत्सहकारि यस्य तस्मात्, तादृशात्, विधीयमानांशात शाम्भवशरवह्निजनितदुरितदाहलक्षणात्, भावविशेषप्रतीतिः= भाविशेषस्य भगवत्प्रभावातिशयलक्षणस्य प्रेयोगलङ्कारविषयस्य प्रतीतिः प्रकाशनं, उत्पद्यते= सञ्जायते, ततः= तस्मात्, च= अपि, न, कश्चित्= कतमोऽपि, विरोधः। इति। तत्र निदर्शनान्तर प्रस्तौतिविरुद्धोभयसहकारिणः= परस्परप्रतिकूलप्रकृतिकोभयं सहयोगिनः, कारणात्= निमित्तात्, कार्यविशेषोत्पत्तिः= प्रयोजनविशेषासिद्धिरिति।

इदमुक्तं भवति तत्र प्रदीप्ते शाम्भवशराग्नौ अनूद्यमानं यदङ्गं हस्तक्षेपादिकं

तन्निमित्तभूतं यदुभयरसवस्तु तदेव सहकारिभूतस्य विधीयमानस्य अशाद्भाव-विशेषस्य प्रतीते नैव तत्र विरोधावसरो यतः प्रतिकूलप्रकृतिकोभयसहकारियुता-त्कारणात्कार्यविशेषोत्पत्तिर्भवत्येव। यथा परस्परविरुद्धप्रकृतिकयोर्वारितेजोगतयोः शीतोष्णयोः सहकारितायुतात् तण्डुलादेः, कारणाद् कोमलभक्तकरणलक्षणस्यो-त्पत्तिर्जायते तत्र च विरुद्धप्रकृतिके अपि शीतोर्ष्णे नैव विरुन्धस्तयैव श्लोकेऽपि विप्रलम्भशृङ्गारकरुणोभयसहकारियुताद् विधेयात् भवत्प्रभावातिशयरूपलक्ष-णप्रतीतिर्जायत इति नैव तयोरपि विरोध इति।

तर्हि किं विरोधः सर्वत्रैव तथाऽकिञ्चित्कार इत्याशङ्कानिवारणाय कथयति विरुद्धेत्यादिना–हि= यतः, विरुद्धफलोत्पादनहेतुत्वं= विरुद्धं प्रतिकूलं यत्फलं तस्य उत्पादने परिणामे हेतुत्व कारणत्वं, युगपत्= एकवारमेव, एकस्य कारणस्य= निमित्तस्य, विरुद्धतवं= प्रतिकूलत्वं, न तु, विरुद्धोभयसहकारित्वं विरुद्धं मिथः प्रतिकूलं भवति सहकारिणि यद्विरुद्धत्वं तत्रेति। कारणविरुद्धत्वे उत्पादनस्यैव विरुद्धत्वात् नोत्पादनं विरुद्धस्येति।

प्रधान रूप से जो वाच्य है वह विधि है और अप्रधान रूप से वाच्य है अनुवाद। रस तो व्यङ्ग्य होते हैं न कि वाच्य। तो फिर रस में विधि अनुवाद का प्रयोग कैसे इस आशङ्का के निराकरण के लिए कहते हैं–

न तो रसों में विध एवं अनुवाद का व्यवहार होता ही नहीं, ऐसा ही कहा जा सकता है। क्योंकि उनको भी वाक्यार्थ के रूप में माना गया है। वाच्य के वाक्यार्थ के जो विधि एवं अनुवाद हैं उन दोनों की उसके द्वारा आक्षिप्त रसों में जो अवस्थिति है उसको कौन हटा सकता है।

अथवा अनूद्यमान रूप में विरुद्ध रसों का समावेश न भी है सहकारी के रूप में तो होगा ही। जो रसादि को सक्षात् काव्यार्थता नहीं मानते और विभावादि को मानते हैं, उनको भी तो उन विभावादियों को रस के निमित्त तो अवश्य ही मानना ही पड़ेगा। वैसा ही मानने पर भी इस श्लोक में ईर्ष्याविप्रलम्भशृङ्गार और करुण का कोई विरोध नहीं बनता क्योंकि अनूद्यमान जो अङ्ग है हस्तक्षेप आदि वे ही जिसके निमित्त है। वैसे दोनों रसवस्तु सहकारी के रूप में होने वाला जो शम्भु के शर रूप अग्नि के द्वारा जनित दुरितों के दाहरूप लक्षण वाला विधेय अंश है उससे भगवान् का प्रतापातिशय लक्षण रूप भाव विशेष की प्रतीति तो होती ही है। उससे कोई विरोध नहीं बन पाता। वैसे और भी जगह विरुद्ध दो सहकारि कारण वाले कारण से कार्य विशेष की उत्पत्ति देखी भी गई है। (जैसे दो परस्पर विरोधी पानी और तेज के शीत एवं उष्ण के सहयोग से चावल रूप कारण से नरम भात रूप लक्षण की उत्पत्ति होती है वैसे ही यहाँ भी विप्रलम्भ एवं शृङ्गार के सहयोग से शराग्नि रूप कारण से भगवान् का प्रभावातिशय फलित होता है।)

तो इसका यह अर्थ नहीं समझना चाहिए कि विरोध का सर्वत्र ही परिहार होता है। विरोध का अपनी जगह अस्तित्व भी है। वह है निमित्त कारण। एक कारण का

विरुद्ध फल के उत्पादन में हेतु बनना विरुद्ध होता है, दोनों विरोधियों का सहकारी होना विरुद्ध नहीं होता क्योंकि वे तो कारण के ही अनुगामी होते हैं।

ध्वन्या०— एवंविधविरुद्धपदार्थविषयः कथमभिनयः प्रयोक्तव्य इति चेत्–अनूद्यमानैवंविधवाच्यविषये या वार्ता सात्रापि भविष्यति। एवंविध्यनुवादनयाश्रयेणात्र श्लोके परिहृतस्तवद्विरोधः।

लीला— न केवलं श्रव्येऽपितु दृश्येऽपि तथाविधस्योपयोगमाशङ्कासमाधानमुखेन निर्दिशति एवंविधेत्यादिना एवंविधविरुद्धपदार्थविषयः= ईदृश प्रतिकूलप्रकृतिकवस्तुलक्ष्यं, कथं, अभिनयः प्रयोक्तव्यः= समस्ताभिनये कथं युगपदेव अभिनयः कर्तुं शक्यः= इति कथ्यते चेत्, इत्थम्। तत्परिहरति अनूद्यमानैवविधवाच्यविषये= अनूद्यमानमवतार्यमाणं एवंविधं, ईदृशं विरुद्धाकारं यद्वाच्यमभिधेयो यत्र तादृशो यो विषयस्तस्मिन् या= यादृशी, वार्ता= व्यवहृतिः सा= तादृश्येव, अत्रापि= इहापि रसादावपि, भविष्यति, इति।

अस्यायशयो यथा लोचने क्षिप्तो हस्ताविलग्न इत्यादौ प्राधान्येन भीतविप्लुतादिदृष्ट्युपपादनादिक्रमेण प्राकरणिकस्तावदर्थः प्रदर्शयितव्यः। यद्यप्यत्रकरुणोऽपि पराङ्गमेव तथापि विप्रलम्भापेक्षया तस्य तावन्निकटं प्राकरणिकत्वं महेश्वरप्रभाव प्रति सोपयोगात्। विप्रलम्भस्य तु कामीवेत्युत्प्रेक्षोपमाबलेनायातस्य दूरत्वात्। एवं च सास्रनेत्रोत्पलाभिरत्यन्तं प्राधान्येन करुणोपयोगाभिनयक्रमेण लेशतस्तु विप्रलम्भस्य करुणेन सादृश्यात्सूचनां कृत्वा। कामीवेत्यत्र यद्यपि प्रणयकोपोचितोऽभिनयः कृतस्तथापि ततः प्रतीयमानोऽसौ विप्रलम्भः समनन्तरामिधीयमाने स दहतु दुरितमित्यादौ साटोपाभिनयसमर्पितो यो भगवत्प्रभावस्तत्राङ्गतायां पर्यवस्यंतीति न कश्चिद्विरोधः।

एतदुक्त भवति समस्ताभिनये परस्परविरुद्धार्थविषयस्याभिनयः कथं युगपदेव कार्य इति विषयः। तत्र नैव कर्तुं शक्य इति पूर्वपक्षः उभयोरेव रसदृष्ट्यादिषु महदेवान्तरं तेन युगपदेव तौ प्रदर्शयितुमशक्याविति। तत्रायं विमर्शः— यद्यपि विप्रलम्भकरुणानुभावेवात्र पराङ्गविषयौ तथापि विप्रलम्भापेक्षया करुणस्य एवं प्राकरिणिकनैकट्यं सिध्यति तस्य महेश्वरप्रभावं प्रति सोपयोगत्वात् विप्रलम्भस्य दूरत्वा त्प्राकरणिकार्थस्य। तेन तत्र प्राधान्येन भीतविप्लुतादिदृष्ट्युप- पादनक्रमेण प्राकरणिकस्तावदर्थः प्रदर्शयितव्यः। विप्रलम्भस्य तु स दहतु दुरितमित्यादौ साटोपाभिनयसमर्पितभगवत्प्रभावाङ्गतायां पर्यवसानात्, न कश्चिद्विरोधः, इति।

एतदुपसंहरति एवमित्यादिना— एवं= इथं, विध्यनुवादनयाश्रयेण= विध्यनुवादरूपमार्गाधारेण, अत्र, श्लोके, विरोधः, तावत्, परिहृत् इति।

दृश्यकाव्य में भी इसके उपयोग के विषय में (नटशिक्षाहेतु) बताते हैं—

'इस प्रकार के विरुद्ध पदार्थ वाले विषय का अभिनय कैसे प्रयुक्त हो' ऐसी

आशङ्का है तो कहा जाता है— इस प्रकार के अनूद्यमान वाच्य विषय में जो बात है वही यहाँ भी होगी। अर्थात् जैसे 'एहि गच्छ' इत्यादि में अभिनय होता है वैसे भी यहाँ भी होता है। यहाँ यह भी ध्यान देना है कि 'क्षिप्तो हस्तावलग्न' इत्यादि श्लोक में विप्रलम्भ एवं करुण दोनों रस अङ्ग हैं फिर भी दो में से करुण ही प्राकरणिक अर्थ का निकट है क्योंकि शर के प्रभाव के प्रति उसी की उपस्कारकता है शृङ्गार तो उत्प्रेक्षा एवं उपमा के बल से आक्षिप्त मात्र है। अत: यहाँ करुण का अभिनय होना चाहिए अर्थात् भीत, विप्लुत आदि दृष्टि से उसका उपपादन किया जाना चाहिए। इसी तरह अन्यत्र भी किया जाना चाहिए।

प्रकरण का उपसंहार करते हैं—

इस प्रकार विधि एवं अनुवाद मार्ग के आश्रय से उक्त श्लोक में जो विरोध है उसका परिहार हो गया।

ध्वन्या०— किञ्च नायकस्याभिनन्दनीयोदयस्य कस्यचित्प्रभावातिशयवर्णने तत्प्रतिपक्षाणां य: करुणो रस: स परीक्षकाणां न वैक्लव्यमादधाति प्रत्युत प्रीत्यतिशयनिमित्ततां प्रतिपद्यत इत्यतस्तस्य कुण्ठशक्तिकत्वात्तद्विरोधविधायिना न कश्चिद्दोष:। तस्माद्वाक्यार्थीभूतस्य रसस्य भावस्य वा विरोधो रसविरोधीति वक्तु न्याय्य:, न त्वङ्गभूतस्य कस्यचित्।

लीला— विषयान्तरे विरोधपरिहाराय प्रकारान्तरं निर्दिशति किञ्चेत्यादिना किञ्च= इति प्रकरणारभे, कस्यचित्, अभिनन्दनीयोदयस्य= प्रशस्योन्नते:, नायकस्य फलाऽधिकारिण:, प्रभावातिशयवर्णने= प्रतापाधिक्योपस्थापने, तत्प्रतिपक्षाणां= तस्य नायकत्वेनोपवर्णनीयस्य प्रतिपक्षाणां प्रतिद्वन्द्विनां, य:, करुण:= शोकात्मा, रस:, स:, परीक्षकाणां= विवेकिनां सामाजिकानां, वैक्लव्य= विकलतां, न, आदधाति= न्यस्यति, प्रत्युत= तद्विपरीतं, प्रीत्यतिशयनिमित्ततां= आनन्दातिरेककारणतां, प्रतिपद्यते= परिणमति इति, अत:= हेतो:, तस्य= तादृशप्रतिपक्षघटितकरुणस्य, कुण्ठशक्तिकत्वात्= बाधितप्रभावत्वेन, मन्दसामर्थ्यत्वात् तद्विरोधविधायिन:= तस्य प्रधानीभूतवाक्यार्थस्य विरोधविधायिनो: वैरकारिण:, अथवा स एव विरोधाभिधायी तस्य, न कश्चिद् दोष: इति।

अत्रेदमुक्तं भवति काव्ये यदा नायकस्य वीरता वर्ण्यते तदा तत्प्रतिपक्षाणां शोचनीयावस्थाऽपि वर्ण्यते एव द्वितीयाभावे प्रथमस्य उत्कर्षातिशयाभावात्। तत्र प्रतिपक्षस्य शोचनीयावस्थया सामाजिकानां नैव चित्तद्रुतिरुत्पद्यते करुणास्वादविश्रान्त्यभावात्। किन्तु वीरस्य योऽसौ क्रोधो व्यभिचारितां प्रतिपद्यते तत्फलरूपोऽसौ करुणरस: स्वकारणाभिव्यञ्जनद्वारेण वीरास्वादातिशये एव पर्यवस्यति। उक्तमेव— 'रौद्रस्य चैव यत्कर्म स ज्ञेय: करुणो रस:' इति। यथा रावणस्य वधे य: शोक: स रामप्रतापातिशयेताव्रियतेयते इति तल वीरस्यैवास्वादो न करुणस्य। किन्तु सतीहरणे तु न तथा तत्र रावणस्य वीरता

शोकेनाच्छाद्यत एव। तेनैव प्रतिपक्ष-करुणः प्रीत्यतिशयकारणतामापद्यते। यथा—

कुरवक कुचाघातक्रीडासुखेन वियुज्ज्यसे,
वकुलविटपिन् स्वमर्तव्यं ते मुखासवसेचनम्।
चरणघटनाशून्यो यास्यस्यशोक सशोकता—
मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः।

यस्य, द्विषां= शत्रूणां, स्त्रियः= प्रमदाः, निजपुरत्यागे= स्वनगरोज्झने, इति= इत्थं, जगदुः= प्रोचुः। किमिति हे कुरवकत्वं सम्प्रति, कुचाघातसुखेन= कुचयो-र्यदाघातः प्रहारः आश्लेषं तस्य क्रीडासुखेन विहारप्रीत्या, वियुज्यसे= वञ्चितोऽसि— कुरवको युवत्यालिङ्गनेन प्रफुल्लितो भवतीति कविसमयख्यातिः। हे वकुलविटपिन ! वकुलवृक्ष ! ते= तव, मुखासवसेचनं= मुखमदिरया आर्द्रीकरणं, स्मर्तव्य- बकुलो हि युवतिजनमुखमदिरासिक्तः प्रफुल्लो भवतीत्यपि कविसमय-ख्यातिरेव, हे अशोकवृक्ष ! चरणाघटनाशून्यः= पादप्रहाररहितः, सन्, सशोकतां= शोचनीयावस्थां, यास्यसि= गच्छसि यवुतिपादाघातादशोको विकसतीति कविप्रसिद्धिः।

अत्र हि वचनं—

पादाघातादशोकतिलककुरवकौ वीक्षणालिङ्गनाभ्यां
स्त्रीणा स्पर्शात्प्रियंगुर्विकसित वकुंल शीधुगण्डूषसेकात्' इति।

अत्र कुचाघातादिना शृङ्गारो व्यज्यते यश्च शत्रूणां करुणापोषकत्वेन करुणस्याङ्गत्वमुपयाति। प्राकरणिकार्थस्तु राज्ञः कस्यचित्प्रभावातिशयो येन प्रतिपक्षस्त्रियस्यतादृशीमवस्थां प्रापिताः। तञ्च करुणः पुष्णाति। एतादृशः शृङ्गारकरुणवीराणां कृशरमपि पाठकान्नैव क्षोभयत्यपितु आनन्दयतिशृङ्गारस्य करुणे करुणस्य वीरे पर्यवसनात्।

तत्र पर्यवसितमाह तस्मादित्यादिना— तस्मात्= तेन हेतुना, वाक्यार्थीभूतस्य= चारुत्वपर्यवसायित्वात्प्राधान्येन स्थितस्य, रसस्य, वा, भावस्य= स्थायिभावस्य वा प्रधानभूतस्य व्यभिचारिणो यथा विप्रलम्भे औत्सुक्यस्य, यः विरोधी= प्रतिपक्षः, स एव, रसविरोधी= रसोपघातकः, इति= इत्थं, वक्तुं= अभिधातुं, न्याय्यः= उपयुक्तः, न, तु, कस्यचित्, अङ्गभूतस्य= वाक्यार्थोपस्कारकत्वेन तदवयत्वमाप्तस्य रसस्य वा भावस्य यो विरोधी स रसविरोधीति।

विषयान्तर में रस के विरोध के परिहार का निर्देश करते हैं—

'किसी प्रशंसनीय उदय वाले नायक के प्रभाव के आधिक्य के वर्णन उसके प्रतिपक्ष की अवस्था को लेकर जो करुण रस होता है वह सामाजिकों में चित्त के पिघलने का कारण नहीं बन पाता, उसके विपरीत आनन्द के अतिशय के कारण में बदल जाता है। इस हेतु से उसके शक्ति के कुण्ठित होने से वैसे में प्रधान रस के विरोधी भी रस का निबन्धन कोई दोष नहीं होता। जैसे—

हे कुरवक, 'तुम अब स्तनों के आघात का जो क्रीडा सुख था उससे बञ्चित हो गए हो, हे वकुलवृक्ष,' तुम भी मुख की मदिरा का सेवन याद कर लेना, हे अशोक ! तुम भी अब चरण के स्पर्श से शून्य होकर शोक वाला बन जाओगे इस तरह जिसके शत्रु की स्त्रियों ने नगर छोड़कर जाते समय कहा।'

यहाँ स्तनों के आघात के वर्णन से शृङ्गार व्यक्त होता है और वह शत्रुओं के करुण का पोषक होने से उसका ही अङ्ग बन जाता है और करुण जो है वह राजा के प्र भावातिशय का पोषक होने से वीर रस का अङ्ग बन जाता है। इस तरह शृङ्गार करुण एवं वीर रास की खिचड़ी भी सामाजिकों में क्षोभ उत्पन्न नहीं करती किन्तु उलटे ही अत्यधिक आनन्द देती हैं। क्योंकि शृङ्गार करुण में, करुण वीर में पूर्णत': समर्पित है और चारुत्व का पर्यवसान वीर रस में होता है और सामाजिकों को वही आनन्दित करता है।

ध्वन्या०-- अथवा वाक्यार्थीभूतस्यापि कस्यचित्करुणरसविषयस्य तादृशेन शृङ्गारवस्तुना भङ्गिविशेषाश्रयेण संयोजनं रसपरिपोषायैव जायते। यत: प्रकृतिमधुरा: पदार्था शोचनीयतां प्राप्ता: प्रागवस्थाभाविभि: संस्मर्यमाणैर्विलासैरधिकतरं शोकावेशमुपजनयन्ति। यथा—

अयं स रसनोत्कर्षी पोनस्तनाविमर्दन:।
नाभ्यूरूजघनस्पर्शी नीवीविस्रं सन: कर:।।

इत्यादौ। तदत्र त्रिपुरयुवतीनां शाम्भव: शराग्निरार्द्रपराध: कामी यथा व्यवहरति स्म तथा व्यवहृतवानित्यनेनापि प्रकारेणास्त्येव निर्विरोधत्वम्। तस्माद्यथा यथा निरूप्यते तथा तथात्र दोषाभाव:।

लीला— पुन: प्रकारान्तरेणाऽपि विरोधपरिहारस्योपायं निर्दिशति अथवेत्यादिना अथवा= पक्षान्तरे, न केवलमङ्गभूतस्यापितु वाक्यार्थीभूतस्य= चारुत्वपर्यवसायितया वाक्यार्थत्वेन निरूपितस्य, करुणरसविषयस्य, तादृशेन= तथोपस्कारकेन भङ्गिविशेषाश्रयेण= विशिष्टचेष्टाश्रितेन, चमत्कारयुक्तेन शृङ्गार- वस्तुना= शृङ्गारसामग्र्या, संयोजन= सङ्घटन, रसपरिपोषाय= रसोत्कर्षाय, एव, जायते= सपद्यते। तत्र हेतुमहा— यत:= यस्मात्, शोचनीततां= दयनीयतां शोकनिमित्ततां, प्राप्ता:= गता:, प्रकृतिमधुरा:= स्वभावेनाह्लादका:, पदार्था:= विषया:, प्रागवस्थाभाविभि:= पूर्वावस्थासम्पन्नै:, सस्मर्यमाणै:= स्मृतिपधमापद्यमानै:, विलासै:= विभ्रमै:, अधिकतर, शोकावेश= शुचावेगं, उपजनयन्ति:, उत्पादयन्ति इति। यथा—

तदुदाहरति अयमित्यादिना— अयं= एष:, छिन्न:, रशनोत्कर्षी= रशनाया: काञ्च्या: उत्कर्षी ऊर्ध्वमाकुञ्चक:, पीनस्तनविमर्दन:= पृथकुचविमोटक:, नाभ्यूरुजघनस्पर्शी= नाभि:, ऊरू सक्थिनी, जघनञ्च= कटिपूर्वभागश्च तत्स्पृशति परामृशति तच्छील:, नीवीविस्रंसन:= नीव्या: शाटिकाग्रन्थे: विस्रंसनो मोचक:, स:= प्रागग्यकदेवानभूत:, कर:= भज इति।

रणेच्छिन्नं भूरिश्रवसो भुंज विलोक्य तत्वमदानां विलपनमिदम्। अत्र हि काञ्च्युर्ध्वाकुञ्चनस्तनमोटन– जघनपरामर्शनीवीमोचनादि प्राग्विहारस्मरणव्य-ङ्ग्योऽपि शृङ्गाररसः प्रकरणे तत्स्मरणेन शोकातिशयवृद्धेः करुणस्याङ्गम्। प्राधान्यं तु करुणस्यैवेति तत्रैव चारुत्वपर्यवसायात्।

इत्यादौ= इत्यादिकथने।

तत्राभीष्टमाह– तदित्यादिना– तद्= तस्मात्, अत्र= 'क्षिप्तो हस्तावलग्नः' इत्यादौ त्रिपुरयुवतीनां= त्रिपुररमणीनां, 'शाम्भवः शराग्निः' आर्द्रापराधः कामी यथा= येन प्रकारेण व्यवहरति= विदधाति, तथा, व्यवहृतवान् इति, अनेन, अपि, प्रकारेण, निर्विरोधत्वं= विरोधाभावः अस्त्येव, इति। तस्मात्= तेन, यथा- यथा येन-येन प्रकारेण, निरूप्यते= विवेच्यते, अत्र, तथा, तथा, दोषाभाव इति।

फिर प्रकारान्तर से रसविरोध का परिहार बताते हैं–

अथवा वाक्यार्थ होने से प्रधान ही बने करुण रस के किसी विषय का उस प्रकार के–अङ्ग बने भङ्गि विशेष उक्त वैचित्र्य में आश्रित शृङ्गार वस्तु के संयोजन रस के परिपोष के लिए होता है। क्योकि शोचनीय अवस्था को प्राप्त हुए प्रकृति से ही मधुर पदार्थ पहले की अवस्था में घटे एवं वर्तमान में स्मृति पथ में आए विलासी से और ज्यादा ही शोक के आवेश को उपजाते हैं। जैसे–

यह वही रशना को ऊपर की ओर खींचने वाला, मोटे स्तनों का विशेष प्रकार से मर्दन करने वाला, नाभि, ऊरू एवं जघन का परामर्श करने वाले एवं नींवी को शिथिल करने वाला हाथ है। इत्यादि हैं।

यहाँ रशना के ऊपर की ओर खींचने वाला आदि कथनों से शृङ्गार की अभिव्यक्ति होती है लेकिन प्राकरणिक रस तो करुण ही है क्योंकि यह बात युद्ध में कटे हुए पति के हाथ को लेकर कही गई है। और उस शृङ्गार से करुण की और पुष्टि हुई है न कि विरोध।

फिर प्रकृत का अनुसरण करते हैं–

तो, इस प्रकार इस 'क्षिप्त हस्तावलग्न' इस श्लोक में त्रिपुर की युवतिय के साथ वह शम्भु का शर रूप अग्नि ने ताजा अपराध वाला कामी जन जैसे व्यवहार करता है उसी तरह का व्यवहार किया कभी हाथ पकड़ा तो कभी पाँव पकड़ा आदि इस प्रकार से भी विरोध का अभाव ही है। इस कारण जैसे–जैसे निरूपण किया जाय वैसे-वैसे दोष का अभाव ही दिखाई पड़ता है।

ध्वन्या०– इत्थं च–

क्रामन्त्यः क्षतकोमलांगुलिगलद्रक्तैः संदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः।
भीता भर्तकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव।।

इत्येवमादीनां सर्वेषामेव निर्विरोधत्वमवगन्तव्यम्।

एवं तावद्रसादीनां विरोधिरसादिभिः समावेशमासावेशयोर्विषयो- विभागो दर्शितः।

लीला— इत्थं रसविरोधप्रकरणे प्रतिप्रसवमुक्त्वा तादृशान्यन्यान्यपि प्रकर- णानि सन्तीति बोधयितुमुपक्रमते इत्थञ्चेत्यादिना— इत्थं= अत्र अङ्गभावप्राप्त्या, च= रसविरोधपरिहारः— यथा—

उदाहरति क्रामन्त्य इत्यादिना त्वद्वैरिनार्यः अधुना क्षतकोमलाङ्गुलि- गलद्रक्तैः पातितयावकैः, इव पादैः सदर्भाः स्थलीः क्रामन्त्यः पतद्बाष्पाम्बुधौ- ताननाःभीताः भर्तृकरावलम्बितकराः पुनरपि, उद्यद्विवाहा इव दावाग्निं परितः भ्रमन्ति इति पदव्यवस्था।

त्वद्वैरिनार्यः= तव भवतां वैरीणां शत्रूणां नार्यः प्रमदाः, क्षतकोमलाङ्गुअ- लिगलद्रक्तैः= क्षता विद्धाः कोमला पेलवाः या अंगुल्यः ताभ्यो गलत् क्षरत् रक्त शोणितं येषु, तैः तादृशैः अत एव पातितयावकैः= पातितो निहितो यावकोऽलक्तको येषु तैः, इव, पादैः= चरणैः, सन्दर्भाः= कुशयुक्ताः स्थलीः= प्राकृतबनभूमिः, पक्षे विवाहवदीश्च, क्रामन्त्यः= परिभ्रमन्त्यः, पतद्बाष्पाम्बुधौ- तानना:= पतन्ति प्रसवन्ति-एकतो बान्धवजनविरहाद् स्वदुर्दशावशाद्वा अपरतश्च धूमवेगात् यानि वाष्पाम्बूनि अश्रुणि तैः धौत प्रक्षालितं आननं मुख यासान्ताः, भीताः= त्रस्ताः एकतः शत्रुर्मा द्राक्षीदिति अपरतस्तु भर्ता माऽननुरक्तोऽभूदिति, भर्तृकरावलम्बितकराः= भर्तुः पत्युः करेण भुजेन आलम्बिता धृताः करा भुजा यासान्ताः, पुनरपि= भूयोऽपि, उद्यद्विवाहाः= उद्यत् सम्पद्यमानो विवाहः परिणयो यासान्ताः, इव, दावाग्निं= वनवैश्वानरं, परितः, भ्रमन्ति= सञ्चरन्तीति।

तत्राभीष्टं निर्दिशति इत्येवमित्यादिना—इति= इत्थं, एवमादीनां= एवंविधानां, प्रधानस्यैकस्य अङ्गत्वेन— स्थितानां, सर्वेषां= निखिलानां, एव, निर्विरोधत्वं= विरोधाभावः, अवगन्तव्यं= ज्ञातव्यमिति।

अत्र प्राग्विवाहावस्थाकथनादाक्षिप्तःशृङ्गारस्तात्कालिकावस्थाक्षिप्तकरुणस्य पोषकत्वेन तदङ्गभूतस्तथा करुणश्च प्रधानभूते राजविषयकरतिं पुष्णातीति तयोर्विरुद्धयोरपि अङ्गभावाद्विरोधनिवृत्तिरिति। प्रकरणुपसंहरति एवमित्यादिना— एव= इत्थं, तावत्= प्राथम्येन रसादीनां= रसभावादीनां, विरोधिरसादिभिः= प्रतिकूलप्रकृतिरसभावादिभिः, समावेशासमावेशयोः= सन्निवेशतदभावयोः विष- यविभागः= लक्ष्यविभाजन, दर्शितः= निरूपित इति।। २०।

इस प्रकार रसविरोध के प्रकरण में उसके परिहार के कुछ निर्देशों का उपस्थापन करने के बाद ऐसे और भी अवसरों की सम्भावना बताने के लिए उपक्रम करते हैं— इस प्रकार के और कुछ और भी रसविरोध के परिहार के अवसर होते हैं। जैसे—

आपके वैरियों को प्रमदायें जरठों से काटे गए कोमल अंगुलियों से प्रवाहित है रक्त जिसके ऐसे अतः महावर लगाए हुए के समान पैरों से दर्भ से युक्त स्थलियों

(वेदियों भी) को पार करती हुई बहुत आँसुओं से धोए हैं युद्ध जिसके ऐसे, डरी हुई और पति के हाथों से हाथ पकड़ी गई दावाग्नि की चारों ओर घूमती है मानों कि उनका फिर विवाह हो रहा हो। इत्यादि सब का ही विरोधाभाव जान लेना चाहिए। कहने का आशय यह है कि चाहे अनुवाद से वा सहकारिता से अङ्ग भाव में प्राप्त रसों का कोई विरोध नहीं होता। यहाँ भी पहले के विवाह की याद से शृङ्गार रस आक्षिप्त होता है किन्तु दह वर्तमान अवस्था के वर्णन से आक्षिप्त करुण रस का ही पोषक बन कर रह जाता है। क्योंकि चारुत्व का पर्यवसान उनमें नहीं होता। करुण भी प्रकारणिक अर्थ है नहीं, वह तो है राजा के प्रभाव के अतिशय का वर्णन। अतः करुण उसी के उत्कर्ष में बढ़ौती लाता है। अतः दोनों शृङ्गार और करुण में परमुखापेक्षी होने के कारण कोई विरोध नहीं रहता।

प्रकरण का उपसंहार करते हैं—

इस प्रकार प्राथमिकता से रसभावादि का विरोधी रस, भाव आदि के साथ समावेश एवं असमावेश का विषय का विभाग दर्शाया गया।। २०।।

ध्वन्या०— इदानीं तेषामेकप्रबन्धनिवेशने न्याय्यो यः क्रमस्तं प्रतिपादयितुमुच्यते—

कारिका— प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने।
एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता।। २१ ।।

प्रबन्धेषु महाकाव्यादिषु नाटकादिषु वा विप्रकीर्णतयाङ्गाङ्गिभावेन ब्रहवो रसा उपनिबध्यन्त इत्यत्र प्रसिद्ध सत्यामपि यः प्रबन्धानां छायातिशययोगमिच्छति तेन तेषां रसानामन्यतमः कश्चिद्विवपक्षितो रसोऽङ्गित्वेन निवेशशितव्य इत्ययं युक्ततरो मार्गः।

लीला— पूर्ववाक्ये तावच्छन्देन यद्वक्तव्यानन्तरं सूचितं तदेवावतारणायोपक्रते इदानीमित्यादिना इदानीं= सम्प्रति, तेषां= रसानां विध्यनुवाद्यत्वेन प्रधानसहकारित्वेन वा स्थितानां, एक प्रबन्धविनिवेशने= समाने एव प्रबन्धे संयोजने, न्याय्यः= उपयुक्तः, यः, क्रमः= पर्यायः, तै, प्रतिपादयितुं= निर्देष्टुं, उच्यते= कथ्यते—

तन्निर्देशककारिकामवतारयति प्रसिद्ध इत्यादिना प्रबन्धानां नानारसनिबन्धने प्रसिद्धे अपि तेषां उत्कर्षं इच्छता कविना एकः रसः अङ्गीकर्तव्यः इति पदव्यवस्था।

प्रबन्धानां= महाकाव्यादीनां, ननारसनिबन्धने= प्रकरणानुसारमङ्गाङ्गिभावेन विविधरसग्रन्थने, प्रसिद्धे= प्रचलिते भरतादिशास्त्राचार्यैर्निरूपिते, अपि, तेषां= तमथाविधविविधरसानां, उत्कर्षं= परकोटीं, इच्छता= अभिवाञ्छता, कविना, एकः= कश्चिदेको यः प्राकरणिकत्वेन विवक्षितो भवति स एव, रसः, अङ्गीकर्तव्यः= अङ्गित्वेन वाक्यार्थत्वेन कर्तव्यो निबन्धनीयः अन्येषां तु तदङ्गत्वेनैवेति।

कारिकां विवृणोति वृत्तिकारः प्रबन्धेष्वित्यादिना महाकाव्यादिषु= सर्गबन्धा-त्मकसङ्घटनाविशेषेषु, अनभिनेयेषु प्रबन्धेषु= सङ्घटितवाक्यसमुदायेषु, वा, नाटकादिषु= अभिनेयवस्तुषु रूपकेषु, विप्रकीर्णतया= तया परस्परानपेक्ष्यस्थि-तित्वेन, नायकप्रतिनायकपताकाप्रकरीनायकादिनिष्ठतया च, अङ्गाङ्गिभावेन= प्रबन्धनायकमात्रनिष्ठत्वेन, च, बहवः= अनेके, रसाः, उपनिबध्यन्ते= ग्रथ्यन्ते, इति= इत्थं, अत्र= अस्मिन् प्रकरणे, प्रसिद्धौ= ख्यातौ, सत्यां= विद्यमानायां, अपि, यः, प्रबन्धानां= महाकाव्यादिनाटकादीनां, छायातिशययोगं= विच्छित्याधि-क्यसंयोजनं, इच्छति= वाञ्छति, तेन= हेतुना, तेषां, रसानां, अन्यतमः= कश्चिदेकः, कश्चित्, विवक्षितः= प्रकरणाभीष्टः, रसः अङ्गित्वेन= प्रधानत्वेन, विनिवेशयितव्यः= साधयितव्यः, इति, अयं= एषः, युक्ततरः= न्याय्यः सुसङ्गतश्च मार्गः= पन्था इति।

यद्यपि प्रबन्धेषु नानारसानामङ्गाङ्गिरूपेण सन्निवेशनं सम्भवति तथापि तत्र तेषों यः प्रकरणस्य विच्छित्याधिक्यप्रयोजनः स एव तत्र अङ्गित्वेन निबद्धश्च-रारुत्वातिशयं पुष्णाति। यत्र च नानारसानामेवाङ्गित्वं प्रकरणानुरूपं भवति तदपि युक्तमेव यथा समवकारादौ पर्यायबन्धादौ च किन्तु प्रबन्धे एकस्यैव रसस्यअङ्गित्वं युक्ततरं भवति तस्यैव काव्यार्थत्वादिति।

अत्र दीधितौ 'यत्तु महाकाव्यादिषु आदिशब्दः प्रकारेणाभिनेयानाह द्वितीय-स्त्वभिनयान्' इति कैश्चिदभिहितं, तत्र, अभिनयस्य प्रबन्धत्वाभावात् तत्साजा-त्यविरहात् इति कथयित्वा स्वयं च प्रकारवाचिनावादिशब्दौ तत्सजातीयानि सकलानि श्रव्यकाव्यानि दृश्यकाव्यानि च बोधयत इति यदुक्तं तत्र टीकाकर्तुः किमभिप्रेतमिति नैव स्पष्टं प्रतिभाति। स यदेव चिकथायिषति तदेवोक्तमस्ति लोचनेऽपि। ''महाकाव्यादिषु आदिशब्दः प्रकारे अनभिनेयान् भेदानाह— द्वितीय-स्त्वभिनेयान्'' इति तत्र कथितमस्ति। महाकाव्यादिष्वित्यत्र य आदिम आदिशब्दः स समस्तानेव अनभिनेयान्भेदान्निर्दिशति, द्वितीयस्तु आदिशब्दो यो नाटका-दिष्वित्यत्र वर्तते, स तु समस्तानभिनेयान् भेदानाह 'इति तत्रोक्तमस्ति। उभावेव महारथितौ एकवाक्यमेव वदतः। तत्, तेन अभिनयस्य प्रबन्धत्वाभावात् तत्सजा-त्यविरहात्' इति यदुक्तं तदेव निष्प्रयोजनं प्रतिभाति। स्पष्टतयाऽनवधा-रितत्वेनास्माभिस्त्रोद्धृतं न खण्डनायेति।। २१ ।।

पूर्ववाक्य में 'तावत्' शब्द से जो वक्तव्य शेष सूचित किया था उसी को कहने के लिए उपक्रम करते हैं—

'अब उन रसों के एक ही प्रबन्ध में विनिवेशन करने का जो उपयुक्त क्रम है उसके प्रतिपादन करने के लिए कहा जाता है—

कारिका अवतारण करते हैं—

''प्रबन्धों का नाना प्रकार के रसों का निबन्धन प्रसिद्ध होने पर भी उनका (रसों का) उत्कर्ष चाहने वाले कवि को चाहिए कि वह प्रबन्ध में एक ही रस को अङ्गी बनाए।''

वृत्तिकार कारिका के आशय का पल्लवन करते हैं—

महाकाव्य आदि वा नाटक आदि प्रबन्धों में (यहाँ आदि शब्द से प्रकार का बोध होता है। अर्थात् सभी प्रकार के अनभिनेय एवं अभिनेय प्रबन्धों में बिखरे हुए रूप में अङ्गभाव एवं अङ्गिभाव से अनेकों रस उपनिबद्ध किए जाते हैं इस प्रकार की यहाँ प्रसिद्धि होने पर भी जो प्रबन्धों की शोभा की अतिशयता को बढ़ाना चाहता है वैसा उन रसों में से एक कोई प्रकरण से अत्यन्त सम्बद्ध विवक्षित रस अङ्गी के रूप में विनिवेशित हो ऐसा यह अधिक अच्छा मार्ग है।

इसका यह भी आशय है कि यदि कहीं प्रकरण से एक से अधिक रसों का अङ्गी बनाया जाना उपयुक्त हो तो वह भी दोष तो नहीं है लेकिन प्रबन्धों में अङ्गी के रूप में एक ही रस का सन्निवेश अधिक अच्छा पड़ता है। वह कौन सा रस हो ? यह तो प्रकरण ही बनाएगा—जो सबसे अधिक उपयुक्त हो प्रकरण के लिए। (भाग में वीर एवं शृङ्गार को छोड़कर सभी रस, इसी तरह व्यायोग में भी, और जहाँ भी विशेष प्रयोजन हो, वहाँ उसी तरह करना चाहिए।। २१ ।।

ध्वन्या०— ननु रसान्तरेषु बहुषु प्राप्तपरिपोषेषु सत्सु कथमेकस्याङ्गिता न विरुध्यत इत्याशङ्क्येदमुच्यते—

कारिका— रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः।

नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः।। २२ ।।

ध्वन्या०— प्रबन्धेषु प्रथमतर प्रस्तुतः सन् पुनः पुनरनुसन्धीयमानत्वेन स्थायी यो रसस्तस्य सकलप्रबन्धव्यापिनो रसान्तरैरन्तरालवर्तिभिः समावेशो यः स नाङ्गितामुपहन्ति।

लीला— स्वयं लब्धपरिपोषस्य कथमङ्गत्वमलब्धपरिपोषस्य कथं रसत्वमिति रसत्वमङ्गत्वं चान्योन्यविरुद्धमित्याशङ्कापरिहाराय तत्समाधायककारिकावतारणायोपक्रमते नन्वित्यादिना ननु= इति सन्देहे, बहुषु= अनेकेषु रसान्तरेषु= अन्यविधरसेषु, प्राप्तपरिपोषेषु= अवाप्तस्वसामग्रीकृतपूर्णपुष्टिषु, सत्सु= विद्यमानेषु, एकस्य= कस्यचिदेकस्य, अङ्गिता= प्रधानभावः, न, विरुध्यते= नैव विप्रीयत इति= इत्थं, आशङ्क्य, इदं= उच्यमानकारिकागतविषयः, उच्यते= कथ्यते इति।

अलब्धपरिपोषत्वे रसत्वमेव न सम्भवति, लब्धपरिपोषश्च रसः कथं रसान्तरस्य अङ्गत्वमायाति तेन रसत्वमङ्गत्वं च परस्परविरुद्धमेव, अङ्गत्वासिद्धेरङ्गित्वमपि स्वतोसिद्धमेवेत्याशङ्कानिरासायेदमुच्यते इत्यस्याशयः।

तत्कारिकामवतारयति रसान्तरेत्यादिना प्रस्तुतस्य रसस्य यः रसान्तरसमावेशः सः स्थायित्वेन अवभासिनः अस्य अङ्गितां न उपहन्ति इति पदव्यवस्था।

प्रस्तुतस्य= प्राकरणिकस्य समस्तेतिवृत्तव्यापिनः यः= यादृशः, रसान्तरसमावेशः= इति वृत्तवशायातपरिमितकथासकलव्यापी योऽन्यो रसस्तस्य समावेशः सन्निवेशः सः, स्थायित्वेन= प्रबन्धव्यापित्वेन, अवभासिनः= द्योतिनः

अस्य= वाक्यार्थीभूतावयवस्य रसस्य, अङ्गितां= अङ्गिभाव, न, उपहन्ति= दूषयतीति। कारिकां विवृणोति वृत्तिकारः प्रबन्धेष्वित्यादिना प्रबन्धेषु= अभिनेयानभिनेयसङ्घटितवाक्यसमुदायेषु, प्रथमतर= प्राथमिकत्वेन, प्रस्तुतः= सन्निविष्टः, सन्= विद्यमानः, पुनः पुनः= भूयोभूयः प्रकरणानुसारमन्तराऽपि, अनुसन्धीयमानत्वेन= प्रत्यवमृश्यमानत्वेन, स्थायी= समग्रप्रबन्धव्यापी, यः रसः, सकलबन्धव्यापिनः= समग्रप्रबन्धाचायिनः तस्य= रसस्य, अन्तरालवर्तिभिः= मध्ये आपतितैः, रसान्तरैः= अन्यविधरसैः, यः समावेशः= समुपन्यासः, सः, अङ्गितां= अङ्गित्वेनावस्थितिं, न, उपहन्ति= दूषयति अपितु पोषयत्येवेति।

अस्यायमाशयः— यद्यपि इतिवृत्तवशायातानि परिमितकथाक्षेत्रव्यापीनि रसान्तराणि अपि स्वस्वविभावादिसामग्र्या लब्धपोषाणि चमत्कारातिशयनादधते एवं तथापि स चमत्कारस्तत्रैव न परितुष्य चमत्कारान्तरमनुधावपि पूर्णतायै। यत्र च चमत्कारः पर्यवस्यति स एव अङ्गी भवति। तेन तेषामङ्गाङ्गित्वं नैव परस्परं विप्रीयत इति।

उक्तमेव—

"गुणः कृतात्मसस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते।" इति लोचने।। २२।।

"प्रबन्ध में जहाँ तक हो एक ही रस अङ्गी बने, जो कहा गया उसमें यह आशङ्का हो सकती है कि रस होने के लिए परिपुष्ट होना आवश्यक है और एक परिपुष्ट रस दूसरे का कैसे अङ्ग हो जाता है, इस पर प्रकाश डालने वाली कारिका के अवतारण हेतु उपक्रम करते हैं—

जहाँ अनेक रस परिपुष्ट हुए रहते हैं वहाँ कैसे एक किसी की अङ्गिता विरुद्ध नहीं होती, इस प्रकार की आशङ्का कर यह कहा जाता है—

कारिका का अवतारण करते हैं—

प्रस्तुत अर्थात् प्रबन्धव्यापी रस का जो रसान्तरों का समावेश है वह स्थायी रूप से अवभासित होने वाले इसकी अङ्गिता को दूषित नहीं करता अपितु पोषित करता है।। २२।।

वृत्तिकार कारिका के आशय का पल्लवन करते हैं—

प्रबन्धों में प्राथमिक रूप से प्रस्तुत होकर फिर-फिर अनुसन्धीयमान होने से स्थायी जो रस है समस्त प्रबन्ध व्याप्त उसका बीच-बीच में परिमित कथा खण्डों में आने वाले अन्यविध रसों का समावेश जो है वह अङ्गिता की हानि नहीं पहुँचाता प्रत्युत पुष्टि करता है।

अंग रस वह होता है जो प्रबन्ध में पहले पहल निबद्ध होकर फिर-फिर अनुसन्धीयमान होता हुआ पूरे प्रबन्ध भर चलता है। अङ्गी रस वह होता है जो बीच-बीच में आने वाले कथा खण्डों तक ही व्याप्त रहता है। उनका जो चमत्कार

है उतने ही में पर्यवसित न होकर किसी दूसरे दीर्घगामी चमत्कार की ओर दौड़ता है। अत: उनकी अंगता मात्र होती है और जिसमें चमत्कार का पर्यवसान हो उसकी अङ्गिता होती है।। २२।।

ध्वन्या०— एतदेवोपपादयितुमुच्यते—

कारिका— कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते।
तथा रसस्यापि विधौ विरोधी नैव विद्यते।। २३।।

ध्वन्या०— सन्ध्यादिमयस्य प्रबन्धशरीरस्य यथा कार्यमेकमनुयायि व्यापकं कल्प्यते न च तत्कार्यान्तरैर्न संकीर्यते, न च तै सङ्कीर्यमाणस्यापि विरोधो न कश्चित्। प्रत्युतिविवेकानामनुसन्धानवतां सचेतसां तथाविधे विषये प्रह्लादातिशय: प्रवर्तते।

लीला— एतस्यैव परिपुष्टरसेष्वन्यतमस्य अङ्गत्व यदुक्तं दृष्टान्तमुखेन तत्प्रतिपादककारिकावतारणाय वृत्तिकृदुपक्रमते एतदित्यादिना— एतत्= सिद्धेषु बहुषु रसेष्वेकस्याङ्गित्वं, एव, उपपादयितुं= समुचितदृष्टान्तनिरूपणेन साधयितु, उच्यते= कथ्यत इति।

तामेव कारिकामवतारयति कार्यमित्यादिना— यथा प्रबन्धस्य व्यापि एकं कार्यं विधीयते तथा रसस्य विधौ अपि विरोध: नैव विद्यत इति पदव्यवस्था।

यथा, प्रबन्धस्य= समग्रकथात्मन: सङ्घटितवाक्यसमुदायस्य, व्यापि= आचायि, एकं,= प्रधानत्वेनाधिकारिकं, कार्यं= बीजं 'स्वल्पमात्रसमुद्दिष्टं बहुधा यद्विसर्पति, इति लक्षणं, विधीयते= क्रियते, तथा= तथैव, रसस्य, विधौ= विषये, अपि, विरोध:, नैव, विद्यत इति।

यथा प्रबन्धे प्रथमं स्वल्पमात्रसमुद्दिष्टं बहुधा विसर्पति प्रबन्धव्यापित्वेन एकमेव बीजं तथैव रसोऽपि अङ्गित्वेन एक एव विसर्पति तत्र नैव कश्चिद्विरोध:। अथवा प्रबन्धे कार्यं त्वेकमेव भवत्याधिकारिकमन्यत्प्रासङ्गिकादिकं तु तस्यैव पूर्णतायै स्वीकृतमेव। तेनैव कार्याणामपि अङ्गाङ्गिभावरूपेण रसानामपि अङ्गाङ्गित्वं सञ्जायत एवेति।

कारिकां विवृणोति वृत्तिकृत्सन्ध्यत्यादि— सन्ध्यादिमयस्य= मुखप्रतिमुखादिसन्धितदंगरूपस्य तथा तथा विभक्तस्य, प्रबन्धशरीरस्य= कथाविग्रहस्य, यथा= यद्वत्, एकं, एव, कार्यं= बीजं, अनुयायि= उपसंहर्ति यावदनुयामि, व्यापकं= आचायि, कल्प्यते= संपद्यते, तत्= तादृशं प्रधानत्वेन व्यपदिष्टं कार्यै:, कार्यान्तरै:= प्रासङ्गिककार्यै:, न= नैव, सङ्कीर्यते= सम्बध्यते अङ्गाङ्गिभावेन, इति, न= अपितु सम्बध्यत एव, तै:= कार्यान्तरै:, सङ्कीर्यमाणस्य= सम्बध्यमानस्य, अपि,, तस्य= कार्यस्य, प्राधान्यं= प्रधानभावं, मुख्यत्वं, अपचीयते= ह्रसत एव अपितु वर्धते। एव तथैवं प्रधानातिरिक्तमपि, अनेकस्य= एकाधिकस्य, रसस्य, सन्निवेशे=

ग्रथने, क्रियमाणे= विधीयमाने, लन, कश्चिद्, विरोधः इति प्रत्युत= तद्विपरीतमेव, प्रत्युदितविवेकानां= समुदितयथार्थवस्तुस्वरू- पावधारणशक्तीनां, अनुसन्धानवतां= अन्वेषकाणां, सचेतमां= अहृदयानां, तथाविधे— तादृशे, विषये= लक्ष्ये, प्रह्लादातिशयः= आनन्दातिरेकः, नप्रवर्तते= जागर्ति इति। यथा तापसवत्सराजे इति लोचने।

अस्यायमाशयः— आद्यन्तमेव निश्चित्य पञ्चधा तद्विभज्य च 'इत्युक्तदिशा पञ्चकार्यावस्थात्मकं पञ्चार्थप्रकृतियुतं पञ्चसन्धिगुम्फितं कथाविग्रहं प्रबन्धव्यापित्वेन यद्विसर्पति तदाधिकारिकं किञ्चिद्दूरगामि तदङ्गं प्रासङ्गिकं भवति। प्रासङ्गिकेऽपि पताकाप्रकर्यौ भवतः। पताकायाः प्रसङ्गत एव स्वार्थी भवति तदपि आधिकारिककथानुकूल्येन। यथा रामायणे सुग्रीवकथा। प्रकरी तु प्रदेशभागेव भवति सम्पूर्णत्वेनाधिकारिकपरायणा। यथा रामायणे शबरीकथा। पञ्च, कार्यावस्था यथा आरम्भयत्न— प्राप्त्याशानियताप्तिफलागमाः पञ्च अर्थप्रकृतयश्च बीजविन्दुपताकाप्रकरीकार्याणि। यत्र बीजं स्वल्पोद्दिष्टं तु तद्धेतुर्बीजं विस्तार्यनेकधा, एवमेव विन्दुश्च' अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणमिति। तथैव' पञ्चार्थप्रकृतयः पञ्च कार्यावस्थासमन्विताः मुखाद्याः पञ्च सन्धयो भवन्ति। तत्राधिकारिकं वृत्तं बीजान्निर्वहणपर्यन्तं व्याप्नोति, पताका तु आगर्भादाविमर्शाद्वा विनिवर्तते तनोऽप्युनव्याप्तितया प्रकरी इति। तथैव एक एव मुख्योऽङ्गी रसः प्रबन्धव्यापी, अन्ये च पताकावत्किञ्चिद् दूरगामिनस्तस्याङ्गान्येव केचित् केचित्तु प्रकरीवत्प्रदेशभाज एवेति रसानामङ्गच्यङ्गभावकल्पनेति।। २३।।

एक पुष्ट रस के दूसरे परिपुष्ट रस के अङ्ग होने की जो बात कही थी, उसे दृष्टान्त के रूप में समझने वाली कारिका के अवतारण हेतु वृत्तिकार उपक्रम करते हैं—

इसी के उपपादन के लिए कहा जात है-

जैसे प्रबन्ध में एक ही कार्य व्यापक रूप से वर्णित होता है और उसकी व्यापकता की सिद्धि के लिए ही पताका प्रकरी आदि होते हैं वैसे हीं रस की विधि में कोई विरोध नहीं होता। (एक ही रस प्रबन्ध व्यापी होता है और अन्य रस पताका, प्रकरी की तरह उसकी व्यापकता को बनाए रखते हैं।) वृत्तिकार कारिका के आशय का पल्लवन करते हैं—

मुख आदि सन्धिमय प्रबन्ध शरीर का जैसे एक ही कार्य विन्दुरूप अर्थ प्रकृति से निर्वहण पर्यन्त व्यापक बनाया जाता है वह दूसरे कार्यों से सम्बद्ध नहीं होता, ऐसी बात नहीं, होती है, उनसे सम्बन्धित होने पर भी उसकी प्रधानता घटेगी नहीं, बल्कि और बढ़ेगी। उसी तरह एक ही रस का अङ्गी के रूप में सन्निवेश किए जाने पर कोई विरोध नहीं होता। उलटे ही विवेकशील एवं अन्वेषक सहृदयों को उस प्रकार के विषय में आनन्द की अतिशयता प्रवर्तित होती है।

जैसे-सन्धि आदि स्वरूप कथा शरीर का एक ही कार्य आदि से अन्त तक अन्वित होकर चलता है और उसके पताका प्रकरी आदि दूसरे कार्य सहायक वा अंग होते हैं उसी तरह प्रबन्ध में एक ही रस आद्योपान्त व्याप्त होता है बीच-बीच में प्रसङ्ग से आने वाले रस उसके अंग होते हैं। उसमें कोई विरोध नहीं।। २३।।

ध्वन्या०— ननु येषां रसानां परस्पराविरोधः यथा वीरशृङ्गारयोः शृङ्गारहास्ययो रौद्रशृङ्गारयोर्वीराद्भुतयोर्वीररौद्रयो रौद्रकरुणयोः शृङ्गाराद्भुतयोर्वा तत्र भवत्वङ्गाङ्गिभावः, तेषां तु कथं भवेद्येषां परस्परं बाध्यबाधकभावः ? यथा शृङ्गारबीभत्सयोर्वीरभयानकयोः शान्तरौद्रयोः शान्तशृङ्गारयोर्वा।

इत्याशङ्क्येदमुच्यते—

कारिका— अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे।
परिपोषं न नेतव्यस्तथास्यादविरोधिता।। २४।।

अङ्गिनि रसान्तरे शृङ्गारादौ प्रबन्धव्यङ्ग्ये सति अवरोधी विरोधी वा रसः परिपोषं न नेतव्यः।

लीला— सम्प्रति विरुद्धरससमावेशप्रकारं निर्देष्टुं तत्सम्बद्धकारिकावताराय वृत्तिकृदुपक्रमते नन्वित्यादिना-ननु इति प्रश्ने, येषां, रसानां, परस्पराविरोधः= मिथो विरोधाभावः, तत्र= तदवस्थायां, अङ्गाङ्गिभावः, भवतु, यथा वीरशृङ्गारयोः= युद्धनयपराक्रमदिना कन्यालाभादौ, शृङ्गारहास्ययोः हास्यस्य तु स्वयमपुरुषार्थस्वभावेऽपि समधिकतररञ्जनोत्पादेन शृङ्गाराङ्गतयैव तस्य रसत्वं तेन तस्य स्पष्टमेव शृङ्गाराङ्गत्वम्, रौद्रशृङ्गारयोः— शृङ्गारश्च तैः प्रसभं सेव्यते इति निर्दिष्टदिशा नायिकाविषयौग्र्यवर्जं तयोरविरोधः कथञ्चिदेव, वीराद्भूतयोः— 'वीरस्य चैव यकर्म सोऽद्भुत' इत्युक्तदिशा वीरगाया विस्मयकारित्वेन तयोरविरोधः, वीररौद्रयोः-'रौद्रस्यैव यत्कर्म स ज्ञेयः करुणो रसः' इत्युक्तदिशा तयोरपि अविरोध एव, शृङ्गाराद्भुतयोः— उभयोरेव प्रवर्तनप्रवृत्तिकत्वादविरोधो यथा रत्नावल्यामैन्द्रजालिकदर्शने इत्यादौ। किन्तु तेषां= तादृशानां, तु, सः= अङ्गाङ्गिभावः, कथं= केन प्रकारेण, भवेत्, येषां= रसानां परस्परं= मिथः, बाध्यबाधकभावः= एकस्य स्थित्याऽपरस्य निवर्तनत्वं, अस्तीति शेषः, यथा, शृङ्गारवीभत्सयोः= आलम्बनं प्रति निमग्नरूपतया श्रतिः पलायनरूपतया जुगुप्सेति तयोः परस्परसंस्कारोन्मूलनप्रवृत्तिः, वीरभयानकयोः उत्साहभयानकयोरपि मिथः संस्कारोन्मूलनप्रवृत्तिः यथा भीतो नोत्सहते उत्साहयुक्तो नैव बिभेति इति, शान्तरौद्रयोः— निर्विण्णस्य कुतः क्रोधः क्रुद्धस्य कुतो निर्वेद इति, शान्तशृङ्गारयोः— निर्विण्णस्य कुतो रतिः सानुरागस्य कुतो निर्वेद इति च, इति= इत्थमाशङ्क्य, इदं= उच्यमानप्रकारं, उच्यते= कथ्यते' इति।

अस्यायमाशयः— येषाञ्च रसानां स्वाभाविकी वा परिणामरूपा मैत्री सम्भवति यथा वीरशृङ्गारयोः कामं तेषामङ्गाङ्गिभावः स्यादपि किन्तु येषान्तु परस्परसंस्कारो न्यूनत्वं यथा वीरभयानकयोस्तेषां कथं नाम अङ्गाङ्गिभावः सम्पद्यत इत्याशङ्कापरिहारायेदमुच्यत इति।

कारिकामवतारयति अविरोधीत्यदि— रसान्तरे अङ्गिनि अविरोधी वा विरोधी रसः परिपोष न नेतव्यः तथा अविरोधिता स्यात् इति पदव्यवस्था।

रसान्तरे= कस्मिश्चिदन्ये रसे, अङ्गिनि= अङ्गित्वेन सति अनादरे सप्तमी, अविरोधी= समानप्रकृतिकः, वा= अथवा, विरोधी= प्रतिकूलप्रकृतिकः अपि कश्चिदपि, रस, परिपोषं= अत्यन्तपुष्टता येन स अङ्गिनः प्रतिस्पर्धितां कर्तु प्रभवेत्, न= नैव नेतव्यः= प्रापयितव्यः, तथा= तेन विधिना, अविरोधिता= विरोधाभावः, स्यात्= सम्भवेदिति।

प्रतिस्पर्धिता तयोरेव भवति यौ समबलौ भवतः। परिपुष्टे सति कस्मिंश्चिद्रसेऽङ्गित्वेन रसान्तरस्य न तथा परिपोषः कर्तव्ये येन सोऽङ्गिनस्तुल्यतामारोहेत। तथा सति विरोधः एव निवर्तत इति।

कारिकां विवृणोति वृत्तिकारः अङ्गिनीत्यादिना अङ्गिनि= अङ्गिभूते, रसान्तरे= अन्यरसे, शृङ्गारादौ= शृङ्गारप्रभृतिनि, प्रबन्धव्यङ्ग्ये= प्रबन्धाक्षिप्तत्वे, सति= विद्यमाने, अविरोधी समानप्रकृतिकः, वा, विरोधी= प्रतिकूलप्रकृतिकः, रसः परिपोषं= अत्यन्तपुष्ट्यवस्थां न, नेतव्यः= प्रापयितव्यः इति। अत्र परिपोषमित्यस्यायमेवाशयो यन्नितान्तमेवापुष्टस्तु रसत्वमेव न लभते, भावस्य परकोट्यधिरोहणमेव रसत्वं–अधिरुह्य परां कोटी क्रोधो रौद्रात्मतां गतः 'इत्युक्तेः। तेन तावन्मात्रमेव परिपोषं नेतव्यो यावता तस्यास्वाद्यप्त तु समीवेत्किन्तु नितान्तपुष्टोऽङ्गिनः प्रतिस्पर्धितामपि न गच्छेदिति। यदि अङ्गिरसापेक्षया रसान्तरस्य उत्कर्षो निबध्यते तदा तदविरुद्धोऽपि रसस्तमभिभवितुं प्रयतते किमुत विरुद्धः। अथ च अङ्गभावापेक्षयैव युक्त्यां विषयभेदादियोजनेन अतत्स्तरेणोपनिबध्यते तदविरुद्धोऽपि न दोषावह इति।

अत्र विरुद्धाविरुद्धप्रसङ्गे इदमवधेयं यद्रसाणां द्विधा हि विरोधः सामानाधिकरण्याक्षमत्वेन इतरेरतसंस्कोन्मूलकत्वेन तथाहि यथा रौद्रकरुणौ परस्परं सामानाधिकरण्यं तु नैवसहेते किन्तु रौद्रस्य कर्मत्वेन तस्य व्यवस्थानात्कथञ्चित्तयोः समन्वयः सम्भवति किन्तु ययोः परस्परसंस्कारोन्मूलनप्रवृत्तिरर्थादेकस्योदयेऽपरस्य तिरोभाव एव यथा शृङ्गारबीभत्सयोस्तादृशयोस्तु नैव कदापि समन्वयः सम्भवतिं किन्तु अङ्गत्यङ्गभावविषये तु सर्वेषामेव समाना स्थितिः। अङ्गिनः तुलाधिरोहणक्षमत्वेन निबन्धोऽविरोध्यपि वैरायतेऽतथानिबद्धो विरोध्यपि अङ्गभावमाप्नोतीति निष्कर्षः।

अब विरोधी रस के समावेश के प्रकार का निर्देशन करने वाली कारिका के अवतारण के लिए उपक्रम करते हैं—

सन्देह यह हो सकता है कि जिन रसों का परस्पर में विरोध नहीं है, जैसे— वीर और शृङ्गार का, शृङ्गार और हास्य का रौद्र और शृङ्गार का वीर और अद्‌भुत का, वीर और रौद्र का, रौद्र और करुण का, अथवा शृङ्गार और अद्‌भुत का, वहाँ भले ही उनका अङ्गभाव एवं अङ्गिभाव बन भी जाय किन्तु उनका कैसे वह होगा जिनका परस्पर में बाध्य बाधक भाव है अर्थात् एक के उदय से दूसरे की एकदम निवृत्ति ही हो जाती है। जैसे शृङ्गार एवं बीभत्स का, वीर एवं भयानक का, शान्त और रौद्र का, शान्त और शृङ्गार का, ऐसी आशङ्का कर यह कहा जाता है—

कारिका की अवतारण कहते हैं— दूसरे किसी रस के अङ्गी होने पर (इसका अनादर कर) विरोधी वा अविरोधी किसी भी रस को अत्यन्त परिपोष की अवस्था में नहीं ले जाना चाहिए। वैसा करने से रसों में विरोधिता नहीं रहेगी।

वृत्तिकार कारिका के आशय का विस्तार करते हैं— अङ्गीभूत शृङ्गार आदि दूसरा रस प्रबन्ध का व्यंग्य होने पर अविरोधी वा विरोधी किसी भी रस का परिपोष नहीं करना चाहिए।

इसका यह आशय नहीं किसी रस का परिपोष ही नहीं करना चाहिए। परिपुष्ट न होने पर तो रस ही नहीं होता। यहाँ 'परिपोष' से इतना ही मतलब है कि अङ्गी रस से अधिक व्यापक बनाकर परिपोष न किया जाय। क्योंकि समान स्तर में भी परिपोष होने पर अविरोधी भी अग्नि से टक्कर लेने लगता है तो विरोधी तो विरोधी ही ठहरा। अतः प्रबन्ध में कोई भी रस अङ्गी से अधिक परिपुष्ट न हो।

ध्वन्या०— तत्राविरोधिनो रसस्याङ्गिरसापेक्षयात्यन्तमाधिक्यं न कर्तव्यमित्ययं प्रथमः परिपोषपरिहारः। उत्कर्षसाम्येऽपि तयोर्विरोधाभासभवात्।

यथा— एकन्तो रुअइ पिआ अण्णन्तो समरतूरणिग्घासो।
णेहेण रणरसेण अ भडस्स दोलाइअ हिअअम्।।

यथा वा— कण्ठाच्छित्वाक्षमालावलयमिव करे हारमावर्तयन्ती
कृत्वा पर्यङ्कबन्धं विषधरपतिना मेखलाया गुणेन।
मिथ्यामन्त्राभिजापस्फुरदधरपुटव्यञ्जिताव्यक्तहासा
देवी सन्ध्याभ्यसूयाहसिपशुपतिस्तत्र दृष्टा तु वोऽव्यात्।।

इत्यत्र।

लीला— अथ क्रमेण रसपरिपोषपरिहारं विवृणोति वृत्तिकारस्तत्रेत्यादिना तत्र= परिपोषे रसस्य, अविरोधिनः= समानप्रकृतिकस्य, रसस्य= अङ्गभावेन प्रतिष्ठापयिषितस्य, अङ्गिरसापेक्षया= अङ्गिभूतरसतुलनया, अत्यन्तं= तदुत्कृष्टतरत्वेन, आधिक्यं= प्रकर्षः, न, कर्तव्यं, इति= इत्थं, अयं, प्रथमः= एकः, परिपोषपरिहारः= पुष्टिनिषेधः। उत्कर्षसाम्ये= समानोत्कर्षस्थितौ, अपि, तयोः= अङ्गाङ्गिनोः, विरोधासम्भवात्= विरोधानवस्थितेः अङ्गिनोः व्यापकत्वेन स्वत एव आधिक्यप्रचलनात्। यथा= वक्ष्यमाणपद्ये—

अङ्गाङ्गिनोः साम्यस्थितिमुदाहरति 'एकन्तो' इत्यादिना– एकन्तो (एकतः) पिआ (प्रिया) रुअइ (रोदिति) अण्णन्तो– (अन्यतः) समरतूरणिग्घोसो (समर-तूर्यनिर्घोषः) भडस्स (भटस्य) हिअअं (हृदयं) णेहेण (स्नेहेन) रणरसेण (रणरसेन) अ (च) दोलाइअं (दोलायितं) इति पदव्यवस्था।

एकतः= एकपक्षे, प्रिया= प्रेयसी, रोदिति= परिदेवते, अन्यतः= अपरपक्षे, समरतूर्यनिर्घोषः= युद्धवाद्यध्वनिः, इति भटस्य= योद्धुः, हृदयं= मानसं, स्नेहेन= प्रेम्णा, समररसेन= युद्धरुच्या, दोलायितं= सन्देहाकुलं, एकतरकृत्यनिर्णयाक्षमं सञ्जातमिति।

अत्र च प्रेयस्या वाष्पायनमिति रत्युत्कर्षः समरतूर्येति भटस्येति च उत्साहोत्कर्षः। दोलायितमितियोरन्यूनाधिकतया साम्यम्। किन्तु तत्र दोषावहमिति साम्येऽपि उत्साहस्यैव प्राकरणिकत्वादुत्कर्षस्तु भिद्यत एव।

केचनेमं विषयं केवलं मुक्तकमात्रसम्बद्धं मन्यन्ते तन्नासीद त्युक्त्वा लोचनकारः इमं प्रबन्धगतमपि मन्यते आधिकारिकेष्विति वृत्तेषु त्रिवर्गफलसम-प्राधान्यस्य सम्भवात्। तदनुसारेण रत्नावल्यामपि सचिवायत्तसिद्धित्वाभिप्रायेण राज्यलाभआधिकारिकं कन्यालाभस्तुप्रासङ्गिकं फलं नायकदृष्ट्या तु तद्विपरी-तमेव। एकीक्रियमाणे तु समप्राधान्यमेव पर्यवस्यतीति।

तस्यैवोदाहरणान्तरं प्रस्तौति विषयदार्ढ्याय वा, यथा,

उदाहरति कण्ठेत्यादि– हारं कण्ठात् छित्वा अक्षमालावलयं इव करे धृत्वा आवर्तयन्ती मेखलाया= गुणेन विषधरपतिनां पर्यङ्कबन्धं कृत्वा मिथ्यामन्त्रा-भिजापस्फुरदधरपुटव्यञ्जिताव्यक्तहासा सन्ध्याऽभ्य– सूयाहसितपशुपतिः= तत्र दृष्टा देवी तु वः अव्यात् इति पदव्यवस्था।

हारं= मौक्तिकमालां, कण्ठात्= गलात्, छित्वा= उत्तार्य, अक्षमालावलयं= स्फटिकस्रजं, इव, करे= हस्ते, धृत्वा= आदाय, आवर्तयन्ती= एकैकं सञ्चा-लयन्ती, मेखलायाः= रसनायाः, गुणेन= सूत्रेण, विषधरपतिना= धरति इति धरः विषस्य गरलस्य धरः विषधर सर्पस्तेषां पतिः स्वामी तेन वासुकिना, पर्यङ्कबन्धं= परितः अङ्गस्यबन्धं ध्यानं कालोचितासनविशेषबन्धं कृत्वा, मिथ्यामन्त्राभिजापस्फुरदधरपुटव्यञ्जिताव्यक्तहासा= मिथ्या अलीकमेव यो मन्त्रस्य आवर्तनं तेन स्फुरन् चलन् य': अधरपुटस्तेन व्यञ्जिहत्र प्रकाशितः अव्यक्तो गूढो हासो यस्यास्तादृशी, सन्ध्याऽभ्यसूयाहसितपशुपतिः= सन्ध्यायां या अभ्यसूया ईर्ष्या तया हसित उपहासीकृत पशुपतिः शम्भुर्यया सा, तादृशी, तत्र= सन्ध्योपासनस्थले, दृष्टा= इतरैरवलोकिता, देवी= पार्वती, तु, वः= युष्मान्, अव्यात्= पायादिति।

तत्राभीष्टमाह इत्यत्रेत्यादिना= इति= इत्थं, अत्र= अस्मिन् पद्ये।

अत्र च सन्ध्याया याऽभ्यसूया तद्व्यक्तेर्ष्या विप्रलम्भशृङ्गारस्य चेष्टद्य-नुकरणेन व्यक्तस्य हास्यस्य चोत्कर्षसाम्यमित्याचार्या यत्र प्रकृतस्तु ईर्ष्याविप्रल-म्भशृङ्गार: किञ्च सान्ध्यकर्मानुकरणमीर्ष्यामेव पुष्णाति, प्रेमाधिक्यञ्च शङ्करस्यो-पहासे पर्यवस्यतीति उभयोरेव उत्कर्षसाम्यं नैव विरोधश्च।अत्र दीधितिकारस्तु शृङ्गरशान्तयो: प्रकर्षसाम्यं निर्दिशति। कथं तत्सम्भवतीति रहस्यमेव, यतोत्र पार्वती ईर्ष्यया शिवमनुकरोति न तु वैराग्येण, अपरञ्च मन्त्रजपादीनामनुकरणं हास्यमेव व्यनक्ति न तु शान्तम्। प्रकरणञ्चायमविरोधिरससम्बन्धविवेचकं शान्तस्तु शृङ्गारस्य विरोधी रस एव।

बालप्रियायां तु स्पष्टमेव निरूपित: कण्ठादित्यादौ तु प्रकृतो रसो विप्रलम्भस्तदविरोधी हास्य: समप्राधान्येन दर्शित इति।

अब क्रम से रस परिपोषपरिहार के प्रकार का विवरण देते हैं—

उसमें जो अङ्गिरस का अविरोधी भी रस है उसका अङ्गिरस की तुलना में आधिक्य न करना ऐसा यह परिपोषपरिहार का पहला उपाय है। आधिक्य न करना इसलिए है कि उत्कर्ष की समानता में दोनों में किसी भी विरोध की सम्भावना नहीं होती। जैसे—

एक ओर प्रेयसी रोती है, दूसरी ओर युद्ध के वाद्यों का आवाज गूंजती है, योद्धा का हृदय स्नेह एवं युद्ध में रुचि से दोलायसमान है।'

यहाँ योद्धा के प्रकरण से वीर रस मुख्य है और युद्ध वाद्य घोष से उत्पन्न उत्साह एवं प्रेयसी के रोदन से उत्पन्न रति दोनों का उत्कर्ष बराबर है। फिर भी दोनों में विरोध नहीं है क्योंकि रति का आलम्बन है प्रिया और उत्साह का आलम्बन शत्रु। योद्धा को प्रिया के प्रति आकर्षण भी है और युद्ध में रुचि भी। अथवा जैसे—

अपने गले से हार निकालकर अक्षमाला के वलय के समान उसे एक-एक करके घूमाती हुई, वासुकि के जगह मेखला के सूत्र से पर्यङ्क बन्ध करके मिथ्या ही मन्त्र. के जप से चलता जो अधर पुट है उससे व्यञ्जित है अव्यक्त हास जिसका ऐसी, सन्ध्या की ईर्ष्या से उपहास के पात्र बनाये गए शम्भु जिसने ऐसी वहाँ देखी गई पार्वती आप सबकी रक्षा करें।

'ऐसे यहाँ शृङ्गार और हास्य में समान प्रकर्ष है, दोनों में कोई विरोध नहीं है।

ध्वन्या०— अङ्गिरसविरुद्धानां व्यभिचारिणां प्राचुर्येणानिवेशनम् वाक्षिप्रमेवाङ्गिरसव्यभिचार्यनुवृत्तिरिति द्वितीय:।

लीला— परिपोषपरिहारस्य द्वितीयं प्रकारमाह अङ्गीत्यादिना अङ्गिरसवि-रुद्धानां= प्रधानभूतरसप्रतिकूलप्रकृतिकानां, व्यभिचारिणां= सहकारिभावानां यथा शृङ्गारस्य आलस्यौग्रयजुगुप्सानां, प्राचुर्येण= प्राशस्त्येन,

अनिवेशनं= अनुपन्यास: वा= अथवा, निवेशने= प्रकरणाक्षिप्ततया बलादु-पन्यासेऽपि, क्षिप्रं= तत्कालानन्तरं, एव, अङ्गिरसव्यभिचार्यनुवृत्ति:= अङ्गिरसानां

ये अनुकूला व्यभिचारिणस्तेषामनुवृत्ति अनुसधानम्। इति= इत्थं, द्वितीयः= अपरः प्रकार इति। अत्र उत्तरपक्षदार्ढ्याय वेति पदमिति लोचनकारः। यथा 'कोपात्कोमललोलबाहुलतिका' इत्यत्र अङ्गिभूतायां रतावङ्गत्वेन यः क्रोधः उपनिबद्धस्तत्र बद्धा दृढमित्यममस्य निवेशितस्य क्षिप्रमेव रोदनहसनकथनेन रत्युचितेर्ष्यौत्सुक्यहर्षानुसन्धानमिति।

अस्यायमाशयः— परिपोषपरिहारस्यायमेव द्वितीयः प्रकारो यदङ्गिप्रकृति-विरुद्धप्रकृतिकानां सहचारिभावानामनुपन्यासो वोपन्यस्यापिक्षिप्तमेव तदनुकूलस-हचारिणामनुसन्धानमिति।

अब परिपोषपरिहार का दूसरा उपाय बताते हैं—

अङ्गी बने रस के विरुद्धप्रकृति वाले जो व्यभिचारी भाव हैं— उनका बहुतायत से प्रयोग न करना यदि प्रसङ्गवशात् करना भी पड़े तो उसके तुरन्त बाद ही अङ्गी रस के अनुकूल व्यभिचारिभाव का समावेश करना।

जैसे 'कोपात् कोमललोल इत्यादि पद्य में कोप के वर्णन के बाद ही रोना और हँसना आदि शृङ्गार के अनुकूल भावों का वर्णन।

ध्वन्या०— अङ्गत्वेन पुनः-पुनः प्रत्यवेक्षा परिपोषं नीयमानस्या-प्यङ्गभूतस्य रसस्येति तृतीयः।

लीला— परिपोषपरिहारस्य तृतीयं प्रकारं निर्दिशति अङ्गत्वेनेत्यादिना परिपोषं= स्वसामग्र्या आस्वादयोग्यत्वं, नीयमानस्य= प्राप्यमाणस्य, अङ्गभूतस्य= अङ्गत्वेनोपनिविवेशयिषितस्य, रसस्य, अङ्गत्वेन= अङ्गदृष्ट्याकथञ्चिदङ्गिनं मा तिरस्कार्षीदिति, पुनः पुनः= मुहुर्मुहुः, प्रत्यवेक्षा= समीक्षणमिति।

परिपुष्यमाणस्यापि अङ्गत्वेन विवक्षितस्य रसस्य अङ्गिनं मा पराबीभवदिति भूयोभूयः समीक्षणमिति। यथा तापसवत्सराजे वत्सराजस्य पद्मावतीविषयः सम्भोगशृङ्गार इति लोचने।

परिपोषपरिहार का तीसरा प्रकार बताते हैं— परिपोष किया जा रहा अङ्गभूत रस का अङ्ग के रूप में ही बराबर समीक्षा करते रहना तीसरा प्रकार है। जैसे वत्सराज में वपत्सराज का पद्मावतीविषयक सम्भोग शृङ्गार।

ध्वन्या०— अनया दिशा अन्येऽपि प्रकारा उत्प्रेक्षणीयाः।

लीला— इत्थं परिपोषपरिहारं त्रेधा निर्दिश्य सम्प्रति प्रकरणमुपसंहरति अनयेत्यादिना अनया= अनन्तरोक्तया, दिशा= प्रकारेण, अन्ये= इतरे एतादृशा एव परिपोषपरिहारप्रकाराः, उत्प्रेक्षणीयाः= ऊह्या इति।

अत्र परिपोषपरिहारस्य त्रय एव प्रकारा उक्ताः। तदितरेऽपि ये प्रकाराः सम्भवन्ति ते कविना स्वयमह्या ...

तत्र लोचनकारो निर्दिशात।

विभावानुभावानाञ्चापि उत्कर्षरूपो न कर्तव्योऽङ्गिरसविरोधिनां निवेशनमेव

वा न कार्यम्, कृतमपि चाङ्गिरसविभावानुभावैरुपबृंहणीयम्। परिपोषिता अपि विरुद्धरसविभावानुभावा अङ्गत्वं प्रति जागरयितव्या इति।

इस प्रकार रस के परिपोष परिहार के तीन उपायों का निर्देश कर प्रकरण का उपसंहार करते हैं- इसी प्रकार से परिपोष परिहार के और भी प्रकार स्वयं ही उत्प्रेक्षित कर लेने चाहिए।

ध्वन्या०— विरोधिनस्तु रसस्याङ्गिरसापेक्षया कस्यचिन्न्यूनता सम्पादनीया। यथा शान्तेऽङ्गिनि शृङ्गारे वा शान्तस्य।

लीला— इत्थं सामान्येन परिपोषपरिहारमुक्त्वा सम्प्रति विरोधिरसविषये परिपोषपरिहारविशेषप्रकारं निर्दिशति विरोधिन इत्यादिना विरोधिन:= प्रतिकूलप्रकृतिकस्य, रसस्य, तु= अविरोधिरसव्यतिरिक्तं, अङ्गिरसापेक्षया= अङ्गित्वेन विवक्षितो यो रसस्तस्य तुलनया, कस्यचित्= कस्याप्यवयवस्य विभावादेः, न्यूनता= अपकर्षता, सम्पादनीया= निबन्धनीया। यथा= इति निदर्शने-शान्ते, 'अङ्गिनि= अङ्गित्वेन विवक्षिते, शृङ्गारस्य कस्यचिन्नन्यूनता, वा, शृङ्गारे= अङ्गित्वेन सम्पादिते शृङ्गारे सति शान्तस्य कस्यचिदङ्गिन्न्यूनतेति।

इस प्रकार परिपोष परिहार के सामान्य उपाय बताकर अब विरोधी रस के परिपोष परिहार विषय में बताते हैं—

अङ्गिरस की तुलना में अङ्गभूत विरोधी रस की कुछ न कुछ न्यूनता होनी चाहिए।

ध्वन्या०— परिपोषरहितस्य रसस्य कथं रसत्वमिति चेत्— उक्तमत्राङ्गिरसापेक्षयेति। अङ्गिनो हि रसस्य यावान् परिपोषस्तावांस्तस्य न कर्तव्यः, स्वतस्तु सम्भवी परिपोषः केन वार्यते।

लीला— तदेवाग्रे विवेचयति परिपोषेत्यादिना परिपोषरहितस्य= असम्यक्परिपुष्टस्य, रसस्य, कथं= केन प्रकारेण, रसत्वं= रसभावः, आस्वाद्यत्वं, इति चेत् अत्र, उक्त, अङ्गिरसापेक्षया इति= अङ्गिनः= अङ्गित्वेन विवक्षितस्य, रसस्य, यावान्= यत्स्तरः, परिपोषः= सम्पुष्टिः, तावान्= तत्समानस्तर एव, तस्य= अङ्गरसस्य, न, कर्तव्यः= विधातव्यः, स्वतः सम्भवी= स्वयमेव भावी रसस्य रसत्वसिद्धये यावदावश्यकं तावत्, तु, परिपोषः= सम्पुष्टिः, केन, निवार्यते= निषिध्यते इति। तेन रसस्य रसत्वं तु सिध्येदेव किन्तु प्रधानापेक्षया मा गादतिशयतामिति।

विरोधी रस के परिपोष परिहार के प्रसङ्ग में ही आगे कहते हैं—

परिपोष रहित रस का रसत्व कैसे सिद्ध होता है ? इस तरह तो, यहां कहा ही है अङ्गिरस की अपेक्षा से कह कर अङ्गी रस का जितना परिपोष है उतना उसका किया जाना चाहिए लेकिन उसका जो अङ्गी रस के अविरोध से अपने आप होने वाला परिपोष को जिससे कि उसकी रसत्व सिद्धि हो, कौन टाल सकता है ? अर्थात् कोई नहीं, उतना तो होना ही है।

ध्वन्या०— एतच्चापेक्षिकं प्रकर्षयोगित्वमेकस्य रसस्य बहुरसेषु प्रबन्धेषु रसानामङ्गाङ्गिभावमनभ्युपगच्छताऽप्यशक्यसप्रतिक्षेपमित्यनेन प्रकारेणाविरोधिनां च रसानामङ्गाङ्गिभावेन समावेशे प्रबन्धेषु स्यादविरोधः।

एतच्च सर्वं येषां रसो रसान्तरस्य व्यभिचारीभवति इति दर्शनं तन्मतनोच्यते। मतान्तरे तु रसानां स्थायिनो भावा उपचाराद्रसशब्देनोक्तास्तेषामङ्गत्वं निर्विरोधमेव।। २४।।

लीला— 'तथा स्यादविरोधिता' इति कारिकांशं विवृणोति एतदित्यादिना बहुरसेषु= बहवोऽनेके रसा सन्ति येषु तेषु एकाधिकरसवत्सु, प्रबन्धेषु सङ्घटितवाक्यसमुदायेषु, एकस्य= कस्यचिदेकस्य, रसत्वं, एतत्= अनन्तरं निर्दिष्टं आपेक्षिकं= अन्यरसापेक्षया निरूपितं, प्रकर्ष योगित्वं= उत्कर्षशालित्वं अङ्गित्वमिति रसानां, अङ्गाङ्गिभावं, अनभ्युपगच्छता= अस्वीकुर्वता (केचिद्रसानामुपकार्योपकाराकभावं नैव मन्यते। तेषां मते रसे स्वचमत्कारविश्रान्तेर्नास्ति तेषामङ्गाङ्गिभाव इति। तदनुसारेण रसे स्वचमत्कारविश्रान्ते, स= कस्यापि अंगत्वं नैव भजते अतथात्वे स रसत्वादेव परिहीयते इति) अपि, अशक्यप्रतिक्षेपं= अशक्यास्वीकारं, इति= हेतोः, अनेन= विरोधिनां= अनुकूलप्रकृतिकानां, च, रसानां, अङ्गाङ्गिभावेन= उपकारकोपकार्यभावेन, प्रबन्धेषु, समावेशे= समुपन्यासे, अविरोधः= विरोधाभावः, स्यादिति।

एतत्= पूर्वोक्तं, सर्वं= निखिलं, च, येषां, रसः रसान्तरस्य= स्वभिन्नरसस्य, व्यभिचारीभवति= सञ्चारीभवति, इति, दर्शनं= मतं— केचन बहुषु रसेषु योऽतिरिच्यते स स्थायी भवति शेषा सञ्चारिण एवेति मन्यन्ते, तन्मतेन= तेषां मार्गेण, उच्यते= कथ्यते। मतान्तरे= इतरमते, तु= इति व्यवच्छेदे, रसानां= शृङ्गारादीनां, स्थायिनः= अन्यापेक्षयाचिरकालवर्तिनः, रसास्वादनपर्यन्तमवस्थितिशीलाः, भावाः= रत्यादयश्चित्तवृत्तिविशेषाः, उपचारात्= लाक्षणिकत्वेन, रसशब्देन, उक्ताः कथिताः, तेषां= रसानां, अङ्गत्वं= अङ्गभावं, निर्विरोधम्= विरोधरहितं, एवेति।

प्रकरणस्यास्यायमाशयः— अत्र रसविषयमधिकृत्य द्वौ पक्षौ समुपस्थापितौ, प्रथमस्तु तेषां पक्षो, ये रसानामुपकार्योपकारकभावं नैव मन्यन्ते। तदनुसारेण रसानां परस्परमुपकार्योपकारकभावान् नैवासम्भवति। तेषु प्रत्येकं स्वचमत्कारविश्रान्तिर्भवति तदभावे तेषां रसत्वमेव नैव सिध्यति। उपकार्योपकारकभावाभावेन तेषामन्योन्यमङ्गाङ्गिभावोऽपि न सिध्यतीति।

अपरे तु रसो रसान्तरस्य व्यभिचारी भवति तेन रसानामङ्गाङ्गित्वं सम्भवतीति मन्यन्ते। तदनुसारेण एकत्र प्रबन्धे समवेतानां बहूनां रसानां मध्ये यस्य रूपं सर्वातिशायी भवति यः स्थायी भवति अन्ये तु सञ्चारिण इति। तत्रापि

आधिकारिकेतिवृत्तव्यापिका चित्तवृत्तिस्थायित्वेन भाति प्रासङ्गिकवृत्तान्तगामिनी तु व्यभिचारितयैव इति रस्यमानतासमये स्थायिव्यभिचारभावस्य न कश्चिद्विरोध इति तन्मतम्। भागुरिरपि रसानां स्थायिसञ्चारितां स्वीकरोति।

तथैवात्र केचित्तु स्थायित्वेन पठितस्यापि रसस्य रसान्तरे व्यभिचारिता मन्यन्ते यथा वीरे क्रोधस्य व्यभिचारिता रौद्रेस्थायिता। व्यभिचारिणोऽपि सत एव व्यभिचार्यन्तरापेक्षया स्थायित्वमेव। यथा विक्रमोर्वशयां चतुर्थेऽङ्के उन्मादस्य। बहूनां चित्तवृत्तिरूपाणां भावानां मध्ये यस्य बहुलं रूपं यथोपलभ्यते स स्थायिभावः स च रसीकरणयोग्यः शेषास्तु सञ्चारिणः। न तु रसानां स्थायिसञ्चारिभावेन अङ्गाङ्गितेति। प्रथमपक्षधरास्तु भावानामेव स्थायिसञ्चारिता अङ्गमङ्गभावं स्वीकुर्वन्ति। ते रसस्य रसान्तरेऽङ्गत्वमनूरीकुर्वन्तीऽपि रसानां स्थायिनामेव उपलक्षणाद्रसशब्दवाच्यतास्वीकारेणैव तदभ्युपगच्छन्त्येव यतो स्थायिनामङ्गत्वं तु निर्विरोधमेवेति।।२४।।

ये खलु रसानामुपकार्योपकारकभावं नैव मन्यन्ते तैरपि कस्य चिद्रसस्य तु प्रकृष्टत्वं भूयः प्रबन्धव्यापकत्वं शेषाणां अल्पप्रबन्धानुगामित्वं तु स्वीकर्तव्यमेव अतथात्वे इतिवृत्तसङ्घटनाया एव अन्यथाऽनुपत्तेः। भूयः प्रबन्धव्यापिनो रसस्य रसान्तरैर्न यदि काचित्सङ्गतिर्मन्यते काममङ्गाङ्गिभावेन वा उपकार्योपकारकभावेन तदा आधिकारिकेतिवृत्तस्य प्रासङ्गिकेतिवृत्तेन सहापि न तिष्ठेत्काऽपि सङ्गतिः। तेन रसानां स्वचमत्कारविश्रान्तिमत्त्वेऽपि केनचिदपि प्रकारेण प्रबन्धव्यापिना रसेन सह रसान्तराणां सङ्गतिस्तु स्वीकर्तव्यैवेति।। २४।।

कारिका के शेष अंश की वृत्तिकार व्याख्या करते हैं—

एक से अधिक रसों वाले प्रबन्धों में एक रस का अपेक्षाकृत प्रकर्षशालित्व (अङ्गित्व) रसों के अङ्गाङ्गिभाव को न मानने वालों के द्वारा भी खण्डित किया नहीं जा सकने वाला होने से इस प्रकार से प्रबन्धों में अविरोधी रसों का भी अङ्गाङ्गिभाव के रूप में समावेश में कोई विरोध नहीं होगा।

यह सब उनके मत से कहा गया है जिनका मत है कि रस दूसरे रस का व्यभिचारी होता है। मतान्तर में तो रसों के स्थायिभाव ही उपचार से रस शब्द से कहे गए हैं। अतः उनका अङ्गत्व निर्विरोध है। कुछ लोग प्रत्येक रस में चमत्कार की विश्रान्ति होने से उनका अंगंगिभाव नहीं मानते; कुछ तो रसों को रसान्तर के व्यभिचारी मानते हैं।

प्रथम पक्षधर कहते हैं कि रस अपने में पूर्ण होता है और वैसा न होने से वह रस ही नहीं होता। अतः स्वयं पूर्ण रस किसी का अंग नहीं बन सकता। उनको भी तो यह तो मानना ही पड़ेगा कि इतिवृत्त व्यापी जो रस है उसके साथ बीच में आने वाले रसों की कोई न कोई संगति तो होनी ही चाहिए, नहीं तो इतिवृत सङ्घटना ही गड़बड़ा जाएगी। जैसे आधिकारिक इतिवृत्त से प्रासंगिक इतिवृत्तं का कोई न कोई सम्बन्ध होता ही है वैसे ही तत्तद्गत रसों का भी होना ही चाहिए।

रसों को रसान्तर के व्यभिचारी जो मानते हैं उनके मत में आधिकारिक इतिवृत्त से सम्बद्ध चित्तवृत्ति प्रासंगिक इतिवृत्त से सम्बद्ध चित्तवृत्ति की अपेक्षा स्थायी होती है। अतः रस्यमानता के समय में कोई विरोध नहीं होता। कुछ तो स्थायी को भी सञ्चारी मानते हैं।

निष्कर्ष इतना ही ठीक है कि प्रबन्ध में एक रस मुख्य होता है; क्योंकि स्थायी रूप से एक ही चित्तवृत्ति उसमें काम करती है और बीच-बीच में आने वाली चित्तवृत्तियाँ व्यभिचारिणी होती है और वे स्थायी चित्तवृत्ति के पोषक ही बन सकती है। सभी के स्थायी बन जाने पर तो प्रबन्ध ही बेकार हो जाएगा।। २४।।

ध्वन्या०— एवमविरोधिनां विरोधिनां च प्रबन्धस्थेनाङ्गिना रसेन समावेशे साधारणमविरोधोपायं प्रतिपाद्येदानीं विरोधिविषयमेव तं प्रतिपादयितुमिदमुच्यते—

कारिका— विरुद्धैकाश्रयो यस्तु विरोधो स्थायिनो भवेत्।
सविभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता।। २५।।

ध्वन्या०— ऐकाधिकरण्यविरोधी नैरन्तर्यविरोधी चेति द्विविधो विरोधी। तत्र यथा वीरेण भयानकः स विभिन्नाश्रयः कार्यः। तस्य वीरस्य य आश्रयः कथानायकस्तद्विपक्षविषये सन्निवेशयितव्यः। तथा सति च तस्य विरोधिनोऽपि यः परिपोषः स निर्दोषः विपक्षविषये हि भयातिशयवर्णने नायकस्य नयपराक्रमादिसम्पत्सुतरामुद्योतिता भवति। एतच्च मदीयेऽर्जुनचरितेऽर्जुनस्यपातालावतरणप्रसंगे वैशद्येन प्रदर्शितम्।। २५।।

लीला— इत्थं परिपोषपरिहारसाधारणप्रकारं विवृत्य सम्प्रति परिपोषेऽप्यदोषताविवेचककारिकावतारणाय वृत्तिकार उपक्रमते एवमित्यादिना एवं= उक्तप्रकारेण, अविरोधिनां= समानप्रकृतिकानां, विरोधिनां= असमानप्रकृतिकानां, च, रसानां, प्रबन्धव्यापिना, अङ्गित्वेन अङ्गित्वेन विवक्षितेन, रसेन, सह समावेशे= निबन्धने, साधारणं= सामान्यं, अविरोधापायं= विरोधाभावोपायं, प्रतिपाद्य= निरुप्य, इदानीं= सम्प्रति, तुं= तथाचर्चितं, विरोधिविषयं= विरुद्धसंम्बद्धविषय, एव, प्रतिपादयितुं= निरूपायेतुं, इदं= वक्ष्यमाणवचनं, उच्यते= कथ्यत इति।

कारिकामवतारयति विरुद्धेत्यादिना विरुद्धैकाश्रयः यः तु स्थायिनः विरोधी भवेत् स विभिन्नाश्रयः कार्यः तस्य पोषे अपि अदोषता इति पदव्यवस्था।

विरुद्धैकाश्रयः= विरुद्धोऽसम्भाव्यमानः एकः समानः आश्रयः आलम्बनं यस्य तादृशः, यः रसः, तु, स्थायिनः= अङ्गिनः, विरोधी= प्रतिकूलप्रकृतिकः, भवेत् सः, विभिन्नाश्रयः= पृथगालम्बनः, कार्यः, तस्य= तादृशस्य पृथगालम्बनेभूतस्य पोषे= परिपुष्टौ, अपि, अदोषता= अविरोधिता भवतीति।।

कारिकां विवृणोति वृत्तिकारः ऐकेत्यादिना ऐकाधिकरण्यविरोधी= एकञ्च

तदधिकरणं आधार: एकाधिकरणं तस्य भाव ऐकाधिकरण्यं तद्विरुणद्धिस्पर्धते तच्छील इति एकाश्रयत्वे सति विप्रीयते य इत्येक:, नैरन्तर्यविरोधी= निरन्तरं निर्व्यवधानं तस्य भावो नैरन्तर्यं नैरन्तर्येण व्यवधानरहितत्वेन विरुणद्धि द्वेष्टि तच्छील इति पृथगाश्रयत्वेऽपि विप्रायी इत्यपर: च= इति= इत्यत्र विरोधी= विप्रायको रस:, द्विविध:= द्विप्रकारक:। तत्र= तयो:, प्रबन्धस्थे= प्रबन्धं व्याप्य स्थितेन, स्थायिना= इतरापेक्षया स्थायिप्रकृतिकेन, अङ्गिना= वाक्यार्थीभूतेन, रसेन, औचत्यापेक्षया= आनुकूल्यदृष्ट्या, विरुद्धैकाश्रय:= विरुद्ध: असम्भाव्यमान: एक: समान: आश्रय: आलम्बनं यस्य, स:, तादृश:, य: विरोधी= प्रतिकूलप्रकृतिकस्स:, यथा, बीरेण= उत्साहस्थायिभावात्मना वीररसेन= भयानक:= भयस्थायिभावात्मको भयानकरस:, स:, विभिन्नाश्रय:= पृथक्पृथगाश्रय:, कार्य:= विधेय इति तदुपायं निर्दिशति तस्येत्यादिना तस्य= तथाविधस्य, वीरस्य= वीररसस्य य: आश्रय= आलम्बनभूत:, कथानायक:= नेता, तद्विपक्षविषये= तस्य नायकस्य विपक्षविषये प्रतिपक्षि स्थाने सन्निवेशयितव्य:= समुपन्यस्तव्य:। तथा= तादृशे, सति= विद्यमाने, च, तस्य= वीरस्य, विरोधिन:= प्रतिकूलप्रकृतिकस्य, अपि, य: परिपोष:= स:, निर्दोष: इति।

अस्याशय:— यस्तु स्थायी स्थाय्यन्तरेण असम्भाव्यमानैकाश्रयत्वाद् विरोधी एकाश्रयेण सम्बन्धमात्रं तेन विरोधी भवति यथा उत्साहेन भयं स विभिन्नाश्रयत्वेन नायकविपक्षादिगामित्वेन, कार्य इति।

तथाकरणे फलमाह= विपक्षविषये= नायकप्रतिपक्षविषये, हि= यत:, भयातिशयवर्णने= भीत्याधिक्योपवर्णने, नायकस्य= प्रबन्धनेतु:, नयपराक्रमादिसम्पत्= नीतिवीरतादिवैभवं, सुतरां= नितान्तमेव, उद्द्योतिता= प्रकाशिता, भवति। एतत्= अनन्तरोक्तं, च, मदीये= मत्प्रणीते= आनन्दवर्धनप्रणीते, अर्जुनचरिते= तदाख्ये काव्ये, अर्जुनस्य= गाण्डीविन:, पातालावतरणप्रसङ्गे= पाताललोकविजययात्राप्रकरणे, वैशद्येन= सुविस्तृतत्वेन, प्रदर्शितं= सम्पादित मस्तीति। दिङ्मात्रमुहदारणं यथा लोचने—

"समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनो
महानुपप्लवोऽभवत्पुरे पुरन्दरद्विषाम्।"
श्रवेण तस्य तु ध्वनेर्विलुप्तमूलबन्धन—
मशेषदैत्ययोषितां श्लथीबभूव जीवितम्।" इति।

ऐकाधिकरण्यजनितविरोधपरिहारप्रकरणमुपसंहरति एवमित्यादिना एवं= इत्थं, ऐकाधिकरण्यविरोधिन:= एकाश्रयेण सम्बन्धमात्रं तेन विरोधिन:, प्रबन्धस्थेन= प्रबन्धगतेन, स्थायिना= इतरापेक्षया स्थायिप्रकृतिकेन, रसेन, सह, अङ्गभावगमने= अङ्गीभवने, यथा= येन प्रकारेण, निर्विरोधित्वं= प्रतिपक्षत्वाभाव:= तथा= तेन प्रकारेण. तद्= अङ्गचङ्ग्यो: विरोधराहित्यं, दर्शितम्= निर्दिष्टम् इति।

एतदुक्तं भवति सदा कश्चिदङ्गभूतः स्थायिरसस्तत्प्रतिपक्षिभूतेन अन्येन स्थायिना सह समान आश्रये विलसितुं न प्रभवति तदा स पृथगाश्रयो व्यधिकरणो विधेयः। एवं सति तस्यापि पोषोऽप्यदोषतामावहति तस्य च प्रकृतरसपोषकत्वञ्च सम्भवति सुखेन। यथा भयोत्साहौ एकमेवावलम्ब्य नैव विकसितुं क्षमौ उभयोरेव परस्परसंस्कारलोपप्रवृत्तिकत्वात्। तेन वीरभयानकौ क्रमेण नायकप्रतिनायकाश्रित्य निबन्धनीयौ। तथा सति भयानकस्य उत्कर्षातिशयोऽपि वीरस्य पोषायैव भवति। इति।। २५।।

इस प्रकार परिपोष के साधारण उपायों की व्याख्या कर अब परिपोष में भी दोषाभाव की स्थिति का निर्देश करने वाली कारिका के अवतारण के लिए उपक्रम करते हैं—

इस प्रकार अविरोधी एवं विरोधी रसों का प्रबन्धव्यापी अङ्गी रस के साथ समावेश में साधारण विरोधाभाव के उपायों का प्रतिपादन कर अब उसी विरोधी के विषय का ही प्रतिपादन करने के लिए यह कहा जाता है।

कारिका का अवतारण करते हैं— जो एक ही आश्रय में विरोध रखने वाला स्थायी का विरोधी हो उसे विभिन्न आश्रय वाला बना दिया जाना चाहिए और वैसा करने पर उसके परिपोष में भी दोष नहीं आता।। २५।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

एक ही आश्रय के कारण मात्र सम्बन्ध होने से विरोधी एवं निरन्तरता के कारण विरोधी करके विरोधी दो प्रकार का होता है। अर्थात् बीच में व्यवधान न होने उनमें से प्रबन्धगत स्थायी अङ्गी रस से औचित्य की दृष्टि से विरुद्ध है एक ही आश्रय जिसका ऐसा जो विरोधी रस है जैसे वीर से भयानक, वह अलग आश्रय वाला किया जाना चाहिए। उस वीर रस का आश्रय बना जो कथानायक है उसके विपक्ष (प्रतिनायक) के विषय के रूप में उसका सन्निवेश होना चाहिए। वैसा होने पर उस विरोधी का भी जो परिपोष है वह दोषरहित हो जाता है; क्योंकि विपक्ष के विषय में भय के अतिशय के वर्णन से नायक का नय पराक्रम आदि ऐश्वर्य अत्यन्त ही उद्द्योतित हो जाता है। यह जो है मेरे अर्जुन चरित नामक काव्य में अर्जुन के पाताल अवतरण के प्रसङ्ग में विशद रूप से प्रदर्शित किया गया है।

इस प्रकार एक ही अधिकरण होने के विरोधी रस का प्रबन्धगत स्थायी रस के साथ अङ्गभाव की प्राप्ति में जैसे विरोध का अभाव होता है वह उसी तरह दिखाया गया।

इसका अशय यह है कि रस में विरोध दो प्रकार से आ जाता है एक तो विरुद्ध प्रकृति के रसों का एक ही आश्रय में उपनिबन्धन कर देने से और बीच में किसी व्यवधान के रखे विना निरन्तर रूप में उपनिबन्धन कर देने से। एक ही आश्रय होने पर इसलिए विरोध हो जाता है कि उस आश्रय के अलावा उनका और कोई सम्बन्ध तो होता नहीं और दो विरुद्ध प्रकृति वाले एक ही जगह बैठें तो विरोध स्वाभाविक भी है। जैसे उत्साह और भय में (जहाँ उत्साह होता है वहाँ भय रहता ही नहीं और

जहाँ भय है, वहाँ उत्साह ठण्ढ़ा पड़ ही जाता है। अतः ऐसे रसों को पृथक्-पृथक् आश्रय में निबद्ध कर देना चाहिए, जैसे—वीर का नायक के आश्रय में और भयानक का उपनायक के आश्रय में। वैसा करने पर दूसरे, रस का परिपोष भी दोष रहित हो जाता है और प्रतिनायक में भय की अधिकता से नायक की वीरता और उज्ज्वलित होती है। ऐसा होने में दोनों मे एक सामञ्जस्य सा आ जाता है।। २५।।

ध्वन्या०— द्वितीयस्य तु तत्प्रतिपादयितुमुच्यते—

कारिका— एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्।
रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा।। २६।।

ध्वन्या०— यः पुनरेकाधिकरणत्वे निर्विरोधो नैरन्तर्ये तु विरोधो स रसान्तरव्यवधानेन प्रबन्धे निवेशयितव्यः। यथा शान्तशृङ्गारौ नागानन्दे निवेशितौ।

लीला— इत्थं रसानामैकाधिकरण्यनिमित्तकविरोधपरिहारं युक्त्योपपाद्य सम्प्रति निर्व्यवधानत्वेन यो विरोधस्तस्य परिहारोपायनिर्देशककारिकावतारणायोपक्रमते द्वितीयस्येत्यादिना— द्वितीयस्य= निर्व्यवधानत्वेन यो विरोधस्तस्य तु, तत्= विरोधपरिहरणं, प्रतिपादयितुं= निर्देष्टुं, उच्यते= कथ्यत इति।

कारिकामवतारयति एकेत्यादि सुमेधसा एकाश्रयत्वे निर्दोषः नैरन्तर्य विरोधवान् रस· रसान्तरव्यवधिना व्यङ्ग्य इति पदव्यवस्था।

सुमेधसा= विचक्षणेन, रसरहस्यविदा कविना, एकाश्रयत्वे= एकावलम्बनत्वे निर्दोषः= अविरोधी किन्तु नैरन्तर्ये= अव्यवहितत्वेन निबन्धने, विरोधवान्= सदोषः यो रसः यथा शान्तेन सह शृङ्गारः, रसान्तरावधिना= अन्य उभयभिन्नो रसस्तस्य व्यवधिना व्यवहितत्वेन, व्यङ्ग्यः= प्रत्येय इति।

एकाश्रयत्वेन निबन्धने अविरोधो अव्यवहितत्वेन ग्रथने तु विरोधो यो रसः स उभयभिन्नरसान्तरितत्वेन प्रत्येयः। तथा करणे नैव विरोधः इति।

कारिकां विवृणोति वृत्तिकारः य इत्यादिना यो= रसः, पुनः= इति पक्षान्तरे, एकाधिकरणत्वे= समानावलम्बनत्वे, निर्विरोधः= निर्दोषः, नैरन्तर्ये= रसान्तरान्तरितत्वे, तु, विरोधी= दोषवान्, सः, रसान्तरव्यवधानेन= उभयभिन्नरसान्तरितत्वेन, प्रबन्धे= काव्यादौ, निवेशयितव्यः= समुपादनीयः। तन्निदर्शयति यथा=येन विधिना, शान्तशृङ्गारौ= निर्वेदरतिस्थायिभावात्मकौ तदाख्यरसौ, नागानन्दे= तदाख्यनाटके, निवेशितौ= विन्यस्तौ इति। नागानन्दे हि शान्तशृङ्गारौ तदुभयविरुद्धमद्भुतरसमन्तरीकृत्य निबन्धनान्निर्दोषाविति। नागानन्दे हि नायकस्य यौवनमधिकृत्य 'रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः इति कथनमारभ्य नागार्थदेहार्पणात्मक निर्वहणपर्यन्तः शान्तो रसस्तस्य विरुद्धप्रकृतिको मलयवतीविषयकः—

''दृष्टादृष्टिमधो ददाति नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते।
निर्यान्तिषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया।''

इत्यादिकः शृङ्गारः 'अहो गीत' इत्यादि 'व्यक्तिर्व्यञ्जनधातुना' इत्यादिना च समाक्षिप्तोद्भुतेन उभयाविरोधिना रसेन व्यवहितरूपेण निबद्धानुभाविति नैव दोषावहाविति। तथैव शेखरकवृत्तान्तोदितहास्यरशोपकृतः शृङ्गारः नागास्थि-दर्शनेनोत्थो यश्च वैराग्यः क्रोधोपकृतवीररसान्तरितत्वेन निवेशित इति नैव दोषावहाविति।

इस प्रकार रसों का ऐकाधिकरण्य निमित्तक विरोध के परिहार का उपाय बताकर अब एकाश्रय में तो अविरोधी किन्तु निरन्तरता में विरोधी रसों के विरोध परिहार के उपाय का निर्देश करने वाली कारिका के अवतारण के हेतु उपक्रम करते हैं—

दूसरे का तो उसे प्रतिपादित करने हेतु कहा जाता है- एक ही आश्रय होने में अविरोधी किन्तु नैरन्तर्य होने से (बीच में किसी दूसरे की उपस्थिति न होने से) विरोधी रस जो है उसे दोनों के अविरोधी, किसी दूसरे रस के व्यवधान से विद्वान् कवि को व्यक्त करना चाहिए।

कारिका के आशय का वृत्तिकार पल्लवन करते हैं- जो फिर एक ही अधिकरण में आश्रित होने में अविरोधी किन्तु निरन्तरता में तो विरोधी रस है वह प्रबन्ध में-मुक्तक आदि में भी अर्थात् काव्य में दूसरे रस के व्यवधान से निवेशित होना चाहिए। जैसे नागानन्द में शान्त एवं शृङ्गार निवेशित है। अर्थात् नागानन्द में यौवन की अस्थिरता को लेकर हुए निर्वेद एवं मलयवती से सम्बद्ध शृङ्गार को अद्भुत रस से व्यवहित कर दिखाया गया है और बाद में हास्य रस से पुष्ट शृङ्गार और नाग की अस्थियों को देखकर हुए निर्वेद क्रोध से परिपुष्ट वीर रस से अन्तर्हित कर दिखाया गया है। अतः वहाँ शान्त एवं शृङ्गार तथा शृङ्गार एवं शान्त का कोई विरोध नहीं है।

ध्वन्या०— शान्तश्च तृष्णाक्षयसुखस्य यः परिपोषस्तल्लक्षणो.रसः प्रतीयत एव। तथा चोक्तम्—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्।।

यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति नैतावतासावलोकसा-मान्यमहानुभावचित्तवृत्तिविशेषः प्रतिक्षेप्तुं शक्यः।

न च वीरे तस्यान्तर्भावः कर्तुं युक्तः। तस्याभिमानमयत्वेन व्यव-स्थापनात्। अस्य चाहङ्कारप्रशमैकरूपतया स्थितेः। तयोश्चैवंविधसद्भावेऽपि यदैक्यं परिकल्प्यते तद्वीररौद्रयोरपि तथा प्रसङ्गः।

दयावीरादीनां च चित्तवृत्तिविशेषाणां सर्वाकारमहङ्कारहितत्वेन शान्तरसप्रभेदत्वम्, इतरथा तु वीररसप्रभेदत्वमिति व्यवस्थाप्यमाने कश्चिद्विरोधः। तदेवमस्ति शान्तो रसः। तस्य चाविरुद्धरसव्यवधानेन प्रबन्धे विरोधिरससमावेशे सत्यपि निर्विरोधत्वम्। यथा प्रदर्शिते विषये ।। २६ ।।

लीला— नास्त्येव शान्तो रसो यतो मुनिना तस्य स्थाय्येव नोपदिष्टं इत्याशङ्क्याह शान्त इत्यादि-शान्तः= तदाख्यो निर्वेद स्थायिभावात्मकः, च= अपि, तृष्णाक्षयसुखस्य= तृष्णा= विषयाभिलाषः तस्य क्षयः सर्वतो निवृत्तिस्तदेव सुखं तस्य, यः, परिपोषः= वैराग्यादिना सम्पुष्टिः, तल्लक्षणः= तदेव लक्षणं यस्य तादृशः, रसः, प्रतीयते= व्यज्यत, एव। स्वानुभवेनापि अशेष विषयेच्छाप्रसरत्वं काले स्वानुभवेनाऽपि सम्भाव्यते एवेति। तथा= तादृशगेव, उक्तं= कथितं, च प्राचीनैरपि—

तदेवावतारयति यदित्यादिना-- लोके यत् कामसुखं, च, यत् दिव्यं महत् सुखं च, एते तृष्णाक्षयसुखस्य षोडषीं कलां न अर्हत इति पदव्यवस्था।

लोके= जगति, यत्= यदेव, कामसुखं— इच्छापूर्तिजन्यानन्दं, यत्= यदेव, दिव्यं= स्वर्गीयं, महत् (परम्), सुखं= आनन्द, एते= सुखे, तृष्णाक्षयसुखस्य= तृष्णायाः भोगस्पृहायाः क्षयो ध्वंसस्तस्य सुखं प्रीतिस्तस्य, षोडशीं= षोडशभागेष्वेकामपि, कलां= भागं, न= नैव, अर्हतः= योग्ये स्त इति।

तदेव प्रतिपादयति यदीत्यादिना— यदि, नाम= इति सम्भाव्ये तस्य= भोग्य तृष्णाक्षयजन्यनिर्वेदस्थायिभावात्मकस्य शान्तरसस्य, सर्वजनानुभवगोचरता= सर्वविधजनानामनुभवगम्यता, न, अस्ति, चेन्नैवास्तु कथ्यते यदि शान्तो नाम कश्चिद्रसः स्यात्तदा तस्यापि शृङ्गारादिवत्सर्वैरेव सहृदयैः प्रतीयमानत्वं सम्भवेत्तदभावेन नास्त्येव शान्तो रस इति केचिद्वदन्ति। यदि तथा तस्य सर्वविधसहृदयप्रतीयमानत्वं नास्ति चेन्मा भूत्, किन्तु, एतावता= एतावन्मात्रेण सर्वसामान्यताऽभावमात्रेण, अलोकसामान्यमहानुभावचित्तवृत्तिविशेषः= अलोकसामान्या लोकोत्तरचरिता ये महानुभावा महोदयास्ते यः अलोकसामान्यः लोकसामान्यभिन्नः चित्तवृत्तिविशेषः चेतोव्यापारविशिष्टाव्यवस्था, प्रतिक्षेप्तुं निरसितुं, न, शक्यः= पार्यः। केचित्तमङ्गीकृत्यापि तस्य दयादानधर्मवीरादावन्तर्भावमिच्छन्ति, तदेव खण्डयितुमाह नेत्यादिना न= नैव, च, तस्य= शान्तस्य, वीरे= वीररसस्य दानधर्मदयाभेदे, अन्तर्भावः= अन्तर्भावनं, कर्तुं= विधातुं, युक्तः= समीचीनः। तत्र हेतुमाह तस्य= वीररसस्य सभेदस्य, अभिमानमयत्वेन= अहङ्काररूपत्वेन, व्यवस्थापनात्= ग्रहणात्, अस्य= शान्तस्य, च, अहङ्कारप्रशमैकरूपतया= अलङ्कारस्य गर्वस्य प्रशमः तिरोभावस्तदेकरूपतया तदेकमात्रस्वभावतया, स्थितेः= व्यवस्थानात् शान्तस्य वीरेऽन्तर्भाव विप्रतिपत्तिमाह तयोरित्यादिना तयोः शान्तवीरयोः;

एवंविधविशेषसद्भावे= एकभावं, परिकल्प्यते= विचिन्त्यते, तत्= तदा, वीररौद्रयोः= तदाख्ययो रसयोः, अपि, तथा, प्रसङ्गः= अन्तर्भावाप्तिः।

तर्हि किं दयावीरादयः शान्तात्सर्वत्रैव भिन्ना इत्यत्राऽऽह दयेत्यादिना दयावीरादीनां= दयादानधर्मवीराणां, च, चित्तवृत्तिविशेषाणां= चेतोऽवस्थानां, सर्वाकारं= सर्वविधत्वेन, आहाररहितत्वेन= अभिमानाभावात्, शान्तरसप्रभेदत्वं= शान्ताख्यरसाङ्गत्वम्, इतरथा= अहङ्कारादिभावे, तु, वीरप्रभेदत्वं= वीररसस्यैव प्रकारत्वं, इति= इत्थं, व्यवस्थाप्यमाने= सम्पाद्यमाने, न, कश्चित्= कतमोऽपि, विरोधः= विप्रयः तत्= तेन विभावादिसत्तया वीराद्भिन्नतया लोकोत्तरसहृदयानुभवविषयतया च, एव= अनेन विधिना, शान्तः= तदाख्यः, रसः, अस्ति इति। प्रबन्धेः= काव्यादौ, तस्य= शान्तरसस्य, अविरुद्धरसव्यवधानेन= असमानप्रकृतिकाद्भुतादिरसान्तरितत्वेन, विरोधिरससमावेशे= प्रतिकूलप्रकृतिकशृङ्गारादिसन्निवेशे, सति= विद्यमाने, अपि, निर्विरोधत्वं= निर्दोषता। तन्निदर्शनमाह यथा प्रदर्शिते= अनन्तरनिर्दिष्टे, विषये= नागानन्दादौ इति।

प्रकरणस्यास्यायमाशयः— शान्तशृङ्गारयोरुभयोरेवाविरुद्धेनाद्भुतरसेन व्यवहितत्वेन प्रयोगे नैव दोषो यथा नागानन्दे इति यदुक्तं तदधिकृत्य प्रासङ्गिकत्वेन शान्तरसविवेचनमपि चिकीर्षति वृत्तिकारः। तत्रेयं विप्रतिपत्तिर्यत्केचन शान्तस्यास्तित्वमेव नैवोररीकुर्वन्ति काव्यं। ते कथयन्ति यन्नास्त्येव शान्तो रसः भरतादिमुनिना तस्य स्थायिनोऽप्यनुक्तत्वादिति। अपरे नाटके एव तस्यानास्तित्वं मन्यन्ते निर्विषयस्याभिनयाभावादिति। परे तु श्रव्ये दृश्ये च काव्ये तस्य पुष्टिं कथयन्ति। एवमेव केचित्सर्वविधचित्तवृत्तिप्रशम एवास्य स्थायीति मन्यन्ते अन्ये तु विशयविशेषाभिलाषनिवृत्तिजन्यसुखमेव तस्य स्थायित्वेन गृह्णन्ति। केचिदस्य तथैव दानधर्मदयावीरादावन्तभावमिच्छन्ति। विवादेऽस्मिन् वृत्तिकारस्येदमेवाभिमतं यद्—

अस्त्येव शान्तो रसो नवमत्वेन,

तृष्णाक्षयसुखं तस्य स्थायिभावो न तु सर्वविधचित्तवृत्तिप्रशमः तथात्वे तु व्यापारस्यैवाभावात्,

अस्य काव्यमात्रे पुष्टिर्भवति श्रव्यदृश्यादिभेदनिर्विशेषम्,

निरहङ्कारत्वेन यद्दयानधर्मवीरत्वस्य शान्तप्रभेदत्वम्

असत्यामपि चास्य सर्वविधानुभवगोचरतायां लोकोत्तरसहृदयचित्तवृत्तिविशेष एवास्य भूमिरिति—

तत्र लोचनकारो व्याख्याति— ननु नास्त्येव शान्तो रसः तस्य तु स्थाय्येव नोपदिष्टो मुनिनेत्याशङ्क्याह— शान्तश्चेति। तृष्णानां विषयाभिलाषाणां यः क्षयः सर्वतो निवृत्तिरूपो निर्वेदः तदेव सुखं तस्य स्थायिभूतस्य यः परिपोषो रस्यमानताकृतस्तदेव लक्षणं यस्य सः शान्तो रसः। प्रतीयत एवेन्ति। स्वानुभवेनापि निवृत्तभोजनाद्यशेषविषयेच्छाप्रसरत्वकाले सम्भाव्यत एव।

अन्ये तु सर्वचित्तवृत्तिप्रशम एवास्य स्थायीति मन्यन्ते। तृष्णासद्भावस्य प्रसज्यप्रतिषेधरूपत्वे चेतोवृत्तित्वाभावेन भावत्वायोगात्। पर्युदासे त्वस्मत्पक्ष एवायम्।

अन्ये तु—

स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते।
पुननिमित्तापाये तु शान्त एव प्रलीयते।

इति भरतवाक्यं दृष्टवन्तः सर्वरससामान्यस्वभावं शान्तमाचक्षाणा अनुपजा-तविशेषान्तरचित्तवृत्तिरूपं शान्तस्य स्थायिभावं मन्यन्ते। एतच्च नातीवास्मत्प-क्षाद्दूरम्। प्रागभावप्रध्वंसाभावकृतस्तु विशेषः। युक्तञ्च प्रध्वंस एव तृष्णानाम्। यथोक्तम्— वीतरागजन्मादर्शनात् 'इति। प्रतीयतः' एवेति। मुनिनाप्यङ्गीक्रियत एव 'क्वचिछमः' इत्यादि दता। न च तदीया पर्यन्तावस्था, वर्णनीया, येन सर्वचेष्टोपरमानुभवाभावेन प्रतीयमानता स्यात् शृङ्गारादेरपि फलभूभाववर्णनीयतैव पूर्वभूमौ तु तस्य प्रशान्तवाहिता संस्कारात्। तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः।

इति सूत्रद्वयनीत्या चित्राकारा यमनियमादिचेष्टा राज्यधुरोद्वहनादिलक्षणः वा शान्तस्यापि जनकादेर्दृष्टैवेत्युनभवसद्भावाद्यमनियमादिमध्यसॅम्भाव्यमानभूयो-व्यभिचारिसद्भावाच्च प्रतीयत एव।

ननु न प्रतीयते नास्य विभावाः सन्तीति चेत्— न, प्रतीयत एव तावदसौ। तस्य च भवितव्यमेव प्राक्तनकृशलपरिपाकपरमेश्वरानुग्रहादाध्यात्मरहस्य— शास्त्रवीतरागपरिशीलनादिभिर्विभावैरितीयतैव विभावानुभावव्यभिचारिसद्भावः स्थायी च दर्शितः। ननु तत्र हृदयसंवादाभावाद्रस्यमानतैव नोपपन्ना। क एवमाह स नास्तीति, यतः यतः प्रतीयत एवेत्युक्तम्।

ननु प्रतीयते सर्वस्य श्लाघास्पस्दं न भवति। तर्हि वीतरागाणां शृङ्गारो न। श्लाघ्यं इति सोऽपि रसत्वाच्च्यवतामिति तदाह— यदि नामेति।

ननु धर्मप्रधानोऽसौ वीर एवेति सम्भावयमान आह— न चेति।

तस्येति वीरस्य अभिमानभयत्वेनेति। उत्साहो ह्यहमेवंविध इत्येव प्राण इत्यर्थः। अस्य चेति शान्तस्य। तयोश्चेति। ईहामयत्वनिरीहत्वाभ्या— मत्यन्तवि-रुद्धयोरपीति च शब्दार्थः। वीररौद्रयोस्त्वत्यन्तविरोधोऽपि नास्ति। समानं रूपं च धर्मार्थकामार्जनोपयोगित्वम् नत्वेवं दयावीरो धर्मवीरो दानवीरो वा नासौ कश्चित् शान्तस्यैवेदं नामान्तरकरणम्। तथा हि मुनिः—

दानवीरं धर्मवीरं युद्धवीरं तथैव च।
रसवीरमपि प्राह ब्रह्मा त्रिविधसभिमतम्।।

इत्यागमपुरःसरंत्रैविध्यमेवाभ्यधात्। तदाह-दयावीरादानाञ्चेत्या-दिग्रहणेन। विषयजुगुप्सारूपत्वाद् बीभत्सेऽन्तर्भावः शङ्क्यतें सात्वस्य व्यभिचारिणी भवति

न तु स्थायिनामेति पर्यन्तनिर्वाहे तस्या मूलत एव विच्छेदात्। आधिकारिकत्वेन तु शान्तो रसो न निबद्धव्य इति चन्द्रिकाकारः। तथेहास्माभिर्न पर्यालोचितं प्रसङ्गान्तरात्। मोक्षफलत्वेनचायं परमपुरुषार्थनिष्ठत्वात्सर्वरसेभ्यः प्रधानतमः। स चायमस्मदुपाध्यायभट्टतौतेन काव्यकौतुके, अस्माभिश्च तद्विवरणे बहुतरकृ-तनिर्णयपूर्वपक्षसिद्धान्त, इत्यल बहुना।

काव्यप्रकाशकारमतेऽपि निर्वेदस्थायिभावात्मकः शान्तो नामनवमो रस इति। तत्र वृत्तिकारो विद्याभूषणः उदाहरति—

वयो जीर्णं हा धिक् तदपि न हि जीर्णो मदभरः<br>
श्लथं चर्माङ्गेभ्यस्तदपि न हि रागः श्लथ इव।<br>
रदाः शीर्णाः शीर्णस्तदपि न हि मोहः कथमयं<br>
जनः कंसारातेश्चरणकमलाय स्पृहयतु। ।

अत्र निर्वेदः स्थायी संसारदुःखमालम्बनं पुण्यतीर्थाद्युद्दीपनं भोगानसक्तिर-नुभावः रत्यादिः सञ्चारी।

तत्र हेमचन्द्रस्त्वाह— वैराग्यादिविभावो यमनियमाध्यात्मशास्त्रचिन्तना-द्यनुभावो धृत्यादिव्यभिचारी शमः शान्त इति।

दशरूपककारस्त्वाह—

निर्वेदादिरताद्रूप्यादस्थायी स्वदते कथम्।<br>
वैरस्यायैव तत्पोषस्तेनाष्टौ स्थायिनो मताः।।

इति निर्वेदस्यास्थायित्वं मत्वा शममपि केचित्प्राहु पुष्टिर्नाट्येषु नैतस्य इति शमस्थायिभावं स्वीकृत्य तस्य नाट्ये एव पुष्टिं निषिध्यति। तत्र धनिको व्याख्याति—

'रसनाद्रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः।'<br>
'निर्वेदादिष्वपि तत्प्रकाममस्तीति तेऽपि रसाः।।'

इत्यादिना रसान्तराणामप्यन्यैरभ्युपगतत्वात् स्थायिनोऽप्यन्ये कल्पिता इत्य-वधारणानुपपत्तिः।

ननु च शान्तरसस्याऽनभिनेयत्वात् यद्यपि नाट्येऽनुप्रवेशो नास्ति तथापि सूक्ष्मातीतादिवस्तूनां सर्वेषामपि शब्दप्रतिपाद्यताया विद्यमानत्वात् काव्यविषयत्वं न निवार्यते। अतस्तदुच्यते—

शमप्रकर्षोऽनिर्वाच्यो मुदितादेस्तदात्मता।।

शान्तो हि यदि यावत्—

'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा।<br>
रसस्तु शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः।'

इत्येवंलक्षणः, तदा तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भा-

वात्, तस्य च स्वरूपेणानिर्वचनीयता। तथा हि– श्रुतिरपि 'स एव नेति नेति' इत्यान्यापोहरूपेणायं न च तथाभूतस्थ शान्तरसस्य सहृदयाः: स्वादयितारः सन्ति। अथापि तदुपायभूतो मुदितामैत्रीकरुणापेक्षादिलक्षणस्तस्य च विकासविस्तारक्षोभविक्षेपरूपतैवेति। तदुक्त्यैव शान्तरसास्वादो निरूपितः।

इह शान्तरसं प्रतिवादिनमनेकविधा विप्रतिपत्तयः। तत्र केचिदाहुः– 'नास्त्येव शान्तो रसः।' तस्याचार्येण विभावाद्यप्रतिपादनाल्लक्षणाकरणात्। अन्ये तु वस्तुत- स्तस्याभावं वर्णयन्ति। अनादिकालप्रवाहायातरागद्वेषयोरुच्छेत्तुमशक्यत्वात् अन्ये तु वीरबीभत्सादावन्तर्भावं वर्णयन्ति। एवं वदन्तः शममपि नेच्छन्ति यथा तथास्तु। सर्वथा नाटकादावभिनयात्मनि स्थायित्वमस्माभिः शमस्य निषिध्यते। तस्य समस्तव्यापारप्रविलयरूपस्याभिनयायोगात्।

यत्तु कैश्चिन्नागानन्दादौ शमस्य स्थायित्वमुपवर्णितम् तत्तु मलयवत्यनुरागेणाऽऽप्रबन्धप्रवृत्तेन विद्याधरचक्रवर्तितत्वप्राप्त्याऽविरुद्धम्। न ह्येकानुकार्यविभावालम्बनौ विषयानुरागापरागावुप्रलब्धौ, अतो दयावीरोत्साहस्येव तत्र स्थायित्वम्। तत्रैव, शृङ्गारस्याङ्गत्वेन चक्रवर्तित्वाप्तेश्च नान्तरीयकफलत्वे नाविरोधादभीप्सितम्। एवं च सर्वत्र द्रष्टव्यमिति परोपकारप्रवृत्तस्य विजिगीषोर्नान्तरीयकत्वेन फलं संपद्यत इत्यावेदितमेव प्राक्। अतोऽष्टावेच स्थायिनः।

ननु च- रामचन्द्रगुणचन्द्रौ तु नाट्येऽपि तस्य पुष्टिं मन्येते शमं स्थायिभवत्वेन मत्वा न तु निर्वेदम्। यथा नाट्यदर्पणे–

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमाः रसानां स्थायिनः क्रमात्।
संसारभयवैराग्यतत्त्वशास्त्रविमर्शनैः।
शान्तोऽभिनयनं तस्य क्षमाध्यानोपकारतः।।

अनेनैव वृत्तिकारेणाऽप्युक्तं तृष्णाक्षयसुखस्यपरिपोष इति तृष्णाक्षयसुखमेव शमो न तु निर्वेदः। काव्यप्रकाशकारेण यन्निर्वेदस्य एकत्र 'निर्वेदस्थायिभावोऽस्ति' इत्युक्त्वा स्थायिभावत्वेन अपरत्र 'निर्वेदग्लानिशङ्काख्या' इत्यत्र व्यभिचारित्वेन च ग्रहणं कृतं तत्र विसङ्गतिरिव दृश्यते। निर्वेदस्य लक्षणन्तु "तत्वज्ञानादपीर्ष्यादेर्निर्वेदस्वावमननम्। दैन्यचिन्ताश्रुनिश्वासवैवर्ण्योच्छ्वसितादिभिः' इति धनञ्जयेन निर्दिष्टम्। शमस्तु निस्तरङ्गः सुखमयोरविषया चित्तवृत्तिरिति। स्थायिभावलक्षणं च यथा धनञ्जयेनोक्तं–

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः'' इति।

निर्वेदस्य तु अताद्रूप्यान्नैव स्थायित्वमिति। शमस्य तु तृष्णाक्षयसुखरूपस्य ताद्रूप्यादवश्यं स्वदते एव। निर्वेदः स्वावमाननं, शमस्तु विशयविशेषेच्छापूर्तिमयत्वेन आत्मगौरवमेवति तयोरन्तरं स्पष्टमेव।

एकाश्रय में अविरोधी किन्तु नैरन्तर्य में विरोधी रसों का दोनों के अविरुद्ध किसी रस से व्यवहित कर सन्निवेश करने से निर्दोष होने के उदाहरण में जो नागानन्द में शान्त और शृङ्गार का अद्भुत से व्यवहित हो जाने से निर्दोष होने की बात कही गई थी उसी के प्रसङ्ग में शान्त रस की अवस्थिति न मानने वालों के मत के निराश के लिए कहते हैं—

शान्त जो है वह विषय की तृष्णा के क्षय से उत्पन्न जो सुख है उसका जो परिपोष है, वही लक्षण वाला रस प्रतीत होता ही है। कहा गया भी है—

जगत् में जो भोगजन्य सुख है और जो स्वर्गीय अत्यन्त सुख है वह तृष्णा के क्षय से उत्पन्न सुख की सोलह कलाओं में से एक कला के भी योग्य नहीं।

यदि वह सामान्य जन के अनुभव का विषय नहीं है तो न हो, किन्तु उतने ही से अलोकसामान्य महानुभावों के चित्तवृत्ति विशेष की उपेक्षा भी तो की नहीं जा सकती।

न तो उसका वीर रस में अन्तर्भाव करना ही ठीक है क्योंकि वीर का अभिमान स्वरूप के रूप में व्यवस्थापन है और शान्त की अहङ्कार के प्रशमन के रूप में ही स्थिति है। (वीर का जो स्थायी उत्साह है ''मै। ऐसा हूँ'' वाली भावना में जीतना है लेकिन शान्त का स्थायी शम 'मैं कुछ नहीं वाली भावना में) उन दोनों की इस प्रकार की विशेष सत्ता के होने पर भी यदि ऐक्य माना जाता है तो वह वीर और रौद्र के बीच में उसी तरह कां प्रसङ्ग आ पड़ेगा।

दया, दान, धर्मवीर आदि के चित्तवृत्तिविशेषों का सर्वथा अहङ्कार से रहित होने पर शान्त रस का भेदत्व हो सकता है, अन्यथा उनको वीर के भेद मानकर व्यवस्थापन होने से कोई दोष नहीं आएगा। तो इस प्रकार का है शान्त रस। उसका अविरुद्ध रस के व्यवधान से प्रबन्ध में विरोधी रस के समावेश होने पर भी कोई विरोध नहीं रहेगा जैसे कि प्रदर्शित विषय में।

प्रकरण का यह आशय है कुछ लोग शान्त रस की स्थिति को नहीं मानते, कुछ मानकर भी नाटक में उसकी अभिनेयता को नहीं मानते; कुछ उसको भी मानते हैं, कुछ लोग उसको वीर रस के दया बीर आदि भेदों में अन्तर्भूत मानते हैं। इन विसङ्गतियों में असलियत क्या है ? उसका विवेचन वृत्तिकार करते हैं। शान्तरस न मानने वालों का कहना यह है कि भरताचार्य ने उसके स्थायी भाव का निर्देश नहीं किया है, अत: शान्त रस नहीं है। कुछ यह भी कहते हैं कि उसकी प्रतीति-सर्वसाधारण को नहीं होती अत: वह रस नहीं हो सकता, कुछ तो कहते हैं कि वीर रस के दया, दान धर्मवीर आदि भेदों में उसका अन्तर्भाव हो जाता है अत: वह पृथक् नहीं है आदि आदि।

उस पर वृत्तिकार का कहना है कि शान्त नामक पृथक् रस है। (मुनि ने उसके स्थायी भाव का निर्देश जो नहीं किया वह नाट्य के प्रकरण के चलते हो सकता है।) भले ही उसका साधारण सहृदयों में प्रतीति न हो लेकिन लोकोत्तर महानुभावों के चित्तवृत्ति विशेष के रूप में प्रतीति उसको हम अनदेखी नहीं कर सकते। उसका दयावीर आदि वीर के भेद में अन्तर्भाव भी नहीं हो सकता क्योंकि उत्साह का मूल

अहम्भाव है और शान्त का उससे रहित होना। हाँ यदि निरहम्भाव से दया, दान, धर्म आदि हों तो उसका शान्त में अन्तर्भाव हो सकता है, अहम्भाव से होने पर वीर में।

कुछ लोग शान्त को बीभत्स रस में भी अन्तर्भूत करना चाहते हैं। उनके अनुसार विषय के प्रति जुगुप्सा जो है दोनों में बराबर है। किन्तु असलियत इससे भिन्न है क्योंकि विषय जुगुप्सा जो है वह व्यभिचारी ही हो सकती है, स्थायी नहीं क्योंकि अन्ततोगत्वा उसका मूलत: विच्छेद हो जाता है। जुगुप्सा में पलायनपरता है वह तामसी प्रवृत्ति का है लेकिन शान्त प्रवृत्ति एवं निवृत्ति दोनों से विलक्षण है। अत: उन दोनों का कोई समन्वय नहीं।

तो, इस तरह प्रतिष्ठित शान्त का स्थायीभाव क्या हो सकता है, इस पर भी मतमतान्तर हैं। कुछ निर्वेद को इसका स्थायीभाव मानते हैं तो कुछ निर्वेद को अस्थायी मानकर केवल व्यभिचारियों में गिनते हैं। उनका कहना है कि निर्वेद तत्व ज्ञान, आसत्ति, ईर्ष्या आदि से अपने को छोटा समझना है जो कि स्थायी नहीं हो सकता। क्योंकि स्थायी का लक्षण है किसी से विच्छेद न होना एवं सभी को अपने स्वरूप में मिला पाना। ये दोनों निर्वेद में नहीं हैं। अत: उसका स्थायी के रूप में पोषण नीरस हो जाएगा। अत: शान्त का स्थायी भाव : 'शम' होता है। शम में अन्य रत्यादि स्थायीभावों की तरह अविच्छेद्यता एवं आत्मीयकरणक्षमता दोनों रहते हैं। अत: उसका परिपोष भी सरस हो जाता है। इस हेतु शम का प्रकर्ष ही शान्त रस है। शम का अर्थ कुछ तरङ्ग रहित सुखमय परमात्मा विषयक चित्तवृत्ति मानते हैं तो कुछ सभी प्रकार की चित्तवृत्तियों के प्रशम को ही शम मानते हैं। वृत्तिकार का आशय यह है कि जो विषय विशेष के अभिलाष के क्षय से जो सुख होता है वह ही इसका स्थायीभाव है। किसी भी इच्छा का न होना भी एक परम सुख है वही सुख इसका स्थायी है और उसका परिपोष ही शान्त रस है।

यह तो सबके ही अनुभव का विषय है कि वाञ्छित वस्तु की प्राप्ति में जो सुख है किसी भी वस्तु के प्रति आकर्षण न होना भी एक सुख है। वह कोई जरूरी नहीं कि निर्वेद से ही हो। निर्वेद में स्वावमानन होता है और इसमें स्वोत्कर्ष।

नाट्यदर्पण में कहा गया है— संसार के दु:ख की डर, वैराग्य, तत्वज्ञान, शास्त्रचिन्ता आदि से शान्त रस होता है और उसका अभिनय क्षमा, ध्यान, उपकार आदि से किया जाना चाहिए (३।२०) और निर्वेद जो है वह तत्वज्ञात, दु:ख आदि से विरसता होती है वही है और वह लम्बी साँस एवं ताप आदि का कारण होता है। (३।२८)

इससे यह भी सिद्ध होता है कि शान्त रस का नाट्य में उपयोग हो सकता है क्योंकि उसमें भी अभिनेयता है। उसके तत्वज्ञान आदि विभाव हैं, यम, नियम आदि अनुभाव हैं, धृति मति आदि उसके सञ्चारी भाव हैं और शम उसका स्थायीभाव है।

सचाई तो यह है कि रति आदि सभी भाव विकार हैं और शम है उन सबकी प्रकृति। विकार प्रकृति से ही निकलता है और उसी में लीन भी हो जाता है। और अपने अपने निमित्त को पाकर शान्त से ही भाव निकलते हैं और फिर निमित्त के हट जाने पर शान्त में ही विलीन होते हैं।

कितनी सही उक्ति है यह। युवति आदि को देखकर जो रति आदि भाव उत्पन्न होते हैं, उसके हट जाने पर फिर वह रतिभाव जाता कहाँ है ? शान्त में ही तो विलीन होता है। उसी तरह विजय के बाद उत्साह भी शान्त ही में विलीन हो जाता है। इसी तरह सभी भाव शान्त की ही उपज हैं। जब वे रस बनेंगे प्रकृष्ट होने पर तो शान्त में क्यों नहीं रस्यमानता है।

यहाँ पर एक बात और ध्यान देना है कि 'शम' शब्द का अर्थ समीचीन रूप से लिया जाय। शम का शाब्दिक अर्थ है किसी भी विकार का न होना। मगर काव्य प्रकरण में इसका अर्थ है इच्छा विशेष का न होना। सामान्य इच्छाओं के रहते हुए भी उनके प्रति विशेष आग्रह का अभाव ही शम है। जैसे जीमूतबाहन में। सामान्यत: उनमें भी सभी इच्छाएँ हैं लेकिन किसी के प्रति भी विशेष लगाव नहीं है। वह मतंग जैसे शत्रु के लिए ही क्षमा अपनाते हैं और मलयवती के प्रगाढ़ आलिंगन को तोड़कर नागों की रक्षा के लिए अपना बलिदान करते हैं। यह है शम का उदाहरण। यह भ्रम नहीं रहना चाहिए कि शम केवल योगियों में होता है। वह हर सहृदय में होता है यदि उसमें सत्व का उत्कर्ष हो। रसों में गुणविभाजन हैं-शृङ्गार, वीर, हास्य, राजसी प्रवृत्ति के रस हैं क्योंकि उनमें प्रवृत्तिपरकता है लेकिन सत्वाभिमुख, रौद्र, भयानक, बीभत्स तामसी प्रवृत्ति के रस हैं, उनकी प्रवृत्तिपकरता सत्व से बहुत दूर रहती है। करुण निमित्त भेद से सत्व एवं रज दोनों में होता है। शान्त एवं अद्भुत सत्व प्रकृति के हैं लेकिन इन्द्रजाल आदि के प्रयोग में अद्भुत कभी काल तामस भी बन जाता है।

इस तरह शान्त रस रसराज है और उसकी अवस्थिति कभी भी इनकारी जा नहीं सकती।

ध्वन्यालोक के प्रथम व्याख्याकार अर्थात् चन्द्रिकाकार शान्त रस को अधिकारिक कथा में निबन्धन न करने का परामर्श देते हैं और उस पर लोचनकार मौन रहते हैं। लेंकिन इस कथन में कोई दम नहीं दिखाई पड़ता। हो सकता है उनका भी दृष्टिकोण अभिनय से सम्बद्ध रहा हो। हम तो रामायण, महाभारत आदि में भी सर्वत्र शान्त रस ही व्याप्त देखते हैं। और नागानन्द जैसे सफल नाटक में यही अंगीरस है।

ध्वन्या०— एतदेव स्थिरीकर्तुमिदमुच्यते—

कारिका— रसान्तरान्तरितयोरेकवाक्यस्थयोरपि।
निवर्तते हि रसयोः समावेशे विरोधिता।। २७।।

रसान्तरव्यवहितयोरेकप्रबन्धयोर्विरोधिता निवर्तते इत्यत्र न काचिद्भ्रान्तिः। यस्मादेकवाक्यस्थयोरपि रसयोरुक्तया नीत्या विरुद्धता निवर्तते। यथा—

भूरेणुदिग्धान् नवपारिजातमालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः।।

सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पतादुकूलैः।।
विमानपर्यङ्कतलेनिषण्णाः कुतूहलाविष्टतया तदानीम्।
निर्दिश्मानान् ललनाङ्गुलीभिः वीराः स्वदेहान् पतितानपश्यन्।।

इत्यादौ। अत्र हि शृङ्गारबीभत्सयोस्तदङ्गयोर्वा वीररसव्यवधानेन समावेशो न विरोधी।। २७।।

लीला— विरुद्धप्रकृतिकयोरपि रसयोरुभयानुकूलरसव्यवहितत्वेन निबन्धना दोषाभावत्वं यदुक्तं तदेव द्रढयितुं प्रस्तुतकारिकावतारणाय वृत्तिकृदुपक्रमते एतदित्यादिना— एतद्= अनन्तरोक्तं, एव, स्थिरीकर्तु= द्रढयितुं, इदं= वक्ष्यमाण-वचनं, उच्यते= कथ्यत इति।

कारिकामवतारयति रसेत्यादिना— एकवाक्यस्थयोः अपि रसान्तरान्तरितयोः रसयोः समावेशे विरोधिना निवर्तते हि इति पदव्यवस्था।

एकवाक्यस्थयोः= समानवाक्यगतयोः अपि, रसान्तरान्तरितयोः= अन्यानु-कूलरसव्यवहितयोः, रसयोः= परस्परविरुद्धप्रकृतिकरसयोः, समावेशे= निबन्धने, विरोधिता= विप्रापिता, निवर्तते= नैव तिष्ठतीति यदि एकवाक्य स्थयोस्तथाकरणे विरोधिता निवर्तते चदेकेप्रबन्धगतयोरपि तथैवेति कारिकागत 'अपि' शब्दार्थः।

कारिकां विवृणोति वृत्तिकारो रसान्तरेत्यादिना— रसान्तरव्यवहितयोः= उभयानुकूलान्यरसव्यवहितयोः, एकप्रबन्धस्थयोः= समानप्रबन्धगतयोः, विरुद्ध-रसयोः विरोधिता= विप्रायिता, निरवर्तते= नैवावतिष्ठते, इति, अत्र, अस्मिन्विषये, न= नैव, कश्चित्= काऽपि, भ्रान्तिः= भ्रमः। यस्मात्= यतः, एकवाक्यस्थयोः= समानवाक्यगतयोः, अपि, रसयोः परस्पर विरुद्धरसयोः, उक्त्या,= कथितया, नीत्या= नयेन, विरुद्धता= विप्रीतता, निवर्तते= नैव प्रभवति इति। यथा= इति निदर्शने— तदेवोदाहरति भूरेणुदिग्धान्नित्यादिभिस्त्रिभिः= पद्यैःनवपारिजातमाला-रजोवासितबाहुमध्याः सुराङ्गना भुजान्तरालाः सुगन्धिभिः चन्दनवारिसेकैः कल्पलतादुकूलैः सवीजिताः विमानपर्यङ्कतले निषण्णाः वीराः तदानीं ललनाङ्-गुलिभि निर्दिश्यमानान् भूरेणु दिग्धान् शिवाभिः गाढं परिरभ्यमाणान् क्रव्यभुजां खगानां सशोणितैः स्फुरद्भिः पक्षैः उपवीज्यमानान् पतितान् स्वदेहान् तदानीं कुतूहलाविष्टतया अपश्यत इति पदव्यवस्था।

धर्म्ये द्वन्द्वयुद्धे निहताः सद्य एव अमरत्वं प्राप्ताः अतएव नवपारिजातमा-लारजोवासितबाहुमध्याः= नवो नूतनो यः पारिजातस्तदाख्यदेववृक्ष उपलक्ष-णात्तत्पुष्पं तेषां माला तस्याः रजोभिः परागैः वासिताः सुगन्धितां बाह्वोर्भ्रज्योम-ध्यमन्तरालं वक्षो येषां ते तादृशाः, सुराङ्गनाश्लिष्टभुजान्तरालाः= सुराङ्गनाभिः

देव प्रमदाभिः आश्लिष्टमालिङ्गितं भुजयोर्बाह्वोरन्तरालं मध्यं येषान्ते तादृशाः, सुगन्धिभिः= सुवासयुक्तैः चन्दनवारिसेकैः= चन्दनजलसिक्तैः, कल्पलतादुकूलैः= कल्पवृक्षपट्टवस्त्रैः, संवीजिताः= विहितानिलाः, विमानपर्यङ्कतले= विमानस्य पर्यङ्क-तले पर्यङ्कोपरि, निषण्णाः= आसीनाः, वीराः= योद्धारः, तदानीं= तत्समये, ललना-ङ्गुलिभिः= प्रमदाकरोरुहैः, निर्दिश्यमानान्= क्रव्यभुजां= आममांसभक्षकाणां, खगानां= पक्षिणां— गृध्रादीनां, सशोणितैः= सरक्तैः, स्फुरद्भिः= चलद्भिः, पक्षैः= पत्रैः, उपवीज्यमानान्= कृतानिलान्, पतितान्= भूमौ शायितान्, स्वदेहान्= निजपूर्वकायान्, कुतूहलाविष्टतया= विस्मयान्वितत्वेन, अपश्यन्= व्यलोकयस्मेति।

तत्राभीष्टमाह— इत्यादाविति-इत्यादिश्लोके।

तदेवाऽऽह अत्रेत्यादिना— अत्र= अस्मिन् पद्ये, हि, शृङ्गारबीभत्सयोः= तदाख्योर्नितान्तप्रतिकूलप्रकृतिकस्थायिभावात्मनोः रसयोः वा तदङ्गयोः= तयोः शृङ्गारबीभत्सयोः अङ्गयोः= अवयवयोः, वीररसव्यवधानेन= वीररसान्तरितत्वेन, समावेशः= उपनिबन्धनं, न, विरोधी= बिप्रायी इति।

अस्यायमाशयः— अत्र क्रमशः उपवर्णिते रतिजुगुप्से, 'वीराः स्वदेहान्' इत्यादिना तदीयोत्साहाद्यवगत्या प्रतीतेन वीररसेन व्यवहिते इति तयोर्नविरोधः। रसस्त्वत्र वीर एवं न शृङ्गारो न बीभत्सः किन्तु रतिजुगुप्से हि वीरं प्रति व्यभिचा-रिभूते इति लोचने स्पष्टम्, भूरेण्वित्यादिविशेषणार्थबोधे बीभत्सस्तद्विशेष्यार्थबोधो वीरो नवेत्यादिविशेषणार्थबोधे शृङ्गारस्तदङ्गिशेष्यार्थबोधो वीरश्चास्वाद्यत इति रीत्या वीरस्य मध्ये-मध्ये आस्वादः। श्रुतक्रमेण बोधे तु आदौ बीभत्सो योजनया बोधे तु आदौ शृङ्गार इति बालप्रियायां स्पष्टम्।। २७।।

ऊपर जो एकाश्रयत्व में तो अविरुद्ध किन्तु नैरन्तर्य में विरुद्ध रसों को दोनों के अविरुद्ध रस से व्यवहित कर देने पर निर्दोष होने की जो बात कही गई थी, उसी को दृढ़ बनाने के लिए उसके विषय का क्षेत्र के निर्देश करने वाली कारिका का अवतारण करते हैं— इसी को स्थिर करने के लिए यह कहा जाता है—

कारिका का अवतारण करते हैं— ''एक ही वाक्य में रहे भी अन्य रस से अन्तरित दो विरुद्ध रसों के समावेश में विरोधिता हट जाती है।। २७।।

कारिका के आशय का पल्लवन करते हैं— रस के अन्तर से व्यवहित एक ही प्रबन्ध में रहे विरोधी रसों की विरोधिता हट जाती है, यह इसमें कोई भी भ्रान्ति नहीं होनी चाहिए। जबकि एक ही वाक्य में रहे भी दो विपरीत रसों की विरोधिता उक्त रीति से हट जाती है। जैसे—

द्वन्द्वयुद्ध में मारे गए एवं सद्यः ही देवत्व को प्राप्त हुए नये पारिजात की माला के पराग से सुवासित है वक्षःस्थल जिनके ऐसे, देवप्रमदाओं से आलिङ्गित हैं भुजों के अन्तराल जिसके ऐसे, चन्दन के जल से सिक्त, सुवासित कल्प वृक्ष के पट्ट से बीजित, विमान के पर्यङ्क में बैठे वीर प्रमदा के अंगुलियों से दिखाए गये पृथ्वी की

धूल से धूसरित शृगालियों से गाढ़ रूप में अङ्कमाल किए गए, आम मांसभक्षी पक्षियों के, खून से लथपथ, फड़कते हुए पङ्खों से उपवीज्यमान एवं जमीन में पड़े अपने शरीर को उस समय बड़े कुतूहल से देखा। इत्यादि में।

उसमें अभीष्ट अर्थ को बताते हैं— यहाँ शृङ्गार और बीभत्स का अथवा उनके अङ्ग अर्थात् स्थायिभावों का वीर रस के व्यवधान से समावेश विरोधी नहीं है।

वस्तुतस्तु यहाँ वीर रस है, न कि शृङ्गार अथवा बीभत्सं देवांगनाओं को लेकर जो रति भाव है और धूल में गिरे शव को लेकर जो जुगुप्सा है वे दोनों वीर के प्रति व्यभिचारी हैं। अर्थात् जमीन की धूल से आदि विशेषण के बोध से बीभत्स उसके विशेष्य के बोध से वीर, नये पारिजात आदि विशेषण के अर्थबोध से शृङ्गार एवं उनके विशेष्यबोध से वीर रस का अभिबोध होने से बीच-बीच में वीर रस का आस्वाद है। अत: शेष दोनों का समावेश निर्दोष है।

उसमें भी सुनाई के क्रम से पहले बीभत्स का बोध होता है और योजना के अनुसार पहले शृङ्गार का।। २७।।

कारिका— विरोधमविरोधं च सर्वत्रेत्थं निरूपयेत्।
विशेषतस्तु शृङ्गारे सुकुमारतमो ह्यसौ।। २८।।

ध्वन्या०— यथोक्तलक्षणानुसारेण विरोधाविरोधौ सर्वेषु रसेषु प्रबन्धेऽन्यत्र च निरूपयेत्सहृदय:, विशेषतस्तु शृङ्गारे। स हि रतिपरिपोषकत्वाद्रतेश्च स्वल्पेनापि निमित्तेन भङ्गसम्भवात्सुकुमारतम: सर्वेभ्यो रसेभ्यो मनागपि विरोधी समावेशं न सहते।। २८।।

लीला— एवं प्रबन्धे वाक्ये च रसविरोधपरिहारं सामान्येनोक्त्वा तत्र विशेषमपि निर्दिशति कारिकाकारो विरोधमित्यादिना इत्थं सर्वत्र विरोधं अविरोधं च निरूपयेत, शृङ्गारे तु विशेषत: निरूपयेत् हि असौ सुकुमारतम: इति पदव्यवस्था।

इत्थं= अनेन प्रकारेण, सर्वत्र= प्रबन्धे वाक्ये सर्वेषु रसेषु, च, रसानां, विरोधं= विप्रियं, अविरोधं= अविप्रियं, च, निरूपयेत्= विचारयेत्, शृंगारे= तदाख्यरसे, तु= इति व्यवच्छेदे, तत्रापि, विशेषत:= विशेषप्रकारेण, निरूपयेत्, हि= यत:, असौ= शृङ्गार:, सुकुमारतम:= नितान्तकोमल इति।

कारिकां विवृणोति वृत्तिकृत् यथोक्तेत्यादिना सहृदय:= कवि:, यथोक्तलक्षणानुसारेण= तत्र-तत्र प्रकरणे यान्यपि लक्षणानि उक्तानि तदनुसारेण, विरोधाविरोधौ= आनुकूल्यप्रातिकूल्ये, प्रबन्धे, अन्यत्र= मुक्तकादौ च, सर्वेषु= निखिलेष्वेव, रसेषु, निरूपयेत्= निर्द्धारयेत्, विशेषत:= तत्रापि विशिष्टरूपेण, शृंगारे= तदाख्यरसे विरोधाविरोधविचारणा सावधानतया कर्तव्या। तथाकरणे हेतुमाह स:= शृंगार:, हि= यत:, रतिपोषात्मकत्त्वात्, रते:= रतिभावस्य, च, स्वल्पेन= सुसूक्ष्मेण, अपि, निमित्तेन= कारणेन, भङ्गसम्भवात्= विच्छेदावकाशात्, सर्वेभ्य:= अवशिष्टेभ्यो निखिलेभ्य:, रसेभ्य: सुकुमारतम:= नितान्त कोमल:, मनाक्= स्वल्पमपि, विरोधिसमावेशं= विरुद्धप्रकृतिकरसोपघातं, न, सहते= मर्षयति इति।

अस्यायमाशयः= सर्वेष्वेव रसेषु प्रबन्धगतेषु एक वाक्यगतेषुं च विरोध्य-विरोधिविवेकस्तु सावहितत्वेन कार्यस्तत्रापि विशेषेण शृङ्गारे यतः स रत्यात्मको रतिश्च स्वल्पेनाऽपि कारणेन विच्छेद्येति। रसजातीय एव तावत्सुकुमारस्तत्रापि करुणस्ततोऽपि शृङ्गार इति।। २८।।

अत्रेदमप्यवधेयं यद्रसानां त्रिधेतरेतरविरोधः— आश्रयैक्येन नैरन्तर्येण आलम्बनैक्येन च। अविरोधश्च स्वाभाविक आवलम्बनभेदजनित रसान्तरव्य-वहित जन्य इति त्रेधैव। आलम्बनैक्येन वीरशृङ्गाररस्य हास्यरौद्रबीभत्सैः, विप्रल-म्भशृङ्गाररस्य वीरकरुणरौद्रैः, आलम्बनाश्रयैक्याभ्यां वीरभयानकयोः नैरन्तर्यविभा-वैक्याभ्यां शान्तशृङ्गारयोः। तथैव वीरस्याद्भुतरौद्राभ्यां सर्वथाऽविरोधस्तथैव शृङ्गारस्याद्भुतेन भयानकस्य वीभत्सेन च। आलम्बनभेदाद्वीरशृङ्गारयोर्नैव विरोधः। इति दीधितौ स्पष्टम्।

इस प्रकार रस के विरोधपरिहार के विषय में बताकर अब उसमें भी विशेष निर्देश करते हैं। कारिका—

इस प्रकार सभी रसों में विरोध एवं अविरोध का सम्यक् निरूपण कर लेना चाहिए। उसमें भी शृङ्गार में तो विशेष प्रकार से ही ध्यान रखना चाहिए। क्योंकि शृङ्गार रस सबसे सुकुमार होता है और जरा-सा भी विरोध सहन नहीं कर सकता

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

कवि को पूर्वोक्त लक्षण के अनुसार विरोध एवं अविरोध का सभी रसों में प्रबन्ध में वा अन्यत्र मुक्तक आदि में भी निरूपण करना चाहिए। उसमें भी खाश करके शृङ्गार में, क्योंकि वह जो है रति के परिपोष से बनता है और रति का थोड़े से कारण से भंग अर्थात् विच्छेद होने की सम्भावना होने से शृंगार सबसे सुकुमार होता है- वैसे तो सभी रस सुकुमार होते हैं उसमें भी करुण विशेष ही कोमल होता है और शृङ्गार तो सबसे सुकुमार, और वह शेष सभी रसों की अपेक्षा भी थोड़ा सा भी विरोधी का समावेश सहन नहीं कर सकता।। २८।।

कारिका— अवधानातिशयवान् रसे तत्रैव सत्कविः।
भवेत्तस्मिन् प्रमादो हि झटित्येवोपलक्ष्यते।। २९।।

ध्वन्या०— तत्रैव च रसे सर्वेभ्योऽपि रसेभ्यः सौकुमार्यातिशययोगिनि कविरवधानवान् प्रयत्नवान् स्यात्। तत्र हि प्रमाद्यतस्तस्य सहृदयमध्ये क्षिप्रमेवाज्ञानविषयता भवति। शृङ्गाररसो हि संसारिणां नियमेनानुभव-विषयत्वात् सर्वरसेभ्यः कमनीयतया प्रधानभूतः।। २९।।

लीला— 'विपशेषतस्तु शृङ्गारे' इति, यदुक्तं तमेवार्थतमनुसरन् कारिकाका-रस्तत्फलं निर्दिशति अवधानेत्यादिना— तत्रैव रसे सत्कविः अवधानातिशयवान् भवेत् हिं तस्मिन् प्रमादः झटिति एव अवभासते इति पदव्यवस्था।

तत्रैव= तस्मिन्नेव शृङ्गाराख्ये, रसे, सत्कविः= सुकविः अवधानातिशयवान्=

अत्यन्तसावधानः, भवेत्, हि= यतः तस्मिन्= शृङ्गाररसे, प्रमादः= अनवधानता, झटिति एव= द्रागेव सर्वप्रथमत्वेन, उपलक्ष्यते= परिदृश्यत इति।

वृत्तिकारः कारिकाशयं विवृणोति तत्रैवेत्यादिना— सर्वेभ्यः= निखिलेभ्यः, रसेभ्यः, अपि, सौकुमार्यातिशययोगिनि= कोमलताऽऽधिक्ययुक्ते, तत्रैव= तस्मिन्नेव, रसे, कविः, अवधानवान्= प्रयत्नवान्— विरोधरिहारे सततयत्नपरः, स्यात्। हि= यतः, तत्र= तस्मिन् शृङ्गाराख्ये रसे, प्रमाद्यतः= प्रमादं कुर्वतः, तस्य= कवेः, सहृदयमध्ये= रसिकसमाजे, क्षिप्रमेव= सद्य एव, अवज्ञानविषयता= तिरस्कारलक्ष्यत्वं, भवति। शृङ्गाररसः= तदाख्यरसः, हि= इत्यवधारणे स एवेति, संसारिणां= लोकानां, नियमेन= स्वभावेन, एव अनुभवविषयत्वात्, ज्ञानविषयत्वात्, सर्वरसेभ्यः= अवशिष्टनिखिलरसापेक्षया, कमनीयतया= स्पृहणीयरूपेण, प्रधानभूतः= मुख्यत्वावह इति।

अस्यायमाशयः— सामान्यतस्तु कविना सर्वेष्वेव रसेषु नितान्तमप्रमत्तेन भाव्यमेव। तत्रापि शृङ्गारे विशेषेण तेन प्रयत्नः कार्यः। किञ्च शृङ्गारो रतिपरिपोषात्मा रतिश्च सर्वैरेव संसारिभिः स्वभावेनैव सम्यगनुभूतो विषयः। तत्र स्वल्पमपि दूषणं सहृदयान् क्षोभयति। लोकोत्तरसहृदयविषयत्वाच्छान्तस्यानुभवः क्वाचित्क एव भवति तथैव वीरस्यापि तथा नातिविस्तृतः किन्तु शृङ्गारस्य तु सर्वेषामेव विषयत्वात्तत्र कवेः स्वल्पोऽपि तिरस्कारावह इति।। २९।।

जो 'शृङ्गार रस के निबन्धन में कवि को सावधान होना चाहिए' कहा था, उसी कथन को दृढ करते हुए उसके फल का भी कारिकाकार निर्देश करते हैं—

एक सफल कवि को उसी शृङ्गार रस के निबन्धन में विशेष ध्यान रखने वाला होना चाहिए क्योंकि उसमें जो प्रमाद है वह शीघ्र ही दिखाई पड़ता है।। २९।।

वृत्तिकार कारिका के आशय का पल्लवन करते हैं— सभी रसों से सौकुमार्य की अतिशयता से उक्त उसी शृङ्गार रस में कवि को सावधान=प्रयत्नशील होना चाहिए। उसमे थोड़ा सा प्रमाद होने से शीघ्र ही कवि तिरस्कार का विषय बन जाता है। शृङ्गार रस के स्वभाव से ही संसारियों के अनुभव के विषय होने से उसकी सभी रसों से कमनीय रूप से प्रधानता है।।२९।।

ध्वन्या०— एवञ्च सति—

कारिका— विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति।। ३०।।

ध्वन्या०— शृङ्गारविरुद्धरसस्पर्शः शृङ्गाराङ्गानां यः स न केवलमविरोधलक्षणयोगे सति न दुष्यति यावद्विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा क्रियमाणो न दुष्यति। शृङ्गाररसाङ्गैरुन्मुखीकृताः सन्तो हि विनेयाः सुखं विनयोपदेशं गृह्णन्ति। सदाचारोपदेशरूपा हि नाटकादिगोष्ठी विनेयजनहितार्थमेव मुनिभिरवतारिता।

किञ्च शृङ्गारस्य सकलजनमनोहराभिगमत्वात्ततदङ्गसमावेशः काव्ये शोभातिशयं पुष्यतीत्यनेनापि प्रकारेण विरोधिनि रसे शृङ्गाराङ्गसमावेशो न विरोधी।

ततश्च—

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम्।।

इत्यादिषु नास्ति रसविरोधदोषः।

लीला— इत्थं शृङ्गारस्य प्राधान्यं प्रतिपद्य सम्प्रति तस्य विस्तारमपि व्याख्यातु तदवधारककारिकावतारणाय वृत्तिकृदुपक्रमते एवमित्यादिना एवं= इत्थं, च= अपि, सति= विद्यमाने अर्थात् शृङ्गाररसस्य सर्ववादित्वे सिद्ध—

कारिकामुपस्थापयति विनेयानित्यादि— विनेयान् उन्मुखीकर्तु वा काव्य-शोभार्थ एव तदङ्गानां तद्विरुद्धरसस्पर्शः न दुष्यति इति पदव्यवस्था।

विनेयान्= शिक्षणीयान् उन्मुखीकर्तुं= विषयं प्रति जागरुकं विधातुं, वा= अथवा, काव्यशोभार्थ= काव्यविच्छित्तिसाधनाय, एव= इति व्यवच्छेदे-न तु निष्प्रयोजनं, तदङ्गानां= तस्य शृङ्गारस्य अङ्गानां विभावादीनां, तद्विरुद्धरसस्पर्शः= तस्य शृङ्गारस्य ये विरुद्धाः प्रतिकूलप्रकृतिकाः रसा शान्तादयः तेषां स्पर्शः स्वल्पसम्बन्धः, न, दुष्यति= विरुद्धो भवतीति।

ये खलु शान्तादयः शृङ्गारस्य विरुद्धा रसास्तेष्वपि शृङ्गारविभावादीनां किञ्चित्स्पर्शो न दुष्टो यदि स शिक्षणीयेषु विषयं प्रति रुचिमुत्पादयितुं वा काव्यविच्छित्यर्थं कृतो भवेत्। रसान्तरगता अपि विभावाद्या तथा भङ्ग्या वर्णनीया यथा शृङ्गाराङ्गभावमुपागमन्निति।

कारिकां विवृणोति वृत्तिकारः शृङ्गारेत्यादिना— शृङ्गाराङ्गानां= शृङ्गारसाव-यवानां, यः, शृङ्गारविरुद्धरसस्पर्शः= शृङ्गारप्रतिकूलप्रकृतिकरससम्बन्धः, स, केवलम्= अविरोधलक्षणयोगे= विरोधपरिहारलक्षणयुक्तत्वे, न दुष्यति न= अपितु तथालक्षणायोगेऽपि न दुष्यति, यावत्= यावत्पर्यन्तं विनेयान्= शिक्षणीयान्, उन्मुखीकर्तुं= अनुकूलयितुं, वा= इति पक्षान्तरे, काव्यशोभार्थं काव्यविच्छित्ति-निमित्तं, एव= इत्यवधारणे, न तु निष्प्रयोजनमपि, क्रियमाणः= विधीयमानः, न दुष्यति= नैव दूषणीयो भवति। तत्र प्रथमपक्षे हेतुमाह— हि= यतः, शृङ्गाररसाङ्गैः= शृङ्गाररसविभावादिभिः, उन्मुखीकृताः= प्रवर्तिताः, सन्तः= विद्यमानाः, विनेयाः= शिक्षणीयाः, सुखं= सरलतयैव, विनयोपदेशान्= विनयशिक्षाद्युपदेशान्, गृह्णन्ति= धारयन्ति। सदाचारोपदेशरूपा= शिष्टाचारादिशिक्षारूपा, नाटकादिगोष्ठी= नाटकप्र-भृत्यायोजना, मुनिभिः= भरतादिभि, विनेयजनहितार्थं= शिक्षणीयजनोपकारार्थं, एव= न तु केवलं मनोरञ्जननिमित्तमात्रं, अवतारिता= सृष्टा इति।

कथनेऽस्मिन् आलोचका विवदन्ते। धनञ्जयस्तु स्पष्टमेव कथयति 'आनन्द-स्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः। सोऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय।' इति वस्तुतस्तु काव्ये दृश्ये श्रव्ये वा आत्मप्रकटनानन्दस्तु कवेरेव विषयः किन्तु पाठकस्य द्रष्टुरपि तत्र प्रवृत्तये एव हेतु उपदेशग्रहणं तु सदा गौणत्वेनैव वर्तते। काव्याद्धनादिस्याद्वा न वा किन्तु तज्जन्यानन्दस्तु कविश्रोतृदर्शकाणामेव सद्य एव भवति।

तस्य द्वितीयं पक्षं व्याख्याति किञ्चेत्यादिना किञ्च, शृङ्गारस्य, सकलजनम-नोहराभिरामत्वात्= सर्वविधलोकहृद्यत्वेन ग्राह्यत्वात्, काव्ये= प्रबन्धादौ, तदङ्गस-मावेशः= शृङ्गार विभावादिसन्निवेशः, शोभातिशयं= विच्छित्याधिक्यं, पुष्यति= वर्धयति, इति, अनेन, अपि, प्रकारेण= विधिना, विरोधिनि= विरुद्धप्रकृतिके, अपि, रसे, शृङ्गाराङ्गसमावेशः= शृङ्गारावयवोपन्यासः न विरोधी= नैव विप्रियकारी इति। ततश्च= तेनैव हेतुनाऽपि— निदर्शनं प्रस्तौतिं सत्यमित्यादि रामाः मनोरमाः इति सत्यं, विभूतयः रम्याः इति सत्यं किन्तु जीवितं मत्ताङ्गनापाङ्गभङ्गलोलं हि इति पदव्यवस्था।

रामाः= विलासिन्यः, मनोरमाः= हृद्याः, इति सत्यं= यथार्थमेव, विभूतयः= सम्पदः, रम्याः शोभना इत्यपि सत्यमेव, किन्तु, जीवितं= जीवनमेव, मत्ताङ्गनापा-ङ्गभङ्गलोलं= मता यौवनभराकुला या अङ्गना प्रमदा तस्या अपाङ्गस्य भङ्गः कटाक्ष इव लोलं चञ्चलहि= इति अवधारणे इति।

इत्यादिषु= इत्यादिकथनप्रकारेषु, रसविरोधदोषः= शान्तशृङ्गाररसयोरव्यवहि-तत्वेन समावेशनदोषः, नास्ति इति।

अस्यायमाशयः— सस्माच्छृङ्गार एव रसः सर्वेषामेवानुभवसामान्यस्तेन तस्य विभावादीनां तद्विपरीतप्रकृतिकरससम्बद्धत्वे वा रसान्तरसम्बद्धानां विभावा-दीनां शृङ्गार भङ्गायोपनिबन्धने च अविरोधलक्षणायोगेऽपि न दोषाय यदि तथा शिक्षणीयान् विषयं प्रति अभिमुखीकर्तुं वा काव्यविच्छित्यातिशयाय कृतं भवेत्। शृङ्गाराङ्गैरुत्साहिता विनेया अपि सुशिक्षणीया भवन्ति। नाटकादिरपि सदाचारोपदे-शायैवप्रवर्तितो मुनिभिः। सर्वजनहृद्यस्य अङ्गानां समावेशे न काव्यस्य शोभा-तिशयो वर्धते। तेन प्रतिकूलप्रकृतिकरसेऽपि तत्समावेशो नैव दोषाय भवतीति। यथा 'सत्यं मनोरमा' इत्यादौ जीवनस्य अनित्यत्वकथनं शान्तरसस्य विभवा-स्तञ्च रामा इति शृङ्गारलम्बनविभवो विभूतयः इति तदुद्दीपनविभावश्च पुष्णी-तस्तथैव मत्ताङ्गनापाङ्गभङ्ग इति शृङ्गारं प्रकाशयन्नपि जीवनानित्यत्वातिशयबो-धनार्थे पर्यवस्यतीति शान्तमेवोपकरोतीति गुडजिह्विकया विनेयोऽपि वैराग्ये पर्यवस्यति। अत्र परस्परविरुद्धयोरपि नास्ति शान्तशृङ्गारयोः कश्चन विरोधः।

तथैव रसान्तरगतानां विभावादीनां शृङ्गारभङ्ग्या वर्णनं यथा—

त्वां चन्द्रचूडं सहसा स्पृशन्ती प्राणेश्वरं गाढवियोगतप्ता।
सा चन्द्रकान्ताकृतिपुत्रिकेव संविद्विलीयाऽपि विलीयते मे।

गाढवियोगतप्ता सा मे संवित् प्राणेश्वरं चन्द्रचूडं त्वां सहसा स्पृशन्ती चन्द्रकान्ताकृतिपुत्रिका इव विलीय अपि विलीयते इति पदव्यवस्था।

गाढवियोगतप्ता= तव दृढविरहेण त्वदस्पर्शेन तप्ता भवतापमनुभवन्ती, सा= बौद्धिकविषयनिमग्ना, मे, संवित्= अन्तस्करणवृत्तिः, अधुना, त्वां, सहसा= हठादेवः स्पृशन्ती—किञ्चिद्विषयीकुर्वाणा, चन्द्रकान्ताकृतिपुत्रिका= चन्द्रकान्तमणि स्वरूपपुत्तलिका, इव= यथा, विलीय= द्रवीभूयापि, विलीयते= द्रवीभवति। यथा चिरविरहतप्ता प्रमदा प्रियस्पर्शेन नितान्तमेव द्रुता भवति यथा वा चन्द्रकान्त-मणिपुत्तलिका चन्द्रकरस्पर्शेन प्रथमं किञ्चिदार्द्रीभूय पुनश्च सर्वावयवावच्छेदेनार्द्रा भवति तथैव मे चितवृत्तिरपि त्वां चन्द्रचूडं प्रियं प्राप्य त्वच्चेतनेन द्रवीभूता सती सर्वविधविषयैषणाच्छेदेन त्वय्यैव निमग्ना भवति इति।

अत्र संविदादौ विरहतप्तनायिकात्वादिप्रतीत्या शृङ्गारविभावत्वादिप्राप्तिरिति शान्तविभावानां शृङ्गारभङ्ग्याप्रयोगः काव्यविच्छित्यतिशयायेति।

यथा वा (मम)—

अवाप्य चित्तस्थितमिन्दुशेखरं चिरोज्झितं तं प्रणयतिं यथाङ्गना।
प्रगाढसश्लेषमुदा वियोगजं विहाय कष्टं हृदयं रिरंसते।। ३०।।

इस प्रकार शृङ्गार की प्रधानता बताकर अब उसके क्षेत्र के सम्बन्ध में निर्देश करने वाली कारिका का अवतारण करने का वृत्तिकार उपक्रम करते हैं—

इस प्रकार के होने पर शृङ्गार रस का सभी के साथ संवादित्व होने पर कारिका का अवतारण करते हैं—

शिक्षणीयों को विषय के प्रति उन्मुख करने के लिए अथवा काव्य की शोभा को बढ़ाने के लिए शृङ्गार रस के अंगों का उसके विरुद्ध रसों का स्पर्श भी दूषित नहीं होता।। ३०।।

वृत्तिकार कारिका के आशय का पल्लवन करते हैं—

शृङ्गार रस के अंग अर्थात् विभावादि का उसके प्रतिकूल प्रकृति वाले रसों का स्पर्श (शान्त आदि विरोधी रसों में भी शृङ्गार के विभाव आदि का सम्बन्ध अथवा अन्य रसों के विभावादि का शृङ्गार भंगी से प्रयोग) जो है सो ऊपर बताए गए अविरोधलक्षण का योग न होने पर भी दूषित नहीं होता जब तक कि वह विनेय अर्थात् शिक्षणीयों को उन्मुख करने के लिए अथवा काव्य की शोभा की अतिशयता के लिए किया गया हो। शृङ्गार रस के अंगों से उन्मुख किए गए विनेय आसानी से विनय आदि उपदेशों का ग्रहण कर पाते हैं। सदाचार आदि के उपदेश रूप नाटक आदि की गोष्ठी मुनियों ने विनेय जन के हित के लिए ही अवतारित की है।

यह भी कि शृङ्गार का सभी के लिए हृद्य रूप में सुन्दर होने से काव्य में उसके अंगों-विभावादिकों का समावेश शोभातिशय क़ा पोषण करता है। ऐसा इस प्रकार

से भी विरोधी रसों में शृङ्गार के अंगों का समावेश विरोधी नहीं होता। ऐसा होने से है–

''प्रमदा मनोरम होती है, यह सत्य है, और सम्पदाएं भी रमणीय होती हैं यह भी सत्य है किन्तु जीवन जो है वह मत्त प्रमदा के कटाक्षों की तरह चञ्चल (अस्थिर) है।''

इत्यादि में रसविरोधसम्बन्धी दोष नहीं है– यहाँ जीवन का अनित्य ज्ञान जो है वह शान्त रस का विभाव है और प्रमदा जो शृङ्गार रस का विभाव है और सम्पदाएँ जो उसके उद्दीपन विभाव है। उसी का पोषण करती हैं फिर भी दोनों में कोई विरोध नहीं है क्योंकि इससे विनेय जो है वह आसानी से ही वैराग्य का ग्रहण करता है जैसे पहले मधु को चाटनेवाला रोगी कड़वी दवा भी ले पाता है।। ३०।।

कारिका– विज्ञायेत्थं रसादीनामविरोधविरोधयाः।
विषयं सुकविः काव्यं कुर्वन् मुह्यति न क्वचित्।। ३१ ।।

ध्वन्या०– इत्थमनेनानन्तरोक्तेन प्रकारेण रसादीनां रसभावतदाभासानां परस्परं विरोधस्याविरोधस्य च विषयं विज्ञाय सुकविः काव्यविषये प्रतिभातिशययुक्तः काव्यं कुर्वन् न क्वचिन्मुह्यति।

लीला– तदेतत्प्रकरणमुपसंहरन् कारिकाकारस्तत्फलं निर्दिशति विज्ञायेत्यादिना– इत्थं रसादीनां अविरोधविरोधयोः विषयं विज्ञाय काव्यं कुर्वन् सुकविः क्वचित् न मुह्यति इति पदव्यवस्था।

इत्थं उक्तप्रकारेण, रसादीनां= रसभावादीनां, अविरोधविरोधयोः= अदोषदोषयोः– प्रातिकूल्यानुकूल्ययोः, विषयं= लक्ष्यं, विज्ञाय= अवधार्य, काव्यं, कुर्वन्= प्रणयन्, सुकविः= सफलकविः, क्वचित्= कस्मिंश्चिदपि विषये, न मुह्यति= नैव प्रमाद्यति इति।

वृत्तिकारःकारिकां विवृणोति इत्थमित्यादिना– इत्थं= अनेन अनन्तरोक्तेन, प्रकारेण– पूर्वोक्तनियमेन, रसादीनां=रसभावतदाभासानांरसभावरसाभासभावाभासानां, परस्परं=मिथः, विरोधस्य=प्रातिकूल्यस्य, अविरोधस्य=आनुकूल्यस्य, च, विषयं= लक्ष्यं, विज्ञाय= सम्प्रधार्य, सुकविः, काव्यविषये= काव्यप्रणयने, प्रतिभातिशययुक्तःप्रतिभायाःनवनवोन्मेषशालिन्याःप्रज्ञायाःअतिशयआधिक्यं तेन युक्तःसम्पन्नः, काव्यं, कुर्वन्=प्रणयन्, क्वचिदपि, न मुह्यति=स्खलित इति।।

एवं रसादीनामानुकूल्यप्रातिकूल्ये प्रातिकूल्ये च तदनुकूलनोपायं च ज्ञात्वा कविस्तदनुकूलमेव काव्यं कुर्यात्। तथा सति स सदैव स्मरणीयतामापद्यते इति।। ३१ ।।

प्रकरण का उपसंहार करते हुए काव्य का उसका फल भी बताते हैं–

इस प्रकार रस, भाव आदि की प्रतिकूलता एवं अनुकूलता को सम्यक् प्रकार से जानकर काव्य का प्रणयन करता हुआ कवि कभी भी मोहित नहीं होता–रचना के विषय में प्रमाद नहीं करेगा।

वृत्तिकार कारिका की व्याख्या करते हैं– इस प्रकार= इस पूर्वोक्त प्रकार से, रस

आदि का= रस, भाव, रसाभास, भावाभास आदि का परस्पर विरोध एवं अविरोध के भी विषय को जानकर काव्य के विषय में प्रतिभा की अतिशयता से युक्त होकर काव्य का प्रणयन करता हुआ कवि कभी भी स्खलित नहीं होता।। ३१ ।।

ध्वन्या०— एवं रसादिषु विरोधाविरोधनिरूपणस्योपयोगित्वं प्रतिपाद्य व्यञ्जकवाच्यवाचकनिरूपणस्यापि तद्विषयस्य तत्प्रतिपाद्यते—

कारिका— वाच्यानां वाचकानां च यदौचित्येन योजनम्।
रसादिविषयेणैतत्कर्म मुख्यं महाकवेः।। ३२।।

ध्वन्या०— वाच्यानामितिवृत्तविशेषाणां वाचकानां च तद्विषयाणां रसादिविषयेणौचित्येन यद्योजनमेतन्महाकवेर्मुख्यं कर्म। अयमेव हि महाकवेर्मुख्यो व्यापारो यद्रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम्।। ३२।।

लीला— इत्थं रसादीनां परस्परविरोधाविरोधनिरूपणप्रयोजनमभिधाय सम्प्रति वाच्यवाचकयोरपि तत्प्रतिपादककारिकावतारणायोपक्रमते एवमित्यादिना— एवं= इत्थं, रसादिषु= रसभावादिषु, विरोधाविरोधनिरूपणस्य= प्रातिकूल्यानुकूल्य-निर्धारणस्य, उपयोगित्वं= फलं, प्रतिपाद्य= निर्धार्य, व्यञ्जकवाच्यवाचकनिरूपणस्य= व्यञ्जकानि रसप्रकाशकानि यानि वाच्यानि विभावादीनि वाचकानि सुप्तिङादीनि यन्निरूपणं प्रतिपादनं तस्य अपि, तद्विषयस्य= रसादि= विषयस्य, तत्= निरूपणप्रयोजनं, प्रतिपाद्यते= निरूप्यत इति।

रसादीनां विरोधाविरोधनिरूपणपुरःसरं विरोधपरिहारोपायमुक्त्वा तत्प्रयोजनमपि प्रतिपादितमधुरौ रसव्यञ्जकौ यो वाच्यवाचकौ तयोर्निरूपणप्रयोजनञ्चाभिधीयतेऽनेनेत्याशयः।

तत्कारिकामवतारयति वाच्यानामित्यादिना— वाच्यानां वाचकानां च यद् रसादिविषयेण योजनं एतत् महाकवेः मुख्यं कर्म इति पदव्यवस्था।

वाच्यानां= विभावादिरूपाणां कथावस्तुविशेषाणां, वाचकानां= सुप्तिङादि रूपाणां, च, यद्, रसादिविषयेण= रसादिव्यञ्जनोपयोगित्वेन, औचित्येन, योजनं= निवेशनं, एतत्= एतदेव, महाकवेः= सिद्धहस्तकवेः, मुख्यं= प्रधानं, कर्म= कृत्यमिति।

कारिकां विवृणोति वृत्तिकारो वाच्यानामित्यादिना वाच्यानां= इतिवृत्तविशेषाणां इतिवृत्तं प्रबन्धवाच्यं तस्य विशेषाः विभावादयो रसव्यञ्जकास्तेषां, वाकचकानां= तद्विषयाणां= वाच्यविषयीभूतसुप्तिङादीनां, रसादिविषये= रसभावादिलक्ष्ये, यत् औचित्येन= उपयुक्तत्वेन, आनुकूल्येन, योजनं= सन्निवेशनं, एतत्, महाकवेः= सफलकवेः, मुख्यं= प्रधानं, कर्म। तदेव द्रढयति–महाकवेः= सिद्धहस्तकाव्यकर्तुः, अयं, एव, मुख्यः= प्रधानः, व्यापारः= व्यवसायः, यत्,

मुख्यतया= प्राधान्यविवक्षया, रसादीन्= रसभावादीन्, काव्यार्थीकृत्य= प्रतीयमानार्थत्वेन सन्निवेश्य, शब्दानां, अर्थानां, च तद्व्यक्त्यनुगुणत्वेन= तेषां रसादीनां या व्यक्तिर्व्यञ्जना तस्या अनुगुणत्वेन= उपस्कारकत्वेन, च, उपनिबन्धनं= विन्यसनमिति।

एतदुक्तं भवति ये खलु रसभावादीनां व्सयञ्जका विभावादय इतिवृत्तवाच्यभूता ये च तेषां वाचकाः शब्दाः सुप्तिङादिस्वरूपास्तेषां रसभावाद्यानुकूल्यौचित्येन काव्ये योजनमर्थात् यथा आलोकार्थी वर्तिकार्थं प्रयतते तथैव रसभावाद्यर्थितया तानेव काव्यस्य मुख्यार्थत्वेन संगृह्य तद्व्यञ्जनानुकूल्येनैव शब्दार्थयोर्निबन्धनमेव महाकवेर्मुख्यो व्यापार इति।

इस पकार रसों के विरोधाविरोधनिवेचन का प्रयोजन बताकर अब वाच्यवाचकविवेचन का प्रयोजन बताने वाली कारिका के अवतारण के लिए वृत्तिकार उपक्रम करते हैं—

इंस प्रकार रसादि में विरोध एवं अविरोध के निरूपण की उपयोगिता का प्रतिपादन कर रसादिविषय के व्यञ्जक जो वाच्यवाचक है उनके भी निरूपण का प्रयोजन प्रतिपादित किया जाता है—

कारिका का अवतारण करते हैं- वाच्यों एवं वाचकों का जो रसादि विषय से सम्बद्ध औचित्य से सन्निवेश है, वही महाकवि का मुख्य कार्य है।। ३२।।

वृत्तिकार कारिका के आशय का पल्लवन करते हैं- वाच्यों का अर्थात् इतिवृत्त विशेषों के वाच्यभूत विभावादियों का और उनके वाचकभूत शब्दों का रसादिविषय के औचित्य से जो सन्निवेश है वही महाकवि का मुख्य कर्म है। महाकवि का यह ही मुख्य व्यापार है जो कि रसादि को मुख्यरूप से काव्य का अर्थ बनाकर उसकी अभिव्यक्ति के अनुकूल रूप से शब्दों एवं अर्थों का उपनिबन्धन हो।। ३२।।

इसका आशय यह है कि जैसे प्रकाश को चाहने वाला वर्तिका के लिए प्रयत्न करता है उसी तरह कवि भी रस सिद्धि के लिए शब्दों एवं अर्थों का निबन्धन करें।

ध्वन्या०— एतच्च रसादितात्पयेण काव्यनिबन्धनं भरतादावपि सुप्रसिद्धमेवेति प्रतिपादयितुमाह—

कारिका— रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।
औचित्यवाग्यस्ता एता वृत्तयो द्विविधाः स्थिताः।। ३३।।

ध्वन्या०— व्यवहारो हि वृत्तिरित्युच्यते। तत्र रसानुगुण औचित्यवान् वाच्याश्रयो यो व्यवहारस्ता एताः कैशिक्याद्या वृत्तयः। वाचकाश्रयाश्चोपनागरिकाद्याः। वृत्तयो हि रसादितात्पर्येण सन्निवेशिता कामपि नाट्यस्य काव्यस्य च्छायामावहन्ति। रसादयो हि द्वयोरपि तयोः जीवभूताः इतिवृत्तादि तु शरीरभूतमेव।

लीला— 'रसादितातपयेण काव्यनिबन्धनं' यदुक्तं' तस्य प्राचीनसम्मतत्व

निर्देशककारिकामवतितारयिषुर्वृत्तिकारस्तदर्थमुपक्रमते एतदित्यादिना एतत्= अनन्तरोक्तं, च, रसादितात्पर्येण= रसभावादिपरकत्वेन, काव्यनिबन्धनें= काव्यस्य योजनं, भरतादौ= भरतप्रभृतिकाव्याचार्यमते, अपि= इत्यत्र संयोजने न केवलमत्रैवो- क्तमिति, सुप्रसिद्धं= सुविख्यातं, एव= इत्यवधारणे, इति= इत्थं, प्रतिपादयितुं= बोधयितुं, आह= कथयति इति।

कारिकामवतारयति रसेत्यादि अर्थशब्दयोः रसाद्यनुगुणत्वेन औचित्यवान् यः व्यवहारः ताः एताः द्विविधाः वृत्तयः इति पदव्यवस्था।

अर्थशब्दयोः= वाच्यवाचकयोः, रसाद्यनुगुणत्वेन= रसभावाद्यभिव्यक्त्यानुकूल्येन, औचित्यवान्= उपयुक्तः यः= काव्यसम्बद्धः, व्यवहारः= प्रयोगः ताः= तादृशाः, एताः= भरतनाट्यशास्त्रे, उद्भटादिप्रणीतालङ्कारशास्त्रे, च प्रसिद्धाः= प्रख्याताः द्विविधाः= अर्थसम्बद्धाः कैशिक्यादयः, शब्दसम्बद्धा उपनागरिकादयः च, वृत्तयः, स्थिता इति। रसाद्यानुकूल्येन औचित्ययुक्तो योऽर्थप्रयोगः स एव कैशिक्यादिवृत्तिनाम्ना निर्दिष्टो नाट्यशास्त्रे, तादृश एव शब्दव्यवहारः उपनागरिकादिनाम्ना निर्दिष्टोऽलङ्कारशास्त्रे इति।

वृत्तिकारः कारिकां विवृणोति व्यवहार इत्यादिना— व्यवहारः= प्रयोगः हि, वृत्तिः इति उच्यते= कथ्यते। तत्र, रसानुगुणः= रसव्यञ्जनानुकूलः, औचित्यवान्= औचित्ययुक्तः, वाच्याश्रयः= अर्थाधृतः, यः, व्यवहारः= समावेशः ताः= एताः= नाट्यशास्त्रादौ, अलङ्कारशास्त्रे च प्रसिद्धाः, कैशिक्यादयः= कैशिकीसात्वती आरभटीसंज्ञिता वृत्तयः, वाचकाश्रयाः= शब्दाधृताः, च उपनागरिकाद्याः उपनागरिकापरुषाकोमलाख्या इति। तासां प्रयोजनमाह वृत्तयः, हि, रसादितात्पर्येण= रसभावादिपरकत्वेन, सन्निवेशिताः= उपन्यस्ताः, नाट्यस्य= अभिनेयस्य, तद्रसादेः काव्यस्य= अनभिनेयस्य, च, कामपि= अपूर्वां, छायां= विच्छित्तिं, आवहन्ति= पुष्णन्ति इति।

द्वयोः= उभयो, अपिः तयोः= कैशिक्याद्यार्थिक्याः उपनागरिकादिशाद्यांश्च, रसादयः= रसभावादयः, जीवभूताः= मूलाधाराः, इतिवृत्तादि= कथावस्तु, तु, शरीरभूतं= वपुः, एवेति।

शब्दार्थयोः काव्ये यो व्यवहारः स एव वृत्तिः। तत्र रसभावादिदृष्ट्या औचित्येन वाच्याश्रिताः कैशिक्याद्याः कैशिक्याद्याः तथैव वाचकाश्रिता उपनागरिकाद्याश्च। ता हि रसादिपरकत्वेन सन्निवेशिताः काव्यस्य विच्छित्त्यतिशयं पुष्णन्ति। तासां रसादिः प्राणाः, इतिवृत्तं शरीरमिति। यथोक्तं मुनिना इतिवृत्तं नाट्यस्य शरीरमिति। तत्र नाट्य रस एव।

काव्य के रसादिपरक निबन्धन के प्राचीनत्व का निर्देश करने वाली कारिका के अवतारण के हेतु वृत्तिकार उपक्रम करते हैं– 'यह रसादितात्पर्य से काव्य का निबन्धन जो है भरत आदि के द्वारा प्रणीत काव्य शास्त्रों में भी सुप्रसिद्ध ही है' इसका प्रतिपादन करने के लिए कहते हैं—

अर्थ एवं शब्द का रसभाव आदि की अनुकूलता से जो औचित्य से युक्त प्रयोग है वह ही कैशिकी आदि एवं उपनागरिका आदि वृत्तियाँ हैं।। ३३।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

व्यवहार को ही वृत्ति कहा जाता है। उसमें रस के अनुकूल, औचित्य से युक्त वाच्य में आश्रित जो व्यवहार है वह ही ये प्रसिद्ध कैशिकी आदि पत्तियाँ हैं। इसी तरह वाचक में आश्रित जो व्यवहार है वह ही उपनागरिका आदि वृत्तियाँ हैं। रसादि के तात्पर्य से सन्निवेशित वृत्तियाँ ही नाट्य एवं काव्य की विशिष्ट शोभा के कारण हैं। यहाँ नाट्य का अर्थ अभिनयवस्तु और उसका प्रयोजन रसादि है। रसादि जो हैं वे उन दोनों वृत्तियों के जीव के रूप में हैं और इतिवृत्त आदि शरीर के रूप में ही।

इसका आशय यह है कि अर्थ का रसभाव आदि के अनुकूल औचित्य युक्त जो व्यवहार है वही कैशिकी आदि वृत्ति के नाम से जाना जाता है। रस की प्रकृति के अनुसार ये भी तीन होती हैं कैशिकी, सात्त्वती एवं आरभटी। माधुर्य प्रकृति के रस में कैशिकी, ओजः प्रकृति के रस में आरभटी एवं प्रसाद प्रकृति के रस में सात्त्वती वृत्ति होती है।

इसी तरह शब्द का रस के अनुगुण औचित्य से जो प्रयोग है वही ही उपनागरिका आदि वृत्ति से जाना जाता है वे भी तीन हैं। जैसे माधुर्य गुण में उपनागरिका, ओजो गुण में परुषा एवं प्रसाद गुण में कोमला आदि।

ध्वन्या०— अत्र केचिदाहुः—'गुणगुणिव्यवहारो रसादीनामितिवृत्तादिभिः सह युक्तः न तु जीवशरीरव्यवहारः रसादिमयं हि वाच्यं प्रतिभासते न तु रसादिभिः पृथग्भूतम्' इति। अत्रोच्यते यदि रसादिमयमेव वाच्यं यथा गौरत्वमयं शरीरम्। एवं सति यथा शरीरे प्रतिभासमाने नियमेनैव गौरत्वं प्रतिभासते सर्वस्य तथा वाच्येन सहैव रसादयोऽपि सहृदयस्यासहृदयस्य च प्रतिभासेरन्। न चैवम्, तथा चैतत्प्रतिपादितमेव प्रथमोद्योते।

स्यान्मतं, रत्नानामिव जात्यत्वं प्रतिपत्तृविशेषतः संवेद्यं वाच्यानां रसादिरूपत्वमिति। नैवम्, यतो यथा जात्यत्वं प्रतिभासमाने रत्ने रत्नस्वरूपानतिरिक्तत्वमेव तस्य लक्ष्यते तथा रसादीनामपि विभावानुभावारूपवाच्याव्यतिरिक्तत्वमेव लक्ष्येत। न चैवम्, न हि विभावानुभाावव्यभिचारिण एव रसा इति कस्यचिदवगमः। अतएव च विभावाादिप्रतीत्यविनाभाविनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेन व्यवस्थानात्क्रमोऽवश्यंभावी। स तु लघावान्न प्रकाश्यते 'इत्यलक्ष्यक्रमा एव सन्तो व्यङ्ग्या रसादयः' इत्युक्तम्।

लीला— सम्प्रति 'रसादयो हि तयोर्जीवभूता इतिवृत्तं तु शरीरभूतं' इति यदुक्तं तत्र सम्भवविप्रतिपत्तिनिरासायोपक्रमते अत्रेत्यादिना अत्र= प्रकरणेऽस्मिन्,

केचित्= केचन, आहु:= कथयन्ति-रसादीनां= रसभावादीनां, इतिवृत्तादिभिः कथावस्तुभिः, सह, गुणगुणिव्यवहार:= धर्मधर्मिव्यवहार: अत्यन्तसमीश्रतया प्रतिभासनात्, युक्तः= उपयुक्तः, न, तु, जीवशरीरव्यवहार:= आत्मकायव्यवहार: हि= यतः, रसादिमयं= रसाद्यनतिरिक्तं, वाच्यं, प्रतिभासते= द्योतते, न नु, रसादिभि:= रसभावादिभिः, पृथग्भूतं= अतिरिक्तमपि। द्योतनक्रमस्यासंवेदनाद् इति।

रसादिवाच्ययोरत्यन्तसम्मिश्रतया क्रमस्याऽपि असंवेदनत्वेन प्रतिभासनात् गुणगुणिव्यवहार उपयुक्तो यत्र रसादयो गुणावाच्यार्थश्च गुणिस्थानीय इति। किञ्च यथा रूपादिगुणेभ्यः पृथग्भूतस्य वस्तुतो नोपलम्भस्तथैव रसव्यतिरिक्तवस्तुनोऽपि। इति समादधाति-अत्र= प्रसङ्गेऽस्मिन् उच्यते- यदि, रसादिमयं= रसाद्याप्लुतं, एव= इति व्यवच्छेदे, न तु रसव्यतिरिक्तं, वाच्यं= वाच्यार्थः यथा= इति निदर्शने, गौरत्वमयं येन प्रकारेण, गौरवर्ण, शरीरं= कार्यम्:= इति कथ्यते एवं सति= तथाभूते, सति, यथा शरीरे= देहे, प्रतिभासमाने= द्योतमाने, सति, नियमेन= स्वभावेन, एव, सर्वस्य गौरत्वं गौरवर्णता, प्रतिभासते= द्योतते, तथा= तेनैव प्रकारेण, वाच्येन= वाच्यार्थेन सह, रसादयः= रसभावादयः, अपि, सहृदयस्य= रसिकस्य, असहृदयस्य= जनसाधारणस्य, च, एतत्, प्रथमोद्योते= ग्रन्थस्यास्य आदिमभागे 'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते' इति, प्रतिपादितं= बोधितमेवेति। मतं= अभिप्रायः, स्यात्= एतदपि सम्भवेत् यद्, रत्नानां= माणिक्यादीनां, जात्यत्वं= जातिगतता, इव- यथा माणिक्यादिधर्मो हि जातित्वलक्षणो विशेषस्तत्प्रतिभासेऽपि न सर्वस्य नियमेन प्रतिभाति अपितु प्रतिपत्तृविशेषतः= ज्ञातृविशेषेण कर्त्रा, संवेद्यं= ज्ञेयं तथैव, वाच्यानां= वाच्यार्थानां, रसादिरूपत्वं= रसमयत्वमिति चेत्, न, एवं= इत्थमिति। तत्र हेतुमाह-यतः= यस्मात्, यथा= येन प्रकारेण जात्यत्वेन= जात्यत्वप्रकारेण, प्रतिभासमाने= द्योतमाने, रत्ने= माणिक्यादौ, तस्य= माणिक्यादेः, रत्नस्वरूपानतिरिक्तत्वं= रत्नादभिन्नत्वं, एव, लक्ष्यते= दृश्यते, तथा= तेनैव प्रकारेण,, रसादीनां, अपि, विभावानुभावादिरूपवाच्याव्यतिरिक्तत्वं= विभावानुभावादिरूपं यद्वाच्यं तदव्यतिरिक्तत्वं तदभिन्नत्व, एव, लक्ष्येत= दृश्येत, एवं,= इत्थं रसादीनां विभावादिवाच्याभिन्नत्वं, तु, न= नैव, चेति। तत्र हेतुमाह न, हि, विभावानुभावव्यभिचारिणः, एव, रसाः= रसशब्दवाच्याः, इति= इत्थं, कस्यचित्= कस्यापि, अवगमः= धारणा। तत्र पर्यवसितमाह- अत एव च= अनेनाऽपि हेतुना, विभावादिप्रतीत्यविनाभाविनी= विभावादिकृतप्रकाशनमनपेक्ष्य असम्भाविनी, तज्जनितत्वात्, रसादीनां= रसभावादीनां, च प्रतीतिः= प्रत्यनं, इति= हेतोः,तत्प्रतीत्योः= तेषां विभावादीनां प्रतीते रसादि प्रतीतेश्च तयोः, कार्यकारणभावेन= फलहेतुत्वेन, व्यवस्थापनात्= समुपन्यासात्, क्रमः= प्रतीतिक्रमः, अवश्यम्भावी= अपहरिहार्य एव। सः= क्रमस्तु, लाघवात्=

शैघ्र्यात्, न, प्रकाश्यते= द्योत्येत, इति= हेतोः, रसादयः अलक्ष्यक्रमः= अपरिदृश्‌-यद्योतनक्रमाः, एव, सन्तः, व्यङ्ग्याः= प्रत्येयाः इति, उक्तं= प्रतिपादितमेवेति।

अत्रायमाशयः— वृत्तीनां रसादयः प्राणभूता इतिवृत्तं तु शरीरभूतमिति यदुक्तं तत्र केचित्कथयन्ति यद् रसेतिवृत्तयोः वाच्यस्य रसमयत्वेनैवावभासनाद् धर्मधर्मिव्यवहारो युक्तौ न तु जीरवशरीरव्यवहार इति। तत्रोच्यते सयदि वाच्यादयो रसानां धर्मास्तथा सति रूपादिसदृशा वा मणिक्यगतजात्यत्वसदृशाः। सर्वान् प्रति तथानवभासान्नाद्यः जात्यत्वदलनतिरिक्तत्वेनाप्रकाशनात् नापि द्वितीयः। यतो न हि विभावादय एव रसाः, न हि वाच्यधर्मत्वेन रसादीनां प्रतीतिः यतश्च तत्प्रतीतौ वाच्यप्रतीतिः सर्वथापनुपयोगिनी तत एव हेतोः क्रमेणाऽवश्यंभाव्यमेव, सहभूतयोरुपकारायोगात्!। स तु सहृदयभानवाभ्यासान्न लक्ष्यते। यस्यापि प्रतीति-विशेषात्मैव रस इत्युक्तिः प्राक्तस्थापि व्यपदेशिवत्त्वात् रसादीनां प्रतीतिरिति।

'रस वृत्ति की आत्मा है और इतिवृत्त शरीर' कह कर जो कहा था उस पर आक्षेपों का उल्लेख कर युक्ति से उसका समाधान करते हैं— इस पर कुछ कहते हैं— इतिवृत्त आदि के साथ रसादि का गुण एवं गुणी का व्यवहारा होना चाहिए न कि जीव और शरीर का। क्योंकि वाच्य जो है रसादि रूप में ही प्रतिभासित होता है न कि रसादियों से पृथक् होकर। इस पर कहा जाता है— यदि वाच्य केवल रसादिमय होता जैसे कि गौरवपूर्ण युक्त शरीर, तो ऐसी अवस्था में जैशे शरीरके प्रतिभासमान होने से नियम से ही सभी का गौरत्व भी प्रतिभासित होता है उसी तरह वाच्य के साथ-साथ रसादि भी सहृदय एवं असहृदय दोनों को प्रतिभासित हो जाएँ। ऐसा तो होता नहीं। वैसे, यह बात प्रथम उद्योत में बताई भी गई है।

किसी का यह भी कथन हो सकता है कि जैसे कि रत्नों का जात्यत्व तो हर किसी रत्न में होता है लेकिन उसका ज्ञान पारखी को ही होता है उसी तरह जाता विशेष का ही संवेद्य होता है वाच्यार्थों का रसादिमयत्व। यह ठीक नहीं। क्योंकि वैसा होने पर जैसे जात्यत्व से प्रतिभासमान रत्न में जात्यत्व का रत्न के स्वरूप से अभिन्न ही लक्षित होता है उसी तरह रसादि का भ्श्री विभावादि रूप वाच्य से अभिन्न ही दिखा जाना चाहिए था, लेकिन ऐसा नहीं होता। न तो वाच्य से अभिन्न ही दिखा जना चाहिए था, लेकिन ऐसा नहीं होता। न तो विभावों, अनुभावों एवं व्यभिचारियों को हीं कोई रस मानता है। इस कारण रसादियों की प्रतीति विभावादियों की प्रतीति के बिना अविनाभाविनी है। अतः रसविभावादि एवं रस की प्रतीति के बीच कार्यकारण के रूप में व्यवस्थापन होने से क्रम तो अवश्यम्भावी है हिं। वह जो है शीघ्रता के कारण प्रकाशित नहीं होता। इस कारण असंलक्ष्य क्रम के रूप में ही रसादि व्यक्त होते हैं, ऐसा कहा गया है।

ध्वन्या— ननु शब्द एव प्रकरणाद्यवच्छिन्नो वाच्यव्यंग्ययोः सममेव प्रतीतिमुपजनयतीति किं तत्र क्रमकल्पनया ? नहि शब्दस्यवाच्य-प्रतीतिपरामर्श एव व्यंजकत्वे निबन्धनम्। तथाहि गीतादिशब्देभ्योऽपि रसाभिव्यक्तिरस्ति। न च तेषामन्तरा वाच्यपरामर्शः।

अत्रापि ब्रूमः— प्रकरणाद्यवच्छेदेन व्यञ्जकत्वं शब्दानामित्यनुमतमेवैतदस्माकम्। किन्तु तद् व्यञ्जकत्वं तेषां कदाचित्स्वरूपविशेषनिबन्धनं कदाचिद्वाचकशक्तिनिबन्धनम्। तत्र येषां वाचकशक्तिनिबन्धनं तेषां यदि वाच्यप्रतीतिमन्तरेणैव स्वरूपप्रतीत्या निष्पन्नं तद्भवेन्न तर्हि वाचकशक्तिनिबन्धनम्। अथ तन्निबन्धनं तन्नियमेनैव वाच्यवाचकभावप्रतीत्युत्तरकालत्वं व्यङ्ग्यप्रतीतेः प्राप्तमेव।

लीला— काममस्तु वाच्यव्यङ्ग्ययोर्भेदः किन्तु उभयोरेव प्रकरणादिसाहाय्येन युगपदेवावभासनात्तदवभासनक्रमः कथं सम्भवतीत्याशङ्कानिरासाय प्रकरणमुपक्रमते नन्वित्यादिना— ननु= इति प्रश्ने, सन्देहे, च, प्रकरणाद्यवच्छिन्नः= वक्तृवोद्धव्यप्रकरणादिविशिष्टः, शब्दः, एव, वाच्यव्यङ्ग्ययोः= वाच्यार्थप्रतीयमानार्थयोः, समं= सह, एव, प्रतीतिं= प्रकाशनं, उपजनयति= उत्पादयति इति= हेतोः, तत्र= तादृशस्थले, क्रमकल्पनया= द्योतनक्रमान्वेषणेन, किं= किं प्रयोजनमिति। तर्हि= यतः, न, शब्दस्य, वाक्यप्रतीतिपरामर्शः= वाच्यार्थप्रतीतेरनुसन्धानं, एव व्यञ्जकत्वे= व्यञ्जकभावे, निबन्धनं= साधनम्। तथा हि, गीतादिशब्देभ्यः, गीत प्रयुक्तशब्दादिभ्यः, अपि= च, रसाभिव्यक्तिः= रसभावादिव्यञ्जना, अस्ति= भवत्येव। तेषां= गीतादीनां, अन्तरा= मध्ये, वाच्यपरामर्शः= अर्थसम्बन्धः, च, न= नैव।

अस्यायमाशयः— यतः वक्तृबोद्धव्यादिविशिष्टः शब्द एव वाच्यव्यङ्ग्ययोर्युगपदेवाक्षेपकः। शब्दस्य वाच्यप्रतीतिसम्बन्धाभावेऽपि व्यञ्जकत्वं भवत्येव यथा गीतादिशब्दानाम्। तेन रसप्रतीतिस्तु अभिधयैव वाच्यार्थेन सहैव भवतीति किमर्थं व्यञ्जनाकल्पनया रसप्रतीतिक्रमनिर्द्धारणमिति। तदेवोत्तरयति अत्रापीत्यादिना अत्रापि= अस्मिन् विषयेऽपि, ब्रूमः= कथयामः शब्दानां= वाचकानां, प्रकरणाद्यवच्छेदेन= प्रकरणवक्तृबोद्धव्यादिव्यवच्छेदकतया, व्यञ्जकत्वं= रसाभिव्यञ्जकता, इति, एतत्, अस्माकं, अपि, अनुमतं एव= अस्माभिरपि स्वीकृतमेव। किन्तु= तद्विपरीतं, तेषां= शब्दानां, तद्व्यञ्जकत्वं= रसाभिव्यञ्जकत्वं, कदाचित्= क्वचित्तु, वाचकशक्तिनिबन्धनम्= वाचकशक्तिप्रयोज्यम्। तत्र= तद्द्वयमध्ये, येषां= शब्दानां, वाचकशक्तिनिबन्धन= वाचकशक्त्या रसादिव्यञ्जनाप्रयोज्यं, तेषामपि, यदि वाच्यप्रतीतिं, अन्तरेण= विना, एव, स्वरूपप्रतीत्या= स्वरूपविषयकश्रावणप्रत्यक्षेण, तद्= व्यङ्ग्य, निष्पन्नं= समुत्पन्नं, भवेत्, तर्हि, न, वाचकत्वशक्तिनिबन्धनम्= वाचकशक्तिप्रयोज्यम्। अथ= इति पक्षान्तरे, तन्निबन्धनं= वाचकशक्तिप्रयोज्यं, तत्= तदा, नियमेन= व्यवस्थया, एव, व्यङ्ग्यप्रतीतेः= प्रतीयमानार्थप्रत्ययक्षस्य, वाच्यवाचकप्रतीत्युत्तरकालत्वं= अभिधया या वाच्यवाचकप्रतीतिः तदुत्तरकालत्वं= तदनुजायमानत्वं, प्राप्तं= सिद्धमेवेति।

अस्यायमाशयः— वक्तृबोद्धव्यादिव्यवच्छेद्यत्वेन शब्दानां व्यञ्जकत्वं तु सर्वैः सम्मतमेव। किन्तु तन्नैव सार्वत्रिकम्। शब्दानां रसादिव्यञ्जकत्वं तु क्वचित्स्वरूपविशेषसम्बद्धं क्वचित्तु वाचकशक्तिसम्बद्धमपि। यत्र तु शब्दश्रवणमात्रेण रसप्रतीतिस्तत्र तु तन्निमित्तं शब्दस्य प्रत्यक्षकारणता भवति न च क्रमोऽपि किन्तु यत्र वाचकशक्तिनिबन्धनं तत्र तु वाचकशक्त्या प्रथमं विभावादिरूपवाच्यार्थबोधः ततश्च तद्विभावादिजन्या रसप्रतीतिरिति रसाभिव्यक्तौ विभावादीनां कारणता स्वीकर्तव्यैव, सति च कारणे कार्यस्य कारणानन्तरता सिध्यत्येवेति। अर्थात् मा भूदेव वाच्यं रसादिव्यञ्जकमस्तु नाम शब्दादेव तत्प्रतीतिरपि तथापि तेन शब्देन स्ववाचकशक्तिस्तस्यां कर्तव्यायां सहकारितया अवश्यापेक्षणीया इति आयातं वाच्यप्रतीतेः पूर्वभावित्वम्। यदा च वाच्यप्रतीतेः पूर्वभावित्वं तदा रसादिसमभिव्यक्तौ सिध्यत्वेवेति।

वाच्य एवं व्यङ्ग्य का भेद भले ही हो किन्तु दोनों का प्रकरणादि से सिद्ध शब्द से अभिधा के द्वारा एक ही बार हो जाने से क्रम की अवस्थिति नहीं रहती इस आशङ्का के निवारण के लिए पूर्वपक्ष के उपस्थापनपूर्वक कहते हैं—

प्रश्न यह है कि प्रकरण आदि से व्यवच्छिन्न जो शब्द है वह वाच्य एवं व्यङ्ग्य का एक ही समय में प्रतीति कराता है, तो उसमें क्रम की कल्पना से क्या लाभ है ? न तो शब्द का वाच्य की प्रतीति से सम्बन्ध ही व्यञ्जकत्व में हेतु होता है। शीत आदि में प्रयुक्त शब्दों के द्वारा भी रस की अभिव्यक्ति तो होती ही है और उनमें वाच्यार्थ के रहने पर भी रस की अभिव्यञ्जना उसके द्वारा न होकर ग्राम आदि, राग आदि के अनुसार सङ्केतित वाच्य के अनुसार ही रसाभिव्यक्ति होती है। उनके बीच मे वांच्य का कोई सम्बन्ध ही नहीं। इस पर हम कहते हैं– प्रकरण आदि के अवच्छेद से शब्दों का जो व्यञ्जकत्व है वह हमारे लिए भी सम्भव ही है। किन्तु सभी जगह ऐसा नहीं होता। शब्दों की रसव्यञ्जकता जो है कहीं तो स्वरूप विशेष के निबन्धन में निर्भर करता है और कहीं तो वाचक शक्ति के निबन्धन में। उसमें जिन शब्दों का वाचकशक्तिनिबन्धन है उनका यदि वाच्य की प्रतीति के विना ही स्वरूप की प्रतीति से ही रसादिनिष्पन्न हो, तो उसकी वाचकशक्तिनिबन्धन से है तो वहाँ तो नियम से ही व्यङ्ग्य की प्रतीति का वाचकशक्ति का उत्तरकालवर्ती होता सिद्ध हो जाता है अर्थात् पहले वाचकशक्ति विभावादिरूप वाच्यार्थ का बोध कराती है, तब वह वाच्यार्थ व्यङ्ग्यार्थ का आक्षेप कराता है, तो रस प्रतीति में क्रम हो ही गया।

ध्वन्या०— स तु क्रमो यदि लाघान्न लक्ष्यते तत्किं क्रियते। यदि च वाच्यप्रतीतिमन्तरेणैव प्रकरणाद्यवच्छिन्नशब्दमात्रसाध्या रसादिप्रतीतिः स्यात्तदनवधारितः प्रकरणानां वाच्यवाचकभावे च स्वयमव्युत्पन्नाना प्रतिपत्तृणां काव्यमात्रश्रयणादेवासौ भवेत्। सहभावे च वाच्यप्रतीतेरनुपयोगः, उपयोगे वा न सहभावः। येषामपि स्वरूपविशेषप्रतीतेनिमित्तं

व्यञ्जकत्वं यथा गीतादिशब्दानां तेषामपि स्वरूपप्रतीतमेर्व्यङ्ग्यप्रतीतेश्च नियमभावी क्रमः। तत्तु शब्दस्य क्रियापौर्वापर्यमनन्यसाध्यतत्फलघटना-स्वाशुभाविनीय वाच्येनाविरो– धिन्यान्तरविलक्षणे रसादी न प्रतीयते।

लीला– वाच्यव्यङ्ग्यावभासनक्रममेव विवृणोति स इत्यादिना– सः तादृशः, क्रमः= वाच्यव्यङ्ग्ययोः पूर्वापरभावः, लाघवात्= शैघ्र्यात् कमलदलशतभेदवत्, न, लक्ष्यते= दृश्यते, तत्= तदा, किं क्रियताम् नास्त्युपायस्तदेवभासनस्य। तावतैव क्रम एव नास्तीति न वक्तव्यम्।

यदि च= पक्षान्तरे, वाच्यप्रतीतिं= वाच्यार्थबोधं, अन्तरेण= बिना, एव, प्रकरणाद्यवच्छिन्नशब्दमात्रसाध्या= प्रकरणादिभिः वक्तृबोद्धव्यप्रभृतिभिः अवच्छिन्नो विशेषितो यः शब्दो वाचकस्तदेव तन्मात्रं तेन साध्या प्रतिपाद्या, रसादिप्रतीतिः= रसभावव्यञ्जना, स्यात्= भवेत्, तत्= तदा, अवधारितप्रकरणानां= ज्ञातप्रकरणादीनां, वाच्यवाचकभावे= अभिधाव्यापारे, स्वयं, अव्युत्पन्नानां= ज्ञातप्रकरणादीनां, वाच्यवाचकभावे= अभिधाव्यापारे, स्वयं, अव्युत्पन्नानां= असञ्जातज्ञानानां, च, प्रतिपत्तृणां, काव्यमात्रश्रवणात्= अर्थबोधं विनैव काव्यश्रवणमात्रात्, असौ= रसादिप्रतीतिः, भवेत्= सञ्जायेतेति। यदि च वाच्यव्यङ्ग्ययोः सहभाव एव मन्यते चेत्, सहभावे= वाच्यव्यङ्ग्ययोः सहस्थितित्वे– एककालप्रतीतित्वे, च, वाच्यप्रतीतेः= वाच्यावबोधस्य, अनुपयोगः= वैयर्थ्यं यदि वाच्यव्यङ्ग्ये एककालमेव प्रतीयेते इति मन्यते तदा वाच्यार्थस्य वैयर्थ्यमेव स्याद्रसादीन् विहाय तत्र न कस्यापि प्रवृत्तेः। वा= इति पक्षान्तरे, उपयोगे= वाच्यार्थस्य उपयोगितायां स्वीकृतायां, तु, न= नैव, सहभावः= एककालस्थितितेति। पुनश्च, येषां= शब्दानां, अपि= च, स्वरूपविशेषप्रतीतिनमित्तं= वाचकत्वं विनैव स्वरूपमात्रेण प्रतीतिकारणं, व्यञ्जकत्वं= रसादिप्रकाशकत्वं, यथा= इति निदर्शने, गीतादिशब्दानां= सत्यपि वाच्यार्थे तदनपेक्ष्यैव ग्रामरागाद्यनुसारेण अपहस्तितवाच्यानुसारितया रसप्रत्यायकानां गीतादिगतशब्दानां, तेषां= तथाविधशब्दानां, अपि= च, रसप्रतीतेः= स्वरूपावभासनस्य, व्यङ्ग्यप्रतीतेः= व्यङ्ग्यार्थविभासनस्य, च, नियमभावात्= पोर्वापर्यरूपनियमवान्, क्रमः एव। तत्रापि प्रथमं श्रावणप्रत्यक्षं ततश्च रसादिप्रतीतिरिति नियमक्रमस्तु भवत्येव श्रवणमन्तरेण हृत्प्रतीत्यसम्भवात्। तर्हि कथं स न लक्ष्यते इत्यपेक्षायामाह-शब्दस्य, तत्= तादृशं क्रियापौर्वापय= क्रिये वाच्यव्यङ्ग्यप्रतीती वा अभिधाध्वननव्यापारौ तयोः पौर्वापर्यं प्राथम्यमानन्तर्यञ्च, आशुभाविनीषु= शीघ्रभवनशीलासु, अनन्यसाध्यतत्फलघटनासु= न विद्यते अन्यद् रसादिप्रतीतिव्यतिरिक्तं साध्यं निष्पाद्यं यासां ता तादृश्यो यास्तत्फलघटना तदेव रसादिप्रतीतिमात्रमेव फलं प्रयोजनं यासां तादृश्यो या घटना सङ्टना तासु, वाच्येन= वाच्यार्थेन, अविरेधिनि= अनुकूले, अभिधे

यान्तरविलक्षणे= वाच्यविशेषेभ्यो विलक्षणस्वरूपे, रसादौ= रसभावादौ, न= नैव, प्रतीयते= प्रकाशमायाति। वाच्येन विरोधिनि रसादौ तु प्रतीयत एवेति।

उसी वाच्य एवं व्यङ्ग्य के अवभासन क्रम का आगे विवरण देते हैं–

उस तरह वाच्य एवं व्यङ्ग्य की प्रतीति का जो क्रम है वह विद्यमान होकर भी शीघ्रता के कारण लक्षित नहीं होता। फिर भी उनमें में उसका अस्तित्व समाप्त नहीं मानना चाहिए।

यदि भी रसादिप्रतीति जो है वह वाच्यप्रतीति के बिना ही प्रकरण आदि से विशेषित शब्द मात्र से साध्य होती तो प्रकरण का ज्ञानभाव जिसको है ऐसे वाच्य एवं वाचकभाव अर्थात् अभिधाव्यापार के विषय में भी स्वयं अव्युत्पन्न श्रोताओं को काव्य के सुनने मात्र से विना अर्थबोध के ही रसप्रतीति होनी चाहिए थी। लेकिन ऐसा नहीं होता। यदि वाच्य एवं व्यंग्य दोनों का सहभाव माना जाय अर्थात् एक ही समय प्रत्येय माना जाय तो उस स्थिति में वाच्यप्रतीति का कोई उपयोग नहीं रहता और उसका उपयोग होने पर तो सहभाव अर्थात् एक ही काल में होना सम्भव नहीं होता क्योंकि वाच्य से आक्षिप्त होने पर ही व्यंग्य होता है और दोनों में कारणकार्य का भाव है।

और, जिनका भी स्वरूपविशेष की प्रतीति का निमित्त ही व्यञ्जकत्व है। जैसे गीत आदि शब्दों का, उनका भी स्वरूपप्रतीति एवं व्यंग्यप्रतीति के भी नियम वाला क्रम होता है। शब्द की क्रियाओं अर्थात् अभिधा एवं ध्वननव्यापार का जो पौर्वापर्य है, वह शीघ्र होने वाली जिसका रसादिप्रतीति के अलावा दूसरा साध्य नहीं है ऐसी उसी फल के प्रति सनग घटनाओं में वाच्य से अविरोधी वाच्यादि से विलक्षण रसादि में प्रतीतत नहीं होता। उसका वाच्य के विरोधी होने पर तो लक्षित होता ही है।

ध्वन्या०– क्वचित्तु लक्ष्यत एव। यथानुरणनरूपव्यङ्ग्यप्रतीतिषु। तत्रापि कथमिति चेदुच्यते– अर्थशक्तिमूलानुरणनरूपव्यङ्ग्ये ध्वनौ तावद-भिधेयस्य तत्सामर्थ्याक्षिप्तस्य चार्थस्याभिधेयान्तरविलक्षणत- यात्यन्तवि-लक्षणे ये प्रतीती तयोरशक्यनिह्नवो निमित्तनिमित्तिभाव इति स्फुटमेव तत्र पौर्वापर्यम्। यथा प्रथमोद्योते प्रतीयमानार्थसिद्ध्यर्थमुदाहृतासु गाथासु। तथाविधे च विषये वाच्यव्यङ्ग्ययोरत्यन्तविलक्षणत्वाद्यैव एकस्य प्रतीतिः सैवेतरस्येति न शक्यते वक्तुम्।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्ये तु ध्वनौ–

'गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु' इत्यादावर्थ-द्वयप्रंतीतौ शाब्द्यामर्थद्वयस्योपमानोपमेयभावप्रतीतिरुप– मावाचकपद-विरहे सत्यर्थसामर्थ्यादाक्षिप्तेति तत्रापि मूलक्षमाभिधेव्यङ्ग्यालङ्कारप्रतीत्योः पौर्वापर्यम्।

लीला– इत्थं वाच्यव्यङ्ग्ययोः प्रतीतेरलक्ष्यक्रममुक्त्वा सम्प्रतिं तस्य

लक्ष्यत्वमपि निर्दिशति क्वचिदित्यादिना— क्वचित्= कुत्रचित्— यत्र तादृशशीघ्रता नास्ति तत्र, तु लक्ष्यते= परिदृश्यते, एव सः क्रम इति। यथा= इति निदर्शने अनुरणनरूपव्यङ्ग्यप्रतीतिषु= अनुस्वानसन्निभव्यङ्ग्यप्रतीतिर्भवति यत्र-यत्र स वाच्यव्यङ्ग्ययोः प्रतीतिक्रमो दृश्यते तत्र तादृशशीघ्रताभावात्। तत्र= अनुरणनरूपव्यङ्ग्यप्रतीतौ, अपि, कथं= केन विधिना लक्ष्यो भवति इति चेत्, उच्यते= विविच्य कथ्यते। किञ्च तदित्यपेक्षयामाह— अर्थशक्तिमूलानुरणनरूप— व्यङ्ग्ये= अर्थशक्त्युद्भवानुस्वानोपम— व्यङ्ग्ये, ध्वनौ, तावत्= प्रथमं, अभिधेयस्य= वाच्यस्य, तत्सामर्थ्याक्षिप्तस्य तस्य वाच्यार्थस्य, च, अभिधेयान्तरविलक्षणतया= अन्यवाच्यार्थपेक्षया विशिष्टरूपत्वेन, अत्यन्तविलक्षणे= नितान्तभिन्ने, ये, प्रतीती= वाच्यव्यङ्ग्यावभासव, तयोः= तादृशेतरविलक्षणवाच्यव्यङ्ग्ययोः, अशक्यनिह्नवः= असम्भवापलापः, निमित्तनिमित्तीभावः= कारणकारणीभावः, इति= हेतोः, तत्र= तादृशविषये, पौर्वापर्य= प्राथम्यानन्तर्ये, स्फुटमेव= स्पष्टमेव। यथा= इति निदर्शने, वप्रथमोद्द्योते ग्रन्थस्यास्यादिमे भागे, प्रतीयमानार्थसिद्ध्यर्थ= प्रसिद्धार्थातिरिक्तार्थसिद्धये, उदाहृतासु= उदाहरणत्वेनोपस्थापितासु, गाथासु= पद्येषु तथाविधे तादृशे, च, विषये= प्रसङ्गे, वाच्यव्यङ्ग्ययोः= प्रसिद्धसार्थप्रतीयमानार्थयोः, अत्यन्तविलक्षणत्वात्= नितान्तविलक्षणस्थितित्वात्, या एव एकस्य प्रतीतिः= अवभासनं, सा एव, इतरस्य= अपरस्य, अपि, इति= इत्थं, वक्तुं= कथयितुं, न शक्यते= पार्यते।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्ये=शब्दशक्त्युद्भवानुस्वानोपमव्यङ्ग्ये, ध्वनौ= ध्वनिविषये, तु, गावः= किरणाः धेनवश्च, परमपावनानां= नित्यान्तपूतानां व= युष्माकं, प्रीतिं= मुदं, उत्पादयप्राप्तु= जनयन्तु, इत्यादौ, शाब्द्यां= शब्दोद्भवायां, अर्थद्वयप्रतीतौ= द्विविधार्थविभासने, एकतः सूर्यकिरणसम्बद्धे वाच्येऽर्थे अपरतः धेनुसम्बद्धव्यङ्ग्येऽर्थे, अर्थद्वयस्य= द्विविधस्यार्थस्य, उपमानोपमेयभावप्रतीतिः= प्रतियोग्यनुयोगित्वावभासनं, उपमानवाचकपरविरहे= प्रतियोगिबोधकानि यानि इवादिपदानि तेषां विरहेऽभावे। सति, अर्थसामर्थ्यात्, आक्षिप्ता= प्रत्यायिता, इति= इत्थं, तत्र= तादृशविषये, अपि, अभिधेयव्यंग्यालङ्कारप्रतीत्योः= अभिधेयः वाच्यार्थः सूर्यकिरणरूपः व्यंग्योऽयं अलङ्कार उपमा तस्य प्रतीतिरवभासनं, तयोः, द्योतनक्रमः, सुलक्षः= सुस्पष्टमेवेति।

प्रकरणस्यास्यायम्भावः— वाच्यव्यङ्ग्ययोर्द्योतनक्रमः कुत्रचित्तु सुस्पष्टः। सुलक्षोऽपि भवति। तच्च यथा शब्दार्थशक्त्युद्भवानुस्वानोपमव्यङ्ग्यप्रतीतिषु। अर्थशक्त्युद्भवे ध्वनौ अभिधेयतदाक्षिप्तव्यङ्ग्यार्थयोश्च इतरविलक्षणतया नितान्तविलक्षणयोरुभयोरेव प्रतीत्योः पौर्वापर्यक्रमः सुस्पष्ट एव। तत्र वाच्यव्यङ्ग्ययोरेव नितान्तविलक्षणादेकैव प्रतीतिरसम्भाविन्येव। शब्दशक्तिमूलध्वनावपि 'गावो

वः' इत्यादौ शब्दाक्षिप्तार्थद्वययोर्वाचकपदाभावेऽपि या उपमा साऽर्थसामर्थ्याक्षिप्ता इति तयोः पौर्वापर्यं स्पष्टमेवेति।

इस प्रकार वाच्य एवं व्यङ्ग्य की प्रीति का जो अलक्ष्य क्रम है उसको बताकर अब उसके लक्ष्यत्व के विषय में भी बताते हैं—

कहीं तो वह दिखाई पड़ता भी है। जैसे अनुरणन रूप व्यङ्ग्य की प्रतीतियों में। वहाँ भी कैसे कहकर पूछा 'जाता है तो कहा जाता है- अर्थशक्तिमूल अनुरणनरूपव्यङ्ग्य ध्वनि में पहले अभिधेय का उसके बाद उसी के सामर्थ्य से आक्षिप्त अर्थ का अभिधेयान्तर से विलक्षण रूप से अत्यन्त विलक्षण जो दो प्रतीतियाँ हैं उनका छिपाया जा सकने वाला निमित्त एवं निमित्ती भाव है। स्पष्टतया यहाँ पूर्वापरता अवभासित है। यह बात इसी ग्रन्थ के आदिम भाग में प्रतीयमान अर्थ की सिद्धि हेतु उदाहृत पद्यों में है। उस प्रकार के वाच्य एवं व्यङ्ग्य के अत्यन्त विलक्षण होने के कारण जो एक की प्रतीति है वही दूसरे की भी, ऐसा कहा नहीं जा सकता है। शब्दशक्तिमूल अनुरणव्यङ्ग्य ध्वनि में तो 'गाएं आप सब में परमणीति का उत्पादन करें।

इत्यादि मे शब्दसामर्थ्य से दो अर्थ (सूर्यकिरण एवं धेनू) की प्रतीति में दोनों अर्थों का जो उपमानोपमेय भाव की प्रतीति उपमा के वाचक पद के अभाव में भी अर्थसामर्थ्य से आक्षिप्त है, उसमें भी वाच्य सूर्यकिरण एवं व्यङ्ग्य रूप उपमा अलङ्कार की प्रतीति में पौर्वापर्य स्पष्ट रूप से परिक्षिप्त है।

ध्वन्या०— पदप्रकाशशब्दशक्तिमूलानुरणनरूपव्यङ्ग्येऽपि ध्वनौ विशेषणपदस्योभयार्थसम्बन्धयोग्यस्य योजकपदमन्तरेण योजनमशाब्दमप्यर्थादवस्थितिमित्यत्रापि पूर्ववदमिधेयतत्सामर्थ्याक्षिप्ता— लङ्कारमात्रप्रतीत्योः सुस्थितमेव पौर्वापर्यम्। आर्थ्यपि च प्रतिपत्तिस्तथाविधे विषये उभयार्थसम्बन्धयोग्यशब्दसामर्थ्यप्रसावितेति शब्दशक्तिमूला कल्प्यते।

अविवक्षितवाच्यस्य तु ध्वनेः प्रसिद्धस्वविषयवैमुख्यप्रतीतिपूर्वकमेवार्थान्तरप्रकाशनमिति नियमभावी क्रमः। तत्राविवक्षितवाच्यत्वादेव वाच्येन सहव्यङ्ग्यस्य क्रमप्रतीतिविचारो न कृतः। तस्मादभिधानाभिधेयप्रतीत्योरिव वाच्यव्यङ्ग्यप्रतीत्योर्निमित्तनिमित्तिभा- वानियमभावी क्रमः। स तूक्तयुक्त्या क्वचिल्लक्ष्यते क्वचिन्न लक्ष्यते।

लीला— एवं वाक्यप्रकाशशब्दशक्तिमूले वाच्यव्यङ्ग्यप्रतीतिक्रमं निरूप्य सम्प्रति पदप्रकाशशब्दशक्तिमूलध्वनावपि तल्लक्ष्यत्वं निर्दिशति पद्रेत्यादिना- पदप्रकाशशब्दशक्तिमूलानुरणनरूपव्यङ्ग्ये= पदात्प्रकाशोऽपि व्यक्तिर्यस्य तादृशो यः शब्दशक्तिमूलानुस्वानोपमव्यङ्ग्ये= अपि, ध्वनौ, उभयार्थसम्बन्धयोग्यस्य= उभयविधेन अर्थेन सह यः सम्बन्धस्तदर्हस्य, विशेषणपदस्य= विशेषताबोधकपदस्य, यथा 'प्रातुं धनैः' इत्यादिपद्ये 'जड' इति पदस्य, विशेषणपदस्य,

योजकं= इव यथेत्यादि, पदं, अन्तरेण= विनैव, योजनं= स्वरूपसामानाधिकरण्येन न्यसनं, अशाब्दं वाचकशब्दरहितं, अपि, अर्थात्= पूर्ववत्= अनन्तरप्रसङ्गे इव, अभिधेयतत्सामर्थ्याथप्तालङ्कारप्रतीत्योः= अभिधेयं यत् च तत्सामर्थ्याक्षिप्तक्र मत्तयोरलङ्कारप्रतीत्योः यत्र जडत्वस्योभयत्रान्वयाद् दीपकालङ्कारोऽभिधेयः, तत्सामर्थ्याक्षिप्तश्चालङ्कारोऽस्त्युपमा तावेव तन्मात्रे तत्प्रतीत्योः, पौर्वापर्य= प्राथम्यमानन्तर्यञ्च, सुस्थितं= व्यवस्थितमेव। तत्र शान्तरसप्रतीतिस्तु अलक्ष्यक्रमा एवेति बोधनाय मात्रग्रहणम्। तथाविधे= तादृशे, विषये, आर्थी= अर्थसम्बद्धा, च, प्रतिपत्तिः= प्रतीतिः, उभयार्थसम्बन्धयोग्यशब्दसामर्थ्यप्रसाक्तिा= उभयविधो य अर्थस्तस्य सम्बन्धयोग्यो यः शब्दस्तस्य सामर्थ्येन अभिधाव्यापारेण प्रसाविता जनिता— प्रतिप्रसवभूता इति पाठे एकत्र नियन्त्रिताया अपि अर्थान्तरे स्वावलम्ब-नदानेनोत्थापयिका वा प्रतिप्रसवान्नियन्त्रनिषेधाद्भूता उत्पन्नेति, शब्दशक्तिमूला= शब्दशक्त्युद्भवा, एव कल्प्यत इति। तेनात्र आर्थत्वशब्दशक्तिमू— लत्वयोर्न विरोधः कश्चिदित्याशयः।

एतत्तु विवक्षितान्यपरवाच्यविषये उक्तं सम्प्रति अविवक्षितवाच्यध्वनिवि-षयेऽपि तदुच्यते अविवक्षितेत्यादिना— अविवक्षितवाच्यस्य= वाच्यस्याविवक्षि-तत्वेन वाक्येऽन्वयसिद्धये यत्र वाच्यार्थ अर्थन्तरसंक्रमितो भवति वा नितान्त-तिरस्कृतश्च तदुभयरूपस्य, ध्वनेः, तु, प्रसिद्धस्वविषयवैमुख्यप्रतीतिपूर्वकं= प्रसिद्धः प्रख्यातो यः स्वविषयः शक्यार्थः तस्मिन् यद वैमुख्यं बाधितत्वं तस्य प्रतीतिर्बाधग्रहरूपा सा पूर्वे यस्याः, एव, अर्थान्तिरप्रकाशनं= अपरार्थद्योतनं-व्यङ्ग्यावबोधनं, इति= इत्थं, नियमभावी= विधिभवः, क्रमः इति। यथा ''निःश्वा-सान्ध इवादर्शश्चन्द्रमा न प्रकाशते'' इत्यत्र 'अन्धयशब्दादभिधाव्यापारेण प्रथमं नष्टदृष्टिकस्योपस्थितिः, दर्पणेऽन्वयाद्बाधग्रहः, यतो लक्षणया म्लानत्वप्रत्यायनं ततश्च व्यञ्जनया तदतिशयबोधनमिति तत्र स्पष्ट एव क्रमः। तत्र= प्रकरणेऽस्मिन्, तु, अविवक्षितवाच्यत्वात्= वाच्यस्यानुपयोगित्वात्, एव= इति अवधारणेवाच्येन= अभिधेयेन, सह, व्यङ्ग्यस्य= प्रतीयमानार्थस्य, क्रमप्रतीतिविचारः= क्रमावबोध-विमर्शः, न, कृतः= विहितः इति— वाच्य यदि विवक्षितं स्यात्ततदा तेन सह व्यङ्ग्यस्य क्रमप्रतीतिविचारः सम्भवेत्। अत्र तु तस्यैवाभावात् क्रमविचार एव नोदेति तेन सह व्यङ्ग्यस्य। नैतावता तत्र क्रमाभव एव चिन्त्योऽनन्तरोक्तरीत्या क्रमस्तु विद्यत एवेति।

प्रकरणमुपसंहरति तस्मादित्यादिना— तस्मात्= ततः, अभिधानाभिधेयप्र-तीत्योः= अभिधानं शब्दः अभिधेयोऽर्थः तयोः प्रतीतिः, अवभासने तयोः शब्दा-र्थावभासनयोः, एव= यथा, यथाशब्दस्य प्रतीत्यनन्तरेवार्थस्य प्रतीतिमर्वति तथैव, वाच्यव्यङ्ग्यप्रतीत्योः= वाच्यार्थव्यङ्ग्यार्थप्रतीत्योः, निमित्तिभावात्=

कारणपर्यं त्वात्, नियमभावी= स्वतः एव सम्भवी, क्रमः इति। यथा वाच्यबोधं प्रति पदप्रत्यक्षोपस्थितिः कारणं तेन तयोः कार्यकारणभावस्तथैव व्यङ्ग्यं प्रति वाच्यार्थस्य कारणत्वेन तयोरपि कार्यकारणभावोऽतस्तत्र प्रतीतौ नियमभावी इति। स= क्रमः, तु, उक्तयुक्त्या= अनन्तरोक्तोपायेन, क्वचित्= कुत्रचित्, तु, लक्ष्यते= दृश्यते, क्वचित्, तु, नैव लक्ष्यते= दृश्यत इति। वाच्यव्यङ्ग्यप्रतीत्योर्यत्र विलम्बभावित्वं तत्र क्रमो लक्ष्यते यथाऽनुरणनरूपव्यङ्ग्यध्वनौ, यत्र च तस्यावि- लम्बभावित्वं तदाभासवशाद्यया रसादिध्वनौ तत्र तु स नैव लक्ष्यते यद्यपि उभयत्र तस्य स्थितिर्भवत्येवेति।

इस प्रकार वाक्यप्रकाशशब्दशक्तिमूल में वाच्यव्यङ्ग्यप्रतीतिक्रम बताकर अब पदप्रकाशशब्दशक्तिमूल में भी उसका निरूपण करते हैं—

पद है प्रकाशक जिसका ऐसे शब्दशक्तिमूल अनुरणनरूपव्यङ्ग्य ध्वनि में दोनों अर्थ से सम्बन्ध रखने योग्य विशेषण पद का योजक पद के विना ही योजना जो है वह शब्द से आक्षिप्त न होते हुए भी अर्थ सामर्थ्य से अवस्थित है। इस तरह इसमें भी पहले जैसे वाच्य (दीपक अलङ्कार) एवं उसके सामर्थ्य से आक्षिप्त (उपमा) अलङ्कार मात्र की प्रतीतियों में पौर्वापर्य क्रम सुस्थित है उससे आक्षिप्त शान्त रस में अलक्ष्य ही है। यहाँ अर्थसामर्थ्य से आक्षिप्तता जो वह भी उस प्रकार के विषय में दोनों अर्थ में सम्बन्ध रख पाने योग्य शब्द के सामर्थ्य से उत्पन्न होने से शब्दशक्तिमूल ही मानी गई है।

अविवक्षितवाच्य ध्वनि का तो प्रसिद्ध जो अपना विषय है उससे विमुखता की प्रतीति पूर्वक ही दूसरे अर्थ के प्रकाशन होने से नियत ही रहता है। उसमें वाच्य के अविवक्षित रहने से ही वाच्य के साथ व्यङ्ग्य की क्रमप्रतीति का विचार किया नहीं गया। फिर भी उसमें उक्त रीति से क्रम तो रहता ही है।

प्रकरण का उपसंहार करते हैं—

इस कारण अभिधान (शब्द) एवं अभिधेय (अर्थ) की प्रतीतियों की तरह वाच्य एवं व्यङ्ग्य की प्रतीतियों का निमित्तनिमित्तिभाव अर्थात् कार्यकारण भाव से ही नियम क्रम रहता है। वह ऊपर बताए गए प्रकार से कहीं लक्षित होता है तो कहीं अलक्षित भी। जैसे शब्द की उपस्थिति के बिना अर्थ की प्रतीति नहीं होती और अर्थबोध के प्रति शब्द निमित्त है उसी तरह वाच्यार्थ की प्रतीति के विना व्यङ्ग्यार्थ की प्रतीति नहीं होती और व्यङ्ग्यार्थ के प्रति वाच्यार्थ कारण है। निमित्त और निमित्ती की इसी तरह यहाँ भी है।

ध्वन्या०— तदेवं व्यञ्जकमुखेन ध्वनिप्रकारेषु निरूपितेषु कश्चि- द्ब्रूयात्— किमिदं व्यञ्जकत्वं नाम ? व्यङ्ग्यार्थप्रकाशनम् ? नहि व्यञ्ज- कत्वं व्यङ्ग्यत्वं चार्थस्य। व्यङ्ग्यत्वं व्यञ्जकविध्यधीनं व्यङ्ग्यापेक्षया च व्यञ्जकत्वसिद्धिरित्यन्योन्यसंश्रयादव्यवस्थानम्।

नु वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्य सिद्धि प्रागेव प्रतिपादिता तत्सिद्ध-

त्रधीना च व्यञ्जकसिद्धिरिति कः पर्यनुयोगावसरः। सत्यमेवैतत्, प्रागुक्त-युक्तिभिर्वाच्यव्यतिरिक्तस्य वस्तुनः सिद्धिः कृता, स त्वर्थो व्यङ्ग्यतयेव कस्माद्व्यपदिश्यते ? यत्र च प्राधान्येनानवस्थानं तत्र वाच्यतयैवासौ व्यपदेष्टुंयुक्तः, तत्परत्वाद्वाक्यस्य। अतश्च तत्प्रकाशिनो वाक्यस्य वाचकत्वमेव व्यापारः। किं तस्य व्यापारान्तरकल्पनया ? तस्मात्तात्पर्यविषयो योऽर्थः स तावन्मुख्यतया वाच्यः। या त्वन्तरा तथाविधे विषये वाच्यान्तरप्रतीतिः सा तत्प्रीतीतेरुपायमात्रम्, पदार्थप्रतीतिरिव वाक्यार्थप्रतीतेः।

लीला— इत्थं वाच्यव्यङ्ग्यप्रतीत्योः क्रमं सुनिश्चित्य सम्प्रति यत्र तत्र चर्चितं व्यञ्जकत्वमेकप्रघट्टेन विवेचयितुमुपक्रमते तदेवमित्यादिना सत्, एवं= पूर्वोक्तप्रकारेण, व्यञ्जकमुखेन= व्यञ्जकद्वारा, ध्वनिप्रकारेषु= ध्वनिभेदेषु, निरूपितेषु= विवेचितेषु, कश्चित्= कोऽपि विशेषेण मीमांसकः, ब्रूयात्= कथयेत्, इदं= पूर्वनिर्दिष्टं, व्यञ्जकत्वं, नाम ? यदि व्यञ्जकत्वं नाम व्यङ्ग्यार्थप्रकाशनं= व्यङ्ग्यार्थबोधजनकत्वं, इति कथ्यते चेत्तन्नोपयुक्त प्रतिभाति यतस्तथा मते सति, अर्थस्य व्यञ्जकत्वं= व्यङ्ग्यार्थप्रकाशकत्वं, व्यङ्ग्यत्वं= प्रीयमानार्थत्वञ्च, न= नैव सिध्यति, हि= इति अवधारणे। तथाभवने हेतुमुपस्थापयति—व्यङ्ग्त्वं= प्रतीयमानार्थत्वं, व्यञ्जकसिद्ध्यधीनं= व्यञ्जकभूतार्थसिद्धिपरतन्त्रम्, व्यञ्जकत्वसिद्धिः, अपि, व्यङ्ग्यापेक्षया= व्यङ्ग्यार्थदृष्ट्या, एव इति= इत्थं, अन्योन्यसंश्रयात्= परस्परसमाश्रयात्; अव्यवस्थानं= व्यवस्थाविरहादेकस्यापि प्रवर्तनं न सम्भवतीति।

अस्यायमाशयः— यदि व्यङ्ग्यार्थप्रकाशनमेव व्यञ्जकत्वं तत्प्रकाशक एव व्यञ्जक इति मन्यते तदा नार्थस्य व्यङ्ग्यत्वं सिध्यति नैव च व्यञ्जकत्वमेव। यतो व्यङ्ग्यार्थज्ञानानन्तरमेव वयञ्जकज्ञानमपरिचयस्तेन न भावव्यङ्ग्यार्थज्ञानं नैवं च तावद्व्यञ्जकज्ञानमपि व्यङ्ग्यत्वं नाम च व्यञ्जकोत्पन्नबोधविषयत्वमेव। तेन व्यंग्यावबोधनाय प्रथमं व्यञ्जकज्ञानमपरिहार्य भवति। तेन व्यङ्ग्याधीना व्यञ्जकाधीना व्यङ्ग्यसिद्धिरित्यत्रान्योन्याश्रयदोष आपतति येनोभयोरेव सिद्धि कुण्ठिता भवति कुतस्तद्रू ध्वनेर्विषयः 'अन्योन्याश्रितानि कार्याणि न प्रकल्प्यन्ते' इति नियमात्। इति।

तत्समादधाति नन्वित्यादिना— ननु= प्रति प्रत्युक्तौ, वाच्यव्यतिरिक्तस्य= वाच्यभिन्नस्य, व्यङ्ग्यस्य= प्रतीयमानवस्तुनः, सिद्धिः= प्रतिपत्तिः, प्राक्= पूर्वम्, एव ध्वन्यभाववादिनिराकरणे, प्रतिपादिता= निरूपिता, व्यञ्जकसिद्धिः= व्यञ्जकत्वप्रतिपत्तिः, तत्सिद्ध्यधीना= व्यङ्ग्यत्वसिद्धिपरा,, इति व्यवस्थिते सति कः पर्यनुभोगावसरः= प्रतिप्रश्नावकाश इति।

इदमुक्तं भवति–व्यंग्यस्य वाच्यार्थभिन्नत्वं प्रथममेव ध्वन्यभाववादनिराक-

रणप्रसङ्गे प्रतिपादितमेव। व्यङ्ग्यत्वमेव व्यञ्जकत्वस्य प्रयोजकमित्यपि प्रतिपादितमेव तत्र तत्र। न हि व्यञ्जकसिद्ध्या व्यङ्ग्यसिद्धिर्येनान्योन्याश्रयावसर आपद्येत। तत्तु हेत्वन्तरैरेव साधितं भवति। यथा मानाधीना मेयसिद्धिस्तथैव व्यञ्जनाधीना व्यञ्जकसिद्धिरिति। पुनश्च पूर्वपक्षमुपस्थापयति सत्यमित्यादिना- एतत्= यदुक्तं, तत् सत्यं= यथार्थ, एव। प्रागुक्तयुक्तिभिः= पूर्वप्रतिपादितोपायैः, वाच्यव्यतिरिक्तस्य= वाच्यभिन्नस्य, वस्तुनः= अर्थस्य, सिद्धि=: प्रतिपत्तिः, कृता= विहिता, एव। किन्तु अयमस्माकमनुयोगो यत् सः= तादृशः प्रतीतः, अर्थः= वस्तुविशेषः, कस्मात्= किमर्थं, व्यङ्ग्यतया= व्यङ्गाभिधानेन, एव, व्यपदिश्यते= निर्दिश्यते। तत्रापि यत्र च तस्य प्राधान्यं तत्र स्यादपि तथा यथा ध्वनिविषये, किन्तु, यत्र, च, तु, असौ= प्रतीतार्थः, वाच्यतया= अभिधेयरूपेण, एव व्यपदेष्टुं= निर्देष्टुं, युक्तः= यतः,, वाक्यस्य, तत्परत्वात्= तदर्थमेवोद्योगत्वात्। अतः= अनेन हेतुना, च= अपि, तत्प्रकाशिनः= तादृशवस्तुसमाक्षेपिणः, वाक्यस्य, वाचकत्वं= अभिधानत्वं, एव, व्यापारः क्रिया। तस्य तादृशस्य, व्यापारान्तर- कल्पनया= ध्वननादि—इतरव्यापारोन्नयनेन, किं ? तस्मात्= हेतोः, तात्पर्यविषयः= वाक्यस्य तात्पर्यभूतः, यः, अर्थः= वस्तु, स, तावत्= इति साकल्ये, मुख्यतया= मुख्यार्थत्वेन, वाच्यः= कथनीयः। तथाविधे तादृशे, विषये= लक्ष्ये, या यादृशी, अन्तरा= मध्यगता, वाच्यान्तरप्रतीतिः इतराभिधेयबोधः, सा, तु, तत्प्रतीतेः= तस्य तात्पर्यार्थस्य प्रतीतिर्बोधमस्य, उपायमात्रं= साधकमात्रमेव,-यथोक्ते वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।

पाके ज्वालेव काष्ठानां पदार्थपतिपादनम् इति। तत्र निदर्शनमाह वाक्यार्थप्रतीतेः= वाक्यार्थावबोधनस्य, पदार्थप्रतीतिः= प्रतिपदार्थबोधनं, इव= यथेति।

अस्यायमाशयः— यथा अभिधाबलात् पदार्थप्रतीतिः प्रथमं भवति ततश्च सैव वाक्यार्थमुत्थापयति। एवमेव पूर्वोत्पन्नः प्रथमवाचर्थः स्वानन्तरवर्तिनं द्वितीयवाच्यार्थमुत्थापयतीति कथनं सुकरं भवति व्यञ्जनावृत्तिकल्पनापेक्षया। यथा पाके काष्ठानां ज्वाला तथैव वाक्यार्थे पदार्थानाम्, वाक्यार्थश्च तापर्ये एव पर्यवस्यतीति अभिधयैव सर्वे सिद्धे वृत्यन्तरकल्पना निरर्थकेति।

इस प्रकार वाच्य एवं व्यङ्ग्य की प्रतीति का क्रम निर्धारित कर अब ग्रन्थ में यत्र-तत्र प्रतिपादित व्यञ्जकत्व को एकत्रित कर विवेचन करने का उपक्रम करते हैं—

इस प्रकार व्यञ्जक की दृष्टि से ध्वनि के प्रकारों का निरूपण कर लेने पर कोई कह सकता है- यह व्यञ्कत्व होता क्या है ? क्या व्यङ्ग्य अर्थ के प्रकाशन को ही व्यंजकत्व कहा गया है ? अर्थ का तो न कोई व्यञ्जकत्व होता है और न कोई व्यंग्यत्व जो है वह व्यञ्जक की सिद्धि के अधीन होता है और व्यङ्ग्य की अपेक्षा से ही व्यञ्जकत्व की सिद्धि होती है, इस प्रकार दोनों के अन्योन्याश्रय से अव्यवस्था हो जाती है।

अर्थात् पूर्वपक्ष का कथन यह है कि यदि व्यङ्ग्य अर्थ के प्रकाशन को ही व्यञ्जकत्व माना जाय तो अर्थ का व्यञ्जकत्व एवं व्यञ्जकत्व दोनों सिद्ध नहीं हो सकते क्योंकि पहले व्यङ्ग्य का ज्ञान होने पर ही व्यञ्जक ज्ञान हो पाएगा। तब फिर व्यञ्य जो है वह व्यञ्जक शब्द से उत्पन्न बोध का विषय माना जाय तो व्यङ्ग्य समझने के लिए पहले व्यञ्जक का ज्ञान होना आवश्यक हो जाएगा। इस तरह व्यञ्जक की सिद्धि व्यङ्ग्य के अधीन एवं व्यङ्ग्य की सिद्धि व्यञ्जक के अधीन होकर अन्योन्याश्रय दोष आ जाएगा और दोनों की सिद्धि नहीं होगी और स्वयं असिद्ध व्यङ्ग्य के रूप में ध्वनि का सिद्ध होना तो दूर की बात है।

इस पर वृत्तिकार कहते हैं कि वाच्यार्थ से भिन्न व्यङ्ग्यार्थ होने की बात तो पहले ही प्रतिपादित है और व्यञ्जक की सिद्धि व्यङ्ग्य की सिद्धि के अधीन होने से इसमें परिप्रश्न का अवसर ही नहीं आता।

कहने का आशय यह है कि व्यङ्ग्य अर्थ जो है वह वाच्यार्थ से आक्षिप्त होकर भी उससे भिन्न है और उसी व्यङ्ग्यार्थ के अधीन ही व्यञ्जक की सिद्धि होती है। अतः इसमें अन्योन्याश्रय दोष का अवसर नहीं आता।

उस पर पूर्वपक्षा यह कह सकता है— इतना तो ठीक हैं पहले बताए गए युक्तियों से वाच्य से भिन्न व्यङ्ग्य की सिद्धि तो की गई। किन्तु उसमें एक बात यह है कि उस अर्थ को व्यङ्ग्य के नाम से कयों पुकारा गया ? उस पर भी जहाँ उसकी गौणरूप से अवस्थिति है वहाँ इसको वाच्य के रूप में ग्रहण करना ठीक है क्योंकि वाक्य उसी की ओर लक्षित होता है। इस हेतु भी उसको प्रकाशित करने वाले वाक्य का व्यापार जो है वह वाचकत्व ही है। उसमें दूसरे अर्थात् ध्वनन व्यापार की कल्पना से क्या लाभ ? (यह तो एक आयास मात्र है) (इस कारण तात्पर्य विषयक जो अर्थ है वह पहले मुख्यरूप में वाचय है। उस प्रकार के विषय के जो बीच के दूसरे वाच्य की प्रतीति है, वह तो उस प्रतीति का उपायमात्र है जैसे वाक्यार्थ प्रतीति का पदार्थ की प्रतीति।

कहने का आशय यह है कि शब्दों से अवगत कराए गए पदों के अर्थों से तात्पर्य से जो अर्थ बनता है वही वाक्यार्थ और वही वाच्य भी। (यह मत भाट्टमीमांसकों का है। प्रभाकर के अनुयायिककों के मत में दीर्घ-दीर्घ व्यापार ही वाक्यार्थ में निमित्ती होता है, पदार्थों का निमित्तभाव तो पारमार्थिक ही है।) तो, वांक्य को तापर्य होने से व्यङ्ग्य भी तो वाच्य ही होता है, इस हेतु उसे अभिधागम्य वाच्य ही माना जाना उपयुक्त है।

ध्वन्या०— अत्रोच्यते— यत्र शब्दे स्वार्थमभिदधानोऽर्थान्तरमवगमयति तत्र यत्तस्य स्वार्थाभिधायित्वं यच्च तदर्थान्तरावगमनहेतुत्वं तयोरविशेषो विशेषो वा ? न तावदविशेषः, यस्मात्तौ द्वौ व्यापारौ भिन्नविषयो। भिन्नरूपौ च प्रतीयेते एव। तथाहि— वाचकत्वलक्षणो व्यापारः शब्दस्य स्वार्थविषयः गमकत्वलक्षणस्त्वर्थान्तरविषयः। न च स्वपरव्यवहारो वाच्यव्यङ्ग्ययोरपह्नोतुं शक्यः,

एकस्य सम्बन्धित्वेन प्रतीतेरपरस्य सम्बन्धिसम्बन्धित्वेन।

वाच्यो ह्यर्थः साक्षाच्छब्दस्य सम्बन्धी तदितरस्त्वभिधेयसामर्थ्याक्षिप्तः सम्बन्धिसम्बन्धी। यदि च स्वसम्बन्धित्वं साक्षात्तस्य स्यात्तदार्थान्तरत्व-व्यवहार एव न स्यात्। तस्माद्विषयभेदस्तावत्तयोर्व्यापारयोः सुप्रसिद्धः।

रूपभेदोऽपि प्रसिद्ध एव। नहि यैवाभिधानशक्तिः सैवागमनशक्तिः। अवाचकस्यापि गतिशब्दादे रसादिलाणक्षर्थावगमदर्शनात्। अशब्दस्यापि चेष्टादेरर्थविशेषप्रकाशनप्रसिद्धेः। तथाहि— 'व्रीडायोगान्नतवदनया' इत्या-दिश्लोके चेष्टाविशेषः सुकविनार्थप्रकाशनहेतुः प्रदर्शित एव।

तस्माद् भिननविषयत्वाद् भिन्नरूपत्वाच्च स्वार्थाभिधायित्वमर्थान्तरा-वगमहेतुत्वं च शब्दस्य तत्तयोः स्पष्ट एवं भेदः।

लीला— व्यङ्ग्यस्य व्यञ्जनागम्यत्वे सोपपत्तिको य आक्षेपस्तत्परिहारा-योपक्रमते अत्रेत्यादिना— अत्र= पूर्वपक्षोपस्थाप्यविषये, उच्यते= सिद्धान्तसिद्ध्ये कथ्यते— यत्र शब्दः= वाचकः, स्वार्थं= स्वाभिधेयं, अभिदधानः= कथयन्, अर्थान्तरं= अन्यमप्यर्थं, अवगमयति= बोधयति, तत्र, यत्= यच्च, तस्य= शब्दस्य, स्वार्थाभिधायित्वं= स्वमुख्यार्थकथनत्वं, यत्, च, तदर्थान्तरावगमहेतुत्वं= तदर्थ-भिन्नार्थबोधहेतुत्वं, तयोः= उभयोः, अविशेषः= अभेदः, विशेषः= भेदः ? न, तावत्, अविशेषः= अभेदः, उभयोरेव समानस्थितित्वमिति कथ्यते चेदित्थं= यस्मात्= यतः, तौ= तादृशौ, द्वौ, व्यापारौ= स्वार्थाभिधायित्वार्थान्तरावगमहेतुरूपौ, भिन्नविषयौ= पृथक्लक्ष्यौ— प्रथमस्य स्वार्थाभिधायित्वमपरस्य च अर्थान्तरावग-मत्वमिति, भिन्नरूपौ= वाचकव्यञ्जकरूपाविति, प्रतीयेते= अवभासेते, एव। तथा हि= इति निदर्शने व्याख्याने च—भिन्नविषयत्वं यथा—शब्दस्य, वाचकत्व-लक्षणः= वाच्यार्थावबोधकः व्यापारः, स्वार्थविषयः= स्वमुख्यार्थावबोधनलक्ष्यः, गमकत्वलक्षणः= प्रत्येयस्वरूपः, व्यापारस्तु, अर्थान्तरविषयः= तद्भिन्नार्थलक्ष्यः, इति। तथाभवने हेतुमाह वाच्यगम्ययोः= अभिधेयप्रतीयमानयोः, स्वपरव्यापारः= इदं स्वयं इदमपरमिति भेदव्यवहारः, अपह्नोतुं= अपलपितुं, अशक्यः= अपार्यः,। तथाभेदे हेतुमाह-ऐकस्य= स्वकीयस्य-वाच्यस्य, सम्बन्धित्वेन= निजत्वेन, प्रतीतेः= अवभासनात्, अपरस्य= द्वितीयस्य, तु, सम्बन्धन्धित्वेन= सम्बन्धिनोऽपि सम्बन्धिरूपेण प्रतीतेरिति। तदेव विवृणोति वाच्यः= अभिधेयः, अर्थः, हि, शब्दस्य= वाचकस्य, साक्षात्= प्रत्यक्षमेव, सम्बन्धी, अभिधेयसामर्थ्याक्षिप्तः= वाच्यशक्त्याक्षिप्तः, तदितरः= तद्भिन्नः, तु, सम्बन्धिसंबन्धी, एवेति। तत्र युक्तिमु-पस्थापयति— यदि, च, तस्य= अर्थान्तरस्य, साक्षात्= प्रत्यक्षमेव, स्वसम्बन्धित्वं= शब्दस्य सम्बन्धिभावः, स्यात्, तदा= तदवस्थायां, अर्थान्तरव्यवहारः= द्वितीया-र्थव्यवहारः, एव, न, स्यात्। तस्मात्= तेन हेतुना, तयोः= उभयोः, व्यापारयोः=

क्रिययो:, विषयभेद:= लक्ष्यपार्थक्यं, तावत्= इति साकल्ये, सुप्रसिद्धः= सुविख्यात इति। पक्षान्तरमपि विवृणोति– रूपभेदः= स्वरूपभिन्नता, अपि, प्रसिद्धः= सुविख्यात:, एवेति। तदेव प्रतिपादयति, न= नैव, हि, या, एव, अभिधानशक्तिः= वाच्यार्थावबोधनक्षमता, सा, एव, अवगमनशक्तिः= व्यञ्जनाक्षमता। तथा तयो: पार्थक्ये हेतु निर्दिशति= यत:, अवाचकस्य= वाचकत्वहीनस्य, अपि, गीतशब्दादे: गीतगतशब्दादीनां= तेषां हि वाचकत्वे सत्यपि तदनवपेक्ष्य ग्रामरागानुसारेणायम- स्तिवाच्यानुसारितयाऽवा– चकत्वमुक्तं, रसादिलक्षणार्थावगमदर्शनात्= रसादिरू- पार्थप्रतीतिगोचरीभवनात्। यदि नाम वाचकत्वगमकत्वयोरैक्यं स्यातदा वाचकत्व- हीनगीतादिशब्दादे: रसादिप्रत्यायकत्वमेव न स्यादिति। अपरञ्च, अशब्दस्य= शब्दरहितस्य, एव, अपि, चेष्टादे:= सङ्केतत्वेन प्रयुक्तानां चेष्टादिव्यापाराणां, अपि, अर्थाविशेषप्रकाशनप्रसिद्धे:= विशिष्टार्थद्योतनाख्यतेक: तदेवोदाहरति– यत्तथा हि= इति निदर्शने, 'व्रीडायोगान्नतवदनया' इत्यादिश्लोके, चेष्टाविशेष:= नतवदनादिव्यापारविशेष:, सुकविना, अर्थप्रकाशनहेतु:= अभीष्टवस्तुद्योतनका- रणं, प्रदर्शित:= निर्दिष्ट:, एवेति। अविशेषमतदूषणप्रक– रणमुपसंहरति तस्मादित्यादिमा- तस्मात्= तथाप्रतिपादितात्, भिन्नविषयत्वात्= पृथक्लक्ष्यत्वात्, भिन्नरूपत्वात्= पृथक्स्वरूपत्वात्, च शब्दस्य, यत्, स्वार्थाभिधायित्वं= स्वमु- ख्यार्थप्रकाशनत्वं, अर्थान्तरावगमहेतुत्वं= तद्भिन्नार्थावबोधनकारणत्वं, च, तयो:, भेद:= पार्थक्यं, स्पष्ट:= सुविज्ञेय:, एवेति। इत्थमुक्तं भवति– वाचकत्वव्यञ्जक- त्वयोरपृथग्भावे तु यत्र-यत्र वाचकत्वाभावस्तत्र तत्र व्यञ्जकत्वाभाव एव स्यात्। किन्तु नैवम्। वाचकत्वाभावेऽपि गीतशब्दादे: रसादिव्यञ्जकत्वं सिध्यत्येव। तथैव वाचकत्वस्य शब्दाश्रितत्वात् शब्दहीतस्य तु व्यञ्जकत्वमपि न सिध्येत् किन्तु शब्दहीनस्य नेत्रसङ्कोचनादिचेष्टादे: शृङ्गारादिव्यञ्जकत्वं भवत्येवेति स्पष्ट- मेव तयो: विषयेण स्वरूपेणापि पार्थक्यमिति।

व्यंग्य के व्यञ्जनावृत्तिगम्य होने में जो तर्कपूर्ण आक्षेप किए गए उनके परिहार का उपक्रम करते हैं–

इस आक्षेप पर यह कहा जाता है- जहाँ शब्द अपने अर्थ का बोध कराता हुआ उससे भिन्न दूसरे अर्थ का भी बोध कराता है वहाँ उसका जो अपने अर्थ का कथन व्यापार है और जो अर्थान्तर के बोध कराने का हेतुत्व है, उन दोनों में भिन्नता नहीं है या भिन्नता है।

यदि भिन्नता न मानी जाय तो हम उस पर कहेंगे- क्योंकि वे दोनों व्यापार भिन्न विषय वाले एवं भिन्न रूप वाले प्रतीति होते हैं। जैसे कि शब्द का जो वाचकत्वलक्षण वाला व्यापार है उसका विषय है अपना अर्थ बताना अर्थ का बोध कराना। न तो वाच्य एवं व्यङ्ग्य का अपना पराया (भिन्नता का) व्यवहार अलक्षित हो सकता है– उस को टाला नहीं जा सकता क्योंकि पहला अर्थात् वाचकत्व जो है

उसका सम्बन्धी के रूप में प्रकाशन होता है और दूसरे का सम्बन्धी के रूप में— पहला तो शब्द का अपना अर्थ है और दूसरा अपने का अपना। वाच्य अर्थ जो है वह साक्षात् शब्द का सम्बन्धी है और उससे भिन्न अभिधेय (वाच्यार्थ) के सामर्थ्य से आक्षिप्त जो है वह सम्बन्धी अर्थ का भी सम्बन्धी अर्थ। यदि दूसरे भी अर्थ में शब्द का साक्षात् सम्बन्धित्व होता तो दूसरे अर्थ का व्यवहार ही उसके लिए न होता। इस कारण उन दोनों व्यापार का–वाचकत्व एवं गमकत्व का, विषयभेद प्रसिद्ध ही है।

इसी तरह दोनों का रूपभेद भी प्रसिद्ध ही है। न तो जो अभिधानशक्ति (वाचकशक्ति) है वह ही अवगमनशक्ति है—वाचकशक्ति एवं अवगमनशक्ति दोनों एक कदापि नहीं हैं। गीत आदि में प्रयुक्त अवाचक शब्दों के द्वारा भी रसादिरूप अर्थ का बोध पाया गया है। (गीत आदि में प्रयुक्त शब्दों में भी वाचकत्व होता जरूर है, लेकिन वहाँ उसकी उपेक्षा होती है क्योंकि वहाँ तो ग्राम, राग आदि के अनुसार वाच्य से प्रयोजन रहता है। अत: उन शब्दों को अवाचक कहा गया है।) और विना शब्द की चेष्टाओं द्वारा भी अर्थविशेष के प्रकाशन की प्रसिद्धि भी है। जैसे कि 'व्रीडायोगान्नतवदनया (लाज से वदन झुकाई हुई) इत्यादि श्लोक में सफल कवि ने वदन को झुका देना' आदि चेष्टा विशेष की शृङ्गार अर्थ के प्रकाशन के कारण के रूप में प्रदर्शित किया है।

इस तरह पृथक् विषय एवं पृथक् रूप होने से भी शब्द को जो अपने अर्थ का अभिधायित्व एवं दूसरे अर्थ के बोध का हेतुत्व है उन दोनों का भेद स्पष्ट ही है।

**ध्वन्या०— विशेषश्चेन्न तर्हीदानीमवगमनीयस्याभिधेयसामर्थ्याक्षिप्तस्यार्थान्तरस्य वाच्यत्व— व्यपदेश्यता शब्दव्यापारगोचरत्वं तु तस्यास्माभिरिष्यत एव, तत्तु व्यङ्ग्यत्वेनैव न वाच्यत्वेन। प्रसिद्धाभिधानान्तरसम्बन्धयोग्यत्वेन च तस्यार्थान्तरस्य प्रतीतेः शब्दान्तरेण स्वार्थाभिधायिन यद्विषयीकरणं तत्र प्रकाशनोक्तिरेव युक्ता।**

लीला— इत्थं वाचकत्वव्यञ्जकत्वयोरविशेषत्वसमर्थकपक्षं निरास्य सम्प्रति द्वितीयपक्षं विवृणोति विशेष इत्यादिना-विशेषः= वाचकत्वगमकत्वयोर्भेदइः, येत्, तर्हि= तथा सति इदानीं= सम्प्रति, अवगमनस्य= अवगमशक्तिज्ञाप्यस्य, अभिधेयसामर्थ्याक्षिप्तस्य= वाचकत्वशक्तिप्रत्यायितस्य, अर्थान्तरस्य= अन्यस्यार्थस्यव्यङ्ग्यस्य, वाच्यत्वव्यपदेश्यता= वाच्यत्वाभिधेयता तस्य= अवगमनीयात्र्थस्य, शब्दव्यापारगोचरत्वं= शब्दव्यापारो भिधा तस्य गोचरत्वं प्रयोज्यावबोधविषयत्वं, तु, अस्माभिः, अपि, इष्यते= आप्रियते, एव, तत्= तादृशमभीष्टत्वं, तु, व्यङ्ग्यत्वेन= व्यङ्ग्यव्यपदेशेन, एव, न तु, वाच्यत्वेन= वाच्यव्यपदेश्यत्वेन। प्रसिद्धाभिधानसम्बन्धयोग्यत्वेन= प्रसिद्धेन वाचकतया अभिधानान्तरेण शब्दान्तरेण शैत्यपावनत्वादिशब्देन, यः सम्बन्धो वाचकत्वं तत्र योग्यत्वेन अर्हत्वेन, तस्य=

तादृशस्य वाच्यभिन्नस्य, अर्थान्तरस्य= अन्यस्यैवार्थस्य, प्रतीतेः= अवगमनात् स्वार्थाभिधायिना= स्ववाच्यार्थपरेण, शब्दान्तरेण= स्वभिन्नशब्देन, यद्, विषयी-करणं= लक्ष्यीकरणं, तत्र= तादृशविषये, प्रकाशनोक्तिः= प्रकाशनकथनं एवः इष्टा= योग्या न तु बोधनोक्तिरिति।

अस्यायमाशयः— यदि शब्दस्य स्वार्थाभिधायित्वस्यान्तरावगमहेतुत्व-योर्विशेषो (भेदः) मन्यते तदा तु गमनीयस्य वाक्यसामर्थ्याक्षिप्तस्य व्यङ्ग्यार्थस्य वाच्यव्यपदेश्यता कदापि न सम्भवति। तस्याभिधाविषयत्वं तु सर्वैः स्वीकृतमेव किन्तु व्यङ्ग्यत्वेन न तु वाच्यत्वेन। स्वार्थाभिधायिशब्दान्तरस्य यो विषयः स कथं वाच्यान्तराभिधायिशब्दस्य वाच्यतां भजत इति तस्य प्रकाशनोक्तिरेवयुक्ता सम्मता न तु वाचकत्वोक्तिरिति। (यथा 'गङ्गायां घोषः' इत्यत्र योऽर्थः प्रतीयते स तु पावनत्वशब्दस्य वाच्यार्थस्तत्कथं स, नदीरूपवाच्यार्थस्य गङ्गाशब्दस्य वाच्यतां भजते इति। तेन सोऽर्थः गङ्गाशब्दवाच्यार्थात्प्रतीयते एवेति प्रकाशनोक्तिः। किञ्च वाचकत्वं तु समयवशादव्यवधानेन प्रतिपादकत्वं यथा तस्यैव शब्दस्य स्वार्थे तथैव वाच्यत्वमपि समयबलेन निर्व्यवधानं प्रतिपाद्यत्वं यथा तस्यैवार्थस्य शब्दान्तरं प्रति। अत्र तु (व्यङ्ग्येऽर्थे) न च गङ्गाशब्दस्य पावनत्वरूपमर्थं प्रति तादृशं वाचकत्वमस्ति नापि पावनत्वार्थस्य गङ्गाशब्दं प्रति तादृशं वाच्यत्वं, तेन गङ्गाशब्दः पावनत्वरूपमर्थं प्रत्याययितुं शक्नोति संस्कारबलात्। न तु अभिधातुमतथाशक्तिग्रहादिति।

इस प्रकार शब्द के वाचकत्व और गमकत्व में अभेद मानने वालों के मत का निरास कर अब उसमें भेद मानने वाले पक्ष का उपस्थापन करते हैं—

यदि शब्द के वाचकत्व एवं गमकत्व व्यापार में भेद है तो फिर अभी, अभिधेय के सामर्थ्य से आक्षिप्त, अवगमनीय अर्थान्तर का वाच्यार्थ से भिन्न दूसरे अर्थ का वाच्यत्व की व्यपदेश्यता सिद्ध नहीं होती। उस अर्थ के अभिधा का विषय होना तो हमको भी अभीष्ट है ही लेकिन व्यङ्ग्य के रूप में न कि वाच्य के रूप में। वाचक के रूप में प्रसिद्ध दूसरे शब्द के साथ सम्बन्ध के योग्य के रूप में उस अर्थान्तर की प्रतीति होने स। दूसरे अपने अर्थ का अभिधायक शब्द से जो विषय बनाया जाता है उसमें प्रकाशन ही कहना ठीक है।

इसका यह आशय है कि व्यङ्ग्य अर्थ जो है वह प्रत्यायक शब्द से भिन्न किसी दूसरे शब्द का वाच्यार्थ होता है और वह कैसे प्रत्यायक शब्द का भी वाच्यार्थ बन सकता है ? उसमें उस प्रकार का शक्तिग्रह हुआ नहीं होता। दूसरी बात यह भी है कि शब्द का वाचकत्व उसके अर्थ के प्रति समयसे अव्यवहित होता है और अर्थ का वाच्यत्व भी दूसरे शब्द के प्रति समय से अव्यवहित होता है। लेकिन व्यङ्ग्यार्थ में ऐसा नहीं होता। प्रत्यायक शब्द एवं उसके बीच समय का व्यवधान रहता है वाच्यार्थ की उपस्थिति। अतः व्यङ्ग्यार्थ के लिए 'प्रकाशन' ही कहना ठीक है।

ध्वन्या०— न च पदार्थवाक्यार्थन्यायो वाच्यव्यङ्ग्ययोः। यतः पदार्थप्रतीतिरसत्यैवेति कैश्चिद्विद्वद्भिरास्थितम्। यैरप्यसत्यत्वमस्या नाभ्युपेयते तैर्वाक्यार्थपदार्थयोर्घटतदुपादानकारणन्यायोऽभ्युपगन्तव्यः। यथा ही घटे निष्पन्ने तदुपादानकारणानां न पृथगुपलम्भस्तथैव वाक्ये तदर्थे वा प्रतीते पदतदर्थानाम्। तेषां तदाविभक्ततयोपलम्भे वाक्यार्थबुद्धिरेव दूरीभवेत्। न त्वेष वाच्यव्यङ्ग्ययोर्न्यायः, नहि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवति, वाच्यावभासाविनाभावेन तस्य प्रकाशनात्। तस्माद्घटप्रदीपन्यायस्तयोः, यथैव हि प्रदीपद्वारेण घटप्रतीतावुत्पन्नायां न प्रदीपप्रकाशो निवर्तते तद्वग्यद्व्यप्रतीतौ वाच्यावभासः। यत्तु प्रथमोद्योते 'यथा पदार्थद्वारेण' इत्याद्युक्तं तदुपायमात्रात् साम्यविवक्षया।

लीला— इत्थं व्यङ्ग्यस्य वाचकत्वं निरास्य तात्पर्यत्वनिरासाय प्रकरणमुपसंहरतिनेत्यादिना पदार्थवाक्यार्थन्यायः= यथावाक्यार्थप्रतीतौ पदार्थप्रतीतिरुपायमात्रं पदार्थानां तात्पर्यमेव वाक्यार्थ इति यदुच्यते तद्, वाच्यव्यङ्ग्ययोः= मुख्यप्रतीयमानार्थयोः न= नैव, चेति। न च व्यङ्ग्यो वाच्यस्य तात्पर्यं नैव च व्यङ्ग्यार्थप्रतीतेः वाच्यार्थप्रतीतिरुपायमात्रं किन्तूभयोरेव पृथगस्तित्वम्। तथाभवने हेतुमाह :यतः' इत्यादिना-यतः= यस्मात्, पदार्थप्रतीतिः= शब्दावगतानां सत्यत्वात्, एव, इति= इत्थं, कैश्चित्= कतिपयैः, विद्वद्भिः= विचक्षणैः वैयाकरणैः आस्थितं= अभ्युपगतं यद्यपि नैव सर्वैः। यैः= विचक्षणैः विशेषतो भाट्टमीमांसकनैयादिकादिभिः, अपि, अस्या पदार्थप्रतीतेः, असत्यत्वं= अयथार्थत्वं, न, अभ्युपेयते= मन्यते, तैः अपि वाक्यार्थपदार्थयोः= घटतदुपादानकारणन्यायः= यथा घटे निर्मिते तस्य उपादानकारणानि = समवायिकारणानि- उत्पाद्यमानं वस्तु यत्र समवैति तदुपादानकारणमिति, शकलानि पृथगस्तित्वं नैव भजन्ते तथैव वाक्ये सिद्धे पदार्थबुद्धिरपि निरस्ता भवतीति, अभ्युपगन्तव्यः= स्वीकर्तव्यः। इति घटतदुपादानकारणन्यायं व्याचष्टे तथेत्यादिना- तथा= इति निदर्शने, येन प्रकारेण, हि= इत्यवधारणे, घटे= कलशे, निष्पन्ने= निर्मिते, तदुपादानकारणानां= तत्समवायिकारणानां= मृत्तिकादीनां यैः। सम्भूय घटो निर्मीयते तेषां, न= नैव वा, पृथक्= स्वतन्त्ररूपेण उपलम्भः= प्रतीतिः, तथा= तेनैव प्रकारेण, वाक्ये, पदार्थानाञ्च तेषां= वाक्यसमवायिकारणभूतानां, तदा= तस्मिन् काले, विभक्ततया= पृथग्रूपेण, उपलम्भे= अवभासने वाक्यार्थबुद्धिः= वाक्यस्य यदर्थावभासनं, सैव, दूरीभवेत्= निरस्येत्— अर्थकत्वाभावात्। अकत्वमेव वाक्यत्वम्। वाक्ये वा वाक्यार्थे प्रतीते पदानां वा पदार्थानां पृथक्तया उपलम्भो न सम्भवति। तथा सति पदपदार्थानां वाक्याद्वाक्यार्थाद्वा विभागेन पदार्थप्रतीतिरेव दूरे भवेत्पदार्थवाक्यार्थप्रतीत्योः प्रयोजनैक्यस्याभावाद्वेति। निदर्शनं प्रकृते संयुज्य तत्र विशेषमाह न चेत्यादिना-

न= नैव, तु, एषः= घटतदुपादानकारणन्यायः, वाच्यव्यङ्ग्ययोः= अभिधेयप्रतीयमानार्थयोः, न्यायः= विधिः। अतथाभवने हेतुमाह व्यङ्ग्ये, प्रतीयमाने= अवभासमाने, वाच्यबुद्धिः= वाच्यसत्ता, न, हि, दूरीभवति= निरस्यति, तस्य= व्यङ्ग्यस्य, वाच्यावभासाविनाभावेन= वाच्यस्य योऽवभासः प्रतीतिस्तेन अविनाभावेन विनाभावाभावेन सत्ताऽनुराधेन, प्रकाशनात्= द्योतनात् इति। तर्हि को न्यायस्तत्र युक्त इत्यपेक्षयामाह तस्मादित्यादि-तस्मात्= हेतोः, तयोः= वाच्यव्यङ्ग्ययोः, घटप्रदीपन्यायः= यथा हि प्रदीपो घटमपि प्रकाशयति स्वञ्च न निर्वृतो भवति तथैव विधिः। तद्व्याचष्टे यथेत्यादिना– यथैव= येन प्रकारेण, हि, प्रदीपद्वारा= दीपद्वारा, घटप्रतीतौ= कलशावभासने, उत्पन्नायां= जातायां, प्रदीपप्रकाशः= दीपज्योतिः, न= नैव, निवर्तते= अपगतो भवति, तद्वत्= तथैव, व्यङ्ग्यप्रतीतौ= व्यङ्ग्यावभासने, वाच्यावभासः= वाच्यप्रतीतिरिति। यथा दीपो घटं प्रकाश्यापि स्वयमपि तथैव प्रज्वलंस्तिष्ठति तथैव वाच्यार्थोऽपि व्यङ्ग्यं प्रकाश्यापि तथैव प्रकाश्यमानस्तिष्ठति। यत्, तु, प्रथमोद्योते= ग्रन्थस्यादिमे भागे, यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते। वाच्यार्थपूर्विका तद्वत्प्रतिपत् तस्य वस्तुनः' इत्यादि, उक्तं= कथितं तत्, उपायत्वमात्रात्, साम्यविवक्षया= समानता चिकथयिषया एवेति नैव किञ्चिदसमञ्जसम्। अत्र दीधितिकारः उपायत्वसाम्यमात्रस्य विवक्षया' इति पठति। प्रकरणाधारेण तदेवोपयुक्तं दृश्यते। तत्र तु उपायत्वसाम्यमात्रस्य= कारणतासाम्यमात्रस्य, विवक्षया= आशयेनेति।

अस्यायमाशयः— पदार्थवाक्यार्थन्यायो वाच्यव्यङ्ग्ययोर्न सम्भवति। तत्र प्रथमं तु पदार्थवाक्यार्थसम्बन्धमधिकृत्य नैवं विदुषानैकमत्यम्। तत्र वैयाकरणाः स्फोटरूपवाक्यार्थस्यैव सत्यता मन्यमानाः पदार्थप्रतीतिमेवासत्यां मन्यन्ते। तदनुसारं पदे वर्णानां वर्णेऽवयवानां वाक्ये च पदानां भेदकल्पना नैव प्रमाणप्रतिपन्ना। भाट्टमीमांसकनैयायिकादयस्तु पदपदार्थमिथ्यात्वमस्वीकृत्यापि वाक्यार्थपदार्थसम्बन्धव्याख्यानाय घटतदुपादानकारणन्यायमनुसरन्ति। तदनुसारं यथा घटे निमिते तदुपादानकारणानि स्वत एव सत्तापार्थक्यं त्यक्त्वा निरस्तानि भवन्ति तथैव वाक्ये सम्पन्न पदानि वाक्यार्थे च सिद्धे पदार्थाश्च स्वत एव तिरोभवन्ति। सौगता अपि प्रत्येकमेव पदार्थं क्षणस्थायिनं मन्यमानाः कार्योत्पत्तिकाले समवायिकारणमशेषसत्तं मन्यन्ते। कापिलाश्च कार्योत्पत्तिकाले कारणं तिरोहितं मन्यन्ते। तथैव वाक्ये वाक्यार्थे निष्पन्ने पदानां पदार्थानां वा स्वत एव तिरोभवति अतथाभावे अर्थैकत्वाभावाद्वाक्यत्वासिद्धेः। तेन स्वयमपि अस्थिरेण पदार्थेन सह व्यङ्ग्यसम्बन्धं नोपयुक्तम् अपरञ्च व्यङ्ग्यावबोधानन्तरं वाच्यबुद्धिस्तु नैव निरस्ता भवति वाच्येन सह व्यङ्ग्यस्य अविनाभावसम्बन्धात्। तस्माद्वाच्यव्यङ्ग्ययोर्विषये घटप्रदीपन्यायोऽभ्युपगन्तव्यः। यथा दीपो घटं प्रकाशयति स्वयं

च प्रकाशितस्तिष्ठति तथैव वाच्यार्थोऽपि व्यङ्ग्यार्थं प्रकाश्य स्वयञ्च प्रकाशमान एव तिष्ठति प्राक् यदुक्तं यद्यथा पदार्थद्वारा वाक्यार्थप्रकाशस्तथा वयङ्ग्यस्य वाच्यार्थपूर्विका प्रतिपादिति तत्तु कारणतामात्रसाम्यविवक्षयेति नासमञ्जसं किञ्चिदिति।

इस प्रकार व्यङ्ग्य के वाचकत्व का निरास कर अब तात्पर्यत्व के निरास के लिए प्रकरण का उपक्रम करते हैं—

न तो वाच्य एवं व्यङ्ग्य में पदार्थवाक्यार्थन्याय ही स्वीकार्य होता है क्योंकि किन्हीं विद्वानों ने पदार्थप्रतीति को ही असत्य माना है। जो भी इसकी असत्यता को नहीं मानते उनको भी वाक्यार्थपदार्थ के विषय में 'घटतदुपादानकारणन्याय' को तो मानना ही पड़ेगा। जैसें कि घट के निष्पन्न होने पर उसके उपादानकारणों का पृथक् नहीं किया जा सकता वैसे ही वाक्य वा वाक्यार्थ प्रतीत होने पर वा पदार्थ का होता है। उस समय उसका विभक्त रूप में उपलम्भ होने पर तो (एक अर्थ के अभाव में) वाक्यार्थबुद्धि ही दूर हो जाएगी। यह वाच्यव्यङ्ग्य का न्याय नहीं है। न ही व्यङ्ग्य के प्रतीत होने पर वाच्यबुद्धि ही निरस्त होती है उसका व्यङ्ग्यार्थ का) वाच्य के अवभास के अविनाभाव से ही प्रकाशन होता है। इस कारण उन दोनों वाच्य एवं व्यङ्ग्य का घटप्रदीपन्याय होता है। जैसे कि प्रदीप के द्वारा घट की प्रतीति उत्पन्न होने पर प्रदीप का प्रकाश नहीं लौटता है उसी तरह व्यङ्ग्य की प्रतीति में वाच्य का अवभास है। जो प्रथम उद्द्योत में 'जिजसे पदार्थ के द्वारा वाक्यार्थ की प्रतीति होती है वैसे ही वाच्यार्थ पूर्वक व्यङ्ग्य अर्थ की प्रतीति होती है। कहा गया था वह कारणता मात्र के साम्य की विवक्षा से कहा गया है। अतः वहाँ और कोई असमञ्जस नहीं है।

ध्वन्या०— नन्वेवं युगपदर्थद्वययोगित्वं वाक्यस्य प्राप्तं तद्भावे च तस्य वाक्यतैव विघटते, तस्य, ऐकार्थ्यलक्षणत्वात्, नैष दोषः, गुणप्रधानभावेन तयोर्व्यवस्थानात्। व्यंग्यस्य हि क्वचि

त्प्राधान्यं वाच्यस्योपसर्जनभावः क्वचिद्वाच्यस्य प्राधान्यमपरस्य गुणभावः। तत्र व्यङ्ग्यप्राधान्ये ध्वनिरित्युक्तमेव, वाच्यप्राधान्ये तु प्रकारान्तरं निर्देक्ष्यते। तस्मात् स्थितमेतत्व्यङ्ग्यपरत्वेऽपि काव्यस्य न व्यङ्ग्यस्याभिधेयत्वम् अपितु व्यंग्यत्वमेव।

लीला— वाच्यव्यंग्ययोर्घटदीपन्यायो य उक्तस्तत्र सम्भाव्यापत्तिं परिजिहीर्षुः प्रकरणमारभते नन्वित्यादिना- ननु= इति प्रश्ने, एवं= इत्थम्मते सति, वाक्यस्य, युगपत्= समकालमेव, अर्थद्वययोगित्वं= द्विविधार्थयुक्तत्वं, प्राप्तं, तद्भावे= अर्थद्वयभावे, च तस्य= वाक्यस्य, वाक्यत्वं= वाक्यभवः, एव, विघटते= असम्पन्नो भवति। तत्र हेतुमाह- तस्याः= वाक्यतायाः, ऐकार्थ्यलक्षणत्वात्= एकः अर्थो यस्य तस्य भाव ऐकार्थ्यं तदेव लक्षणं, तत्त्वादिति।

अस्यायमाशयः— यदि वाच्यव्यङ्ग्ययोः प्रदीपघटवदुभयावभासप्रकारेण

तु कार्यकारणयोर्युगपदेवार्थद्वययोगित्वं सञ्जायते येन ऐकार्थ्यलक्षणस्य वाक्यस्य वाक्यतैव विघटते इति। तत्परिहरति नैव इत्यादिना— एषः= वाच्यव्यङ्ग्ययोर्युगपद्भासमानरूपः दोषः= दूषणं, न= न भवति। तत्र हेतुमाह— तयोः= वाचकव्यङ्ग्ययोः, गुणप्रधानभावेन= उपस्कारकोपकार्यभावेन, व्यवस्थानात्= प्रबन्धनात्। उभयोरेव युगपद्भासमानत्वेऽपि न दोषस्तयोरुपस्कारकोपकार्यभावेन स्थितत्वात्। तदेव विवृणोतिक्वचित्= कुत्रचित्, हि, व्यङ्ग्यस्य= प्रतीतार्थस्य, प्रधान्यं= मुख्यत्वं तत्रैव चारुत्वस्य पर्यवसानात्, वाच्यस्य= अभिधेयार्थस्य, तु, उपसर्जनभावः= गौणत्मेव, क्वचित्= कुत्रचित्तु, वाच्यस्य= आभिधेयार्थस्य, प्राधान्यं= मुख्यत्वं तत्रैव चारुत्वपर्यवसानात्, अपरस्य= व्यङ्ग्यस्य, गुणभावः= तदुपकारकत्वमपि। तत्र= तयोः, व्यङ्ग्यप्राधान्ये= प्रतीतार्थमुख्यत्वे, ध्वनिः, भवति, इति उक्तं, एव= प्रतिपादितमेव, वाच्यप्राधान्ये= अभिधेयस्य मुख्यत्वे तु, प्रकाशान्तरं= अन्य एव प्रकारो गुणीभूतव्यङ्ग्यरूपः, निर्देक्ष्यते= पश्चात्प्रतिपादयिष्यते। तस्मात्= तेन हेतुना, एतत्= वक्ष्यमाणवैशिष्ट्यं, स्थितं= सम्मतम्'-काव्यस्य, व्यङ्ग्यपरत्वे= प्राधान्येन व्यङ्ग्यस्य= प्रतीतार्थस्य, न अभिधेयत्वं= शक्यार्थत्वं, अपितु= तद्विपरीतं, व्यङ्ग्यत्वं= प्रकाश्यत्वं, एवेति।

वाच्य एवं व्यङ्ग्य का घटप्रदीपन्याय मानने से उठाई गई आपत्तियों के निरास पूर्वक अभिमत सिद्धान्त की पुष्टि हेतु प्रकरण का उपक्रम करते हैं—

यदि वाच्य एवं व्यङ्ग्य का घटप्रदीपन्याय मानेंगे तो ऐसा करने से वाक्य के एक ही बार दो अर्थ हो जाएंगे। वैसा होने से वाक्य की वाक्यता ही विघटित हो जाएगी, उसके एक ही अर्थ होने का लक्षण होने से। उस पर कहते हैं कि यह कोई दोष नहीं है, दोनों के गुण एवं प्रधान भाव से स्थिति होने से कहीं व्यङ्ग्य की प्रधानता होती है तो वाच्य का गौणभाव होता है और कहीं वाच्य का प्राधान्य तथा दूसरे की गौणता होती है। उसमें व्यङ्ग्य के प्राधान्य से ध्वनि होती है और वाच्य केप्राधान्य होने से जो दूसरा प्रकार होता है उसका बाद में निर्देश करेंगे। इस प्रकार यह निश्चित है- काव्य के व्यङ्ग्यपरक होने पर भी अर्थात् वयङ्ग्य का प्राधान्य होने पर भी व्यङ्ग्य अभिधेयत्व नहीं होगा अपितु प्रकाश्यत्व ही होगा।

ध्वन्या०— किञ्च व्यङ्ग्यस्य प्राधान्येनाविवक्षायां वाच्यत्वं तावद् भवद्भिर्नाभ्युपगन्तव्यमतत्परत्वाच्छब्दस्य। तदस्ति तावद्व्यंग्यः शब्दानां कश्चिद्विषय इति। तत्रापि तस्य प्राधान्यं तत्रापि किमिति तस्य स्वरूपमपह्नूयते। एवं तावद्वाचकत्वादन्यदेव व्यञ्जकत्वस्यान्यत्वं यद्वाचकत्वं शब्दैकाश्रयमितरत्तु शब्दाश्रयमथाश्रयं च शब्दार्थयोर्द्वयोरपि व्यञ्जकत्वस्य प्रतिपादितत्वात्।

लीला— व्यङ्ग्यस्य तात्पर्यशक्तिबोध्यत्वेन यद्वाच्यत्वमाक्षिप्तं तदेव अन्यथाऽपि निराचिकीर्षुः प्रकरणमारभते किञ्चेत्यादिनाकिञ्च= इति आरम्भे,

व्यङ्ग्यस्य= प्रतीतार्थस्य, प्राधान्येन= चारुत्वपर्यवसायित्वेन, अविवक्षायां= स्थित्य-भावे, वाच्यत्वं= अभिधेयत्वं, भवद्भिः तात्पर्यपक्षपातिभिः, न, अभ्युपगन्तव्यं= मन्तव्यं, शब्दस्य, अतत्परत्वात्= तदर्थनिमित्तमनुच्चरितत्वात्। 'यत्परः शब्दः सः शब्दार्थ' इति कथनानुसारमपि प्राधान्येन विवक्षित एवार्थस्तात्पर्यविषयो भवति। अप्राधान्येन व्यङ्ग्यस्य तथात्वाभावादपि वाच्यत्वं तस्य नैव सिध्यति। तत्= तेन, व्यङ्ग्यः= प्रतीयमानार्थः, तावत्, शब्दानां, कश्चिद्= वाच्यभिन्नः, विषयः= लक्ष्यं, अस्ति, इति। व्यङ्ग्योऽपि शब्दानां कश्चिद्विषयोऽस्तीति स्वीकृते सति, यत्रापि, तस्य= व्यङ्ग्यस्य, प्राधान्यं= वाक्यार्थीभावः, तत्रापि= तादृशस्थ-लेऽपि, किमिति= किंनिमित्तं, तस्य= व्यङ्ग्यस्य, स्वरूपं, अपह्नूयते= अपलप्यते।

अस्यायमाशयः— यत्परः शब्दः स एव तस्यार्थो भवति इति तु भवतामभि-मतमेव। यत्र व्यङ्ग्यस्य अप्राधान्यं तत्र शब्दस्य अतत्परत्वेन तस्य वाच्यत्वं नैव सिध्यतीति भवद्भिरपि व्यङ्ग्यं शब्दानां विषयत्वेन तु स्वीकृतमेव तन्निमित्तं व्यञ्जनाव्यापारोऽपि सम्मत एव। तथाभूते सति यत्र च तस्य प्राधान्यं तत्रापि किंनिमित्तं यस्य व्यञ्जनाबोध्यत्वं नैव स्वीक्रियत इति। तदेवोपसंहरति एवं= इत्थं, तावत्= इति साकल्ये, वाचकत्वात्, अन्यत्= पृथक्, एव, व्यञ्जकत्वं इतः= उच्यमानाद्धेतोः, च= अपि, व्यञ्जकत्वस्य, वाचकत्वात्, अन्यत्वं= भिन्नत्वं, यत्, वाचकत्वं= वाचकभावः, शब्दैकाश्रयं= शब्दमात्राधारं, इतरत्= व्यञ्जकत्वं, तु, शब्दाश्रयं= शब्दवृत्तिः, अर्थाश्रयं= अर्थवृत्तिः, च= अपि, द्वयोः= उभयोः, शब्दार्थयोः= शब्दस्य अर्थस्य च, व्यञ्जकत्वस्य, प्रतिपादितत्वादिति 'यत्राऽर्थे शब्दो वा' इत्यादिना। यथा व्यङ्ग्यस्य वाचाद्भिन्नत्वं तथैव व्यञ्जकत्वस्यापि वाचकत्वाद्भिन्नत्वम्। वाचकत्वं केवलं शब्दमात्रवृत्तिः= व्यञ्जकत्वं तु शब्दार्थ-वृत्तिरिति। वाचकत्वं शब्दस्यैव भवति व्यञ्जकत्वं तु शब्दस्य अर्थस्य च भवतीति वाचकत्वाद्व्यञ्जकत्वस्य अन्यत्वमिति।

व्यङ्ग्य को तात्पर्यशक्ति से बोध्य मान कर वाच्यकत्व का जो आरोप है उसका दूसरे प्रकार से भी खण्डन करते हैं—

व्यङ्ग्य की प्राधान्य से विवक्षा न होने पर आप लोगों को उसका वाच्यत्व नहीं समझना चाहिए क्योंकि शब्द की उसके लिए तत्परता नहीं होती। तात्पर्य तो वही होता है शब्द जिसके लिए तत्पर हो। शब्द तो वाच्यार्थ के लिए तत्पर होता है इससे यह मानना पड़ेगा कि व्यङ्ग्य भी शब्द का कोई विषय होता है। तो, जब इतना मान लेते हैं। कि शब्द वाच्यार्थ के लिए तत्पर होता है और व्यङ्ग्य उससे भिन्न होता है तो उसके बोध के लिए व्यञ्जना की स्थिति भी तो मान ही लेनी पड़ेगी। जब इतना मान लिया तो फिर जहाँ व्यङ्ग्य की प्रधानता है वहाँ क्यों स्थिति को अपलपित किया जाता है। इस प्रकार व्यञ्जकत्व वाचकत्व से भिन्न ही होता है। और उच्यमान विषय से यह सिद्ध होता है कि वाचकत्व से व्यञ्जकत्व का भिन्नत्व ही होता है जो

कि वाचकत्व केवल शब्द में मात्र आश्रित होता है और दूसरा अर्थात् व्यञ्जकत्व तो शब्दाश्रय एवं अर्थाश्रय दोनों होता है, शब्द एवं अर्थ दोनों का भी व्यञ्जकत्व पहले ही प्रतिपादित किया गया है।

ध्वन्या०— गुणवृत्तिस्तूपचारेण लक्षणया चोभयाश्रयापि भवति। किन्तु ततोऽपि व्यञ्जकत्वं स्वरूपतो विषयतश्च भिद्यते। रूपभेदस्तावदयम्- यदमुख्यतया व्यापारो गुणवृत्तिः प्रसिद्धा। व्यञ्जकत्वं तु मुख्यतयैव शब्दस्य व्यापारः न ह्यर्थाद्व्यङ्ग्यत्रयप्रतीतिर्या तस्या अमुख्यत्वं मनागपि लक्ष्यते।

अयं चान्यः स्वरूपभेदः— यद्गुणवृत्तिरमुख्यत्वेन व्यवस्थितं वाचकत्वमेवोच्यते। व्यञ्जकत्वं तु वाचकत्वदित्यन्तं विभिन्नमेव। एतच्च प्रतिपादितम्। अयञ्चापरो रूपभेदोयद्गुणवृत्तौ पदाथोऽर्थान्तरमुपलक्षयति तदोपलक्षणीयार्थात्मना परिणत एवासौ सम्पद्यते। यथा गङ्गायां घोषः-' इत्यादौ। व्यञ्जकत्वमार्गे तु पदार्थयोरर्थान्तरं द्योतयति तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशकः प्रतीयते प्रदीपवत्। यथा 'ललीलाकमलपत्राणि गणयामास पार्वती' इत्यादौ। यदि च यत्रातिरस्कृतस्वप्रतीतिरर्थोऽर्थान्तरं लक्षयति तत्र लक्षणाव्यवहारः क्रियते तदेवं सति लक्षणैव मुख्यः शब्दव्यापार इति प्राप्तम्। यस्मात्प्रायेण वाच्यानां वाच्यव्यतिरिक्ततात्पर्यविषयार्थावभासित्वम्।

ननु त्वत्पक्षेऽपि यदार्थो व्यङ्ग्यत्रयं प्रकाशयति तदा शब्दस्य कीदृशो व्यापारः ? उच्यते-प्रकरणाद्यवच्छिन्नशब्दवशेनैवार्थस्य तथाविधं व्यञ्जकत्वमिति शब्दस्य तत्रोपयोगः कथमपह्नूयते।

लीला— इत्थं विषयस्वरूपकारणभेदान्मुख्याद्वाचकत्वाद् व्यङ्ग्यप्रकाशकत्वस्य भेदं प्रतिपाद्य सम्प्रति व्यञ्जकत्वगौणत्वयोर्भेदप्रतिपादनाय प्रकरणमारभते गुणेत्यादिना— गुणवृत्तिः= गौणत्वं, तु, उपचारेण= गुणाश्रितलक्षाणया, लक्षणया= शुद्धलक्षणया, च= अपि, उभयाश्रया= शब्दाश्रया, अपि, भवति। किन्तु= तथासत्यपि, ततः= गुणवृत्य अपि व्यञ्जकत्वं= व्यङ्ग्यप्रकाशकत्वं, स्वरूपतः= रूपात्, विषयतः= लक्ष्यात्, च,= अपि, भिद्यते= पृथक्क्रियत इति। तदेव विवृणोति, तावत्= प्रथमं, अयं= एष उच्यमानः, रूपभदः= स्वरूपवर्तो। भेदः= यत्, गुणवृत्तिः= गौणीलक्षण, अमुख्यतया= अप्रधानतया, व्यापारः= क्रिया-तद्रूपेण, प्रसिद्धा= ख्याता। व्यञ्जकत्वं= रसप्रकाशकत्वं, तु, शब्दस्य= वाचकस्य, मुख्यतया= प्रधानतया, एव, व्यापारः= क्रियेति। न च, अर्थात्= अभिधेयवस्तुनः, या= यादृशी, व्यङ्ग्यत्रयप्रीतीतिः= व्यङ्ग्यत्रयस्य वस्त्वलङ्कार-

सात्मकत्रिविधव्यङ्ग्यस्य, प्रतीतिर्बोधः, तस्याः= अमुख्यत्वं= गौणत्वं, मनागपि= स्वल्पमपि, लक्ष्यते= दृश्यत इति।

अस्यायमाशयः— कामं व्यञ्जकत्वं स्वरूपभेदाद्विषयभेदात्कारणभेदाच्च वाचकत्वाद्भिद्येत किन्तु व्यञ्जकत्वगुणवृत्योः को भेदो यत उभयोरेव शब्दार्थाश्रयता भवति इत्यनुयोगः। अत्रोच्यते सत्यमेवैतद्यद्गुणवृत्तिरपि उपचारेण लक्षणया च शब्दर्थोभयाश्रिता भवति किन्तु तस्या व्यञ्जकत्वात्स्वरूपतो विषयतश्च भेदो भवति। रूपतो भेदो यथा गुणवृत्या शब्दस्य मुख्यार्थबाधेन तत्सम्बद्धो योऽमुख्योऽर्थः स एव विषयः व्यञ्जकत्वं तु शब्दस्य मुख्य एव व्यापारः। न च अर्थाद्व्यङ्ग्यप्रतीतेरमुख्यत्वं दृश्यत इति।

अयं= एषः उच्यमानः, अन्यः= अपरः, च= अपि, स्वरूपभेदः, यत्, गुणवृत्तिः, अमुख्यत्वेन= प्रधानेतरत्वेन, व्यवस्थितं= संश्रितं, वाचकत्वं, एव, उच्यते मुख्यार्थबाधे एव तस्य प्रवर्तनात्, व्यञ्जकत्वं= रसादिप्रकाशकत्वं, तु, वाचकत्वात्, अत्यन्तं= नितान्तं, विभिन्नं= पृथक्,, एव। एतत्= व्यञ्जकत्वस्य वाचकत्वाद्विभिन्नत्वं,= अपि, प्रतिपादितं= निरूपितमेव।

अयं= एषः उच्यमानः च= अपि, अपरः= अन्यः, रूपभेदः= व्यञ्जकत्वगुणवृत्योः स्वरूपभेदः, यद्, गुणवृत्तौ, यदा, अर्थः= पदस्य वाक्यमेव, अर्थान्तरं= स्वसम्बन्धिनमन्यमर्थं, उपलक्षयति= आत्मानं समर्प्य निर्दिशति, तदा, उपलक्षणीयार्थात्मना= उलक्षणीयः उपलक्षणेन सम्पाद्यो योऽर्थस्तदात्मत्वेन, असौ गुणवृत्तिः, परिणतः= अवस्थान्तरं प्राप्तः, एव, सम्पद्यते= सञ्जायते इति। यथा= इति निदर्शने, 'गङ्गायां घोषः' इत्यादौ- गङ्गाशब्दस्य प्रवाह रूपो यो वाच्यार्थः स तटरूपे लक्ष्यार्थे आत्मानं समर्पयति तत्रैव सन्निविष्टश्च भवति। व्यञ्जकत्वमार्गे= व्यञ्जकत्वविषये, तु, यदा, अर्थः= वाच्यरूपः, अर्थान्तरं= व्यङ्ग्यरूपं, अर्थं, द्योतयति= प्रकाशयति, तदा, स्वयम्= निजरूपं, प्रकाशयन्= द्योतयन्, एव, असौ= वाच्यार्थः, अन्यस्य= व्यङ्ग्यार्थस्य, प्रकाशकः= द्योतकः, प्रतीयते= दृश्यते, प्रदीपवत्= दीप इव। यथा= इति निदर्शने, लीलेत्यादि— अत्र मुखनमनरूपो वाच्यार्थः पार्वत्याः लज्जां व्यनक्ति स्वयञ्च प्रकाशमान एव तिष्ठति।

यदि= इति पक्षान्तरे, च, यत्र, अतिरस्कृतस्वप्रतीतिः= अन्यग्भूतनिजबोधः अर्थः, अर्थान्तरं= अन्यमर्थ, लक्ष्यति= निर्दिशति, तत्र, लक्षणाव्यवहारः लक्षणाविायः, क्रियते= विधीयते, चेत्, तदा, एवं सति= तथाव्यवहृते सति, लक्षणा, एव= न त्वभिधा, मुख्यः= प्रधानः, शब्दव्यापारः= शब्दवृत्तिः, इति, प्राप्तं= स्थितं यन्नं सम्मतम्। मुख्यार्थबोधनव्यापारेऽभिधा, मुख्यार्थबाधेऽर्थबोधनव्यापारो लक्षणा इति व्यवस्थैव निरुद्धा स्यात्। यस्मात्= यतः, प्रायेण= बहुधा, वाक्यानां, वाच्यव्यतिरिक्ततात्पर्यवियार्थावभासित्वं= वाच्यव्यतिरिक्तो वाच्यभिन्नो यस्तात्पर्यविषयार्थस्तस्य अवभासित्वं द्योतकत्वं प्रायेणेति।

अस्यायमाशयः– व्यञ्जकत्वगुणवृत्योः समानेऽपि शब्दार्थाश्रयत्वे, तयोः स्वरूपतो विषयतश्च भेदः। तत्र प्रथमः स्वरूपभेदो यथा गुणवृत्तिरमुख्यतया शब्दस्य व्यापारो व्यञ्जकत्वं तु मुख्यतयैव। द्वितीयः स्वरूपभेदो यथा गृणवृत्तिर-मुख्यत्वेन व्यवस्थितं वाचकत्वमेव व्यञ्जकत्वं तु वाचकत्वान्नितान्तमेव भिन्नम्। गुणवृत्तौ मुख्योऽर्थे आत्मानं समर्पयति व्यञ्जकत्वं तु स स्वमपिप्रकाशमान एव तिष्ठति।

तेन अन्यदेव व्यञ्जकत्वमन्यैव च गुणवृत्तिः। यदि अन्यकृतस्वार्थत्वेन अर्थान्तरप्रकाशनविषयो लाक्षणिको मन्येत तदा तु लक्षणा एव मुख्यशक्तित्वेन प्रतिष्ठिता भवेद्यतः प्रायेण वाक्यानां वाच्येतरतात्पर्यविषयार्थावभासित्वमेवेति।

पुनः प्रश्नमुखेन तामेव व्यवस्थापयति नन्वित्यादिना– ननु= इति प्रश्ने, त्वत्पक्षे= तव व्यञ्जनावादिनः पक्षे, अपि, यदा, अर्थः= अभिधेयः, व्यङ्ग्यत्रयं= वस्त्वलङ्काररसरूपत्रिविधव्यङ्ग्यं, प्रकाशयति= द्योतयति, तदा= तत्समये, शब्दस्य कीदृशः= कथंविधः मुख्यः अमुख्यो वा, व्यापारः= क्रिया इति। मुख्यश्चेत्सा व्यञ्जनाऽपि अभिधैव भवति अमुख्यश्चेत्साऽपि गुणवृत्तिरेवेत्यनुयोगः।

तत्समादधाति उच्यते= अत्र कथ्यते प्रकरणाद्यवच्छिन्नशब्दवशेन= वक्तृबो-द्धव्यप्रकरणप्रभृतिघटकावच्छिन्नोः यः शब्दस्तद्वशेन, एव, अर्थस्य तथाविधं= त्रिविधं, व्यञ्जकत्वं= प्रकाशकत्वं, इति= हेतोः, तत्र, व्यञ्जकत्वविषये, शब्दस्य, उपयोगः, कथं= केन प्रकारेण, अपह्नूयते= अपलप्यते। इति इदमुक्तं भवति– मुख्य एवाऽसौ व्यापारः स च सामग्री भेदाच्च वाचकत्वाद् व्यतिरिच्यत इति।

इस प्रकार विषय, स्वरूप एवं कारण से सम्बन्धित भेदों से वाचकत्व एवं व्यञ्जकत्व का भेद बताकर अब व्यञ्जकत्व एवं गौणत्व के भेद का निरूपण करने के लिए प्रकरण का उत्थान करते हैं–

गुणवृत्ति जो है वह उपचार एवं लक्षणा से भी उभयाश्रित अर्थात् शब्द एवं अर्थ दोनों में आश्रित होती है। फिर भी उससे भी व्यञ्जकत्व का स्वरूप एवं विषय से भेद होता है। पहला रूप भेद यह है कि गुणवृत्ति अमुख्य रूप से व्यापार होने में प्रसिद्ध है व्यञ्जकत्व जो है मुख्य रूप से ही शब्द का व्यापार है। और न ही अर्थ से जो वस्तु, अलङ्कार एवं रस इन तीन व्यङ्ग्यों की जो प्रतीति है उसका अमुख्य रूप थोड़ा भी देखा जाता है।

दूसरा स्वरूपभेद यह है कि गुणवृत्ति को अमुख्य रूप में स्थिति वाचकत्व ही कहा जाता है। व्यञ्जकत्व तो वाचकत्व से अत्यन्त भिन्न ही है। यह भी प्रतिपादित है ही।

यह और दूसरा रूपभेद है कि गुणवृत्ति में जो अर्थ दूसरे अर्थ को उपलक्षित करता है उस समय यह उपलक्षणीय अर्थ की आत्मा के रूप से परिणत हुआ ही हो जाता है। जैसे 'गङ्गायां घोषः' में यहाँ गङ्गा शब्द का प्रवाह रूप जो वाच्यार्थ है वह तट रूप लक्ष्यार्थ में ही परिणत हो गया है। व्यञ्जकत्व के विषय में तो जब अर्थ

दूसरे अर्थ का द्योतन करता है तब अपने रूप का भी प्रकाशन करता हुआ यह दूसरे का प्रकाशक प्रतीत होता है दीप जैसे। जैसे— 'पार्वती लीला कमल के पत्तों को गिनने लगी' इत्यादि में। यदि जहाँ जरा सा भी तिरस्कृत नहीं है अपनी प्रतीति जिस का ऐसा अर्थ दूसरे अर्थ को लक्षित करता है, वहाँ लक्षणा व्यवहार माना जाय तो वैसा होने पर लक्षणा का ही मुख्य शब्द व्यापारत्व सिद्ध होने लगेगा क्योंकि प्राय: वाक्यों का वाच्य से भिन्न तात्पर्य विषयक अर्थ का अवभासित्व होता है।

कहने का आशय यह है कि गुणवृत्ति एवं व्यञ्जकत्व लक्षणा एवं व्यञ्जना में स्वरूप एवं विषय की दृष्टि से ही भेद है। गुणवृत्ति शब्द का अमुख्य व्यापार है जो कि मुख्य व्यापार के अवरुद्ध होने पर ही काम आता है किन्तु व्यञ्जकत्व तो शब्द का मुख्य व्यापार है। दूसरा रूप भेद यह है किक गुणवृत्ति अमुख्य रूप से वाचकत्व है जब कि व्यञ्जकत्व वाचकत्व से भिन्न ही है। तीसरा रूप भेद यह है कि गुणवृत्ति में यह अर्थ अर्थान्तर को उपलक्षित करता है, तब वह उसी में अन्तर्भूत हो जाता है। लेकिन व्यञ्जकत्व में पहला अर्थ भी दीप की तरह प्रकाशित ही रहता है। और यह भी कि जहाँ अर्थ अपनी प्रतीति को बिना खोए ही दूसरे अर्थ का प्रकाशन करता है जैसे कि व्यञ्जना के विषय में, वहाँ भी अगर लक्षणा का व्यवहार किया जाय तो लक्षणा ही मुख्य शब्द व्यापार हो जाएगी क्योंकि प्रायश: वाक्य वाच्य से भिन्न तात्पर्य विषय का जो अर्थ है उसका ही अवभासक होता है।

तो फिर आपके (व्यञ्जनावादी के) पक्ष में भी जब अर्थ वस्तु, अलङ्कार एवं रस रूप तीनों व्यङ्ग्यों का प्रकाशन करता है तब उसमें शब्द का किस प्रकार का व्यापार रहता है— मुख्य व अमुख्य ?

कहा जाता है- प्रकरण आदि से अवच्छिन्न शब्द के वश से अर्थ का उस प्रकार का जो व्यञ्जकत्व है वहां शब्द का उपयोग कैसे उपलक्षित किया जा सकता है। अर्थात् वहां शब्द का मुख्य व्यापार ही होता है और वह प्रकरण आदि सामग्री के भेद से वाचकत्व से भिन्न होता है। अत: शब्द का अमुख्य व्यापार है लक्षणा अर्थात् लक्षणा का अमुख्य रूप से वाचकत्व ही होता है लेकिन व्यञ्जना का मुख्य रूप से व्यञ्जकत्व होता है। अत: दोनों में अपरिहार्य रूपभेद है।

ध्वन्या०— विषयभेदोऽपि गुणवृत्तिव्यञ्जकत्वयो: स्पष्ट एव। यतो व्यञ्जकत्वस्य रसादयोऽलङ्कारविशेषा व्यङ्ग्यरूपावच्छिन्नं वस्तु चेति त्रयं विषय:। तत्र रसादिप्रतीतिगुणवृत्तिरिति न केनचिदुच्यतेन च शक्यते वक्तुम्। व्यङ्ग्यालङ्कारप्रतीतिरपि तथैव। वस्तुचारुत्वप्रतीतये स्वशब्दानभि- धेयत्वेन यत्प्रतिपादयितुमिष्यते तद् व्यङ्ग्यम्। तच्च न सर्व गुणवृत्तेर्विषय: प्रसिद्ध्यनुरोधाभ्यामपि गौणानां शब्दानां प्रयोगदर्शनात्। तथोक्तं प्राक्। यदपि च गुणवृत्तेर्विषयस्तदपि च व्यञ्जकत्वानुप्रवेशेन। तस्माद् गुणवृत्तेरपि व्यञ्जकत्वस्यात्यन्तविलक्षणत्वम्। वाचकत्वगुण— वृत्तिविलक्षणस्यापि च तस्य तदुभयाश्रयत्वेन व्यवस्थानम्

व्यञ्जकत्वं हि क्वचिद्वाचकत्वाश्रयेण व्यवतिष्ठते यथा विवक्षितान्य-परवाच्ये ध्वनौ। क्वचित्तु गुणवृत्त्याश्रयेण यथा अविवक्षितवाच्ये ध्वनौ। तदुभयाश्रयत्वप्रतिपादनायैव प्रथमतरं द्वौ भेदावुपन्यस्तौ। तदुभयाश्रित-त्वाच्च तदेकस्वरूपत्वं तस्य न शक्यते वक्तुम्। यस्मान्न तद्वाचकत्वैक-रूपमेव, क्वचिल्लक्षणाश्रयेण वृत्तेः।। न च लक्षणैकरूपमेवान्यत्र वाचक-त्वाश्रयेण व्यवस्थानात्। न चोभयधर्मत्वेनैव तदेकैकरूपं न भवति। यावद्वाचकत्वलक्षणादिरूपरहितशब्दधर्मत्वेनापि। तथाहि गीतध्वनीनामपि व्यञ्जकत्वमस्ति रसादिविषयम्, न च तेषां वाचकत्वं लक्षणा वा कथञ्चिल्लक्ष्यते। शब्दादन्यत्रापि विषये व्यञ्जकत्वस्य दर्शनाद्वाचक-त्वादिधर्मप्रकारत्वमयुक्तं वक्तुम्। यदि च वाचकत्वलक्षणादीनां शब्द-प्रकाराणां प्रसिद्धप्रकारविलद्दक्षणत्वेऽपि व्यञ्जकत्वं प्रकारत्वेन परिकल्प्यते तच्छब्दस्यैव प्रकारत्वेन कस्मान्न परिकल्पयते। तदेवं शाब्दे व्यवहारे त्रयः प्रकाराः— वाचकत्वं गुणवृत्तिर्व्यञ्जकत्वं च। तत्र व्यञ्जकत्वे यदा व्यङ्ग्यप्राधान्यं तदा ध्वनिः। तस्य चाविवक्षितवाच्यो विवक्षितान्यपरवा-च्यश्चेति द्वौ प्रभेदावनुक्रान्तौ प्रथमतरं तौ सविस्तरं निर्णीतौ।

लीला— एवमस्खलद्वृतित्वादसङ्केतितार्थप्रतिपादकत्वात्पृथगाभासमान-त्वाच्च व्यञ्जकत्वस्य स्खलद्वृतिकसाध्यायाः सङ्केतितार्थसम्बद्धार्थप्रकाशिकाया तदनुगतत्वेनापृथगाभासमानाय गुणवृत्तलक्षणायाः भिन्नत्वं स्वरूपेण प्रतिपाद्य सम्प्रति तयोर्विषयभेदमप्याह विषयत्यादिना गुणवृत्तिव्यञ्जकत्वयोः= लक्षणा या व्यञ्कत्वस्य च, विषयभेदः= लक्ष्यगतभेदः, अपि, स्पष्टः= सुविदितः, एवेति। यतः= यस्मात्, व्यञ्जकत्वस्य शब्दव्यापारस्य मुख्यत्वेऽपि, सामग्रीभेदद्वाच्या-तिरिक्तस्य रसादयः= रसभावादयः, अलङ्कारविशेषाः= उपमादयः, व्यङ्ग्यरूपाव-च्छिन्नं= प्रतीयमानवस्तु, च, इति, त्रयं= त्रिविधं, विषयः= लक्ष्यमिति। गुणवृत्तेस्तु वस्तुमात्रं तदपि सङ्केतितार्थसङ्केतितमेव न तु तदाक्षिप्तमित्याशयः। तत्र प्रथम-प्रकारमाह— तत्र= त्रिविधेषु विषयेषु, रसादिप्रतीतिः= रसभावादिबोधः, गुणवृत्तिः, इति, केनचित्= अलब्धवर्णेनापि, न, उच्यते, न, च, वक्तुं, शक्यते= पार्यते— कथितेऽपि तन्नैव सिद्ध भवति। अथ द्वितीयं प्रकारमाह-व्यङ्ग्यालङ्कारप्रतीतिः= प्रतीयमानालङ्कारबोधः, अपि, तथैव= नैव गुणवृत्तिविषय इति। तृतीयमपि प्रकारं निर्दिशति वस्तुचारुत्वप्रतीतये= वस्तुनो यदेव चारुत्वं सौन्दर्यं तस्य प्रतीतये अवभासनाय, स्वशब्दानभिधेयत्वेन= स्ववाचकशब्दाकथितत्वेन, यत्= यदेव, प्रतिपादयितु= साधयितुं इष्यते= काङ्क्ष्यते, तद्, व्यङ्ग्यं= व्यङ्ग्यपदव्यपदेश्यमिति व्यङ्ग्यशब्दस्यार्थः। तत्,= व्यङ्गत्वं, च, न, सर्वं= सम्पूर्णमेव अंशतः सद्भावेऽपि—

किञ्चित्तु भवत्येव यथा 'निश्वासान्ध इवादर्शः' इत्यत्र, उक्तमेव च—कस्यचिद ध्वनिभेदस्य सा तु स्यादुपलक्षणमिति, गुणवृत्तेः= गौण्या लक्षणायाः, शुद्धया अपि प्रसङ्गात्, विषयः= लक्ष्यं, गौणानां= गुणवृत्तिख्यापितानां, शब्दानां, प्रसिद्ध- यनुरोधाभ्यां= रूढिप्रयोजनाभ्यां, अपि, प्रयोगदर्शनात्= व्यवहारात्। प्रसिद्धितो यथा लावण्यादयः= शब्दाः— लवणसम्बद्धोपि लावण्यशब्दः= प्रसिद्ध्या सौन्दर्य बोधयति, अनुरोधस्तु वृत्तव्यवहारादेर्यथा 'वदति विसिनीपत्रशयनं, इत्यादौ विसिनीपत्रशयनस्य निर्जीवस्यापि जल्पनव्यापारनिबन्धनमित्यादि। तथा= तादृशं, वस्तु, प्राक्= पूर्वमेव, 'रूढा ये विषयेऽन्यत्र' इति अत्रान्तरे, उक्तं= प्रतिपादितमेव। तत्रापि, यदपि= यावदपि, गुणवृत्तेः गौणीलक्षणायाः विषयः= लक्ष्यं, तदपि, च व्यञ्जकत्वानुप्रवेशेन= व्यञ्जकत्वपुटमात्रेण न तु शुद्धया, गौण्या एव। तस्मात्- ततः, व्यञ्जकत्वस्य, रसादिप्रकाशनव्यापारस्य, न केवलं वाचकत्वादेव, अपितु गुणवृत्तेः= गौणलक्षणातः, अपि, अत्यन्तविलक्षणत्वम्= नितान्तवैचित्र्यम्। वाच कत्वगुणवृत्तिविलक्षणस्य= वाचकत्वगुणवृत्तिव्यतिरिक्तस्य, अपि, च, तस्य= व्यञ्जकत्वस्य, तद्दुभयाश्रयत्वेन= तदुभयं मुख्योपचारौ तस्य आश्रयत्वेन व्यव- स्थान= अवस्थितिः= तदुभयाश्रयत्वेन व्यवस्थानात्तदुभयवैलक्षण्यमिति।

व्यञ्जकत्वस्य वाचकत्वगुणवृत्याश्रयेण व्यवस्थानमिति यदुक्तं तदेव व्याख्- याति व्यञ्जकत्वमित्यादिना= व्यञ्जकत्वं, हि= इत्यवधारणे, क्वचित्, वाचक- त्वाश्रयेण= वाचकत्वमाश्रित्य, व्यवतिष्ठते= स्थितं भवति, यथा— इति निदर्शने विवक्षितान्यपरवाच्ये, ध्वनौ= यत्र वाच्यस्य अन्यपरत्वेन विवक्षाया ध्वनिर्भवति तत्र-रसादिध्वनौ, क्वचित्तु, गुणवृत्याश्रयेण, यथा अविवक्षितवाच्ये ध्वनौ= यत्र वाच्यं नितान्तमेवाविवक्षितं सत् अर्थान्तरे सङ्क्रमितं भवति वा अन्यन्तमेव व्यक्तं भवति तत्र, यथा— रामोऽस्मि सर्व सहे, 'जीवत्यहो रावणः' इत्यादौ। तदुभयाश्रत्वप्रतिपादनाय= वाचकत्वगुणवृत्युभयाश्रयत्वबोधनाय व्यञ्जकत्वस्य, एवं, च= अपि, ध्वनेः, प्रथमतरं, द्वौ, प्रभेदौ अविवक्षितवाच्य- विवक्षितान्यपर- वाच्यसंज्ञितौ, उपन्यस्तौ= प्रस्तुतौ। तदुभयाश्रितत्वात्= वाचकत्वगुणवृत्तिसंश्रि- तत्वात्, च= अपि, तस्य= व्यञ्जकत्वस्य, तदेकरूपत्वं= तयोर्मध्ये एकस्य स्वरूपत्वं न तु वाचकत्वस्यैव नापि च गुणवृतेरेव, वक्तुं= कथयितुं, प्रतिपादयितुं, न,= शक्यते= पार्यते। तदेव विवृणोति, यस्मात्= यतः=, व्यञ्जकत्वस्य, क्वचित्, लक्षणाश्रयेण= गौण्याधारेण, वृत्तेः= वर्तनात्, तद्वाचकत्वैकरूपं= तस्य वाचकत्व- मात्ररूपं, अपि, न= नैव, न, च, लक्षणैकरूपं= लक्षणामात्रस्वरूपं, एव, अन्यत्र= इतरस्थले, वाक्याश्रयेण= वाचकत्वाधारेण, व्यवस्थानात्= स्थितेः। न, च उभयध- र्मत्वेन= उभयवृत्तित्वेन, एव, तदेकैकरूपं= तयोः= एकैकस्वरूपं, न भवति= इति न= अपितु भवत्यपि। यावत्= यावत्पर्यन्तं, यत् वाचकत्वलक्षणादिरूप-

रहितशब्दधर्मत्वेन= उभयस्वरूपरहितो यः शब्दस्तस्य धर्मत्वेन अपि तावस्था- नमिति शेषः। तथाहि= इति निदर्शने, गीतध्वनीनां= सङ्गीतस्य, यस्य न वाचकत्वं नैव च लाक्षणकित्वं, तस्यापि, रसादिविषयं= रसभावादिलक्ष्यं, व्यञ्जकत्वं, वा अस्ति। तेषां= गीतादिध्वनीनां, कथञ्चित्= केनापि प्रकारेण, वाचकत्वं, वा, लक्षणा, लक्ष्यते= दृश्यत इति।

व्यञ्जकत्वस्य वाचकत्वगौणत्वदिभिन्नत्वे हेत्वन्तरमपि दर्शयति शब्दादि-त्यादिना- शब्दात्, अन्यत्र अपि विषये= यत्र शब्दस्य व्यापार एव नास्ति तथाविधेऽपि विषये, अपि, व्यञ्जकत्वस्य= व्यञ्जनव्यापारस्य, दर्शनात्, तस्य वाचकत्वादिशब्दधर्मप्रकारत्वं= वाचकत्वगौणत्वप्रभृतिशब्दव्यापार- प्रकारभावः, वक्तुं= कथयितुं, अयुक्तं= असाम्प्रतिमिति। यदि, च, वाचकत्वलक्षणादीनां= वाचकत्वगौणत्वादिलक्षणयुतानां, शब्दप्रकाराणां= शब्दव्यापारभेदानां, प्रसिद्ध-प्रकारविलद्वाक्षधत्वे= व्यञ्जकत्वस्य प्रसिद्धप्रकारेभ्यो वाचकत्वादिभ्यो वस्तुतो वैलक्षण्ये त्यपि, प्रकारत्वेन= अपरप्रकारत्वेन, व्यञ्जकत्वं= व्यञ्जनव्यापारः, परिकल्प्यते= उन्नीयते, तदा, तत्= व्यञ्जकत्वं, शब्दस्य,प्रकारत्वेन= प्रकाररूपेण, एव, कस्मात्= किमर्थ, न परिकल्प्यते= चिन्त्यते। तत्= तस्मात्, एवं= अनेन प्रकारेण, शाब्दे= शब्दसबन्धिनिरनि, व्यवहारे, प्रयोगे त्रयः= त्रिविधाः, प्रकाराः= विधयो भेदाः- वाचकत्वं, गुणवृत्तिः, व्यञ्जकत्वं, चेति।

तत्र वाचकत्वं= शब्दस्य सङ्केतितार्थबोधको व्यापारः, व्यापारः, गुणवृत्तिः= सङ्केतितार्थस्य वाक्येऽनन्वये तत्सम्बद्धेतरार्थबोधकोऽपरोऽमुख्यो व्यापारः, व्यञ्जकत्वं= मुख्यार्थातिरिक्तार्थप्रकाशको मुख्यो व्यापार इति। तत्र, व्यञ्जकत्वे, तदा, ध्वनिः, तस्य= ध्वनेः, च, अविवक्षितवाच्यः विवक्षितान्यपरवाच्यः, च इति, द्वौ= द्विविधौ, प्रभेदौ= प्रकारौ, अनुक्रान्तौ= उपन्यस्तौ, प्रथमतरं= प्राथमि-कत्वेन, तौ= भेदो, सविस्तार= विस्तारपूर्वकं, निर्णीतौ= निरूपिताविति,

प्रकरणस्यास्यायमाशयः— स्वरूपगतभेद इव व्यञ्जकत्वगौणकत्वयो-र्विषयः गतभेदोऽपि सुस्पष्टः। तत्र व्यञ्जकत्वस्य रसादयः, अलङ्कारविशेषाः व्यङ्ग्यवस्तु चेति विषयः किन्तु गुणवृत्तिः केवलं वस्तु एव। वस्तुनश्चारुत्वातिश-यबोधनाय स्वशब्दावाच्यत्वेन यदेव प्रतिपिपादयिष्यते तदेव व्यङ्ग्यम्। तच्च न सर्व गुणवृत्तेर्विषयः कामं तत्र किञ्चिद्भवत्यपि तथा निश्वासान्ध इवादर्शः' इत्यत्र। उक्तमेव च—

'कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणं' इति। गौणशब्दानां प्रसिद्ध-चनुरोधानुसारमेव प्रयोगो यथा लावण्यमित्यादौ प्रसिद्धिवशात् 'वदति विसिनी-पत्रशयनं इत्यादौ अनुरोधवशादेव। तेन प्रयोजनवशादेव। तेन प्रयोजनवशा-त्प्रवर्तितस्य व्यङ्ग्यस्य कथं तत्र सम्पूर्णत्वेन समावेश इति। तत्र गुणवृत्तेः स्वल्पमपि

प्रवेशोऽपि व्यञ्जकत्वानुप्रवेशेनैव न तु तन्मात्रस्य। तच्च व्यङ्ग्यं वाचकत्वगुण-वृत्त्याश्रितमपि तदपेक्षया नितान्तमेव विलक्षणम्। व्यञ्जकत्वं क्वचिद्वाचकत्व-माश्रयते यथा विवक्षितान्यपरवाच्यध्वनौ क्वचिच्च गुणवृत्तिः यथा अविवक्षित-वाच्यध्वनौ तेन तस्योभयाश्रितत्वात्तदेकरूपत्वमात्रं नैव भजते अर्थात् तस्य न वाचकत्वैकरूपमेव न च गुणवृत्त्यैकरूपमेव, न चोभयधर्मत्वेन तदैकैकरूपत्वञ्च विजहाति। तन्न केवलमुभयाश्रितमेवापितु वाचकत्वादिहीनशब्द- धर्मत्वेनापि विलसति यथा गीतध्वनिष्वपि रसादीनां व्यञ्जकत्वभावः। एव व्यञ्जकत्वस्य शब्दस्य प्रकारता सिद्ध्यति। अतः वाचकत्वं गौणकत्वं व्यञ्जकत्वञ्चेति शाब्दे व्यवहारे त्रयः प्रकाराः यत्र सङ्केतितार्थबोधकत्वे वाचकत्वं मुख्यं मुख्यार्थबाधेन तत्सम्बद्धार्थान्तरबोधकत्वे गौणकत्वममुख्यं, वाचकत्वादिविलक्षणार्थान्तरबो-धकत्वे व्यञ्जकत्वं मुख्यमिति। व्यङ्ग्यप्राधान्ये व्यञ्जकत्वे ध्वनिर्यस्य अविवक्षित-वाच्यविवक्षितान्यपरवाच्यत्वेन द्वौ भेदाविति।

इस प्रकार व्यञ्जकत्व का गौणत्व से स्वरूपगत भेद का निरूपण कर अब उन दोनों के विषयगत भेद का निरूपण करते हैं—

गुणवृत्ति एवं व्यञ्जकत्व का विषय भेद भी स्पष्ट ही है। क्योंकि रस भावादि, अलङ्कार विशेष एवं व्यङ्ग्य के स्वरूप से अवच्छिन्न वस्तु ये तीन व्यञ्जकत्व के विषय हैं और गुणवृत्ति का विषय केवल वस्तु ही है। उनमें रस, भाव आदि की प्रतीति को न कोई गुणवृत्ति कहता है और न कह कर भी सिद्ध ही किया जा सकता है। व्यङ्ग्य अलंकार की प्रतीति भी उसी तरह है। वस्तु के चारुत्व की प्रतीति के लिए अपने शब्द के अवाचकत्व से-शब्द के वाचकत्व से भिन्न जिसका प्रतिपादन चाहा जाता है वह ही व्यङ्ग्य है। वह व्यङ्ग्य सम्पूर्णतः गुणवृत्तिः का विषय नहीं होता भले ही कुछ अंश में हो। थोड़ा बहुत तो होता ही है जैसे 'श्वास के कारण अन्ध आइने की तरह' में अन्ध शब्द का नेत्र हीनत्व मुख्यार्थ जो है उसका दर्पण के साथ सङ्गति न बैठने से गुणवृत्ति से उसका 'धूमिल' अर्थ हो जाता है। कहा भी है— वह ध्वनि के किसी भेद का का उपलक्षण हो सकता है। गौण शब्द जो है उसका प्रसिद्धि एवं अनुरोध से ही प्रयोग होता है और व्यञ्जक शब्दों का केवल प्रयोजन से ही। प्रसिद्धि के प्रयोग जैसे 'लवण' से बने 'लावण्य' शब्द का सौन्दर्य के अर्थ में और अनुरोध से जैसे 'कमल के पत्तों से बना विस्तर कहता है' इत्यादि में। यह पहले ही बताया जा चुका है 'रूढा ये विषयेऽन्यत्र' के अवान्तर में। उसमें भी जो भी व्यञ्जकत्व का गुणवृत्ति से भी व्यञ्जकत्व के अनुप्रवेश से ही है। इस कारण व्यञ्जकत्व का गुणवृत्ति भी अत्यन्त विलक्षणता है। वाचकत्व एवं गुणवृत्ति दोनों से भी विलक्षण इस व्यञ्जकत्व का उन दोनों के आश्रय से अवस्थिति होती है। व्यञ्जकत्व कहीं तो वाचकत्व के आश्रय से रहता है जैसे विवक्षितान्यपरवाच्य ध्वनि में अर्थात् वाच्य के अन्य परक रूप में विवक्षित होने से जो ध्वनि होती है उसमें। इस में सभी वस्तु, अलङ्कार एवं रसादि व्यङ्ग्य आते हैं। कहीं तो वह

गुणवृत्ति— लक्षणा के आश्रय से रहता है, जैसे अविवक्षित वाच्य ध्वनि में अर्थात् जहाँ वाच्य का वाक्य में अन्वय हो न पाने के कारण अविवक्षित होकर वाच्य या तो दूसरे अर्थ में सङ्क्रमित होता है या तो अत्यन्त तिरस्कृत होता है वहाँ। इसमें वस्तु व्यङ्ग्य का विषय आता है। उन दोनों के आश्रयत्व का प्रतिपादन करने के लिए ही ध्वनि के पहले पहल दो भेद बताए गए थे। उन दोनों में आश्रयत्व होने के कारण व्यञ्जकत्व का किसी के साथ एकरूपत्व माना नहीं जा सकता। इसकी न तो वाचकत्व के साथ ही एकरूपता है क्योंकि कहीं लक्षणा के आश्रय से व्यवहार होता है न तो लक्षणा के साथ ही एक रूपता होती है, क्योंकि दूसरे जगह यह वाचकत्व के आश्रय से व्यवस्थित होता है न तो दोनों के आश्रयत्व के कारण किसी एक का एकरूपत्व ही नहीं हो है अपितु होता ही है। यहाँ तक कि यह वाचकत्व आदि लक्षण के रूप से रहित शब्द के धर्म के रूप में रहता है।। जैसे कि गीत की ध्वनियों का भी रसादि विषय का व्यञ्जकत्व होता है। उन ध्वनियों का न कही हीं वाचकत्व सक्रिय होता है न तो वहाँ लक्षणा का ही विषय आता है। अत: शब्द से भिन्न विषय में भी व्यञ्जकत्व के पाए जाने से इसको वाचकत्व आदि शब्द धर्म के प्रकार के रूप में गिनना ठीक नहीं पड़ता। यदि वाचकत्व आदि लक्षण वाले शब्द प्रकारों का प्रसिद्ध प्रकार से विलक्षण होने पर भी व्यञ्जकत्व को शब्द के प्रकार के रूप में ही परिकल्पित किया जाता है तो उसको भी शब्द के ही प्रकार के रूप में क्यों नहीं गिना जाए ? तो इस प्रकार शब्द सम्बन्धी व्यवहार के तीन प्रकार होते हैं— वाचकत्व, गुणवृत्ति एवं व्यञ्जकत्व, उसमें व्यञ्जकत्व में जब व्यङ्ग्य की प्रधानता होती है, तब वह ध्वनि कहलाती है। उस ध्वनि के अविवक्षित वाच्य एवं विवक्षितान्यपर वाच्य के भेद से दो प्रकार होते हैं और पहले पहल उन दोनों का विस्तार पूर्वक विवेचन किया जा चुका है।

ध्वन्या०— अन्यो ब्रूयात्— ननु विवक्षितान्यपरवाच्ये ध्वनौ गुणवृत्तिता नास्तीति यदुच्यते तद्युक्तम्। यस्माद्वाच्यवाचकप्रतीतिपूर्विका यत्रार्थान्तर-प्रतिपत्तिस्तत्र कथं गुणवृत्तिव्यवहारः नहि गुणवृत्तौ यदा निमित्तेन केनचि-द्विषयान्तरे शब्द आरोप्यते अत्यन्ततिरस्कृतस्वार्थः यथा 'अग्निर्माणवकः' इत्यादौ, यदा वा स्वार्थमंशेनापरित्यजंस्तत्सम्बन्धद्वारेण विषयान्तरमा-क्रामति यथा 'गङ्गायां घोषः' इत्यादौ तथा विवक्षितवाच्यत्वमुपपद्यते। अत एव च विवक्षितान्यपरवाच्ये ध्वनौ वाच्यकयोर्द्वयोरपि स्वरूपप्रतीतिर-र्थावगमनं च दृश्यत इति व्यञ्जकत्वव्यवहारो युक्त्यनुरोधी। स्वरूपं प्रकाशंयन्नेव परावभासको व्यञ्जक इत्युच्यते, तथाविधे विषये वाचक-त्वस्यैव व्यञ्जकतवमिति गुणवृत्तिव्यवहारो नियमेनैव न शक्यते कर्तुम्।

अविवक्षितवाच्यस्तु ध्वनिर्गुणवृत्तेः कथं भिद्यते ? तस्य प्रभेदद्वये गुणवृत्तिद्वयरूपता लक्ष्यत एव यतः।

अयमपि न दोषः। यस्मादविवक्षितवाच्यो ध्वनिर्गुणवृत्तिमार्गाश्रयोऽपि भवति न तु गुणवृत्तिरूप एव। गुणवृत्तिर्हि व्यञ्जकत्वशून्यापि दृश्यते। व्यञ्जकत्वं च यथोक्तचारुत्वहेतु व्यङ्ग्यं विना न व्यवतिष्ठते। गुणवृत्तिस्तु वाच्यधर्माश्रयेणैव व्यङ्ग्यमात्राश्रयेण चाभेदोपचाररूपा सम्भवति, यथा च 'प्रिये जने नास्ति पुनरुक्तम्' इत्यादौ। यापि लक्षणारूपा गुणवत्तिः साप्युपलक्षणीयार्थसम्बन्धमात्राश्रयेण चारुरूपव्यंग्यप्रतीतिं विनापि सम्भवत्येव, यथा मञ्चाः क्रोशन्तीत्यादौ विषये।

लीला— इत्थं व्यञ्जकत्वस्य वाचकत्वोपजीवकत्व गौणकत्वानुजीविकत्वं प्रतिपाद्य युक्त्या सम्प्रति अविवक्षितवाच्यभागे गुणवृत्तिव्यञ्जकत्वयोर्भेदं निर्देष्टुं प्रकरणमारभते अन्य इत्यादिना— अन्यः= अपरः, ब्रूयात्= आक्षिपेत्, ननु इति प्रत्युक्तौ, विवक्षितवाच्यपरवाच्ये= यत्र अन्य (व्यङ्ग्य) परत्वेन वाच्यं विवक्षितं तत्र तादृशे, ध्वनौ, गुणवृत्तिता= लक्षणाधर्म, नास्ति= न विद्यते, इति, यद्, उच्यते= कथ्यते, तत्= कथनं, युक्तं= शोभनमेव। यस्मात्= यतः, यत्र, वाच्यवाचकप्रतीतिपूर्विका= वाच्यस्य मुख्यार्थस्य वाचकस्य तब्द्बोधकस्य य प्रतीतिर्ज्ञापनं तत्पूर्विका, अर्थान्तरप्रतिपत्तिः, अन्योऽर्थोऽर्थान्तरं व्यङ्ग्यार्थस्तस्य प्रतिपत्तिरबबोधः, तत्र, कथं, गुणवृत्तिव्यवहारः= लक्षणागम्यत्वं मुख्यार्थबाधाभावादिति। गुणवृत्तौ= लक्षणायां जहदजहत्स्वार्थायामित्याशयः, यदा, केनचित्, निमित्तेन= कारणेन, सामीप्य-सादृश्य-समवाय-वैपरीत्य- क्रियायोगादिना, अत्यन्ततिरस्कृतस्वार्थः= नितान्तमेवोज्झितस्वकीयार्थः शब्दः, विषयान्तरे= सङ्केतितभिन्नविषये, आरोप्यते= स्थाप्यते, यथाः अग्निर्माणवकः' इत्यादौ (अत्र अग्निशब्दस्य प्रज्जवलनरूपस्य वाच्यार्थस्य माणवकेन सहानन्वयात् नितान्ततिरस्कृतवाच्यः सन् सदृश्यसम्बन्धेन तेजस्वितां जनयति) वा= अथवा, यदा, शब्दः, स्वार्थं= स्वमुख्यार्थं, अंशेन= एकदेशेन, अपरित्यजन्= अजहन्, तत्सम्बन्धद्वारेण= वाच्यसम्बन्धमुखेन, एव, विषयान्तरं= स्वपूर्तयेऽपरमप्यर्थ, आक्रामति= गृह्णाति, यथा— गङ्गायां घोषः' इत्यादौ (अत्र गङ्गाशब्दः प्रवाहरूपस्य वाच्यार्थस्य घोषेण सह अनन्वयेऽप स्वावस्थितिमपि, जनयन्नन्वयसिद्धये तत्समीपतटरूपमर्थं बोधयति तदा= तत्स्थितौ, विवक्षितवाच्यत्वं= वाच्यस्याभीष्टत्वं, न उत्पद्यते= उदेति। अत एव च= अनेन हेतुनाऽपि, विवक्षितान्यपवाच्ये, ध्वनौ, द्वयोः उभयोः, वाच्यवाचकयोः, अपि, स्वरूपप्रतीतिः= स्थित्यवभासनं, अर्थागमनं= अर्थोपस्थितिः, युक्तमनुरोधी= तर्कानुकूलः। स्वरूपं= स्वावस्थितिं, हारः= व्यञ्जकत्वप्रयोग, युक्तमनुरोधी= तर्कानुकूलः। स्वरूपं= स्वावस्थितिं, प्रकाशयन्= द्योतयन्, एव, परावभासकः= अन्याक्षेपकः, व्यञ्जकः= प्रकाशकः, इति= इत्थं, उच्यते= शब्द्यते यथा दीपादिः। तथाविधे= तादृशे, विषये= लक्ष्ये, वाचकत्वस्य, एव,

व्यञ्जकत्वं, इति, गुणवृत्तिव्यवहारः= लक्षणारोपः, नियमेन= व्यवस्थया, एव, कर्तुं= विधातुं, न, शक्यते= पार्यते।

अविवक्षितवाच्यः यः ध्वनिः= वाच्यस्याविवक्षितत्वेन यो ध्वनि, तु= इति व्यवच्छेदे विवक्षितान्यपरवाच्यव्यतिरिक्तं, गुणवृत्तेः= लक्षणातः कथं= केन प्रकारेण, भिद्यते= भिन्नो भवति ? यतः= यस्मात्, तस्य= ध्वनेः, प्रभेदद्वये= अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्यभेदयोः, गुणवृत्तिप्रभेदद्वयरूपता= गुणवृत्तेः= गौण्याः प्रभेदद्वयरूपता= प्रकारद्वयस्वरूपत्वं, लक्ष्यते= दृश्यते, एवेति।

यौ एव अविवक्षितवाच्यध्वनेर्भेदौ तावेव गुणवृत्तेरपीति तत्र तयोः कथ भेद इत्यनुयोगः।

एतत्परिहरति अयमित्यादिना— अयं= एषः पूर्वोक्तः, न, दोषः तत्र हेतुमाह यस्मात्= यतः, अविवक्षितवाच्यः, ध्वनिः, गुणवृत्तिमार्गाश्रयः= लक्षणापक्षाधारः, अपि, भवति, न= नैव, तु गुणवृत्तिरूपः= लक्षणास्वरूपः, एवेति। तथाभवेन हेतुं निर्दिशति= गुणवृत्तिः= गौणी लक्षणा हि= यतः, व्यञ्जकत्वशून्या= व्यञ्जनाशक्तिरहिता, अपि दृश्यते। यतः, व्यञ्जकत्वं= व्यञ्जनव्यापारः, च= अपि, यथोक्तचारुत्वहेतुं= यथाकथितसौन्दर्यकारणभूतं, व्यङ्ग्यं= प्रतीयमानार्थं, विना, न नैव, व्यतिष्ठते= सम्पद्यते। व्यङ्ग्यभावेनैव व्यञ्जकत्वं सिध्यति तच्च गौण्यां नैवापि भवति। यतः, गुणवृत्तिः, वाच्यधर्माश्रयेण= वाच्यस्य मुख्यार्थस्य यो धर्मो वाचकत्वं तस्याश्रयेणाधारेण, एव= इति व्यवच्छेदे, न तु तद्भिन्नधर्मत्वेन, व्यङ्ग्यमात्राश्रयेण= प्रतीयमानार्थमात्राधारेण, न तु चारुत्वपर्यवसायिव्यङ्ग्याश्रयेण, च= अपि, अभेदोपचाररूपा= अभेदस्य सादृश्यातिशयस्य य उपचार आरोप तद्रूपा, सम्भवति, गौणस्योदाहरणमाह यथा= इति निदर्शने, तीक्ष्णत्वाद् अग्निर्माणवकः आह्लादकत्वात् चन्द एवास्यसा ुखमित्यादौ। अत्र प्रथमे अग्निमाणवकयोः द्वितीये चन्द्रमुखयोः सादृश्यातिशयेन अभेदोपचार एव। यथा, च= अत्रापि, 'प्रिये जने नास्ति पुनरुक्तम्' इत्यादौ। अत्र प्रिय इति तीक्ष्णत्वादित्यादिवद् गुणरूपहेतुकथनं पुनरुक्तपदेनानुपादेयत्वं लक्ष्यत इति। एषु त्रिष्वेवोदाहरणेषु तीक्ष्णत्वाह्लादकत्वप्रियत्वगुणानामाधिक्यं व्यङ्ग्यं किन्तु तन्न चारुत्वकारी तस्याभिधेयार्थोपपादन एव पर्यवसानात्। लक्षणाया अपरमपि प्रकारं व्यञ्जकत्वशून्यं निदर्शयितुमाह यापीत्यादिना, अपि= च, लक्षणरूपा= लवणार्था, गुणवृत्तिः= लक्षणा, सा, अपि, उपलक्षणीयार्थसम्बन्धमात्राश्रयेण= लक्ष्यरूपार्थस्य सम्बन्धमात्राधारेण, चारुरूपव्यङ्ग्यप्रतीतिं= सौन्दर्यरूपं यद्व्यङ्ग्यं तस्य प्रतीतिरवभासनं, तां, विना, अपि, सम्भवति, एव। यथा 'मञ्चाः क्रोशन्ति' इत्यादौ, विषये। अत्र मञ्चशब्दस्य तत्स्थजनरूपलक्ष्येऽर्थे एव लक्षणलक्षणा न काऽपि चारुरूपव्यङ्ग्यप्रतीतिः। तस्य प्रयोजनञ्च बहुत्वबबोधनं व्यङ्ग्यं किन्तु तन्न चारुत्वकारि।

यथोक्तं लोचने चारुरूप विश्रान्तिस्थानं, तदभावे स व्यञ्जकत्वव्यापारो नैवो-न्मीलति, प्रत्यावृत्य वाच्ये एव विश्रान्ते: क्षणदृष्टनष्टदिव्यविभवप्राकृतपुरूष-वदिति। यत्र च न व्यङ्ग्य चारुत्वप्रतीतिहेतुस्तन्नैव व्यञ्जनाविषय इति स्थितम्।

प्रकरणस्यायमाशय:- विवक्षितान्यपरवाच्ये ध्वनौ तु वाच्यवाचकप्रतीति-पूर्वकमर्थान्तरप्रतीत्या नैव गुणवृत्तेरवकाश:। अविवक्षितवाच्ये तु व्यञ्जकत्व-गुणवृत्यो: समानावसरात् ध्वनिगुणवृत्यो: कथं भेद: सम्भवतीत्यनुयोग:। अत्रोच्यते अविवक्षितवाच्यो यो ध्वनि: स गुणवृत्ते: प्रभेदद्वये आश्रितो भवति न तु गुणवृत्तिरूप एव। गुणवृत्तिर्हि गौणलाक्षणिकरूपोभयी अपि चारुत्वपर्यवसायिव्यङ्ग्यशून्याऽपि भवति ध्वनिस्तु सदैव तादृश चारुत्वपर्यवसायिव्यङ्ग्यरूपैव। गुणवृत्तिस्तु वाचक-त्वाश्रयेणैव व्यङ्ग्यमाश्रित्य— तदपि वाच्यार्थोपवृंहणायैव, अभेदारोपरूपा भवति, यत्र गुणसाम्याधारेण पृथक्वस्तूनामभेदस्योपचार: क्रियते। यथा अग्निर्माणवक: 'इत्यत्र तीक्ष्णत्वादिति,' चन्द्र एवास्या मुखं इत्यत्र आह्लादकत्वादिति। यथा वा 'प्रिये जने नास्ति पुनरुक्तं' इत्यत्र प्रिय इति, एषु गुणानामाधिक्यमेव व्यङ्ग्यं तत्तु न चारुत्वकारि यतश्चारुत्वस्य तत्र विश्रान्त्यभावात् प्रत्यावृत्य वाच्ये एव विश्राम्यति। अतो नैष वयञ्जनाया: विषय:। अनेनोपादानलक्षणा व्याख्याता। या च लक्षणलक्षणा यथा 'मञ्चा: क्रोशन्ति' इत्यत्र लक्ष्यार्थसम्बन्धमात्राश्रयेण चारुत्वपर्यवसायिव्यङ्ग्यं विनाऽपि भवति। यथा तत्रैव मञ्चस्थजनानां बहुत्वादिकं व्यङ्ग्यं तदपि न किञ्चिदपि चारुत्वकारीति नाप्यसौ ध्वनेर्विषय:।

इस प्रकार व्यञ्जकत्व का वाचकोपजीवित्व एवं गौणकत्वानुजीविकत्व का युक्ति से प्रतिपादन कर अब अविवक्षित वाच्य में गुणवृत्ति एवं ध्वनि के भेद के विवेचन के लिए उपक्रम करते हैं—

और कोई कह सकता है- विवक्षितान्यपर वाच्य ध्वनि में गुणवृत्ति न होने की बात जो कहीं गई, वह तो ठीक है। क्योंकि जहाँ वाच्यवाचक की प्रतीति पूर्वक दूसरे अर्थ को प्रतिपत्ति है वहाँ गुणवृत्ति का व्यवहार हो भी कैसे ? न तो जब गुणवृत्ति में सामीप्य आदि किसी निमित्त से दूसरे अर्थ में अत्यन्त तिरस्कृत अर्थ वाला शब्द आरोपित किया जाता है, जैसे 'यह बालक अग्नि है' इत्यादि में अथवा जब शब्द अपने अर्थ को भी आंशिक रूप से न छोड़ता हुआ उसके सम्बन्ध से दूसरे अर्थ पर आक्रान्त होता जैसे 'गङ्गा में घोंसला' आदि में, वहाँ अविवक्षित वाच्यत्व उत्पन्न ही होता है। इस हेतु भी विवक्षितान्यपरवाच्य ध्वनि में वाच्य एवं वाचक दोनों की भी स्वरूप की प्रतीति एवं अर्थ के अवगमन के भी दिखाई पड़ने से व्यञ्जकत्व का व्यवहार युक्ति अर्थात् तर्क के अनुकूल है। अपने को भी प्रकाशन करता हुआ दूसरे का भी प्रकाशक जो है वह व्यञ्जक कहा जाता है (जैसे दीप। उस प्रकार के विषय में वाचकत्व को ही व्यञ्जकत्व होने से नियम ही गुणवृत्ति का व्यवहार किया नहीं जा सकता। लेकिन अविवक्षित वाच्य ध्वनि जो है वह गुणवृत्ति से कैसे भिन्न हो सकती है ? क्योंकि उसके अर्थान्तर सङ्क्रमित एवं अत्यन्त

तिरस्कृत दोनों प्रभेदों में गुणवृत्ति उपादानलक्षणा एवं लक्षणलक्षणा दोनों भेदों की सरूपता दिखाई पड़ती है।

उत्तर है- यह कोई दोष नहीं है। क्योंकि अविवक्षित वाच्य ध्वनि गुणवृत्ति के प्रभेदों का आश्रय तो लेती है, लेकिन गुणवृत्ति रूप नहीं है। गुणवृत्ति जो है वह व्यञ्जकत्व से शून्य भी दिखाई देती है। व्यञ्जकत्व जो है वह भी बताए गए चारुत्व से युक्त व्यङ्ग्य अर्थात् चारुत्व पर्यवसायी व्यङ्ग्य के बिना बन नहीं सकता। गुणवृत्ति तो वाचकत्व के आश्रय से ही व्यङ्ग्य मात्र का न कि चारुत्व पर्यवसायी व्यङ्ग्य का, आश्रय लेकर अभेद के उपचार के रूप वाली हो सकती है। जैसे (तीक्ष्ण होने से) बालक अग्नि है, (आह्लादक होने से) इसका मुख चन्द्र ही है इत्यादि में। और जैसे (प्रिय) जन में पुनरुक्त नहीं होता इत्यादि में।

(इन तीनों में गुणों का आधिक्य व्यङ्ग्य तो है पर उसमें कोई चारुत्व नहीं निकलता, क्योंकि उसके चारुत्व विश्रान्तिस्थल न होने से चारुत्व वाच्यार्थ की ओर ही लौट जाता है।)

जो यह लक्षण रूप गुणवृत्ति है वह भी लक्ष्यार्थ के सम्बन्ध के मात्र आश्रय में चारु रूप व्यङ्ग्य की प्रतीति के बिना ही हो जाती है। जैसे-मञ्च शोर मचाते हैं, इत्यादि विषय में। (यहाँ भी मञ्चस्थ जनों का बाहुल्य रूप व्यङ्ग्य तो है पर उसमे चारुत्व का अंश भी नहीं है।)

ध्वन्या०— यत्र तु सा चारुरूपव्यङ्ग्यप्रतीतिहेतुस्तत्रापि व्यञ्जकत्वानुप्रवेशेनैव वाचकत्ववत्। असम्भविना चार्थेन यत्र व्यवहारः, यथा 'सुवर्णपुष्पां पृथिवीम्' इत्यादौ तत्र चारुरूपव्यङ्ग्यप्रतीतिरेव प्रयोजिकेति तथाविधेऽपि विषये गुणवृत्तौ सत्यामपि ध्वनिव्यवहार एव युक्त्यनुरोधी। तस्मादविवक्षितवाच्ये ध्वनौ द्वयोरपि प्रभेदयोर्व्यञ्जकत्वविशेषविशिष्टा गुणवृत्तिर्न तु तदेवरूपा सहृदयाह्लादिनी प्रतीयमाना प्रतीतिहेतुत्वाविषयान्तरे तद्रूपशून्याया दर्शनात्। एतच्च सर्वं प्राक्सूचितमपि स्फुटतरप्रतिपत्तये पुनरुक्तम्।

लीला— लक्षणलक्षणयाा इत्थं ध्वनेः पृथक्त्वं निरूप्य सम्प्रति तमेवार्थं पुनरवस्थान्तरेऽपि निर्णेतुमुपक्रमते यत्रेत्यादिना यत्र= यस्मिन् वाक्ये, तु= पूर्वोक्त व्यतिरिक्तं, सा= लक्षणलक्षणा, चारुत्वरूपव्यङ्ग्यप्रतीतिहेतुः= चारुत्वपर्यवसायिव्यङ्ग्यावभासनकारणं, तत्र= तादृशे वाक्ये, अपि, व्यञ्जकत्वानुप्रवेशेन= व्यञ्जनाबलेन, एव= इत्यवधारणे, न तु आत्मबलेन, वाचकत्ववत्= अभिधावदिति। यत्र, च, असम्भविना= बाधितेन, अर्थेन च, व्यवहारः= शब्दप्रयोगः, यथा= इति निदर्शने, 'सुवर्णपुष्पां पृथिवीम्' इत्यादौ, तत्र= तादृशे वाक्ये, चारुरूपव्यङ्ग्यप्रतीतिः= चारुत्वपर्यवसायिव्यङ्ग्याभासनं, एव, प्रयोजिका= प्रेरिका, इति= हेतोः, तथाविधे= तादृशे, अपि, विषये= लक्ष्ये, गुणवृतौ= लक्षणायां,

सत्यां= विद्यमानायां, अपि, ध्वनिव्यवहारः= ध्वनिविषयत्वेन व्यवहरणं, एव= इत्यवधारणे न तु लक्षणा ,वृत्तिविषयत्वेन, युक्त्यनुरोधी= तर्कानुकूलम्। प्रकरणमुपसंहरति तस्मादित्यादिना तस्मात्= ततः, अविवक्षितवाच्ये= वाच्यस्य अविवक्षितत्वेन, सम्पन्ने, ध्वनौ, द्वयोः उभयोः, अपि, प्रभेदयोः= प्रकारयोः, व्यञ्जकत्वविशेषाविशिष्टा= व्यञ्जनव्यापारविशेषेण अविशिष्टा अविद्यमानविशिष्टरूपा, व्यञ्जकत्वलक्षणो यो विशेषस्तेन अविशिष्टा 'व्यञ्जकत्वं' न तस्याः भेद इति। गुणवृत्तिः= लक्षणा, न= नैव, तु, तदेकरूपा= तेन व्यञ्जकत्वलक्षणेन सह एकं रूपं यस्याः सा तादृशी, तत्र हेतुं निर्दिशति सहृदयहृदयाह्लादिप्रतीयमानाप्रतीतिहेतुत्वात्= सहृदयहृदयाह्लादी रसिकमनोरञ्जनशीलो यः प्रतीयमानो व्यङ्ग्योऽर्थस्तस्य अप्रतीतिहेतुत्वात्, अप्रत्यायकत्वात्, विषयान्तरे= इतरविषये, यथा 'अग्निर्वटुः' इत्यादौ, तद्रूपशून्यायाः= व्यञ्जकत्वरूपरहितायाः, दर्शनात्। एतत्, सर्व= निखिलमेव च, प्राक्= पूर्व प्रथमोद्योते, सूचितं= प्रतिपादितं, अपि, स्फुटतरप्रतीतये= स्पष्टरूपेणावभासनाय, पुनः= आवृत्य, उक्तम्= कथितमिति।

अत्रेत्थमुक्तं भवति— यत्र लक्षणलत्रणा नैव चारुत्वप्रतीतिहेतुस्तत्र तु सा ध्वनेः पृथगेव। यत्रापि सा चारुत्वपर्यवसायिव्यङ्ग्यप्रतीतिहेतुस्तत्रापि तथा व्यञ्जनाबलादेवेति अभिधावदेव। यत्र च असम्भविनाऽर्थेन व्यवहारस्तत्रापि चारुत्वपर्यवसायिव्यङ्ग्यप्रतीतिरेव प्रेरिकेति गुणवृत्तिस्थलेऽपि ध्वनिव्यवहार एव। तेनाविवक्षितवाच्ये ध्वनावपि गुणवृत्तिः व्यञ्जकत्वलक्षणविशेशेण अविशिष्टा एव न तु व्यञ्जकत्वैकरूपा तस्याः सहृदयाह्लादकप्रतीयमानार्थस्य प्रतीतेरहेतुत्वाद् विषयान्तरे 'अग्नर्माणवकः' इत्यादौ, वयञ्जकत्वरूपशून्यत्वात् चेति।

लक्षणलक्षणा की दूसरी अवस्था में भी उसकी ओर ध्वनि की भिन्नता दर्शाने के लिए उपक्रम करते हैं—

जहाँ वह चारुत्व पर्यवसायी व्यङ्ग्य की प्रतीति का कारण है, वहाँ भी व्यञ्जना के बल से ही है अभिधा की तरह। और जहाँ असम्भव अर्थ से व्यवहार होता है— जैसे 'सुवर्णपुष्पां पृथिवीं' आदि में, वहाँ चारु रूप व्यङ्ग्य की प्रतीति का ही प्रयोजकत्व होने से उस प्रकार के विषय में गुणवृत्ति होने पर भी ध्वनि व्यवहार ही तर्क के अनुकूल होगा। इस कारण अविवक्षित वाच्य ध्वनि में दोनों भेदों में भी गुणवृत्ति व्यञ्जकत्व विशेष से अविशिष्ट ही है न कि व्यञ्जकत्व से एक रूप वाली क्योंकि उस में सहृदयों के हृदय का आह्लाद कर पाने वाला जो प्रतीयमान अर्थ है, उसकी प्रतीति का कारण नहीं हो सकता और दूसरे विषयों में भी वह व्यञ्जकत्व के रूप से शून्य पाई जाती है। यह सब जो है पहले सूचित किया हुआ भी स्पष्ट प्रतीति के लिए फिर कहा गया।

**ध्वन्या०— अपि च व्यञ्जकत्वलक्षणो यः शब्दार्थयोर्धर्मः स प्रसिद्धसम्बन्धानुरोधीति न कस्यचिद्विमतिविषयतामर्हति। शब्दार्थयोर्हि प्रसिद्धो**

यः सम्बन्धो वाच्यवाचकभावाख्यस्तमनुसन्दधान एव व्यञ्जकत्वलक्षणो व्यापारः सामग्र्यन्तरसम्बन्धादौपाधिकः प्रवर्तते। अत एव वाचकत्वात्तस्य विशेषः। वाचकत्वं हि शब्दविशेषस्य नियत आत्मा व्युत्पत्तिकालादारभ्य तदविनाभावेन तस्य प्रसिद्धत्वात्। स त्वनियत औपाधिकत्वात् प्रकरणाद्यवच्छेदेन तस्य प्रतीतेरितरथा त्वप्रतीतेः।

ननु यद्यनियतस्तत्किं तस्य स्वरूपपरीक्षया। नैष दोषः, यतः शब्दात्मनि तस्यानियतत्वम्, न तु स्वे विषये व्यङ्ग्यलक्षणे।

लिङ्गत्वन्यायश्चास्य व्यंग्यव्यञ्जकभावस्य लक्ष्यते, यथा लिङ्गत्वमाश्रयेष्वनियतावभासम्, इच्छाधीनत्वात्, स्वविषयाव्यभिचारि च। तथैवेदं यथा दर्शितं व्यञ्जकत्वम्। शब्दात्मन्यनियतत्वादेव च तस्य वाचकत्वप्रकारता न शक्या कलपयितुम्। यदि हि वाचकत्वप्रकारता तस्य भवेत्तच्छब्दात्मनि नियततापि स्याद्वाचकत्ववत्।

स च तथाविध औपाधिको धर्मः शब्दानामौत्पत्तिकशब्दार्थ– सम्बन्धवादिना वाक्यतत्त्ववदिता पौरुषेयापौरुषेययोर्वाक्ययोर्विशेषमभिदधता नियमेनाभ्युपन्तव्यः तदनभ्युपगमे हि तस्य शब्दार्थसम्बन्धनित्यत्वेसत्यप्यपौरुषेयपौरुषेयोर्वाक्ययोरर्थप्रतिपादने निर्विशेषत्वं स्यात्। तदभ्युपगमे तु पौरुषेयाणां वाक्यानां पुरुषेच्छानुविधानसमारोपितौपाधिकव्यापारान्तराणां सत्यपि स्वाभिधेयसम्बन्धापरित्यागे मित्यार्थतापि भवेत्।

लीला— इत्थं गुणवृत्तेः ध्वनेभिन्नतां निरूप्य सम्प्रति नियतौपाधिकत्वमुखेन वाच्यवाचकत्वव्यञ्जकत्वभेदनिरूपणायोपक्रमते अपीत्यादिनाअपि च= इदमपि यद्, शब्दार्थयोः= शब्दस्य वाचकस्य अर्थस्य वाच्यस्य च तयोः, यः व्यञ्जकत्वलक्षणः= व्यञ्जनव्यापारात्मकः, धर्मः= स्वभावः, सः= प्रसिद्धसम्बन्धानुरोधी= प्रसिद्धो यः सम्बन्धः वाच्यवाचकभावस्तमनुरुणद्धि अनुगच्छति तच्छील इति तादृशः, भवति, इति, कस्यचित्= कस्यापि, विमतिविषयतां= वैमत्याय, न, आर्हतिअपितु सर्वसम्मत एवैष विषय इति। तथैव, शब्दाथीः यः प्रसिद्धः, वाच्यवाचकभावाख्यः= तत्तत्संज्ञितः सम्बन्धः, तं= तादृशं सम्बन्धं, अनुरुन्धानः= उपजीव्यत्वेनाश्रयमाणः, एव, व्यञ्जकत्वलक्षणः= व्यञ्जनधर्मः, व्यापारः= क्रिया, सामान्यन्तरसम्बन्धात्= प्रकरणादेर्मुख्यसामग्र्याः सन्निधानात्, औपाधिकः= उपाधिनिमित्तकः, प्रवर्तते= प्रवृत्तो भवति। अत एव= अनेनैव हेतुना, तस्य= व्यञ्जकत्वस्य, वाचकत्वात्= वाचकधर्मात्, विशेषः= वैशिष्ट्यं पार्थक्यमिति। तदेव विवृणोति— वाचकत्वं= वाचकधर्मः, हि= इत्यवधारणे, शब्दविशेषस्य= निर्दिष्टशब्दस्य, नियतः= निश्चितः, आत्मा,= स्वभावः, व्युत्पत्तिकालात्= सङ्केतकालाद्

आरभ्य= तदविनाभावेन= तस्य शब्दस्य अविनाभावेन विनाभावाभावेन सहितत्वेन, तस्य= वाचकत्वस्य, प्रसिद्धत्वात्= ख्यातत्वात्। तद्विपरीतं, सः= व्यञ्जकव्यापारः, तु= इति व्यवच्छेदे, अनियतः= अनिश्चितः, औपाधिकत्वात्= अन्यावान्तरसामग्रीविवक्षिततत्वात्। तस्यौपाधिकत्वे हेतुमाह= प्रकरणाद्यवच्छेदेन= प्रकरणादिसहकारेण, तस्य= व्यञ्जकत्वस्य, प्रतीतेः= अवभासनात्, इतरथा= प्रकरणादिसामग्र्यभावे, तु= इति व्यवच्छेदे, अप्रतीतेः= अनवभासनात्। अयमाशयः— वाचकत्वं सङ्केतितशब्दस्य नियतो धर्मः सङ्केतकालादेव शब्दाविनाभावेन वाचकत्वस्य नैव प्रतीतिः किन्तु व्यञ्जकत्वव्यापारस्तु अनियत औपाधिकत्वात्—प्रकरणादिसामग्रीसहकारे एव तस्य प्रतीतेरिति।

ननु= इति प्रश्ने, यदि, अनियतः= अनिश्चितः तद्= तदा, तस्य= तादृशस्थानियतस्य व्यञ्जकत्वस्य, परीक्षया= विवेचनेन, किमित्यनुयोगः। तत्परिहरति एषः= व्यञ्जकत्वस्यानियतस्वभावः, दोषः, नेति। तथा भवने हेतुमाह— यतः= यस्मात्, शब्दात्मनि= शब्दस्वभावे, सङ्केतास्पदे तस्य= व्यञ्जकत्वस्य, अनियतत्वं= अनिश्चितत्वं, व्यङ्ग्यलक्षणे= प्रतीयमानार्थस्वरूपे, स्वे, विषये= लक्ष्ये तु, नेति, यस्य यस्य यो व्यङ्ग्योऽर्थो विद्यत तस्य तस्य व्यञ्जकत्वमिति एवमर्थविषये व्यञ्जकत्वस्यापि नियतत्वमस्त्येवेति भावः अत्र दृष्टान्तमाह अस्य= प्रकरणगतस्य, व्यञ्जकभावस्य, लिङ्गत्वन्यायः= लीनं प्रत्यक्षाद्यविषयं व्याप्तिज्ञानपरामर्शाभ्यां गमयति बेदयतीति लिङ्गत्वं वह्न्यादिज्ञापकत्वं, तस्य न्यायः। लिङ्गत्वसाम्यं, लक्ष्यते= दृश्यते, यथा, आश्रयेषु= आश्रयभूतेषु धूमादिषु, लिङ्गत्वं= वह्न्यदिज्ञापकत्वं, अनियताभासं= असदातनं— अन्यगमकत्वस्य कदाचिद्वह्निगमकत्वाभावस्य च दर्शनात्, इच्छाधीनत्वात्= अनिवार्यताऽभावात् (इच्छा पक्षधर्मजिज्ञासा व्याप्यस्य पक्षवृतित्वजिज्ञासा) व्याप्तिसुस्मूर्षा (हेतौ साध्यस्य या व्याप्तिस्तत्स्मरणेच्छा) तस्याः अधीनत्वात् स्वविषयाव्यभिचारि= स्वस्मिन् स्वसम्बन्धिनि विषये लिङ्गे लिङ्गे साध्ये च पक्षसत्वसपक्षसत्वविपक्षासत्वरूपादौ गृहीते सति ज्ञापकत्वस्य विषये ज्ञाप्ये न व्यभिचरति तच्छालइति। तथैव= तद्वदेव, यथा, व्यञ्जकत्वं, दर्शितं= प्रतिपादितमिति। शब्दात्मनि=सङ्केतास्पदे पदस्वरूपमात्रे, अनियतत्वात्= अनिश्चितत्वात्, एवं, च= अपि, तस्य= व्यञ्जकत्वस्य, वाचकत्वप्रकारता= वाचकधर्मस्वरूपता, कथयितु= चिन्तयितुं, न, शक्या= पार्या। हि= यतः= यदि, तस्य= व्यञ्जकत्वस्य, वाचकत्वप्रकारता= वाचकधर्मस्वरूपता, भवेत्, तद्, शब्दात्मनि= सङ्केतास्पदे, वाचकत्ववत्= वाचकधर्मवत्, नियतता= निश्चितता, अपि= च, स्यात्= भवेदेव। सः= व्यञ्जकत्वलक्षणः, तथाविधः= तादृशो वाचकत्वविलक्षणः, औपाधिकः= प्रकरणादिसामग्र्यवगम्यः, अत एव अनियतः, च, शब्दानां, धर्मः= स्वभावः, औत्पत्तिकशब्दार्थवादिना= नित्यशब्दा-

र्थसम्बन्धप-क्षपातिना-औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः इति जैमिनीयमताव-लम्बिनां, वाक्यतत्त्वविदा= वाक्ये शक्तिं, मन्यमानेन, पौरुषेयापौरुषेययोः= पौरूषेयं पुरुषकृतं लौकिकं अपौरुषेय तद्भिन्नं वेदलक्षणं तयोः, वाक्ययोः= पूर्णार्थकप-दसमूहयोः, विशेषं= अन्तरं, वैलक्षण्यं, अभिदधता= कथयता मीमांसकेन, नियमेन= नियतरूपेण अभ्युपगन्तव्यः= ऊररीकर्तव्यः, तदनभ्युपगमे= तस्य औपाधिकधर्मस्य अनभ्युपगमे= अस्वीकरणे, हि= यतः, यस्य= मीमांसकस्य, शब्दार्थसम्बन्धनित्यत्वे= शब्दार्थयोः सम्बन्धस्य औत्पत्तिकत्वेन नित्यत्वस्वीकरणे, सति, अपि, अपौरुषेयपौरूषेययोः= पुरुषाकृतकृतयोः, वाक्ययोः, प्रतिपादने= निरूपणे, निर्विशेषत्वं= भेदरहितत्वं, स्यात्। तदभ्युपगमे= तत्स्वीकरणे, तु= इति तद्विपरीत, पौरुषेयाणां= पुरुषकृतानां, पुरुषेच्छानुविधानसमारोपितौपाधिक-व्यापारान्तराणां= पुरुषस्य निर्मातुः इच्छायास्तात्पर्यस्य अनुविधानेन अनुसरणेन समारोपितं संस्थापितं औपाधिकं सामग्र्यन्तरसम्पाद्यं व्यापारान्तर शक्त्यन्तरं येषु तानि, तेषां, वाक्यानां स्वाभिधेयसम्बन्धापरित्यागे= स्ववाच्यवाचकत्व-त्यागाभावे सति, अपि, मिथ्याऽर्थता= असत्यार्थता, अपि, भवेत्।

कथनस्यास्यायमाशयः— शब्दार्थयोः प्रसिद्धः वाच्यवाचकसम्बन्धस्तु नियतो भवति किन्तु तमनुसरन्नपि व्यञ्जनव्यापारः प्रकरणादिसामग्र्यन्तरणेन निर्देश्यत्वादौपाधिक एव भवति। इदमेव तस्य वाचकत्वाद्वैलक्षण्यम्। किन्तु तस्यानियतत्वं शब्दात्मन्येव भवति व्यङ्ग्यलक्षणे स्वविषये तु तस्य नियतत्वमेव। यस्य यस्य व्यञ्जकोऽर्थो विद्यते तस्य तस्य व्यञ्जकत्वमिति। अस्यापि लिङ्गत्व-न्यायः प्रवर्तते। लिङ्गत्वञ्च आश्रयेषु अनियताभासमेवेच्छाधीनत्वात्। आश्रयभूते शब्दात्मनि अनियतत्वादेव न व्यञ्जकत्वस्य वाचकत्वप्रकारता। तस्य औपाधि-कत्वञ्च शब्दनित्यत्वादिना इतरापेक्षया विशेषेण स्वीकर्तव्यः, अन्यथा तस्य पौरुषेयापौरूषेयवाक्यकल्पनैव निर्विशेष स्यात्। व्यञ्जनाभ्युपगमे एव पौरुषेय-वाक्यस्य तात्पर्याधीनत्वं सम्मतं भवति। इति।

अब दूसरे भी प्रकार से अर्थात् नियतत्व एवं औपाधिकत्व भेद से वाच्य वाचकत्व एवं व्यञ्जकत्व का भेद करने के लिए प्रकरण उठाते हैं—

यह भी कि शब्द एवं अर्थ का जो व्यञ्जकत्व धर्म का अनुसारी रहने की बात पर किसी की भी असहमति वा भ्रम हो नहीं सकता। शब्द एवं अर्थ का जो प्रसिद्ध वाच्यवाचक धर्म है उसका अनुसरण करता हुआ ही व्यञ्जकत्व लक्षण वाला शब्दार्थ का व्यापार दूसरे सामग्रियों के (प्रकरण आदि) सम्बन्ध से औपाधिक होकर प्रवृत्त होता है। इसी कारण वाचकत्व से व्यञ्जकत्व की विलक्षणता है। वाचकत्व शब्द विशेष (सङ्केतित शब्द) का नियत स्वभाव है, व्युत्पत्ति काल (सङ्केत काल) से ही शब्द के अविनाभाव से उसकी प्रसिद्धि होने से। वह (व्यञ्जकत्व व्यापार) तो औपाधिक होने से अनियत होता है। प्रकरण आदि से अवच्छिन्न होने पर उसकी प्रतीति होती है अन्यथा नहीं।

यदि वह अनियत ही है, तो फिर उसके स्वरूप की परीक्षा करने से क्या लाभ- जैसा होना है हो जाय क्योंकि उसका नियत स्वरूप तो है नहीं कि ऐसा ही उसे होना चाहिए कह कर कहा जाय ?

यह कोई दोष नहीं है क्योंकि सङ्केतित शब्द में ही उसका अनियतत्व है व्यङ्ग्य रूप उसके अपने विषय में नहीं। इस व्यञ्जक भाव का लिङ्गत्वन्याय भी प्रवर्तित है जैसे लिङ्गत्व जो है वह आश्रयों में अनियत रूप से अवभासन है, क्योंकि वह इच्छाधीन होता है, अपने विषय में व्यभिचारी भी नहीं होता। उसी प्रकार व्यञ्जकत्व भी दर्शाया गया है। सङ्केतित शब्द के प्रति अनियतता होने से ही उसकी वाचकत्व प्रकारता की कल्पना भी नहीं की जा सकती। यदि उस में वाचकत्व की प्रकारता होगी तो वह सङ्केतित शब्द मे वाचकत्व की तरह नियत हो जाता। वह उस प्रकार का, शब्दों का औपाधिक धर्म नित्य शब्दार्थसम्बन्धवादी वाक्य में शक्ति मानने वाले पौरुषेय तथा अपौरुषेय वाक्यों में विशेष अन्तर बताने वाले मीमांसकों को तो नियम से ही स्वीकार कर लेना चाहिए। क्योंकि उस (व्यञ्जना) के अस्वीकार करने से उस (मीमांसक) का शब्द एवं अर्थ का सम्बन्ध नित्य होने पर पौरुषेय एवं अपौरुषेय वाक्यों के अर्थ प्रतिपादन में कोई अन्तर नहीं आएगा। इस (व्यञ्जना) के स्वीकार कर लेने पर तो पौरुषेय तथा पुरुष (कर्ता) को इच्छा के अनुसार समारोपित औपाधिक व्यापारान्तर वाले वाक्यों के रहने पर अपने अभिधेय सम्बन्ध के अपरित्याग में मिथ्यार्थता भी हो जाय।

आशय यह है कि व्यञ्जकत्व की औपाधिकता होने से अनियत होने की बात औरों से ज्यादा मीमांसकों को मानना पड़ेगा। मीमांसक शब्द एवं अर्थ का सम्बन्ध औत्पत्तिक (नित्य) मानते हैं और वाक्य में शक्ति। उनके अनुसार वाक्य दो होते हैं पौरुषेय (लौकिक) एवं अपौरुषेय (वेद का)। यदि वे व्यञ्जना को स्वीकार नहीं करेंगे तो पौरुषेय एवं अपौरुषेय वाक्यों की अर्थ प्रतीति में भेद कैसे करेंगे। उसके मानने पर भी पौरुषेय वाक्य का मिथ्यात्व अर्थात् औपाधिक तथा अपौरुषेय वाक्य का नित्यत्व सिद्ध हो पाएगा।

ध्वन्या०— दृश्यते हि भावानामपरित्यक्तस्वभावानामपि सामग्र्यन्तर-सम्पातसम्पादितौपाधिकव्यापारान्तराणां विरुद्धक्रियत्वम्। तथाहिहिमम-यूखप्रभृतीनां निर्वापितसकलजीवलोकं शीतलत्वमुद्वहतामेव प्रियाविरहद-हनदह्यमानमानसैर्जनैरालोक्यमानानां सतां सन्तापकारित्वं प्रसिद्धमेव। तस्मात् पौरुषेयाणां वाक्यानां सत्यपि नैसर्गिकेऽर्थसम्बन्धे मिथ्यार्थत्वं समर्थयितुमिच्छता वाचकत्वव्यतिरिक्तं किञ्चिद्रूपमौपाधिकं व्यक्तमेवाभि-धानीयम्। तच्च व्यञ्जकत्वादृते नान्यत्। व्यङ्ग्यप्रकाशनं हि व्यञ्जकत्वम्। पौरुषेयाणि च वाक्यानि प्राधान्येन पुरुषाभिप्रायमेव प्रकाशयन्ति। स च व्यङ्ग्य एव नत्वभिधेयः, तेन सहाभिधानस्य वाच्यवाचकभावलक्षणसम्ब-न्धाभावात्।

नन्वनेन न्यायेन सर्वेषामेव लौकिकानां वाक्यानां ध्वनिव्यवहारः प्रसक्तः। सर्वेषामप्यनेन न्यायेन व्यञ्जकत्वात्। सत्यमेतत्, किन्तु वक्त्रभि-प्रायप्रकाशनेन यद् व्यञ्जकत्वं तत्सर्वेषामेव लौकिकानां वाक्यानामवि-षिष्टम्। तत्तु वाचकत्वान्न भिद्यते व्यङ्ग्यं हि तत्र नान्तरीयकतया व्यव-स्थितम्। नतु विवक्षितत्वेन। यस्य तु विवक्षितत्वेन व्यङ्ग्यस्य स्थितिः तद्व्यञ्जकत्वं ध्वनिव्यवहारस्य प्रयोजकम्।

लीला— तथाविधौपाधिकधर्माभ्युपगमेऽपि शब्दस्य प्रकाशकत्वलक्षणस्वध-र्मात्यागं कथं मित्यार्थता इत्याशङ्कानिरासाय प्रकरणमारभते दृश्यते इत्यादिना= अपरित्यक्तस्वस्वभावानां= अनुज्झितनिजनियतधर्माणां, अपि सामग्र्यन्तरसम्पात-सम्पादितौपाधिकव्यापारान्तराणां= अन्यविधसामग्रोप्रत्यासत्या साधितौपाधिकान्य-क्रियाणां, भावानां= पदार्थानां, विरुद्धक्रियत्वं= विपरीतव्यापारत्वं, दृश्यत= विलोक्यते, हि। तथा हि= इति निदर्शने, निर्वापितसकलजीवलोकं= निर्वापितो निर्वृत्तीकृतः सकलः समग्रो जीवलोको येन तादृशं, शीतलत्वं= शैत्यं, उद्वहतां= धारयतां, हिममयूखप्रभृतीनां= चन्द्रकिरणनलिनीदलादीनां, एव, प्रियाविरहदहन-दह्यमानमानसैः= प्रेयसीवियोगानलसन्तप्यमान— हृदयैः, जनैः, आलोक्यमानानां= निरीक्ष्यमाणानां, सतां, सन्तापकारित्वं= तापकारणत्वं, प्रसिद्धं= ख्यातमेव। यथोक्तं शाकुन्तले 'विसृजति हिमगर्भैरग्नि मिन्दुर्मयूखैः' इति। निदर्शनं प्रकृते योजयति तस्मादित्यादिना- तस्मात्= तेन हेतुना, पौरूषेयाणां= पुरूषकृतानां लौकिकानां, वाक्यानां= पूर्णार्थकपदसमूहानां, नैसर्गिके= स्वाभाविके, अर्थसम्बन्धे= अर्था-भियोगे, सति= विद्यमाने, अपि, मिथ्यार्थत्वं= अयथार्थत्वमर्थात् तात्पर्यार्थत्वं, समर्थयितुं= अङ्गीकर्तुम्, इच्छता= बाञ्छता, वाचकत्वव्यतिरिक्तं= वाचकत्वभिन्नं, किञ्चित्= स्वल्पमपि, औपाधिकं= असङ्केतितं, रूपं= अर्थ व्यक्तं= प्रकटितं, एव, अभिधानीयं= कथनीयमिति। तत्= औपाधिकत्वं, च, व्यञ्जकत्वात्= व्यञ्जकत्वव्यापाराद, ऋते= विहाय, अन्यत्= इतरत्, न,= अपितु व्यञ्जकत्वमेव। व्यञ्जकत्वं, हि= नाम, ?, व्यङ्ग्यप्रकाशकत्वं= सङ्केतितार्थतत्सम्बद्धार्थव्यतिरिक्त-प्रतीयमानार्थरूपव्यङ्ग्यस्य द्योतकत्वमेव। पौरुषेयाणि= पुरुषकृतानि, वाक्यानि, च, प्राधान्येन= मुख्यतया- 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः, न त्वेवमयमर्थ इति, पुरुषाभिप्रायं पुरुषतात्पर्य, एव, प्रकाशयन्ति= द्योतयन्ति न तु याथार्थ्यमपि। सः= तादृशोऽर्थः, तु, व्यङ्ग्यः= प्रतीयमानः, एव, न, तु, अभिधेयः= सङ्केतितो नियत इति। तत्र तथाभवने, हेतुमाह—तेन= प्रतीयमानेनार्थेन, सह, अभिधानस्य= शब्दस्य, वाच्यवाचकलक्षणसम्बन्धाभावात्= वाच्यवाचकस्वरूपसम्बन्धस्य विर-हात् इति। तत्र पूर्वपक्षस्य सम्भवाक्षेपमुत्थापयति नन्वित्यादिना ननु= इति प्रत्युक्तौ, अनेन पूर्वोक्तेन, पुरूषाभिप्रायो व्यङ्ग्य इति कथितेन, न्यायेन= मार्गेण सर्वेषां=

निखिलानां, एव, लौकिकानां= वेदवाह्यानां, ध्वनिव्यवहारः= ध्वनित्वव्यपदेशः, प्रसक्तः= आपतितः, अनेन= ईदृशेन, न्यायेन, सर्वेषामेव वाक्यानां, व्यञ्जकत्वात्= प्रतीयमानार्थप्रकाशकत्वसिद्धेरिति।

तत्परिहरति— एतत्= पूर्वोक्तवचनं, सत्यं= यथार्थमेव। किन्तु= इति विरोधोक्तौ, तथाभूते सत्यपि, वक्त्रभिप्रायप्रकाशनेन= वक्तुः कथयितुः सोऽभिप्राय आशयस्तस्य प्रकाशनेन द्योतनेन, यद्, व्यञ्जकत्वं= व्यङ्ग्यप्रकाशकत्व, तत्, सर्वेषां= निखिलानां, एव, लौकिकवाक्यानां= पुरूषकृतवाक्यानां, वेदनाह्यानाम् अविशिष्टं= समानमेव। तत्= तादृशं व्यञ्जकत्वं, तु= इति व्यवच्छेदे, वाचकत्वात् रन भिद्यते= पृथग्भवति तत्रायमेव हेतुर्यद्, हि= यतः, तत्र= तादृशे स्थले, व्यङ्ग्यं= प्रतीयमानरूपोऽर्थः, नान्तरीयकतया= अविनाभूतत्वेन, व्यवस्थितं न= नैव, तु, विवक्षितत्वेन= प्राधान्येनेति। यथा गामानयेति श्रुतेऽपि क्षीरग्रहणाद्यर्थकगवानयनाभिप्राये व्यक्तेऽपि गोकर्मकानयनादिक्रियारूपार्थ विनाऽभिप्रायासिद्धिरतश्च न वाचकत्वात्पृथग्व्यञ्जकत्वं तत्रेति लोचनस्याशयो बालप्रियायाम्)। तद्विपरीतं, यस्य= ध्वन्युदाहरणादेः, विवक्षितेन= प्राधान्येन, व्यङ्ग्यस्य= प्रतीयमानार्थस्य, स्थितिः= अवस्थानं तत्= तादृशं, व्यञ्जकत्वं, ध्वनिव्यवहारस्य, प्रयोजकं= प्रेरकमिति।

कथनस्यास्यायमाशयः= स्वाभिधेयसन्बन्धापरित्यागे मिथ्यार्थत्वं न भवतीति नैव कथनीयं यतः सामग्र्यन्तरप्रतिपादितव्यापारान्तराणामपरित्यक्तस्वभावानामपि भावानां विपरीतव्यापारत्वं सम्भवति यथा विरहिणां चन्द्रकिरणैः दहनं, नलिनीदलेन शरीरदाह इति। तथैव पौरूषेयवाक्यानामपि स्वभिधेयसम्बन्धात्यागेऽपि मिथ्यार्थत्वम्। तच्च व्यञ्जकत्वमेव यतो वयङ्ग्यप्रकाशनत्वमेव तस्य लक्षणात्। पौरुषेयवाक्यानां विषयो वक्त्रभिप्रायप्रकाशनमेव यद्व्यङ्ग्यमेव तस्य वाच्यवाचकत्वलक्षणसम्बन्धविरहात्। अनेन तु सर्वेषामेव लौकिकवाक्यानां व्यञ्जकत्वं सिद्ध्यति किन्तु तद्वक्त्रभिप्रायमात्रेण एव न तु यथार्थेन तत्र तस्य वाचकत्वेन सह अविनाभावेनावस्थितेः न तु प्रधानत्वेन यथां गामानयेति श्रुतेविदिते च दोहनाभिप्राये गवानयनं विना तस्यासिद्धेः दोहनरूपव्यङ्ग्यं वाच्याधीनमेव। यत्रैव प्राधान्येन व्यङ्ग्यस्य स्थितिस्तत्रैव ध्वनिव्यवहार इति पूर्वोदाहरणेषु सिद्धमेवेति।

उस प्रकार के औपाधिक धर्म का अभ्युपगम होने पर शब्द का प्रकाशकत्व लक्षण रूप स्वधर्म के न छोड़ने पर कैसे मिथ्यार्थता की प्रतीति होती है ? इस आशङ्का के निवारण के लिए कहते हैं—

अपने स्वभाव को न छोड़ने वाले भी दूसरी सामग्री के सम्पात से सम्पादित औपाधिक रूप दूसरे व्यापार वाले भावों की विपरीत क्रियायें भी देखी गई हैं। जैसे कि सम्पूर्ण लोक को आनन्दित कर पाने वाली शीतलता को उठाए हुए चन्द्रकिरण

नलिनी पत्र आदि को भी प्रिया के विरह रूपी आग से जले हुए हृदय वाले जनों से देखे जाने पर सन्तापकारित्व प्रसिद्ध ही है। जैसे कि शाकुन्तल में कहा गया है– 'चन्द्रमा हिम गर्भ किरणों' से आग बरसाता है।' इस कारण पौरुषेय वाक्यों में भी नैसर्गिक अर्थ से सम्बनध रहने पर भी मिथ्यार्थता का समर्थन चाहने वाले को वाक्य से भिन्न किसी भी रूप का औपाधिक अर्थ व्यक्त होना मानना ही पड़ेगा। वह व्यञ्जकत्व के अलावा और कुछ नहीं है। व्यङ्ग्य का प्रकाशन ही व्यञ्जकत्व है। पौरुषेय वाक्य मुख्य रूप से पुरुष के अभिप्राय का ही प्रकाशन करते हैं। वह अभिप्राय व्यङ्ग्य ही है न कि वाच्य, क्योंकि उसके साथ शब्द का वाच्यवाचक लक्षण सम्बन्ध नहीं होता।

इस न्याय से तो सभी लौकिक वाक्यों का ध्वनिव्यवहार बन जाता है क्योंकि इस प्रकार से सभी का ही व्यञ्जकत्व होता है ?

यह सही है। किन्तु वक्ता के अभिप्राय के प्रकाशन से जो व्यञ्जकत्व होता है वह सभी लौकिक वाक्यों में अविशिष्ट अर्थात् एक समान होता हैं वह वाचकत्व से भिन्न नहीं होता क्योंकि वहाँ व्यङ्ग्य वाच्य के साथ अविनाभाव से रहता है न कि प्रधान भाव से। जैसे 'गाय ले आओ' कहने में दोहन रूप अभिप्राय वयक्त होने पर भी गाय को बिना लाए अभिप्राय सिद्ध नहीं होता। अतः प्रधानता गाय लाने की बात की होती है न कि दोहन की।

जहाँ प्रधान रूप से विवक्षित होकर व्यङ्ग्य रहता है वहाँ तो व्यञ्जकत्व ध्वनिव्यवहार का प्रयोजक होता है।

ध्वन्या०— यत्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाशते तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानं सत्। किन्तु तदेव केवलपरिमितविषयस्य ध्वनिव्यवहारस्य न प्रयोजकमव्यापकत्वात्। तथा दर्शितभेदत्रयरूपं तात्पर्येण द्योत्यमानमभिप्रायरूपमनभिप्रायरूपं च सर्वमेव ध्वनिव्यवहारस्य प्रयोजकमिति यथोक्तव्यञ्जकत्वविशेषे ध्वनिलक्षणे नातिव्याप्तिर्नचाव्याप्तिः। तस्माद्वाक्यतत्त्वविदां मतेन तावद् व्यञ्जकत्वलक्षणः शाब्दो व्यापारो न विरोधी प्रत्युतानुगुण एव लक्ष्यते।

लीला— एवं लौकिकवाक्यानां पुरुषाभिप्रायप्रधानत्वं तदभिप्रायस्य व्यङ्ग्यत्वञ्च प्रतिपाद्य युक्त्या सम्प्रति यदि तादृशाभिप्रायस्यैव व्यङ्ग्यत्वं तदा व्यङ्ग्यस्य त्रैविध्यं यदुक्तं तत्कथं सिध्यतीत्याशङ्कानिरासाय प्रकरणमारभते यत्वित्यादिना यत्= यादृशं, तु, अभिप्रायविशेषरूपं= तात्पर्यविशेषस्वरूपं, व्यङ्ग्यं= प्रतीयमानार्थः, शब्दार्थाभ्यां= शब्दादर्थाच्च, प्रकाशते= द्योतते, तत्= तादृशं, तात्पर्येण= व्यञ्जनावृत्या, प्रकाशितं= द्योतितं, सत्, विवक्षितं= प्राधान्येन गृहीतं, भवति इति। किन्तु= इति विरोधोक्तौ, केवल, तद्= तावद्, एव, अव्यापकत्वात्= व्याप्त्यभावेन, अपरिमितविषयस्य= असीमितलक्ष्यस्य, ध्वनिव्यवहारस्य,= ध्वनि-

प्रयोगस्य, न, प्रयोजकं= प्रेरकमिति। तदपि प्रयोजकमेव किन्तु न तन्मात्रमव्याप्तेरित्याशयः। तथा= तथैव, दर्शितभेदत्रयरूपं= प्रतिपादितवस्त्वलङ्काररसत्रिविधभेदस्वरूपं, व्यङ्ग्यं, तात्पर्येण= व्यञ्जनया, द्योत्यमानं= प्रकाश्यमानं, अभिप्रायरूपं= आशयस्वरूपं, अनभिप्रायरूपं= अभिप्रायेतररूपं, च, सर्वं= निखिलमेव यद्व्यञ्जनया प्रकाश्यमानं तन्निखिलमेव, ध्वनिव्यवहारस्य= ध्वनिप्रयोगस्य, प्रयोजकं= प्रेरकं, इति, यथोक्तव्यञ्जकत्वविशेषे= यथाप्रतिपादितव्यञ्जकव्यापारविशेषतायुते, ध्वनिलक्षणे= ध्वनिस्वरूपे, न अतिव्याप्तिः= गुणीभूतव्यङ्ग्यस्थले क्वचिदभिप्रा- यरूपव्यङ्ग्यसत्वात्तदादाने न अलक्ष्ये लक्षणस्य गमनं, न अव्याप्तिः= रसादिव्यंङ्ग्यप्रकरणमुपसंहरति तस्मादित्यादिना— तस्मात्= तद्धेतोः, वाक्यतत्वविदा= वाक्ये शक्तिं मन्यमानानां मीमांसकानां, मतेन= विचारेण, व्यञ्जकत्वलक्षणः व्यङ्ग्यप्रकाशकत्वस्वरूपः, शाब्दः= शब्दसम्बन्धी, व्यापारः= प्रवृत्तिः, तावत्= इति साकल्येन, न विरोधी= विप्रायी, प्रत्युत= तद्विपरीतं, अनुगुणः= अनुकूलः, एव, लक्ष्यते= दृश्यत इति।

कथनस्यास्यायमाशयः— शब्दार्थाभ्यां तात्पर्येण प्रकाशितमभिप्रायविशेषरूपं व्यङ्ग्यमपि विवक्षितं भवति किन्तु तद्ध्वनिव्यवहारस्य प्रयोजकत्वाय नैव पर्याप्तम्। तस्य तु तात्पर्येण द्योत्यमानं अभिप्रायरूपमनभिप्रायरूपं वा सर्वमेव प्रयोजकं भवति। गुणीभूतव्यङ्ग्यादौ अभिप्रायस्यापि सम्भवान्नातिव्याप्तिः रसादौ तस्याभावात् न चाव्याप्तिरिति। तेन शब्दस्य व्यञ्जकत्वव्यापारो वाक्यतत्ववादिमते न विरोधी प्रत्युतानुकूल एवेति।

जब इस तरह के अभिप्रायविशेष को ही व्यङ्ग्य मानेंगे तो उसमें व्यङ्ग्य के तीनों भेद कैसे सिद्ध होंगे ? इस आशङ्का के निवारण के लिए कहते हैं—

जो अभिप्राय विशेष रूप व्यङ्ग्य शब्द एवं अर्थ के द्वारा प्रकाशित होता है, यदि वह तात्पर्य अर्थात् व्यञ्जना शक्ति से प्रकाशित हो तो, वह विवक्षित होता है किन्तु असीमित विषय वाले ध्वनि व्यवहार के लिए व्यापक न होने से केवल वह मात्र प्रयोजक नहीं होता। तथा बताया गया तीन (वस्तु, अलङ्कार, रस) भेदों वाला, तात्पर्य अर्थात् व्यञ्जना वृत्ति से प्रकाशित होने वाला अभिप्राय रूप एवं अनभिप्राय रूप सब ध्वनि व्यवहार के प्रयोजक होते हैं और बतलाए गए प्रकार के व्यञ्जकत्व विशेष वाले ध्वनि लक्षण में न तो अतिव्याप्ति है न हि अव्याप्ति है। अतिव्याप्ति इसलिए नहीं है कि कहीं—कहीं गुणीभूत व्यङ्ग्य पाया जाता है और अव्याप्ति इसलिए नहीं है कि रसादि में अनभिप्राय रूप व्यङ्ग्य होता है।

इस कारण, वाक्य मे शक्ति मानने वाले मीमांसकों के मत में शब्द का व्यञ्जकत्वलक्षण व्यापार एकदम विरोधी नहीं है बल्कि अनुरूप ही दिखाई पड़ता है।

ध्वन्या— परिनिश्चितनिरपभ्रंशशब्दाब्राह्मणां विपश्चितां मतमाश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहार इति तैः सह किं विरोधाविरोधौ चिन्त्येते।

लीला— इत्थं वाक्यतत्वविदां न ध्वनिविषये विमतिरिति युक्त्या प्रदर्श्य सम्प्रति वैयाकरणैः सहैकमत्यप्रदर्शनाय प्रकरणमारभते परिनिश्चितेत्यादिना- परिनिश्चितनिरपभ्रंशशब्दब्रह्मणां= परितः निश्चितं प्रमाणत्वेन स्थापितं निरपभ्रंश भेदप्रपञ्चरहितं शब्दाख्य ब्रह्म परतत्वं यैस्ते तेषां, विपश्चितां= विदुषां— वैयाकरणानां, मतं= सिद्धान्त, आश्रित्य= अवलम्ब्य, एव, अय= प्रपञ्चितः, ध्वनिव्यवहारः= ध्वनिप्रयोगः, प्रवृत्तः= प्रचलितः, इति= हेतोः, यैः= विद्वद्भिः, सह, विरोधाविरोधौ= पूर्वपक्षतया, विरोधः सिद्धान्ततया अविरोधः च किं चिन्त्येते- नैव विरोधश्चिन्त्यते नापि च अविरोध एवेति।

अस्यायमाशयः= एष ध्वनिव्यवार एव येषां मतमाश्रित्य प्रवृत्तस्तेषां प्रमाण- स्थापितनिर्भेदशब्दब्रह्मणां लब्धवर्णानां मतेन नैव विरोधाविरोधानुयोगः। ते खलु ब्रह्मपदेन यदेव वाञ्छन्ति तत्र वाचकत्वव्यञ्जकत्वयोर्नैव लेशोऽपि, अविद्यापदे तु तेऽपि व्यापारान्तरमभ्युपगच्छन्त्येवेति।

इस प्रकार मीमांसकों के साथ ध्वनि के विषय में अविरोध स्थापित कर वैयाकरणों के साथ अपनी सहमति को जताने के लिए प्रकरण उठाते हैं—

प्रमाण के साथ अपभ्रंश रहित शब्द ब्रह्म का निश्चय करने वाले विद्वानों के मत का अवलम्बन कर ही इस ध्वनि व्यवहार का प्रवर्तन किया गया होने से उनके साथ विरोधाविरोध की चिन्ता ही क्या करती है ? पूर्वपक्ष के रूप में विरोध होता है तो सिद्धान्ती के रूप में अविरोध। वैयाकरण शब्द ब्रह्म से कुछ और ही चाहते हैं, उस पर वाचकत्व वा व्यञ्जकत्व का प्रश्न ही नहीं आता, जहाँ तक अविद्या पद का प्रश्न है हाँ वे भी दूसरे व्यापार अर्थात् व्यञ्जनावृत्ति को स्वीकार ही करते हैं। अतः उनसे हमारी कोई विमति नहीं है।

ध्वन्या०— कृत्रिमाब्दार्थसम्बन्धवादिनां तु युक्तिविदामनुभवसिद्ध एवायं व्यञ्जकभावः शब्दानामर्थान्तराणामिवाविरोधश्चेति न प्रतिक्षेप्यप- दवीमवतरति।

वाचकत्वे हि तार्किकाणां विप्रतिपत्तयः प्रवर्तन्ताम्, किमिदं स्वाभा- विकं शब्दानामाहोस्वित्सामयिकमित्याद्याः। व्यञ्जकत्वे तु तत्पृष्ठभाविनि भावान्तरसाधारणे लोकप्रसिद्ध एवानुगम्यमाने को विमतीनाभाविनि भावान्तरसाधारणे लोकप्रसिद्ध एवानुगम्यमाने को विमतीनामवसरः। अलौकिके ह्यर्थे तार्किकाणां विमतयो निखिलाः प्रवर्तन्ते न तु लौकिके। नहि नीलमधुरादिष्वशेषालोकेन्द्रियगोचने बाधारहिते तत्त्वे परस्परं विप्रतिपन्ना दृश्यन्ते। नहि बाधारहितं नीलं नीलमिति ब्रूवन् परेण प्रतिषि- ध्यते पीतमेतदिति। तथैव व्यञ्जकत्वं वाचकानां शब्दानामवाचकानां च गीतध्वनीनामशब्दरूपाणां च चेष्टादीनां यत्सर्वेषामनुभवसिद्धमेव तत्केनापह्नूयते ?

अशब्दमर्थं रमणीयं हि सूचयन्तो व्यवहारास्तथा व्यापारा निबद्धाश्च विदग्धपरिषत्सु विविधा विभाव्यन्ते। तानुपहास्यतामात्मनः परिहरन् कोऽतिसन्दधीत सचेताः।

लीला– एवं व्यञ्जनाविषये वैयाकरणैः सहैकमत्यं निर्दिश्य सम्प्रति विवेचयति व्यञ्जनामधिकृत्य नैयायिकसौगतादिप्रमाणवादिनां मतं कृत्रिमेत्यादिना– कृत्रिमः सङ्केतमात्रस्वभावो न तु नित्यः अपितु परिकल्पितः शब्दार्थयोः सम्बन्ध इति ये वदन्ति तेषां नैयायिकसौगतादीनां, युक्तिविदां= प्रमाणतत्त्वविदां तार्किकाणां, अनुभवसिद्धः= अनुभवेन उपलम्भेन सिद्धः सम्पन्नः, एव, अयं= प्रकरणगतः, शब्दानां व्यञ्जकभावः= व्यञ्जकत्वं, अर्थान्तराणां= दीपादीनां, इव= यथा, अविरोधः= विरोधाभावः, इति= हेतोः, प्रतिक्षेप्यपदवीं= खण्डनीयसृतिं, न अवतरति= नैवागच्छति इति।

ये खलु प्रमाणतत्त्वविदस्तार्किका नैयायिकाः सौगताश्च ते प्रथमे शब्दार्थसम्बन्धमनित्यमपरे वस्तुमात्रक्षणिकत्वं मन्यमानाः शब्दार्थसम्बन्धं कृत्रिममर्थाद् अस्माच्छब्दादयमर्थो बोद्धव्य इतीच्छाजनितं वा अस्य शब्दस्यायमर्थ इति उपदेशजनितं मन्यन्ते तेषां शब्दानां व्यञ्जकत्वमनुभवसिद्धमेव यथा दीपादीनां परिकल्पितनिजविषयादन्यस्यापि प्रकाशनमिति तैः सह नैव= विमतिरिति।

वाचकत्वे= शब्दानां वचकभावे, हि, तार्किकाणां, विप्रतिपत्तयः= विपपरीतयुक्तियुक्तोक्तयः, प्रवर्तन्तां= विद्यन्तां, शब्दानां, इदं= वाचकत्वं, किं, स्वाभाविकं= स्वभावसिद्धं, नैसर्गिकं, आहोस्वित्= अथवा सामयिकं= समयः सङ्केतितस्तज्जन्यं सङ्केतितं, इत्याद्याः= इत्येवंविधाः, विप्रतिपत्तयः= विपरीतयुक्तिमदुक्तयः, प्रवर्तन्तां, तत्पृष्ठभाविनि= तस्माद् वाचकत्वात् पृष्ठभाविनि पश्चाज्जायमाने, भावान्तरसाधारणे= अन्यभावतुल्ये– दीपादिव्यञ्जकपदार्थान्त– रेष्वपि समाने, लोकप्रसिद्धे= अन्यभावतुल्ये- दीपादिसामान्येन प्रख्याते, एव, अनुगम्यमाने= आलम्ब्यमाने, व्यञ्जकत्वे= व्यञ्जकभावे, तु, विमतीनां= विवादानां, कः, अवसरः= अवकाशः नैवावसर इति।

वाचकत्वमादाय तार्किकास्तन्नैसर्गिकमथवाऽनित्यमिति कामं विवदन्तां किन्तु वाचकत्वपश्चाद्भाविनि दीपादिपदार्थान्तरसामान्ये व्यञ्जकत्वे को नाम विवादः सम्भवतीति।

तार्किकाणां= तर्कविद्याश्रितानां, अलौकिके= लोकसाधारणेतरे, अर्थे, हि, अभिनिवेशाः= स्वमतस्थापने समाग्रहाः, प्रवर्तन्ते= प्रचलन्ति, लौकिके= लोकसामान्येऽर्थे, तु, न= नैव प्रवर्तन्ते। तन्निदर्शयति– नीलमधुरादिषु नीलमिदं मधुरमिदमित्यादौ, अशेषलोकेन्द्रियगोचरे= सम्पूर्णजनानुभवतां प्राप्ये, बाधारहिते= निर्विघ्ने, तत्त्वे, पदार्थे, परस्परं= अन्योन्यं, विप्रतिपन्नाः= विवादमानाः, न दृश्यन्ते=

नैव विलोक्यन्ते इति। बाधारहितं= तस्य तथाकथने बाधकतत्त्वहीनं, नीलं= नीलवस्तु, नीलं= नीलवर्णं, इति, ब्रुवन्= कथयन्, अपरेण= अन्येन, न, प्रतिषिध्यते= निवार्यते, एतत्, न, नीलं एतत्, पीतं इति।

तेषां प्रत्यक्षविषयमादाय न कोऽपि विवादः प्रवर्तते यथा नीलं नीलमिति कथने, किन्तु नीलत्वं कथमुत्पन्नं प्रकृतिनिष्पादितं वा परमाण्वादिसाधितमिति कारणत्वविचारे कामं विवदन्तामिति।

निदर्शनं प्रकृतिं योजयति— तथैव= तद्वदेव, वाचकानां= वाचकत्वद्यर्मविशिष्टानां, शब्दानां, अवाचकानां= वाचकत्वयुक्तत्वेऽपि तदनपेक्ष्य ग्रामतारानुसारापहस्तितवाच्यानुसारेणाभिप्रायं, बोधयतां, च गीतध्वनीनां= गाननिनदानां, अशब्दरूपाणां= शब्दरूपरूपरहितानां, चेष्टादीनां= नयनसङ्कोचनमुखनमनादिसङ्केतसूचकव्यवहाराणां, च= अपि, यत्, व्यञ्जकत्वं= व्यङ्ग्यव्यापारः, यत्, सर्वेषां= निखिलाना, अनुभवसिद्धं= एव, तत्= तादृशं शब्दादीनां व्यञ्जकत्वं, केन, अपह्नूयते= अपलप्यते। एवमेव, अशब्दं= अनभिधेयम्, रमणीयं= हृद्यं, अर्थं= अभिप्रायं, सूचयन्तः= सङ्केतयन्तः, व्याहाराः= उक्तयः, तथा, व्यापाराः= चेष्टाद्याः, निबद्धाः= मुक्तकादिरूपाः, अनिबद्धाः= गद्यादिरूपाः, च, विविधाः= अनेके, विदग्धपरिषत्सु= प्राज्ञगोठीषु,

विभाव्यन्ते= ज्ञायन्ते। तान्= तादृशरमणीयार्थव्यञ्जकान् व्याहारान्, व्यवहारान्, व्यापारांश्च, आत्मनः= स्वस्य, उपहास्यतां= उपहासास्पदत्वं, परिहरन्= अपाचिकीर्षन्, कः= कीदृशः, सचेताः= सहृदयः, असन्दधीत= अतीयादपितु न कोऽपि, यः= कश्चित्करोत्यपि सोऽवश्यमेवोपहास्यतां यातीति,।

प्रकरणस्यास्यायमाशयः— ये खलु शब्दार्थसम्बन्धं कृत्रिमं— नैवोत्पत्तिकमपितु कृतं— 'अस्माच्छब्दादयमर्थो बोद्धव्य इति सङ्केतितं मन्यन्ते तेषां प्रमाणपरायणानां नैयायिकसौगतादीनां तु शब्दानां व्यञ्जकत्वं तु दीपादीनां निश्चितेतरवस्तुनोऽपि प्रकाशनमिव नितान्तमुपलम्भसिद्धम्। तेन व्यञ्जनाविषये तैः सह न काऽपि विमतिः।

तार्किकाः .खलु शब्दानां वाचकत्वं स्वाभाविकंसहजं वा सामयिकंसङ्केतितमिति कृत्वा कामं विवदन्तां किन्तु तदनुभावि व्यञ्जकत्वामादाय तेषामपि न काऽपि विमतिः। ते हि लोकोत्तरे विषये कामं वैमत्यं धारयन्ति किन्तु न कदापि लौकिके विषये। ते नीलं नीलमिति कथयन्तो नैव प्रतिषेधन्ति यदि तत्र तदितरत्वसिद्धये पर्याप्तं प्रमाणं न स्यात्। तथैव वाचकशब्दानां वाचकत्वोपेक्षकाणां गीतादिध्वनीनां शब्दरूपरहितानां चेष्टादीनाञ्च व्यञ्जकत्वं तु सर्वेषामनुभवसिद्धमेव। अनभिधेयमपि हृद्यमर्थं व्यञ्जयतोऽनेके व्यवहारा व्यापारा व्यवहाराश्च प्रचलिताः सन्त्यव।ताननादृत्य को नामात्मानमेव तिरस्कारयेदिति।

इस तरह वैयाकरणों के साथ अपनी सहमति सिद्ध कर अब व्यञ्जना विषय को लेकर प्रमाणवादी नैयायिक एवं सौगत आदि के मत का उल्लेख करने हेतु प्रकरण का आरम्भ करते हैं—

शब्द के अर्थ के सम्बन्ध की कृत्रिम अर्थात् सहज न होकर सङ्केतित मानने वाले प्रमाणवेत्ता नैयायिक एवं सौगतों का शब्दों का यह व्यञ्जकत्व अनुभव सिद्ध है और दीप आदि का अन्य वस्तुओं का भी प्रकाशन के समान इसमें कोई विरोध नहीं है, अतः उसमे निराकरण करने की श्रेणी में नहीं आता।

तार्किकों में वाचकत्व को लेकर क्या शब्दों का यह- वाचकत्व स्वाभाविक सहज है अथवा सामयिकसङ्केतित है इत्यादि विप्रतिपत्तियाँ हो सकती हैं किन्तु उसके— वाचकत्व के बाद होने वाले, दूसरे अर्थ जैसे साधारण, लोकप्रसिद्ध व्यञ्जकत्व का अनुगमन करने में विमति का कोई अवसर नहीं रहता है। अलौकिक अर्थात् लोकसामान्य से भिन्न अर्थ में तार्किकों की अनेक विमतियाँ हो सकती है, किन्तु लौकिक विषय में कदापि नहीं। न तो नील, मधुर आदि सम्पूर्ण के इन्द्रियों से बोध्य बाधा रहित तत्त्व में परस्पर विप्रतिपन्न—असहमत ही देखे जाते हैं। न तो बाधा रहित–जिस को मानने में कोई अडचन न हो, नील को 'यह नील है' कहता हुआ कोई दूसरे से 'यह नील नहीं है, यह अवाचक गीतध्वनि आदि का, अशब्द रूप चेष्टा आदि का व्यञ्जकत्व जो कि सब का अनुभव सिद्ध है वह किस के द्वारा उपलक्षित किया जा सकता है। शब्दों में न बताए गए रमणीय अर्थ को जताने वाले अनेक प्रकार के व्यवहार उक्ति एवं व्यापार-चेष्टा, जो कि मुक्त आदि में निबद्ध वा गद्य आदि में अनिबद्ध भी होते हैं विज्ञजनों की सभा में जाने जाते हैं। अपने को उपहास के पात्र बनने से रोकने को इच्छुक कौन सा रसिक उनकी अनदेखी कर सकता है अर्थात् कोई नहीं।

ध्वन्या०— ब्रूयात् अस्त्यतिसन्धानावसरः व्यञ्जकत्वं शब्दानां गमकत्वं तच्च लिङ्गत्वमतश्च व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेतिलि— ङ्गिलिङ्गभाव एव तेषां व्यङ्ग्व्यंजकभावो नापरः कश्चित्। अतश्चैतदवश्यमेव बोद्धव्यं यस्माद्वक्त्रभिप्रायापेक्षया व्यञ्जकत्वमिदानीमेव त्वयाप्रतिपादितं वक्त्रभिप्रायश्चानुमेयरूप एव।

अत्रोच्यते नन्वेवमपि यदि नाम स्यात्तत्किं नश्छिन्नम्। वाचकत्वगुणवृत्तिव्यतिरिक्तो व्यञ्जकत्वलक्षणः शब्दव्यापारोऽस्तीत्यस्माभिरभ्युपगतम्। तस्य चैवमपि न काचित् क्षतिः तद्धि व्यञ्जकत्वं लिङ्गत्वमस्तु अन्यद्वा। सर्वथा प्रसिद्धशाब्दप्रकारविलक्षणत्वं शब्दव्यापारविषयत्वं च तस्यास्तीति नास्त्येवावयोर्विवादः न पुनरयं परमार्थो यद्व्यञ्जकत्वं लिङ्गत्वमेव सर्वत्र व्यङ्ग्यप्रतीतिश्चालिङ्गप्रतीतिरेवेति।

लीला— व्यञ्जकत्वेऽतिसन्धानावसराभावो य उक्तस्तत्र तद्भावमाशङ्क्य

तत्समाधानाय प्रकरणमारभते ब्रूयादित्यादिना— कश्चिन्नाम, ब्रूयात्= कथयेदपि, अतिसन्धानावसरः= प्रतिक्षेपावकाशः, अस्ति इति। किञ्च, व्यञ्जकत्वं= व्यञ्जनव्यापारः, तु शब्दानां, गमकत्वं= अन्यार्थप्रत्यायकत्वमेव, तत्= गमकत्वं, च लिङ्गत्वं= ज्ञापकत्वं अनुमितिसाधनत्वं, एव, अतः= हेतुनानेन, व्यङ्ग्यप्रतीतिः= प्रतीयमानार्थावभासः, लिङ्गप्रतीतिः= हेत्ववभासनं, एव, इति, तेषां= शब्दानां, व्यङ्ग्यव्यञ्जकभावः,= प्रतीयमानप्रत्यायकभावः, लिङ्गिलिङ्गभावः= साध्यसाधनभावः, एव, अपरः= तदतिरिक्तः, कश्चित्= कोऽपि विशिष्टः, न= नैवेति। अतः= हेतोरस्मात्, च= अपि, एतत्= उच्यमानार्थ, अवश्यमेव= निश्चितमेव, बोध्यं= ज्ञातव्यं, यस्मात्= यतः वक्त्रभिप्रायापेक्षया= वक्तुः आशयानुसारेण, व्यञ्जकत्वं= गमकत्वं, त्वया= भवता सिद्धान्तिना, इदानीमेव= अधुनैव जैमिनीयमतोपक्षेपावसरे, प्रतिपादितं= सिद्धान्तितं, वक्त्रभिप्रायः= कथयित्राशयः, तु, अनुमेयरूपः= अनुमानविषय एव परकीयाशयरूपत्वात्, न तु व्यङ्ग्य इति।

वयञ्जकत्वं तु शब्दानां वाच्येतरार्थप्रकाशनमेव तच्च लिङ्गत्वं— हेतुमाश्रित्य ज्ञापकत्वमेव नान्यत्। तेन व्यङ्ग्यप्रतीतिर्लिङ्गप्रतीतिव्यङ्ग्यव्यञ्जकभावश्च लिङ्गिभाव एव। यथा लिङ्गं लिङ्गिसिद्धये अनुमानाश्रयं, तथैव शब्दानां व्यञ्जकत्वं व्यङ्गसिद्धयेऽनुमानमेव। उक्तमेव च पूर्वं वाक्यतत्त्वविन्मतोपक्षेपाबसरे व्यञ्जकत्वं वक्त्रभिप्रायापेक्षया भवतीति। स तु अनुमेयरूप एवेति न पृथक्त्वं व्यङ्ग्यस्यानुमानदित्यनुयोगः।

तत्परिहरति— अत्र= प्रसङ्गेऽस्मिन्, उच्यते= कथ्यते, ननु= इति प्रत्युक्तौ, यदि, एवमपि= इत्थमेवापि—व्यञ्कत्वस्यानुमेयरूपत्वमपि, स्यात्, नाम= इति सम्भावनायां, तत्= तेन, नः= अस्माकं-सिद्धान्तिनां, किं= किमेव, छिन्नं= गृहीतमिति। यदि तथैव व्यञ्जकत्वं लिङ्गत्वादनतिरिक्तमेव भवेदपि नास्माकं कापि क्षतिरिति। तदेव विवृणोति— वाचकत्वगुणवृत्तिव्यतिरिक्तः= वाचकत्वं वाच्यार्थबोधकत्वं, गुणवृत्तिः =च्यार्थबाधे गौणार्थबोधकत्वं तदुभयव्यतिरिक्तो विलक्षणः, व्यञ्जकत्वलक्षणः= व्यङ्ग्यार्थप्रत्यायनस्वरूपः, शब्दव्यापारः= शब्दक्रिया, अस्ति= भवति, इति= इत्थं, अस्माभिः= सिद्धान्तिभिः, अभ्युपगतं= स्वीकृतम्। तस्य= व्यञ्जकत्वव्यापारस्य, एवमपि= लिङ्गत्वानतिरिक्तत्वसिद्धत्वेऽपि, न= नैव, काचित्= स्वल्पाऽपि, क्षतिः हानिरिति तत्= तादृशं, व्यञ्जकत्वं= व्यञ्जनव्यापारः, लिङ्गत्वं= ज्ञापकत्वं, अस्तु, वा= तदतिरिक्तमपि, अन्यत्= अपरमेवापि भवतु। तस्य= व्यञ्जकत्वस्य, सर्वथा= सर्वोपायैः, प्रसिद्धशाब्दप्रकारविलक्षणत्वं= प्रसिद्धः ख्यातः यः शाब्दप्रकारः शब्दसम्बन्ध्यभिधालक्षणादिभेदस्तस्माद्विलक्षणत्वं भिन्नत्वं, शब्दव्यापारविषयत्वंशब्दस्य व्यापारः सन् विषयस्तस्य भावस्तत्वं वा शब्दस्य यो व्यापारस्तस्य विषयत्वं विशेषत्वं, च, अस्ति= विद्यते,

इति, आवयोः= पूर्वपक्षोत्तरपक्षयोः, विवादः= वैमत्यं, नास्त्येवेति। पुनः= इत्यवधारणे, अयं= एषः निर्दिष्टः, परमार्थः= वास्तविकता, यदव्यञ्जकत्वं, लिङ्गत्वं, एव, व्यङ्ग्यप्रतीतिः, च लिङ्गप्रतीतिः, एवेति। यथा दीपप्रकाशादौ लिङ्गिलिङ्गभावाभावेऽपि व्यङ्ग्यव्यञ्जकभावोऽस्तीति कथं व्यङ्ग्यव्यञ्जकभावं लिङ्गिलिङ्गभावो व्याप्नोति। तेनैव च तत्रोभयोस्तादात्म्यमिति।

प्रकरणस्यास्यायमाशयः— कश्चित्कथयेदपि तत्रातिसन्धानावकाशा विद्यते यतो व्यञ्जकत्वं नाम गमकत्वमेव तच्च लिङ्गत्वंज्ञापकत्वं तेन लिङ्गिलिंङ्गत्वमेव व्यङ्ग्यव्यञ्जकत्वं तच्च वक्त्रभिप्रायापेक्षयेति तस्यानुमेयरूपमेवेति।

स्यादपि तथा, तथापि व्यञ्जकत्वस्य नैव तेन क्षतिः। व्यञ्जकत्वं लिङ्गत्वे वा तदितरदपि किं न स्याद् तस्य प्रसिद्धाभिधलक्षणादिशाब्दप्रकारविलक्षणत्वे शब्दव्यापारविषयत्वे तु न काऽपि विमतिः। तत्रापि प्रदीपालोकादौ लिङ्गिलिङ्गभावशून्योऽपि व्यङ्ग्यव्यञ्जकभावोस्तीति वयङ्ग्यव्यञ्जकभावस्य लिङ्गिलिङ्गभावोऽव्यापक इति तयोस्तादात्म्यं नैव सम्भवति इति।

व्यञ्जक के विषय में अतिसन्धान का अवसर न होने की जो बात कही गई थी उस पर फिर आशङ्का उठा कर उसका समाधान करते हैं—

कोई कह सकता है कि अनुसन्धान का अवसर है। शब्दों का व्यञ्जकत्व जो है वह गमकत्व है और गमकत्व लिङ्गत्व अर्थात् ज्ञापकत्व ही है, इस कारण व्यङ्ग्य की प्रतीति जो है लिङ्गी की प्रतीति ही है और शब्दों का व्यङ्ग्य— व्यञ्जकभाव जो है वह लिङ्गिलिङ्गभाव ही है, कोई दूसरा नहीं। इस कारण यह अवश्य समझना चाहिए क्योंकि अभी अभी जैमिनीय मत के उपक्षेप के प्रसङ्ग में आप ने वक्ता के अभिप्राय की दृष्टि से व्यञ्जकत्व का प्रतिपादन किया है और वह वक्ता का अभिप्राय जो है, दूसरे की इच्छा होने से अनुमेय रूप ही है।

इस पर कहा जाता है— यदि ऐसा हो भी जाय तो भी हमारा क्या जाएगा। हमने इतना ही प्रतिपादित किया है कि वाचकत्व एवं गुणवृत्ति से भिन्न व्यञ्जकत्व लक्षण वाला शब्द व्यापार होता है। उसका ऐसा होने पर भी कोई हानि नहीं है चाहे वह व्यञ्जकत्व लिङ्गत्व हो या और कोई हो। व्यञ्जकत्व का शब्द के प्रसिद्ध अभिधा एवं लक्षणा आदि के विषय से भिन्नत्व एवं शब्द व्यापार को ही विषयत्व जो होता है उस में हम दोनों की कोई विमति नहीं है। फिर यह कोई वास्तविकता नहीं है कि व्यञ्जकत्व ही लिङ्गत्व है और सभी जगह व्यङ्ग्य प्रतीति जो है वह लिङ्ग प्रतीति ही है।

ध्वन्या०— यदपि स्वपक्षसिद्धयेऽस्मदुक्तमनुदितं त्वया वक्त्रभिप्रायस्य व्यङ्ग्यत्वेनाभ्युपगमात्तत्प्रकाशने शब्दानां लिङ्गत्वमेवेति, तदेतद्यथास्माभिरभिहितं तद्विभज्य प्रतिपाद्यते श्रूयताम्—द्विविधो विषयः शब्दानाम्—अनुमेयः प्रतिपाद्यश्च। तत्रानुमेयो विवक्षालक्षणः। विवक्षा च शब्दस्व-

रूपप्रकाशनेच्छा शब्देनार्थप्रकाशनेच्छा चेति द्विप्रकारा। तत्राद्या न शब्दव्यवहाराङ्गम्। सा हि प्राणित्वमात्रप्रतिपत्तिफला। द्वितीया तु शब्दविशेषावधारणावसितव्यवहितापि शब्दकरणव्यवहारनिबन्धनम्। ते तु द्वे अप्यनुमेयो विषयः शब्दानाम्। प्रतिपाद्यस्तु प्रयोक्तुरर्थप्रतिपादनसमीहाविषयीकृतोऽर्थः।

स च द्विविधः— वाच्यो व्यङ्ग्यश्च। प्रयोक्ता हि कदाचित् स्वशब्देनार्थं प्रकाशयितुं समीहते कदाचित्स्वब्दानभिधेयत्वेन प्रयोजनापेक्षया कयाचित्। स तु द्विविधोऽपि नप्रतिपद्यो विषय शब्दानां न लिङ्गितया स्वरूपेण प्रकाशते, अपितु कृत्रिमेणाकृत्रिमेण सम्बन्धान्तरेण। विवक्षाविषयत्वं हि तस्यार्थस्य शब्दैर्लिङ्गितया प्रतीयते न तु स्वरूपम्। यदि हि लिङ्गितया तत्र शब्दानां व्यापारः स्यात्तच्छब्दार्थे सम्यङ् मिथ्यात्वादिविवादा एव न प्रवर्तेरन् धूमादिलिङ्गानुमितानुमितानुमेयान्तरवत्।

लीला— वक्त्रभिप्रायस्य व्यञ्जकत्वन्तु शब्दस्य लिङ्गत्वमेव वक्तृज्ञानानुमापकत्वं शब्दस्येति प्रभाकराणां यन्मतं तत्संवादित्वपरिहाराय सिद्धमपि साध्यं पुनः साधयितुमुपक्रमते यदपीत्यादिना-यदपि= यदेव स्वपक्षसिद्धये= व्यङ्ग्यव्यञ्जकत्वयोर्लिङ्गिलिङ्गभावसिद्धये, त्वया= पूर्वपक्षिण, अस्मदुक्तं= अस्माभिः, प्रतिपादितं, अनूदितं=सङ्गृह्य कथितं, यद् वक्त्रभिप्रायस्य= वक्तुस्तात्पर्यस्य, व्यङ्ग्यत्वेन= प्रतीयमानत्वेन, अभ्युपगमात्= स्वीकारात्, तत्वप्रकाशने= तस्य वक्त्रभिप्रायस्य प्रकाशने, शब्दानां, लिङ्गत्वं= ज्ञापकत्वं, एव, इति, तद्= तदा, एतत्= वक्त्रभिप्रायस्य प्रकाशने शब्दानां लिङ्गत्वमिति, यथा= येन विधिना, अस्माभिः= सिद्धान्तिभिः, उक्तं= कथितं, तथा तत्, विभज्य= विषयविभागं कृत्वा, प्रतिपाद्यते= उच्यते। श्रूयताम्= अवधीयताम्। शब्दानां, विषयः= उच्चरितशब्दजन्यप्रतिपत्तिः, द्विविधः= द्विप्रकारकः— अनुमेयः= वक्तुमभीष्टः, प्रतिपाद्यः= अर्थप्रतिपादनविषयीकृत इति। तत्र= तयोर्मध्ये, अनुमेयः, विवक्षालक्षणः= प्रतिपिपादयिषास्वरूपः। विवक्षा, च द्विप्रकारा= द्विविधा, शब्दस्वरूपप्रकाशनेच्छा= शब्दानां यत्स्वरूपं तस्य प्रकाशनेच्छा प्रतिपिपादयिषा, शब्देन, अर्थप्रकाशनेच्छा= विवक्षितार्थप्रतिपिपादयिषिता चेति। तत्र= तयोर्मध्ये, आद्या= प्रथमा शब्दस्वरूपप्रकाशनेच्छा, न= नैव, शाब्दव्यवहाराङ्गम्= शाब्दः शब्दकरणको यो व्यवहारोऽर्थप्रत्ययस्तस्याङ्गम्। तथाभवने हेतुमाह-सा= शब्दस्वरूपप्रकाशनेच्छा, हि= यतः, प्राणित्वमात्रप्रतिपत्तिफला= प्राणित्वमात्रस्य सचेतनत्वमात्रस्य न तु अर्थस्य प्रतिपत्तिरवबोधः सैव फला परिणामा। द्वितीया= अपरा— अर्थप्रकाशनेच्छा, तु, शब्दविशेषावधारणावसितव्यवहिता= शब्दविशेषस्य प्रतिपिपादयिषितार्थबो-

धानुकूलस्य वाक्यस्य यदवधारणं वक्तुरनुसंधानं तस्मिन् अवसिता पर्यवसिता तेन व्यवहिता शाब्दबोधं प्रति व्यवधानवती, अपि, शब्दकरणव्यवहारनिबन्धनं= शब्दकरणव्यवहारः शब्दः करणं साधनं यस्य तादृशो यो व्यवहारः शाब्दबोध-स्तस्य निबन्धनं निमित्तमिति। ते= पूर्वोक्ते, द्वे= शब्दप्रयुयुक्षा अर्थप्रतिपिपादयिषा, च, शब्दानां, अनुमेयः= एतद्विधशब्दप्रयोक्तृत्वादयमे— तद्विवक्षुरिति अनुमातुं शक्यः, विषयः= क्षेत्रम्। प्रतिपाद्यः तु तदतिरिक्तं प्रयोवतुः= व्यवहारिणः, अर्थप्रति-पादनसमीहाविषयीकृतः अर्थस्य आशयस्य यत्प्रतिपादनं बोधनं तस्य समीहये-च्छया, विषयीकृतः लक्ष्यत्वे व्यवस्थापितः अर्थश्चेति। सः= तादृशोऽर्थ्सा:, च, द्विविधः= द्विप्रकारकः वाच्यः= अभिधेयः, व्यङ्ग्यः= प्रत्येयः च। तस्य द्वैविध्ये कारणमाह प्रयोक्तेत्यादिना— हि= यतः, प्रयोक्ता, कदाचित्= क्वचित्तु,, स्वशब्देन= स्वप्रयुक्तशब्देन, एव, अर्थ= अभिप्रायं, प्रकाशयितुं= द्योतयितुं, समीहते= वाञ्छति कदाचित्= कुत्रचित्, तु, कयाचित्= अनभिवाच्यया, प्रयोजनापेक्षया= प्रयोजनसि-द्धिदृष्ट्या, स्वशब्दाभिधेयत्वेन= स्वप्रयुक्तशब्दावाच्यत्वेन, अर्थं, प्रकाशयितुं, प्रयतते। शब्दानां, सः= तादृशः, द्विविधः= द्विप्रकारः अपि प्रतिपाद्यः= वाच्यव्यङ्ग-चरूपः, विषयः, लिङ्गितया= ज्ञाप्यतया, स्वरूपेण= स्वाकृत्या, न, प्रकाशते= द्योतते, अपितु= प्रत्युत, कृत्रिमेण= सङ्केतितेन वा अकृत्रिमेण सहजेन, सम्बन्धा-न्तरेण= अन्येमैव सम्बन्धेन अभिधादिरूपविशेषेण, प्रकाशते तथाभवने हेतुं निर्दिशति— तस्य= प्रतिपाद्यस्य, अर्थस्य, विवक्षाविषयत्वं= प्रतिपिपादयिषित-लक्ष्यत्वं शब्दैः= शब्दद्वारेण, लिङ्गितया= ज्ञाप्यत्वेन— व्याप्तिसमृत्यादिसहकृतश-ब्दरूपलिङ्गज्ञाप्यतया, प्रतीयते= प्रतीतं भवति, न, तु, स्वरूपम्= आकारः इति। तत्र= तादृशार्थस्वरूपप्रकाशनके, यदि, हि, शब्दानां, लिङ्गितया= ज्ञाप्यत्वेन, व्यापारः= क्रिया, स्यात्, तत्= तदा, शब्दार्थे= शब्दप्रतिपादितेऽर्थे, धूमादिलिङ्गानु-मितानुमेयान्तरवत्= धूमादिभिर्लिङ्गैर्ज्ञापकैरनुमितं निश्चितस्वरूपं यदनुमेयान्तरं बह्न्यादि तस्मिन् इव, सम्यङ् मिथ्यात्वादिविवादाः= य सम्यक् समीचीनः अयं मिथ्या इत्यादयो विरुद्धवादाः, न= नैव, प्रवर्तेरन्= प्रचलिता भवेयुरिति।

कथनस्यास्यायमाशयः— वक्त्रभिप्रायस्य व्यङ्ग्यत्वेनाभ्युपगमाच्छब्दानां तत्प्रकाशने लिङ्गत्वमेवेति यदुक्तं तस्यायमाशयो यच्छब्दानामनुमेयः प्रतिपाद्य-श्चेति द्विविधो विषयो भवति। तत्रानुमेये शब्दानां लिङ्गत्वं न तु प्रतिपाद्ये। अनुमेयो हि विवक्षालक्षणः, सा च शब्दरूपप्रकाशनेच्छा शब्देनार्थप्रकाशनेच्छा च। तत्र प्रथमा प्राणित्वमात्रबोधनफलत्वान्न शाब्दव्यवहारस्याङ्गं द्वितीयैव तथा। प्रतिपाद्यश्च अर्थप्रतिपादनेच्छालक्ष्यीकृतार्थ एव द्विविधो वाच्यो व्यङ्ग्यश्च। तत्र शब्देन प्रत्यक्षं प्रकाशितो वाच्यः प्रयोजनमुद्दिश्य शब्दानाभिधेयत्वेन प्रत्यायितो व्यङ्ग्यः। द्विविधोऽपि स शब्दानां लिङ्गिरूपेण स्वरूपेण नैव

प्रकाशतेऽपितु अभिधादिरूपविशेषेणैव प्रकाशते। तेन अर्थस्य यद्विवक्षाविषयत्व तदेव शब्दैर्लिङ्गितया प्रतीयते न तु स्वरूपम्। तथाभवने तु धूमादिलिङ्गानुमितिवह्न्यादाविव समीचीनासमीचीनसत्यमिथ्यात्वादिविवादा एव न स्युरिति।

वक्ता के अभिप्राय का जो व्यञ्जकत्व है वह शब्द का लिङ्गत्व ही है शब्द का वक्तृज्ञानानुमापकत्व' कथन के परिहार के लिए प्रकरण उठाते हैं—

जो अपने पक्ष की सिद्धि के लिए हमारा कथन अपने अनूदित किया कि वक्ता के अभिप्राय को व्यङ्ग्य के रूप में स्वीकार करने पर उसके प्रकाशन में शब्दों का लिङ्गत्व-ज्ञापकत्व, होता है वह जो हमने कहा उसका विभाजन करके प्रतिपादित किया जाता है, सुनिए शब्दों का विषय दो प्रकार का होता है— अनुमेय एवं प्रतिपाद्य। अनुमेय जो है वह विवक्षालक्षण वाला होता है। विवक्षा जो है वह दो प्रकार की होती है— शब्द के स्वरूप के प्रकाशन की इच्छा और शब्द से अर्थ का प्रकाशन करने की इच्छा। उन दोनों में से पहली शब्द व्यवहार का अङ्ग नहीं होती क्योंकि वह जो है प्राणित्व मात्र की प्रतिपत्ति के लिए होती है— उससे इतना ही अनुमान हो पाता है कि वक्ता कुछ कह पाने की स्थिति में है। दूसरी जो है— शब्द विशेष के अवधारण में ही पर्यवसित होकर व्यवहित होने पर शब्द है करण (साधन) जिसका ऐसे व्यवहार का निबन्धन है। वे दोनों ही शब्दों के अनुमेय विषय हैं। प्रतिपाद्य जो है वह तो प्रयोक्ता की अर्थ को प्रतीत कराने की इच्छा से विषय बनाया अर्थ ही है। वह दो प्रकार का होता है, वाच्य एवं व्यङ्ग्य। प्रयोक्त कभी शब्द से ही अर्थ का प्रकाशन करना चाहता है कभी तो किसी सुन्दर प्रयोजन की अपेक्षा से शब्द से अनभिहित रूप अर्थात् प्रतीयमान रूप में भी। वह दो प्रकार का भी प्रतिपाद्य विषय शब्दों के लिङ्गीरूप में स्वरूप से प्रकाशित नहीं होता अपितु कृत्रिम-निर्मित, सङ्केतित वा अकृत्रिम सहजात अभिधा आदि अन्य सम्बन्धों से ही होता है। उस अर्थ का विवक्षाविषय रूप जो हे वह शब्दों के द्वारा लिङ्गी के रूप में शब्दों का व्यापार होता तो उन शब्दों के अर्थ में सही वा गलत इत्यादि परस्पर विरुद्ध विवाद नहीं होते जैसे कि धूम आदि लिङ्ग-ज्ञापक से अनुमान किए गए वह्नि आदि में अर्थात् यदि प्रतिपाद्य अर्थ लिङ्ग एवं शब्द उसको लिङ्गी होता तो वहाँ सही वा गलत का विवाद नहीं रहता जैसे धूम से अनुमित अग्नि आदि के विषय में। लेकिन प्रतिपाद्य अर्थ में इस प्रकार के विवाद के रहने से उसका न तो लिङ्गत्व सिद्ध होता है न तो शब्दों का लिङ्गित्व है।

ध्वन्या०— व्यङ्ग्यश्चार्थो वाच्यसामर्थ्याक्षिप्ततया वाच्यवच्छब्दस्य सम्बन्धी भवत्येव। साक्षादसाक्षाद्भावो हि सम्बन्धस्याप्रयोजकः। वाच्यवाचकभावाश्रयत्वं च व्यञ्जकत्वस्य प्रागेव दर्शितम्। तस्माद्वक्त्रभिप्राय रूप एव व्यङ्ग्ये लिङ्गतया शब्दानां व्यापारः। तद्विषयीकृते तु प्रतिपाद्यतया। प्रतीयमाने तस्मिन्नभिप्रायरूपेऽनभिप्रायरूपे च वाचकत्वेनैव व्यापारः सम्बन्धान्तरेण वा। न तावद्वाचकत्वेन यथोक्तं प्राक् सम्बन्धान्तरेण

व्यञ्जकत्वमेव। न च व्यञ्जकत्वं लिङ्गत्वरूपमेव आलोकादिष्वन्यथा दृष्टत्वात् तस्मात्प्रतिपाद्यो विषयः शब्दानां न लिङ्गित्वेन सम्बन्धी वाच्यवत्। यो हि लिङ्गित्वेन तेषां सम्बन्धी तथा दर्शितो विषय': स न वाक्यत्वेन प्रतीयते अपि तूपाधित्वेन। प्रतिपाद्यस्य च विषयस्य लिङ्गित्वे तद्विषयाणां विप्रतिपत्तीनां लौकिकैरेव क्रियमाणानामभावः प्रसज्येतेति। एतच्चोक्तमेव

लीला– एवं युक्त्या प्रतिपाद्य विषयस्य वाच्यव्यङ्ग्यरूपस्य लिङ्गत्वं तस्य शब्दानां लिङ्गित्वं परिहार्य सम्प्रति व्यङ्ग्यस्य वाच्यघटितत्वं प्रतिपादनाय पूर्वोक्तमेव स्मारयति तद् दृढीकर्तु व्यङ्ग्य इत्यादिना व्यङ्ग्यः= प्रतीयमानरूपः, अर्थः विषयः, च, वाच्यसामर्थ्याक्षिप्ततया= वाच्यार्थप्रत्यायिततया वाच्यवत्= वाच्यार्थ इव, शब्दस्य= व्यञ्जकस्य, सम्बन्धी, भवत्येव। हि= यतः साक्षादसाक्षाद्भावः= सम्बन्धस्य प्रत्यायत्वं वा पारम्पर्य, सम्बन्धस्य, अप्रयोजकः= नैव प्रेरक इति। वाच्यस्य शब्देन सह साक्षादेव सम्बन्धी व्यङ्ग्यस्य तद्द्वारेणेति कथं तस्य शब्देन सह सम्बन्ध इति न वाच्यं यतः साक्षात्त्वं वा असाक्षात्वं नैव सम्बन्धस्य प्रयोजकं भवति। अत एव संयोगसंयुक्तसमवायादीनां सन्निकर्षत्वाभिधानं सङ्गच्छते इति भावः इति बालप्रियायां स्पष्टम्। व्यङ्ग्यस्य= प्रतीयमानार्थस्य= प्रतिपादितमिति। पर्यवसितमाह तस्मात्= तद्धेतोः, वक्त्रभिप्रायरूपे= वक्तुराशयस्वरूपे, एव, व्यङ्ग्ये, शब्दानां, लिङ्गतया= ज्ञापकत्वेन, व्यापारः, तद्विषयीकृते= तद्विवक्षिते, तु, प्रतिपाद्यतया= प्रतिपाद्यरूपेण एवेति। तस्मिन्= तादृशे, अभिप्रायरूपे= तात्पर्यरूपे, अनभिप्रायरूपे, च प्रतीयमाने, च, वाचकत्वेन= वाचकभावेन, एव वा सम्बन्धान्तरेण= इतरसम्बन्धेन, न तु लिङ्गत्वेनेति। तावत्, वाचकत्वेन, न= नैव व्यवहार इति, यथा, प्राक्= पूर्वं, उक्तमेव। सम्बन्धान्तरेण= अन्येनैव सम्बन्धेन, व्यञ्जकत्वं= प्रकाशकत्वं, एवेति। न= नैव, च, व्यञ्जकत्वं लिङ्गत्वरूपं= ज्ञापकत्वस्वरूपं, एव, आलोकादिषु= प्रकाशादिषु, अन्यथादर्शनात्= तद्विपरीतदर्शनात्। आलोके घटादीनां व्यञ्जकता भवति न तु लिङ्गता तथैवात्रापि। तेन सम्बन्धान्तरं नैव लिङ्गलिङ्गिभाव इति। पर्यवसितुं पुनराह-तस्मात्= तेन हेतुना, प्रतिपाद्यः= वाच्यव्यङ्ग्यरूपः, विषयः, वाच्यवत्= वाच्यमिव, शब्दानां, लिङ्गित्वेन= ज्ञाप्यत्वेन, न, सम्बन्धीति। यः, हि, तेषां= शब्दानां, लिङ्गित्वेन, लिङ्गित्वेन= ज्ञाप्यत्वेन, सम्बन्धी, यथा दर्शितः= प्रतिपादितः, विषयः सः वाच्यत्वेन, न प्रतीयते= प्रकाशते, अपितु= प्रत्युत, उपाधित्वेन= औपाधिकतया एवेति। प्रतिपाद्यस्य, विषयस्य, लिङ्गित्वे= अनुमेयत्वे लौकिकैः= सांसारिकैः, एव, क्रियमाणानां= विधीयमानानां, तद्विषयाणां= प्रतिपाद्यविषयाणां, विप्रतिपत्तीनां= विवादानां, अभावः= अनस्तित्वं, प्रसज्येत= आपतेत। एतद्, च, उक्तमेव= पूर्वं कथितमेवेति।

प्रकरणस्यास्यायमाशयः— व्यङ्ग्यार्थो यः सोऽपि वाच्यतदाक्षिप्ततया पारम्पर्येण शब्दस्य सम्बन्धी भवत्येव। तेन वक्तुरभिप्रायरूपव्यङ्ग्ये शब्दानां लिङ्गतया (ज्ञापकतया) व्यापारो न तु तद्विपयीकृते व्यङ्ग्ये तस्य प्रतिपाद्यत्वा-त्पूर्वस्य विवक्षाविषयत्वात् प्रतीयमाने तु अभिप्रायरूपेऽनभिप्रायरूपेऽपि व्यञ्जक-त्वेनैव व्यापारः शब्दस्य। तेन प्रतिपाद्यविषयः शब्दानां न लिङ्गित्वेन सम्बन्धीति।

जो व्यङ्ग्य अर्थ है वह भी वाच्य से घटित होने के कारण वाच्य जैसे ही शब्द का सम्बन्धी हो जाता है। साक्षाद्भाव वा असाक्षाद्भाव सम्बन्ध का प्रयोजक नहीं होता। व्यञ्जकत्व का वाच्यवाचकभाव का आश्रयत्व पहले ही बताया जा चुका हैं इस हेतु वक्ता का अभिप्रायरूप जो व्यङ्ग्य है उसमें शब्दों का लिङ्ग अर्थात् ज्ञापक के रूप में व्यापार होता है। उस का जो विषयी कृत है उसमें तो प्रतिपाद्यत्व के रूप में। उस अभिप्रायरूप वा अनभिप्रायरूप प्रतीयमान व्यङ्ग्य में तो शब्दों का वाचकत्व से वा दूसरे सम्बन्ध से व्यापार होता है और वाचकत्व से यह व्यापार हो नहीं पाता, यह पहले ही बताया जा चुका है। दूसरे सम्बन्ध से जो कहा यह व्यञ्जकत्व ही है। न तो व्यञ्जकत्व लिङ्गत्वरूप ही है क्योंकि आलोक आदि में उसका विपरीत धर्म पाया जाता है अर्थात् दीप जिस वस्तु का प्रकाशन करता है वह उसका लिङ्गत्वरूप नहीं बनता। इस हेतु प्रतिपाद्य विषय वाच्य की तरह ही शब्दों का लिङ्गित्व के रूप में सम्बन्धी नहीं होता। जो शब्दों का लिङ्गित्व से सम्बन्धित विषय है, जैसे कि बताया जा चुका है, वह वाच्य के रूप में प्रतीत नहीं होता अपितु उपाधि के रूप में होता है। प्रतिपाद्य जो विषय है उसको लिङ्गि के रूप में मानने से उसके सम्बन्ध में लौकिकों की विप्रतिपत्तियों का अभाव ही हो जाता। यह भी कहा जा चुका है। वास्तविकता यह है कि लौकिक इच्छा में तो विवाद नहीं करता लेकिन अर्थ में तो कर ही लेता है। अतः वक्ता का अभिप्राय जो है वह ज्ञाप्य वा अनुमेय होता है और जो प्रतिपाद्य है वह या तो वाच्य होता है या व्यङ्ग्य।

ध्वन्या०— यथा च वाच्यविषये प्रमाणान्तरानुगमेन सम्यक्त्वप्रतीतौ क्वचित्क्रियमाणायां तस्य प्रमाणान्तरविषयत्वे सत्यपि न शब्दव्यापार-विषयताहानिस्तद्व्यङ्ग्यस्यापि। काव्यविषये च व्यङ्ग्यप्रतीतीनां सत्यास-त्यनिरूपणस्याप्रयोजकत्वमेवेति तत्र प्रमाणान्तरव्यापारपरोक्षोपहासायैव सम्पद्यते। तस्माल्लिङ्गिप्रतीतिरेव सर्वत्र व्यङ्ग्यप्रतीतिरति शक्यते वक्तुम्।

यत्वनुमेयरूपव्यङ्ग्यविषयं शब्दानां व्यञ्जकत्वं तद्ध्वनिव्यवहार-स्याप्रयोजकम्। अपि तु व्यञ्जकत्वलक्षणः शब्दानां व्यापार औत्पत्तिकश-ब्दार्थसम्बन्धवादिनाऽप्यभ्युपगन्तव्य इति प्रदर्शनार्थमु- पन्यस्तम्। तद्धिव्य-ञ्जकत्वं कदाचिल्लिङ्गत्वेन कदाचिद्रूपान्तरेण शब्दानां वाचकानामवाच-कानाञ्च सर्ववादिभिरप्रति- क्षेप्यमित्यस्माभिर्यत्न आरब्धः। तदेवं गुणवृ-त्तिवाचकत्वादिभ्यः शब्दप्रकारेभ्यो नियमेनैव तावद्विलक्षणं व्यञ्जकत्वम्।

तदन्तापातित्वेऽपि तस्य हठादभिधीयमाने तद्विशेषस्य ध्वनेर्यत् प्रकाशनं विप्रतिपत्तिनिरासाय सहृदयव्युत्पत्तये वा तत्क्रियमाणमनतिसन्धेयमेव। न हि सामान्यमात्रलक्षणेनोपयोगिविशेषल- क्षणानां प्रतिक्षेपः शक्यः कर्तुम्। एवं हि सति सन्तापमात्रलक्षणे कृते सकलसद्वस्तुलक्षणानां पौनरुक्त्यप्रसङ्गः तदेवम्—

विमतिविषयो य आसीन्मनीषिणां सततमविदितसतत्त्वः।
ध्वनिसञ्ज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम्।। ३३।।

लीला— प्रतिपन्नस्यापि व्यङ्ग्यार्थस्य सत्यत्वनिश्चयस्तु प्रमाणान्तरानुमानादेव भवतीति कथं नासावनुमेय इत्याशङ्कानिवारणाय प्रकरणमारभते यथेत्यादिना— यथा= यद्वत्, च वाच्यविषये= अभिधेयसम्बन्धे, प्रमाणान्तरानुगमेन= अन्यद, शब्दव्यापारभिन्नप्रमाणं अनुमानादि तस्य अनुगमेन स्वीकरणेन, क्वचित्= कुत्रचित्, सम्यक्त्वप्रतीतौ= सत्यत्वनिश्चये, क्रियमाणायां= विधीयमानायां, तस्य= वाच्यस्य, प्रमाणान्तरविषयत्वे= अन्यप्रमाणलक्ष्यत्वे, सति= विद्यमाने, अपि, न= नैव, शब्दव्यापारविषयताहानिः= शब्दव्यापारलक्ष्यतानाशः तत्= तथैव व्यङ्ग्यस्य= प्रतीयमानार्थस्य, अपि। एतदुक्तं भवति—सत्यत्वप्रतीतौ वाच्यस्य व्यङ्ग्यस्य च 'आप्तवादाविसंवादादत्र चेदनुमानता। निर्णयस्तावता सिध्येद् बुद्ध्युत्पत्तिर्न तत्कृता' इति कथनानुसारं प्रमाणान्तरविषयत्वे उत्पन्नेऽपि तयोः शब्दव्यापारविषयत्वहानिस्तु नैव भवति न चैतावता तयोः प्रतीतिरानुमानिकी भवति शब्दविषयत्वाद्। काव्यविषये= काव्यक्षेत्रे, च= तु, व्यङ्ग्यप्रतीतीनां= व्यङ्ग्यावभासनानां, सत्यासत्यनिरूपणस्य= यथार्थायथार्थविवेचनस्य, अप्रयोजकत्वं= प्रयोजनहीनत्वं तेषां प्रीतिविषयमात्रपर्यवसायित्वात् एव, इति= हेतोः, तत्र= काव्यविषये, प्रमाणान्तरव्यापारपरीक्षा= अन्यविधप्रमाणव्यापारविचारः उपहासाय= तिरस्काराय नायं सहृदय इति, एव, सम्पद्यते— जायते। तस्मात्= तेन, सर्वत्र, लिङ्गिप्रतीतिः= ज्ञाप्यावभासनं, एव, व्यङ्ग्यप्रतीतिः, इति, वक्तुं= कथयितुं, न= नैव शक्यते= पार्यते इति।

'यदि तथा मा भूद्यत्र यत्र व्यञ्जकत्वं तत्र तत्रानुमानत्वं किन्तु यत्राप्यनुमानता तत्र व्यञ्जकता कथमपह्नूयते इत्याशङ्कानिरासाय कथयति यत्त्वित्यादियद्= यादृशं, तु, शब्दानां, अनुमेयरूपव्यङ्ग्यविषयं=वक्तुरभिप्रायस्वरूपव्यङ्ग्यं, रूपं, व्यञ्जकत्वं, तद्, ध्वनिव्यवहारस्य= ध्वनिप्रयोगस्य, अप्रयोजकं= प्रयोजनबाह्यमिति। यश्च वक्तुरभिप्रायरूपव्यङ्ग्यव्यञ्जकः शब्दव्यापारः स न ध्वनिव्यवहारमावर्तयतीति। अपितु= प्रत्युत, व्यञ्जकत्वलक्षणः= व्यञ्जकत्वस्वरूपः शब्दानां, व्यापारः= क्रिया, औत्पत्तिकशब्दार्थसम्बन्धवादिना= नित्यशब्दार्थसम्बन्धसतमर्थकेन मीमांसकेन, अपि, अभ्यूपगन्तव्यः स्वीकर्तव्यः, इति= हेतोः, प्रदर्शनार्थं= उदाह-

रणार्थ, उपन्यस्तं= समावेशतमिति। तत्= तादृशप्रकरणं, हि, वाचकानां= वाच्यत्वधर्माणा. अवाचकानां= तद्रहितानां गीतादिशब्दानां, च, व्यञ्जकत्वं= व्यञ्जनव्यापारः, कदाचित्, लिङ्गत्वेन= ज्ञापकत्वेन, अनुमापकत्वेन, कदाचित्, रूपान्तरेण= अन्येनैव रूपेण, सर्ववादिभिः= सर्वैरेव स्वस्वमतावलम्बिभिः, अप्रतिक्षेप्यं= अविरोद्धव्यं, इति= हेतोः, अस्माभिः, अयं= एव प्रकरणगतः, यत्नः= प्रयासः, आरब्धः= उपक्रान्त इति। तत्= तादृशं, एवं= विवेचितं, गुणवृत्तिवाचकत्वादिभ्यः= गौणकत्ववाचकत्वादिभ्यः, शब्दप्रकारेभ्यः= नियमेन= विधिना, एव, व्यञ्जकत्वं, तावद्= इति साकल्येन, विलक्षणं= भिन्नमिति। तस्य= व्यञ्कत्वस्य, तदन्तःपातित्वे= तयोः गौणकत्वव्यञ्जकत्वयोः, अन्तःपातित्वे अन्तर्वर्तित्वे हठात्= असम्यग्विविच्य: अभिधीयमाने= कथ्यमाने, अपि, तद्विशेषस्य= व्यञ्जकत्वविशेषात्मकस्य, ध्वनेः= ध्वनितत्त्वस्य, यद्= यदेव, प्रकाशनं= द्योतनं, विप्रतिपत्तिनिरासाय= वैमत्यपरिहाराय, वो= इति पक्षान्तरे, सहृदयव्युत्पत्तये= रसिकबुद्धिविलासाय, क्रियमाणं= विधीयमानं, तत्= कथनं, अनतिसन्धेयं= अप्रतिक्षेप्यमर्थादादरणीयमेव। सामान्यमात्रलक्षणेन= साधारणलक्षणेन, उपयोगिविशेषलक्षणानां= लोकमात्रोपयोगिवस्तुविशेषस्वरूपाणां प्रतिक्षेपः= अनादरः, कर्तुं= विधातुं, शक्यः= पार्यः। एवं= इत्थं, हि सति= विद्यमाने, सत्तामात्रलक्षणे= अस्तित्वमात्रस्वरूपावधारणे, कृते= विहिते, सति, सकलसद्वस्तुलक्षणानां= निखिलास्तित्वयुत-पदार्थस्व-रूपाणां, पौनरुक्त्यप्रसङ्गः= पुनरुक्तिदोष एवेति। तेन प्रकरणमुपसंहरति तदेवमित्यादिपूर्वकेण विमतीत्यादिपद्येन, अविदितसतत्त्वः, यः मनीषिणां सततं विमतिविषय आसीत् सः अयं, ध्वनिसंज्ञितः काव्यस्य प्रकारः व्यञ्जितः इति पदव्यवस्था।

अविदितसतत्त्वः= प्रकाशितः रहस्यः, यः ध्वनिः, मनीषिणां= विदुषां विशेषेण तार्किकादीनां, सततं= अजस्रं, विमतिविषयः= विप्रतिपत्तिलक्षणः, आसीत्, सः= तथाविधः, अयं, ध्वनिसंज्ञितः= ध्वन्याख्यः, काव्यस्य, प्रकारः= भेदः, व्यञ्जितः= प्रकाशित इति।

अप्रकाशिततद्रहस्यत्वाद् ध्वनिसंज्ञितं प्रकारमादाय विदुषामनेका विमतयो या आसन्, तन्निवारणाय काव्यमयं सतत्वं प्रकाशितमिति।

प्रकरणस्यास्यायमाशयः— यथा वाच्यस्य क्वचित्प्रमाणान्तरेणानुमानादिना सत्यैवप्रतीतिः क्रियते तथा करणे तत्तस्यापि विषयतामायाति चेदपि तस्य शब्दव्यापारविषयत्वं तु नैव हीयते तथैव व्यङ्ग्यस्यापि। काव्यस्य प्रतीतिमात्रपर्यवसायित्वात् प्रतीतेश्च लोकोत्तरचमत्कृत्यङ्गत्वात्तत्र सत्यासत्यनिरूपणमपि नैव लिङ्गिप्रतीतिरिव व्यङ्ग्यप्रतीतिः। न च यत्रापि व्यजजकत्वं तत्रैवानुमानत्वं नैव भवति चेदपि अनुमानत्वे व्यञ्जकत्वं तु भवत्येवेति वाच्यं यदेव

वक्त्रभिप्रायरूपं परगतविषयतया अनुमेयं व्यङ्ग्यं तस्य ध्वनेरविषयत्वेऽपि वाक्य-तत्त्वविदाऽपि व्यञ्जकत्वलक्षणशब्दव्यापारोऽभ्युपगन्तव्य इत्येव प्रदर्शनाय निर्दिष्टं तत्। व्यञ्जकत्वं च क्वचित् लिङ्गत्वेन यथा वक्त्रभिप्रायादौ क्वचित्तु अनेनैव रूपेण यथा प्रत्यक्षेण दीपालोकादौ क्वचित्कारणत्वे गीतध्वन्यादौ क्वचिदभिधया विवक्षितान्यपरवाच्ये क्वचिल्लक्षणया गौण्या वा शुद्धया अविवक्षितवाच्ये च शब्दानां वाचकानामवाचकानां वा अशब्दानामपि चेष्टादीनां भवति इति सर्वैरूरीकर्तव्यमित्येवायमारम्भः। तच्च गुणवृत्तेः वाचकत्वाच्च विलक्षणमपि। यदि तस्य बलादेव अर्थान्तरस्य कल्पनापेक्षया लाघवादिति कृत्वा गुणवृत्तिव्यञ्जकत्वान्तःपातनं क्रियते तदाऽपि न संज्ञानिवेशनादि निषिध्यते-ऽस्माभिः। अर्थाद्यदि विलक्षणस्वरूपस्यापि व्यञ्जकत्वस्य विलक्षणस्वरूपस्याभि-धादिसंज्ञैव क्रियते चेत्क्रियतां, वस्तुन्येव समुचिता विमतिर्नाममात्रे। तथाकरणेऽपि सहृदयव्युत्पत्तये तस्यापि व्याख्या तु कर्तव्यैव यया तेषां संशयज्ञाननिरासः स्यात्। किञ्च यदि व्यञ्जना विशिष्टाभिधा: वा विशिष्टलक्षणैवोच्यतेत दापि तस्य विशिष्टस्यापि लक्षणं तु कर्तव्यमेव यतः सामान्यलक्षणेनैव विशिष्टलक्षणं तु कदापि न सिध्यति यदि तदुपयोगि। एवं सति तु त्रिपदार्थसङ्करी सत्तेत्यनेनैव द्रव्यगुणकर्मणां लक्षितत्वादितरसद्वस्तुलक्षणं तु पुनरुक्तिरेव स्यात्। तेन विशिष्टा-भिधाया वा विशिष्टलक्षणायाः पृथगेव लक्षणं कर्तव्यमेव चेद्व्यञ्जनैव किमर्थं न स्वीक्रियते। यस्या कस्या अपि व्यापारत्वेन किं न स्याद्व्यञ्जकत्वं तु सम्प्रति नैवापलपितुं शक्यम्। स्वीकृते व्यञ्जकत्वे सम्मते च व्यङ्ग्यार्थे व्यञ्जनायाः स्वीकारस्तु स्वत एव सञ्जाते नाममात्रे विवादस्त्वनुपयोग्येवेति।

अद्यपर्यन्तं तस्याप्रकाशितरहस्यत्वाद् ध्वनिर्विचक्षणानां विवादविषयो य आसीत् स सम्प्रति सतत्त्वो निरूपितः। तेनाऽत्राधुना न कस्यचिद्विमतिरिति।

इत्थं साङ्गोपाङ्गो ध्वनिर्विवेचितः।। ३३।।

प्रतिपन्न भी व्यङ्ग्यार्थ का सत्यत्वनिश्चय तो दूसरे प्रमाणों से होता है। अतः उसका अनुमेयत्व कैसे न माना जाय ? इस आशङ्का के निवारण हेतु कहते हैं—

जैसे कि वाच्य के विषय में कहीं-कहीं दूसरे प्रमाणों के आश्रय से (अनुमान आदि से) सत्यत्व की प्रतीति किए जाने पर उस अवस्था में अनुमान आदि दूसरे प्रमाणों का विषय बन जाने पर भी उसके शब्दव्यापार विषयत्व में कोई हानि नहीं होती उसी तरह व्यङ्ग्य की भी।

काव्य के विषय में तो, उस के आनन्द मात्र से पर्यवसायी होने से और उसका अलौकिक चमत्कार रूप व्युत्पत्ति के अङ्ग होने से, व्यङ्ग्य प्रतीति का सत्यासत्य निरूपण प्रयोजक नहीं होता और उसमें दूसरे प्रमाणों के व्यापार की परीक्षा उपहास के लिए ही होता है। इस कारण सर्वत्र लिङ्गिप्रतीति ही व्यङ्ग्यप्रतीति हो, ऐसा कहा नहीं जा सकता।

जो भी शब्दों का अनुमेयरूप विषयक व्यञ्जकत्व है वह ध्वनि व्यवहार के लिए प्रयोजक नहीं है। वह तो केवल शब्दों का जो व्यञ्कत्व व्यापार है, उसे शब्दार्थ सम्बन्ध को नित्य मानने वाले (मीमांसक) को भी मानना पड़ेगा, इसे दिखाने के लिए ही प्रसङ्ग में लाया गया है।

वह व्यञ्जकत्व तो कहीं लिङ्ग के रूप में, कहीं दूसरे भी रूप में— अर्थात् अभिप्राय आदि में अनुमान के रूप में, दीप के आलोक आदि में प्रत्यक्ष रूप में, गीत ध्वनि आदि में कारण के रूप में, विवक्षितान्यपरवाच्य में अभिधा से, अविवक्षित वाच्य में लक्षणा से, वाचक शब्दों का अवाचक शब्दों का भी, सभी को बेहिचक स्वीकार करना चाहिए, इस दृष्टि से हमने इस प्रयास का आरम्भ किया है। तो, इस प्रकार वह व्यञ्जकत्व गुणवृत्ति एवं वाचकत्व आदि शब्द प्रकारों से नियम से ही सभी दृष्टियों से विलक्षण है। उसको बलपूर्वक गुणवृत्ति वा वाचकत्व में समावेश कर लेने पर भी उनसे विशिष्ट ध्वनि का जो प्रकाशन है उसकी विप्रतिपत्ति दूर करने के लिए वा सहृदयों की व्युत्पत्ति के लिए भी यह जो किया जा रहा है वह निश्चय ही आक्षेप्य नहीं है। उसको गुणवृत्ति वा वाचकत्व के अन्तर्गत ही मान कर उसे विशिष्ट अभिधा वा विशिष्ट लक्षणा का व्यापार भी मान लिया जाय तो भी तो उसका विशेष लक्षण तो करना ही पड़ता क्योंकि सामान्य लक्षण मात्र से उपयोगी विशेष के लक्षण का प्रतिक्षेप भी तो किया नहीं जा सकता। यदि ऐसा होता तो सत्ता मात्र से लक्षण से अर्थात् तीन पदार्थों— द्रव्य, गुण, कर्म, का सङ्कर ही सत्ता है कह देने से द्रव्य, गुण, एवं कर्म के लक्षण हो जाने से सम्पूर्ण सत्ता वाली वस्तुओं का लक्षण करना ही पुनरुक्ति का विषय बन जाता। इस कारण, इस तरह तत्वों के प्रकाशित न हो पाने के कारण अविदित ही रहने से जो बराबर विद्वानों के विवाद का विषय था, वह यह ध्वनि नामक काव्य का प्रकार तत्वों के सहित प्रकाशित किया गया।। ३३।।

ध्वन्या०— प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत्।। ३४।।

व्यङ्ग्योऽर्थो ललनालावण्यप्रख्यो यः प्रतिपादितस्तस्य प्राधान्ये ध्वनिरित्युक्तम्। तस्य तु गुणीभावेन वाच्यचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नाम काव्यप्रभेदः प्रकल्प्यते।

लीला— इत्थं व्यङ्ग्यप्राधान्यात्मनो ध्वनेर्यदेव स्वं रूपं भेदोपभेदसहितं यच्च व्यञ्जकभेदमुखेन रूपं तत्सर्वं विविच्य सम्प्रति व्यङ्ग्यस्य गुणभावं विवेक्तुं प्रकरणमारभते कारिकाकारः प्रकार इत्यादिना-गुणीभूतव्यङ्ग्यः काव्यस्य अन्यः प्रकारः दृश्यते यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं प्रकर्षवत् स्यात् इति पदव्यवस्था।

गुणीभूतव्यङ्ग्यः= गुणीभूतं चारुत्वपर्यवसायितायाऽप्रधानीभूतं व्यङ्ग्यं प्रतीयमानार्थो यत्र सः, तादृशः, काव्यस्य= कविकृतेः अन्यः= अपरो ध्वनेर्भिन्नः= प्रकारः= भेदः, दृश्यते= लक्ष्यते, यत्र= यस्मिन् भेदे, व्यङ्ग्यान्वये= व्यङ्ग्येन

प्रतीयमानार्थेन अन्वयः अनुगमनं तस्मिन्— व्यङ्ग्येन तदुपकारकत्वेन सहिते, सति, वाच्यचात्वं= वाच्यस्य अभिधेयार्थस्य, चारुत्वं सौन्दर्य, प्रकर्षवत्= ध्वनि-काव्यपेक्षयोत्कर्षयुक्तं, उत्कृष्टं, भवतीति शेषः।

वृत्तिकारःकारिकां विवृणोति व्यङ्ग्य इत्यादिना— ललनालावण्यप्रख्यः= ललनायाः प्रमदाया यदेव लावण्यं सौन्दर्य प्रसिद्धावयवातिरिक्तं तेन प्रख्या सादृश्यं यस्य सः, तादृशः, यः व्यङ्ग्यः= प्रतीयमानो वाच्याद्भिन्नः, अर्थः= वस्तु, अलङ्कारः, रसो वा, प्रतिपादितः= निर्दिष्टः— 'प्रतीयमानां पुनरन्यदेव' इत्यत्र, तस्य= व्यङ्ग्यस्य, प्राधान्ये= चारुत्वपर्यवसायित्वेन वाच्यादुत्कृष्टतरे सति, ध्वनिः, इति, उक्तम्। तस्य= व्यङ्ग्यस्य वाच्यार्थापेक्षया प्रकृष्टतरस्य, गुणीभावेन= चारुत्वाविश्रान्त्या, पुनः परावर्त्य, वाच्याचारुत्वप्रकर्षे= वाच्यस्या-भिधेयस्य यदेव चारुत्वं सौन्दर्यं तस्य प्रकर्षे चारुत्वविश्रान्त्या उत्कर्षे, सति— अनेन व्यङ्ग्यवाच्ययोश्चारुत्वसाम्यमपि सूच्यते, गुणीभूतव्यङ्ग्यः= व्यङ्ग्यः प्रतीयमानार्थो यत्र, चारुत्वविश्रान्त्यभावेन वाच्यापेक्षयाऽप्रधानीभूतः व्यङ्ग्यः प्रतीयमानार्थो, यत्र तथा नाम= संज्ञायुतः, काव्यप्रभेदः= कविकृतिप्रकारः, प्रकल्प्यते, सम्पद्यत इति।

अस्यायमाशयः— व्यङ्ग्ये सति व्यङ्ग्य चारुत्वविश्रान्त्या ध्वनिर्भवति तद्विप-रीतं वाच्ये व्यङ्ग्यानुगते सति तु तत्र चारुत्वविश्रान्त्या व्यङ्ग्यस्य वाचार्थापेक्षया गुणीभूतत्वेन वाच्यप्रकर्षाद् गुणीभूतव्यङ्ग्यो नाम काव्यप्रकारः प्रजायत इति।

ननु 'काव्यस्यात्मा ध्वनिरितिः तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम्' इति यत्प्रतिज्ञातं तत्तु काव्यात्मभूतध्वनिस्वरूपमात्रप्रतिपादनपरायणतां द्योतयति यत्साङ्गोपाङ्गध्वनिविवेचनेन पूरितमेव। तत्कोऽर्थोऽत्र गुणीभूतव्यङ्ग्यप्रतिपादनेन यतस्तस्य काव्यात्मत्ता न सम्भवति। किञ्च श्रोताऽपि प्रतिज्ञातमेव ग्रहीतुमुत्सुको भवति न त्वप्रतिज्ञातं तत्र प्रेरणाभावात्। यदि अप्रतिज्ञातमसम्बद्धमेवोच्यते तर्हि तु ग्रन्थसङ्गतिरेव विच्छिन्ना स्यादिति नैवाशङ्कनीयम्। किञ्च ग्रन्थस्यास्याभीष्टं व्यङ्ग्यप्रतिपादनमेव। यथोक्तं वृत्तौ रसावरोधपरिहारप्रसङ्गे— 'रसादिरूपव्यङ्ग्य-तात्पर्यमेवैषां युक्तमिति यत्नोऽस्माभिरारब्धो न ध्वनिप्रतिपादनमात्राभिनिवेशेन इति' तथैव, तत्र वयङ्ग्यप्राधान्ये ध्वनिरित्युक्तमेव। वाच्यप्राधान्ये तु प्रकारान्तरं निर्देक्ष्यते' इति च। अपरञ्च, गुणीभूतोऽपि व्यङ्ग्यः काव्यस्य विच्छित्यतिशयतां पुष्णाति इत्यमुना द्वारेण— कैमुत्यन्यायोपक्षेपमुखेन ध्वेनेरवात्मत्वं काव्यस्य कस्मर्थयतीत्यस्य प्रासङ्गिकताऽपि।

अत्रेदमप्यवधेयं यद्व्यङ्ग्यस्य गूढत्वेन ध्वनिर्भवति अगूढत्वे तु गुणीभूतव्यङ्ग्य एव। अपरञ्च व्यङ्ग्यस्य तिस्रोऽवस्था भवन्ति। ये सहृदयमनोग्राह्यत्वेन स्फुटतरे व्यङ्ग्ये ध्वनिर्भवति स्फुटमात्रे गुणीभूतव्यङ्ग्य एव, अस्फुटे तु चित्रमेव। तथैव

व्यङ्ग्ये चारुत्वविश्रान्त्या ध्वनिर्भवति वाच्ये चेद्गुणीभूतव्यङ्ग्य एव। तेनेदं पर्यवसितं यद्यत्र व्यङ्ग्यं गूढं किन्तु सहृदयमनोग्राह्यत्वेन स्फुटतरं चारुत्वपर्यवसायि च तत्र ध्वनिर्भवति, अर्थात् गूढं स्फुटतरं चारुत्वपर्यवसायि व्यङ्ग्यमेव ध्वनिसंज्ञकं, तदेवागूढं स्फुटमात्रं चारुत्वापर्यवसायि चेद् गुणीभूतव्यङ्ग्यो भवतीति।

काव्यलक्षणविद्भिः गुणीभूतव्यङ्ग्यस्य प्राधान्येनाष्टौ भेदाः उक्ताः। तद्यथा काव्यप्रकाशे—

'अगूढमपरस्याङ्ग' वाच्यसिद्ध्यङ्गास्फुटम्।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः।''

तत्र अगूढं सर्वैरेव वेद्यं वाच्यायमानत्वान्न तथा चमत्कारि यथाऽऽन्ध्री-कुचयुगलं, अपरस्य अङ्गं स्वनैरपेक्ष्येण लब्धसिद्धेरुपस्कारकें, वाच्यसिद्ध्यङ्गं वाच्यस्य सिद्धिरेव यदधीना तत्, अस्फुटं सहृदयैरपि दुःसवेद्यं, सन्दिग्धप्राधान्यं अनिश्चितप्रधानभावं, तुल्यप्राधान्यं वच्येन सह समप्राधान्यं काक्वाक्षिप्तं यां काकुं विना वाच्यार्थ आत्मानमेव न लभते तथा प्रकाश्यं, असुन्दरं चमत्कारे वाच्यमुखप्रेक्षकमिति।

इत्थं व्यङ्ग्यभेदैरेव तद्व्यञ्जकस्य काव्यस्य भेदा भवन्ति इति।

इस प्रकार व्यङ्ग्य के प्रधान भाव से होने वाली ध्वनि के जो अपने भेद हैं और व्यञ्जक के माध्यम से उसके जो भेद हो सकते हैं उन सबका विवेचन करने के बाद अब व्यङ्ग्य के गुणीभाव से होने वाली स्थिति की विवेचना हेतु प्रकरण का आरम्भ करते हैं—

जब व्यङ्ग्य की प्रधानता न रहकर गुणीभाव हो जाता है अर्थात् व्ययङ्ग्य चारुत्व का हेतु तो होता है लेकिन उसकी विश्रान्ति व्यङ्ग्य में न हो पाने के कारण फिर वाच्य में ही लौट जाती है, तब वहाँ गुणीभूत व्यङ्ग्य नाम से काव्य का दूसरा ही प्रकार बन जाता है जिसमें व्यङ्ग्य से अनुगत होने के कारण वाच्य का चारुत्व जो है वह व्यङ्ग्य की अपेक्षा उत्कृष्ट हो जाता है।। ३४।।

वृत्तिकार कारिका के आशय का स्पष्टीकरण करते हैं—

प्रमदा के सौन्दर्य के समान जो व्यङ्ग्य अर्थ प्रतिपादित किया गया है अर्थात् जैसे प्रमदाओं में प्रसिद्ध आँख, कान आदि अङ्गों से अतिरिक्त किन्तु उनसे ही स्फुटित जो सौन्दर्य होता है, उसी तरह वाच्य से भिन्न किन्तु उसी से स्फुटित जो व्यङ्ग्य अर्थ होता है उसकी प्रधानता होने से अर्थात् उसमें काव्य के चारुत्व की विश्रान्ति होने से ध्वनि होती है, यह कहा जा चुका है। उस व्यङ्ग्य के गुणी भाव होने से अर्थात् उसके द्वारा चारुत्व व्यक्त होने पर भी उसकी विश्रान्ति उसमें न हो पाने से उसकी अपेक्षा वाच्य के चारुत्व को प्रकर्ष बन पाने पर गुणीभूत व्यङ्ग्य नामक काव्य का भेद कल्पित किया जाता है।

जहाँ वाच्य की अपेक्षा व्यङ्ग्य के गुणीभाव होने की आठ अवस्थायें बतायी

हैं। वे हैं— व्यङ्ग्य का स्पष्ट होना, दूसरे कां अङ्ग बनना, वाच्य की सिद्धि का अङ्ग होना, स्फुट न होना, प्राधान्य का सन्दिग्ध होना, वाक्य के साथ समान प्राधान्य होना, काकु से आक्षिप्त होना, और सुन्दर न होना।

ध्वन्या०— तत्र वस्तुमात्रस्य वयङ्ग्यस्य तिरस्कृतवाच्येभ्य: प्रतीयमानस्य कदाचिद्वाच्यरूपवाक्यार्थपिक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता।

यथा—

लावण्यसिनधुपरैव हि केयमत्र यत्रोत्पलानि शशिना सह संप्लवन्ते।
उन्मज्जति द्विरदकुम्भतटी च यत्र यत्रापरे कदलिकाण्डमृणालदण्डा:।।

लीला— तत्र वस्त्वादित्रयव्यङ्गे वस्तुनो व्यङ्ग्यस्य ये भेदा उक्तास्तेषां क्रमेण गुणभावं दिदर्शयिषुर्वृत्तिकारस्तिरस्कृतवाच्यव्यङ्ग्यस्य इतराङ्गत्वेन गुणभावं दर्शयति तत्रेत्यादिना— तत्र= काव्यं, तिरसकृतवाच्येभ्य:= वाक्येऽन्वयाभावेन न्यग्भूतवाच्यार्थेभ्य:, प्रतीयमानस्य= प्रतीतिमापद्यमानस्य, वस्तुमात्रस्य= वस्तुरूपस्य, व्यङ्ग्यस्य, कदाचित्= क्वचिदेव, वाच्यरूपवाक्यार्थपेक्षया= वाच्यरूपो यो वाक्यार्थस्तस्य अपेक्षया= वाच्यभूतवाक्याभिप्रायदृष्ट्या गुणीभावे= अप्रधानत्वे, सति, गुणीभूतव्यङ्ग्यता भवतीति शेष:। उक्तं निदर्शयति यथेत्यादिना— यथा= इति निदर्शने, उदाहरणं प्रस्तौति लावण्येत्यादिना— अत्र का इयं अपरा एव लावण्यसिन्धु: हि यत्र उत्पलानि शशिना सह सम्प्लवन्ते यत्र द्विरदकुम्भतटी च उन्मज्जति यत्र अपरे कदलिकाण्डमृणालदण्डा: सन्तीति पदव्यवस्था।

अत्र= इह का= अदृष्टपूर्वा, इयं= एषां, अपरा= प्रसिद्धनदीविलक्षणा, लावण्यसिन्धु:= सौन्दर्यं सरिता, अस्ति, यत्र= यस्यां सरितायां, उत्पलानि= कुवलयानि शशिना= पूर्णेन्दुना सह, सम्प्लवन्ते= सम्मिलितानि, सन्ति, यत्र= यस्यामेव, द्विदरकुम्भतटी= द्विरदस्य गजस्य कुम्भयो: तटी पुरस्थली, उन्मज्जति= उदेति, यत्र, अपरे= अन्ये,, कदलिकाण्डमृणालदण्डा:= कदलिकाण्डौ रम्भास्तम्भौ मृणालदण्डौ विसतन्तु लगुडौ च, सन्तीति।

कामपि लावण्यमयीं प्रमदां दृष्टवा तां प्रति साभिलाषस्य कस्यचिद्युवकस्योक्ति रियम्। अत्र सिन्धु-उत्पल-शशि-द्विरदकुम्भतटी-कलिकाण्डमृणालदण्डशब्दानां स्वार्थस्य वाक्येऽनुपपत्तेस्तिरस्कृतवाच्यत्वेन क्रमश: परिपूर्णता-कटाक्षच्छटा-वदनस्तनयुगल-ऊरुयुगलदोर्युग्मानां तैर्ध्वननं किन्तु तस्य 'अपरैव हि' इति 'केयम् इति चोक्तिभ्यां सामान्यात्मना क्रोडीकरणात्सिन्धूत्पलादिशब्दवाच्यनदीलीलाब्जादिघटितवाक्यार्थे चारुत्व विच्छतिं विधत्ते इति व्यङ्ग्यस्य गुणीभाव: किञ्चात्र प्रथमं वाच्यस्य सरिति चन्द्रकुवलयो: संप्लवनं सहैव द्विरदकुम्भतटयो रुन्मज्जनं रम्भास्तम्भमृणालदण्डा— दिभवनमित्यसम्भाव्यमानैकाधिकरणात्मकनायिकारूपस्य विस्मयविभावताप्राप्ति: पुनस्तामेव पुरस्सरी-

कृत्य कटाक्षवदनस्तनयुगलोरुद्वयबाहुयुग्माद्युक्तव्यङ्ग्या– र्थजातेनोपस्कृतत्वेन अभिलाषाविभावताप्राप्तिः। इदमेन वाच्यस्य सुन्दरत्वं व्यङ्ग्यापेक्षयोन्नत-कन्धरत्वञ्च। किन्तु इयत्येव वाच्यस्य प्राधान्य यदिदं विस्मयविभावात्म व्यङ्ग्यो-पस्कृतत्वेन अभिलाषाया विभावत्वमायाति तथापि रसध्वनौ शृङ्गारे तु तस्यापि गुणतैवेति ध्वनेरेवात्मत्वं सिध्यति काव्यस्येति।

केचित्तु उक्तिमिमां जलविहारावतीर्णप्रमदाजनसौन्दर्यद्रवसुन्दरीकृतनदी-विषयां मन्यन्ते। तत्पक्षे सिन्धुशब्दो न तिरस्कृतवाच्यत्वेन व्यञ्जक उत्पलादि-शब्दानां तु पूर्वोक्तव्यञ्जनपरिपाटी। पक्षेऽस्मिन् सन्ति काश्चन विप्रतिपत्तयः। किञ्च तथामते लावण्यसिन्धुरित्यस्य लावण्येन परिपूर्णा वा लावण्येन सुन्दरीकृता या सिन्धुरिति विग्रहेण भाव्यं येन सिन्धोर्वर्णनमेवोन्मज्जति न तु नायिकायाः। सिन्धौ तु चन्द्रकुवलययोरेकाधिकरणमपि न सम्भवति यदेव विस्मयस्य विभाव-त्वेनोपस्थितमस्ति। अपरञ्च तथाव्याख्याने सहृदयानां हृदयं सिन्धौ पतति न तु नायिकायां येन वाच्यस्याभिलाषविभावत्वमेव न सम्भवतीति न वयं तदनुसरामः।

अन्ये त्वियं नदीसन्निधौ स्नानावतीर्णयुवतीविषयां मन्यन्ते। तत्पक्षे तु प्रथमैव योजना। दीधितिकारः पक्षमेवामुं समर्थयति। मतान्तरमिदं पद्यगतमपरा-शब्दमादाय प्रवर्तितमस्ति। वयन्त्वस्य 'प्रसिद्धनदीस्वरूपभिन्ना' इत्वेवार्थ स्वी-कृत्य प्रथममेव पक्षं समर्थयामस्तस्य सार्वदेशिकत्वात्। वस्तुतस्तु तत्र विस्मयमु-खेनेयति व्यापाराद् व्यङ्ग्यस्य गुणेतेति सर्वत्र। दीधितिकारस्तु प्रसङ्गेऽस्मिन्नद्यदपि योजयति तत्तत्रैव द्रष्टव्यम्। स्यान्नाम विविधरूपेण व्याख्यातं चमत्कारात्म-कव्यापारस्तु विस्मयद्वारैव भवति यद् वाच्यादेवाधिगम्यत इति व्यङ्ग्यस्य गुणीभावः सर्वैः स्वीकृत एवेति।

इस तरह गुणीभूत व्यङ्ग्य की सामान्य व्याख्या कर अब तीनों प्रकार (वस्तु, अलङ्कार, रस) के व्यङ्ग्यों के गुणभाव को उदाहरण के द्वारा समझाने के क्रम में पहले वाच्य के तिरस्कृत होने से आक्षिप्त वस्तु व्यङ्ग्य के इतराङ्गत्व से गुणभाव को प्रदर्शित करने का उपक्रम करते हैं–

उसमें तिरस्कृत वाच्य वाले शब्दों से प्रतीयमान वस्तु मात्र व्यङ्ग्य का कहीं वाच्यरूप वाक्यार्थ की अपेक्षा गुणीभाव होने पर गुणीभूत व्यङ्ग्य होता है। जैसे–

''यहाँ यह कौन–सी दूसरी ही सौन्दर्य सरिता है जिसमें चन्द्रमा के साथ कुवलय भी तैर रहे हैं और हाथी के कुम्भ की तटियाँ ऊपर की ओर उठी हुई है, जहां दूसरे भी, कदलि के स्तम्भ एवं मृणाल के दण्ड भी हैं।''

यह किसी सुन्दरी को देखकर विस्मित एवं उसके प्रति अभिलाषा रखने वाले किसी युवक की युक्ति है। इसमें सिन्धु (सरिता) कुवलय, चन्द्रमा, हाथी के कुम्भ की तटियाँ, कदलिस्तम्भ, मृणाल-दण्ड आदि शब्दों का वाच्य अर्थ वाक्य में अन्वित हो न पाने के कारण तिरस्कृत होकर क्रमशः परिपूर्णता, आँखें, वदन,

स्तन– युगल, जङ्घा एवं भुजाओं को ध्वनित करता है किन्तु वह अपना प्राधान्य छोड़कर 'यह कौन सी दूसरी ही सौन्दर्य सरिता है'' वाले वाच्यांश में चारुता का आधान करता है अतः वह यहाँ गुणीभूत हो जाता है। वाच्यार्थ में सुन्दरता यही है कि सुन्दरता के सारे माने गए चन्द्र एवं कुवलय का एक ही अधिकरण वाले के रूप में वर्णन है– जो कि सामान्यतः एक साथ रह नहीं पाते हैं। उसकी अपेक्षा व्यङ्ग्यार्थ फिका पड़ जाता है। वाच्यार्थ पहले तो विस्मय का विभाव बन जाता है, फिर वह व्यङ्ग्यार्थ से उपस्कृत होकर अभिलाषा का विभाव बन जाता है। इतना भर व्यङ्ग्य गुणीभाव को प्राप्त होता है। फिर वह वाच्यार्थ रस ध्वनि के प्रति समर्पित होकर गौण बन जाता है और ध्वनि ही काव्य की आत्मा बन जाती है।

कुछ विद्वान् इसको स्नानरत प्रमदाओं से युक्त नदी के वर्णन के रूप में लेते हैं। उनके मत में सिन्धु (सरिता) शब्द सौन्दर्य से पूर्ण नदी होता है और उसका वाच्य तिरस्कृत नहीं होता, शेष कुवलय आदि तो पूर्ववत् ही व्यञ्जक बनते हैं लेकिन यह कथन ठीक नहीं लगता क्योंकि नदी में तो चन्द्र एवं कुवलय एक साथ हो नहीं सकते जो कि विस्मय का कारण हैं और वैसा होने से वाच्य विस्मय का विभाव नहीं बन सकता और सहृदय तो सिन्धु की ओर झुक जाते हैं। न कि नायिका की और, वैसा होने से वयङ्ग्य से उपस्कृत होकर भी वाच्यार्थ अभिलाषा का विभाव नहीं बनता।

दूसरे विद्वान् इसे स्नान के लिए नदी के किनारे आई सुन्दरी को लक्ष्य कर कहा गया मानते हैं। इस पक्ष में तो सारी बात प्रथम मत के अनुसार ही रहती है, लेकिन यह एकदेशिक हो जाता है। इसमें नदी को प्रत्यक्ष मानना पड़ेगा, काव्य में तो कल्पना का ही प्राधान्य रहता है। अतः 'इस नदी से भिन्न' कहने की अपेक्षा जिस प्रकार की नदी हमारे अनुभव में है उससे भिन्न कहने से वाक्य सार्वदेशिक हो जाता है। अतः प्रथम मत ही सबसे उपादेय है। तीनों भी मतों में सारतत्व यही है कि चमत्कार का कारणभूत विस्मय वाच्यार्थ के द्वारा उपलक्षित है और व्यङ्ग्यार्थ उसी मे चारुतत्व का आधायक है, अतः यहाँ व्यङ्ग्य गुणीभूत हो गया है।

**ध्वन्या०– अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्-ग्यस्य कदाचिद्वाच्यप्राधान्येन काव्यचारुत्वापेक्षया गुणीभावे सति गुणीभू-तव्यङ्ग्यता, यथोदाहृतम्– 'अनुरागवती सन्ध्या' इत्येवमादि।**

लीला– इत्थं तिरस्कृतवाच्यप्रतीयमानस्य व्यङ्ग्यस्य गुणभावं निर्दर्श्य सम्प्रति अतिरस्कृतवाच्यप्रतीयमानवस्तुव्यङ्ग्यस्य इतराङ्गत्वेन गुणभावं दर्शयितु-मुपक्रमते अतिरस्कृतेत्यादिना– अतिरस्कृतवाच्येभ्यः– अतिरस्कृतं नैव न्यग्भूत-मपितु स्वस्थित्यावस्थितं वाच्यं येषां तादृशेभ्यः, अपि= च, शब्देभ्यः, प्रतीय-मानस्य= प्रकाश्यमानस्य, व्यङ्ग्यस्य= वस्तुव्यङ्ग्यस्य कदाचित्= क्वचित्, चारुत्वा-पेक्षया= काव्यसौन्दर्यदृष्ट्या, वाच्यप्राधान्येन= वाच्यार्थप्रकर्षत्वेन, गुणीभावे= गुणभावं प्राप्ते, सति, गुणीभूतव्यङ्ग्यता, भवति इति। यथा= इति निदर्शने, उदाहृतं= निर्दिशतं, एव, प्राक् 'अनुरागवती सन्ध्या' इति, एव, आदि। पद्यमिदं

समासोक्त्यलङ्कारोदाहरणायोपस्थापितं व्याख्यातचरञ्च। तस्य भावस्तु सन्ध्या दिवसं प्रति नितान्तमनुरक्ता दिवसोऽपि स्नेहेन तत्पुरःसरस्तथापि तयोः कदापि समागमो न भवति, दैवगतिर्विचित्रैव भवतीति। अत्र सन्ध्यादिवसाभ्यां व्यक्तो यो दम्पतिव्यवहारव्यङ्ग्यः सोऽपि सन्ध्यादिवसवाच्यार्थस्यैव चारुतासम्पादनायेति तस्य गुणीभूतत्वम्। अत्र सन्ध्यादिवसशब्दानामतिरस्कृत– वाच्यार्थतयैव नायि-काद्यर्थप्रत्यायकत्वम्। अनुरागशब्दस्यापि योगरूढ्या रक्तिमवाचकत्वेऽपि प्रेमरू-पार्थे तु निरूढलक्षणैवेति तस्यापि अतिरस्कृतवाच्यत्वमेव।

इस प्रकार तिरस्कृत वाच्य शब्दों से प्रतीयमान वस्तु वयङ्ग्य के गुणीभाव का निदर्शन कर अब अतिरस्कृत वाच्य शब्दों से प्रतीयमान व्यङ्ग्य के दूसरे का अङ्ग होने से गुण भाव का भी निदर्शन करने हेतु उपक्रम करते हैं–

जिनका वाच्य तिरस्कृत नहीं है ऐसे शब्दों से भी प्रतीयमान व्यङ्ग्य का कभी-कभी काव्य चारुत्व की दृष्टि से वाच्यार्थ का ही प्राधान्य होने से गुणीभाव हो जाने पर गुणीभूत व्यङ्ग्यता हो जाती है। जैसे उदाहृत किया गया है– सन्ध्या भी अनुराग से युक्त है इत्यादि। यह समासोक्ति अलङ्कार के प्रकरण में उपस्थापित पद्य है। इसका भाव यह है कि सन्ध्या दिवस के प्रति अनुराग से युक्त है और दिवस भी उसका पुरोगामी है लेकिन, दैवगति बड़ी ही विचित्र है, फिर भी इन दोनों का कभी भी समागम नहीं होता। इसमें सन्ध्या एवं दिवस शब्द का वाच्यार्थ एकदम अतिरस्कृत है और उनसे जो दम्पति व्यवहार की प्रतीति होती है वह भी उनके वाच्यार्थ के ही प्रसाधक होने से व्यङ्ग्य का गुण भाव हो जाता है। अनुराग शब्द भी योग रूढि से रक्तिमता के वाचक होने पर भी अभिलाष अर्थ में तो निरूढ लक्षणा के ही विषय होने से उसका भी वाच्यार्थ तिरस्कृत नहीं है।

**ध्वन्या०– तस्यैव स्वयमुक्त्या प्रकाशितत्वेन गुणीभावः यथोदा-हृतम्– 'सङ्केतकालमनसम्' इत्यादि।**

**लीला– इत्थमतिरस्कृतवाच्यस्यापि वस्तुव्यङ्ग्यस्येतराङ्गत्वेन गुणभावं प्रदर्श्य सम्प्रति वाच्यसिद्ध्यङ्गत्वेन तस्य गुणभावं दर्शयितुमुपक्रमते तस्यैवेत्यादिना तस्य= व्यङ्ग्यवस्तुनः, एव, स्वयमुक्त्या= स्वयमेव शब्देनाभिहितत्वेन, प्रकाशी-कृतत्वेन= उद्घाटितत्वेन, गुणभावः= गुणीभूतव्यङ्ग्यता, यथा, उदाहृतं= पूर्वमेव प्रस्तुतं, 'सङ्केतकालमनसं' इत्यादि। कदाचिद्विदग्धया सङ्केतकालमनसं विटं। ज्ञात्वा तत्सूचनाय विकसितनयनाभ्यामभिप्रायं प्रकटय्य लीलाकमलनिमीलनं कृतमिति कथनं लीलाकमलनिमीलनव्यक्तस्य सन्ध्यासमयरूपवस्तुव्यङ्ग्यस्य अभिप्रायावबोधकेन आकूतशब्देन समुद्घाटितत्वात्तस्य तदङ्गत्वेन गुणीभावः प्रतीयमानसन्ध्यासमयमनपेक्ष्याकूत– शब्दार्थानुपपत्तेः।**

**इस प्रकार अतिरस्कृत वाच्य शब्दों से व्यक्त वस्तु रूप व्यङ्ग्य का दूसरे का अङ्ग होने से गुणभाव बताकर अब उसी वस्तु व्यङ्ग्य का वाच्य सिद्ध्यङ्ग के रूप में गुणभाव प्रदर्शित करने का उपक्रम करते हैं–**

उसी वस्तु रूप व्यङ्ग्य का स्वयं उक्ति से ही प्रकाशित कर दिए जाने से भी गुणभाव हो जाता है। जैसे उदाहृत है– 'सङ्केत काल को जानने के इच्छुक' इत्यादि पद्य में। यहाँ किसी चतुर नायिका ने सङ्केत काल की सूचना देने के लिए लीला कमल का सङ्कोचन करके जो सायङ्काल के समय की व्यञ्जना की उसे 'आकूत' अभिप्राय शब्द से कह दिए जाने पर एवं बिना उसके आकूत शब्द के वाच्यार्थ की पूर्ति न होने के कारण व्यङ्ग्य वाच्य सिद्धि का ही अङ्ग बन जाता है, अतः वह गुणीभूत है।

ध्वन्या०– रसादिरूपव्यङ्ग्यस्य गुणीभावो रसवदलङ्कारे दर्शितः, तत्र च तेषामाधिकारिकवाच्यापेक्षया गुणीभावो विवहनप्रवृत्तभृत्यानुयायिराजवत्। व्यङ्ग्यालङ्कारस्य गुणीभावो दीपाकिदविषयः।

लीला– इत्थं वस्तुव्यङ्ग्यस्य गुणभावं प्रदर्श्य सम्प्रति रसालङ्काररूपव्यङ्ग्य-गुणभावप्रदर्शनायोपक्रमते रसादीत्यादिना– दसादिरूपव्य– ङ्ग्यस्य= प्रतमीयमा-नरसभावादेः, गुणीभावः= गुणीभूतव्यङ्ग्यता, रसवदलङ्कारे= रसवदलङ्कारप्रसङ्गे, दर्शितः= प्रतिपादित इति। यथा रसस्य गुणीभावे रसवदलङ्कार एवं भावस्य गुणभावे प्रेयः, रसभावाभासयोर्गुणीभावे ऊर्जस्वी, भावशान्तेस्तथाभवने समाहिता, भावोदयस्य भावशान्तिः, भावसन्धेर्गुणीभावे भावसन्धिः, भावशव-लताया भावशवलत्वञ्चेति। तत्र प्रधानभूतस्य रसादेः कथं गुणीभावस्तथाभूते कथं नैवाचारुत्वमित्याशङ्कानिरासाय कथयति तत्रेत्यादिना तत्र= रसवदाद्यल-ङ्कारविषये, च, तेषां= रसभावादीनां, आधिकारिकवाक्यापेक्षया= फलप्रतिपादक-वाक्यदृष्ट्या, गुणीभावः= गुणीभूतव्यङ्ग्यता, विवहनप्रवृत्तभृत्यानुयायिराजवत्= विवहने परिणये प्रवृत्तः, संलग्नो यो भृत्यः सेवकस्तस्यानुयायिनो राज्ञ इव भवति। यथा विवाहप्रवृत्तस्य भृत्यस्यानुगमने राज्ञस्तदपेक्षया गौगत्वमेव तत्र किन्तु तथाकरणे नैव, राज्ञो महत्वं हीयतेऽपितु तदुपस्थित्या वरयात्राया एव शोभाधिक्यं भवति भृत्योत्कर्षश्च सम्पद्यते तथैव प्रधाने वाक्यार्थे रसादीनां गुणीभावोऽपि।

इत्थं रसादीनां गुणीभावं प्रदर्श्य व्यङ्ग्यालङ्कारस्यापि तथात्वं दर्शयति व्यङ्ग्येत्यादिना– व्यङ्ग्यालङ्कारस्य= प्रतीयमानोपमादेः गुणीभावे= अप्राधान्ये, दीपकादिविषयः= दीपिकालङ्ककारादिविषयः आपततीति शेषः। यथा चन्द्रमयूरैव निशेत्यादौ चन्द्रसज्जनयोर्व्यज्यमानोऽपि उपमालङ्कारो वाच्ययोरुपमानोपमेयय-योरेव सम्बन्धोपपादकत्वेन साधक इति तस्य गुणीभाव इति। आदिपदाद् रूपक-परिणामादीनामपि ग्रहणम्।। ३४।।

इस प्रकार वस्तुरूप व्यङ्ग्य के गुणीभाव का प्रदर्शन कर अब रसादिरूप एवं अलङ्कार रूप व्यङ्ग्य के गुणीभाव का प्रदर्शन करने के लिए उपक्रम करते हैं–

रसादिरूप व्यङ्ग्य जो है उसका गुणीभाव रसवत् आदि अलङ्कार में दिखाया

जा चुका है। जैसे रस के गुणभाव में रसवत्, भाव के गुणभाव में प्रेयः, रसाभास एवं भावाभास के गुणभाव में ऊर्जस्वी, भावशान्ति के गुणीभाव में समाहित आदि।

प्रधान रूप से अपेक्षित रसादि का गुणाव कैसे और वैसा होने पर उसमें सुन्दरता कैसे ? ऐसी आशङ्का के समाधान हेतु कहते हैं— उसमें भी रस, भाव आदि का आधि ।कारिक वाक्य की अपेक्षा गुणभाव जो है वह विवाह में प्रवृत्त भृत्य के अनुयायी राजा की तरह होता है। अर्थात् किसी भृत्य की शादी में राजा भी बराती जाता है। उस समय उस भृत्य की अपेक्षा राजा का महत्त्व गौण ही होता है क्योंकि विवाह का आधिकारिक व्यक्ति भृत्य है न कि राजा। फिर भी राजा का महत्त्व तो घटेगा नहीं उलटे उस भृत्य का उत्कर्ष होता है जो कि राजा के ही उत्कर्ष के रूप में परिणत हो जाता है। उसी तरह रसादि भी प्रधान वाक्यार्थ के अनुगामी बनते हैं तो उस समय उनका महत्व गौण हो जाता है किन्तु उससे रसादि में असुन्दरता नहीं आती।

इस प्रकार प्रतीयमान रसादि के गुणीभाव का प्रदर्शन कर अब अलङ्कार रूप व्यङ्ग्य के गुणीभाव का निर्देश करते हैं—

प्रतीयमान उपमा आदि अलङ्कार के गुणीभाव में दीपक आदि का विषय बन जाता है। जैसे चन्द्रमा के किरणों से निशा आदि पद्य में चन्द्रमा एवं सज्जन, तथा रात्री एवं काव्य कथा की उपमा व्यक्त होने पर भी उसका वाच्य रूप उपमान एवं उपमेय के सम्बन्धोपपादक होने से गुणीभाव हो जाता हैं ।। ३४।।

ध्वन्या०— तथा—

कारिका— प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः।
ये च तेषु प्रकारोऽयमेव योज्यः सुमेधसा।। ३५।।

ये चैतेऽपरिमितस्वरूपा अपि प्रकाशमानास्तथाविधार्थरमणीयाः सन्तो विवेकिनां सुखावहाः काव्यबन्धास्तेषु सर्वेष्वेवायं प्रकारो गुणीभूतव्यङ्ग्यो नाम योजनीयः। यथा—

लच्छी दुहिदा जामाउओ हरी अंस घरिणिआ गङ्गा।
आमिअमिआ अङ्क सुआ अहो कुडुम्बं महोअहिणो।।

लीला— एवं व्यङ्ग्यस्य गुणभावं प्रदर्श्य सम्प्रति तस्य प्रयोज्यक्षेत्रनिर्देशककारिकावतारणाय वृत्तिकृदुपक्रमते तथेत्यादिना-तथा= तथैव।

कारिकामवतारयति प्रसन्नेत्यादि ये प्रसन्नगम्भीरपदाः सुखावहाः काव्यबन्धाः च तेषु एव अयं प्रकारः सुमेधसा योज्यः इति पदव्यवस्था।

ये, प्रसन्नगम्भीरपदाः= प्रसन्नानि प्रसादगुणयुक्तानि माधुर्यौ= जसोस्तु रसध्वनावेव स्थितित्वात् गम्भीराणि व्यङ्ग्यार्थाक्षेपकयोग्यानि च पदानि येषु तथा सुखावहाः= सुखेन बोध्याश्चारुत्वहेतुत्वादाह्लादकाश्च, काव्यबन्धाः= काव्यप्रबन्धाः, भवन्ति, तेषु= तादृशेषु काव्येषु एव= इति व्यवच्छेदे न तु माधुर्यो

जोविषयेषु, अयं= अनन्तरनिर्दिष्टः, प्रकारः= भेदो गुणीभूतव्यङ्ग्याख्यः, सुमेधसा= सुबुद्धिना कविना, योज्यः= सम्पादनीय इति।

व्यङ्ग्यमात्रस्य गुणीभावोऽयं प्रायेण तथाविधे काव्ये योज्यां यत्र प्रसादवन्ति पदानि भवन्ति विपुलार्थव्यञ्जकानि च विषयश्च सहृदयाह्लादकां भवति विशेषेणेति। किन्तु ध्वन्यसम्भवे एवास्य योग्यता। उभयाशक्तौ तु काव्यमेव निरर्थकमलजागलस्तनवदिति।

कारिकां विवृणोति वृत्तिकारः ये इत्यादिना— ये, च , एते= प्रसिद्धाः अपरिमितस्वरूपाः= असीमितशब्दाः, अपि, प्रकाशमानाः= प्रकाशगुणेन द्योतमानाः, तथाविधार्थरमणीयाः= तथाविधास्तादृशाः त्रिविधव्यङ्ग्यरूपा ये अर्थास्तैः रमणीया सन्तः, विवेकिनां= सहृदयानां, सुखावहाः= आह्लादकाः, काव्यबन्धाः= काव्यप्रबन्धाः, सर्वेषु= निखिलेषु, तेषु= काव्यबन्धेषु, एव, अयं= निर्दिष्टः, गुणीभूतव्यङ्ग्यो, नाम, प्रकारः= भेदः, योजनीयः= समुपन्यसनीय इति। कारिकायामस्यां कुत्रचित्तु 'एवं योज्यः, इति क्वचित्तु :एवं योज्यः' इति पाठो दृश्यते। तत्वतस्तु उभयोरपि पाठयोरनुपपत्तिः प्रतीतैव तथान्वये। एवमिति पाठे ''प्रकारोऽन्य'' इति अनन्तरोक्तकारिकायां गुणीभूतव्यङ्ग्ययोजना— प्रकारस्य निर्देशाभावादर्थसङ्गतिर्नैव सम्भवति। यथा च दीधितौ एवमिति पाठं मत्वा यद्व्याख्यातं 'एवमुक्तरूपत्रयेण योज्यः 'इति तदपि अनन्तरोक्तकारिकायां तथानिर्देशाभावान्न तथोपयुक्तं यतः प्रकारत्रयस्य गुणभावस्तु वृत्तिकारस्यैव योजना न तु कारिकाकारस्य। तेन तथामते कारिकयोः सम्बन्धता न सभवति। तद्विपरीतं तस्य 'एवेति' पाठै निर्दिष्टे काव्यबन्धे ध्वनेः पदिरहारः स्याद यत्नैव कस्यापि सम्मतम्। तेनाऽस्माभिः 'तेषु एव अयं प्रकारः' इति पदव्यवस्था मत्वा माधुर्योज्सोस्तस्य गुणीभूतव्यङ्ग्यस्य यथासम्भवपरिहारो मतः। तदेवोदाहर्तुमुपक्रमते यथेत्यादिना यथा= इति निदर्शने,। उदाहरणं प्रस्तौति लच्छीं इत्यादि— लच्छी (लक्ष्मीः) दुहिदा (दुहिता) हरी (हरिः) जामाउओ (जामाता) घरिणिआ (गृहिणी), गङ्गा अमिअभिअङ्का (अमृतमृगाङ्कौ) अ (च) सुआ (सुतौ) अहोः तंस (तस्य) महोअहिणो (महोदधेः) कुटुम्बं (कुटुम्बम्) इति पदव्यवस्था।

लक्ष्मीः= कमला, दुहिता= पुत्री, हरिः= विष्णुः, जामाता= दुहितृपतिः, गृहिणी= गेहिनी, गङ्गा = जाह्नवी, अमृतमृगाङ्कौ= पीयूषचन्द्रमसौ, सुतौ= तनयौ, इति, अहो= परमविस्मयपदं, तस्य= प्रसिद्धस्य, महोदधेः= समुद्रस्य, कुटुम्ब= परिवार इति।

अत्र यस्या दर्शनमात्रेणापि वाञ्छितमेव लभ्यते सैव गङ्गा गेहिन्येव, भुक्तिर्मुक्तिश्च यस्य कृपायामवलम्बिता स हरिरेव जामाता, यया सर्वमेव साध्यं भवति सा श्रीर्दुहितैव, पुत्रौ च अमृतमृगाङ्कौ ययोः प्रथमो निधनादिकष्टहारको

द्वितीयश्च परमाह्लादनक्षमः इति समुद्रस्य प्रतीयमाना त्रैलोक्यसारभूतता अहो कुटम्बमिति वाच्यार्थस्य पोषकत्वाद् गुणीभावमनुभवति। यतस्तत्प्रतीयमाना-र्थोपस्कृतं एव वाच्यार्थो विस्मयविभावतां भजते चमत्कारातिशयञ्च विधत्त इति। अपि चात्र विशेषणानां साभिप्रायत्वेन परिकरालङ्कारः सोऽपि वाच्यार्थस्यैव पोषक इति।। ३५।।

इस प्रकार व्यङ्ग्य का गुणभाव बताकर अब उसके क्षेत्र का निर्देश करने वाली कारिका के अवतारण हेतु उपक्रम करते हैं–

इस तरह–

प्रसाद गुण से युक्त एवं गम्भीर अर्थ वाले पद हैं जिसमें ऐसे सहृदयों को आह्लादित कर पाने वाले जो काव्य प्रबन्ध हैं, उनमें ही बुद्धिमान् कवि को इस प्रकार के गुणीभूत व्यङ्ग्य का प्रयोग करना चाहिए।

वृत्तिकार कारिका के आशय का विस्तार करते हैं–

जो भी ये अपिरिमित स्वरूप अर्थात् जिसके अनेक उपयोग हो सकते हैं ऐसे शब्दों वाले होकर भी प्रकाशमान अर्थात् प्रसाद गुण से युक्त होने के कारण स्पष्ट अर्थ से द्योतित, उस प्रकार के अर्थात् प्रतीयमान अर्थ के होने से रमणीय होते हुए विवेक युक्त अर्थात् काव्यमर्मज्ञों का आह्लादन कर पाने वाले काव्य प्रबन्ध हैं उन सब में गुणीभूतव्यङ्ग्य नामक इस प्रकार की योजना करनी चाहिए। जैसे–

''लक्ष्मी बेटी है, विष्णु दामा हैं, गङ्गा घर वाली है, अमृत एवं चन्द्रमा लड़के है। उस भाग्यशाली समुद्रा का परिवार क्या ही निराला है।''

इसमें जिसके दर्शन मात्र से सारी इच्छायें पूरी होती हैं वैसी गङ्गा का घरवाली होना, भुक्ति एवं मुक्ति के दाता विष्णु का दामाद होना, जिससे सारे काम बन जाते हैं वैसी लक्ष्मी का बेटी होना, जिसमें मरण जन्य शोक का नितान्त अभाव है वैसा अमृत एवं सबको आह्लादित कर पाने वाला चन्द्रमा का बेटे होना आदि कथन से प्रतीयमान समुद्र का जो त्रैलोक्य का सार भूतत्व है उसका क्या ही निराला परिवार है रूप वाच्यार्थ के उपस्कारक होने से गुणभाव हो गया है क्योंकि उस प्रतीयमान अर्थ के द्वारा उपस्कृत होने पर ही वाच्यार्थ विस्मय का विभाव बन पाता है और उससे चमत्कार का अतिशयत्व आ जाता है।। ३५।।

कारिका– वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशानुगमे सति।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते।। ३६।।

ध्वन्या०– वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशस्यालङ्कारस्य वस्तुमात्रस्य वा यथायोगमनुगमे सति च्छायातिशयं बिभ्रल्लक्षणकारैरेकदेशेन दर्शितः। स तु तथारूपः प्रायेण सर्व एव परीक्ष्यमाणो लक्ष्ये निरीक्ष्यते।

लीला– इत्थं गुणीभूतव्यङ्ग्यस्यान्तःसारत्वेन काव्यविच्छित्त्याधायकत्वं निर्दिश्य सम्प्रति वाच्यालङ्कारसमूहस्यापि तत्सङ्गत्या शोभातिशयत्वं निर्दिशति कारिकारः वाच्येत्यादिना– अयं वाच्यालङ्कारवर्गः व्यङ्गांशानुगमे सति एव प्रायेण परां छायां बिभ्रत् लक्ष्ये निरीक्ष्यते इति पदव्यवस्था।

अयं= एष: प्रसिद्ध:, वाच्यालङ्कारवर्ग:= वाच्यार्थशोभातिशयहेतुरूपमाद्यलङ्कारसमूह: अलङ्क्रियतेऽनेनेति व्युत्पत्त्याऽवगम्य:, व्यङ्ग्यांशानुगमे= व्यङ्ग्य: प्रतीयमानार्थो वस्त्वलङ्काररूपस्तस्य अंशो गुणीभाव: तस्य अनुगम: संसर्गस्तस्मिन्, सति= विद्यमाने, एव= इति व्यवच्छेदे न तु केवलं भासमानमात्रे प्रायेण= बाहुल्येन, परां= उत्कृष्टां, शोभां= विच्छित्तिं, विभ्रत्= दधत्, लक्ष्ये= उदाहरणे, निरीक्ष्यते= दृश्यत इति।

सामान्यावस्थायामापातत एव तुच्छतया भासमानोऽपि वाच्यालङ्कारवर्ग: गुणीभूतेनापि व्यङ्ग्येनानुगते सति बालक्रीडाकालीनराजत्वन्यायेनातिशयितामेव चमत्कारितामावहतीति। इत्थं काव्यस्योत्कर्षाधायकतया गुणीभूतोऽपि व्यङ्ग्यो ध्वनिरूपतामेव धत्ते। यथोक्तं-प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्। धत्ते रसादितात्पर्यपर्यालोचनया पुन: इति।

कारिकां विवृणोति वृत्तिकारो वाच्येत्यादिना अयं= एष: प्रसिद्धि:, वाच्यालङ्कारवर्ग:= उपमाद्यलङ्कारसमूह: व्यङ्ग्यांशस्य= गुणभावत्वे अपि व्यङ्ग्यरूपस्य, अलङ्कारस्य= उपमादे:, वा= अथवा, वस्तुमात्रस्य= अलङ्काराश्रयरहितकेवलवस्तुनोऽपि, यथोयोगं= यथानुकूलं, अनुगमे= सम्पर्के, सति, छायातिशयं= विच्छित्युत्कर्ष, विभ्रत्-दधान:, लक्षणकारै:= काव्यशास्त्रिभि:, एकदेशेन= आपातत: प्राय: सर्वेष्वेवालङ्कारेषु व्यङ्ग्यांशसमावेशनरूपेण— वाच्येऽप्यलङ्कारेंऽशतो व्यङ्ग्यस्यावस्थितिर्भवत्येव अतथाभवने तस्य शोभातिशायित्वमेव न सिध्यति। यथा दीपके उपमालङ्कारो गुणभावेन प्रतीत्य तस्य शोभातिशायित्वं पुष्णाति, समासोक्तौ च प्रतीयमानमप्रस्तुतं वस्तु प्रस्तुतस्योत्कर्षनिमित्तं भवति। तथा वाच्यार्थपक्षपातिभिस्तैरपि काममेकदेशवर्तितत्वेनापि शोभाधायकत्वेन तत्र व्यङ्ग्यस्यावस्थिति: सम्मतैवेति, दर्शित:= निर्दिष्ट:। तथारूप:= तादृशप्रकृतिक:। व्यङ्ग्यानुप्राणि:, स: अलङ्कारवर्ग:, तु, प्रायेण= बाहुल्येन, सर्व:= निखिल: एव लक्ष्ये= उदाहरणे, परीक्ष्यमाण:= विविच्यमान:, निरिक्ष्यते= दृश्यत इति। लोचनकार: एकदेशपदेन नामग्रहणे नामैकदेशग्रहणमिति न्यायेन एकदेशविवर्तिरूपकं गृह्णाति। रूपकं द्विविधं साङ्गं निरङ्गञ्च। तत्र साङ्गं द्विविधं समस्तवस्तुविषयि एकदेशविवर्ति च। यत्र रूपकस्य सर्वेषामेवावयवानां शब्दैर्वाच्यवृत्तित्वं तत्प्रथमं केषाञ्चिदेवावयवानां तथाभवने द्वितीयं भवति। द्वितीये कतिपयानामङ्गानामर्थत एव ज्ञापनं भवति तेन तदेकदेशविवर्ति इत्युच्यते। यथा— 'राजहंसैरवीज्यन्त शरदैव सरोनृपा: इत्यत्र हंसानां यत्प्रतीयमानं चामरत्वं तन्नृपा इति वाच्येऽर्थे गुणतां भजे तथैवेति।

य: खलु काव्यशोभातिशयहेतुर्वाच्यालङ्कारसमूह: सोऽपि गुणीभूतव्यङ्ग्यान्त: सारत्वेनैव शोभते इति वस्तु अलङ्कारश्च गुणीभूतव्यङ्ग्यस्य: विषय इति भाव:।

इस प्रकार गुणीभूत व्यङ्ग्य के सम्पर्क से ही काव्य शोभा का उत्कर्ष का हो पाने का निर्देश कर अब वाच्यालङ्कारवर्ग में भी उसका जो महत्व है उसका प्रतिपादन करते हैं—

ये काव्य की शोभा के अतिशय के निमित्त जो उपमा आदि वाच्य अलङ्कार हैं भी अलङ्कार रूप वा वस्तुरूप व्यङ्ग्य के अंश अर्थात् गुणभाव के द्वारा अनुप्राणित होने पर ही विशेष शोभा को धारण करते हुए प्रायः उदाहरणों में देखे जाते हैं।। ३६।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

यह वाच्य अलङ्कारों का समूह जो है वह भी अलङ्कार वा वस्तु मात्र रूप व्यङ्ग्य के गुणभाव का यथायोग अनुगम अर्थात् सम्पर्क होने पर ही शोभा की अतिशयता को धारण करता हुआ लक्षणकारों—काव्यशास्त्रियों ने एकदेश में विवर्ती व्यङ्ग्य के रूप में निदर्शित किया है उस रूप का वह जो है प्रायः सभी ही लक्ष्य में विवेचना करने से देखा जाता है।

ध्वन्या०— तथाहि-दीपकसमासोक्त्यादिवदन्येऽप्यलङ्काराः प्रायेण व्यङ्ग्यालङ्कारान्तरवस्त्वन्तरसंस्पर्शिनो दृश्यन्ते। यतः प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया। कृतैव च सा महाकविभिः कामपि काव्यच्छायां पुष्यति, कथं ह्यतिशययोगिता स्वविषयौचित्यचेन क्रियमाणा सती काव्येनोत्कर्षमावहेत्।

लीला— गुणीभूतव्यङ्ग्यसम्पर्केण वाच्यस्य यच्छोभातिशयत्वमुक्तं तदुपादनाय प्रकरणमारभते वृत्तिकारस्तथाहीत्यादिना-तथा हि= इति निदर्शने, दीपकसमासोक्त्यादिवत्= दीपकेन समासोक्त्या तत्प्रकृतिकेनान्येनालङ्कारेण इव, अन्ये= इतरे, अपि= च यदलङ्कारान्तरं स्वभिन्नालङ्कारः यच्च वस्त्वन्तरं स्ववाच्यभिन्नवस्तु ते यथायोगं संस्पृशन्ति तच्छीलास्तादृशाः, अत एव तथाविधव्यङ्ग्यानुप्राणितत्वेन चारुत्वातिशययुक्ताः, प्रायेण= बाहुल्येन, दृश्यन्ते= विलोक्यन्ते इति। यथा दीपकं प्रतीयमानोपमया द्योतते यथा च समासोक्तिरप्रस्तुतप्रतीयमानवस्त्वन्तरेण शोभातिशायिनी भवति तथैवेतरेऽलङ्कारा अपि प्रतीयमानेन अलङ्कारान्तरेण वा वस्त्वन्तरेण उत्कर्षशालिनो भवन्तीति।

उक्तं निदर्शनेन समर्थयति यत इत्यादिना— यतः= यस्मात्, प्रथमं= आद्यं, तावत्= इति साकल्ये, सर्वालङ्कारेषु= सर्वविधेष्वेवालङ्कारेषु, अतिशयोक्तिगर्भता= अतिशयोक्तिः, गर्भे मध्ये येषां ते तेषां भावस्तत्ता, शक्यक्रिया= कर्तुं शक्या। महाकविभिः= अतिशयोक्तिगर्भता, कामपि= अपूर्वां काव्यच्छविं= काव्यविच्छित्तिं, पुष्यति= वर्धयति, कथं, हि, अतिशययोगिता= अतिशयवर्णनयुक्तता, स्वविषयौचित्येन= स्वे विषये यदेव औचित्यं उपयुक्तत्वं तेन, क्रियमाणा= विधीयमाना, सती, काव्ये= कविकृतौ, उत्कर्षं= प्रौन्नतिं, न= नैव, आवहेत्= कुर्यात्।

यथा दीपके उपमालङ्कारो ध्वन्यते यथा वा समासोक्तौ अप्रस्तुतवस्तु तथैव

सर्वेष्वेवालङ्कारेषु स्वविषये यदौचित्यं तदानुकूल्येन प्रयुक्तातिशयोक्तिरपि व्यञ्जनाविषया सम्पद्यते यथा काव्यविच्छित्तिः परं पुष्यते। यथा लोचने—

''यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत्।
दूर्वाकाण्डविडम्बकश्च निविडो यत्पाण्डिमा गण्डयोः
कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः।।''

अत्र भगवन्तं प्रति नितान्तासक्ततया युवतीनां विश्रम्य विलोकनान्त्रेयोर्निस्थेमत्वं लूनकमलिनीनालवद्वपुषां दारिद्रयचं गण्डेयोश्च दूर्वाकाण्डविडम्बकपाण्डिमा तत्सर्वं तस्य मन्मथतनोः सौभाग्यविषयः सम्भाव्यत एवेति स्वविषयौचित्येनातिशयोक्तिरपि काव्ये विच्छित्त्यतिशायिनी। अनौचित्ये तु तथा छविनाशिकाऽपि। यथा

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा।
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम्।।

इत्यत्र गगनापेक्षया स्तनयोर्यत्स्थौल्यमुक्तं तदोचित्याभावेन शोभाया ह्रासकारणमेवेति।

गुणीभूत भी व्यङ्ग्य के सम्पर्क से जो काव्य का शोभातिशयत्व बताया गया था, उसे प्रतिपादन करने के लिए प्रकरण का आरम्भ करते हैं—

इस प्रकार यह दीपक एवं समासोक्ति आदि के समान और भी अलङ्कार प्रायः दूसरे व्यङ्ग्य अलङ्कार वा वस्तु का स्पर्श करते हुए देखे जाते हैं। क्योंकि पहले तो सभी अलङ्कारों में ही अतिशयोक्ति का व्यङ्ग्य के रूप में होना बनाया जा सकता है। महाकवियों द्वारा उस तरह प्रयुक्त वह काव्य की विशिष्ट शोभा को पुष्ट करती हैं। अपने विषय के औचित्य के साथ प्रयुक्त अतिशयता काव्य में उत्कर्ष का आधान कैसे नहीं करती अपितु करेगी ही यदि वैसी अतिशयोक्ति विषय के औचित्य अनुकूल हो।

ध्वन्या०— भामहेनाप्यतिशयोक्तिलक्षणे यदुक्तम्—

सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।। इति।

तत्रातिशयोक्तिर्यमलङ्कारमधितिष्ठति कविप्रतिभावशात्तस्य चारुत्वातिशययोगोऽन्यस्य त्वलङ्कारमात्रतैवेति सर्वालङ्कारशरीरस्वीकरण— योग्यत्वेनाभेदोपचारात्सैव सर्वालङ्कार- रूपेत्ययमेवार्थोऽवगन्तव्यः। तस्याश्चालङ्कारान्तरसङ्कीर्णत्वं कदाचिद्वाच्यत्वेन कदाचिद्व्यङ्ग्यत्वेन। व्यङ्ग्यत्वमपि कदाचित्प्राधान्येन कदाचिद्गुणभावेन। तत्राद्ये पक्षे वाच्यालङ्कारमार्गः। द्वितीये तु ध्वनावन्तर्भावः। तृतीये तु गुणीभूतव्यङ्ग्यरूपता।

लीला— अलङ्कारशास्त्रस्याद्याचार्येण भामहेन त्वतिशयोक्तेः सर्वालङ्कारसामान्यत्वमेवोक्तं यन्न कदापि व्यङ्ग्यत्वेनोदेति वाच्यव्यङ्ग्ययोः क्रमेण प्रतीतेः सामान्यविशेषयोस्तु सदैव प्रतीतेः, तेन कथमतिशयोक्तिः सर्वालङ्कारेषु व्यङ्ग्यतयाऽन्तर्लीना सम्भवतीत्याशङ्कानिवारणाय प्रकरणमारभते भामहेनेत्यादिना— भामहेन= तदाख्येन काव्यशास्त्राचार्येण, अपि, अतिशयोक्तिलक्षणे= अतिशयोक्त्यलङ्कारस्वरुपावधारणप्रकरणे, यद्, उक्तं= कथितं,— तदेवावतारयति सैषेत्यादिनासा एषा सर्वा एव वक्रोक्तिः, अनया अर्थः विभाव्यते, अस्यां कविना यत्नः कार्यः, अनया विना कः अलङ्कारः इति पदव्यवस्था।

सा= लक्षितः, एषा= अतिशयोक्तिः, सर्वा:= निखिलाः, एव, वक्रोक्तिः= अलङ्कारप्रकारः, यथा तेनैवोक्तं— 'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः' इति, यस्य वक्रस्य सामान्येतरत्वेन प्रयुक्तस्य अभिधेयस्य वाच्यस्य शब्दस्य वाचकस्य च या उक्तिः लोकोत्तरत्वेनावस्थापनं सा एव वाचामलंकृतिरलङ्कारः, इष्टा सम्मतेत्याशयः, अनया= अतिशयोक्त्या, अर्थः विभाव्यते= विचित्ररूपेण अभिनवीक्रियते तेन= हेतुना, कविना अस्यां= अतिशयोक्त्यां तदुपन्यासे, यत्नः= उद्यमः, कार्यः= विधातव्यः, यस्मात्, अनया= अतिशयोक्त्या, विना, कः= कीदृशः, अलङ्कारः, सम्भवतीति, तत्र= तथाकथने, अतिशयोक्तिः, यं अलङ्कारं, अधितिष्ठति= पोषकत्वेनाश्रयति, तस्य= तादृशस्यालङ्कारस्य, कविप्रतिभावशात्= काव्यकारप्रज्ञाबलेन, चारुत्वातिशययोगः= सौन्दर्योत्कर्षः–अन्यस्य= तद्विपरीतस्य अतिशयोक्त्यपोषितस्य, तु, अलङ्कारमात्रता–अलङ्कारजातीयत्वमेव, न तु शोभाधायकत्वमपीति, इति= सर्वालङ्कारशरीरस्वीकरणयत्वेन= सर्वे निखिलाश्च ते अलङ्कारास्तेषां शरीरस्य स्वरूपस्य स्वीकरणे निष्पादकत्वेनाङ्गीकरणे योग्यत्वेन समर्थत्वेन, अभेदोपचारात्= तादात्म्याध्यवसायात्, सा= अतिशयोक्तिः, एव, सर्वालङ्काररूपा= निखिलालङ्काररूपा, इति, अय, एव, अर्थः= आशयः, अवगन्तव्यः= ज्ञातव्य इति। तस्याः= अतिशयोक्त्याः, च, अलङ्कारान्तरसङ्कीर्णत्वं= अन्यालङ्कारस्वीकरणत्वं, कदाचित्, वाच्यत्वेन= अभिधेयरूपेण, कदाचित्, व्यङ्ग्यत्वेन= प्रतीयमानत्वं, अपि= च, कदाचित्, प्राधान्येन= चारुत्वपर्ययवसायितया मुख्यभावेन, कदाचित्, गुणभावेन= गुणीभूतत्वेन। तत्र= तेषु आद्ये= प्रथमे, प्रकारे= भेदे, वाच्यालङ्कारमार्गः= वाच्यालङ्कारविषयः, द्वितीये= प्राधान्ये व्यङ्ग्यत्वे, ध्वनौ, अन्तर्भावः= समावेशो रसध्वनित्वेन तृतीये= गुणभावेनव्यङ्ग्यत्वेन, तु, गुणीभूतव्यङ्ग्यरूपता, इति।

प्रकरणस्यास्यायमाशयः— अतिशयोक्तेरलङ्कारसामान्यत्वेनोपस्थापितत्वात्कथं तस्या व्यङ्ग्यत्वमिति नैवाशङ्कनीयं यतोः, भामहेन यत्सैषा सर्वैव वक्रोक्तिः इत्यादि यदुक्तं तस्यायमेवाशयो यत्तदधिष्ठानेन अलङ्कारत्य चारुत्वप्रकर्षोऽन्यथा

तज्जातीयतैवेति तस्याः सर्वालङ्कारूपत्वम्। अतिशयिता सामान्यकथनमतिक्रान्ता या उक्तिः सैवातिशयोक्तिः, एवञ्च वक्रा प्रसिद्धिविलक्षणा या उक्तिः सा वक्रोक्तिरिति च सर्वालङ्काराणामलङ्करणक्षमताधायिका सा। प्रसिद्धिमात्रमाश्रित्य कथने तु अलङ्कारस्य जातीयत्वमेव सम्भवति न तु चमत्काराधायकत्वमिति हेतोस्तस्याः सर्वालङ्कारमयता सम्मता। तस्याश्च अन्यालङ्कारस्वीकरणत्वमपि क्वचित्तु वाच्यत्वेन भवति यथा 'अपरैव हि केयमत्र' इत्यत्र रूपकेऽप्यतिशयो वाच्य एव, (केचित्त्वत्र भेदकातिशयोक्ति यत्रोत्पलानीत्यादौ रूपकीतिशयोक्तिं मन्यन्ते भोजराजमते त्वत्र समासोक्तिरिति च) क्वचित्तु प्राधान्येन व्यङ्ग्यत्वेन यथा लोचनकारस्य—

केलीकन्दलितस्य विभ्रममधोर्धुर्यं वपुस्ते दृशौ
भङ्गीभंगुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः।
आपातेपि विकारकारणमहो ! वक्त्राम्बुजन्मासवः
सत्यं सुन्दरि वेधसस्त्रिजगतीसारस्त्वमेकाकृतिः।

इत्यत्र, क्वचित्तु गुणीभूतव्यङ्ग्यत्वेन यथा 'उपोढरागेणेत्यत्रेति' अतिशयोक्तेस्तस्यः प्रकारा अवसेयाः। तस्याः पृथगलङ्काररूपत्वमपि सम्भवत्येव अन्यालङ्कारसङ्कीर्णत्वञ्चेति समवबोधनीयम्। पृथग्रूपा वा अपि तस्याः सर्वालङ्कारस्वरूपग्राह्ययोग्यताभावादभेदोपचारो भेदेऽपि 'आयुर्घृत' मित्यादिवत्। उपचारे हि निमित्तं प्रयोजनं मुख्यार्थबाधश्चेति त्रितयमवश्यमेव वक्तव्यम् अत्र तु अलङ्कारशरीरस्वीकरणयोग्यत्वरूपमुख्यार्थसादृश्यम्। निमित्तं तत्सम्बन्धेन चारुत्वातिशयस्य द्योतनं प्रयोजनं मुख्यार्थबाधश्च कविप्रतिभातारतम्यकृता— तिशयतारतम्ययोगित्वेनेति।

अतिशयोक्ति तो सभी अलङ्कारों में सामान्य मानी गई और सामान्य तो कभी भी व्यङ्ग्य नही हो सकता क्योंकि वाच्य और व्यङ्ग्य की प्रतीति में आनुपूर्वी (क्रम) होती है किन्तु सामान्य एवं विशेष तो एक ही समय में उपस्थिति होते हैं। अतः कैसे यह माना जाय कि अतिशयोक्ति सभी अलङ्कारों में छिपी रहती है ? इस आशङ्का का निवारण के हेतु कहते हैं—

भामह ने भी अतिशयोक्ति के लक्षण में जो कहा है—

'उस तरह प्रसिद्ध जो अतिशयोक्ति है वह सभी ही वक्रोक्ति ही है, इसी के द्वारा ही अर्थ विचित्र रूप से अभिनव किया जाता है, कवि को इसी के प्रतिपादन में विशेष प्रयत्न करना चाहिए, इसके विना कोई अलङ्कार हो नहीं सकता।

उसमें अतिशयोक्ति जिस अलङ्कार में पोषक के रूप में रहती है कवि की प्रतिभा के बल से उस अलङ्कार में चारुत्व का अतिशययोग होने से, दूसरों में तो अलङ्कार की जातीयता मात्र रहने से सभी अलङ्कारों के स्वरूप के स्वीकरण के योग्य रूप में भेद के होते हुए भी अभेद के उपचार होने से वह अतिशयोक्ति ही सर्वालङ्कार रूपा है, इस तरह इसका अर्थ समझ लेना चाहिए।

कहने का अशय यह है कि अतिशयोक्ति का अर्थ है प्रसिद्ध से विलक्षण ढङ्ग का कथन और वह सामान्य भी है और विशेष भी। अतः उसकी अलङ्कार के रूप में पृथक् सत्ता भी है और दूसरे से सङ्कीर्ण रूप, में भी। वैसा होने पर भी उसमें सभी अलङ्कारों के स्वरूप के ग्राह्य हो पाने के निमित्त से चारुत्व के उत्कर्ष के प्रयोजन से और कवि की प्रतिभा के वशीभूत होकर मुख्यार्थ बाध होने से भी अन्य अलङ्कारों के साथ उसका अभेद उपचार माना गया है। विना इसके अन्य अलङ्कारों में चारुत्व के योग के हो न पाने से ही इसकी उपस्थिति हर अलङ्कारों में आवश्यक है।

उस अतिशयोक्ति का दूसरे अलङ्कारों से सङ्कीर्णत्व जो हे वह कभी तो वाच्य के रूप में कभी तो व्यङ्ग्य के रूप में अवस्थान होता है। व्यङ्ग्य के रूप में अवस्थान होता है। व्यङ्ग्य के रूप में रहने की दशा में भी वह कहीं प्रधान रूप से रहती है तो कहीं गुणभाव से। उसमें से भी पहले पक्ष में वह वाच्यालङ्कार का मार्ग बन जाती है, दूसरी स्थिति में वह ध्वनि में अन्तर्भूत हो जाती है और तीसरी में उसकी गुणीभूत व्यङ्ग्यता होती है।

ध्वन्या०— अयं च प्रकाराऽन्येषामप्यलङ्काराणामस्ति तेषां तु न सर्वविषयः। अतिशयोक्तेस्तु सर्वालङ्कारविषयोऽपि सम्भवतीत्ययं विशेषः। येषु चालङ्कारेषु सादृश्यमुखेन तत्त्वप्रतिलम्भः यथा रूपकोपमातुल्ययोगितानिदर्शनादिषु तेष गम्यमानधर्ममुखेनैव यत्सादृश्यं तदेव शोभातिशयशालि भवतीति ते सर्वेऽपि चारुत्वातिशययोगिनः सन्तो गुणीभूतव्यङ्ग्यस्यैव विषयाः। समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानाद्गुणीभूतव्यङ्ग्यता निर्विवादैव। तत्र च गुणीभूतव्यङ्ग्यतायामलङ्काराणां केषाञ्चिदलङ्कारविशेषगर्भतायां नियमः। यथा व्याजस्तुतेः प्रेयोलङ्कारगर्भत्वे। केषाञ्चिदलङ्कारमात्रगर्भतायां नियमः। यथा सन्देहादीनामुपमागर्भत्वे। केषाञ्चिदलङ्काराणां परस्परगर्भतापि सम्भवति। यथा दीपकोपमयोः। तत्र दीपकमुपमागर्भत्वंन प्रसिद्धम्। उपमापि कदाचिद्दीपकच्छायानुयायिनी। यथा मालोपमा। तथा हि 'प्रभामहत्या शिखयेव दीपः' इत्यादौ स्फुटेव दीपकच्छाया लक्ष्यते।

लीला— एवमतिशयोक्तेरलङ्कारान्तरेष्वप्यनुप्रवेशात्मकत्वं निरूप्य अलङ्कारांनतरणामपि तथोत्वेऽपि तेभ्योऽस्या वैशिष्ट्यं प्रतिपादयति अयमित्यादिना–अयं= अलङ्कारान्तरेऽप्यनुप्रवेशात्मकः, पकार= भेदः, अन्येषां= तद्भिन्नामितरेषां, अलङ्काराणां, अपि, अस्ति, तेषां= तादृशानां, तु, न= नैव, सर्वविषयः= सर्वस्वरूपग्राह्यत्वम्। अतिशयोक्तेः, तु, सर्वालङ्कारविषयः= निखिलालङ्करलक्ष्यं, अपि, सम्भवति, इति= इत्थम्, अयं, विशेषः= वैलक्षण्यमिति।

इतरेषामप्यलङ्काराणामलङ्कारान्तरानुप्रवेशात्मकत्वं सम्भवति किन्तु तत्त्वा-

चित्कमेव न तु सार्वत्रिकमतिशयोक्तेस्तु सार्वत्रिकमेवालङ्कारान्तरानुप्रवेश– कत्व-मिति तस्य वैलक्षण्यमितरेभ्यस्तस्याः प्रथमत्वेनोपपादने हेतुश्चेत्याशयः।

अन्येषामपि प्रकारः सम्भवतीति यदुक्तं तन्निदर्शनायोपक्रमते येष्वित्या-दिना– येषु, अलङ्कारेषु, च, सादृश्यमुखेन= सादृश्यद्वारा, तत्वप्रतिलम्भः= अलङ्कारत्वप्राप्तिः, यथा, रूपकोपमातुल्ययोगितानिदर्शनादिषु= 'तद्रूपकमभेदो य उपमानोपमेययोः' इति लक्षिते रूपके, 'सादृश्यमुपमा भेदे' इति लक्षितायामु-पमायां, 'उपमानोपमेयोक्तिरशून्यैः प्रस्तुतैर्वचः। साम्याभिधायिप्रस्तावभाग्भिर्वा तुल्ययोगिता' इति लीक्षितायां तुल्ययोगितायां, क्रिययैव विशिष्टस्य तदर्थस्यो-पदर्शनम्। इष्टा निदर्शना' इति लक्षितायां निदर्शनायाञ्च तदादिषु, तेषु= अलङ्कारेषु, च गम्यमानधर्ममुखेन= व्यज्यमानधर्मद्वारा, एव, यत्, सादृश्यं= साम्यं, तद्, एंव, शोभातिशयशालि= चारुत्वोत्कर्षयोगि, भवति, इति, ते, सर्वे, अपि, चारुत्वातिशययोगिनः= सौन्दर्याधिक्यबृंहिताः, सन्तः, गुणीभूतव्य-ङ्ग्यस्य, एव, विषयाः= लक्ष्याणि, इति।

अतिशयोक्तिव्यतिरिक्तमपि सादृश्यमूलकरूप– उपमा– तुल्ययोगिता– निदर्शनादिषु व्यञ्ज्यमानधर्मद्वारेण यत्सादृश्यं तदेव व्यङ्ग्यमपि वाच्योपस्कार-कत्वाद् गुणीभूतमिति। यथा रूपकादौ सादृश्यं व्यङ्ग्यमुपमा तु तत्स्वरूपैव ''उपमायां सादृश्यस्य गम्यमानत्वाभावादुपमापदमत्र तन्मूलकालङ्कारेषु लाक्षणि-कम्। यद्वा, रूपकोपमेति रूपकतात्पर्यमेव। वस्तुतस्तु उपमायामपि क्वचित् 'चन्द्र इव मुखम्' इत्यादौ सादृश्यप्रयोजकाह्लादविशेषज– नकत्वरूपसाधर्म्यस्य व्यङ्ग्यत्वमेवेति तदर्थमुपायान्तराश्रयणं नोचितमिति दीधितिकारः''। वयन्तु चरम-मेव मतं समर्थयामः। निदर्शनायां यथा–

अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति।
उदयः पतनायेति श्रीमतो बोधयननरान्।

इत्यत्र सूर्यश्रीमतोः सादृश्यं व्यङ्ग्यं किन्तु तत्र चमत्काराविश्रान्तेस्तस्य गौणतैव। एवमेवान्यत्र सादृश्यमूलकालङ्कारेषु आदिपदादपह्नुतिप्रभृतीनां ग्रहणम्।

इत्थं सादृश्यमूलकालङ्कारेषु गम्यमानस्य सादृश्यरूपव्यङ्ग्यस्य वाच्योप-स्कारकतया गौणत्वं प्रतिपाद्य समासोक्तिप्रभृतिषु तस्य गुणभावं व्यनक्ति समासो-क्त्याक्षेपत्यादिना–समासोक्ति–आक्षेप–पर्यायोक्त्यादिषु= परोक्तिभेदकैः श्लेषैः समासोक्तिः, इति लक्षिते 'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया' वक्ष्यमाणो-क्तविषयः स आक्षेपः 'इति लक्षिते पर्यायोक्ते विना वाच्यवाचकत्वेन यद्वचः' इति लक्षिते चालङ्कारे, तु= इति रूपकादिव्यतिरिक्तं गम्यमानांशाविनाभावेन= वयङ्ग्यभागोपस्थित्या, एव, तत्वव्यवस्थानात्= अलङ्कारत्वसिद्धेः, गुणीभूतव्य-ङ्ग्यता= गुणभावः, निर्विवादः= विवादाबाह्य, एवेति। समासोक्तिप्रभृतयः केचिदल-

ङ्कारास्तु वस्तुव्यञ्जनाधारेणैव प्रवृत्ता भवन्तीति तत्र वस्तुव्यङ्ग्यस्य गुणभाव सिद्ध एवेत्याशयः। तच्च ध्वनिप्रस्थापनप्रकरणे उक्तचरमेव।

तत्रापि विशेषमाह तत्रेत्यादिना— गुणीभूतव्यङ्ग्य प्रकरणे, च, केषाञ्चित्, अलङ्काराणां= वाच्यालङ्कारविशेषगर्भतायां= अलंङ्कारविशेषः कश्चिदेव निर्दिष्टोऽलङ्कारोऽस्ति गर्भेऽन्तर्येषां तेषां भावस्तत्ता तस्यां तादृश्यां, गुणीभूतव्यङ्ग्यतायां= व्यङ्ग्यस्य गुणभावे, नियमः व्यवस्था। यथा= इति निदर्शने, व्याजस्तुतेः= ''व्याजस्तुतिर्मुखे निन्दास्तुतिर्वा रूढिरन्यथा' इति लक्षितस्यालङ्कारस्य, प्रेयोऽलङ्कारगर्भत्वं= 'इत्यादिकानां भावानामनुभावादिसूचनैः। यत्काव्यं बध्यते सद्भिस्तत्प्रेयसमुदाहृतम्, इति लक्षणः प्रेयोऽलङ्कारो गर्भेऽन्तस्तस्य भावस्तत्वं तस्मिन्। व्याजस्तुतेर्हि प्रेयोऽलङ्काररूपव्यङ्ग्यस्योपस्कार्यता चाटुपर्यवसायित्वात्तस्या इति एतच्चोदाहरणमेव। केषाञ्चित्= कतिपयेषां, तु, अलङ्कारमात्रगर्भतायां= अलङ्कारसामान्यान्तर्वर्तित्वे, नियमः= व्यवस्था। यथा इति निदर्शने, सन्देहादीनां= सन्देहः 'स सन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः' इति लक्षणोऽलङ्कारस्तत्प्रभृतीनां, उपमार्गभत्वे= उपमानान्तर्वर्तित्वे— अत्र उपमाशब्देन सर्वेषामेव तद्विशेषाणां रूपकादीनां ग्रहणं यद्वा औपम्यं सर्वसामान्यमिति तेन सर्वमाक्षिप्तमेवेति लोचनकारः। तथैव केषाञ्चित्= कतिपयेषां, अलङ्काराणां, परस्परगर्भता= अन्योन्यान्तर्वर्तिता, अपि, सम्भवति= सम्पद्यते, यथा, दीपकोपमयोः= दीपकस्य 'सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्। सैव क्रियासु बह्वीषु कारकस्येति दीपकम्'' इति लक्षणस्यालङ्कारस्य उपमायाः 'सादृश्यमुपमा भेदे' इति लक्षितस्य अलङ्कारस्य च तयोः। तत्र, दीपकं, उपमागर्भत्वेन= उपमान्तर्वर्तित्वेन प्रसिद्धं= ख्यातम् उपमा, अपि, कदाचित्= क्वचित्, तु दीपकच्छायानुयायिनी= दीपकान्तर्वर्तिनी। यथा मालोपमा= एकस्यैव बहूपमानोपादानलक्षणोऽलङ्कारः। तथाहि= इति निदर्शने, प्रभामहत्या शिखयेव दीपः' इत्यादौ, स्फुटा= स्पष्टा, इव, दीपकच्छाया= दीपकानुप्राणिता, लक्ष्यते= दृश्यत इति। अत्र 'तया स पूतश्च पवित्रितश्च' इति एतेन दीपस्थानीयेन दीपनाद् दीपकमत्र प्रतीयमानतया अनुप्रविष्टमिति लोचने स्पष्टम्।

अस्यायमाशयः- व्यङ्ग्यस्य गुणभावोऽलङ्कारांस्त्रिधोपस्करोति— केषुचिदलङ्कारेषु अलङ्कारान्तरविशेष एव गुणीभूतत्वेन गर्भितो भवति यथा व्याजस्तुततौ प्रेयोऽलङ्कारः केषुचित्तु अलङ्कारमात्रमपि गर्भितं भवति यथा सन्देहालङ्कार उपमा, केषाञ्चित्तु अलङ्काराणां परस्परगर्भितता भवति यथा दीपकोपमयोरिति।

इस प्रकार अतिशयोक्ति का अन्य अलंकारों में अनुप्रवेशकत्व का निरूपण कर अब उस प्रकार के दूसरे अलंकारों से उसकी विलक्षणता का प्रतिपादन करते हुए अन्य अलंकारों के भी अनुप्रवेशकत्व की विवेचना करने हेतु प्रकरण का आरम्भ करते हैं—

यह अनुप्रवेशकत्व जो है वह दूसरे अलंकारों का भी होता है किन्तु उनका सभी में वह नहीं बन पाता। अतिशयोक्ति का तो सभी अलंकारों में अनुप्रवेशकत्व सम्भव होता है, यह उसकी विशेषता है। जिन अलंकारों में सादृश्य के द्वारा अलंकारता की प्राप्ति सम्भव होती है जैसे रूपक, उपमा, तुल्ययोगिता, निदर्शना आदि में उनमें व्यंग्य रूप जो सादृश्य है वही विच्छित्ति का कारण होता है। इसलिए उस प्रकृति के सभी अलंकार चारुत्व की अतिशयता से युक्त होने पर गुणीभूत व्यंग्य के विषय होते हैं। इसके विपरीत समासोक्ति, आक्षेप, पर्यायोक्त आदि में तो व्यङ्ग्य अंश के रहने पर ही अलंकारत्व की प्राप्ति होने से उनमें गुणीभूत व्यङ्ग्यता निर्विवाद ही हैं उसमें भी किन्हीं अलंकारों का कुछ विशिष्ट अलंकारों से गर्भित होने का नियम है, जैसे व्याजस्तुति में प्रेयस् अलंकार के ही गर्भित होने का। कुछ का तो अलंकार मात्र से गर्भित होने का नियम है, जैसे सन्देह आदि का उपमा आदि सादृश्य मूलक अलंकारों से गर्भित रहने का। कुछ अलंकारों का तो परस्पर में गर्भित होना भी सम्भव होत है जैसे दीपक एवं उपमा का। उसमें भी दपक क उपमा से गर्भित होना प्रसिद्ध ही है और उपमा भी कभी तो दीपक की छाया की अनुगामिनी होती है। जैसे मालोपमा। जैसे कि, प्रभामहत्या शिखयेव दीपः' इत्यादि में दीपक की छाया ही स्पष्ट दिखाई पड़ती है।

ध्वन्या०— तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशययोगिनो रूपकादयोऽलङ्काराः सर्व एव गुणीभूतव्यङ्ग्यस्य मार्गः। गृणीभूतव्यङ्ग्यत्वं च तेषां तथाजातीयानां सर्वेषामेवोक्तानुक्तानां सामान्यम्। तल्लक्षणे सर्व एवैते सुलक्षिता भवन्ति। एकैकस्य स्वरूपविशेषकथनेन तु सामान्यलक्षणरहितेन प्रतिपदपाठेनेव शब्दा न शक्यन्ते तत्त्वतो निर्ज्ञातुम्, आनन्त्यात्। अनन्ता हि वाग्विकल्पास्तत्प्रकारा एव चालङ्काराः। गुणीभूतव्यङ्ग्यस्य च प्रकारान्तरेणापि व्यङ्ग्यार्थानुगमलक्षणेन विषयत्वमस्त्येव। तदयं ध्वनिनिष्यन्दरूपो द्वितीयोऽपि महाकविविषयोऽतिरमणीयो लक्षणीयः सहृदयैः। सर्वथा नास्त्येव सहृदयहृदयहारिणः काव्यस्य स प्रकारो यत्र न प्रतीयमानार्थसंस्पर्शेन सौभाग्यम्। तदिदं काव्यरहस्यं परमिति सूरिभिर्भावनीयम्।

लीला— गुणीभूतव्यङ्ग्यस्य वाच्यालङ्कारोपस्कारकत्ववर्णनपरं प्रकरणमुपसंहरति तदेवमित्यादिना— तत्= तस्मात्, एवं= अनन्तरोक्तप्रकारेण, व्यङ्ग्यांशसंस्पर्शे= प्रतीयमानवस्त्वलङ्कारान्यतमयुक्तत्वे, सति, चारुत्वातिशययोगिनः= सौन्दर्योत्कर्षशालिनः, रूपकादयः, अलङ्काराः सर्वे= निखिलाः, एव, गुणीभूतव्यङ्ग्यस्य, मार्गः= विषयः। तथाजातीयानां= तत्प्रकाराणां= चारुत्वातिशयवतां, सर्वेषां= निखिलानां, एव, उक्तानुक्तानां= उक्तानां= रूपकादीनां, अनुक्तानां सन्देहादीनां, तेषां= अलङ्काराणां, गुणीभूतव्यङ्ग्यत्वं, च, सामान्यं= साधारणं-

समानरूपेण व्यापकमिति। अतः, तल्लक्षणे= तस्य गुणीभूतव्यङ्ग्यस्य स्वरूपनिर्द्धारणे कृते सति, कृते= तथाभूतावाच्यालङ्कारा:, सर्वे= निखिला:, एव, सुलक्षिता:= स्पष्टमेव निर्दिष्टा:, भवन्ति।

यच्च तेषां वाच्यालङ्काराणां गुणीभूतव्यङ्ग्यसंस्पर्शरहितं सामान्यरूपं न तत्काव्ये ग्राह्यं भवति। यथा 'गोसदृशो गवयः' इत्यत्रोपमा, 'खलेवाली यूपः' इत्यत्र रूपकं, 'द्विर्वचनेऽचि' इत्यत्र श्लेषः, तुदीशालातुरेत्यत्र यथासङ्ख्यं, 'गामश्व' इत्यत्र दीपकं, 'स्थाणुर्वा स्यात्' इत्यत्र ससन्देहः, नेदं रजतं' इत्यत्रापह्नुतिः, 'पीनो दिवा नात्ति' इत्यत्र पर्यायोक्तं, 'स्थाघ्वोरिच्च' इत्यत्र तुल्ययोगता, एवमादीन्यन्यानि च नैव काव्योपयोगीनि तत्र व्यङ्ग्यसंस्पर्शाभावादिति)। तथाकथने हेतुं निर्दिशति एकैकस्येत्यादिना— प्रत्येकस्य, स्वरूपविशेषकथनेन= लक्षणनिर्द्धारणेन, तु, सामान्यलक्षणरहितेन= संधारणलक्षणहीनेन, प्रतिपदपाठेन= प्रत्येकपदग्रहणेन, इव, शब्दा, आनन्त्यात्= अनन्तत्वेन, तत्वतः= यथार्थतः निर्ज्ञातुं= निश्चयेनावधारयितुं, न, शक्यन्ते इति। वाग्विकल्पा:= वचनविन्यासप्रकारा:, हि, अनन्ता:= निस्समीमा:, अलंकारा:, च, तत्प्रकारा:= तेषां वाग्विकल्पानां प्रकारा: एवेति।

लक्षितेन गुणीभूतव्यङ्ग्येन सर्वेऽपि सुलक्षिता इति यदुक्तं तत्र सर्वेष्वलङ्कारेषु अलंकारान्तरव्यङ्ग्यस्याभावात्कथं ते तथा भवन्ति इत्याशङ्कानिरसाय कथयति गुणीत्यादि-गुणीभूतव्यङ्ग्यस्य= चारुत्वाविश्रान्तित- याऽप्रधानीभूतप्रतीयमानार्थस्य, व्यङ्ग्यार्थानुगमलक्षणेन= प्रतीयमानार्थानुसरण- प्रकृतिकेन, प्रकारान्तरेण= अन्येनापि वस्तुरसात्मना प्रकारेण, विषयत्वं= लक्षणीयत्वं अस्त्येव= सम्भवत्येव। तत्= तस्मात्, अयं= अनन्तरोक्तः, ध्वनिनिष्यन्दरूपः= ध्वनिसारस्वरूपः, द्वितीयः= ध्वनेरपरो: गुणीभूतव्यङ्ग्यनामा, अपि, अतिरमणीयः= नितान्तहृद्यः, महाकविविषयः, सहृदयैः= रसिकैः, लक्षणीयः= निरूपणीयः। सहृदयहृयहारिणः= रसिकस्वान्तग्राहिणः, काव्यस्य= कविकृतेः, सः= तादृशः, प्रकारः= भेदः, सर्वथा, नास्त्येव= नैव कदापि सम्भवति, यत्र, प्रतीयमानार्थसंस्पर्शेन= व्यङ्ग्यार्थसंयोगेन, सौभाग्यं= चारुत्वं, न= नैव भवतिअपितु यदेव व्यङ्ग्यस्पृष्टं तन्निखिलमेव चारु भवति। तत्= तथा, इदं= अनन्तरोक्तं, परं= परमं, काव्यरहस्यं= काव्योपनिषत् इति= इत्थं, सूरिभिः= विद्वद्भिः, भावनीयं= उन्नेयमिति। एतन्न प्रतारणमात्रमर्थवादरूपं मन्तव्यमिति।

अस्यायमाशयः— ये हि खलु व्यङ्ग्यार्थानुप्राणितेषु सत्सु चारुत्वातिशयं वहन्ति तादृशा रूपकप्रभृतयोऽलङ्काराः सर्वे एव गुणीभूतव्यङ्ग्यस्य जातिरेव। तथाभूतानां कथितानामकथितानाञ्च सर्वेषामेव तेषां गुणीभूतव्यङ्ग्यत्वं साधारणमिति लक्षिते गुणीभूतव्यङ्ग्ये तेऽपि सर्वे लक्षिता भवन्त्येव यस्माद्यथा

प्रतिपंदपाठेन शब्दा न शक्यन्ते निर्ज्ञातुं तेन तत्र व्याकरणादौ आकृतिगणो व्यवह्रियते तथैव वाग्विकल्पानामानन्त्यादलङ्काराणाञ्च तत्प्रकारत्वान्न शक्यते प्रत्येकस्य स्वरूपमवतारयितुम्। यत्र च प्रतीयमानमलङ्कारान्तरं नास्ति तत्रापि प्रतीयमानवस्तुरसरूपेणापि विषयत्वं सञ्जायते। तेनाऽसौ गुणीभूतव्यङ्ग्याख्यो ध्वनिसाररूप: कविविषयो यत्संस्पर्शेन सर्वमपि वाक्यं चारु भवति। इयमेव परमा काव्योपनिषन्न केवलं प्रतारणमात्रमर्थवादरूपमेवेति।। ३६।।

प्रकरण का उपसंहार करते हैं— इस हेतु इस प्रकार के व्यङ्ग्य का स्पर्श होने पर चारुत्व की अतिशयता से युक्त होने वाले रूपक आदि अलङ्कार जो हैं वे सब गुणीभूतव्यङ्ग्य के विषय हैं। उस प्रकार के सभी कहे गए एवं न भी कहे गए अलङ्कारों का गुणीभूत व्यङ्गता सामान्य है अत: उसके लक्षण से ही ये सब स्पष्ट रूप से लक्षित होते हैं क्योंकि प्रत्येक का सामान्यलक्षण रहित स्वरूप विशेष कथन से तो अत्यन्त होने के कारण प्रतिपद के पाठ से शब्द जैसे यथार्थत: गिने नहीं जा सकते। अर्थात् जैसे शब्दों के अनन्त होने से प्रत्येक का पदपाठ सम्भव नहीं है उसी तरह अलङ्कारों का भी पृथक्-पृथक् गिन पाना सम्भव नहीं है। वाग्विकल्प अनन्त है और अलङ्कार उन्हीं के प्रकार हैं। गुणीभूत व्यङ्ग्य का भी प्रत्येक अलङ्कार में अलङ्कारान्तर रूप व्यङ्ग्य रूप व्यङ्ग्य का होना सम्भव न होने पर भी प्रतीयमान रूप वस्तु, रस आदि दूसरे प्रकारों से भी विषयत्व हो ही जाता हैं इस कारण यह ध्वनि का सारभूत दूसरा भी महाकवि का विषय अत्यन्त रमणीय है और उसे सहृदयों को निरूपित कर लेना चाहिए। सहृदय के हृदय को आकर्षित कर पाने वाले काव्य का वैसा प्रकार कदापि हो नहीं सकता जहाँ कि व्यङ्ग्यार्थ के संस्पर्श से चारुत्व न आ पाए। ऐसा यह काव्य का परम रहस्य है और इसे विद्वानों को भावित कर लेना चाहिए।

कहने का अशय यह है कि गुणीभूत व्यङ्ग्य सभी अलङ्कारों के लिए सामान्य है और उसके लक्षण से ही उसके लक्ष्य बने सभी अलङ्कार भी लक्षित हो जाते हैं। प्रत्येक का पृथक्-पृथक् लक्षण कर पाना उसी तरह सम्भव न ही है जैसे प्रतिपद पाठ से शब्दों का गिन लेना क्योंकि वे अनन्त हैं। वाग्विकल्प अनन्त हैं और जितने वे हैं उतने ही उनके अलङ्कार भी हैं। जहाँ भी अलङ्कार में अलङ्कारान्तर व्यङ्ग्य सम्भव नहीं है वहाँ भी प्रतीयमान वस्तु वा रस के कारण वह गुणीभूत व्यङ्ग्य का विषय बन ही जाता है।। ३६।।

कारिका— मुख्या महाकविगिरामलङ्कृतिभृतामपि।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्।। ३७।।

ध्वन्या०— अनया सुप्रसिद्धोऽप्यर्थ: किमपि कामनीयकमानीयते तद्यथा—

विश्रम्भोत्था मन्मथाज्ञाविधाने ये मुग्धाक्ष्या: केऽपि लीलाविशेषा:।
अक्षुण्णास्ते चेतसा केवलेन स्थित्वैकान्ते सन्ततं भावनीया:।।

इत्यत्र केऽपीत्यनेन पदेन वाच्यमस्पष्टमभिदधता प्रतीयमानं वस्त्वक्लिष्टमनन्तमर्पयता का छाया नोपपादिता।

लीला— व्यङ्ग्यार्थस्य प्रधानभूतस्य वा गुणीभूतस्यापि काव्ये वैशिष्ट्यं निदर्शनमुखेन प्रतिपादयति कारिकाकारः मुख्येत्यादिना अलकृतिभूतां अपि महाकविगिरां एषां प्रतीयमानच्छाया योषितां प्रतीयमानच्छाया लज्जा इव मुख्या भूषा इति पदव्यवस्था।

अलंकृतिभूतां= वाच्यालङ्कारयुक्तानां, अपि= इति निर्धारणे, तद्रहितानामपि ग्रहणे च, महाकविगिरां= काव्यकर्तृवाचां, एषां= अनन्तरोक्ता, प्रतीयमानच्छाया= व्यङ्ग्यसुषमा योषितां= प्रमदानां, प्रतीयमानच्छाया= प्रतीयमाना प्रकट्यमाना छाया कामजन्यमनोविकारलक्षणा यया सा तादृशी, लज्जा= ह्रीः, इव, मुख्या= प्राधान्येनावस्थिता, भूषा= अलङ्करणमिति।

यथा प्रमदा भूषणमण्डिताऽपि लज्जयैव शोभते यथा वा भूषणावृताऽपि निर्लज्जा गणिका न शोभते यथा वा निर्भूषाऽपि सा लज्जया विभूष्यते तथैव सालङ्कारा अपि कवि वाचो व्यङ्ग्यसुषमयैकसमधिकं शोभन्ते यतस्तासां निरलङ्कारत्वेऽपि व्यङ्ग्यसङ्गत्या ग्राह्यत्वं सिध्यतीति।

वृत्तिकारः कारिकां विवृणोति अनयेत्यादिना— अनया= प्रतीयमानच्छायया, सुप्रसिद्धः= पुराणः, अपि, अर्थः, किमपि= अपूर्वं, कामनीयकं= चारुत्वं, आनीयते= प्राप्यते-अभिनवीक्रियत इति।

तदेवोदाहरणायोपक्रमते तदित्यादिना— तद्= पुरातनस्यार्थस्यापि व्यङ्ग्यसुषमयाऽभिनवीकरणं यथा= इति निदर्शने, उदाहरणं प्रस्तौति विस्रम्भोत्थेत्यादिना-मन्मथाज्ञाविधाने मुग्धाक्ष्याः ये विस्रम्भोत्थाः केऽपि अक्षुण्णाः लीलाविशेषाः ते एकान्ते स्थित्वा केवलेन चेतसा सन्ततं भावनीया इति पदव्यवस्था।

मन्मथाज्ञाविधाने= मन्मथस्य मदनस्य या आज्ञा यथेच्छं यौवनसुखमनुभूयतामिति सन्देशस्तस्य विधाने प्रतिपालने, मुग्धाक्ष्याः= मत्तविलोचनायाः, ये, विस्रम्भोत्थाः= विस्रम्भाद्धीह्रीत्यादित्यागलक्षणाजन्य— विश्वासात् उत्था= उत्पन्नाः, केऽपि= अनिर्वचनीयाः, अक्षुण्णाः= अविहताः, लीलाविशेषाः= विभ्रमाः, ते, एकान्ते= निर्जने, स्थित्वा= समास्य, केवलने= एकाग्रेण, चेतसा= चित्तेन, सन्ततं= निरन्तरं, भावनीयाः= निरूपणीया इति। तत्र पर्यवसितं निर्दिशति इत्यत्रेत्यादिना— इति= इत्थं, अत्र= अस्मिन् पद्ये, वाच्यं= कथनीयं, अस्पष्टं= अव्यक्तं, अभिदधता= व्यक्तवता, सता, प्रतीयमानं= सूचितं, अक्लिष्टं= स्फुटं, अनन्तं= निस्सीमं, वस्तु= अर्थजातं, अर्पयता= प्रत्यायता, 'केऽपि' इति अनेन पदेन-पदत्वमत्र वाचकत्वादारोपितमिति दीधितौ स्पष्टं, का= कीदृशी, एव, छाया= शोभा चारुता, न, उपपादिता= उपस्थापितेति। वाच्यार्थमनिर्दिशदपि

'केऽपि' इति पदमत्रानिर्वचनीयकाव्यचारुत्वमुपपादयतीति प्रतीयमानच्छायागौरवस्योदाहरणमिदम्।। ३७।।

प्रधानभूत वा गुणीभूत भी व्यङ्ग्य अर्थ का काव्य में जो विशिष्ट स्थान है उसका पुन: प्रतिपादन करते हैं—

''अलङ्कार से युक्त वा उससे रहित भी कवि की वाणी का जो प्रतीयमान अर्थ की छाया है वह कुलबधू की प्रतीयमान लक्षण लज्जा की तरह मुख्य भूषण है''।। ३७।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं— इस प्रतीयमानच्छाया के द्वारा पुराने अर्थ भी किसी अनिर्वचनीय चारुता से नये बताए जाते हैं— वह जैसे—

कामदेव की आज्ञा के पालन में— रतिक्रीडा में मुग्ध आँखों वाली प्रमदा के विश्वास के कारण सम्पन्न जो कुछ (अनिर्वचनीय) गात्रनेत्र आदि के विकार के रूप अभिनव विलास विशेष हैं वे एकान्त में बैठकर एकाग्र चित्त से नित्य चिन्तन योग्य होते हैं।

वाच्य को स्पष्ट रूप में कहने वाले 'कुछ' शब्द के द्वारा अक्लिष्ट एवं अनन्त प्रतीयमानता को अर्पित करते हुए कौन सी छाया (चारुत्व) उपपादित नहीं की अपितु सब की गयी है।। ३७।।

कारिका— अर्थान्तरगति: काक्वा या चैषा परिदृश्यते।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता।। ३८।।

ध्वन्या०— या चैषा काक्वा क्वचिदर्थान्तरप्रतीतिर्दृश्यते सा व्यङ्ग्यार्थस्य गुणीभावे सति अगुणीभूतव्यङ्ग्यलक्षणं काव्यप्रभेदमाश्रयते। यथा :स्वथा भवन्ति मयि जीवति धातृराष्ट्रा:'।

यथा वा—

आम असइओ ओरम पइव्वए ण तुए मलिणिअं सीलम्।
किं उण जणस्स जाअ व्व चन्दिलं तं ण कामेमो।।
आम असत्य उपरम पतिव्रते न त्वया मलिनितं शीलम्।
किं पुनर्जनस्य जायेव नापितं तं न कामयामहे।।

लीला— गुणीभूतव्यङ्ग्यस्यैवोदाहरणान्तरं प्रस्तौति कारिकाकार: अर्थान्तरेत्यादिना— काक्वा या एषां अर्थान्तरगति: च परिदृश्यते सा व्यङ्ग्यस्य गुणीभावे इमं प्रकारं आश्रिता इति पदव्यवस्था।

काक्वा= काकुर्ध्वनिविकार: प्रायेण विरुद्धार्थसूचक: सा च द्विविधा, साकाङ्क्षा निराकाङ्क्षा च, तया, या= यादृशी, एषा= वाच्यार्थभिन्ना, अर्थान्तरगति:= अन्यार्थप्रतीति: च, परिदृश्यते= लक्ष्यते सा, व्यङ्ग्यस्य= प्रतीयमानस्य, गुणीभावे= अप्राधान्ये सति, इमं= एतत्, प्रकारं= भेदं, आश्रितेति। काक्वाक्षिप्तव्यङ्ग्यमपि गुणीभूतव्यङ्ग्यस्यैव भेद इत्याशय:।

कारिकां विशदयति वृत्तिकार: येत्यादिना— या, च, एषा= प्रसिद्धा, काक्वा= ध्वनिविकारेण, क्वचित्= कुत्रचित्, अर्थान्तरप्रतीतिः= व्यङ्ग्यार्थप्रत्ययनं, दृश्यते= परिलक्ष्यते, सा= तादृशी अन्यार्थगतिः, अर्थस्य= प्रतीयमानार्थस्य, गुणीभावे= अप्राधान्ये, सति गुणीभूतव्यङ्ग्यलक्षणं= गुणीभूतव्यङ्ग्यप्रकृतिकं, काव्यप्रभेदं, आश्रयते इति। यथा= इति निदर्शने, स्वस्था' इत्यादि मयि= भीमे, जीवति= प्राणति, धार्तराष्ट्राः= कौरवाः, स्वस्थाः= कुशलिनः, भवन्ति इत्यत्र काक्वा न भवन्तीत्यर्थान्तरप्रतीतिः। सम्पूर्णपद्यं त्वित्थं—

लाक्षागृहानलविषान्नसमाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधूपरिधानकेशान् स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः।।

अत्र काकुबोधितव्यङ्ग्यं विना वाच्यार्थस्यैवानुपपादनात्तस्य गुणीभूतत्वम्।

तस्यैवोदाहरणान्तरं प्रस्तौति—यथा, वा आम इत्यादि— आम (असइओ) (असत्यः), पइव्वए (पतिव्रते) ओरम (उपरम) तुएँ (त्वया) सीलम् (शीलम्) ण (न) मलिणिअ (मलिनितं) उण (पुनः) जणस्स (जनस्य) जाअ (जाया) व्व (इव) तं, चन्दिलं (नापितं) किं, ण (न) कामेमो (कामयामहे) इति पदव्यवस्था।

कस्याश्चिन्नापितानुरक्तया स्त्रिया दृष्टाविनयाया अत एव उपहास्यमानायाः कस्याश्चित्प्रत्युपहासावेशगर्भोक्तिरियम्। आम इति अभ्युपगमे, असत्यः= दुश्चरित्रम्, वयम्, हे पतिव्रते= अपांसुले, उपरम्= विरम मदुपहासात्, त्वया= भवत्या, शीलं= सद्वृत्तं, न, मलिनितं= दूषितं, किं, पुनः= किन्तु, जनस्य= साधारणजनस्य, जाया= पत्नी, इव, तं= तादृशं नीचं, नापितं= क्षुरोपजीविनं, न, कामयामहे= वाञ्छाम इति। अत्र परितत्रते, न मलिनितं इत्यत्र च काक्वा तत्तदभावो व्यङ्ग्यः। तं विना वाच्यार्थस्यैवानुपपत्तेस्तस्य गुणभावश्चेति। तत्र 'आम असत्यो भवामः' इति अभ्युपगमकाकुः साकाङ्क्षोपहासव्यञ्जिका, उपरमेति निराकाङ्क्षतया सूचनगर्भा, पतिव्रते इति दीप्तस्मितयुक्ता, न त्वया मलिनितं शीलमिति सगद्गदाकाङ्क्षा, किं पुनरित्यादि निराकाङ्क्षगद्गदोपहासगर्भा चेति लोचने स्पष्टम्।

अत्रेदमवधेयं यत् केषाञ्चिन्मते काकुः कण्ठध्वनिविकारः शोकक्रोधभीत्यादिजनितः। सा च व्यञ्जनासाहाय्येन वाच्यभिन्नमर्थान्तरमाक्षिपति। तथाकरणे यदि तदन्तरेणाऽपि वाच्यार्थविश्रान्तिर्व्यङ्ग्यस्तु प्रकरणादिपर्यालोचनयैव तदा स काकुध्वनिः। यथा— गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषुइत्यत्र। यत्र तु तद्विना वायार्थविश्रान्तिरेव न भवति तदा तस्य गुणभावो वाच्योपस्कारकत्वात्, यथा, स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः इत्यत्र लोचनकारस्तु कांकौ सर्वत्र शब्दस्पृष्टत्वात्तदाक्षिप्तव्यङ्ग्यय सर्वत्रैव गुणभावमेव मन्यते।

गुणीभूतव्यङ्ग्य के ही दूसरे स्वरूप का निर्देश करते हैं— काकु के द्वारा जो

यह वाच्यार्थ से भिन्न दूसरे अर्थ की प्रतीति होती है उस व्यङ्ग्य के गुणीभाव होने से वह भी गुणीभूत व्यङ्ग्य के प्रकार का ही आश्रय लेती है।। ३८।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं— और जो यह काकु के द्वारा कहीं दूसरे अर्थ की प्रतीति देखी जाती है वह व्यङ्ग्य अर्थ के गुणीभूत व्यङ्ग्य लक्षण वाले इस काव्यप्रभेद का आश्रय लेती है। जैसे—

''मेरे जीवित रहने पर धृतराष्ट्र के पुत्र कुशल रहते हैं'' (इसमें काकु से 'स्वस्थ नहीं रह सकते हैं' ऐसी जो वयङ्ग्य अर्थ की प्रतीति होती है वह वाच्य की ही क्रोधानुभावरूपता को कहती है अत: उसका गुणभाव है।) और जैसे—

हाँ हम तो स्वैरिणी हैं, हे पतिपरायणे ! हटो, तुमने तो कभी भी सद्वृत्त को दूषित नहीं किया है। किन्तु हम सामान्य जन की स्त्री की तरह नापित को तो नहीं चाहते हैं।'

अपने दुर्व्यवहार के प्रति उपहास करती हुई किसी स्त्री के प्रति यह किसी स्त्री की प्रत्युपहास भरी उक्ति है। यहाँ पतिपरायणा' एवं 'सद्वृत्त को दूषित नहीं किया' का जो अर्थ है उसके विपरीत अर्थ जो निकलता है वह ही व्यङ्ग्य है नहीं किया' का जो अर्थ है उसके विपरीत अर्थ जो निकलता है वह ही व्यङ्ग्य है और वाच्यार्थ की विश्रान्ति में हेतु बनने से वह गुणीभूत हो गया है।

किसी के मत में भय, शोक, क्रोध के कारण जो ध्वनि में विकार है काकु है और काकु से आक्षिप्त जो व्यङ्ग्य है उसके विना भी वाच्यार्थ की विश्रान्ति हो पाने से वह काकु ध्वनि होती है और उसके विना वाच्यार्थ की विश्रान्ति हो न पाने से उसका गुणभाव होता है। लेकिन लोचनकार के मत में काकु में प्रत्येक व्यङ्ग्य का शब्द से स्पर्श होने के कारण गुणीभाव ही रहता है न कि ध्वनि। उनके मत में जहाँ भी काकु की योजना होगी वहाँ उसके द्वारा हठात् आक्षिप्त व्यङ्ग्य का गुणभाव ही होता है।

ध्वन्या०— शब्दशक्तिरेव हि स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया सत्यर्थविशेषप्रतिपत्तिहेतुर्न तु काकुमात्रम्। विषयान्तरे स्वेच्छाकृतात् काकुमात्रात् तथाविधार्थप्रतिपत्त्यसम्भवात्। स चार्थ: काकुविशेषसहायशब्दव्यापारोपारूढोऽप्यर्थसामर्थ्यलभ्य इति व्यङ्ग्यरूप एव। वाचकत्वानुगमेनैव तु यदा तद्विशिष्टवाच्यप्रतीतिस्तदा गुणीभूतव्यङ्ग्यस्तया तथाविधार्थद्योतिन: काव्यस्य व्यपदेश:। व्यङ्ग्यविशिष्टवाच्याभिधायिनो हि गुणीभूतव्यङ्ग्यत्वम्।

लीला— काक्वाक्षिप्तव्यङ्ग्यस्य गुणीभावं प्रतिपादयितुं तस्य शब्दस्पृष्टतासाधनाय प्रकरणमारभते शब्देत्यादिना- शब्दशक्ति:= अभिधा, एव= इति व्यवच्छेदे नान्या, हि, स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया= स्ववाच्यसामर्थ्यनिर्दिष्टा या काकु: ध्वनिविकार: सा एव सहाया यस्या: सा तादृशी, सती, अर्थविशेषप्रतिपत्तिहेतु:= प्रतीयमानार्थनिष्पादननिमित्तं, न, तु, काकुमात्रं= केवलं काकुरेव।

तत्र तथाभवने हेतुमाह विषयेत्यादिना— विषयान्तरे= अन्यप्रसङ्गे यत्राभिधाया नैव व्यापारस्तत्र— स्वेच्छायाधारितात्, स्वेच्छाकृतात्= शब्दशक्त्यानिर्दिष्टात्= काकुमात्रात्, तथाविधार्थप्रतिपत्त्यसम्भवात्= तथाविधः प्रतीयमानो योऽर्थस्तस्य प्रतिपत्तेरवभासनस्य असम्भवादसिद्धेः। यदि सोऽभिधाया एव व्यापारस्तर्हि कथं तस्य व्यङ्ग्यत्वमित्याशङ्कानिरासाय कथयति स चेत्यादिना– सः= तादृशः काकुसाहाय्येनाभिधयाऽऽक्षिप्तः, अर्थः, च, काकुविशेषसहायशब्दव्यापारोपा-रूढः= काकुरेव विशेषसहायो यस्य तादृशो यो शब्दस्तस्य व्यापारेण वृत्या उपारूढः प्रतीतिविषयीकृतः, अपि, अर्थसामर्थ्यलभ्यः= आर्थव्यञ्जनागम्यः, इति= हेतो, व्यङ्ग्यरूपः= प्रतीयमानस्वरूपः, एव= न, त्वभिधेयः। तस्य गुणीभावं दर्शयति वाचकत्वेत्यादिना— यदा, तु वाचकत्वानुगमनेन= वाचकत्वे अभिधाव्या-पारेऽनुगमो गुणीभावस्तेन, एव, तद्विशिष्टवाच्यप्रतीतिः= तेन व्यङ्ग्यार्थेन विशिष्ट उपस्कृतो यो वाच्यो वाच्यार्थस्तस्य प्रतीतिः= प्रकाशनं, तदा, तथाविधार्थद्योतिनः= तथाविधो वाच्यविशेषणो योऽर्थस्तं द्योतते प्रकाशयति इति तस्य, काव्यस्य, गुणीभूतव्यङ्ग्यतया= गुणीभूतव्यङ्ग्यभावेन एव व्यपदेशः= अभिधानम्। हि= यतः व्यंग्यविशिष्टवाच्याभिधायिनः= प्रतीयमानार्थोपस्कृत वाच्यार्थद्योतकस्य, गुणीभूतव्यङ्ग्यत्वमेव। व्यङ्ग्यस्य वाच्यार्थविशेषणीभावादेव गुणभावः काव्यस्य च तथाविधवाच्योपस्कारिव्यङ्ग्यप्रकाशकत्वाद् गुणीभूतव्यङ्ग्यत्वमिति।

इत्थं गुणीभूतव्यङ्ग्यस्य त्रय एव प्रकारा निर्दिष्टाः शेषाश्च ग्रन्थान्तरेभ्य ऊह्या इति। ग्रन्थेषु गुणीभूतव्यङ्ग्यस्याष्टौ प्रकारा प्रधान्येनोक्ताः येषु अत्र 'अयं सरशनोत्कर्षी इत्यत्र इतराङ्गव्यङ्ग्य 'सङ्केतकालमनसं' इत्यत्र वाच्यसिध्यव्यंग्यं 'स्वस्था भवन्ति' इत्यत्र काक्वाक्षितव्यग्यञ्चेति त्रीणि निर्दिष्टानि। शेषेषु, अगूढं यथा—

कृष्णस्य जगदीशस्य वन्द्यस्य विबुधोत्तमैः।
शृण्वन् निन्दितमेतस्य जीवन्नैव भवाम्यहम्।

इत्यत्र जीवन्नित्यर्थान्तरसङ्क्रमितवाच्यस्य व्यङ्ग्यमगूढम्।

अस्फुटं कष्टगम्यं, तद्यथा—

असुरदमननन्दकः स्वपाणौ कुतुकवशाद्भवता निधीयते चेत्।
सुरपुरवनिताः स्ववेश्ममोदा विदधति सद्रचनोज्ज्वलं समन्तात्।

इत्यत्र खड्गेन हता वीराः स्वपितत्वेन स्वर्गमायास्यन्तीति आनन्दावेशात् स्वर्गाङ्गनाः सद्म मण्डयन्तीति व्यङ्ग्यमस्फुटं कष्टगम्यत्वात। संन्दिग्धप्राधान्यं यथा—

हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि।

नयनव्यापाररूपवाच्यस्य चुम्बितेच्छारूपव्यङ्ग्यस्य च प्राधान्ये सन्देहः। तुल्यप्राधान्यं यथा

''स्मरसमरसमाप्तौ वक्रतां भ्रूरहार्षी–
दजनिषत मृगाक्ष्या वीतलक्ष्याः कटाक्षाः।
धनुरिव विषमेषोर्ज्याविमुक्तं तदाऽऽसी–
द्विविशुरिव निषङ्गे मुक्तशेषाः पृषत्काः।।''

इत्यत्र उत्प्रेक्षयोपमा ध्वनिता। तयोः स्वप्राधान्येन स्थितत्वात् तुल्यप्राधान्यम्।

असुन्दरं यथा- वाणीरकुडङ्ग.....................इत्यादि।

अत्र दत्तसङ्केतो लतागृहं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानि' इति वाच्यस्य चमत्कार एव सहृदयसंवेद्य इति व्यङ्ग्यस्यासुन्दरत्वमिति।

इत्थं गुणीभूतव्यङ्ग्य द्वितीयो महाकविविषयो व्याख्यातः।। ३८।।

काकु से आक्षिप्त वयङ्ग्य के गुणीभाव के प्रतिपादन कहने हेतु प्रकरण का आरम्भ करते हैं- शब्दशक्ति अर्थात् अभिधा शक्ति ही अपने वाच्य के सामर्थ्य से आक्षिप्त काकु के सहयोग से प्रतीयमान अर्थ की प्रतीति का हेतु बनती है न कि काकु मात्र। दूसरे विषयों मं जहाँ कि अभिधा नहीं है अपनी ही इच्छा से उच्चरित काकु मात्र से उस प्रकार की प्रतिपत्ति सम्भव नहीं होती। वैसा होने पर भी वह अर्थ काकु विशेष है सहयोगी जिसका ऐसे शब्दों के व्यापार से निष्पन्न हसोने पर भी अर्थ सामर्थ्य से प्रतीत होने के कारण व्यङ्ग्य रूप ही है। जब वाचकत्व के अनुगम से ही व्यङ्ग्य विशिष्ट वाच्य की प्रतीति होती है, तब गुणीभूतव्यङ्ग्य के रूप में इस प्रकार के अर्थ का द्योतक काव्य का व्यपदेश होता है और व्यङ्ग्य से विशिष्ट वाच्य के अभिधायी का गुणीभूत व्यङ्ग्य रूप उचित भी है।

इस प्रकार का गुणीभूत व्यङ्ग्य के इतराङ्ग, वाच्य सिद्ध्यङ्ग एवं काक्वाक्षिप्त भेदों का विवेचन किया गया। शेष पाँच भेदों को दूसरे ग्रन्थों से जान लेना चाहिए।। ३८।।

कारिका— प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते।
विधातव्या सहृदयैर्न तत्र ध्वनियोजना।। ३९।।

ध्वन्या०— सङ्कीर्णो हि कश्चिद्ध्वनेर्गुणीभूतव्यङ्ग्यस्य च लक्ष्ये दृश्यते मार्गः। तत्र यत्र तस्य युक्तिसहायता तत्र तेन व्यपदेशः कर्त्तव्यः। न सर्वत्र ध्वनिरागिणा भवितव्यम्। यथा—

पत्युः शिरश्चन्द्रकलामनेम स्पृशेति सख्या परिहासपूर्वकम्।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान।।

ध्वन्या०— यथा च—

प्रायच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता।
न किञ्चिदूचे चरणेन केवलं लिलेख वाष्पाकुललोचना भुवम्।।

इत्यत्र 'निवर्चनं जघान' 'किञ्चिदूचे' इति प्रतिषेधमुखेन व्यङ्ग्य-स्यार्थस्योक्त्या किञ्चिद्विषयीकृतत्वात् गुणीभाव एव शोभते। यदा वक्रोक्तिं विना व्यङ्ग्योर्थस्तात्पर्येण प्रतीयते तदा तस्य प्राधान्यम्। यथा 'एवं वादिनि देवर्षौ' इत्यादौ। इह पुनरुक्तिर्भङ्ग्यास्तीति वाच्यस्यापि प्राधान्यम्। तस्मान्नात्रानुरणनरूपव्यङ्ग्यनिव्यपदेशो विधेयः।

लीला— इत्थं व्यङ्ग्यस्य गुणभाव संविविच्य सम्प्रति ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्कीर्णविषयं विभजते प्रभेदस्येत्यादिना- यः च युक्त्या अस्य प्रभेदस्य विषयः प्रतीयते तत्र सहृदयैः ध्वनियोजना न विधातव्या इति पदव्यवस्था।

यः= य एव, च, युक्त्या= चारुत्वोपयोगिदृष्ट्या— चमत्कारतारतम्येन, अस्य= अनन्तरोक्तस्य, प्रभेदस्य= गुणीभूतव्यङ्ग्यप्रकारस्य, विषयः= लक्ष्यं, प्रतीयते= लक्ष्यते, तत्र= तादृशस्थले, सहृदयैः= रसिकैः, कविभिः, ध्वनियोजना= ध्वन्याभिनिवेशः, न= नैव, विधातव्या= कर्तव्या इति। यत्र च व्यङ्ग्यस्य गुणभावेनैव चारुत्वातिशयता तत्र कविभिर्ध्वन्यभिनिवेशो न कार्य इति, यत् उभयोरेव प्रयोजनं चारुत्वातिशययोजनमेवेति। यत्र यस्य सङ्गतिस्तत्र तस्यैव योजनोत्कर्षावहा भवतीति।

कारिकाशयं विवृणोति वृत्तिकारः सङ्कीर्ण इत्यादिना—ध्वनेः= वाच्यातिशायि-व्यङ्ग्यस्य= व्यङ्ग्यातिशायिवाच्यस्य, च, लक्ष्ये= विषये, कश्चित्, हि, सङ्कीर्णः= मिश्रितः, मार्गः= पन्था, दृश्यते= विलोक्यते। तत्र, यत्र, यस्य, युक्तिसहायता=युक्ते-श्चारुत्वोत्कर्षस्य सहायता बृंहणत्वं, तत्र, तेन, एव, व्यपदेशः= संज्ञा, कर्तव्यः, सर्वत्र= सर्वस्मिन्नेव स्थले, ध्वनिरागिणा= ध्वन्यन्धभक्तेन, न भवितव्यमिति।

तदेवोदाहरति— यथा= इति निदर्शने। उदाहरणं प्रस्तौति पत्युरित्यादि अनेन पत्युः शिरश्चन्द्रकलां स्पृश इति संख्या चरणौ रञ्जयित्वा परिहासपूर्व कृताशीः सा तां माल्येन निर्वचनं जघान इति पदव्यवस्था।

अनेन= पादेन, पत्युः= परिणेतुः, शिरश्चन्द्रकलां= शिरसि मूर्ध्नि या चन्द्र-कला, तां , स्पृश= आमृश, इति, संख्या= कर्त्र्या, चरणौ= पादौ, रञ्जयित्वा= सालक्तकौ, कृत्वा,परिहासपूर्वं= सपरिहासं, कृताशीः= विहिताशीर्वादा, सा= पार्वती, तां= सखीं, माल्येन= स्रजा, निवर्चनं-तूष्णीमेव, जघान= ताडयासेति।

तस्यैवोदाहरणान्तरं प्रस्तौति— यथा, च, प्रयच्छतेत्यादिना— उच्चैः कुसुमानि प्रयच्छता दयितेन विपक्षगोत्रं लम्भिता मानिनी न किञ्चिद् ऊचे वाष्पाकुललोचना केवलं चरणेन भुवं लिलेख इति पदव्यवस्था।

उच्चैः= ऊर्ध्वस्थितानि अत एव स्वयं ग्रहीतुमशक्यतया प्रार्थितानि, कुसुमानि= पुष्पाणि, प्रयच्छताः= समर्पयता, दयितेन= प्रियेण, विपक्षगोत्रं= समत्नीनामधेयं, लम्भिता= प्रापिता-तन्नाम्नाऽऽहूता, मानिनी= ईर्ष्यावती, न=

नैव, किञ्चित्= किमपि, ऊचे= जगाद्, किन्तु, वाष्पाकुललोचना= अश्रुपूर्णा-कुलेक्षणा, केवलं= पदा, भुवं= धरित्रीं, लिलेख= विभेदेति।

उभयोरेव पर्यवसितं निर्दिशति इत्यत्रेत्यादिना—इति= इत्थं, अत्र= अनन्तरो-क्तपद्ययोः, निर्वचनं जघान, 'न किञ्चिदूचे' इति च, प्रतिषेधमुखेन= निषेधद्वारा, व्यङ्ग्यस्य= प्रतीयमानस्य, प्रथमोदाहरणे लज्जावहित्थादेः द्वितीयोदाहरणे साति-शयमन्युसम्भाररूपस्य च, अर्थस्य, उक्त्या= कथनेन किञ्चिद्विषयीकृतत्वात्= स्वल्पं गतार्थत्वात्, गुणीभावः= वाच्योपस्कारकत्वं, एव,= इति व्यवच्छेदे न तु प्रधानीभाव इति, शोभते= उपयुक्तो भवति।

अस्यायमाशयः— प्रथमोदाहरणे 'पत्युः शिरश्चन्द्रकलामनेन स्पृशेति कथने तथा तु मानापनयनावसरे पत्यौ पादपतिते वा सुरवतविशेषविधानावसरे उद्गृहीते च चरणे एव सम्भवात् तत्प्रतिपत्त्या कुमारीजने लज्जावहित्थाहर्षेर्ष्यासाध्व-ससौभाग्याभिमानप्रभृति यत्र भाविप्रियसङ्गमसूचनेन लज्जा, प्रियस्य स्वपादपतन-कल्पनया जनितो य आनन्दातिरेकस्तस्य गोपनेन अवहित्था, पत्युः शिरसि स्थितायाश्चन्द्रकलायाः स्मरणेन ईर्ष्या, भाविसमागमकल्पनया भयं, पत्युः सपत्न्याश्च पादपतनकल्पनया सौभाग्यं, चन्द्रकलापेक्षया स्वपादयोरेव सौन्दर्या-धिक्यसम्भावनया अभिमानञ्च यद्यपि ध्वन्यते तथापि तत्समग्रमेव निर्वचनश-ब्दार्थस्य कुमारीजनौचित्याप्रतिपत्तिलक्षणार्थस्य केवलमुपस्कारकतया तस्य गुणी-भाव एव कामं स्वयमपि तथोपस्कृतः शृङ्गाररराङ्गतामेति। एवमेव द्वितीयोदाहरणो प्रियेण सपत्नीनामग्रहणे स्वावज्ञाप्रतीत्या सातिशयमन्युसम्भाररूपः प्रतीयमानार्थः वचननिषेधरूपस्य वाच्यस्यैवोपस्कारक इति तत्रापि वयङ्ग्यस्य गुणीभाव एवेति उभयत्र व्यङ्ग्यस्य वाच्योपस्कारकतया वाच्यायमानत्वमेव।

तर्हि कुत्र ध्वनित्व स्यादित्यत आह यदेत्यादिना— यदा, च, वक्रोक्तिं= अतिशयितोक्तिं— वैचित्रभङ्गीभणितिं, विना, अन्तरेण, तात्पर्येण= अभिप्रायेण-व्यञ्जनया, व्यङ्ग्यः= प्रतीयमानः, अर्थः, प्रतीयते= प्रकाश्यते, तदा= तादृशावसरे तस्य= वयङ्ग्यार्थस्य, प्राधान्यं= प्रधानभाव अर्थात्, ध्वनिरिति। यथा= इति निदर्शने, एवंवादिनि देवर्षौ' इत्यादौ।

तत्र हि पार्वत्या मुखनमनलीलाकमलगणनादिव्यापारेण प्रत्यायिता लज्जा केवलमेव ध्वनेर्विषयः। इह= अनन्तरोदाहरणे, तु, पुनः, उक्तिः= कथनं, भङ्ग्या= वक्रतया, अस्ति, इति= हेतोः, वाच्यस्य= वाच्यार्थस्य, अपि, प्राधान्यं= प्रधानभावो व्यङ्ग्यापेक्षया, रसापेक्षया तु तस्यापि गुणतैवेति। तत्र पर्यवसिताह तस्मादित्या-दिना— तस्मात्= तद्धेतोः, अत्र= अनन्तरोदाहरणयोः, अनुरणनरूपव्यङ्ग्यध्वनि-व्यपदेशः= अर्थशक्त्युद्भवानुस्वानोपमव्यङ्ग्यध्वनिसंज्ञानं, न, विधेयः= कर्तव्य असंलक्ष्यक्रमव्यङ्ग्यस्य तु सत्त्वमेवेति।। ३९।।

इस प्रकार व्यङ्ग्य के गुणभाव का विवेचन कर अब उसके एवं ध्वनि के सङ्कीर्ण विषय का विभाजन करते हैं—

चारुत्व की अतिशयता की दृष्टि से व्यङ्ग्य के इस प्रभेद का अर्थात् गुणीभूत व्यङ्ग्य का विषय प्रतीत होता है वहाँ सहृदयों को ध्वनि की योजना नहीं करनी चाहिए।। ३९।।

वृत्तिकार कारिका के आशय का पल्लवन करते हैं— ध्वनि एवं गुणीभूतव्यङ्ग्य का भी लक्ष्य में कोई मिश्रित मार्ग दिखाई पड़ता है वैसे में जहाँ जिसका चारुत्व प्रतीति में ज्यादा हाथ होता है वहाँ उसी का व्यपदेश होना चाहिए और सभी जगह ध्वनि के ही पीछे दौड़ना भी नहीं चाहिए।

कहने का आशय यह है कि जहाँ जिससे चारुत्व की अतिशयता सम्भव हो वाहँ उसको ही मान लेना चाहिए नि कि दूसरे को। जैसे—

''इससे पति के शिर में स्थित चन्द्रकला को छू लेना' इस तरह सहेली के द्वारा परिहास के साथ चरणों को रंग कर आशीष दी गई पार्वती ने चुपचाप उसको माला से मारा।''

जैसे— और ऊँचे जगह से वाञ्छित फूलों को तोड़ कर देने वाले प्रियतम के द्वारा विपक्ष अर्थात् सौत के नाम को प्राप्त की हुई (सौत के नाम से पुकारी गई) मानिनी ने कुछ नहीं कहा केवल आँसुओं से आकु़ल नयनवाली वह पैर से भूमि को कुरेदने लगी।

उन दोनों में अभीष्ट वस्तु का निर्देश करते हैं—

यहाँ 'विना कुछ कहे ही माला से मारा', और 'कुछ नहीं बोली' इस प्रतिषेध के द्वारा निष्फल व्यङ्ग्य अर्थ का उक्ति से कुछ विषय बना लेने के कारण उसका गुणीभाव ही अच्छा बैठता है न कि प्रधानभाव। जब कथन की भङ्गी के विना ही तात्पर्य के रूप में ही व्यङ्ग्य अर्थ प्रतीत होता है तब ही उसकी प्रधानता बन पाती है, जैसे 'देवर्षि के इस प्रकार कहने पर' इत्यादि में। इन उदाहरणों में तो व्यङ्ग्य जो है वह उक्ति की भङ्गिमा से निष्पन्न है अत: वहाँ वाच्य की भी प्रधानता है। अतएव यहाँ पर अनुरणन रूप व्यङ्ग्य ध्वनि का व्यपदेश किया नहीं जाना चाहिए।

कहने का आशय यह है कि पहले उदाहरण में चरण से पति के शिर में स्थित चन्द्रकला को छू लेने की जो बात कही गई उससे पार्वती के भावी प्रियसङ्गम की सूचना मिलती है क्योंकि चरण से पति के शिर को छू लेना दो ही अवसरों पर सम्भव है, एक तो जब पति से रूठी हुई को मनवाने के लिए पति उसके पैर पड़े या तो समागम के अवसर पर पैर ऊपर की ओर उठाए गए हों। दोनों ही स्थितियाँ प्रमदा के लिए आनन्दातिरेक की होती हैं। उसमें कुमारी भाव के कारण पार्वती को आनन्द के साथ साथ लज्जा का भी अनुभव हुआ और उसे वे छुपाने का प्रयास करने लगी। चन्द्रकला के ऊपर ईर्ष्या भी हुई और पति के द्वारा पैर पड़ने की बात से हर्ष भी हुआ, पति एवं सौत के अपने पैर पकड़े जाने की बात से सौभाग्य भी हुआ और साथ-साथ भावी समागम की कल्पना से सहज साध्वस भी। लेकिन ये सब व्यङ्ग्य

विना कुछ बोले ही 'वाच्यार्थ के उपस्कारक हैं और उनसे उपस्कृत शृङ्गार की अङ्गता में प्राप्त होता है।

इसी तरह दूसरे उदाहरण में मानिनी का जो अतिशय क्रोध रूप व्यङ्ग्य है वह, कुछ नहीं बोली' वाच्यार्थ का उपस्कारक है। और दोनों में जो व्यङ्ग्य है वह उक्ति की भङ्गिमा से ही निष्पन्न हैं अतः दोनों में व्यङ्ग्य का गुणीभाव है और वहाँ अर्थ शक्ति के द्वारा व्यङ्ग्य का आक्षेप मान कर अनुरणन रूप व्यङ्ग्य ध्वनि मानी नहीं जा सकती। ध्वनि तो वहाँ होती है जहाँ वक्रोक्ति के विना ही तात्पर्य से ही व्यङ्ग्यार्थ की प्रतीति हो। वैसे गुणीभूत व्यङ्ग्य उपस्कृत वाच्यार्थ भी फिर स्वयं रसादि ध्वनि के अङ्गत्व में प्राप्त हो जाता है, अतः अन्य में ध्वनि की ही प्रधानता बनी रहती है।। ३९।।

कारिका— प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः।। ४०।।

ध्वन्या०— गुणीभूतव्यङ्ग्योऽपि काव्यप्रकारो रसभावादितात्पर्यपर्यालोचने पुनर्ध्वनिरेव सम्पद्यते। यथात्रैवानन्तरोदाहृते श्लोकद्वये।

यथा च—

दुराराधा राध सुभग यदनेनापि मृजत—
स्तवैतत्प्राणेशाजघनवसनेनाश्रुपतितम्।
कठोरं स्त्रीचेतस्तदलमुपचारैर्विरम हे
क्रियात्कल्याणं वो हरिरनुनयेष्वेवमुदितः।।

ल०ला— इत्थं गुणीभूतव्यङ्ग्यध्वन्योः क्षेत्रविभ्भाजनं निर्दिश्य सम्प्रति गुणीभूतव्यङ्ग्यस्य रसादिध्वन्यभिप्रायेण ध्वनित्वं निर्दिशति प्रकार इत्यादिना— अयं गुणीभूतव्यङ्ग्यः प्रकारः, अपि रसादितात्पर्यपर्यालोचनया पुनः ध्वनिरूपतां धत्ते इति पदव्यवस्था।

अयं= एषः, गुणीभूतव्यङ्ग्यः, वाक्योपस्कारकत्वेन चारुत्वाविश्रान्तेरप्रधानीभूतव्यङ्ग्यत्वेन निर्दिष्टः, प्रकारः= भेदः, अपि= च, रसादितात्पर्यपर्यालोचनया= रसादीनामसंलक्ष्यक्रमव्यङ्ग्यानां तात्पर्यं प्रयोजनं तस्य पर्यालोचनया अपेक्ष्या, पुनः ध्वनिरूपतां धत्ते= धारयति इति। संलक्ष्यक्रमव्यङ्ग्यापेक्षया गुणीभूतव्यङ्ग्यं काव्यमपि पुनः असंलक्ष्यक्रमव्यङ्ग्यापेक्षया तु ध्वनित्वमेवायातीति पर्यवसाने ध्वनेरेव काव्यात्मत्वं सिध्यतीति।

कारिकां विवृणोति वृत्तिकारो गुणीभूतेत्यादिना— गुणीभूतव्यङ्ग्यः= वाच्योपस्कारकतया गुणभावं प्राप्तो व्यङ्ग्योऽर्थो यस्मिंस्तादृशः, अपि काव्यप्रकारः= काव्यभेदः, रसभावादितात्पर्यालोचन= रसभावादिप्रयोजनेन विवक्षिते, तु, पुनः ध्वनिः, एव सम्पद्यते= सिध्यति इति। तन्निदर्शयति यथेत्यादिना यथा= इति निदर्शने, अत्रैव= अस्मिन्नेव प्रकरणे, अनन्तरोदाहृते, श्लोकद्वये= पत्युः

शिरश्चन्द्रकलामनेन' इति, 'प्रयच्छतोच्चैः कुसुमानि' इत्यपि च श्लोकयोरिति।

अस्यायमाशयः— चारुत्वापर्यवयायितया व्यङ्ग्यस्य वाच्योपस्कारकत्वेन गुणीभावेऽपि पुनस्तद्विशिष्टस्य वाच्यार्थस्यैव रसादिध्वनेस्तात्पर्येण तदङ्गताप्राप्तेः पर्यवसाने तु तस्यापि ध्वनित्वमेव सिध्यति। यथा अनन्तरोदाहृतप्रथमपद्ये पार्वत्या लज्जादिभावव्यङ्ग्यस्य निर्वचनताडनरूपवाच्यार्थस्योपस्कारकत्वेन गुणीभावेऽपि पुनस्तादृशवाच्यार्थोऽपि शृङ्गाराङ्गतां पर्यवस्यतीति तस्यापि ध्वनेरेवाङ्गत्वम्। एवञ्च द्वितीये पद्ये मानिन्याः सातिशयमन्युसम्भाररूपस्य व्यङ्ग्यस्य अकिञ्चित्कथनरूपवाच्यार्थस्योपस्कारकत्वेऽपि पुनस्तस्यैव शृङ्गाराङ्गतया ध्वनेरङ्गत्वं सिध्यति। इति। तस्यैव पुनरुदाहरणान्तरं प्रस्तौति यथेत्यादिना— यथा= इति निदर्शने च। तदेवोपस्थापयति दुराराधेति— हे सुभग ! यद् अनेन प्राणेशाजघनवसनेन एतत् पतितं अश्रु मृजतः अपि तव राधा दुराराधा स्त्रीचेतः कठोरं तद उपचारैः अलम् हे विरम अनुनयेषु एवं उदितः हरिः वः कल्याणं क्रियादिति पदव्यवस्था।

हे सुभग ! हे सुन्दर !, यद्, अनेन= भवद्धस्तगतेन, प्राणेशाजघनवसनेन= प्राणेशा तव मदधिकबल्लभा तस्याः जघनवसनेन परिधानपटेन, एतत्= अविरलं, पतितं= नयनस्रस्तं अश्रु= वाष्पं— जातावेकवचनं, मृजतः= प्रोञ्छतः, अपि, तव= भवतः, राधा= अहं वृषभानुसुता— अनेन तस्या मानिनी वैशिष्ट्यं ध्वन्यते तिरस्कृतवाच्यत्वेन, दुराराधा= दुष्प्रसादा, यतः, स्त्रीचेतः= प्रमदाहृदयं, कठोरं= निष्ठुरं, भवतीति शेषः, तत्= तस्मात्, उपचारैः= प्रसादनोपायैः, अलं= न किमपि प्रयोजनं, हे इति समाक्षेपे, विरम= अस्मान्निरर्थकोपचारान्निर्वर्तस्व, अनुनयेषु= प्रणयकुपितप्रेयसीप्रसादनेषु, एवं= इत्थं, उदितः= कथितः प्रत्याख्यातः, हरिः= कृष्णः, वः= युष्माकं, कल्याणं= शुभं, क्रियात्= विधासीष्टेति।

प्रणयकुपितां राधामनुनिनीषति प्रियतमे अकारणकुपिता त्वं पादपतिते भयि अपि न प्रसीदसीति दुराधाऽसि, मा रोदीरित्युक्तिपूर्वं अश्रूणि मार्जयति प्रेयस्या अभ्युपगमगर्भा उक्तिरियम्। अत्र सुभग इति सततप्रियासान्निध्यं अनेनेति प्रत्यक्षमेव निर्लज्जं स्वेतरस्त्रीवस्त्रधारणं, मृजत इति शत्रन्तेनाश्रूणां स्रोतस्सहस्रवाहित्वं, स्त्रीति प्रेमाद्ययोगान्नीरसवस्तुविशेषमात्रं, अनुनयेष्विति बहुवचनेन बहुवल्लभस्य सौभाग्यातिशयद्योतनं, राधेति स्वनामग्रहणेन तिरस्कृतवाच्यत्वेन परिभवासहिष्णुद्योतनं, दुराराधा इत्यनेन मानादार्ढ्य उपचारैरिति प्रियस्य चाटुपटुता, विरमेत्यनेनाभ्युपगमगर्भत्वमित्येवं व्यङ्ग्यौघो वाच्यस्यैवोपस्कारक इति तस्य गुणीभूतत्वं तद्विशिष्टवाच्यस्य च पुनः ईर्ष्याविप्रलम्भाङ्गत्वमिति तस्यापि ध्वनिरूपोदाहरणमिदम्।

ये खलु त्रिष्वपि पद्येषु व्यङ्ग्यार्थस्यैव रसाङ्गत्वमामनन्ति ते धनाभावेन देवमूर्तिमेव विक्रीय पुनस्तद्यात्रोत्सवं कुर्वन्तीति लोचनकारमतम्। रसादिव्यतिरिक्तस्य व्यङ्ग्यस्य रसाङ्गभावयोगित्वमेव प्राधान्यमिति।

इस प्रकार गुणीभूतव्यङ्ग्य एवं ध्वनि का विषयविभाजन कर अब गुणीभूत व्यङ्ग्य का रसादि के तात्पर्य से ध्वनि के अंग होना का निर्देश करते हैं।

गुणीभूतव्यङ्ग्य का यह प्रकार भी रस भाव आदि के तात्पर्य के पर्यालोचन से फिर ध्वनि का रूप धारण कर लेता है। (ध्वनि तो ध्वनि है ही)।। ४०।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं– जिसमें व्यङ्ग्य का गुणीभाव हो वौ काव्य का प्रकार भी रस, भाव आदि के तात्पर्य की दृष्टि से रि ध्वनि में ही परिणत हो जाता है। अर्थात् वाच्य की दृष्टि से अनुरणन रूप व्यङ्ग्य गुणीभूत भले ही हो लेकिन अन्ततः असंलक्ष्यक्रम व्यङ्ग्य की दृष्टि से वह ध्वनि का ही रूप ले लेता है। जैसे अभी-अभी यहीं उदाहृत दोनों पद्यों में।

और जैसे– हे सुभग ! जो इस तुम्हारी प्रेयसी (जो कि मुझसे भी ज्यादा प्रिय है) के जघन के पट से इन गिरे हुए आँसुओं को पोंछते हुए भी तुम्हारे लिए राधा अब आसानी से मानने वाली नहीं है, स्त्री का चित्त कठोर होता है, इन उपचारों से फुसलाने के लिए किए गए प्रयासों से कोई लाभ नहीं है, कपटी, हटो, अनुनयों में इस प्रकार कहे गए हरि आप सब का कल्याण करें।

कहने का आशय यह है कि पहले पद्य में पार्वती के लज्जा सौभाग्य, अभिमान आदि प्रतीयमान अर्थ जो हैं वे सब बिना कुछ बोले ही माला से मारा वाच्यार्थ के उपस्कारक होने से उनका गुणीभाव हो सकता है, लेकिन फिर उस व्यङ्ग्यार्थ से उपस्कृत वाच्यार्थ के शृङ्गार के अंग होने से ध्वनिरूप में परिणत होता है। उसी तरह दूसरे पद्य में मानिनी का अतिशयता से युक्त जो क्रोध है, वह प्रतीयमान अर्थ है और वह 'कुछ नहीं बोली' वाच्यार्थ के उपस्कारक होने से गुणीभूत है किन्तु उससे उपस्कृत वाच्यार्थ के ईर्ष्याविप्रलम्भ के अंग होने से ध्वनित्व होता है। इसी प्रकार तीसरे पद्य में सुभग शब्द से बहुबल्लभत्व का सौभाग्य, राधा शब्द से अनादर का असहिष्णुत्व, 'आसानी से मानने वाली नहीं है' से मान की दृढ़ता, पोंछते हुए' से आँसुओं की अविरल वर्षा, स्त्री शब्द से प्रेम का न जानना, कठोर शब्द से राजी करने के लिए अयोग्य, उपचार में बहुवचन से नायक की फुसलाने के कार्य में दक्षता आदि जो व्यङ्ग्य अर्थ है वे सब वाच्यार्थ के उपस्कारक हैं अतः उनका गुणीभाव है वह उस तरह व्यङ्ग्य अर्थ से भूषित वाक्य ईर्ष्याविप्रलम्भ का अंग बन जाता है।

कोई कोई तो इन तीनों पद्यों में व्यङ्ग्य को ही रस के अंग मानते हैं। वे, लोचनकार के मत में, देवमूर्ति को बेचकर देव यात्रा चलाते हैं। रसादि से व्यतिरिक्त व्यङ्ग्य का रस के अंगभाव में जुट जाना ही प्राधान्य होता है।

ध्वन्या०– एवंस्थिते च 'न्यक्कारो ह्ययमेव' इत्यादि श्लोकनिर्दिष्टानां पदानां व्यङ्ग्यविशिष्टवाच्यप्रतिपादनेऽप्येतद्वाक्यार्थी– भूतरसापेक्षया व्यञ्जकत्वमुक्तम्। न तेषां पदानामर्थान्तरसङ्क्रमितवाच्यध्वनिभ्रमो विधातव्यः। विवक्षितवाच्यत्वात्तेषाम्। तेषु हि व्यङ्ग्यविशिष्टत्वं वाच्यस्य प्रतीयते

न तु व्यङ्ग्यरूपपरिणतत्वम्। तस्माद्वाक्यं तत्र ध्वनिः पदानि तु गुणीभूतव्यङ्ग्यान्येव पदान्यलक्ष्यक्रमव्यङ्ग्यध्वनेर्व्यञ्जकानि यावदर्थान्तरसङ्क्रमितवाच्यानि ध्वनिप्रभेदरूपाण्यपि। यथात्रैव श्लोके रावण इत्यस्य प्रभेदान्तररूपव्यञ्जकत्वम्।

यत्र वाक्ये रसादितापर्यं नास्ति गुणीभूतव्यङ्ग्यैः पदैरुद्भासितेऽपि तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः। यथा—

> राजानमपि सेवन्ते विषमप्युपयुञ्जते।
> रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः॥

इत्यादौ।

लीला— इत्थं ध्वनिगुणीभूतव्यङ्ग्ययोर्विभागं सोदाहरणं निर्दिश्य तदन्यत्राऽप्युपपादयति एवमित्यादिना— एवं अनन्तरोक्तप्रकारेण ध्वनिगुणीभूतव्यङ्ग्ययोर्विभागे, स्थिते, च, 'न्यक्कारो ह्ययमेव' इत्यादिश्लोकनिर्दिष्टानां= तत्रत्यानां, पदानां व्यङ्ग्यविशिष्टवाच्यप्रतिपादने= प्रतीयमानार्थोपस्कृतवाच्यार्थस्वरू— पावधारणे, अपि, एतद्वाक्यार्थीभूतरसापेक्षया= एतस्य यो वाक्यार्थीभूतः प्राधान्येनाभिमतो रसो वीराख्यस्तस्यापेक्षया, व्यञ्जकत्वं= प्रकाशकत्वं, उक्तं= कथितमिति। तत्र पदानां प्रधानव्यङ्ग्यव्यञ्जकभावेन गुणीभूतव्यङ्ग्यत्वं वाक्यार्थस्य तु प्रधानभूतवीररसव्यञ्जकत्वेन ध्वनित्वमिति। तेन, तेषां= तत्पद्यघटकपदानां, अर्थान्तरसङ्क्रमितवच्यध्वनिभ्रमः= वाच्यस्य वाक्येऽनन्वयादन्यार्थे तस्य सङ्क्रमेण यो ध्वनिर्भवति तस्य भ्रमो मिथ्याधारणा, न विधातव्यः= कर्तव्यः। तथाऽकरणे हेतुमाह तेषां= तत्रत्यपदानां, विवक्षितवाच्यत्वात्= वाच्यार्थस्य विवक्षाभावात्। तत्र पर्यवसितं निर्दिशति तेष्वित्यादिना— तेषु= तत्रत्यपदेषु, हि, वाच्यस्य= वाच्यार्थस्य, व्यङ्ग्यविशिष्टत्वं= व्यङ्ग्योपस्कृतत्वं, प्रतीयते= द्योत्यते, न= नैव, तु= इति व्यवच्छेदे, व्यङ्ग्यरूपपरिणतत्वं= प्रतीयमानस्वरूपविवर्तित्वम्। तस्मात्= तद्धेतोः, तत्र= तत्पद्ये, वाक्यं, ध्वनिः= रसध्वनि, पदानि= घटकानि, तु, गुणीभूतव्यङ्ग्यानि= वाच्योपस्कारकत्वेनाप्रधानीभूतप्रतीयमानार्थान्येव। केवलं, गुणीभूतव्यङ्ग्यानि= अप्रधानीभूतप्रतीयमानार्थानि, एव, पदानि, अलक्ष्यक्रमव्यङ्ग्यध्वनेः= रसादिध्वनेः, व्यञ्जकानि= प्रकाशकानि, न= नैव, अपितु, यावत्= तदतिरिक्तं, ध्वनिप्रभेदरूपाणि, अर्थान्तरसङ्क्रमितवाच्यानि, अपि, यथा= इति उक्तदार्ढ्याय निदर्शनं, अत्र= अस्मिन्, एव, श्लोके, 'रावण' इत्यस्य पदस्य, प्रभेदान्तररूपव्यञ्जकत्वं= अहमिति कथनस्थले नामग्रहणेन तस्य वाच्यस्य अर्थान्तरे सङ्क्रमितत्वातद् ध्वनेः प्रकाशकत्वमिति। न च सर्वत्र गुणीभूतव्यङ्ग्यस्य ध्वनिरूपतैव किन्तु, यत्र= यस्मिन, गुणीभूतव्यङ्ग्यैः= अप्रधानीभूतप्रतीयमानार्थैः, पदैः, उद्भासिते= प्रकटिते, अपि, वाक्ये, तु= इति व्यवच्छेदे= रसादितात्पर्य= रसभावा-

द्यभिप्रायं, नास्ति, तत्र, गुणीभूतव्यङ्ग्यता, एव, समुदायधर्मः= पदौघविशेषतेति तत्र नैव ध्वनिरिति। तदेवोदाहरति यथेति। उदाहरणं प्रस्तौति राजानमित्यादि- कुशलाः मानवाः खलु राजानं अपि सेवन्ते, विषम् अपि उपयुञ्जते, स्त्रीभिः सह रमन्ते च इति पदव्यवस्था।

कुशलाः= चतुराः,

मानवाः= जनाः, खलु= इति वाक्यालङ्कारे, राजानं= नृपं, अपि, सेवन्ते= शुश्रूषन्ते, विषं= गरलं, अपि, उपयुञ्जते= भक्षयन्ति, स्त्रीभिः= प्रमदाभिः, सह, रमन्ते= विहरन्ति, चेति।

इत्यादौ= इत्यादिवाक्ये गुणीभूतव्यङ्गत्वमेव पर्यवसायि प्राधान्येन रसविवक्षा भावात्। यथाऽत्र ये खलु लोकव्यवहारदक्षा जनाः सन्ति ते दुःषेव्यं नृपतिमपि भजन्ते, सद्यो जीवनहरं विषमपि प्रयुञ्जन्ति, प्रमदाभिः प्रायोमिथ्याप्रकटितस्ने- हाभिरपि विहरन्ति चेत्याशयेन राज्ञो दुराराधनीयत्वं विषस्याग्राह्यत्वं प्रमदानामसेव- नीयत्वमिति तच्चतुरैरेव साध्यं न तु साधारणैरिति प्रतीयमानोऽसाध्यकारित्वरूपो व्यङ्ग्यार्थः कुशलपदवाच्यार्थस्य चारुत्वसंयोजक इति तस्य गुणीभूततैव। अत्र सत्यपि शान्तरसाङ्गभूतनिर्वेदे प्रतीयमाने तदविवक्षया तस्य नैव प्राधान्यमिति। तेन न तत्र ध्वनित्वव्यपदेश इति। तथाभूतस्य गुण्यणीभूतव्यङ्ग्यस्यापि रसादिता- त्पर्यपर्यवसायित्वे एव ध्वनित्वं न तु सर्वत्रेति पर्यवसितोऽर्थः।

इस प्रकार ध्वनि एवं गुणीभूत व्यङ्ग्य का क्षेत्रभेद का निर्देश कर उसी को दूसरे जगह उपपादित करने के लिए प्रकरण का आरम्भ करते हैं—

इस प्रकार ध्वनि एवं गुणीभूतव्यङ्ग्य के निरूपित हो जाने पर 'न्यक्कारो ह्ययमेव' इत्यादि श्लोक में दिए गए पदों के व्यङ्ग्य से उपस्कृत वाच्य के प्रतिपादन करने पर भी इस वाक्य के अर्थभूत वीर रस की अपेक्षा व्यञ्जकत्व कहा गया है। उन पदों से अर्थान्तरसङ्क्रमितवाच्य ध्वनि की सम्भावना नहीं मानना चाहिए क्योंकि उनका वाच्यत्व विवक्षित है। उनमें वाच्य के व्यङ्ग्य से उपस्कृत तत्व की प्रतीति तो है लेकिन व्यङ्ग्य के रूप में परिणति नहीं। इस कारण वह वाक्य तो ध्वनि है, लेकिन पद तो गुणीभूत व्यङ्ग्य ही है। न तो केवल गुणी है भूतव्यङ्ग्य वाले पद मात्र अक्ष्यक्रम अर्थात् रसादि ध्वनि के व्यञ्जक होते हैं व अपितु ध्वनि के प्रभेद रूप अर्थान्तरसङक्रमित्वाच्य भी उसके व्यञ्जक होते हैं व जैसे इसी ही श्लोक में ':रावण' इस पद का दूसरा ही प्रकार व्यञ्जकत्व हैं लेकिन सभी जगह गुणीभूतव्यङ्ग्य ध्वनि का व्यञ्जक नहीं होता। जहाँ रस भाव आदि से तात्पर्य नहीं है वहाँ गुीभूतव्यङ्ग्य वाले पदों से प्रकाशित होने पर भी गुणीभूतव्यङ्ग्यत्व ही समुदाय का धर्म होता है। जैसे—

''लोक व्यवहार में कुशल जन राजा की भी सेवा करते हैं, विष भी खा लेते हैं और स्त्रियों के साथ भी रमण करते हैं।'' इत्यादि मे। यहाँ राजसेवा एवं स्त्री ससेवन विषपान के बराबर हैं' व्यङ्ग्य जो है वह वाच्य का उपस्कारक है। उस उपस्कृत वाच्य से विषय की विरसता से शान्त रस के अङ्गभूत निर्वेद का उद्भासन

तो होता है, लेकिन उसमें चमत्कार का पर्यवसान हो न पाने से ध्वनि गुणीभूतव्यङ्ग्य ही रह जाता है। ध्वनि तो केवल वहीं होती है जहाँ चमत्कार रसनिष्ठ हो। वैसा न होकर उसके वाच्यार्थ निष्ठ होने पर तो वह गुणीभूतव्यङ्ग्य ही होता है।

ध्वन्या०— वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्यविवेके, परः प्रयत्नो विधातव्यः। येन ध्वनिगुणीभूतव्यङ्ग्ययोरलङ्काराणां चासङ्कीर्णो विषयः सुज्ञातो भवति। अन्यथा तु प्रसिद्धालङ्कारविषय एव व्यामोहः प्रवर्तते।

यथा—

लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्ताननलो दीपितः
एषापि स्वयमेव तुल्यरमणाभवाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता।

इत्यत्र व्याजस्तुतिरलङ्कार इति व्याख्यायि केनचित्तन्न चतुरस्रम्, यतोऽस्याभिधेयस्यैतदलङ्कारस्वरूपमात्रपर्यवसायित्वेन सुश्लिष्टा। यतो न तावदयं रागिणः कस्यचिद्विकल्पः। तस्य 'एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता' इत्येवं विधोक्त्यनुपपत्तेः। नापि नीरागस्य, तस्यैवंविधविकल्पपरिहारैकव्यापारत्वात्। न चायं श्लोकः क्वचित्प्रबन्ध इति श्रूयते, येन तत्प्रकरणानुगतार्थतास्य परिकल्प्येत।

तस्मादप्रस्तुतप्रशंसेयम्। यस्मादनेन वाच्येन गुणीभूतात्मना निस्सामान्यगुणावलेपाध्मातस्य निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य विशेषज्ञमात्मनो न कञ्चिदेवापरं पश्यतः परिदेवितमेतदिति प्रकाश्यते।

लीला— वाच्यव्यङ्ग्ययो प्राधान्याप्राधान्यविवेकस्य उपयोगित्वं निर्दिशति वाच्येत्यादिना वाच्यव्यङ्ग्ययोः= वाच्यार्थप्रतीयमनार्थयोः, प्राधान्याप्राधान्यविवेके= मुख्यत्वामुख्यत्वविचारे, कविना, परः= महान्, प्रयत्नः= उद्यमः, विधातव्यः= कर्तव्यः तथाकरणे फलमाह येनेत्यादिना— येन= वाच्यव्यङ्ग्यप्राधान्याप्राधान्यविवेकेन, ध्वनिगुणीभूतव्यङ्ग्ययोः= चारुत्वपर्यवसायिप्रतीयमानार्थस्य वाच्योपस्कारव्यङ्ग्यस्य च, अलङ्काराणां= व्यङ्ग्यानलंकृतवाच्यालङ्काराणां च, असङ्कीर्णः= स्पष्टं सुविभक्तः, विषयः= क्षेत्रं, सुज्ञातः= स्पष्टमेव विदितः, भवति। अन्यथा= तदभावे, तु= इति व्यवंच्छेदे— तद्व्यतिरिक्तं, प्रसिद्धालङ्कारविषये= वाच्यालङ्कारलक्ष्ये, एव= इति किं कुत व्यङ्ग्यविषये, व्यामोह= भ्रमः, प्रवर्तते= उत्पद्यत इति।

इत्थमुक्तं भवत्यत्र— कविना प्रथमं तु वाच्यार्थव्यङ्ग्यार्थयोः सद्भावस्य मुख्यत्वामुख्यत्वस्य च विवेकोः कर्तव्यः। तदभावे वाच्यालङ्कारे एव भ्रमः सम्भवति किमुत व्यङ्ग्ये। तत्र व्यङ्ग्याभावे सति शुद्धानामेवालङ्काराणां प्राधान्यं

भवति। व्यङ्ग्यसद्भावे तु तस्य प्राधान्ये ध्वनिर्भवति तस्याप्राधान्ये तु गुणीभूतव्यङ्ग्य एव। प्राधान्यहेतुश्च चारुत्वप्रकर्ष एव। यदि चारुत्वं व्यङ्ग्ये पर्यवस्यति तदा तस्य प्राधान्यं सञ्जायते काव्यञ्च तादृशं ध्वनिसंज्ञितम्। तद्विपरीतं व्यङ्ग्यापेक्षया यत्र वाच्यार्थे चारुत्वप्रकर्षस्तदा तस्य गुणीभावेन काव्यं गुणीभूतव्यङ्ग्यं भवति। तेन कविना तन्निर्धारणे कृतोद्यमेन भवितव्यमिति।

तदेवोदाहरति यथेत्यादिना। उदाहरणं प्रस्तौति लावण्येत्यादिना— लावण्यद्रविणव्ययः न गणितः महान् क्लेशः स्वीकृतः स्वच्छन्दस्य सुखं वसतः जनस्य चिन्तानलदीपितः एषा वराकी स्वयम् अपि तुल्यरमणाभावात् हता एव इति तन्व्याः तनुं तन्वता वेधसा चेतसि कः अर्थः विनिहित इति पदव्यवस्था।

लावण्यद्रविणव्ययः= लावण्यं सौन्दर्यं एव यद् द्रविणं धनं तस्य व्ययो विगमः, न गणितः= अवेक्षितः, तस्या लावण्यमयतनुनिर्मितौ यदेव सञ्चितं लावण्यवित्तं तस्यापरिमितविगमानपेक्ष्येण सा सृष्टा विधिना, महान्= परमः, क्लेशः= कष्टं, स्वीकृतः= ऊरीकृतः— तस्यास्तादृशलावण्यमयविग्रहरचनाया बहुकालबहुश्रमसाध्यत्वात्तत्रापेक्षितः श्रमोऽपि कृत एव विधात्रा, किन्तु तेन लावण्येन, एकंतः स्वच्छन्दस्य= निश्चिन्तितत्वेन विशृङ्खलस्य, अत एव सुखं= सामोदं, वसतः= व्यवहरतः, जनस्य= सम्बन्धितजनस्य, सखीजनस्य वा चिन्तानलः= कस्मै प्रदेयेति सदृशं वरं प्राप्स्यति वा न वेति वा या चिन्ता सन्तापः सा एवानलो दहनः, दीपितः= प्रज्वालितः, एषा= तथाविधलावण्यसर्वस्वा, वराकी= मन्दभाग्या, स्वयम्, अपि, तुल्यरमणाभावात्= सदृशकान्तालाभेन, हता= विनष्टा, इति= हेतोः, तन्व्याः= कृशाङ्ग्याः, तनुं= वपुः, तन्वता= निर्मितवता, वेधसा= विधात्रा, चेतसि= मनसि, कः= कीदृशः, अर्थः= नप्रयोजनं, न निर्मातुर्न निर्मितस्य न च लोकस्यैवानन्दायाभूदिति। विनिहितः= स्थापितः इति न जानीम इति।

लक्ष्ये लक्षणं योजयति इत्यत्रेत्यादिना- इति= इत्थं, अत्र= श्लोकेऽस्मिन्, व्याजस्तुतिः= निन्दास्तुतिभ्यां स्तुतिनिन्दारूपलक्षणं= अलङ्कारः, केनचित्= लाक्षणिकेन, व्याख्यायि= निरणायि, तत्= तथाव्याख्यानं, न= नैव, चतुरस्रं= समीचीनं, यतः= यस्मात्, अस्य= एतत्पद्यगतस्य, अभिधेयस्य= वाच्यस्य, एतदलङ्कारस्वरूपमात्रपर्यवसयित्वे= एषः व्याजस्तुतिरूपः योऽलङ्कारस्तस्य स्वरूपमात्रे विग्रसाधारणमात्रे यदेव पर्यवसायित्वं विश्रान्तिस्तस्मिन्, न, सुश्लिष्टता= सङ्गतिः। तथाभवने हेतुमाह— यतः= यस्माद्धेतोः, अयं= एषः वाक्यार्थः, तावत्= इति साकल्ये, न कस्यचित्, रागिणः= अनुरक्तस्य, विकल्पः ऊहापोहः, तत्रापि हेतुं निर्दिशति— तस्य= रागिणः एषापि हता, 'इति= इत्थम्', एवंविधोक्त्यनुपपत्तेः= एवंविधा ईदृशी आत्मनस्तद्रमणयोग्यताऽभावरूपग- र्हणारूपा तस्याश्च करुणामङ्गलरूपा या उक्तिः कथनं तस्या अनुपपत्तेरनन्वयसिद्धेः। न, नीरागस्य=

विगतरागस्य, अपि यतः, तस्य= विगतरागस्य, एवंविधविकल्पपरिहारैकव्यापा-
रत्वात्= एवंविधः ईदृशो विषयसम्बद्धो यो विकल्पो वितर्कस्य परिहारस्त्याग
एव एकोऽनन्यो व्यापारश्चेष्टा यस्य तस्य भावस्तत्वं तस्मात्। न= नैव, च,
अयं= एषः प्रकरणगतः, श्लोकः= पद्यं, क्वचित् कुत्रचित्, प्रबन्धे= प्रबन्धकाव्ये,
इति= इत्थं, श्रूयते= आकर्ण्यते, येन, अस्य= पद्यस्य, तत्प्रकरणानुगतर्थता=
तस्य प्रकरणस्य प्रसङ्गस्य अनुगतार्थता अनुकूलाभिधेयता= प्रकरणानुसार्यर्थता,
परिकल्प्यते= निश्चीयते। तस्मात्= तेन, इयं, अप्रस्तुतप्रशंसा= प्रस्तुतानुगाप्रस्तु-
तप्रशंसालक्षणाऽलंकृतिरेव। तथा भवने हेतुं निर्दिशति यस्मादित्यादिना-यस्माद्=
यतः, अनेन= एतद्विषयसम्बद्धेन, अप्रस्तुतनामिकावर्णनरूपेण, गुणीभूतात्मना=
गुणीभूतः अप्रस्तुतरूपत्वादप्र– धानीभूत आमा स्वरूपं यस्य तेन, वाच्येन=
वाच्यार्थेन, निस्सामान्यगुणाबलोपाध्मातस्य= निस्सामान्योऽसाधारणो यो गुणस्तस्य
अवलेपो गर्वस्तेनाध्मातस्योद्धतस्य, निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य=
निजस्यात्मनो या महिमा गौरवं तदुत्कर्षेण नितान्ताधिक्येन, जनित उत्पादितः
समत्सरा ईर्ष्यालवो ये जनाः पुरुषास्तेषां ज्वरः सन्तोपो येन तादृशस्य, आत्मनः=
स्वस्मात्, अपरं= अन्यं, कञ्चिदेव= कमपि, विशेषज्ञं= विशिष्टज्ञानसम्पन्नं,
न= नैव, पश्यतः= मन्यमानस्य– आत्मानमेव सर्वोत्कृष्टम्मन्यस्य, कस्यचित्,
एतत्, परिदेवितं–विलपितं– निर्वेदवचनं, इति, प्रकाश्यते= संसूच्यत इति।

प्रकरणस्यास्यायमाशयो भवति– पद्येऽत्र कश्चिद् व्याजस्तुल्यलङ्कारं मन्यते
व्याजस्तुतिस्तत्रैव भवति यत्र प्रस्तुतप्रशंसाभिप्रायिप्रस्तुतनिन्दा क्रियते। अत्र
प्रस्तुतं विधाता तन्निन्दाया एव वाक्यत्वाद् यत्तेन व्यर्थमेव लावण्यसञ्चयोऽपि
अस्या निर्मितौ निश्शेषमेव विगमितोः महानेवोद्यमोऽपि कृतः किन्तु तेन लोको
हतानन्दोऽभूत्स्वयं च सा सदृशवल्लभाभावेन हतभाग्यासञ्जातेति, यस्य तात्पर्यं
तस्य सौन्दर्यसंयोजननैपुण्यवर्णने पर्यवस्यति किन्त्वत्र नायिकावर्णनमेव प्रस्तु-
तमस्ति यतो विधातृनिलन्दारूपेण नायिकानिन्दा वाच्यत्वेनावतिष्ठते या तत्प्रशं-
सातया पर्यवस्यति यदनया सदृशी सुन्दरी नैवान्याऽस्तीति। तस्मादत्र व्याज-
स्तुतिरेवालङ्कार इति।

किन्तु तन्नैव समीचीनं प्रतिभाति यतोऽत्र यदि व्याजस्तुतावेव तात्पर्यस्व
पर्यवसानं मन्यते तदाऽस्य सङ्गतिरेव न सम्भवति। यत उक्तिरियं नैव कस्यचि-
द्रागिणो वाऽनुरक्तस्य सम्भवति यतस्तादृशो नैव कश्चिदपि तुल्यरमणाभावं
नैव मन्यते 'एषा वराकी हता' इति करुणाजनकममङ्गलञ्च नैव वक्ति तथैव
विरक्तोऽपि निर्विषयमनस्कत्वान्न तथाविषयात्मकं वस्तु विचिन्तयति, न चास्य
प्रक्ररणसम्बद्धत्वं दृश्यते क्वचिदपि यतोऽस्य प्राकरणिकोऽर्थोऽनुमीयेत। तेन
नाऽत्रव्याजस्तुतेरवसरः। अत्र तु अप्रस्तुतप्रशंसाया एवावकाशः। अप्रस्तुतप्रशंसा

तत्रैव भवति यत्र प्रस्ततुतानुगाऽप्रस्तुतप्रशंसोपस्थाप्यते। अत्र अप्रस्तुतेन वाच्येन तल्लावण्यविग्र– हनिर्मितिव्यर्थत्वेन प्रतीयमानस्य प्रस्तुतस्य स्वसर्जननिष्प्रयो-जनत्वस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः। तत्रापि सुन्दरीवर्णनमप्रस्तुतं प्रस्तुतं तु वक्त्रुपस्थापितसिद्धान्त इति तुल्येन सुन्दरीशरीरनिर्मितिवैफल्येन प्रस्तुतस्य तुल्यस्य स्वमतप्रतिपादननिष्प्रयोजनत्वस्य प्रतीतेरत्राप्रस्तुतप्रशंसाया विषय उत्प-द्यत इति। तच्च यथा-लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः 'इति प्रथमपादेन व्यज्यते यदस्य वक्ता स्वगतासामान्यगुणाभिभानेनोच्छूनो विद्यते, तेन स्वमतप्रतिपादने स्वकीयप्रतिभायाः समग्र उपयोगः कृतो, महान् श्रमश्च येन तस्यासाधारणत्वं सिध्यति द्वितीयेन पादेन तत्प्रतिद्वद्विनां सेर्ष्यत्वेन सुखहरणं सूच्यते तृतीयपादेन तस्य सर्वाधिकविज्ञम्मन्यत्वं ध्वन्यते। तथैव चतुर्थपादेन तस्य ग्राहकाभावात्तन्निर्माणनिष्प्रयोजनत्वं प्रकट्यते इति।

वाच्य एवं व्यङ्ग्य की प्रधानता एवं अप्रधानता पर विवेक की उपयोगिता के विषय मे निर्देश करते हैं–

वाच्य एवं व्यङ्ग्य की प्रधानता एवं अप्रधानता के विवेक में बड़ा ही प्रयत्न करना चाहिए जिससे ध्वनि, गुणीभूत व्यङ्ग्य एवं वाच्यालङ्कारों का असङ्कीर्ण विषय अच्छी तरह ज्ञात हो सकता हैं वैसा न होने पर अर्थात् उसमें विवेक न होने पर प्रसिद्ध जो अलङ्कार है उसके विषय में ही भ्रम हो जाता है। जैसे–

''लावण्य रूपी सम्पत्ति के व्यय की भी परवाह नहीं की, बड़ा कष्ट उठा लिया, स्वच्छन्द रूप से सुख पूर्वक विचरते लोगों में चिन्ता रूपी आग लगा दी गई उपयुक्त वर के अभाव मे यह बेचारी स्वयं भी बेकार हो गई, इस कृशाङ्गी के शरीर की रचना करने वाले विधाता ने कौन सा प्रयोजन मन में रखा होगा।''

यहाँ किसी ने व्सयाजस्तुति अलङ्कार मान कर व्याख्या की है, वह ठीक नहीं है क्योंकि इस पद्य के वाच्य के इस अलङ्कार के स्वरूप मात्र में पर्यवसायी होने से उसकी सङ्गति ठीक बैठ नहीं पाती। अर्थात् व्याजस्तुति अलङ्कार वहाँ होता है जहाँ प्रस्तुत की निन्दा या स्तुति के द्वारा अप्रस्तुत की स्तुति या निन्दा की जाय। यहाँ वैसी स्थिति नहीं है, क्योंकि यह किसी अनुरक्त व्यक्ति का वितर्क हो नहीं सकता क्योंकि उसके ''उपयुक्त वर के अभाव में यह बेचारी स्वयं भी बेकार हो गई'' उपयुक्त वर का अभाव' कहकर अपने का अवमूल्यन नहीं करता और अपनी प्रेयसी के लिए 'बेचारी' जैसे करूणाजनक एवं 'बेकार हो गई' जैसे अमङ्गल शब्दों का प्रयोग नहीं करता और न तो यह कथन किसी विरक्त का ही हो सकता है क्योंकि उसका तो इस प्रकार के विषय से सम्बद्ध वितर्कों का परिहार रूप एक मात्र व्यापार होता है अर्थात् विरक्त व्यक्ति ऐसे वितर्कों के पचड़े से दूर रहता है। न तो यह श्लोक किसी प्रबन्ध में ही पाया जाता है जिससे इसके प्रकरण के अनुगत अर्थ की परिकल्पना की जा सके। अतः यहाँ व्याजस्तुति की कोई सम्भावना नहीं है जिसमें यह माना जा सके कि अप्रकृत व्याजस्तुति की कोई सम्भावना नहीं है जिसमें यह माना जा सके कि अप्रकृत ब्रह्मा से प्रकृत सुन्दरी की स्तुति की गई है।

यहाँ तो अप्रस्तुत प्रशंसा ही हो सकती हैं। अप्रस्तुत प्रशंसा वहाँ होती है जहाँ अप्रकृत की प्रशंसा प्रकृत की अनुगामिनी बन सके। क्योंकि गुणीभूत आत्मा वाले इस वाच्यार्थ से असाधारण गुणों के बल से गर्वित अपनी महिमा के उत्कर्ष से जनित मानता है ईर्ष्या से युक्त लोगों का ज्वर जो ऐसे अपने से किसी दूसरे को विशेषज्ञ न समझने वाले किसी के प्रलाप के रूप में इसका प्रकाशन किया जाता है। अर्थात् यहाँ अप्रकृत विधाता के द्वारा किसी सुन्दरी की सृष्टि और उसका वैयर्थ्य, और प्रकृत है अपने से संस्थापित सिद्धान्त और उसका निष्पयोजनत्व। 'लावण्य रूप धन के व्यय की परवाह नहीं की और बड़ा ही उद्यम किया' से यह सूचित होता है कि वक्ता ने अपने सिद्धान्त के प्रतिपादन के लिए अपनी पूरी प्रतिभा का बेकञ्जूसी से उपयोग किया और उसके लिए उसको लम्बा समय लगा और बहुत श्रम करना पड़ा। 'स्वच्छन्दता से सुखपूर्वक रहने वाले लोगों के मन में चिन्ता रूप आग सुलगा दी' से यह सूचित होता है कि उसकी सफलता से उसके प्रति ईर्ष्या करने वाले लोगों के मन में बेचैनी जगी। 'उपयुक्त वर के अभाव में वह बेचारी स्वयं भी बेकार हो गई' से यह व्यक्त होता है कि उसको समझ पाने वाले लोगों के अभाव में यह प्रतिपादित मत खुद भी बेकार हो गया।'' इसकी रचना करने वाले विधाता ने मन में कौन सा प्रयोजन सोचा था से उसके कार्य का निष्प्रयोजनत्व सूचित होता है। अतः यहाँ अप्रस्तुत प्रशंसा है न कि व्याजस्तुति।

ध्वन्या०— तथा चायं धर्मकीर्तेः श्लोक इति प्रसिद्धः। सम्भाव्यते च तस्यैव। यस्मात्—

अनध्यवसितावगाहनमनल्पधीशक्तिना—
प्यदृष्टपरमार्थतत्त्वमधिकाभियोगैरपि।
मतं मम जगत्यलब्धसदृशप्रतिग्राहकं,
प्रयास्यति पयोनिधेः पय इव स्वदेहे जराम्।।

इत्यनेनापि श्लोकेनैवंविधोऽभिप्रायः प्रकाशित एव।

लीला— 'लावण्येत्यादिपद्ये व्याजस्तुतिं निषिध्याप्रस्तुतप्रशंसास्थापनाय यदुक्तं सा कस्यचित्सगर्वस्योक्तिरिति तत्रापि किं प्रमाणमित्याशङ्क्याह तथेत्यादि— तथा च= नैतावन्मात्रमपि च, अयं= प्रकरणगतः, श्लोकः= पद्यं, धर्मकीर्तेः= पण्डितम्मन्यस्य तदाख्यस्य कस्यचिद् बौद्धभिक्षोः, इति, प्रसिद्धिः= ख्यातिः— एतादृशी गर्वोक्तिस्तस्यैव सम्भवतीति विचारणेति। तस्य धर्मकीर्तेः, एव सम्भाव्यते च। तत्र हेतुमाह— यस्मात्= यतः। तादृशमेव कथनान्तरमुदाहरति अन्यध्यवसि- तेत्यादि— अनल्पधीशक्तिना अपि अधिकाभियोगैः अपि अनध्यवसितावगाहनम् अदृष्टपरमार्थतत्वं मम मतं जगति अलब्धसदृशप्रतिग्राहकं पयोनिधेः (तथा) पय इव स्वदेहे जरां प्रयास्यति इति पदव्यवस्था।

अनल्पधीशक्तिना= अनल्पा बह्वी धीशक्तिर्बुद्धिसामर्थ्यं यस्य तेन, स्वभिन्ने-

नान्येन केनचित्, अपि, अधिकाभियोगैः= अधिकः पर्याप्तो यो अभियोगः प्रयत्नस्तैः, अपि, अनध्यवसितावगाहनं= अनध्यवसितं नैव संलब्धमवगाहनमव-बोधो यस्य तत् तादृशं, अत एव, अदृष्टपरमार्थतत्वं= अदृष्टानि अलब्धानि परमार्थतत्वानि उत्कृष्टार्थरहस्यानि यत्र,तादृशं, मम= मे मतं= सिद्धान्तप्रतिपादको ग्रन्थः, जगति= भुवने, अलब्धसदृशप्रतिग्राहकं= अलब्धोऽप्राप्तः सदृशः स्वतुल्यः प्रतिग्राहाको बोद्धा प्रतिबोधयिता च यस्य तत् तथाविधं सत्,= पयोनिधेः= समुद्रस्य, (तथा= तादृशं) अनल्पधीशक्तिना= बहुधीरवरकौशलेन, अपि, अधिका-भियोगैः= बहुविधप्रयत्नैः, अपि, अनध्यवसितावगाहनं= अलब्धान्तःप्रवेशं, अत एव, अदृष्टपरमार्थतत्वं= अलब्धमहर्घ्यरत्नादिकं, जगति= भुवने अलब्धस-दृशप्रतिग्राहकं= अलब्धमप्राप्तं सदृशं समानवस्तु यस्य तादृशं प्रतिग्राहकमेकैको ग्राहो जलचरो यत्र तथाभूतं, पयः= जलं, इव= यथा, स्वदेहे= आत्मशरीरे, जरां= जीर्णत्वं,, प्रयास्यति= प्राप्स्यति इति। यथा सामुद्रं वारि बहुधीसामर्थ्येनापि अनल्पप्रयासैरपि अलभ्यान्तःप्रवेशमतएवालब्धमहर्घ्यरत्नं तथैव मम वचनमपि बहुप्रतिभायुक्तेनापि सतताभ्यासैरपि दुर्लभावबोधमज्ञातनिगूढरहस्यमतं एव जगति अप्राप्तोपयुक्तबोधकं सत् स्वस्मिन्नेव जीर्णं भविष्यतीति।

इति= इत्थं, अनेन= एतेन, अपि, श्लोकेन= पद्येन, एवंविधः= ईदृशः गर्वोक्तिरूपः, अभिप्रायः= प्रकटितः= प्रकाशितः, एवेति अस्य धर्मकीर्तिप्रणीतत्वेन पूर्वोक्तस्यापि तथाप्रकृतिकस्य तत्प्रणीतत्वमित्याशयः। नास्मिन्नलङ्कारविदस्तु यथा पूर्वस्मिन्। अत्र तूपमा स्पष्टैव। तथैव विश्रान्तिरपि पूर्वस्य वर्ण्यविषयस्य लोकोत्तरत्वप्रत्यायनाददद्भुते पदस्य तु तस्य प्रयत्नग्राह्यत्वकथनेनोत्साह— जनक-तया स्वात्मनि कुशलकारिकत्वप्रतिपादनेन च धर्मवीरस्यकर्शनिन वीरे रसे एवेति।

'लावण्यद्रविणव्ययेन' इत्यादि पद्य में व्याजस्तुति का निषेध कर अप्रस्तुत प्रशंसा की स्थापना के लिए जो उसको किसी की गर्वोक्ति कहा गया था उसके प्रमाणन के लिए कहते हैं—

जैसे कि यह धर्मकीर्ति के श्लोक के रूप में प्रसिद्ध है और उसी के ही होने की सम्भावना भी है क्योंकि- ''बहुत ज्यादा बुद्धि की शक्ति वाले के द्वारा भी अत्यधिक प्रयासों के बावजूद भीं जिसका अवबोधन कठिन है और जिसके गूढ़ रहस्य को प्राप्त करना असम्भव सा है इस प्रकार का मेरा मत संसार में अनुपलब्ध है उपयुक्त ग्राहक जिसके ऐसा होकर अत्यधिक बुद्धि एवं सामर्थ्य वालों के लिए भी अत्यधिक प्रयासों के बावजूद भी कठिन है प्रवेश जिसमें और अदृष्ट ही हैं महर्घ्य रत्न जिसके ऐसे और संसार में दुर्लभसदृश हैं जलचर जिसमें ऐसे समुद्र के जल की तरह अपने ही शरीर में जीर्ण हो जाएगा।''

इस श्लोके के द्वारा भी इसी प्रकार के आशय अर्थात् गर्वोक्ति का ही प्रकाशन किया गया है। इसका आशय यह है कि पूर्वोदाहत 'लावण्यद्रविणव्यय' आदि के

गर्वोक्ति होने का यह भी एक प्रमाण है कि उसकी धर्मकीर्ति के श्लोक के रूप में प्रसिद्धि है और ऐसा हो भी सकता है क्योंकि उसको ही इस प्रकार की रचना करते हुए देखा गया है। उसके 'अनध्यवसितावगाहन' आदि श्लोक में भी उसी तरह की पूर्वोक्ति पाई जाती है। किन्तु उसमें यह समझ लेना चाहिए कि अलङ्कार का विवाद पहले वाले पद्य में ही है दूसरे में नहीं। दूसरे में तो स्पष्ट उपमा है ही। वह भी है कि पहले का वर्ण्यविषय के लोकोत्तर रूप में वर्णित होने से अद्भुत रस मे पर्यवसान है और दूसरे की वर्ण्यविषय के प्रयत्नग्राह्य रूप में वर्णित होने से और अपने में कुशल कारिता के प्रदर्शन से वीर रस मे विश्रान्ति है।

ध्वन्या०— अप्रस्तुतप्रशंसायां च यद्वाच्यं तस्य कदाचिद्विवक्षितत्वं, कदाचिदविवक्षितत्वं कदाचिद्विवक्षिताविवक्षितत्वमिति त्रयी बन्धच्छाया।

लीला— ननु अप्रस्तुतप्रशंसाविषयस्तु तदैवोदेति यदा यथास्थितस्यार्थस्यासङ्गतिर्न सम्भवति, प्रस्तुते तु तद्भावात्कथं तद्विषयत्वमित्या— शङ्कानिरासाय सङ्गतावपि तद्भावं प्रतिपादयितुं प्रकरणमारभते— ऽप्रस्तुतेत्यादिना अप्रस्तुतप्रशंसायां= अप्रस्तुतप्रशंसालङ्कारविषये, च, यद्, वाच्यं= वाक्यार्थः, तस्य, कदाचित् विवक्षितत्वं= उपपद्यमानत्वादभीष्टत्वं, कदाचित्! अविवक्षितत्वं= अनुपपद्यमानत्वादनपेक्षत्वं, कदाचित्, तु, विवक्षिताविवक्षितत्वं= अशंतोऽभीष्ट— त्वमंशतोऽनभीष्टत्वञ्च, इति= इत्थं, त्रयी= त्रिविधा, बन्धच्छाया= प्रचनाविच्छित्तिः। केवलं वाच्यार्थाङ्गतावेवाप्रस्तुतप्रशंसाविषय उत्पद्यत इति न वाच्यं सा तु तस्य विवक्षितत्वेऽविवक्षितत्वे विवक्षिताविवक्षितत्वेऽपि सम्भवतीति।

अप्रस्तुतप्रशंसा तो तभी होती है जब वाच्यार्थ की वाक्य में असङ्गति हो। उक्त उदाहरण में तो उसकी सङ्गति के बैठ पाने से कैसे वहाँ उसका विषय बन पाता है ? इस आशङ्का के निरास हेतु प्रकरण का आरम्भ करते हैं:-

अप्रस्तुत प्रशंसा का जो वाच्य है उसके कहीं तो विवक्षित कहीं अविवक्षित एवं कहीं तो विवक्षित एवं अविवक्षित दोनों भी के होने से उसकी तीन प्रकार की रचना शैली होती है।

ध्वन्या०— तत्र विवक्षितत्वं यथा—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः।।

यथा वा ममैव—

अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता
भवत्येषां यस्य क्षणमुपगतानां विषयताम्।
निरालोके लोके कथमिदमहो चक्षुरधुना
समं जातं सर्वैर्न सममथवान्यैरवयवैः।।

अनयोर्हि द्वयो: श्लोकयोरिक्षुचक्षुषी विवक्षितस्वरूपे एव न च प्रस्तुते। महागुणस्याविषयपतितत्वादप्राप्तपरभागस्य कस्यचित्स्वरूपमुपवर्णयितुं द्वयोरपि श्लोकयोस्तात्पर्येण प्रस्तुतत्वात्।

लीला— अप्रस्तुतप्रशंसाया वाच्यस्य विवक्षितत्वाविवक्षितत्वविवक्षितत्वाविवक्षितत्वभेदेन त्रैविध्यं यदुक्तं तदुदाहरणाय प्रकरणमार प्रमाण: प्रथमं तस्य विवक्षितवाच्यत्वोदाहरणाय प्रक्रमतेतत्रेत्यादिना— तत्र= त्रिषु प्रकारेषु, विवक्षितवाच्यत्वं= वाच्याभीष्टत्वं, यथा= इति निदर्शनि। तदुदाहरति परार्थ इत्यादिना— पद्यमिदं ध्वनिगुणवृत्तिभेदनिर्द्धारणप्रकरो व्याख्यातचरमेव।

तस्यैवोदाहरणान्तरं प्रस्तौति यथेत्यादिना, वा= इति पक्षे, यथा= इति निदर्शने, मम= आनन्दवर्धनस्य, एवेति। तदुपस्थापयति अमीत्यादिना— अमी सुभगरूपा: ये दृश्यन्ते यस्य क्षणं विषयतां उपगतानां एषां सफलता भवति ननु, इदं चक्षु: अधुना निरालोक लोके अहो कथं अन्यै: सर्वै:, समं जातं अथवा न समं इति पदव्यवस्था।

अमी= एते, सुभगरूपा:= सुरम्याकृतय:, ये= अवयवा हस्तपादादिरूपा:, दृश्यन्ते= सन्तीत्याशय:, यस्य= चक्षुष:, क्षणं= निमिषमात्रमपि, विषयतां= लक्ष्यतां, उपगतानां= प्राप्तानां, एषां= अवयवानां, सफलता= सार्थकता, भवति= सञ्जायते, ननु= इति निश्चयेन, इदं= एतादृशं, चक्षु:= नेत्रं,-जातावेकवचनं, अधुना= सम्प्रति, निरालोके= प्रकाशहीने वा विवेक रहिते लोके= जगति, अहो= आश्चर्यं कथं= केन प्रकारेण, अन्यै:= अपरै:, सर्वै:= निखिलै:, अवयवै:= इन्द्रियै:, समं= तुल्यं, जातं, अथवा न समं= तुल्यभावी न जातं ततोऽपि हीनं जातमिति।

उभयोरपि पद्ययोरभीष्टस्वरूपं निर्दिशति अनयोरित्यादिना— अनयो:= प्रस्तुतयो:, हि, द्वयो: पद्ययो:= श्लोकयो:, इक्षुचक्षुषी= प्रथमचक्षुषी= प्रथमपद्ये इक्षुदण्डो द्वितीयपद्ये नेत्रञ्च, विवक्षितस्वरूपे= वक्तुमभीष्टरूपे एव,, न=नैव, च, प्रस्तुते= प्राकरणिके। तथाभवने हेतुमाह महागुणेत्यादिना— अविषयपतितत्वात्= अनुपयुक्तस्थानगतत्वात्, अप्राप्तपरभागस्य= अप्राप्तोऽलब्ध: परभागो गुणोत्कर्षो यस्य तथाविधस्य, कस्यचित् महागुणस्य= महान्तो विपलुंना गुणा दयादाक्षिण्यादयो यस्य तस्य, स्वरूपं= स्थितिं, उपवर्णयितुं= वमुपस्थापयितु, द्वयो: अपि, श्लोकयो:= पद्ययो:, तात्पर्येण, प्रस्तुतत्वात्= प्राकरणिकत्वादिति।

अस्यायमाशय:— अत्र प्रथमपद्ये अप्रकृतेनेक्षुरूपेण वाच्येन प्रकृतस्य कस्यचिन्महापुरुषस्य व्यञ्जना वाच्यस्य चोपपद्यमानत्वम्। तथैव द्वितीयपद्ये अप्रकृतेन चक्षुषा प्रकृतस्य कस्यापि प्रगुणजनविशेषस्य प्रतीतिर्वाच्यस्यचोपपद्यमानतेति द्वयोरेव विवक्षितवाच्यविशिष्टाप्रस्तुतोपमोदाहरणत्वम्।

अप्रस्तुत प्रशंसा में वाच्य का विवक्षित भी होना जो कहा गया उसका उदाहरण प्रस्तुत करने का उपक्रम करते हैं—

उसमें वाच्य का विवक्षितत्व जैसे–

'दूसरे के लिए जो पीड़ा का अनुभव कर लेता है, जो टूट जाने पर भी मीठा ही होता है जिसका विकार भी सभी के लिए ग्राह्य होता है वह यदि खराब क्षेत्र मे पड़ जाने के कारण वृद्धि को प्राप्त न हो जाय तो क्या वह ईख का दोष होता है, फिर वह अनुर्वरा भूमि का नहीं–अवश्य वह दोष ऊसर भूमि का ही है इक्षु का नहीं।

यहाँ अप्रकृत इक्षु के वर्णन से प्रकृत सज्जन की अवस्था द्योतित है और उसका वाच्य भी विवक्षित ही है। जैसे– ईख कोल्हू में पेरा जाता है दूसरे के लिए, सज्जन दूसरे के लिए अनेक कष्ट झेल लेता है, ईख तोड़े जाने पर भी मधुर ही होता है, सज्जन उसी तरह अपमानित होने पर भी वह मधुर ही रहता है ईख का विकार अर्थात् गुड़ सबको अभीष्ट होता है उसी तरह सज्जन की भी है। उसके हर कार्य परहित के लिए होता है। वह ईख यदि ऊसर भूमि में पड़ जाने के कारण न बढ़ पाये तो वह भूमि का ही दोष होता है न कि ईख का। उसी तरह यदि दुष्ट समाज में रहने के कारण सज्जन यदि तरक्की नहीं भी कर सके तो वह सज्जन का दोष नहीं होता।

अथवा जैसे मेरा (आनन्दवर्धन का) ही–

ये जो सुन्दर आकृति वाले हाथ पैर आदि अवयव हैं, इनकी सफल्ता जिसके क्षणभर मात्र विषय होने पर ही होती है, न प्रकाश से रहित वा विवेक शून्य इस संसार में यह आश्चर्य है कि अभी कैसे वह नेत्र दूसरे सामान्य अवयवों के समान माना जाता है वा उनसे बराबर भी न मानकर उसको उनसे भी नीचा माना जाता है।

यहाँ भी अप्रकृत नेत्र से प्रकृत किसी गुणी पुरुष का वर्णन उपस्थापित किय जाता है लेकिन वाच्य रूप नेत्र भी विवक्षित है।

लक्ष्यों में लक्षण का निर्देश करते हैं– इन दो श्लोकों में ईख और आँख प्रकृत अर्थ का आक्षेप करने पर भी विवक्षितस्वरूप ही हैं न कि प्रस्तुत मात्र। विषय से भिन्न क्षेत्र में पड़ जाने के कारण उपयुक्त उत्कर्ष को प्राप्त न हुए गुणों से युक्त किसी सज्जन के स्वरूप के वर्णन के लिए दोनों ही श्लोकों का तात्पर्य से प्रस्तुतत्व है।

अर्थात् दोनों श्लोकों में अप्रकृत ईख एवं आँख प्रकृत सज्जन का आक्षेप करते हैं, लेकिन दोनों का अपना-अपना वाच्यार्थ भी अपेक्षित है। अतः ये दोनों अप्रस्तुत प्रशंसा में विवक्षित वाच्यत्व का उदाहरण है।

ध्वन्या०— अविवक्षितत्वं यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखाटकं
वैराग्यादिव वक्षि: साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजन: सर्वात्मना सेवते
न च्छायापि परोपकारकरिणी मार्गस्थितस्यापि मे।।

न हि वृक्षविशेषेण सहोक्तिप्रत्युक्ती सम्भवत इत्यविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपवर्तिनो निर्धनस्य कस्यचिन्मनस्विन: परिदेवितं तात्पर्येण वाक्यार्थीकृतमिति प्रतीयते।

लीला— इत्थमप्रस्तुतप्रशंसायां वाच्यस्य विवक्षितत्वमुदाहृत्य सम्प्रति तत्रैव वाच्यस्याविवक्षितत्वमुदाहर्तुमुपक्रमते अविवक्षितत्वमित्यादिना अविवक्षितत्वं= वाच्यस्यनैरपेक्ष्येण प्रकृतस्यैव ग्रहणं, यथा= इति निदर्शने— उदाहरणं प्रस्तौति कस्त्वमित्यादि— भोः= इति साक्षेपसम्बोधने, त्वं= भवान्, कः= किंपरिचयः, असि, इति शाखोटकं प्रति पान्थस्य प्रश्नः कस्यचित्, तत्र पृष्टो ब्रवीति— कथयामि-यद्यपि श्रवणेन तव न कोऽपि लाभोऽपितु निर्वेदायैव भवति तथापि श्रवण एव निबन्धश्चेद् वच्मि, श्रूयतां, दैवहतकः= विधिनिहतः, भाग्यहीनं, मां= त्वत्पुरोगतं, शाखोटकं= तदाख्यं क्षुद्रवृक्षविशेषं, विद्धि= जानीहि, तत्र पान्थो वक्ति वैराग्यात्= निर्वेदात्, इव, दैवहतककथनेन शोकसूचकध्वनिविकार-विशेषेण च यथा सूचितं, वक्षि= ब्रवीषि, शाखोटकः पुनः कथयति साधु= सम्यग्, विदितं= ज्ञातं, त्वयेति शेषः, तत्र पान्थः पृच्छति कस्मात्= किमर्थम्, इदं= सनिर्वेदं वचः कथ्यते= उच्चार्यते, वृक्षस्तमुत्तरयति, अत्र= अस्मिन् स्थाने, वामेन= वामभागेन तटादिनोपलक्षितः, वटः= वटवृक्षः, तिष्ठति, तं= तादृशं मार्गाद् दूर एव स्थिततटादिदूषितमपि, अध्वगजनः= अध्वनि मार्गे गच्छति इति अध्वगः— गमेर्डः, स चासौ जनो लोकः, सर्वात्मना= सर्वविधोपायेनफलादा-नविश्रमस्वापादिना, सेवते= भजते, मे= मम, तु मार्गस्थितस्य= पथिगतस्य, अपि, छाया= निरातपता, अपि= इति किं पुनः पुष्पफलादीनीति, न= नैव, परोपकारिणी= परहितकारिणी इति। पथिको मार्गं विहायापि वटं फलच्छाया-ग्रहणादिना भजते किन्तु पथिगतस्यापि मे छायाऽपि न कोऽपि गृह्णाति मे निर्वेदस्य कारणमिति।

लक्ष्ये लक्षणं निर्दिशति नेत्यादिना— वृक्षविशेषेण हि= यतः, तरुणा केनापि सह, उक्तिप्रत्युक्ती= कथनोपकथने, न,= सम्भवतः, इति= हेतोः, अविवक्षिताभि-धेयेन= अनन्वितवाच्यार्थेन, एव, अनेन= पूर्वोक्तेन, श्लोकेन= पद्येन, समृद्धासत्पु-रुषसमीपवर्तिनः= समृद्धः सम्पन्नो य असत्पुरुषो दुष्टजनस्तस्य समीपवर्तिनो निकटस्थस्य, निर्धनस्य= दरिद्रस्य, मनस्विनः= उदारचेतसः, कस्यचित्= कस्यापि जनस्य, परिदेवितं= विलपितं, तात्पर्येण= अभिप्रायेण व्यञ्जनयेति, वाक्यार्थी-कृतं= प्रकृतत्वेनोपस्थापितं, इति= इत्थं प्रतीयते= प्रतीतिमायातीति।

अस्यायमाशयः— न केवलं वाच्यस्य विवक्षितत्वे एवाप्रस्तुतप्रशंसा भवत्यपितु तस्याविवक्षितत्वेऽपि सा भवति। यथा 'कस्त्वं भोः' इत्यादिपद्ये। तत्र वृक्षेण सह जनस्य कथनोपकथनासंभवाद् वाच्यस्याविवक्षितत्वं तेन स्वस-दृशस्य सज्जनस्य प्रकृतत्वेनोपवर्णनादप्रस्तुतप्रशंसा चेदिदमविवक्षितवाच्यत्वे-ऽप्यप्रस्तुतप्रशंसाया उदाहरणमिदमति।

इस प्रकार अप्रस्तुतप्रशंसा में विवक्षित वाच्यत्व का उदाहरण देकर अब वाच्य

के अविवक्षित होने पर भी जो अप्रस्तुत प्रशंसा होती है उसको उदहृत करने हेतु प्रकरण का आरम्भ करते हैं—

अविवक्षित वाच्यत्व जैसे— आप हैं कौन ? इसको सुनने से आपको कोई लाभ नहीं बल्कि कष्ट ही हो जाएगा फिर भी यदि आपकी सुनने की बेहद चाह है तो बताता हूँ, सुनिए, अभागा मैं शाखोटक (सिहोर) नाम का पेड़ हूँ, वैराग्य से जैसे कह रहे हो, आप ने ठीक समझा, तो फिर ऐसा क्यों कहा जाता है ? यहाँ से बायीं ओर एक वटवृक्ष है पथिक लोग उसकी पूरी आत्मा से सेवा करते हैं, ठीक मार्ग पर रहते हुए भी मेरी छाया तक भी दूसरे का उपकार कर नहीं पाती अतः में बहुत दुःखी हूँ।''

लक्ष्य में लक्षण के सन्निवेश का निर्देश करते हैं—

वृक्ष के साथ कथन उपकथन के सम्भव हो न पाने से अविवक्षित वाच्यार्थ वाले इस पद्य से सम्पन्न किन्तु दुष्ट जन के समीप रहने वाले किसी मनस्वी निर्धन का परिदेवन तात्पर्य अर्थात् व्यञ्जना से वाक्यार्थ बना लिया, ऐसा प्रतीत होता है। अर्थात् शाखोटक रूप अप्रस्तुत से निर्धन किन्तु सज्जन पुरुष का प्रस्तुतीकरण होता है। अतः यहाँ वाच्य के अविवक्षित होने पर भी अप्रस्तुत प्रशंसा का विषय है।

ध्वन्या०— विवक्षितत्वाविवक्षितत्वं यथा—

उप्पहजाआएँ असोहिणोएँ फलकुसुमपत्तरहिआए।
वेरीएँ वइं देन्तो पामर हो ओहसिज्जिहसि।।

उत्पथजातया अशोभनायाः फलकुसुमपत्ररहितायाः।
वदर्या वृत्तिं ददत् पामर भो अवहसिष्यसे। (इतिच्छाया)

अत्र हि वाच्यार्थो नात्यन्तं सम्भवी न चासम्भवी।

लीला— इत्थं वाच्यस्याविवक्षितत्वेऽपि अप्रस्तुतप्रशंसाया विषयत्वमुदाहृत्य सम्प्रति वाच्यस्यांशतो विवक्षितत्वाविवक्षितत्वसद्भावेऽपि अप्रस्तुतप्रशंसाविषयत्वनिर्देशाय प्रकरणमारभते विवक्षितत्वेत्यादिनाविवक्षितत्वाविवक्षितत्वं= वाक्ये वाच्यस्य अंशतः अन्वितत्वमंशतोऽनन्वितत्वञ्च, यथा= इति निदर्शने।

उदाहरणं प्रस्तौति उप्पहजाआए इत्यादिना— हो (भो) पामर !, उप्पहजाआएँ (उत्पथजातायाः) असोहिणीएँ (अशोभनायाः) फलकुसुमपत्तरहिआएँ (फलकुसुमपत्ररहितायाः) वेरीएँ (वदर्याः) वइं (वृत्तिं) देन्तो (ददत्) ओहसिज्जिहसि (अवहसिष्यसे) इति पदव्यवस्था।

भोः पामर= निष्पौरुष !, उत्पथजातायाः= उत्पथे कुमार्गे व्यङ्ग्यपक्षेऽनवदातकुले जातायाःउत्पन्नायाः, अशोभनायाः= अदर्शनीयायाः व्यङ्ग्यपक्षे लावण्यरहितायाः, फलकुसुमपत्ररहितायाः= सस्यपुष्पदलहीनायाः व्यङ्ग्यपक्षे सन्तानादिहीनायाः बदर्याः कोलीलतायाः व्यङ्ग्यपक्षे स्त्रियाः, वृत्ति= आसेचनादिक संरक्षणं पक्षे आजीविकां, ददत्= रचयन्, अवहसिष्यसे= सद्भिरुपहसिष्यसेऽकृत्यकरणादिति।

लक्ष्ये लक्षणं निर्दिशति अत्रेत्यादिना— अत्र= अस्मिन् पद्ये, हि, वाच्यार्थः= वदरीरूपोऽभिधेयार्थः, अत्यन्तं= नितान्तमेव, न, सम्भवी= सिद्धः, अनुचितत्वात्, न= नैव, च, असम्भवी= सिद्धोऽपि तथा लोके सम्भवादपि। लोके नैव कश्चिदपि कुमार्गस्थं फलादिरहितं वदरीवृक्षमासिञ्चति वा संरक्षिति इति वाच्यस्यानुचितत्वेनासम्भवित्वं तथा च यदि कश्चितथा करोति चेत्तस्य सम्भवत्त्वेन वच नात्यन्तासम्भवित्वमपि। तेनाप्रस्तुतस्य वाच्यार्थः सम्भवोऽसम्भवश्च। व्यङ्ग्यार्थस्तु सर्वत्र सम्भव्येव भवति तस्यापि अविवक्षितत्वे तु चारुत्वस्य विश्रान्तिस्थानाभावात्।

अत्राप्रस्तुताया वदर्याः सेचनादिकस्यानुचितत्वादसम्भवितया वाच्यस्याविवक्षितत्वं कथमपि तथाकर्तव्यस्य तु सम्भवितया विवक्षितत्वमपीति वाच्यस्याविवक्षितत्वाविवक्षितत्वेऽपि अप्रस्तुतप्रशंसाया विषयत्वमस्येति।

इस प्रकार वाच्य के अविवक्षित होने पर भी अप्रस्तुत प्रशंसा के भाव का निर्देश कर अब वाक्य के अंशतः विवक्षित एवं अंशतः अविवक्षित होने पर भी अप्रस्तुत प्रशंसा के विषय होने का उदाहरण प्रस्तुत करते हैं—

विवक्षित एवं अविवक्षित जैसे—

'हे पामर' कुमार्ग में उत्पन्न हुई, बेढङ्गी, फूल, फल, एवं पत्तों से रहित वैर को बाड़ी लगाते हुए तुम हँसे जाओगे।'

लक्ष्य में लक्षण का निर्देश करते हैं— यहाँ वाच्याथ न तो अत्यन्त सम्भव है न तो असम्भव ही।

अर्थात् उस प्रकार के रास्ते से हट कर उसे बेढङ्गी एवं फल फूल आदि से रहित वैर को बाडी लगाना अनुचित है अतः वाच्यार्थ अविवक्षित है और कोई उस तरह लगा भी ले तो वैसा करना असम्भव भी नहीं है। अतः वाच्यार्थ विवक्षित भी है और यह है अप्रस्तुत जिसका प्रस्तुत है किसी अधम कुल में उत्पन्न, कुरूप, सन्तान आदि से हीन स्त्री का भरण पोषण करना। अतः यह अप्रस्तुत प्रशंसा का उदाहरण है जिसमें वाच्य विवक्षित एवं अविवक्षित दोनों हो सकता है।

**ध्वन्या०— तस्माद्वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्ये यत्नतो निरूपणीये।।४०।।**

**लीला— प्रकरणमुपसंहरति तस्मादित्यादिना तस्मात्= तद्धेतोः, वाक्यव्यङ्ग्ययोः= अभिधेयप्रतीयमानार्थयोः, प्राधान्याप्राधान्ये= प्रधानगुणभावौ, यत्नतः= विशेषोद्यमेन, निरूपणीयौ= विचारणीयौ इति यतो लावण्यद्रविणव्यय इत्यादौ प्रसिद्धस्याप्यलङ्कारस्य विषयेऽपि व्यामोह एव ध्वनिगुणीभूतव्यङ्ग्यविषयेऽपि भ्रमो न स्यादिति।।४०।।**

प्रकरण का उपसंहार करते हैं— इस कारण वाक्य एवं व्यङ्ग्य प्रधानभाव एवं गुणीभाव प्रयत्नपूर्वक निरूपित किए जाने चाहिए। वैसा न होने से तो प्रसिद्ध

अलङ्कार के विषय में भी भ्रम हो सकता है तो ध्वनि और गुणाभूत व्यङ्गच के विषय में तो और ज्यादा भ्रम हो सकता है।४०।।

कारिका— प्रधानगुणभावाभ्यां व्यङ्गचस्यैवं व्यवस्थिते।
उभे काव्ये ततोऽन्यद्यत्तच्चित्रमभिधीयते।। ४१।।

ध्वन्या०— व्यङ्गचस्यार्थस्य प्राधान्ये ध्वनिसंज्ञितकाव्यप्रकारः गुणभावे तु गुणीभूतव्यङ्गचता। ततोऽन्यद्यद्रसभावादितात्पर्यरहित व्यङ्गचार्थविशेष-प्रकाशनशक्तिशून्यं च काव्यं केवलवाच्यवाचकवै- चित्र्यमात्राश्रयेणोपनि-बद्धमालेख्यप्रख्यं यदाभासते तच्चित्रनामम् न तन्मुख्यं काव्यम्। काव्या-नुकारो ह्यसौ।

लीला— एवं प्रधानगुणभावात्मकं व्यङ्गचस्वरूपं निर्दिश्य तदभावे वा तदवि-वक्षितत्वे या स्थितिर्भवति तां निर्देष्टुं प्रकरणमारभते प्रधानेत्यादिना— एवं व्यङ्गचस्य प्रधानगुणभावाभ्यां उभे काव्ये व्यवस्थिते ततः अन्यत् यत् तत् चित्रं अभिधीयते इति पदव्यवस्था।

एवं= इत्थं, वयङ्गचस्य प्रधानभावः काव्यञ्च ध्वनिः, तत्राविश्रम्य चारुत्वस्य पुनः वाच्यार्थनिवृत्तौ व्यङ्गचस्य गुणीभावः काव्यन्तु गुणीभूतव्यङ्गचं, इति, उभे= ध्वनिगुणीभूतसंज्ञके, काव्ये= काव्यस्वरूपे व्यवस्थिते= निर्द्धारिते, स्तः व्यङ्गचस्य प्राधान्येन ध्वनिकाव्यं तस्य गुणीभावेन गुणीभूतव्यङ्गचकाव्यमिति व्यङ्गचापेक्षया काव्यं द्विविधं, ततः= तस्मात्= ध्वनिगुणीभूतव्यङ्गचभेदात्, यद्, अन्यत्= अपरं, तत्= व्यङ्गचजन्यचारुत्वहीनं, चित्रं= चित्रकाव्यं, इति= इत्थं, अभिधीयते= कथ्यत इति।

कारिकां विवृणोति वृत्तिकारो व्यङ्गचस्येत्यादिना— व्यङ्गचस्य वाच्यभिन्नस्य किन्तु तदाक्षिप्ततया प्रतीयमानस्य अर्थस्य= वस्त्वलङ्काररसान्यतमरूपस्य, प्राधान्ये= चारुत्वपर्यवसायित्वेन मुख्यभावे, ध्वनिसंज्ञितकाव्यप्रकारः= ध्वनिनाम-ककाव्यभेदः, तस्य, गुणभावे= चारुत्वाविश्रान्त्याऽप्रधानभावे, तु,= इति व्यवच्छेदे तद्व्यतिरिक्तमित्यर्थः गुणीभूतव्यङ्गचं नाम काव्यं भवति, ततः= ध्वनिगुणी-भूतव्यङ्गचव्यपदेश्यकाव्यभेदात्, अन्यत्= अपरं, भिन्नं, रसभावादितात्पर्यरहितं= रसभावादिप्रयोजनशून्यं, व्यङ्गचार्थविशेषप्रकाशन— शक्तिशून्यं= व्यङ्गचार्थविशेष-स्य रसालङ्कारवस्त्वन्यतमरू— प्रतीयमानार्थस्य प्रकाशनस्य प्रकटनस्य या शक्तिः सामर्थ्य तया शून्यं रहितं च, केवलवाच्यवाचकवैचित्र्यमात्राश्रयेण= केवलस्य वाच्यस्याभिधेयस्य वाचकस्याभिधानस्य यदेव वैचित्र्यं विशिष्टता तदेव तन्मात्रं तस्य आश्रयेण आधारेण, उपनिबद्धं= संगृहीतं, आलेख्यप्रख्यं, चित्रसदृशं, मुख्यप्रतिकृतिरूपं, यत्, काव्यं= कविकर्म, आभासते= द्योतते, तत्= तादृशं काव्यं, चित्रं= चित्रसंज्ञकमिति। तत्= तादृशं, काव्यं, न मुख्यं= प्रधानं, असौ= एतादृशकाव्यप्रकारः, हि, काव्यानुकारः= काव्यस्यानुकृतिरेवेति।

व्यङ्ग्यस्य यत्र सद्भावस्तत्र द्वे स्थिती– तस्य चारुत्वपर्यवसायित्वे ध्वनि-काव्यमतथास्थितित्वेन तस्य वाच्योपस्कारकत्वे गुणीभूतव्यङ्ग्यकाव्यम्। व्यङ्ग्य-स्याभावेन वाच्यवाचकवैचित्र्यमात्राश्रितं रसादिजीवरहितं मुख्यस्य प्रतिकृति-रूपमात्रं यत्काव्यं तत्तु चित्रव्यापदेश्यमिति। यथैव चित्रं मुख्यस्य प्रतिकृतिमात्रं तथैव चित्रकाव्यमपि मुख्यस्य ध्वन्यादेः प्रतिकृतिमात्रमिति।

अत्रेदमवधेयं यच्चित्रकाव्येऽपि व्यङ्ग्यस्य सद्भावस्तु भवत्येव किन्तु तस्य विवक्षा न भवतीति तस्य निर्व्यङ्ग्यत्वमुक्तम्। वस्तुतस्तु तत्र अतथास्फुटं। वाऽवि-वक्षितं व्यङ्ग्यं तु भवत्येव।। ४१ ।।

इस प्रकार प्रधान एवु गुणभाव आत्मा वाले व्यङ्ग्य का निर्देश कर अब उसके अभाव में जो स्थिति होती है उसका निर्देश करने के लिए प्रकरण का आरम्भ करते हैं–

इस प्रकार व्यङ्ग्य के प्रधान एवं गुणभाव के द्वारा ध्वनि एवं गुणभूत व्यङ्ग्य नाम के दो काव्य व्यवस्थित हैं। उन दोनों से जो भिन्न हैं वह चित्र के नाम से अभिहित हैं।। ४१ ।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं–

व्यङ्ग्य अर्थ के प्राधान्य में ध्वनि नामक काव्य का प्रकार होता है, उसके गुणभाव में तो गुणीभूतव्यङ्ग्य नामक काव्यभेद होता है। उन दोनों से भिन्न जो रस भाव आदि तात्पर्य से रहित व्यङ्ग्यार्थ विशेष के प्रकाश की शक्ति से शून्य केवल वाच्य वाचक के वैचित्र्य मात्र के आधार से उपनिबद्ध चित्रतुल्य काव्य आभासित होता है वह चित्र कहलाता है। वह मुख्य काव्य नहीं है। वह तो केवल मुख्य काव्य का अनुकरण मात्र है। जैसे चित्र मुख्य वस्तु का अनुकरण मात्र होता है, उसी तरह चित्र काव्य भी ध्वनि काव्य वा गुणीभूत व्यङ्ग्य काव्य का अनुकरण मात्र है, मुख्य नहीं।। ४१ ।।

कारिका– चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्।। ४२ ।।

ध्वन्या०– तत्र किञ्चिच्छब्दचित्रं यथा दृष्करयमकादि। वाच्यचित्रं ततः शब्दचित्रादन्यद्व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्यरहितमुत्प्रेक्षादि।

लीला– चित्रकाव्यं विवृण्वंस्तद्भेदान्निर्दिशति चित्रमित्ययादिना– चित्रं च शब्दार्थभेदेन द्विविधं व्यवस्थितं तत्र किञ्चित् शब्दचित्रं अतः पर वाच्यचित्रं भवति इति पदव्यवस्था।

चित्रं रसभावाद्यनपेक्ष्येण वाच्यवाचकवैचित्र्यमात्रसम्बन्धभूत काव्यानु-कृतिर्य– त्ततत्, च शब्दार्थभेदेन= शब्दगतार्थगतप्रकारेण, द्विविधं= द्विप्रकारकं, व्यवस्थितं= सम्मितं, तत्र= द्वयोर्मध्ये, किञ्चित्= स्वल्पविषयं, शब्दचित्रं= शब्दश्रितचित्रं, अतः= शब्दचित्रात्, परं= इतरं वाच्यचित्रं= वाच्यार्थाश्रितचित्रं, भवति इति।

कारिकां विवृणोति वृत्तिकार: तत्रेत्यादिना-तत्र= तयोर्मध्ये, किञ्चित्= स्वल्पविषयं, शब्दचित्रं= शब्दाश्रितवैचित्र्यसंयुतं, यथा दुष्करं क्लेशातिशयेन प्रणेयं, यमकादि यमकप्रभृति वर्णसन्निवेशविशेषरूपशब्दालङ्कारा: पद्मादिबन्ध-शब्दश्लेषप्रभृतय:। तत:= तस्मात् तादृशात्, शब्दचित्रात्= शब्दजन्यवैचित्र्याद्, अन्यत्= अपरं, व्यङ्ग्यार्थसंस्पर्शरहितं= प्रतीयमानार्थसंसर्गशून्यं अनेन समासोक्त्यादिषु अतिव्याप्तिर्निषिध्यते प्रतीयमानार्थं विना तेषां शरीररचनासम्भवात् प्राधान्येन= मुख्यभावेन, वाक्यार्थतया= वाक्याभिधेयतया, स्थितं= सम्मतं, रसादितापर्यरहितं प्राय: सर्वेषामेव रसादीनां विभावतासिद्धेश्च उत्प्रेक्षादि= ''सम्भावनामथोत्प्रेक्षा प्रकृतस्य समेन यैरित्यादिलक्षणालङ्कारादि आदिपदादुपमादीनामपि ग्रहणं, वाच्यचित्रं, भवतीति। तदेव वाच्यचित्रं भवति यत्र न मनागपि व्यङ्ग्यार्थसंसर्गो वा सत्यपि तथा तस्य नितान्तमेवाविवक्षितत्वं व्यङ्ग्यार्थनिर्मेयशरीरा: समासोक्त्यादयो रसनिर्मेयविग्रहा रसवदादयोऽलङ्काराश्च नास्य विषया:। उत्प्रेक्षायामपि दीपकतुल्ययोगिताऽऽदिवत् विवक्षितव्यङ्ग्यौपम्यसम्बन्धस्य सत्त्वात्कथमर्थचित्रत्वमिति दीधितिकारेण तच्चिन्त्यमिति निर्दिष्टम्। वस्तुतस्तु अन्यधर्मसम्बन्धनिमित्तेन अन्यस्य अन्यतादात्म्यसम्भावनमुत्प्रेक्षा। यथा वस्तुस्वरूपस्य वस्तुस्वरूपान्तरतादा— त्म्यसम्भावनं, अहेतोर्हेतुत्वेन सम्भावनं, अफलस्य फलत्वेन सम्भावनञ्च सम्भावनञ्चोत्कटकोटिक: सन्देह:। तेनाऽत्र व्यङ्ग्यौपम्यसम्बन्धसत्त्वाभासेऽपि न तस्य विवक्षितत्वमिति नास्य गुणीभूतव्यङ्ग्यता अपितु चित्रतैव। चित्रता वा अस्फुटव्यङ्ग्यसद्भावे वा व्यङ्ग्यमात्राभावे वा गुणालङ्कारयोगेन भवति। तेन चित्रकाव्ये व्यङ्ग्यस्य नितान्तमभाव: सद्भावेऽपि तस्य अस्फुटतरत्वं तथात्वेऽपि तत्र कवेस्तात्पर्यमिति तात्पर्यविषयीभूतव्यङ्ग्यविरहवत्त्वं चित्रत्वम्। रसभावादिवि— वक्षायां तु नाऽस्य विषयतैवोदेति। चित्रे तु शब्दार्थयोर्गुणप्राधान्ये एव स्थिति: साहित्यकौमुदीकारेण स्पष्टमेवोक्तं—

'इह रसादिरूपस्य व्यङ्ग्यस्य स्फुटमप्रत्ययाद् व्यङ्ग्यमेतत्काव्यद्वयमुक्तम्। वस्तुतस्तु विभावादिरूपतया सर्वत्र रसपर्यवसायिताऽस्ति' इति यथा निर्दिष्टम्। दर्पणकृताऽपि व्यङ्ग्यस्य नितान्ताभावेनास्वाद्यत्वाभावान्न काव्यत्वं चित्रस्येति। तदपि नैव शोभनम्। यथार्थस्तु चित्रे व्यङ्ग्यस्य तात्पर्यविषयीभवनाभाव एव न तु नितान्ताभाव:। तस्यापि विभावादिरूपतया रसपर्यवसायिताभवादास्वाद्यत्वमपि सिध्यत्यवेति।

चित्रकाव्य का विवरण देते हुए उसके भेदों का निर्देश करते हैं—

चित्रकाव्य जो है वह शब्द एवं अर्थ के भेद से दो प्रकार का होता है। उनमें से कुछ तो शब्द चित्र होता है अर्थात् शब्दकृत वैचित्र्य वाला होता है और उससे दूसरा जो है वह अर्थचित्र होता है अर्थात् अर्थ के कारण उत्पन्न वैचित्र्य वाला होता है।। ४१ ।।

वृत्तिकार कारिका के आशय का पल्लवन करते हैं- उनमें से कुछ तो शब्दचित्र

होता है जैसे निबन्धन करने में भी कठिन यमक आदि। शब्दचित्र का अर्थ है शब्द के कारण हुआ वैचित्र्य। उस शब्दचित्र से भिन्न व्यङ्ग्य अर्थ के संस्पर्श अर्थात् विवक्षित रूप मे स्पर्श से रहित मुख्य रूप सो वाच्यार्थ के रूप में स्थित, रसादि तात्पर्य से रहित उत्प्रेक्षा आदि वाच्यचित्र है।

दोनों भेदों में गुण एवं अलङ्कार का प्राधान्य होता है। अर्थचित्र में या तो व्यङ्ग्य होता ही नहीं या होने पर भी उसकी स्फुट रूण से व्यक्ति नहीं होती, होने पर वह विवक्षित नहीं होता। संक्षेप में जब कवि रसभावादि के तात्पर्य से शब्दार्थ संयोजन नहीं करता वह काव्यचित्र होता है।

ध्वन्या०— अथ किमिदं चित्रं नाम ? यत्र न प्रतीयमानार्थसंस्पर्शः। प्रतीयमानो ह्यर्थस्त्रिभेदः प्राक्प्रदर्शितः। तत्र यत्र वस्त्वलङ्कारान्तरं वा व्यङ्ग्यं नास्ति स नाम चित्रस्य कल्प्यतां विषयः। यत्र तु रसादीनाम-विषयत्वं स काव्यप्रकारो न सम्भवत्येव। यस्मादवस्तुसंस्पर्शिता काव्यस्य नोपपद्यते। वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य भावस्य वाङ्गत्वं प्रतिपद्यते अन्ततो विभावत्वेन। चित्तवृत्तिविशेषा हि रसादयः, न च तदस्ति वस्तु किञ्चिद्यन्न चित्तवृत्तिविशेषमुपजनयति तदनुत्पादने वा कविविषयतैव तस्य न स्यात् कविविषयश्च चित्रतया कश्चिन्निरूप्यते।

अत्रोच्यते- सत्यं न तादृक्काव्यप्रकारोऽस्ति यत्र रसादीनामप्रतीतिः। किन्तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वोपनि-बध्नाति तदा तद्विवक्षापेक्षया रसादिशून्यतार्थस्य परिकल्प्यते। विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः। वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला भवतीत्यनेनापि प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते।

लीला— चित्रकाव्यस्वरूपावधारणायाक्षेपतत्परिहारविधिना प्रकरणमारभते अथेत्यादिना— अथ= इति प्रश्ने, किमिदं= इत्याक्षेपे, चित्रं नाम— 'यद्भवता तच्चित्रमभिधीयते' इत्युक्तं तत् चित्रं नाम किम् ? तदुत्तरयति—यत्र= यस्मिन् काव्ये, न= नैव, प्रतीयमानार्थसंस्पर्शः= व्यङ्ग्यार्थविवक्षेति। यत्र नैव व्यङ्ग्यार्थस्य विवक्षा तदेव काव्यं चित्रं भवतीति। आक्षेप्ता पुनराक्षिपति प्रतीयमान इत्यादिना प्रतीयमानः= व्यङ्ग्यरूपः, अर्थः, हि, त्रिभेदः= वस्त्वलङ्काररसरूपेण त्रिप्रका-रात्मकः, प्राक्= पूर्वमेव, प्रदर्शितः= व्याख्यातः। तत्र= तेषु, वस्तु वा, अलङ्कारान्तरं= अन्यालङ्काररूपं, व्यङ्ग्यं-वस्तुव्यङ्ग्यं वा अलङ्कारव्यङ्ग्यं, न, अस्ति, सः= तादृशः, चित्रस्य= चित्रकाव्यस्य, विषयः= लक्ष्यं कल्प्यतां= निर्दिश्यतां, यत्र, तु= इति व्यवच्छेदे, रसादीनां= रसभावादीनां, अविषयत्वं= अलक्ष्यत्वं, सः= तादृशः, काव्यप्रकारः= काव्यभेदः, एव, न, सम्भवति। यस्मात्= यतः, काव्यस्य=

कविकृतेः, अवस्तुसंस्पर्शिता= वस्तुसम्पर्काभावः, निर्वस्तुत्वं सम्बद्धार्थावबो-धकत्वं, कचटतपादिवन्निरर्थकत्वं वा दशदाडिमादिवदसम्बद्धार्थत्वं, न, उपपद्यते= सम्भवति। यतः, जगद्गतं= भवस्थितं, सर्वं= निखिलं, एव, वस्तु= पदार्थः, अन्ततः= चरमरूपेण, कस्यचित्= अनुकूलप्रकृतिकस्य, रसस्य= शृङ्गारादेः, भवस्य= रत्यादेः, च, विभावत्वेन= आलम्बनत्वेन तदुदीपकत्वेन वा, अङ्गत्वं= विषयत्वं, अवश्यं= अपरिहार्यत्वेन, प्रतिपद्यते= प्राप्नोति। तथाभवने हेतुमाह चित्रेत्यादिना हि= यतः, रसादयः=भावादयः, चित्तवृत्तिविशेषाः= चेतोव्यापार-विशेषाः, एव– यथा मनसोऽनुकूललाभेन प्रसादनमेव रतिस्तद्विशेषश्च शृङ्गारः। तत्= तादृशं, किञ्चित्= किमपि, वस्तु= पदार्थः, न, अस्ति= सम्भवति, यद्, चित्तवृत्तिविशेषं= चेतोव्यापारं यं कमपि, न, उपजनयति= प्रेरयति, वा= इति पक्षान्तरे, तदनुत्पादने= चेतोवृत्तिविशेषानुपजनने, तस्य= तादृशवस्तुनः, कवि-विषयता= काव्यवर्ण्यता, एव, न स्यात्, चित्रतया= चित्ररूपेण, कश्चित्= कोऽपि, कविविषयः= कविगोचरीभूतपदार्थ एव, निरूप्यते= विवर्ण्यते–तेन कथं तस्य नीरसत्वं सति सरसत्वे कथं तस्य पूर्वोक्तभेदभिन्नत्वञ्चेति।

अस्यायमाशयः– काव्यस्यार्थबोधकत्वमपरिहार्यमेव तदभावेऽपि काव्यत्वे कचटतपादीनामपि काव्यत्वं स्यात्। अर्थबोधे यस्य कस्यापि वस्तुनः प्रतीति-र्भवत्येव। प्रत्येकं कविसंस्पृष्टं वस्तु परिणामे यस्य कस्यापि भावस्य विभावत्वं प्राप्नोत्येव। तेन यदि चित्रकाव्यगतवस्तुनोऽपि कविविषयत्वं तदा तस्य प्रीतिज-नकत्वमपि न केनाऽपि निवार्यते। सति च प्रीतिजनकत्वे कथं तस्य नीरसता सम्भवतीति काव्यजन्यस्य प्रीतिविशेषस्य नियमेन रसास्वादैकनिबन्धनत्वात्। उक्तमेव– 'स्वभावश्चायमर्थानां यन्न साक्षादमी तथा। स्वदन्ते सत्कविगिरां गता गोचरतां यथा इति– अर्थानामेष स्वभावो यत्साक्षाद्येऽपि तेऽपि कविवा-ग्विषयतां प्राप्य नितान्तमेव स्वदन्त इति।

तत्समादधाति– अत्रेत्यादिना-अत्र= सम्बद्धप्रसङ्गे, उच्यते= इदं कथ्यते, सत्यं= निश्चयमेव, तादृक्= तथाविधः, काव्यप्रकारः= काव्यभेदः, न= नैव, अस्ति= सम्भवति, यत्र= यस्मिन्, रसादीनां= रसभावादीनां, अप्रतीतिः= प्रत्याय-नाभावः। किन्तु= तथा सत्यपि, यदा, रसभवादिविवक्षाशून्यः= रसभावादिप्रतिपा-दनतत्परतारहितः, कविः= काव्यकारः,, शब्दालङ्कारं= शब्दसम्बद्धानुप्रासाद्य-लङ्कारं, वा, अर्थालङ्कारं= अर्थसम्बद्धोपमाद्यलङ्कारं, उपनिबध्नाति= निबन्धनं करोति, तदा, तद्विवक्षापेक्षया= तस्य वाच्यालङ्कारस्य विवक्षाऽभीष्टता तदपेक्षया, अर्थस्य= वर्ण्यवस्तुनः रसादिशून्यता= रसभावादिहीनता, परिकल्प्यते= विचि-न्त्यते। हि= यतः, काव्ये= कविकृतौ, शब्दानां= वाचकादीनां, विवक्षोपारूढः= विवक्षयां कवेर्वक्तुमिच्छया उपारूढो विषयीकृतः– अस्य शब्दस्यायमर्थः

स्यादित्यभिप्रायपुरसरं प्रयुक्तः।, एव= इति व्यवच्छेदे— न तु यथाप्रचलितः, अर्थः= वर्ण्यविषयः, आशयः। कविविवक्षाविरहे= कवेर्वक्तुमिच्छाभावे, अपि कविनाऽतथातात्पर्यप्रयुक्तेऽपि, वाच्यसामर्थ्यवशेन= वाच्यवस्तुबलात्, तथाविधे= तादृशे कविनाऽतथानिरूपिते, विषये= लक्ष्ये, भवन्ती= स्वरूपं गृह्णन्ती, रसादिप्रतीतिः= रसभवादिस्फुरणं, परिदुर्बलाः, अतथासशक्ता यथाऽस्वाद्या भवेत्, भवति= सञ्जायत, इति= इत्थं, अनेन= एतेन, अपि, प्रकारेण= विधिना, नीरसत्वं= रसादिहीनत्वं, परिकल्प्य= विचिन्त्य, चित्रविषयः= चित्रकाव्यत्वं, व्यवस्थाप्यते= निर्द्धायते इति।

अस्यायमाशयः— काव्ये यथाकथञ्चिदपि रसादिप्रतीतिस्तु भवत्येव। किन्तु यदा कविः 'विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चन' इत्युक्तालङ्कारसन्निवेशप्रकारमुल्लङ्घ्य तस्यैवाङ्गित्वविवक्षया तदुपनिबध्नाति तत्र नैवास्वाद्यत्वेन रसादिप्रतीतिर्भवति यथा पाकानभिज्ञसूदेन वा अतत्परेणाभिधेनापि सूदेन विरचिते मांसपाकविशेषऽनास्वाद्यता। यदि चातथाविवक्षितत्वेऽपि अकुशलकृतायां वा कुशलेनाप्यन्यमनस्केन कृतायां शिखरिण्यामिव वस्तुसौन्दर्यमात्रबलाद्भवन्त्यपि रसादिप्रतीतिरनास्वाद्यैव भवतीति कविविषयभूतस्यापि चित्रकाव्यस्य नीरसत्वं समर्थ्यते। तेनैव तस्य काव्यानुकारत्वं न तु मुख्यत्वमपि।

चित्रकाव्य के स्वरूप के अवधारण के लिए आक्षेप एवं उनके परिहार के रूप में प्रकरण का आरम्भ करते है—

तो फिर यह चित्र नाम का किस प्रकार का काव्य है ? यह वैसा काव्य जहाँ प्रतीयमान अर्थ का विवक्षित रूप से स्पर्श न हो।

तीन प्रकार का प्रतीयमान अर्थ पहले प्रदर्शित किया गया है— वस्तु, अलङ्कार एवं रस। जहाँ वस्तु वा अलङ्कार व्यङ्ग्य नहीं है वह भले ही चित्रकाव्य का विषय बन जाय। जहाँ तो रसादि का विषय नहीं होता वह तो काव्य प्रकार हो ही नहीं सकता। क्योंकि किसी भी वस्तु से एकदम ही अछूता रहना किसी भी काव्य के लिए सम्भव नहीं है। काव्य न तो अर्थहीन हो सकता है न ही असम्बद्ध अर्थ का द्योतक। इस संसार में जो भी वस्तु है वह सभी ही अवश्य किसी ने किसी रस वपा भाव के अङ्ग के रूप में अन्ततः विभाव- आलम्बन वा उद्दीपन बन कर परिणत हो ही जाता है। चित्त वृत्ति की विशेष अवस्था ही रस होती है और वैसा कोई भी वस्तु नहीं जो किसी न किसी चित्तवृत्ति विशेषको न जनाए वा उस तरह किसी भी चित्तवृत्तिविशेष का प्रेरक न बनने पर उसकी कवि विषयता ही नहीं बन पाएगी और चित्रकाव्य भी तो किसी एक प्रकार का कविविषय ही हैं। तो फिर कैसे यह माना जाय कि चित्र काव्य एकदम नीरस होता है और उसकी उस प्रकृति के कारण वह प्रसिद्ध काव्य भेदों से भिन्न भी है।

इस पर कहा जाता है— यह सही बात है कि काव्य का वैसा प्रकार नहीं होता जहाँ रसादि की एकदम ही प्रतीति न हो। फिर भी, जब कवि रस भाव आदि की

विवक्षा से शून्य होकर शब्दालङ्कार वा अर्थालङ्कार का उपनिबन्धन कर लेता है, उस समय उनकी विवक्षा की अपेक्षा अर्थ का रसादिशून्य होना माना जाता है। काव्य में शब्दों के जो भी अर्थ होते है वे विवक्षा से सिद्ध होते हैं न कि रूढ़ि मात्र से। उस तरह कवि की विवक्षा के न रहने पर वाच्य सामर्थ्य के वश से उस प्रकार के विषय में होती हुई भी रसादि की प्रतीति 'दुर्बल अर्थात् अनास्वाद्य होती है (जैसे-अकुशल वा कुशल होने पर भी अन्यमनस्क व्यक्ति के द्वारा तैयार किया गया मांसविशेष का परिष्कार) कि कारण प्रकार से भी नीरसत्व परिकल्पित कर चित्रकाव्य का विषय व्यवस्थापित किया जाता है।

ध्वन्या०— तदिदमुक्तम्—

'रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः।।
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः।।'

लीला— चित्रविषये यदप्युक्तं तत्संक्षिप्य कथनायोपक्रमते तदित्यादिना— तत्= तस्मात्, इदं= वक्ष्यमाणतथ्यं, उक्तं= अभिहितम्। किमभिहितमित्यपेक्षायामाह रसेत्यादि— रसभावादिविषयविवक्षाविरहे सति यः= अलङ्कारनिबन्धः सः चित्रविषयः मतः यदा रसादिषु तात्पर्यवती विवक्षा स्यात् तदा तु तत् काव्यं यत्र न ध्वनेः गोचरः न अस्ति एवं इति पदव्यवस्था।

रसभावादिविषयविवक्षाविरहे= रसभावादीनां या विवक्षा प्राधान्येनाभीष्टता तस्याः विरहेण अभावे, सति, यः= यादृश अलङ्कारनिबन्धः= अलङ्कारस्य वाच्यालङ्कारस्य तत्प्राधान्यापेक्षया कृतो निबन्धाः समुपन्यासः, सः, चित्रविषयः= चित्रकाव्यलक्ष्यं, मतः= निश्चितः, तद्विपरीतं, यदा, रसादिषु= रसभावादिषु, तात्पर्यवती= प्रयोजनयुता, विवक्षा अभीष्टता, स्यात्, तदा= तदवस्थायां, तु, तत्= तादृशं, काव्यं यत्र= यस्मिन्, न= नैव, ध्वनेः= रसादिध्वनेः गोचरः= विषयः, न, अस्ति= सम्भवति, एवेति।

यत्र रसभावादितात्पर्यमनपेक्ष्य वाच्यालङ्कारप्राधान्येन कविर्व्यवहरति तत्र चित्रविषयत्वमुत्पद्यते तद्विपरीतं यत्र तु तात्पर्यादेव रसादिषु कवेराग्रहस्तत्र ध्वनिविषयबाह्यं न किमपि काव्यमिति।

चित्रकाव्य के विषय में ऊपर जो भी कहा गया, उन सबका संक्षेप कर बताते हैं- इस हेतु यह कहा गया है- रस, भाव आदि विषय की विवक्षा न रहने पर जो वाच्य अलङ्कार का प्रधानभाव से निबन्धन है वह चित्रकाव्य का विषय माना गया है

जब रस, भाव आदि में ही तात्पर्य को निहित कर उसकी विवक्षा की जाती है तब तो वैसा काव्य हो नहीं सकता जिसमें ध्वनि का विषयत्व न हो।

ध्वन्या०— एतच्च चित्रं कवीनां विशृङ्खलगिरां रसादितात्पर्यमनपेक्ष्यैव काव्यवृत्ति दर्शनादस्माभिः परिकल्पितम्। इदानीन्तनानां तु न्याय्ये काव्यनयव्यवस्थापनं क्रियमाणे नास्त्येव ध्वनिव्यतिरिक्तः कवेः प्रकारः। यतः परिपाकवतां कवीनां रसादितात्पर्यविरहे व्यापार एव न शोभते। रसादितात्पर्ये च नास्त्येव तद्वस्तु यदभिमतरसाङ्गतां नीयमानं न प्रगुणीभवति। अचेतना अपि हि भावा यथायथमुचितरसविभावतया चेतनवृत्तान्तयोजनया वा न सन्त्येव ते ये यान्ति न रसाङ्गताम्।

लीला— अस्तु नाम वाच्यालङ्कारप्राधान्यं किञ्चिच्चित्रं किन्तु अकाव्यरूपस्य तस्य प्रतिपादनेन नैव कश्चिदर्थः। यथा घटे कृते कविर्न भवति तथैव चित्रेणापि। तेन किमनेनोपदिष्टेनेत्याशङ्कानिरासाय तच्च कविभिः कृतत्वाद्धेयतयोपदिश्यत इति निरूपयति एतच्चेत्यादिना- एतत्= प्रकरणगतं, चित्रं= चित्रकाव्यं, च, विशृङ्खलगिरां= अमर्यादितवचसां, कवीनां= काव्यकाराणां, रसादितात्पर्यं= रसभावादिप्रयोजनं, अनपेक्ष्य= अनालोच्य, एव, काव्यप्रवृत्तिदर्शनात्= काव्ये तथाविधे चित्रस्वरूपे प्रवृत्ते प्रवृत्तेः प्रवर्तनस्य दर्शनात्, अस्माभिः, परिकल्पितं= निरूपितं, तच्च हेयमित्येवोपदिष्टम्। एतच्च प्राचीनानामेव विषयः। इदानीन्तनानां= आधुनिकानां, तु, न्याय्ये= समुचिते, काव्यनयव्यवस्थापने= काव्यनीतिनिरूपणे, क्रियमाणे= विधीयमाने, सति, ध्वनिव्यतिरिक्तः ध्वनिभिन्नः, काव्यप्रकारः= काव्यभेदः, न, अस्त्येव— नैव विद्यत एव। तत्र हेतुमाह यत इत्यादिना यतः= यस्मात्, परिपाकवतां— 'यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्। तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते' इतिलक्षितशब्दपकसिद्धानां, कवीनां, रसादितात्पर्यविरहे= रसभावादिप्रयोजनभावो, व्यापारः= प्रवर्तनं, एव, न, शोभते= शोभाधायी भवति। रसादितात्पर्ये= रसभावादिप्रयोजने, तु, तत्= तादृशं, वस्तु= पदार्थः, नास्त्येव= न सम्भवत्येव, यद अभिमतरसाङ्गतां= अभीष्टरसविभावादितां नीयमानं= प्राप्यमाणं, सत्, न= नैव, प्रगुणीभवति= प्रकर्षमाप्नोति हि= यतः, अचेतनाः= चैतन्यरहिताः, अपि, भावाः= पदार्थाः, यथायथं= यायोग्यं, उचितरसविभावतया= उपयुक्तरसालम्बनत्वेन, वा= इति पक्षान्तरे, चेतनवृत्तान्तयोजनया= चेतनधर्मारोपसमाकलनया, ते= तादृशाः, न, सन्ति, एव, ये, रसाङ्गतां= रसविभावादितां, न, यान्ति= प्राप्नुवन्ति इति।

अस्यायमाशयः— परमार्थस्तु अकाव्यरूपमेव चित्रं तेन त्याज्यञ्च तथापि केषाञ्चिदपि लङ्घितमर्यादवचसां कवीनां रसादितात्पर्यमनालोच्यैव वाच्यालङ्कारनिबन्धने एव प्रवृत्तिं दृष्ट्वा तथाऽन्यैर्न कर्तव्यमिति त्याज्यतयोपदेशायैव तदुल्लेखः कृतः। सिद्धवचसां शब्दपरिपाकवतां कवीनां कृते तु नास्त्येव ध्वनिभिन्नः काव्यभेदः। किञ्च सति काव्यकर्तरि रसादितात्पर्यप्रेरिते सर्वमेव

वस्तु रसाद्यङ्गतां प्राप्नोति न केवलं चेतना एवापितु अचेतना अपि पदार्थाः उपयुक्तरसविभावत्वेन वा चेतनत्वारोपेण रसाङ्गतां प्राप्नुवन्त्येवेति।

इस प्रकार के निकृष्ट काव्य के विवेचन से क्या लाभ है ? इसके परिहार के लिए कहते हैं–

यह चित्र जो है वह अमर्यादित वचन वाले कवियों के द्वारा रसादि तात्पर्य की अनदेखी कर अपनाई गई काव्य प्रवृत्ति को देख कर हमने परिकल्पित किया है। वर्तमान वाले कवियों के लिए तो अब समुचित काव्यनीति का व्यवस्थापन किए जाने से ध्वनि से भिन्न कोई भी दूसरा काव्यप्रकार हो ही नहीं सकता क्योंकि शब्द के परिपाक वाले कवियों के लिए रसादितात्पर्य को छोड़ देने वाला व्यापार एकदम शोभनीय नहीं होता। रसादितात्पर्य होने पर वैसी कोई वस्तु नहीं होती जो अभिमत रस की अङ्गता में पहुंचाये जाने पर उत्कर्ष युक्त न हो। (चेतन तो चेतन ही ठहरा) अचेतन भी भाव यथार्थ रूप से उचित रस के विभाव के रूप में वा चेतनत्व के आरोप से, वैसे नहीं है जो कि रस के अङ्ग के रूप में न उभरें।

ध्वन्या०– तथा चेदमुच्यते–

अपारे काव्यसंसारे कविरेकः प्रजापतिः।
यथास्मै रचिते विश्वं तथेदं परिवर्तते।।
शृङ्गारी चवेत्कविः काव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्।
भावानचेतनानपि चेतनवच्चेतनानचेतनवद्।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया।।

तस्मान्नास्त्येव तद्वस्तु यत्सर्वात्मना रसतात्पर्यवतः कवेस्तदिच्छया तदभिमतरसाङ्गतां न धत्ते। तथोपनिबध्यमानं वा न चारुत्वातिशयं पुष्णाति।

लीला– पूर्वोक्तमेवार्थं द्रढयितुं तत्समर्थकश्लोकोपस्थापनाय प्रयतते तथेत्यादिना– तथा च= तेनैव प्रकारेण, इदं,= वक्ष्यमाणविषयं, उच्यते= कथ्यते। तदेवोपस्थापयति अपार इत्यादिना कविः अपारे काव्यसंसारे एकः प्रजापतिः अस्मै विश्वं यथा रोचते इदम् तथा परिवर्तते इति पदव्यवस्था–

कविः= काव्यकारः, अपारे= अनाद्यन्ते, काव्यसांरे= काव्यजगति, एकः= अद्वितीयः, प्रजापतिः– स्रष्टा अस्तीति शेषः, अस्मै= कवये, विश्वं= जगत्, यथा= यादृशं, रोचते= स्वदते, इदं= जगत्, तथा= तादृशमेव, परिवर्तते= परिणमते इति।

कवेर्यथारुचि जगतः परिवृत्तिर्यदुक्ता तन्निदर्शयति शृङ्गारीत्यादिना– कविः शृङ्गारी चेत् काव्ये जगत् रसमयं जातं स एव वीतरागः चेत् तत् सर्वम् एव नीरसं (भवति) इति पदव्यवस्था।

कविः= काव्यस्रष्टा, शृङ्गारी= शृङ्गारपरकः, चेत्= यदि काव्ये= कविकृतौ, जगत्= भुवनं, रसमयं= सरसं, जातं= सम्पन्नं, सः= कविः, एव, वीतरागः=

विरक्तः, चेत्, तत्= जगत्, काव्यं, सर्वं= निखिलम्, एव, नीरसं= रसहीनं, भवतीति।

यदि कविः शृङ्गारोक्तविभावानुभावव्यभिचारिचर्वणारूपप्रतीतिमयस्तदा काव्यगतं जगदपि तद्रसनिमज्जनाद् रसमयं भवति किन्तु तस्यैव विरक्तत्वे तु तदपि नीरसमेवेति।

पूर्वोक्तस्यार्थस्य दाढर्याय पुनरेव तन्निदर्शयति भावानित्यादिना-सुकविः काव्ये अचेतनान् अपि भावान् चेतनवत् चेतनान् अचेतनवत् स्वतन्त्रतया यथेष्टं व्यवहारयति इति पदव्यवस्था।

सुकविः= काव्यकलाप्रवीणः काव्यकारः, काव्ये= स्वकृतौ, अचेतनान्= जडान्, अपि, भावान्= पदार्थान्, चेतनवत्= चैतन्ययुक्तवत्, चेतनान्= चैतन्यसं-युक्तान्, अचेतनवत्= जडवत्, स्वतन्त्रतया= स्वच्छन्दतया, यथेष्टं= यथारुचि, व्यवहारयति= प्रवर्तयति इति।

प्रकरणमुपसंहरति तस्मादित्यादिना— तस्मात्= तद्धेतोः, तत्= तादृशं, वस्तु= पदार्थः, न अस्ति एव= नैव भवति, यत्, सर्वात्मना= सर्वतोभावेन, रसतात्पर्यवतः= रसाभिप्राययुक्तस्य, कवेः, तदिच्छया= तदधिकृतरुच्या, तदभिम- तरसाङ्गतां= तस्य कवेरभिमतोऽभीष्टो यो रसस्तस्य अङ्गतां विभावादितां, न, धत्ते= परिणमते अपितु सर्वमेव परिणमत वा, तथा= तेन प्रकारेण, उपनिबध्यमानं= समुपन्यस्यमानं, सत्, चारुत्वातिशयं= सौन्दर्योत्कर्षं, न= नैव, पुष्णाति= बृंहयति इति।

कथनस्यास्यायमाशयः— ब्रह्मणोऽपि विशिष्टैव कवेः सृष्टिः, यतः पूर्वस्य तु अदृष्टाधीना निश्चितस्वरूपा सुखदुःखमोहस्वभावा परमाण्वाद्युपादानकर्मादि-सहकारिकारणपरतन्त्रा हृद्याऽहृद्याऽपि कवेस्तु स्वतन्त्रा यथेच्छरूपा सुखमयी तत्र करुणादावपि सुखोत्पादकत्वात्, अनन्यपरतन्त्रा सदाहृद्या च, पूर्वस्य साद्यन्ता ऽपरस्यानाद्यन्ता च। तेन कविः प्रजापतेरपि प्रजापतिः। स यथा वाञ्छति तथैव जगदिदं परिणमते। यदि स शृङ्गाराञ्चितः सर्वमेव रसमयं भवति तस्मिन् विरक्ते तु सरसमपि नीरसमेव भवति। स तु जडानपि चेतनवच्चेतनानपि जडवद्यथेच्छं प्रवर्तयति इति तस्य परमप्राजापत्यम्। तस्माद्रसपरकस्य कवेः सर्वमेव वस्तु रसविभावादितां याति सौन्दर्यातिशयञ्च बृंहयति। इति।

उपर्युक्त तथ्य के समर्थन के लिए तत्सम्बद्ध श्लोकों का उद्धरण करते हैं—

और यह कहा जाता है- कवि इस अपार काव्यरूप संसार में एह ही प्रजापति (स्रष्टा) है उसको जिस तरह का संसार पसन्द है यह जगत् भी उसी तरह परिवर्तित हो जाता है।

यदि कवि शृङ्गार रस से अञ्चित होगा तब तो संसार ही रसमय होता है और यदि वह विरक्त हो तो वह सभी फीका हो जाता है।

सफल कवि अपने काव्य में अचेतन (जड़) पदार्थों को भी चेतन की तरह और चेतन को जड़ की तरह स्वच्छन्द रूप से यथारुचि प्रवर्तन कराता हैं

इस कारण वैसी वस्तु हो ही नहीं सकती जो सभा प्रकार से रस तात्पर्य में जुटे कवि के लिए उसकी इच्छा से उसके अभिमत रस की अङ्गता अर्थात् विभाव आदि रूप धारण न करे वा उस तरह से उपनिबद्ध होकर सौन्दर्य की अतिशयता की पुष्टि न करे।

ध्वन्या०— सर्वमेतच्च महाकवीनां अस्माभिरपि स्वेषु काव्यप्रबन्धेषु यथायर्थं दर्शितमेव। स्थिते चैवं सर्व एवं काव्यप्रकारो न ध्वनिधर्मता-मतिपतति। रसाद्यपेक्षायां कवेर्गुणीभूतव्यङ्ग्यलक्षणोऽपि प्रकारस्तदङ्गता-मवलम्बत इत्युक्तं प्राक्। यदा तु चाटुषु देवतास्तुतिषु वा दसादीनामङ्गतया व्यवस्थानं हृदयवतीषु च सप्रज्ञकगाथासु कासुचिद्व्यविशिष्टवाच्ये प्राधान्यं तदपि गुणीभूतव्यङ्ग्यस्य ध्वनिनिष्यन्द— भूतत्वमेवेत्युक्तं प्राक्।

तदेवमिदानीन्तनकविकाव्यनयोपदेशे क्रियमाणे प्राथमिकानामभ्या-सार्थिनां यदि परं चित्रेण व्यवहारः, प्राप्तपरिणतीनां तु ध्वनिरेव काव्यमिति स्थितमेतत्। तदयमत्र सङ्ग्रहः—

यस्मिन् रसो वा भावो वा तात्पर्येण प्रकाशते।
संवृत्याभिहितौ वस्तु यत्रालङ्कार एव वा।। ४१।।
काव्याध्वनि ध्वनिर्व्यङ्ग्याप्राधान्यैकनिबन्धनः।
सर्वत्र तत्र विषयी ज्ञेयः सहृदयैर्जनैः।। ४२।।

लीला— तच्च फलितं निर्दिशति सर्वमित्यादिना— एतत्= पूर्वोक्तं, सर्वं= निखिलं, च, सर्वेषामपि वस्तूनां रसाद्यङ्गत्वं कवयितरि रसादितात्पर्ययुक्ते सति, महाकवीनां= सिद्धवचसां काव्यकाराणां, काव्येषु= कृतिषु, दृश्यते= लभ्यते। अस्माभिः= वृत्तिकारैरानन्दवर्धनाचार्यैरपि, स्वेषु= स्वप्रणीतेषु, काव्यप्रबन्धेषु= विषमबाणलीलादिषु, यथायथं= यथातथ्यं, दर्शितं= समुपनिबद्धं, एवेति। एवं= इत्थं, स्थिते= संसिद्धे, अपि, सर्वः= निखिलः, एव, काव्यप्रकारः= काव्यभेदः, ध्वनिधर्मतां= ध्वनिस्वरूपतां, अतिपतति= अतिव्याप्यत्वेनान्तर्भवति, किन्तु, कवेः— काव्यकारस्य, रसाद्यपेक्षायां= रसादितात्पर्यपरके सति, गुणीभूतव्यङ्ग्य-लक्षणः= गुणीभूतव्यङ्ग्यस्वरूपः, अपिं=, च प्रकारः= भेदः, तदङ्गतां= रसाद्यङ्गतां, अवलम्बते= आश्रयति, इति= इत्थं, प्राक्= पूर्वमेव, उक्तं= कथितम्। यदा, तु, चाटुषु= प्रशस्तिप्रभृतिमिथ्याप्रशंसकवाक्यकदम्बेषु, वा, देवतास्तुतिषु= देवतास्त-वननिमित्तवाक्यसमूहेषु, रसादीनां= रसभावादीनां, अङ्गतया= अप्राधान्येन वाच्या-पस्कारकतया, व्यवस्थानं= अवस्थितिः, हृदयवतीषु= 'हिअअलिआ' (सम्भवतः हृदयलतिका) इति प्रसिद्धासु प्राकृतकविगोष्ठीषु, कासुचित्= कतिपयासु सप्रज्ञक-गाथासु= सप्रज्ञकाः सहृदयास्तेषां गाथासु स्फुटरचनासु, यत्= यदेव, व्यङ्ग्यवि-शिष्टवाच्ये= व्यङ्ग्यार्थोपस्कृतवाच्यार्थे, भूतत्वं= ध्वनिरूपत्वं,-प्रकारोऽयं गुणीभूत-

व्यङ्ग्योऽपि ध्वनिरूपताम्। धत्ते रसादितात्पर्यपर्यालोचनया पुनः' इत्युक्तदिशा, एव, इति, प्राक्, उक्तमेव= कथितमेव। राजप्रभृतिप्रशस्तयस्तु शतशः प्रचललिताः सन्त्येव। यथा नेपालेश्वरस्य वीरन्द्रस्य—

''राजानः सन्त्येनेके प्रतिदिशमधुना ,ख्यातिभाजो जगत्यां
राष्ट्राध्यक्षाः प्रभूता दिशि दिशि नयनातिथ्यमायान्ति नित्यम्।
किन्तु श्रुत्युक्तवर्त्मप्रणिहितमनसा धर्मराज्यं वितन्वन्
अद्यत्वे केवलोऽयं नृपसदसि लसन्नस्ति वीरेन्द्रभूपः।।''

नितम्बिनीप्रशस्तयोऽपि काव्यकारेषु प्रसिद्धा एव। यथा–

तन्वी श्यामा शिखरिदशनापक्वबिम्बाधरोष्ठी
मध्येक्षामा चकितहरिणी प्रेक्षणा निम्ननाभिः।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्याम्
बाला पङ्कप्रकृतसरसा सुन्दरी कोमलाङ्गी।।

सप्रज्ञकगगाथा यथा महेन्द्रराजस्य (लोचन उद्धता)—

लङ्घिअगअणा पर्सलरीलआओ होत्तुति वड्ढअन्ती अ।
हालि अस्स आसिसं फलिवेसतुआ विणिठ्ठविआ।।
लङ्घितगगनाः कार्पासलता भवन्त्विति वर्धयन्त्या।
हालिकस्याशिषं प्रातिवेश्यवधुका निर्वापिता। (इतिच्छाया)।

कार्यासलताः= भवदुपजीवनभूताः कार्पासस्तम्बाः, लङ्घितगगनाः= अतिक्रान्तनभस्काः— अत्युच्चाः, भवन्तु= सन्तु, इति= इत्थं, हालिकस्य= कृषकस्य, आशिषं= शुभाशंसां, वर्धयन्त्या= पुनः-पुनः कुर्वत्या, कयाचित्, प्रातिवेश्यवधुका= प्रातिवेशिनिवधूः, निर्वापिता= निवृतिं प्रापितेति।

अत्र कार्पासस्तम्बानां वृद्धौ तत्र निश्शङ्करमणसम्भवबुद्ध्या निवृत्तिरिति वध्वाश्चौर्यसम्भोगाभिलाषापूर्त्यै सङ्केतस्थानज्ञापनं व्यङ्ग्यं तच्च गुणीभूतं तद्विशिष्टस्य वाच्यस्य चमत्कारातिशयात्। तथैव—

गोलाकच्छकुडङ्गे भरेण जम्बूसु पच्चमाणासु।
हलिअबहुआ णिअंसइ जम्बूरसरत्तअं सिअअम्।
(गोदाकच्छनिकुञ्जे भरेण जम्बूषु पच्यमानासु।
सुहलिकवधूर्नियच्छति जम्बूरसरक्तं सिचयम्। (इतिच्छाया)।

गोदावरीकच्छनिकुञ्जे, जम्बूफलेषु पच्यमानेषुं हालिकवधूः जम्बूफलरक्तं सिचयं= निवसनं, नियच्छति= परिधत्ते इति।

अत्र त्वरितसम्भोगसम्भाव्यमानजम्बूफलरसरक्तत्वगोपनाय तद्रसरक्तपरिधानधारणमिति व्यङ्ग्यं तच्च वाच्यार्थे गुणीभूतमिति।

व्याख्यानमुपसंहरति तदित्यादिना— तत्= तस्मात्, एवं= इत्थं, इदानीन्तन-

कविकाव्यनयोपदेशे= इदानीन्तनानां वर्तमानकालिकानां कवीनां काव्यनयस्य काव्यवर्त्मनः उपदेशे शिक्षणे, क्रियमाणे= विधीयमाने, प्राथमिकानां= प्रथमप्रविविक्षूणां वा प्रविष्टमात्राणां, अभ्यासार्थिनां= आभ्यासिकानां, परं= केवलं, चित्रेण= चित्रकाव्येन, व्यवहारः= व्यवहृतिः, यदि= चेत्, प्राप्तपरिणतीनां= प्राप्ता उपलब्धा परिणतिः प्रौढता यैस्ते तेषां, तादृशानां— प्रौढकवीनां, तु= तद्व्यतिरिक्तं, ध्वनिः, एव, प्राधान्येन= मुख्यतया-क्वचित्कामं गुणीभूतव्यङ्ग्यमपि भवेत्, काव्यं, इति= इत्थं, एतत्, स्थितं= सुनिश्चितम्। इदमुक्तम् भवति-आभ्यासिकानां कवीनां प्रथमावस्थायां चित्रकाव्यमपि सम्भवति प्रौढमतीनां कृते तु ध्वनिरेव प्राधान्येन गुणीभूतव्यङ्ग्यमपि कदादाचित्कत्वेन तेन न च चित्रस्याकाव्यत्वं न वा ध्वनेरप्राधान्यमपि। यच्च साहित्यदर्पणकारेण काव्यस्य चित्रत्वं प्रत्याख्यातं तच्चिन्त्यमेव। तद्= तस्मात्, अत्र= प्रकरणेऽस्मिन्, अयं= वक्ष्यमाणः पूर्वोक्ततथ्यसमर्थकः, संग्रहः संग्रहश्लोकद्वयमुपस्थापयति अस्मिन्नित्यादिना- यस्मिन् रसा वा भावः वा तात्पर्ये प्रकाशते यत्र वस्तु वा अलङ्कारः एव संवृत्य अभिहितौ तत्र काव्याध्वनि सर्वत्र व्यङ्ग्यप्राधान्यैकनिबन्धनः ध्वनिः सहृदहृदयैः जनः विषयी ज्ञेयः= इति पदव्यवस्था।

यस्मिन्= काव्ये, रसः= शृङ्गारादिः, वा, भावः= रत्यादिः, वा तात्पर्येण= व्यञ्जनया, प्रकाशते= द्योतते वा, यत्र= यस्मिन्, काव्ये, वस्तु= इतिवृत्तं, वा, अलङ्कारः, एवं संवृत्य= भङ्ग्यन्तेरेणाच्छाद्य, अभिहितौ= कथितौ, तत्र= तादृशे, काव्याध्वनि= काव्यमार्गे, सर्वत्र= सर्वस्मिन्नेव स्थले, व्यङ्ग्यप्राधान्यैकनिबन्धनः= व्यङ्ग्यस्य प्रतीयमानार्थस्य प्राधान्यं मुख्यभावः तदेव एकनिबन्धनमेकतानं यस्य स तादृशः, ध्वनिः= ध्वनिकाव्यं, सहृदयैः= रसिकैः, जनैः, विषयी= काव्यमार्गवान्, भवतीति, ज्ञेयः= अवगन्तव्य इति।

प्रकरणस्यास्यायमाशयः— रसतात्पर्यवतः कवेरिच्छया सर्वमेव वस्तु तदभिमतरसाङ्गत्वं याति चारुत्वातिशयञ्च पुष्णाति चेति महाकाव्येषु दृश्यत एव। तादृशः काव्यप्रकारो ध्वनिस्वरूपतां धत्ते गुणीभूतव्यङ्ग्योऽपि तथैव पुनःरसादितात्पर्यपर्यालोचनया। यच्च चाटु वाक्येषु स्तुतिपद्येषु रसादीनां विभावादितयाऽवस्थितिस्तथैव सप्रज्ञकगाथासु च हृदयवत्यादिप्रयोज्यासु व्यङ्ग्योपस्कृतवाच्यस्य प्राधान्यं च गुणीभूतव्यङ्ग्यस्य ध्वनिनिष्यन्दत्वमिति। तेन आभ्यासिकानां कवीनां कृते चित्रकाव्यं परमेव प्रौढमतीनां तु ध्वनिरेव काव्यमिति। तेनेदमुच्यते— यत्र रसादीनां तात्पर्येण प्रकाशनं वा वस्तुनोऽलङ्कारस्य वा भङ्ग्यन्तरेण विन्यासः स ध्वनिः स च प्रौढकवेर्विषय इति।।४२।।

प्रकरण के फलित का निर्देश करते हैं—

यह सब महाकवियों के काव्यों में देखा जाता है। हमने भी अपने काव्य प्रबधों में यथायथ प्रदर्शित किया ही है।

इस तरह स्थित हो जाने पर सभी काव्यप्रकार ध्वनि के लक्षण में ही नहीं जकड़ पाता है किन्तु कवि की रस आदि की अपेक्षा से गुणीभूत व्यङ्ग्य लक्षण का काव्यप्रकार भी ध्वनि की विभावादि रूप से अङ्गता का अवलम्बन करता है, वह पहले ही बताया जा चुका हैं जब सुन्दरी एवं राजा आदि की प्रशस्तियों में वा देवता की स्तुतियों में रसादि का अङ्ग के रूप में जो व्यवस्थान है एवं हृदयवती— इस नाम से प्रख्यात कविगोष्ठियों में गाए जाने वाली किन्हीं सप्रज्ञक धर्मार्थ काम कुशल सहृदयों की गाथाओं में व्यङ्ग्य से उपस्कृत वाच्य में जो प्राधान्य है वह भी गुणीभूतव्यङ्ग्य का ध्वनि निष्यन्द वाला होता ही है, यह भी पहले ही किया गया है।

इस कारण, इस प्रकार, आधुनिक कवि के लिए काव्य की नीति का उपदेश किए जाने पर पहले पहले अभ्यास करने वाले आभ्यासिक कवियों के लिए चित्र काव्य का व्यवहार करना उपयुक्त है, प्रौढता को प्राप्त हुए कवियों के लिए तो ध्वनि ही काव्य है। ऐसी स्थिति बन गई है।

इस प्रकार इस प्रसङ्ग में ऐसा संग्रह है— जिसमें रस अभवा भाव वाच्य न होकर तात्पर्य से प्रकाशित होता है वा जहाँ वस्तु वा अलङ्कार छिपाकर कहे गए हैं, उस काव्यमार्ग में सभी जगह व्यङ्ग्य का प्राधान्य ही है एक निबन्धन जिसकी ऐसी ध्वनि ही विषय वाली अर्थात् अङ्गी होती है। यह सहृदयजनों को समझ लेना चाहिए।। ४२।।

कारिका— सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः।
सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा।। ४३ ।।

ध्वन्या०— तस्य च ध्वनेः स्वप्रभेदैर्गुणीभूतव्यङ्ग्येन वाच्यालङ्कारैश्च सङ्करसंसृष्टिव्यवस्थायां क्रियमाणायां बहुप्रभेदता लक्ष्ये दृश्यते। तथाहि स्वप्रभेदसङ्कीर्णः स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसङ्कीर्णो गुणीभूतव्यङ्ग्य-संसृष्टो वाच्यालङ्कारान्तरसङ्कीर्णो वाच्यालङ्कारान्तरसंसृष्टः संसृष्टालङ्कार-सङ्कीर्णः संसृष्टालङ्कारसंसृष्टश्चेति बहुधा ध्वनिः प्रकाशते।

लीला— इत्थं प्रकरणप्राप्तं चित्रभेदं काव्यस्य व्याख्याय सम्प्रति ध्वनेरेव प्रकारान्तराणि निर्दिशति कारिकाकारः सगुणीभूतेत्यादिना ध्वनिः सगुणीभूतव्यङ्ग्यैः सालङ्कारैः स्वैः प्रभेदैः सह सङ्करसंसृष्टिभ्यां पुनः अपि बहुधा उद्द्योतत इति पदव्यवस्था।

सगुणीभूतव्यङ्ग्यैः= गुणीभूतव्यङ्ग्ययुतैः, सालङ्कारैः= अलङ्कारसहितैः, स्वैः= आत्मीयैः, अविवक्षितवाच्यत्वादिभिः, प्रभेदैः= प्रकारैः, सह, सङ्करसंसृष्टिभ्यां= सङ्करः एकाधिकालङ्काराणामेकत्र स्वातन्त्र्येण स्थितिः स च अङ्गाङ्गिभावेन सन्देहेन एकवाचकानुप्रवेशेन च त्रिविधः, संसृष्टिर्मिथोऽनपेक्षया तेषां स्थितिः, ताभ्याञ्चो-पलक्षितः, पुनरपि, बहुधा= नानाप्रकारभेदितः, उद्द्योतते= भातीति।

यथोक्तं काव्यप्रकाशे—

भेदास्तदेकपञ्चाशत्तेषां चान्योन्ययोजने।
सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।
१०४०४ १०४५५
वेदखाब्धिवियच्चन्द्राः शरेषुयुखेन्दवः।

यथोक्तं साहित्यदर्पणे—

तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मता।
सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।
वेदखाग्निशरः ५३०४ शुद्धैरिषुवाणाग्निसायकाः ५३५५॥

कारिकां विवृणोति वृत्तिकारः तस्येत्यादिना— तस्य= तादृशस्य काव्यात्मभूतस्य, ध्वनेः, स्वप्रभेदैः= पूर्वोक्तैः पञ्चत्रिंशत्प्रकारैः एकत्रिंशत्प्रकारैर्वा— तच्चेत्थं— अविवक्षितवाच्यो विवक्षितवाच्यश्चेति द्वौ मूलभेदौ। आद्यस्य पुनर्द्वौ भेदौ अत्यन्ततिरस्कृतवाच्योऽर्थान्तरसङ्क्रमितवाच्यश्च। द्वितीयस्य द्वौ भेदौ— अलक्ष्यक्रमोऽर्थशक्तिमूलश्च। पश्चिमस्त्रिविधः कविप्रौढोक्तिकृतशरीरः कविनिबद्धवक्तृप्रौढोक्तिकृतशरीरः स्वतःसम्भवी च। ते च त्रयोऽपि प्रत्येकं व्यङ्ग्यव्यञ्जकयोरुक्तभेदनयेन चतुर्धेति द्वादशविधोऽर्थशक्तिमूलः। आद्याश्चत्वारो भेदा इति षोडश मुख्यभेदाः। ते च प्रत्येकं पदवाक्यप्रकाशकत्वेन प्रत्येकं द्विविधाः। अलक्ष्यक्रमस्य तु पदवाक्यातिरिक्तं वर्णसङ्घटना— प्रबन्धप्रकाश्यत्वेन पञ्चत्रिंशद्भेदाः' इति। अर्थात— अत्यन्ततिरस्कृतवाच्यार्थन्तरसङ्क्रमितवाच्य— शब्दशक्तिमूलभेदात्त्रयो भेदाः अर्थशक्त्युद्भवध्वनेर्द्वादश भेदा इति पञ्चदश भेदाः। तेषाञ्च प्रत्येकं पदवाक्यगतत्वेन द्वौ-द्वौ भेदाविति त्रिंशद्भेदाः द्विगुणितपञ्चदशसङ्ख्यया। असंलक्ष्यक्रमव्यङ्ग्यध्वनेर्वर्णपदवाच्यसङ्घटनाप्रबन्ध— गतत्वेन पञ्च भेदा इति ध्वनेः पञ्चत्रिंशत्स्वभेदा इति लोचनकारगणना। कारिकावृत्तिकारौ तु कविनिबद्धवक्तृप्रौढोक्तिशरीरं कविप्रौढोक्तिशरीरेऽन्तर्भाव्य अर्थशक्त्युद्भवध्वनेरष्टावेव भेदान् गणयतः। अतस्तयोर्मते एकत्रिंशदेव ध्वनेर्भेदाः। काव्यप्रकाशकारस्तु अविवक्षितवाच्यस्य द्वौ भेदौ संलक्ष्यक्रमध्वनेः शब्दशक्तिमूलस्य वस्त्वलङ्कारगतत्वेन द्वौ भेदौ, अर्थशक्त्युद्भवस्य द्वादश भेदाः इति षोडशभेदास्तेषां प्रत्येकं पदवाक्यगतत्वेन द्वात्रिंशद्भेदाः शब्दार्थोभयशक्त्युत्थ एकः, असंलक्ष्यक्रमध्वनेः पदवाक्य-पदांश-रचना-प्रबन्धगतत्वेन षड्भेदाः, इत्येकपञ्चाशद्भेदाः। साहित्यदर्पणकारमते असंलक्ष्यक्रमव्यङ्ग्यध्वनेः पदपदांश— वाक्यमहावाक्यवर्णरचनाभेदात् षड्भेदाः, शब्दशक्त्युद्भवस्य वस्त्वलङ्कारयोः पदवाक्यगतत्वेन चत्वारो भेदाः अर्थशक्त्युद्भवस्य मूलतो त्रयो भेदास्तेषाञ्च प्रत्येकं वस्तुवस्तुवस्त्वलङ्कारालंकारवस्त्वलङ्कारालङ्कारव्यङ्ग्यव्यञ्जकभेदाच्च— तवारो भेदा इति द्वादश तेषाञ्च प्रत्येकं पदवाक्य-

महावाक्यगतत्वेन षट्त्रिंशद्भेदाः, एकः शब्दार्थोभयशक्त्युत्थः, इति विवक्षितान्यपरवाच्यस्य सप्तचत्वारिंशद्भेदा अविवक्षितवाच्यस्य मूलतो द्वौ तयोः पदवाक्यगतत्वेन चत्वारो भेदा इत्येक पञ्चाशद्ध्वनेर्भेदाः, गुणीभूतव्यङ्ग्येन= गुणीभूतव्यङ्ग्यप्रकारैः, गुणीभूतव्यङ्ग्यस्यापि एकपञ्चाशदेव भेदा उक्ताः जातावेकवचनं, वाच्यालङ्कारैः= उपमादिभिरभिधीयमानैः, स्वभेदैः गुणीभूतव्यङ्ग्येन अलङ्कारैश्च प्रकाश्यत इति त्रयो भेदास्तत्रापि सङ्करसंसृष्टिव्यवस्थायां= सङ्करः क्रियमाणायां= विधीयमानायां, लक्ष्ये= विषये, बहुप्रभेदता= अनेकप्रकारता, दृश्यते= लक्ष्यते। तथाहि= यथा, स्वप्रभेदसङ्कीर्णः= ध्वनेः स्वप्रभेदानामन्योन्यसङ्करः, स्वप्रभेदसंसृष्टः= ध्वनेः स्वप्रभेदानां परस्परमनपेक्ष्यस्थितिरेकत्र, गुणीभूतव्यङ्ग्यसङ्कीर्णः= ध्वनेर्गुणीभूतस्य परस्परं सङ्करसम्बन्धाः, गुणीभूतव्यङ्ग्यसंसृष्टः= ध्वनेः गुणीभूतव्यङ्ग्यस्य चान्योन्यसंसृष्टसम्बन्धः, वाच्यालङ्कारान्तरसङ्कीर्णः= ध्वनेः वाच्यालङ्कारान्तरस्य च सङ्करः, वाच्यालङ्कारान्तरसंसृष्टः= ध्वनेः वाच्यालङ्कारान्तरस्य च संसृष्टः, संसृष्टालङ्कारसङ्कीर्णः= ध्वनेः संसृष्टालङ्कारस्य च सङ्करः, संसृष्टालङ्कारसंसृष्टः=ध्वनेः संसृष्टालङ्कारस्य च संसृष्टसम्बन्धः च, इति= इत्थं, बहुधा= अनेकविधत्वेन, ध्वनिः, प्रकाशते= द्योतते इति।

ध्वनिः स्वभेदैः गुणीभूतव्यङ्ग्येन वाच्यालङ्कारेण च प्रकाश्यत इति मूलतस्त्रयो भेदाः। तत्रापि प्रत्येकं सङ्करेण संसृष्ट्या चेति षट्। सङ्करस्य अङ्गाङ्गिभावेन सन्देहास्पदत्वेन एकपदानुप्रवेशेन चेति त्रिभिः, प्रकारैरिति सङ्करस्य नव भेदाः संसृष्टेस्त्रय इति द्वादश भेदाः।।

इत्थञ्च गुणीभूतव्यङ्ग्यस्यापि पञ्चत्रिंशद्भेदाः स्वप्रभेदास्तावन्तोऽलङ्कारश्चैक इति एकसप्ततिः। तस्य सङ्करत्रयेण संसृष्ट्यैकयेति चतुर्भिर्गुणने चतुरशीत्यधिके द्वे शते। तावता पञ्चत्रिंशतो मुख्यभेदानां गुणने चत्वारिंशदुत्तरनवशताधिकनवसहस्राणि ध्वनेर्भेदाः अलङ्काराणामानन्त्यादेवासङ्ख्येयत्वम्।

(३५+३५+१= ७१ X ४= २८४ X ३५= ९९४०)

लोचने तु ७४२० मिता सङ्ख्या यदुक्ता उपर्युक्तराशिगुणनस्य तदसङ्ख्येयत्वज्ञापनायोपस्थापितः सम्भवति न तु लोचनकारस्यागणितज्ञतां कश्चिद्विश्वसिति।

काव्यप्रकाशकारस्तु पूर्वोक्तानामेकपञ्चाशद्भेदानां स्वभेदैरेकपञ्चाशता सङ्करत्रयेण संसृष्ट्याचैकयेति चतुर्भिर्गुणने वेदखाब्धिवियच्चन्द्राः शुद्धभेदैः सह शरेषुयुगखेन्दवः (१०४५५) ध्वनेर्भेदा भवन्तीति निर्दिशति। साहित्यदर्पणकारस्तु अङ्गाङ्गिभावसङ्कराणां साजात्ये एक पञ्चाशद् वैजात्ये पञ्चसप्तत्यधिकद्विशतोत्तरैकसहस्र (१२७५) भेदाः इति तेषां षड्विंशत्युत्तरत्रिंशताधिकैकसहस्रभेदाः एकाश्रयस्थितिसङ्कराणां तावन्त एव भेदाः सन्देहसङ्कराणामपि तथैव संसृष्टीनामपि

तावन्त एवं शुद्धा एकपञ्चाशत् मिश्राश्चतुरधिकशतत्रयोत्तरपञ्चसहस्राणि (५३०४) इति समुदाये ५३५५ सङ्ख्याकाः ध्वनेर्भेदा भवन्तीति निर्दिशति।

तदेवं ध्वनेर्भेदानामागणने याश्च विदुषां विमतयो दृश्यन्ते यथा मम्मटाद्या गुणनप्रक्रियामवलम्ब्य १०४५५ सङ्ख्याकान् ध्वनिभेदान् निर्दिशन्ति, विश्वनाथस्तु सङ्कलनप्रक्रियामवलम्ब्य ६३५५ भेदानाकलयति, लोचनकारस्तु नवसहस्राधिकभेदान् च खले धान्यमानन्यायेन गणयति तन्मूल इदमेव लक्ष्यं प्रतिभाति यद् ध्वनेर्भेदानामसङ्ख्यत्वेन तान् सम्परिगणयितुं न कश्चिदलमिति। तेनैव कारिकाकारो दिग्दर्शनमात्रं कारयति, वृत्तिकारश्च षडेव भेदान्नाम्ना गृहणा्तीति। अपरा चेयं विडम्बना यल्लोचनकारो गुणीभूतव्यङ्ग्यस्यापि ध्वनिवद्भेदान् निर्दिशति किन्तु मम्टाद्यास्तु यत्र वस्तुमात्रेणालङ्कारो व्यज्यते तत्र ध्वनित्वमेव मत्त्वा गुणीभूतव्यङ्ग्यभेदेषु तस्य पदवाक्यप्रबन्धगतत्वेन ये नव भेदा सञ्जायन्ते तान् सन्धाय यत्र ध्वनेरेकपञ्चाशद्भेदा भवन्ति तत्र गुणीभूतव्यङ्ग्यस्य द्विचत्वारिंशदेव भेदा भवन्तीति मन्यन्ते। 'ध्रुवं ध्वन्यङ्गता तासां' इति कारिकायां 'ध्वन्यङ्गता' इत्येतस्य प्राधान्येन ध्वनित्वमेवेति पक्षः काव्यप्रकाशकृतो ध्वनेरङ्गत्वञ्च प्राधान्येन वाऽप्राधान्येनापि भवति यतोऽप्राधान्येऽपि पुना रसादितात्पर्यपर्यालोचनया तस्य ध्वनित्वस्य सिद्धेरिति लोचनकारमतम्। तेन गुणीभूतव्यङ्ग्यस्याष्टविधत्वात्तावता द्विचत्वारिंशद्भेदानां गुणनेन तस्य षट्त्रिंशदुत्तरत्रिशतभेदाः (३३६) भवन्ति शुद्धा इति। तेषां स्वप्रभेदैः सङ्करसंसृष्टियोगेन च गुणने (३३६X३३६X४= ४,५१,५,८४) गुणीभूतव्यङ्ग्यभेदा भवन्ति। लोचनकृन्मतेऽपि पञ्चत्रिंशतोऽष्टसंख्यागुणने २८० सङ्ख्या भवति तस्याश्च तावत्यैव गुणने ७८४०० सङ्ख्या भवति तस्याश्च चतुर्भिर्गुणने ३,१३,६०० भेदा भवन्ति। अलङ्कारस्य तु नितान्तमनन्तभेदत्वात्परिगणयितुं नैव सम्भव इति।

इस प्रकार चित्रकाव्य का निर्देश कर अब ध्वनि के ही अन्य भेदों के निर्देश के लिए प्रकरण का आरम्भ करते हैं—

ध्वनि जो हे वह गुणीभूत व्यङ्ग्य एवं अलङ्कारों के साथ अपने प्रभेदों से सङ्कर एवं संसृष्टि से फिर अनेक प्रकार से प्रकाशित होता है।।४३।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

उस ध्वनि के अपने भेदों से गुणीभूत व्यङ्ग्य एवं वाच्यालङ्कारों से भी सङ्कर-परस्पर सापेक्ष्य रूप से मिश्रण एवं संसृष्टि-परस्पर निरपेक्ष्य रूप से मिश्रण की व्यवस्था किकए जाने पर लक्ष्य में अनेक प्रकार के भेद दिखाई पड़ते हैं। जैसे कि अपने ही भेदों में सङ्कर, अपने ही भेदों में ससृष्टि, अपने भेदों का वाच्यालङ्कारों के साथ संसृष्टि एवं सङ्कर, अपने भेदों का संसृष्ट अलङ्कार के साथ सङ्कर एवं अपने भेदों की ही संसृष्ट अलङ्कार के साथ संसृष्टि इत्यादि अनेक प्रकार से ध्वनि प्रकाशित होती है।

उसमें भी अङ्गाङ्गिभाव, सन्देह एवं एकपदानुप्रवेश करके सङ्कर के तीन भेद होते हैं और संसृष्टि एक ही। कुल मिलकर दोनों की ४ राशियाँ होती हैं। ध्वनि के शुद्ध जो ३५ भेद हैं गुणीभूतव्यङ्ग्य के भी उतने ही भेद होते हैं और अलङ्कार को एक मानकर कुल ७१ भेद हो जाते हैं। उसको ४ से गुणा करने पर कुल २८४ भेद हो जाते हैं और उसको ३५ मुख्य भेदों से गुणन करने पर ९९४० भेद होते हैं। यह लोचनकार की गणना है। काव्यप्रकाशकार के विचार से १०४५५, एवं साहित्यदर्पणकार के मत में ५३५५ भेद बन जाते हैं।

ध्वन्या०— तत्र स्वप्रभेदसङ्कीर्णत्वं कदाचिदनुग्राह्यनुग्राहकभावेन। यथा 'एवंवादिनि देवर्षौ इत्यादौ। अत्र ह्यर्थशक्त्युद्भवानुरणनरूप— व्यङ्ग्य-ध्वनिप्रभेदेनालक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदोऽनुगृह्यमाणः प्रतीयते।

लीला— इत्थं ध्वनेरपरानपि प्रभेदान्निर्दिश्य सम्प्रति तत्र व्युत्पत्तये कतिपये-षामेवोदाहरणानि प्रतुष्टूषुः प्रथममङ्गाङ्गिभावेन स्वभेदसङ्करस्योदाहरण— प्रस्तुतये प्रकरणमारभते तत्रेत्यादिना तत्र= तेषु, कदाचित्= कुत्रापि, अनुग्राह्यानुग्राहकभावेन= अङ्गाङ्गिभावेन, स्वभेदसङ्कीर्णत्वं= ध्वनेः स्वेषां भेदानामेव परस्परसङ्करत्वं, यथा= इति निदर्शने, 'एवंवादिनि देवर्षौ' इत्यादौ= तस्मिन् पद्ये। तत्राभीष्टमाह अत्रेत्यादिना— अत्र= पद्येऽस्मिन्, हि, अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनि-प्रभेदेन= स्वतःसम्भवी योऽर्थः पार्वत्या मुखनमनलीलाकमलगणनादिरूपस्तस्य शक्तिः सामर्थ्यमुद्भवो योनिर्यस्य तत् तादृशं यदनुरणनरूपमनुस्वानोपमं व्यङ्ग्यं लज्जादिसञ्चारिभावात्मकं प्रतीयमानवस्तु यस्य स तादृशो यो ध्वनिस्तस्य प्रभेदेन प्रकारेण, अनुगृह्यमाणः= उपस्क्रियमाणः, अङ्गित्वेन विवक्षितः, अलक्ष्यक्र-मव्यङ्ग्यध्वनिप्रभेदः= अभिलाषशृङ्गारध्वनिप्रकारः, प्रतीयते= प्रतीतिमायाति। इति।

अस्यायमाशयः— देवर्षौ 'हराय पार्वती दीयतामिति पितुः पार्श्वे स्थिता पार्वती नतवदना सती लीलाकमलपत्राणि गणयितुमारेभे इति स्वतःसम्भवी योऽर्थस्तस्य सामर्थ्येनाक्षिप्तः लज्जाभावोऽथ तदुद्भावितोऽभिलाषशृङ्गारो ध्वनित्व-मायातीति उभयोरङ्गाङ्गिभावसङ्करः।

इस प्रकार ध्वनि के दूसरे भी भेदों का निर्देश कर अब उनमें से किन्हीं के ही उदाहरण प्रस्तुत करते हुए अङ्गाङ्गिभाव के द्वारा जो अपने भेदों में ही सङ्कीर्णत्व होता है उसका उदाहरण उपस्थापित करते हुए उपक्रम करते हैं—

उनमें से कभी अनुग्राह्य— अनुग्राहकभाव अङ्गाङ्गिभाव से अपने ही भेदों में सङ्कीर्णत्व जैसे 'एवंवादिनि देवर्षौ'' इत्यादि पद्य में।

उसमें अभीष्ट प्रयोजन का निर्देश करते हैं—

उसमें अर्थशक्ति से उद्भव अनुरणन रूप व्यङ्ग्य ध्वनि के भेद से अनुग्रह किया गया अलक्ष्यक्रमव्यङ्ग्य ध्वनि का प्रभेद प्रतीत होता है। अर्थात् ''विवाह सम्बन्धी बातें सुनकर पार्वती ने सर नीचा किया और लीला कमल के पत्तों को गिनने

लगी।'' यह जो स्वतः सम्भवी अर्थ है उसके द्वारा आक्षिप्त है लज्जा भाव और उससे उद्भावित है अभिलाष शृङ्गार अतः दोनों का यहाँ अङ्गभाव एवं अङ्गिभाव से सङ्कर है।

ध्वन्या०— एवं कदाचित्प्रभेदद्वयसम्पातसन्देहेन। यथा—

खणपाहुणिआ देअर एषा जाआएँ किंपि दे भणिदा।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई।।

(क्षणप्राघुणिका देवर एषा जायया किमपि ते भणिता।
रोदिति शून्यवलभीगृहेऽनुनीयतां वराकी।। इतिच्छाया)

अत्र ह्यनुनीयतामित्येतत्पदमर्थान्तरसङ्क्रमितवाच्यत्वेन विवक्षितान्यपरवाच्यत्वेन च सम्भाव्यते। न चान्यतरपक्षनिर्णये प्रमाणमस्ति।

लीला— इत्थं ध्वनेरङ्गाङ्गिभावेन स्वप्रभेदसङ्करत्वमुदाहृत्य सम्पति प्रभेदद्वयसन्देहसङ्करोदाहरणायोपक्रमते एवमित्यादिना-एवं= इत्थं, कदाचित्= कुत्रचित्, तु, प्रभेदद्वयसम्पातसन्देहेन= एकत्र भेदद्वयसम्भाव्यसन्दिग्धत्वेन, यथा— 'खणपाहुणिआ' इत्यादि-हे देअर (देवर) खणपाहुणिआ (क्षणप्राघुणिका) दे (ते) जाआएं (जायया) किंपि (किमपि) भणिता) एषा, वराई (वराकी) पडोहरवलहीघरम्मि (शून्यवलभीगृहे) रूअइ (रोदिति) अणुणिज्जउ (अनुनीयताम्) इति पदव्यवस्था।

हे देवर ! हे पत्यनुज !, क्षणप्राघुणिका= क्षणे उत्सवे प्राघुणिका अभ्यागता सादरमाहूता, ते= भवतः, जायया= पत्न्या विदितवृत्तान्तया, किमपि= अनुचितमवाच्यं, भणिता= श्राविता, एषा= त्वद्धृदयगता, वराकी= दयनीया, शून्यवलभीगृहे= निर्जनेगृहोर्ध्वभागे रोदिति= साश्रु तिष्ठति, सा अनुनीयतां= आश्वास्यतां प्रसाद्यतां वेति।

तत्राभीष्टमाह अत्रेत्यादिना— अत्र= अस्मिन् पद्ये, हि, 'अनुनीयतां' इति एतत् पदं, अर्थान्तरसंक्रमितवाच्यत्वेन= अर्थान्तरे सम्भोगेन परितोष्यतामिति एवंविधेऽर्थे सङ्क्रमितवाच्यार्थत्वेन, विवक्षितान्यपरवाच्यत्वेन= विवक्षितमभीष्टमन्यपरं त्वमेतस्यामनुरक्त इतीर्ष्याकोपतात्पर्यादन्यार्थकपरं वाच्यं यत्र तत्वेन, च सम्भाव्यते, अन्यतरपक्षनिर्णये= अयमेव पक्षः समीचीन इति निर्णेतुं च, प्रमाणं, न, अस्ति उभयत्र समानभावभावात्। अत्र अनुनयस्य सम्भोगपरितोपरूषे वाच्यस्य सङ्क्रमणं वा ईर्ष्याकोपतात्पर्यादन्यपरं विवक्षितमिति निर्णेतुं न किमपि ग्माणमस्ति। शून्यवलभीगृहोल्लेखेन सम्भोगरूपार्थान्तरे सङ्क्रमणमपि समर्थ्यते एव तथैव देवर इति सम्बोधनेन मामुपेक्ष्यत्वं तस्यामनुरक्त इति ईर्ष्याकोपवशाद्वैपरीत्येनान्यपरमपि सम्भाव्यत इत्यत्रोभयोः सन्देहसङ्करः इति।

इस प्रकार ध्वनि के अपने ही भेदों में अङ्गाङ्गिभाव से सङ्कीर्णत्व का उदाहरण देकर अब उसी का सन्देह होने का उदाहरण प्रस्तुत करते हैं—

इसी तरह कहीं दो भेदों के सम्पात के सन्देह से भी साङ्कर्य होता है। जैसे—

'हे देवर जी, उत्सव में कुछ ही क्षण के लिए आमन्त्रित होकर अभ्यागत रूप से आई हुई और आपकी स्त्री से कुछ कही हुई बेचारी जन शून्य घर के ऊपरी भाग पर रो रही है, उसे मना लीजिए।''

उसमें अभीष्ट प्रयोजन का निद्रेश करते हैं- इसमें 'मना लो' यह पद जो हे वह अर्थान्तरसङ्क्रमितवाच्य के रूप में एवं विवक्षितान्यपरवाच्य के रूप में भी सम्भव होता है और उसमें से किसी एक पक्ष के निर्णय में कोई प्रमाण नहीं है।

आशय यह है कि यहाँ मनाने का अर्थ शून्य स्थान के सम्पर्क से सम्भोग द्वारा प्रसन्न करना भी होता है। उस पक्ष में इसका वाच्य अविवक्षित होकर सम्भोग अर्थ में सङ्क्रमित हो जाता है और देवर जी, कहकर पुकारने से यह भी प्रतीत होता है कि कहने वाली स्वयं भी उससे आसक्त भी और दूसरी में उसको आसक्त देखकर ईर्ष्या कोप से कहा हुआ मात्र होने पर यह अन्य परक भी हो जाता है। दोनों में किसका पल्ला भारी है, यह निर्णय करना कठिन है। अतः यहाँ ध्वनि के दोनों भेदों का सन्देह मूल सङ्कर है।

ध्वन्या०— एकव्यञ्जकानुप्रवेशन तु व्यङ्ग्यत्वमलक्ष्यक्रमव्यङ्ग्यस्य स्वप्रभेदान्तरापेक्षया बाहुल्येन सम्भवति। यथा 'स्निग्धश्यामल' इत्यादौ।

लीला— इत्थं ध्वनेः स्वप्रभेदयोरेव सन्देहसाङ्कर्यमुदाहृत्य सम्प्रति तेषामेवैकोनुप्रवेशेन यत्साङ्कर्यं तदुदाहर्तुमुपक्रमते एकेत्यादिना- अलक्ष्यक्रमव्यङ्ग्यस्य= रसादिप्रतीयमानार्थस्य एकव्यञ्जकानुप्रवेशेन= एकाश्रयत्वेन, तु, व्यङ्ग्यत्वं= प्रतीयमानत्वं, स्वभेदान्तरापेक्षया= ध्वनेरन्यभेदापेक्षया, बाहुल्येन= प्राशस्त्येन, सम्भवति।

यथा— 'स्निग्धश्यामल' इत्यादौ= तत्पद्ये।

अत्र हि 'रामोऽस्मि सर्वं इत्यत्र रामपदे अर्थान्तरसङ्क्रमितवाच्यध्वनेः विप्रलम्भशृङ्गाररूपध्वनेश्च समानाश्रयेण सङ्करः इति।

अब एकाश्रय से होने वाले सङ्कर का उदाहरण देते हैं—

एक ही व्यञ्जक में अनुप्रवेश (आश्रय) होने से असंलक्ष्यक्रमव्यङ्ग्य का जो व्यङ्ग्यत्व है वह ध्वनि के अपने अन्य भेदों की अपेक्षा बहुतायत से सम्भव होता है। जैसे- 'स्निग्धश्यामल' इत्यादि पद्य में।

इस पद्य में 'राम' पद में अर्थान्तरसङ्क्रमितवाच्य ध्वनि एवं विप्रलम्भ शृङ्गार ध्वनि दोनों का एकाश्रय होने से एकाश्रयी सङ्कर है।

ध्वन्या०— स्वप्रभेदसंसृष्टत्वं च यथा पूर्वोदाहरण एव। अत्र ह्यर्थान्तिरसङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्यस्य च संसर्गः।

लीला— सम्प्रति ध्वनेः स्वप्रभेदसंसृष्टत्वोदाहरणायोपक्रमते स्वेत्यादिना स्वप्रभेदसं सृष्टत्वं= ध्वनेः स्वभेदयोर्वा भेदानां मिथोऽनपेक्ष्यैकत्र संस्थानं, च, यथा, पूर्वोदाहरणे= अनन्तरप्रस्तुते 'स्निग्धश्यामल' इत्यादिपद्ये, एव।

तत्र तथासांसृष्ट्यं निर्दिशति। अत्रेत्यादिना-अत्र= अस्मिन्, पद्ये हि, अर्थान्तरसङ्क्रमितवाच्यस्य= वाक्ये तात्पर्यस्यानन्वयाद्वाच्यार्थस्य यत्रार्थान्तरे सङ्क्रमणं भवति तस्य, अत्यन्ततिरस्कृतवाच्यस्य= नितान्तमेवानपेक्षितवाच्यार्थस्य च संसर्गः= संसृष्टिः। अर्थादत्र रामपदेऽर्थान्तरसङ्क्रमितवाच्यत्वं तथा लिप्त पदे सुहृत्पदे च अत्यन्ततिरस्कृतवाच्यो ध्वनिरिति द्वयोनैपेरक्ष्येणावस्थि– तित्वा-त्स्वप्रभेदसांसृष्ट्योदाहरणमिदम्।

ध्वनि के अपने भेदों की संसृष्टि को उदाहृत करने का उपक्रम करते हैं–

अपने भेदों का संसृष्टत्व जैसे उपर्युक्त उदाहरण में ही। यहाँ अर्थान्तरसङ्क्रमित वाच्य एवं अत्यन्ततिरस्कृतवाच्य का संसर्ग है। अर्थात् 'राम' शब्द का वाच्य सर्वसहिष्णुत्व अर्थ में सङ्क्रमित है और 'लिप्त' अथवा 'सुहृद्' शब्द का वाच्य वाक्य में तात्पर्य का अन्वय न होने से तिरस्कृत हो जाता है और दोनों परस्पर अनपेक्ष भाव से रहे हैं। अतः यह ध्वनि के स्वप्रभेद संसृष्टत्व का उदाहरण है।

ध्वन्या०– गुणीभूतव्यङ्ग्यसङ्कीर्णत्वं यथा– 'न्यक्कारो ह्ययमेव मे यदरयः' इत्यादौ। यथा वा–

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः।
राजा दुश्शासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम्
क्वासते दुर्योधनोऽसौ कथयत न रूषा द्रष्टुमभ्यागतौ स्वः।

अत्र ह्यलक्ष्यक्रमव्यङ्ग्यस्य वाक्यार्थीभूतस्य व्यङ्ग्यविशिष्टाच्या-भिधायिभिः पदैः सम्मिश्रता।

लीला– एवं ध्वनेः स्प्रभेदं प्रति चतुर्भेदानुदाहृत्य सम्प्रति गुणीभूतव्यङ्ग्यं प्रति उदाहरणायोपक्रमते गुणीभूतेत्यादिना– गुणाीभूतव्यङ्ग्यसङ्कीर्णत्वं= ध्वनेः स्वप्रभेदानां गुणीभूतव्यङ्ग्यने यह सङ्कीर्णत्वं साङ्कार्य, यथा= इति निदर्शने, तदुपस्थापयति 'न्यक्कारो ह्ययमेव में यदरयः' इत्यादौ= तत्पद्ये। पद्यमिदं व्याख्या-तचरमेव। तस्यैवोदाहरणान्तरं प्रस्तौति, यथा, वा= अथवा, तदुपस्थापयति कर्तेत्यादि द्यूतच्छलानां कर्ता जतुमयशारणोद्दीपनः अभिमानी कृष्णाकेशोत्तरी-यव्यपनयनपटुः यस्य पाण्डवाः दासाः, राजा, दुःशासनादेः अनुजशतस्य गुरु अङ्गराजस्य मित्रं सः असौ दुर्योधनः क्व आस्ते कथयत रूषा न द्रष्टुं अभ्यागतौ स्वः इति पदव्यवस्था।

द्यूतच्छलानां= दुदोदरच्छद्मनां, कर्ता= कारकः, जतुमयशरणोद्दीपनः= लाक्षानिर्मितगृहदाहकः, अभिमानी= दम्भी, कृष्णाकेशोत्तरीयव्यपनयनपटुः= कृष्णायाः द्रौपद्याः केशानां संयतकचानां उत्तरीयस्य उत्तरीयपटस्य, च व्यपनयने अपासने पटुः क्षिप्रकारी, यस्य पाण्डवाः= पाण्डुपुत्रा वयं दासाः= किङ्कराः,

राजा= भूपतिः, दुःशासनादेः= दुःशासनप्रभृतेः, अनुजशतस्य= भ्रातृशतस्य, गुरुः ज्येष्ठः, अङ्गराजस्य= अङ्गदेशभूपते। कर्णस्य, मित्रं= सुहृत्, सः= तादृशः, असौ= कुख्यातः, दुर्योधनः, क्व= कुत्र, आस्ते= तिष्ठति-वर्तते, कथयत= वद, रूषा= क्रोधेन व्याहन्तुमिति शेषः, न= नैव, अपितु द्रष्टुं= विलोकयितुं, अभ्यागतौ= प्राप्तौ, स्वः, आवामिति शेषः। भीमार्जुनयोरुक्तिरियं दुर्योधनानुचरान् प्रति।

तत्राभीष्टं निर्दिशति अत्रेत्यादिना— अत्र= इह द्वयोरपि पद्ययोः, वाक्यार्थीभूतस्य= चारुत्वविश्रान्त्या वाक्यार्थत्वेनावस्थितस्य रौद्ररसस्य, व्यङ्ग्यविशिष्टवाच्याभिधायिभिः= व्यङ्ग्यार्थोपस्कृतवाच्यार्थद्योतकैः, पदैः, सम्मिश्रता= सङ्कीर्णत्वमिति। अत्र हि 'न्यक्कारो ह्ययमेव' इत्यादिपद्ये रावणगतस्य कर्तेत्यादौ भीमसेनगतस्य क्रोधस्य प्रतीतेः 'मे यदरयः', 'कर्ता' इत्यादिपदानां विभावादिरूपतया रौद्रो रसो ध्वनिः। तथैव रावणपाण्डवादिगतापकर्षादिकं व्यङ्ग्यं तच्च वाच्यार्थोपस्कारकमिति तस्य गुणताऽपि। अतः पदार्थस्य व्यङ्ग्यगुणीभावेन द्योतनाद् ध्वनेश्च वाक्यार्थस्य च प्रतीयमानत्वेन प्राधान्येन द्योतनाच्च ध्वनिगुणीभूतव्यङ्ग्ययोरनुग्राह्यानुग्राहकभावेन सङ्करः। तथैव 'मे अरय' 'पाण्डवाः यस्य दासाः' इत्यत्र च ध्वनिगुणीभूतव्यङ्ग्ययोः सन्देहसङ्करश्च। यतः पाण्डवा यस्य दासाः 'इत्यादौ वाच्यस्यैव क्रोधोद्दीपकत्वाद्गुणीभूतव्यङ्ग्यता कृतकार्यैर्दासैः स्वाम्यवश्यं द्रष्टव्य इत्यनुरणनरूपताऽप्यर्थशक्त्युद्भवेति तत्रोभयथाऽपि चारुत्वादेकपक्षग्रहे प्रमाणाभावाच्च। तथैव तयोरेकानुप्रवेशसङ्करश्च तैरेव पदैर्गुणीभूतस्य व्यङ्ग्यस्य प्रधानीभूतस्य रसस्य च विभावादिद्वारतयाभिव्यञ्जनादेव।

इस प्रकार ध्वनि के अपने प्रभेदों का ही संसृष्टत्व एवं साङ्कर्य के उदाहरणो को प्रस्तुत कर अब ध्वनि एवं गुणीभूत व्यङ्ग्य के बीच होने वाले संसृष्टत्व एवं साङ्कर्य को उदाहृत करने हेतु उपक्रम करते हैं—

(ध्वनि का) गुणीभूत व्यङ्ग्य के साथ सङ्कीर्णत्व जैसे 'न्यक्कारो ह्ययमेव' इत्यादि पद्य में इस पद्य की व्याख्या पहले ही की गई है। अथवा जैसे—

द्यूत में छलों (कपटों) का कर्ता, (करने वाला), लाख के बने घर का जला देने वाला, अभिमानी, द्रौपदी के केश भार एवं आँचल को हटाने मे चतुर, पाण्डव जिसके दास है, राजा, दुःशासन आदि सौ भाइयों का गुरु (ज्येष्ठ), अङ्ग राज कर्ण का मित्र वह प्रसिद्ध दुर्योधन कहाँ है? बताओ, क्रोध से (मारने) नहीं अपितु देखने के लिए आये हैं।

उसमें अभीष्ट प्रयोजन बताते हैं—

इसमें वाक्यार्थीभूत अलक्ष्यक्रमव्यङ्ग्य का व्यङ्ग्य से विशिष्ट वाच्य के अभिधायक पदों से सम्मिश्रण है।

कहने का आशय, यह है कि इन दोनों पद्यों में 'मेरे भी शत्रु है' 'द्यतच्छलों के

के कर्ता' आदि पदों के द्वारा विभावादि रूप में रौद्र रस की अभिव्यक्ति है अतः यह वाक्यार्थ की दृष्टि से ध्वनि काव्य है और 'मेरे भी शत्रु है' और 'पाण्डव जिसके दास है' आदि में वाच्य के ही क्रोध के उद्दीपक होने से और प्रायः सभी पदों में व्यङ्ग्योपस्कृत अर्थ होने से गुणीभूत व्यङ्ग्यत्व भी है। अतः दोनों का सम्मिश्रण बन जाता है। वैसा सम्मिश्रण भी अङ्गाङ्गिभाव, सन्देह एवं एकानुप्रवेश तीनों ही प्रकार से है। व्यङ्ग्य के द्वारा विशिष्ट पदों से ही वाच्यार्थ का द्योतन होने से गुणीभूत व्यङ्ग्य है और उन्हीं पदों से विभावादि के रूप में रौद्र रस की प्रतीति होने से ध्वनि की अनुग्राह्यता भी है। अतः दोनों में अनुग्राह्यानुग्राहकभाव सङ्कर है। उसी तरह 'मेरे भी शत्रु है' पाण्डव जिसके दास है' इत्यादि में वाच्य के द्वारा ही क्रोध की अभिव्यक्ति होने से गुणीभूत व्यङ्ग्यता तो है ही और 'असम्भवता' और 'काम पूरा होने के बाद दासों को स्वामी का दर्शन करना चाहिए' इस तरह का अर्थ शक्ति से उत्पन्न अनुरणन रूप व्यङ्ग्य भी है और दोनों में समान रूप से चारुत्व होने से किसी एक पक्ष के सामर्थन के लिए कोई प्रमाण नहीं मिलता। अतः दोनों में सन्देह सङ्कर भी है। उसी प्रकार उन्हीं गुणीभूत व्यङ्ग्य विशिष्ट पदों से ही विभावादि के रूप में रस की अभिव्यक्ति होने से एकानुप्रवेश सङ्कर भी है।

ध्वन्या०— अत एव च पदार्थाश्रयत्वे गुणीभूतव्यङ्ग्यस्य वाक्यार्थाश्रयत्वे च ध्वनेः सङ्कीर्णतायामपि न विरोधः स्वप्रभेदान्तरवत्। यथा हि ध्वनेः प्रभेदान्तराणि परस्परं सङ्कीर्यन्ते पदार्थवाक्यार्थाश्रयत्वेन च न विरुद्धानि।

कि चैकव्यङ्ग्याश्रयत्वे तु प्रधानगुणभावो विरुद्ध्यते न तु व्यङ्ग्यभेदापेक्षया यतोऽप्यस्य न विरोधः। अयं च सङ्करसंसृष्टिव्यवहारो बहूनामेकत्र वाच्यवाचकभाव इव व्यङ्ग्यव्यञ्जकभावेऽपि निर्विरोध एव मन्तव्यः।

लीला— नन्वेकत्र कथं व्यङ्ग्यस्य गुणभावस्य प्रधानभावस्य च स्थितिरित्याशङ्कानिरासाय प्रकरणमारभते 'अतएव' त्यादिना– अत एव= तादृशोपस्थित्युलम्भात् पदार्थाश्रयत्वे= पदार्थावलम्बनत्वे, गुणीभूतव्यङ्ग्यस्य, वाक्यार्थाश्रयत्वे= वाक्यार्थावलम्बनत्वे, तु, ध्वनेः सङ्कीर्णतायां= साङ्कर्ये, अपि, न, विरोधः, स्वप्रभेदान्तरवत्= स्वीकायान्यभेदानामिव।

यथा स्वकीयानामन्येषां भेदानां साङ्कर्ये संसृष्टत्वे च न विरोधस्तथैव पदार्थमवलम्ब्य गुणीभूतव्यङ्ग्यस्य वाक्यार्थमवलम्ब्य ध्वनेश्चावस्थाने नैव विरोध आशङ्क्यस्तथावस्थितिदर्शनाद्यथानन्तरोदाहृतपद्ययोः। यथा हि= इति निदर्शने, ध्वनिप्रभेदान्तराणि= ध्वनेरन्यान्यभेदाः, परस्परं= अन्योन्यं, सङ्कीर्यन्ते= सङ्कीर्णा भवन्ति, पदार्थवाक्यार्थाश्रयत्वेन= पदगतार्थवाक्यगतार्थावलम्बनत्वात्, न= नैव, च, विरुद्धानि= प्रतिकूलानि। इति।

एकवाचकानु प्रवेशसङ्करे कथं तौ न विरुध्येते इत्याशङ्कापरिहाराय कथयति

किञ्चेत्यादिना-किञ्च, एकव्यङ्ग्याश्रयत्वे= समानव्यङ्ग्यावलम्बनत्वे, तु, प्रधान-गुणभावौ= ध्वनिगुणीभूतव्यङ्ग्यौ, विरुध्येते, व्यङ्ग्यभेदापेक्षया= समानव्यञ्जक-त्वेऽपि व्यङ्ग्यभिन्नत्वदृष्ट्या, तु, न= नैव, ततः= तस्माद्, अपि, अस्य= ध्वनि-गुणीभूतव्यङ्ग्यसाङ्कर्यस्य, न, विरोधः इति। व्यङ्ग्यभेदे तु अन्यद्व्यङ्ग्य गुणीभूतमन्यदेव च प्रधानमिति नैव विरोधः।

सङ्करादेर्व्यङ्ग्यव्यञ्जकविषयतां निर्दिशति अयमित्यादिना-अयं= प्रकरणगतः बहूनां= अनेकेषां, एकत्र= एकवाक्ये, सङ्करसंसृष्टिव्यवहारः= ध्वनेः स्वप्रभेदानां परस्परं गुणीभूतव्यङ्ग्येन सह तेषां च यो निर्दिष्टः स सङ्कीर्णत्वसंसृष्टत्वप्रयोगः, वाच्यावाचकभावे, इव, व्यङ्ग्यव्यञ्जकभावे, अपि, निर्विरोधः मन्तव्यः। यथैव वाच्यवाचकभावे बहूनामेकत्र सङ्करसंसृष्टिभावः सिध्यति तथैव व्यङ्ग्यव्यञ्जक-भावेऽपि सम्भवतीति।

कथनस्यास्यायमाशयः— यथा हि ध्वनेः स्वप्रभेदानामपि पदार्थवाक्यार्थश्रय-त्वेऽपरस्य च पदार्थाश्रयत्वे न विरोधः सङ्करसंसृष्टिव्यवहारेऽपि। तयोरेकव्यङ्ग्या-श्रयत्व एव विरोधो न त्वेकव्यञ्जकाश्रयत्वे यदि व्यङ्ग्यभेदः। वाच्यवाचकत्ववद् व्यङ्ग्यव्यञ्जकत्वेऽपि सङ्करसंसृष्टिव्यवहारः सिद्धो भवति। तेन ध्वनिगुणीभूत-व्यङ्ग्ययोरनुग्राह्यानुग्राहक-सन्देह-एकानुप्रवेशकरूपस्त्रिविध एव सङ्करव्यवहारः सिध्यति। इति।

इस प्रकार ध्वनि का गुणीभूतव्यङ्ग्य के साथ त्रिविध साङ्कर्य का उदाहरण देने के बाद अब व्यङ्ग्य के प्रधान एवं गुणभाव का एकत्र संस्थान कैसे? इस आशङ्का के निवारण के हेतु प्रकरण का आरम्भ करते हैं—

पदार्थ के आशय में गुणीभूत व्यङ्ग्य की एवं वाक्यार्थ के आश्रय में ध्वनि की सङ्कीर्णता में कोई विरोध नहीं होता ध्वनि के अन्य प्रभेदों की तरह। जैसे कि ध्वनि के अन्य प्रभेद परस्पर सङ्कीर्ण होते हैं और पदार्थ एव वाक्यार्थ के आश्रयत्व के विरुद्ध भी नहीं होते।

बात यह है कि एक ही व्यङ्ग्य का आश्रयत्व होने पर प्रधान एवं गुणभाव परस्पर विरोधी होते हैं किन्तु व्यङ्ग्य के भेद की अपेक्षा से उसमें कोइ विरोध नहीं होता।

यह अनेक का एक जगह सङ्कर एवं ससृष्टि का व्यवहार जो है उसको वाच्यवाचक भाव में जैसे व्यङ्ग्यव्यञ्जकभाव में भी निर्विरोध ही मान लेना चाहिए।

ध्वन्या०— यत्र तु पदानि कानिचिदविवक्षितवाच्यान्यनुरणनरू-पव्यङ्ग्यवाच्यानि वा तत्र ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टत्वम्। यथा- 'तेषां गोपवधूविलाससुहृदाम्' इत्यादौ। अत्र हि विलाससुहृदां' 'राधारहः साक्षिणाम्' इत्येते पदे ध्वनि प्रभेदरूपे 'ते' 'जाने' इत्येते च पदे गुणीभूत व्यङ्ग्यरूपे।

लीला— इत्थं ध्वनिगुणीभूतव्यङ्ग्ययोः साङ्कर्यं सप्रपञ्चं निरूप्य सम्प्रति

तयोरेव संसृष्टित्वोदाहरणायोपक्रमते यत्रेत्यादिना-यत्र= यस्मिन् वाक्ये, तु, कानिचित्= कतिपयानि, पदानि, अविवक्षितवाच्यानि= अनभिप्रेतवाच्यार्थानि वा, अनुरणनरूपव्यङ्ग्यवाच्यानि= संलक्ष्यक्रमव्यङ्ग्यार्थानि, तत्र ध्वनिगुणीभूत-व्यङ्ग्ययो:, संसृष्टित्व= मिथोऽनपेक्ष्यैकत्र संस्थिति:। यथा— 'तेषां गोपवधू-विलाससुहृदां' इत्यादौ। इदमपि व्याख्यातचरमेव।

तत्राभीष्टमाह= अत्रेत्यादिना-अत्र= अस्मिन् वाक्ये, हि, 'विलाससुहृदां', 'राधारह: साक्षिणां' इति, एते= इमे, पदे, ध्वनिप्रभेदरूपे= ध्वनिभेदस्वरूपेऽवि-वक्षितवाच्यत्वेन, 'ते' 'जाने' 'इति, एते= इमे, पदे, च, गुणीभूतव्यङ्ग्यरूपेव्य-ङ्ग्यस्योभयत्रैव वाच्यार्थस्यैव प्राधान्यसाधनपरकत्वात्। अत्र सुहृत्वसाक्षित्वयोरचे-तनेष्वसम्भवात् सुहृत्पदमुपकारित्वेन साक्षिपदमासन्नत्वेन रूपेण च लक्षयति। उपकारादिगतातिशयो व्यङ्ग्यश्चेत्यनयो: पदयोर्ध्वनिरित्यर्थ:। तथैव 'ते' इति पदेनाभिव्यक्तोऽसाधारणगुणगणोऽपि वाच्यस्यैव स्मरणस्य प्राधान्येन चारुत्वहेतु-त्वात् गुणाीभूतत्वमेवावलम्बते। एवमेव 'जाने' इत्यनेनाभिव्य- क्तव्यङ्ग्येनापि उत्प्रेक्षणरूपं वाच्यमेव प्रधानीक्रियते इति तयोर्गुणत्वं वाच्यं प्रति।

इस प्रकार ध्वनि के प्रभेदों के साथ गुणीभूतव्यङ्ग्य का साङ्कर्य सप्रपञ्च निरूतिप कर अब ध्वनि एवं गुणीभूतव्यङ्ग्य की संसृष्टि का विवेचन करते हैं—

जहाँ तो, कुछ पद अविवक्षितवाच्य वा अनुरणनरूप व्यङ्ग्य वाच्य है वहाँ ध्वनि एवं गुणीभूतव्यङ्ग्य का संसृष्टत्व होता है। जैसे 'तेषां' गोपवधूविलाससुहृदां' इत्यादि में।

यहाँ 'विलाससुहृदां' एवं 'राधारह: साक्षिणां' ये दो पद जो हैं वे ध्वनि प्रभेद रूप हैं और 'ते', 'जाने' ये दो पद गुणीभूत व्यङ्ग्य रूप है। अर्थात् सुहृत्व एवं साक्षित्व लता आदि अचेतन में सम्भव न होने से दोनों का क्रमश: उपकारित्व एवं आसन्नत्व आशय होता है और उनका अतिशय जो है वही व्यङ्ग्य है। अत: दोनों में ही अविविक्षित वाच्य ध्वनि है। और 'ते' ज्ञाने 'पद के व्यक्त क्रमश: गुणों का अतिशय एवं उत्प्रेक्षा का अतिशय दोनों ही वाच्यार्थ के उपस्कारक होते हैं। अत: दोनों का गुणभाव है।

ध्वन्या०— वाच्यालङ्कारसङ्कीर्णत्वमलक्ष्यक्रमव्यङ्ग्यापेक्षया रसवति सालङ्कारे काव्ये सर्वत्र सुव्यवस्थितम्।

प्रभेदान्तराणामपि कदाचित्सङ्कीर्णत्वं भवत्येव। यथा ममैव—

> या व्यापारवती रसान रसयितुं काचित्कवीनां नवा
> दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती।
> ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं
> श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम्।।

इत्यत्र विरोधालङ्कारणामर्थान्तरसङ्क्रमिवाच्यस्य ध्वनिप्रभेदस्य सङ्कीर्णत्वम्।

लीला— इत्थं ध्वनिप्रभेदानां गुणीभूतव्यङ्ग्येन यह सङ्करसंसृष्टियोश्चत्वार्युदाहरणानि संसूच्य सम्प्रति ध्वनिप्रभेदानां वाच्यालङ्कारैः सह सङ्करसंसृष्टिभावं निरूपयति वाच्येत्यादिना-अलक्ष्यक्रमव्यङ्ग्यापेक्षया= रसध्वनिदृष्ट्या, रसवति= सरसे, सालङ्कारे, काव्ये, सर्वत्र= प्रायः सर्वस्मिन्नेव स्थले, वाच्यालङ्कारसङ्कीर्णत्वं= ध्वनिप्रभेदैः सह वाच्यालङ्कारस्य सङ्करत्वं, सुव्यवस्थितमेव। प्रभेदान्तराणां= ध्वनेरितरभेदानां, अपि कदाचित्= यत्रकुत्र, सङ्कीर्णत्वं= सङ्करत्वं, भवति, एव। तदुदाहरणायोपक्रमते यथेत्यादिना यथा, मम= आनन्दवर्धनस्य, एव। उदाहरणं प्रस्तौति 'या' इत्यादिना-हे अब्धिशयन ! कवीनां काचित् नवारसान् रसयितुं व्यापारवती या दृष्टिः या च परिनिष्ठतार्थविषयोन्मेषा वैपश्चिती च ते द्वे अपि अवलम्ब्य विश्वं अनिशं वर्णयन्तः वयं श्रान्ताः नैव च त्वद्भक्तितुल्यं सुखं लब्धमिति पदव्यवस्था।

हे अब्धिशयन!= अब्धिः समुद्रः शयनं शय्या यस्य तत्सम्बुद्धौ हे जलशायिन् ! कवीनां= काव्यकाराणां, काचित्= अनिर्वचनीया, नवा= प्रत्यग्रा, रसात्= काव्यरसान्, रसयितुं= रस्यमानतापत्तियोग्यान् कर्तुं, व्यापारवती= क्रियायुता— रसो हि निष्पादनप्राणस्तत्र विभावादियोजनात्मिका वर्णना ततः प्रभृति घटनापर्यन्ता क्रियाव्यापारस्तेन सततयुतेनि लोचने स्पष्टम्, अत्र नित्ययोगे वतुप्प्रत्ययो युक्तत्वञ्च जन्यजनकभावसम्बन्धेन, तादृशी, या, दृष्टिः= प्रतिभा, या, च, परिनिष्ठितार्थविषयोन्मेषा= परिनिष्ठितः प्रतिष्ठापितो योऽर्थो वस्तु तस्य विषये उन्मेषो विभासो यस्याः सा तादृशी, या वैपश्चिती= विपश्चितां विदुषामियं वैपश्चिती, दृष्टिः च, ते= तथोक्ते उभे दृष्टी प्रतिभापाण्डित्ये, अपि, अवलम्ब्य= आधृत्य, विश्वं= स्थूलजगत्, अनिशं= अजस्रं, निर्वर्णन्तः= कवयन्तः, वयं, श्रान्ताः= खिन्ना एव, न तु किञ्चिदपि सारं लब्धं, नैव, च, त्वद्भक्तितुल्यं= त्वयि भवति या भक्तिरनन्यश्रद्धा तया तुल्यं समं, सुखं= प्रीतिः तु नैव, लब्धं= प्राप्तमिति लक्ष्ये लक्षणं घटयति इत्यत्रेत्यादिना—इति= इत्थं, अत्र= अस्मिन्, पद्ये, विरोधालङ्कारेण—विरोधः विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः 'इतिलक्षणोऽलङ्कारस्तेन, सह, अर्थान्तरसङ्क्रमितवाच्यस्य= वाच्यार्थस्य वाक्ये तात्पर्यानुपपत्त्याऽर्थान्तरे सङ्क्रमितत्वे यो भवति तस्य, ध्वनिप्रभेदस्य, सङ्कीर्णत्वं= साङ्कर्यम्। तच्च त्रिविधात्मैवेति। इदमुक्तं भवत्यत्र— अत्र दृष्टिरिति चक्षुर्व्यापारविषयकं ज्ञानं सा च प्रतीतिमात्रविषयरसादिव्यापारवतीति विरोध एव तदनुगृहीतश्च ध्वनिरित्यत्र दृष्टिशब्दस्य वाच्यार्थो नाविवक्षितोऽत्यन्तासम्भा— वाभावान्न चान्यपरोऽपितु ऐन्द्रिकविज्ञानाभ्यासोल्लसिते प्रतिभाविशेषेऽर्थे सङ्क्रमितम्। तथाभवनेऽपि विरोधो ध्वनेरनुग्राहक एव। तेनाऽत्र अनुग्राह्यानुग्राहकभावसङ्करः। तथैव दृष्टिशब्दापेक्षया विरोधालङ्कारेण सहार्थान्तरसङ्क्रमितवाच्य ध्वनेरेकप-

दानुप्रवेशश्च। एवमेव तेऽवलम्ब्य निर्वर्णयन्तः इत्यत्र 'ते' इति तत्पदने दृष्टिपद-वाच्यार्थस्य दर्शनस्य परामर्शे दर्शनमवलम्ब्य पश्यन्त इति विरुद्धार्थस्य प्रतीत्या विरोधालङ्कारो वा दृष्टिपदेन लक्ष्यस्य प्रतिभारूपार्थस्य परामर्शे 'निश्वासान्ध इवादर्शः' इत्यत्रान्धपदेनेव, अत्यन्ततिरस्कृतवाच्यो ध्वनिर्वेति सन्देहः। प्रकारद्वय एव ह्यत्वादेकतरनिश्चे नास्ति प्रमाणमिति।

प्रकरणस्यायमाशयः— यथा ध्वनेः स्वप्रभेदानां परस्परं वा तेषां गुणीभूतव्य-ङ्ग्येन सह त्रिविधसङ्करसंसृष्टिभावभावस्तथैव वाच्यालङ्कारेण सहापि। व्यङ्ग्यत्वे त्वलङ्काराणां पूर्वोक्तभेदाष्टक एवान्तर्भावो वाच्यत्वे एवेदं प्रकरणम्। तत्रापि सङ्करत्रंय संसृष्टिश्च लभ्यते। यथा 'चलापाङ्गां दृष्टिं' इत्यत्र रूपक व्यतिरेकस्य शृङ्गारानुग्रहाकत्वं तत्रैव स्वभावोक्ते शृङ्गारस्य च 'दृष्टि' इति पदे एकानुप्रवेशश्च। एवञ्च 'उप्पहजाआ' इत्यत्र पामरस्वभावोक्तिर्वा ध्वनिर्वेति प्रकरणाद्यभावे एकतर-ग्राहकं प्रमाणं नास्तीति सन्हेहसङ्करश्च। एतच्च 'विवक्षातत्परत्वेन' इत्यनुसृत्य। 'नातिनिर्वहणैषिता' इत्यनुसृत्य तु संसृष्टिरेवालङ्कारेण सह रसध्वनेः सङ्कराभावात्। यथा 'बाहुलतिकापाशेन बद्ध्वा दृढ' इत्यत्र रूपकालङ्कारशृङ्गाररसध्वनेः संसृष्टिरेव। एतच्च रसध्वन्यपेक्षयोक्तम्। न केवलं तावदेवापितु ध्वनेः प्रकारान्तरा-णामपि यत्र कुत्र तु सङ्कीर्णत्वं भवत्येव। यथा 'या व्यापारवती' इत्यादौ अनन्त-रव्याख्यातपद्ये। तत्र विरोधालङ्कारेण सहार्थान्तरसङ्क्रमितवाच्यध्वनेरङ्गाङ्गिभावेन साङ्कर्यम्। 'दृष्टिः' इति पदे तयोरेवैकानुप्रवेशश्च, तत्रैव विरोधालङ्कारो वा अत्यन्ततिरस्कृतवाच्यो ध्वनिर्वेति सन्देहश्चेति व्याख्यातचरमेव।

इस प्रकार ध्वनि के प्रभेदों का गुणीभाव्यङ्ग्य के साथ साङ्कर्य एवं संसृष्टत्व के चार उदाहरण प्रस्तुत कर अब ध्वनि के प्रभेदों के साथ वाच्यालङ्कारों का सङ्करत्व एवं संसृष्टत्व के निरूपण के लिए प्रकरण का आरम्भ करते हैं—

रसवान् एवं अलङ्कार से अलंकृत काव्य में सभी जगह अलक्ष्यक्रमव्यङ्ग्य की अपेक्षा से वाच्यालङ्कारों का सङ्कीर्णत्व व्यवस्थित होता है। इतना ही नहीं, ध्वनि के अन्य प्रभेदों का भी कहीं कहीं वाच्यालङ्कारों से सङ्कीर्णत्व पाया जाता है।

जैसे मेरा (वृत्तिकार का) ही—

हे समुद्र में सोने वाले भगवन् ! कवियों की जो रस को आस्वाद्य बनाने वाले व्यापार से युक्त, नवीन एवं विलक्षण दृष्टि है, और विद्वानों का जो प्रतिष्ठित अर्थ के विषय का प्रकाशन करने वाली दृष्टि है, उन दोनों का अवलम्बन कर विश्व का निरन्तर वर्णन करने में लगे हम थक गए हैं किन्तु आपकी भक्ति से जो सुख मिलता है उसके समान सुख नहीं मिल पाया।''

लक्ष्य में लक्षण जो निर्देश करते हैं—

ऐसे यहाँ विरोध अलङ्कारों का अर्थान्तरसङ्क्रमित वाच्य ध्वनि प्रभेद का सङ्कीर्णत्व है।

कहने का आशय यह है कि गुणीभूत व्यङ्ग्य के साथ जैसे ही वाच्यालङ्कारों

के साथ भी अलक्ष्यक्रमव्यङ्ग्य ध्वनि के भेदों का साङ्कर्य एवं संसृष्टत्व हो जाता है। जैसे कि 'चलापाङ्गां दृष्टिं क्षिपसि बहुशो वेपथुमतीं' में रूपक व्यतिरेक का शृङ्गारानुग्राहकत्व है और वहीं 'दृष्टि पद में स्वाभावोक्ति एवं शृङ्गार का एकानुप्रवेश भी है। 'उप्पहजाआ में प्रकरण आदि के अभाव में पामर की स्वभावोक्ति है वा ध्वनि, इसका निश्चय नहीं हो पाता है। अतः सन्देह सङ्कर भी है। यह सब 'विवक्षा तत्परत्वेन' वाली दृष्टि से हो पाता है, किन्तु 'नातिनिर्वहणैषिता' के अनुसार तो सङ्करत्व के सम्भव हो न पाने से केवल संसृष्टि ही हो पाती है। जैसे 'बाहुलतिका पाशेन बद्ध्वा दृढं' में रूपक एवं शृङ्गार ध्वनि की संसृष्टि ही है। ऐसा इसलिए होता है कि वहाँ अलङ्कार का पूरा परिपाक नहीं हो पाता ताकि उसका अलग अस्तित्व बन सके। अब तक ध्वनि के अलक्ष्यक्रमव्यङ्ग्य का वाच्यालङ्कारों के साथ साङ्कर्य का विवेचन किया गया। इतना ही नहीं, ध्वनि के अन्य भेदों की भी वाच्यालङ्कारों के साथ सङ्कर वा संसृष्टि होती है। जैसे अभी व्याख्यात 'या व्यापारवती' पद्य में। यहाँ एक तो विरोध अलङ्कार के साथ अर्थान्तरसङ्क्रमित वाच्य ध्वनि का अनुग्राह्यानुग्राहकभाव सङ्कर है, दूसरा 'दृष्टि' पद में विरोधालङ्कार एवं अर्थान्तरसङ्क्रमित वाच्य का एकानुप्रवेश है और दृष्टि का अवलम्बन कर वर्णन' में विरोधालङ्कार एवं अत्यन्ततिरस्कृतवाच्यध्वनि का सन्देहसङ्कर भी। कहने का तात्पर्य यह है कि प्रतीयमान रस का चाक्षुषविषय दृष्टि का अवलम्बन कर वर्णन करने की बात में विरोध अलङ्कार है क्योंकि अविरोध में विरोध की प्रतीति ही विरोध अलङ्कार का विषय है और दृष्टि का चाक्षुषज्ञान रूप वाच्यार्थ के वाक्य में अनुपपन्न होने पर प्रतिभा अर्थ में सङ्क्रमित हो जाने से अर्थान्तर सङ्क्रमितवाच्यध्वनि भी है। ध्वनि के अलङ्कार के द्वारा अनुग्राह्य हो जाने से अनुग्राह्यानुग्राहकभाव सङ्कर हो जाता है। इसी तरह विरोध अलङ्कार एवं अर्थान्तरसङ्क्रमितवाच्य का आधार एक ही 'दृष्टि' पद है। अतः दोनों का एकानुप्रवेश भी है। इसी तरह 'दृष्टि का अवलम्बन कर वर्णन करना' यहाँ विरोध अलङ्कार भी है और 'दृष्टि' पद का वाच्यार्थ प्रतिभा रूप अर्थ के परामर्श में अत्यन्ततिरस्कृत भी है और दोनों में चमत्कार की समानता होने से एक पक्ष में निर्णय लेना भी सम्भव नहीं है। अतः सन्देह संकर भी है।

**ध्वन्या०—** वाच्यालङ्कारसंसृष्टत्वं च पदापेक्षयैव। यत्र हि कानिचित् पदानि वाच्यालङ्कारभाञ्जि कानिचिच्च ध्वनिप्रभेदयुक्तानि।

यथा—

दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां,
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः।।

अत्र हि मैत्रीपदमविवक्षितवाच्यो ध्वनिः। पदान्तरेष्वलङ्कारान्तराणि।

**लीला—** इत्थं ध्वनिप्रभेदानां वाच्यालङ्कारेण सह सङ्करसंसृष्टिभावं निदर्श्य

सम्प्रति तयोरेव संसृष्टत्वोदाहरणायोपक्रमते वाच्येत्यादिना— वाच्यालङ्कार-संसृष्टत्वं= ध्वनेः स्वप्रभेदानां वाच्यालङ्कारेण सह संसृष्टिः, तु पदापेक्षया= पददृष्ट्या, एव न तु वाक्यदृष्ट्या वाक्यदृष्ट्याऽलङ्कारे तु सङ्करस्यैव सम्भवात्। तच्च तत्रैव भवति यत्र, हि, कानिचित्= कतिपयानि, पदानि, वाच्यालङ्कारभाञ्जि= वाच्यालङ्कारविषयाणि, कानिचित्, च ध्वनिप्रभेदयुक्तानि= ध्वनिप्रभेदद्योतकानि भवन्ति इति। तदुदाहरति— यथेत्यादिना उदाहरणं प्रस्तौति दीर्घीकुर्वन्नित्यादि— यत्र प्रत्यूषेषु सारसानां पटुमदकलं कूजितं दीर्घीकुर्वन् स्फुटितकमलामोदमैत्रीकषायः सिप्रावातः प्रार्थनाचाटुकारः प्रियतम इव अङ्गानुकूलः सन् स्त्रीणां सुरतग्लानिं हरति इति पदव्यवस्था।

यत्र= उज्जयिन्यां, प्रत्यूषेषु= अहर्मुखेषु= बहुवचनं प्रत्येककल्यबोधनाय प्रत्येककल्यम् इति, सारसानां= हंसानां, पटुमदकलं= रमणीयाव्यक्तमधुरं, कूजितं= वाशितं, दीर्घीकुर्वन्= विस्तारयन्, स्फुटितकमलामोदमैत्रीकषायः= सद्योविकसितकमलसौरभसम्बन्धसुरभिः सिप्रावातः= सिप्राख्यसरिज्जलमास्पृश्यागत अत एव शीतलो वातो वायुः, प्रार्थनाचाटुकारः= लालनदक्षः, प्रियतमः प्रियतमः= बल्लभः, इव, अङ्गानुकूलः= सुखस्पर्शः सन्, स्त्रीणां= भ्रमदानां, सुरतग्लानि= चिररतिजन्यश्रमं, हरति= अपाकरोतीति। तथैव यत्र स्त्रीणां सारसानां इव पटुमदकलं कूजितं दीर्घीकुर्वन् प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषाय अङ्गानुकूलः प्रार्थनाचाटुकार सिप्रावात इव प्रियतमः सुरतग्लानि हरति इत्यपि अन्वेतुं शक्यम्।

उदाहरणे लक्षणं योजयति अत्रेत्यादिना– अत्र= पद्येऽस्मिन मैत्रीपदं= 'स्फुटितकमलामोदमैत्रीकषायः इत्यत्रत्य मैत्री' इति पदं, अविवक्षितवाच्यः= मैत्र्यास्तु चेतन एव सम्भवाद्वायौ तदभावान्मैत्रीपदस्य मुख्यार्थबाधेन सम्बन्धे लाक्षणिकतया वाच्यार्थस्यात्यन्ततिरस्कृतत्वेन तदाख्यप्रभेदः, ध्वनिः:। पदान्तरेषु= अन्यान्यपदेषु, तु अलङ्कारान्तराणि= अन्यान्यालङ्काराणि यथा दीर्घीकुर्वन् इत्यत्र गम्योत्प्रेक्षा, वातस्य प्रभातस्य च स्वाभाविकवर्णनेन स्वभावोक्तिः 'प्रियतम इव' इत्यत्रोपमा, कमलेन मुखस्य बोधनाद्रूपकातिशयोक्तिः तेषां स्थितिश्च ध्वनिनैरपेक्ष्येणेति तेषां ध्वनेश्च संसृष्टिः।

अस्यायमाशयः- ध्वनेः प्रभेदानां वाच्यालङ्कारेण सह संसृष्टत्व तत्रैव भवति यत्र कानिचित्पदानि अलङ्कारविषयाणि कानिचित्तु ध्वनिप्रकाशकानि भवन्ति। वाक्यस्यैवालङ्कारविषयत्वे तु सङ्करस्यैवावकाशो न तु संसृष्टेः यथोदाहृते 'दीर्घीकुर्वन्' इति पद्ये। तत्र हि अचेतने वायौ चेतनधर्मभूताया भव्या असम्भवान्मुख्यार्थबाधेन सम्बन्धेऽर्थे लाक्षणिकत्वाद् वाच्यस्यात्यन्ततिरस्कृतत्वेन मैत्रीपदं ध्वनेर्विषयः। तन्नैरपेक्ष्येण दीर्घीकुर्वन्नियत्र गम्योत्प्रेक्षायाः वातस्य स्वाभाविकवर्णनेन स्वभावोक्तेः, प्रियतम इव' इत्यत्रोपमायाः, कमलेन मुख्यस्य बोधनाद्रूपकातिशयोक्तेश्च भावाद् ध्वनिप्रभेदस्य वाच्यालङ्कारैः सह संसृष्टिरिति।

इस प्रकार ध्वनि के प्रभेदों का वाच्यालङ्कार के साथ साङ्कर्य का सोदाहरण निरूपण कर अब उनके संसृष्टत्व का भी निरूपण करने के लिए प्रकरण का आरम्भ करते हैं—

ध्वनि के प्रभेदों के साथ वाच्यालंकार का संसृष्टत्व भी पद की अपेक्षा से ही होता है। यह वहाँ होता है जहाँ कुछ पद वाच्यालंकार के विषय होते हैं तो कुछ पद ध्वनि के भेदों के लिए प्रयुक्त होते हैं।

जैसे—

''जहाँ प्रात:काल में सारसों के रमणीय तथा मद के कारण मधुर कूजन को अपने वेग से लम्बा करता हुआ, खिलु हुए कमलों के सुगन्ध से मैत्री (सम्बन्ध) होने के कारण सुगन्धित, सिप्रा नदी का वायु, फुसलाने में निपुण प्रियतम की तरह अङ्गों के लिए अनुकूल अर्थात् सुखस्पर्शी बन कर स्त्रियों की दर्घकालीन रति से उत्पन्न थकान को दूर करता है।''

उदाहरण में लक्षण का योजन करते हैं—

यहाँ 'मैत्री' पद अविवक्षितवाच्यध्वनि हैं दूसरे पदों में अन्यान्य अलंकार है अर्थात् उत्प्रेक्षा, स्वभावोक्ति, रूपक एवं उपमा अलंकार है।

कहने का आशय यह है कि ध्वनि के प्रभेदों का वाच्यालंकार के साथ संसृष्टि भी होती है। यह वहाँ होती है जहाँ कुछ पद तो अलंकार के विषय होते हैं लेकिन कुछ पद तो ध्वनि के प्रभेद के व्यञ्जक होते हैं। इस प्रस्तुत उदाहरण से 'मैत्री पद तो अविवक्षितवाच्य ध्वनि है क्योंकि 'मैत्री' केवल चेतन का ही धर्म है। अत: उसके मुख्यार्थ का बाधा होने के कारण वाच्यार्थ अत्यन्ततिरस्कृत होकर 'सम्बन्ध' अर्थ में बदल जाता है। अत: यह तो ध्वनि है। साथ ही उसमें निरपेक्ष भाव से 'कूजित को लम्बा करता हुआ' में गम्योत्प्रेक्षा है' प्रभात के वर्णन में स्वभावोक्ति है, कमल में मुख के आरोप से रूपकातिशयोक्ति है, प्रियतम की तरह' में उपमा है। इस तरह एक पद से ध्वनि की व्यक्ति एवं अन्यपदों से अलंकारों की व्यक्ति होने से दोनों की संसृष्टि है।

ध्वन्या०— संसृष्टालङ्कारान्तरसङ्कीर्णो ध्वनिर्यथा—

दन्तक्षतानि करजैश्च विपाटितानि,
प्रोद्भिन्नसान्द्रपुलके भवत: शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा,
जातस्पृहैर्मुनिभिरप्यवलोकितानि।।

अत्र हि समासोक्तिसंसृष्टेन विरोधालङ्कारेण सङ्कीर्णस्यालक्ष्यक्रम-व्यङ्गचस्य ध्वने: प्रकाशनम्। दयावीरस्य परमार्थतो वाक्यार्थीभूतत्वात्।

लीला— इत्थं ध्वने: प्रभेदानां वाच्यालङ्कारेण सङ्करसंसृष्टिभाव सोदाहरणं निरूप्य सम्प्रति कारिकागतस्य पुनरपिशब्दस्याशयेन ध्वने: संसृष्टालङ्कारान्तर-सङ्कीर्णत्वं व्याकर्तुमुपक्रमते संसृष्टेत्यादिना—अत्रेदमवधेयं यत्कारिकायां 'पुनरप्यु-

द्योतते बहुधा' इत्यत्र 'पुनरपि' इत्येतस्यायमेवाशयो यद् ध्वनेः पूर्वोक्तसाङ्कर्य-संसृष्ट्यतिरिक्तमन्यान्यपि साङ्कर्यसंसृष्टत्वानि सम्भवन्ति। तानि च ध्वनेः स्वप्र-भेदानां परस्परं, गुणीभूतव्यङ्ग्येन वाच्यालङ्कारेण सहवा प्रथमसङ्करसंसृष्ट्यनन्तरं पुनरपि तैः सह ध्वनेः संसृष्टिसङ्करौ सम्भवतः इति प्रतिपादितानि,, तत्र च ध्वनेः स्वप्रभेदसङ्कीर्णेन सह स्वप्रभेदानामेव संसृष्टिः सङ्करो वा, गुणीभूतव्यङ्ग्येन सह संसृष्टौ सङ्कीर्णेर्वा स्वप्रभेदानामेव संसृष्टिः सङ्करो वा, अन्योन्यसंसृष्ट-गुणीभूतव्यङ्ग्यस्य संसृष्टता वा सङ्कीर्णता, अलङ्कारसंसृष्टध्वनेः स्वप्रभेदैः सह संसृष्टिः सङ्कीर्णता वा, परस्परसङ्कीर्णस्या वा परस्परसंसृष्टस्य अलङ्कारध्वनेः प्रभेदेन सह संकीर्णता वा संसृष्टता च सम्भवन्ति यत्र प्रथमे चत्वारो भेदा दुर्लक्षास्तेषां स्पष्टोदाहरणञ्च न लभ्यत इत्याशयेन अलंकारस्य अलङ्कारेण संसृष्टस्य संकीर्णस्य वा ध्वनौ सङ्करसंसृष्टयोरेवात्र विषयो गृहीतोऽस्ति। तस्याऽपि चत्वारः प्रभेदा भवन्ति सङ्कीर्णालङ्काराणां ध्वनिभेदेन सह साङ्कर्य, सङ्कीर्णालंकाराणां ध्वनिभेदेन सह संसृष्टिः, संसृष्टालंकाराणां ध्वनिभेदेन सह संसृष्टिश्चेति। तत्रापि आद्येद्वेऽत्र नोदाह्रियेते। तेन संसृष्टालङ्कारान्तरसंकीर्णः, ध्वनिः, यथा उदाहरणं प्रस्तौति दन्तेत्यादि-भवतः प्रोद्भिन्नसान्द्रमुलके शरीरे रक्तमनसा मृगराजवध्वा दत्तानि दत्तक्षतानि करजैः विपाटितानि च जातस्पृहैः मुनिभिः अपि अवलोकितानि इति पदव्यवस्था।

भवतः= तव बोधिसत्त्वय स्वकिशोरभक्षणप्रवृत्तां सिंहीं प्रति स्वशरीरं वितीर्णवतः, प्रोद्भिन्नसान्द्रपुलके= प्रोद्भूतघनरोमाञ्चे परार्थसम्पत्तिजानन्दभरेण, शरीरे= गात्रे, रक्तमनसा रक्ते रुधिरे मनोऽभिलाषो यस्याः तया वा रक्तमनुरक्तं मनोहृदयं यस्यास्तया, मृगराजवध्वा= सिंह्या, दत्तानि= कृतानि, दन्तक्षतानि= दशनव्रणाः, करजैः= नखैः, विपाटितानि= विदारितानि, च,, जातस्पृहैः= वयमपि तथैव परार्थे त्यक्तजीविताः स्यामेति समुत्पन्नाभिलाषैः, मुनिभिः= संयमिभिः, अपि, अवलोकितानि= दृष्टानि इति।

उदाहरणे लक्षणं योजयति अत्रेत्यादिना— अत्र, हि समासोक्तिसंसृष्टेन= भेदकैः श्लिष्टैर्या परोक्तिः सा समासोक्तिरिति लक्षणया प्रकृते नायिकावृत्ता-न्तप्रतीत्या जनितया समासोक्त्या संसृष्टेन, विरोधालंकारेण= अविरोधोऽपि विरोधप्रतितीलक्षणेन प्रकृते तु मुनीनामुब्दोधितभावावेशत्ववर्णनेन सम्पन्नेन विरोधालंकारेण, संकीर्णस्य= संकरत्वमाप्तस्य, अलक्ष्यक्रमव्यङ्ग्यस्य= वीररसा-दिरूपस्य, ध्वनेः, प्रकाशनं= द्योतनम्। दयावीरस्य= दयया परार्थे निजशरीरमु-त्सृजतो धर्मवीरस्य, परमार्थतः= तत्वतः, वाक्यार्थीभूतत्वात्= प्राधान्येनावस्थि-तित्वादिति। रसश्चात्र समासोक्तिविरोधसंसृष्टालंकारेणानुगृह्यते।

प्रकरणस्यायमाशयः— ध्वनेर्हि स्वप्रभेदानां स्वप्रभेदैः गुणीभूतव्यङ्ग्येन

वाच्यालङ्कारेण वा सह यः संसृष्टिसंकररूपस्तेन सह पुनरपि ध्वनिप्रभेदानां संसृष्टिः संकरश्च भवति। तत्र परस्परसंकीर्णध्वनिप्रभेदैः सह ध्वनिप्रभेदानां संसृष्टेः वा संकरस्य, गुणीभूतव्यङ्ग्यसंसृष्टसंकीर्णप्रभेदैः सह ध्वनिप्रभेदानां संसृष्टेर्वा संकरस्य, परस्परसंसृष्टगुणीभूतव्यङ्ग्यस्य संसृष्टेर्वा संकरस्य, अलंकार-संसृष्टध्वनेः स्वभेदैः सह संसृष्टेर्वा संकरस्य च दुर्लक्षत्वाद्विस्पष्टोदाहरणाभावेन ते नोदाहृताः। परस्परसंसृष्टसंकरालंकारध्वनिभेदेन संसृष्टत्वसंकीर्णत्वस्यापि संकीर्णालङ्कारध्वनिभेदेन यत्साङ्कर्यं सङ्कीर्णालंकारध्वनिभेदेन या च संसृष्टिस्त-योश्च नात्र विवेचना केवलं संसृष्टालंकारध्वनिभेदेन यत्सांकर्य संसृष्टालंकार-ध्वनिभेदेन या च संसृष्टिस्तयोरेवात्रोदाहरणे प्रस्तुते स्तः। तत्र संसृष्टालङ्कारध्व-निभेदेनसाङ्कर्यं यथा दन्ततानीतयादौ। अत्र हि सिंहीवृत्तान्तेन नायिकावृत्तान्तप्रतीतेः समासोक्तिः। यथा च बोधिसत्त्वस्य रक्तमनसां सिंह्या सज्जातरोमाञ्चे शरीरे यानि दन्तनखक्षतानि कृतानि तानि च नितान्तमनुरक्ताया नायिकायाः स्वं प्रियं प्रति चिकीर्षितवयव्हारद्योतकानि। तेन नायिकायाः प्रतीतिः। अपि च मुनिष्वपि जातस्पृहत्वं विरोधविषयस्तयोश्च प्रथमं संसृष्टिर्मि थोऽनपेक्ष्य द्वयोरेवावस्थानात्। तत्संसृष्ट्या च सङ्कीर्णस्य वीररसस्य प्रकाशनं दयार्द्रधर्मवीररूपेणेति संसृष्टालं-कारान्तरसंकीर्णध्वनेरुदाहरणबमिति।

इस प्रकार ध्वनि के प्रभेदों का वाच्यालंकारों के साथ संकरत्व एवं संसृष्टत्व का उदाहरण सहित प्रतिपादन कर अब संसृष्टालंकारान्तरसंकीर्ण ध्वनि के विवेचन के लिए प्रकरण का आरम्भ करते हैं—

(यहाँ) यह जानना आवश्यक है कि पूर्वोक्त रीति से संकीर्णत्व वा संसृष्टत्व को प्राप्त हुए प्रभेदों से फिर ध्वनि के प्रभेदों का संकीर्णत्व वा संसृष्टत्व हो सकता है। वैसे होने में कई स्थितियाँ उत्पन्न होती हैं। जैसे— ध्वनि के अपने ही संकीर्ण भेदों की अपने ही स्वतन्त्र भेदों से संसृष्टि वा संकर, गुणीभूतव्यङ्ग्य से संसृष्ट वा सीकीर्ण अपने भेदों की पुनः अपने ही भेदों से संसृष्टि या संकर, परस्पर संसृष्ट, गुणीभूतव्यङ्ग्य की संसृष्टता वा संकीर्णता, अलंकारों से संसृष्टध्वनि की अपने भेदों से संसृष्टता व संकीर्णता तथा परस्पर संसृष्ट वा संकीर्ण अलंकारों की ध्वनि के किसी भेद से संकीर्णता वा संसृष्टता। उनमें से अन्तिम की भी चार अवस्थाएं होती हैं—संकीर्ण अलंकारों का ध्वनि भेद से सांकर्य, संकीर्ण अलंकारों की ध्वनि भेद से संसृष्टि, संसृष्ट अलंकारों का ध्वनि भेद मे सांकर्य एवं संसृष्ट अलंकारों की ध्वनि से संसृष्टि। उनमें से भी)

संसृष्ट अलंकारान्तर से संकीर्ण ध्वनि जैसे—

"आपके उठे हुए घने रोमाञ्च वाले शरीर में रक्त में है मन वा अनुरक्त है मन जिसकी ऐसी सिंहनी के द्वारा किए गए दन्तक्षत एवं नाखूनों से विदारण जो है वे उत्पन्न हुई है इच्छा जिनमें ऐसे मुनियों से देखे गए।"

उदाहरण में लक्षण को घटाते हैं—

यहाँ समासोक्ति से संसृष्ट विरोधालंकार के द्वारा संकीर्ण अलक्ष्यव्यङ्ग्य ध्वनि का प्रकाशन होता है कयोंकि यहाँ आखीर दया से आर्द्र धर्मवीर ही वाक्यार्थ हो जाता है।

कहने का आशय यह है कि यहाँ सिंहनी के व्यवहार से नायिका की प्रतीति होने से समासोक्ति है और मुनिजनों में भी इच्छा के होने से विरोध अलंकार है और वह समासोक्ति से संसृष्ट है क्योंकि दोनों परस्पर निरपेक्ष भाव से स्थित है। और उस तरह समासोक्ति से संसृष्ट विरोध अलंकार से दया से आर्द्र धर्म वीर के रूप में वीर रस का प्रकाशन होता है। अतः यह संसृष्टालंकारान्तर संकीर्ण ध्वनि का उदाहरण है।

ध्वन्या०— संसृष्टालङ्कारसंसृष्टत्वं च ध्वनेर्यथा—

अहिणअपओअरसिएसु पहिअसामाइएषु दिअहेसु।
सोहइ पसारिअगिआणं णच्चिअं मोरवन्दाणम्।।
अभिनवपयोदरसितेषु पथिकश्यामायितेषु दिवसेषु।
शोभते प्रसारितग्रीवाणां नृत्तं मयूरवृन्दानाम्। (इतिच्छाया)।

अत्र ह्युपमारूपकाभ्यां शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य ध्वनेः संसृष्टत्वम्।। ४३।।

लीला— इत्थं संसृष्टालंकारान्तरसंकीर्णध्वनिमुदाहृत्य ध्वनेः संसृष्टालकार-संसृष्टत्वोदाहरणायोपक्रमते संसृष्टेत्यादिना-ध्वनेः, संसृष्टालंकारसंसृष्टत्वं संसृ-ष्टालंकारेण सह संसृष्टत्वं, यथा= ति निदर्शने।

उदाहरणं प्रस्तौति अहिणअ' इत्यादि— अहिणअपओअरसिएसु (अभिनव-पयोदरसिकेषु) पहिअसामाइएषु (पथिकश्यामायितेषु) दिअहेसु (दिवसेषु), पसारि-अगिआण) प्रसारितग्रीवाणां) मोरवन्दाणम् (मयूरवृन्दाना) णच्चिअं (नृत्य) सोहइ (शोभते) इति पदव्यवस्था।

अभिनवं नूतनं पयोदानां मेघानां रसितं गर्जितं येषु तेषु पथिकश्यामायितेषु= पथिकानां कृते श्यामायितेषु कृष्णरजनीतुल्येषु, दिवसेषु= अहःसु, प्रसारित-ग्रीवाणां= बिलम्बिता ग्रीवाः कृकाटिका यैस्तेषां तादृशानां, मयूरवृन्दानां= पिकस-मूहानां, नृत्यं= नटन, शोभते= श्लाघते इति।

उदाहरणे लक्षणं योजयति अत्रेत्यादिना-अत्र= अस्मिन् पद्ये, हि= इति निश्चयेन, उपमारूपकाभ्यां शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य= ध्वनेः संसृष्ट-त्वं= संसृष्टभावः।

अस्यायमाशयः— वाक्येऽस्मिन् 'सामाइएसु' इत्येतस्य पदस्य द्विधा संस्-कृतच्छाया सम्भवति 'श्यामायितेषु' इति 'सामाजिकेषु' इत्यपि। तत्र प्रथमपक्षे पथिकानां कृते तान्प्रति श्यामा इव आचरन्तीति 'उपमानादाचारार्थे क्वच्' तेन प्रत्ययेन लुप्तोपमा, द्वितीयपक्षे पथिक एव सामाजिका इति कर्मधारयस्य

स्पष्टत्वाद्रूपकं, तयोश्च परस्परसापेक्षत्वात्संसृष्टि:। ताभ्यां सह 'सामाइएसु' इत्यत्र शब्दपरिवर्तनासहत्वाच्छब्दशक्तिमूलो ध्वनि: दिवसस्य उद्दीपनातिशयबोधरूप: स च निरपेक्षत्वात्संसृष्टश्च।। ४३।।

इस प्रकार संसृष्टालंकारान्तरसंकीर्णध्वनि का निरूपण कर अब ध्वनि के संसृष्टालंकार संसृष्टत्व का उदाहरण प्रस्तुत करते हैं—

ध्वनि का संसृष्टालंकार संसृष्टत्व जैसे—

'बादलों के नये-नये गर्जनों से युक्त पथिकों के लिए काली रात लगने वाले दिनों में गर्दन फैलाए हुए मयूरों का नृत्य शोभित होता है।''

उदाहरण में लक्षण का निर्देश करते हैं—

यहाँ उपमा एवं रूपक से शब्दशक्ति से उत्पन्न अनुरणन रूप व्यङ्ग्य ध्वनि का संसृष्टत्व है। अर्थात् 'पथिकों के लिए काली रात लगने वाले' में लुप्तोपमा है और इसी के पाठान्तररूप पथिक सामाजिक' में रूपक है और दोनों संसृष्ट है और उनसे दिन के उद्दीपनातिशयबोधरूप शब्दशक्ति मूलक जो ध्वनि है उसका संसृष्टत्व है।। ४३।।

कारिका— एवं ध्वने: प्रभेदा: प्रभेदभेदाश्च केन शक्यन्ते।
संख्यातुं दिङ्मात्रं तेषामिदमुक्तमस्माभि:।। ४४।।

ध्वन्या०— अनन्ता हि ध्वने: प्रकारा: सहृदयानां व्युत्पत्तये तेषां दिङ्मात्रं कथितम्।।

लीला— ध्वनिनिरूपणप्रकरणमुपसंहरति कारिकाकार एवमित्यादिना एवं ध्वने: प्रभेदा: प्रभेदभेदा: च केन सङ्ख्यातुं शक्यन्ते अस्माभि: तेषां इदं दिङ्मात्रं उक्तम् इति पदव्यवस्था। एवं= इत्थं, ध्वने:, प्रभेदा:= मुख्यभेदा:, प्रभेदभेदा:= भेदापभेदा:, च केन, सङ्ख्यातुं= गणयितुं, शक्यन्ते= पार्यन्ते अस्माभि:= कारिकाकारै:, तेषां= ध्वनिभेदोपभेदानां, इदं= पूर्वोक्तं दिङ्मात्रं= दिग्दर्शनमात्रं, उक्तं= कथितमिति। कारिकाशयं स्पष्टयति वृत्तिकार: अनन्ता इत्यादिना-ध्वने:, प्रकारा:= प्रभेदा:, अनन्ता:= अपारा:, हि= इति निश्चयेन, सहृदयानां= रसिकानां, व्युत्पत्तये, तेषां= ध्वने: प्रधानावान्तरभेदानां, दिङ्मात्रं= स्वल्पपरिचयमात्रं, कथितं= उक्तमिति।

ध्वने: मुख्यभेदास्तेषामवान्तरभेदाश्च नैव गणयितुं केनापि पार्यन्ते। तेनास्माभिरप्यत्र तेषां परिचायकवृत्तान्तमात्रमुपस्थापितमित्याशय:।। ४४।।

ध्वनि निरूपण के प्रकरण का उपसंहार करते हैं—

ध्वनि के प्रभेद एवं प्रभेद के भेद किसके द्वारा गिने जा सकते हैं अर्थात् किसी के द्वारा भी नहीं। हमने यहाँ उनका यह दिग्दर्शन मात्र कराया है।। ४४।।

वृत्तिकार कारिका के आशय का स्पष्टीकरण करते हैं—

ध्वनि के प्रकार अनन्त हैं, सहृदयों की व्युत्पत्ति के लिए उनका कुछ स्वरूप मात्र यहाँ कहा गया है।। ४४।।

कारिका— इत्युक्तलक्षणो यो ध्वनिर्विवेच्य: प्रयत्नत: सद्भि:।
सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तै:।। ४५।।

ध्वन्या०— उक्तस्वरूपध्वनिनिरूपणनिपुणा हि सत्कवयः सहृदयाश्च नियतमेव काव्यविषये परां प्रकर्षपदवीमासादयन्ति।।

लीला— ध्वनेरवश्यविवेचनीयतां निर्दिशति इत्युक्तेत्यादिना— इत्युक्तलक्षणः यः ध्वनिः सः सत्काव्यं सम्यक् कर्तुं वा ज्ञातुं वा अभियुक्तैः सद्भिः प्रयत्नतः विवेच्यः इति पदव्यवस्था।

इत्युक्तलक्षणः= इति इत्थं दिङ्मात्रसूचकेन प्रकारेण उक्तं कथितं लक्षणं यस्य तादृशः, यः, ध्वनिः, सः, सत्काव्यं= उत्कृष्टकाव्यं, सम्यक्, कर्तुं= प्रणेतुं, वा, ज्ञातुं= वेदितुं, वा, अभियुक्तैः= प्रवृत्तैः, सद्भिः= सहृदयैः, प्रयत्नतः= सावधानतया, सम्यक्= साधु, विवेच्यः= विचारणीयः इति। कारिकां विवृणोति व्याख्याकारः उक्तेत्यादिना–उक्तस्वरूपध्वनिनिरूपणनिपुणाः= कथितलक्षण-ध्वनिविवेचनदक्षाः, सत्कवयः= सिद्धहस्तकाव्यकाराः सहृदयाः= रसिकाः च, हि= निश्चयेन, काव्यविषय= काव्यलक्ष्ये, परां= उत्कृष्टां, प्रकर्षपदवी= उच्च-तमस्थानं, श्रैष्ठ्यं, नियतमेव= अमोघत्वेन, आसादयन्ति= प्राप्नुवन्तीति।

इत्थं दिङ्मात्रमपि कृतलक्षणो ध्वनिः सत्काव्यं प्रणेतुं वा वेदितुमुत्सुकैः सहृदयैरवश्यमेव विचारणीयोऽस्ति। तेनानेन ध्वनिविवेचनेन 'तेन ब्रूमः सहृदयमनः प्रतीये तत्स्वरूप' इति यत्प्रतिज्ञातं तन्निर्व्यूढमेवेति।। ४५।।

ध्वनि की अवश्यविचारणीयता का प्रतिपादन करते हैं—

इस प्रकार से लक्षण की गई जो ध्वनि है उसका अच्छे काव्य के प्रणयन में वा उसको सही ढङ्ग से जानने में समुत्सुक होकर प्रवृत्त विद्वानों को बल पूर्वक सही ढङ्ग से विवेचन कर लेना चाहिए।। ४५।।

वृत्तिकार कारिका के आशय का पल्लवन करते हैं—

उक्त स्वरूप वाली जो ध्वनि है उसके निरूपण में निपुण जो भी अच्छे कवि हैं वा सहृदय पाठक भी, वे निश्चित रूप से काव्यविषय में उत्कृष्ट स्थान प्राप्त करेंगे, इसमें कोई सन्देह नहीं।। ४५।।

कारिका— अस्फुटस्फुरितं काव्यतत्त्वमेतद्यथोदितम्।
अशयाक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः।। ४६।।

ध्वन्या०— एतद्ध्वनिप्रवर्तनेन निर्णीतं काव्यतत्त्वमस्फुटस्फुरितं सदशक्नुवद्भिः प्रतिपादयितुं वैदर्भी गौडी पाञ्चाली च रीतयः प्रवर्तिताः। रीतिलक्षणविधायिनां हि काव्यतत्त्वमेतदस्फुटतया मनाक्स्फुरितमासीदिति लक्ष्यते। तदत्र स्फुटतया सम्प्रदर्शितेनान्येन रीतिलक्षणेन न किञ्चित्।

लीला— इत्थं स्वाभिमतस्य ध्वनेः रीत्यपेक्ष्याऽपि श्रैष्ठ्यमुदादेयत्वञ्च प्रतिपादयति अस्फुटेत्यादिना-एतत् यथोदितं अस्फुटस्फुरितं काव्यतत्वं व्याकर्तुं अशक्नुवद्भिः रीतयः सम्प्रवर्तिता इति पदव्यवस्था।

एतत्= सद्योव्याख्यातं, यथादितं= यथोक्तं ध्वनिस्वरूपं, अस्फुटस्फुरितं= अस्फुटं न तावद्व्यक्तं स्फुरितं भासनं यस्य तत्, अस्फुटं कृत्वा स्फुरितमिति, काव्यतत्व= काव्यरहस्यं, व्याकर्तुं= विचरितुं, अशक्नुवद्भि:= असमर्थे-तस्य सूक्ष्मबुद्धिवेद्यत्वेन स्थूलबुद्ध्याग्राह्यतवात्, कतिपयै:, रीतय:= पदसङ्घटनाविशेषा:, वैदर्भीप्रमुखा:, सम्प्रवर्तिता:= काव्यात्मत्वेन निरूपिता इति।

कारिकां विवृणोति वृत्तिकार: एतदित्यादिना— एतत्= ध्वनिप्रवर्तनेन निर्णीतं— ध्वनिप्रस्थापनेन निर्द्धारितं, काव्यतत्वं= काव्यरहस्यं, अस्फुटस्फुरितं= अस्फुटं कृत्वा स्फुरितम्— अव्यक्तभासनं, सत्, प्रतिपादयितुं= विवेक्तुं अशक्नुवद्भि:= असमर्थै:, वैदर्भी, गौडी, पाञ्चाली च इति= एवं प्रकारा:, रीतय:= पदसङ्घटनाविशेषा:, प्रवर्तिता:= निरूपिता:। एतत्= ध्वनिस्वरूपं, काव्यतत्वं= काव्यरहस्यं, रीतिलक्षणविधायिनां= रीतिस्वरूपनिर्देशकानां, विदुषां, मनसि, अस्फुटतया= अव्यक्तत्वेन, मनाक्= स्वल्पमात्रं, स्फुरितं= भासितं, आसित्, इति= इत्थं, लक्ष्यते= दृश्यते, तत्= तेन, अत्र= काव्यविषये, स्फुटतया= व्यक्तरूपेण, सम्प्रदर्शितेन= निर्दिष्टेन, अन्येन= ध्वनीतरेण, रीतिलक्षणेन, न, किञ्चित्प्रयोजनमिति।

अस्यायमाशय:— ध्वनितत्वञ्च न तथा व्यक्तभासितं सत्तद्विपरीतुमसमर्थै: रीतिमार्ग: प्रवर्तित:। वस्तुतस्तु तेषामपि हृदये एतत्परमं काव्यतत्वं किञ्चित्स्फुरितमेवासीद्यतस्तैरेव गुणात्मपदरचना स्वीकृता:। गुणानां व्यङ्ग्यरूपत्वात्तेषु च निरूपितेषु नैव रीति: पृथगेव सत्तामर्हति। ध्वनावेव तस्या गतार्थत्वादिति।।४६।।

अपने से प्रतिपादित ध्वनि का रीतियों की अपेक्षा श्रेष्ठत्व एवं उपादेयत्व प्रतिपादित करने का उपक्रम करते हैं......

इस निरूपित किए गए, अव्यक्त रूप में ही भासित काव्यतत्व की व्याख्या करने में असमर्थ विद्वानों से रीतियाँ प्रवर्तित की गई हैं।। ४६।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

यह ध्वनि के प्रवर्तन से निर्णीत जो काव्यतत्व (ध्वनि) है उसके अव्यक्त रूप में भासित होने से उसके प्रतिपादन में असमर्थ विद्वानों ने वैदर्भी, गौणी, पाञ्चाली, इन रीतियों का प्रवर्तन किया। रीतितत्व के विधायकों के मन में यह काव्यतत्व (ध्वनि) अव्यक्त रूप में थोड़ा सा भासित हुआ सा प्रतीत होता है। इस कारण काव्य विषय में स्फुट रूप से प्रदर्शित एवं ध्वनि से भिन्न रीति से लक्षण से कोई पयोजन नहीं है।

कहने का आशय यह है कि रीति लक्षणकार भी ध्वनि तत्व से अछूते तो नहीं थे क्योंकि उन्होंने ही गुण विशिष्ट पद रचना को रीति माना है और वे गुण ध्वनि ही हैं। किन्तु वे इसका सम्यक् विवेचन कर नहीं पाए और रीति मार्ग के प्रवर्तन में लग गए। यहाँ उन गुणों का विवेचन हो चुका है। इस कारण पृथक् रूप से रीतियों की कोई सत्ता मानना आवश्यक नहीं है। ध्वनि में ही रीति गतार्थ है।।४६।।

कारिका— शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः।

वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन् काव्यलक्षणे।।४७।।

ध्वन्या०— अस्मिन् व्यङ्ग्यव्यञ्जकभावविवेचनमये काव्यलक्षणे ज्ञाते सति याः काश्चित्प्रसिद्धा उपनागरिकाद्याः शब्दतत्त्वाश्रया वृत्तयो याश्चार्थतत्त्वसम्बद्धाः कैशिक्यादयस्ताः सम्यग्रीतिपदवीमवतरन्ति। अन्यथा तु तासामदृष्टार्थानामिव वृत्तीनामश्रद्धेयत्वमेव स्यान्नानुभवसिद्धत्वम्।

लीला— इत्थं रीत्यपेक्षया ध्वनेः श्रैष्ठ्यमुपादेयत्वञ्च प्रतिपाद्य वृत्तीनामपि तादवस्थ्यं प्रतिपादयति शब्देत्यादिना अस्मिन् काव्यलक्षणे ज्ञाते याः काश्चित् शब्दतत्वाश्रयाः अपराः अर्थतत्वयुजः वृतयः अपि प्रकाशन्ते इति पदव्यवस्था।

अस्मिन्= एतस्मिन् ध्वनिस्वरूपे, काव्यलक्षणे, ज्ञाते= विदिते सति याः काश्चित्= कतिपयाः, शब्दतत्वाश्रयाः= शब्दाश्रिताः उपनागरिकाद्याः अर्थतत्व-युजः= अर्थसारवत्यः, अपराः= इतराः कैशिक्याद्याः वृत्तयः, अपि, प्रकाशन्ते= द्योतन्ते, सिध्यन्तीति।

कारिकां विवृणोति वृत्तिकारः अस्मिन्नित्यादिना= अस्मिन् एतादृशे, व्यङ्ग्य-व्यञ्जकभावविवेचनमये= व्यङ्ग्यव्यञ्जकत्वनिरूपणस्वरूपे काव्यलक्षणे= ज्ञाते= विदिते, सति, याः, काश्चित् प्रसिद्धाः= ख्याताः उपनागरिकाद्याः= उपनागरिकाप-रुषाकोमलाख्याः, शब्दतत्वाश्रयाः= शब्दाश्रिताः, वृत्तयः, याः, च, अर्थतत्व-सम्बद्धाः= अर्थाश्रिताः, कैशिक्यादयः= कैशिकीसात्वत्यारभटी- संज्ञकाः, ताः, सम्यक् रीतिपदवीं= रीतीनामिव रसपर्यवसायित्वं, अवतरन्ति= अवलम्बन्ते। अन्यथा= अतथाभावे, तु, तासां, वृत्तीनां द्विविधामेव अदृष्टार्थानां= अदृष्टफलदा-तृयागादीनां, इव, अश्रद्धेयत्वं= अग्राह्यत्वं, एव, स्यात्, न, तु अनुभवसिद्धत्वं= अनुभवविषयत्वमपि स्यादिति।

अस्यायमाशयः— ध्वनिरहस्ये सम्यक्तया ज्ञाते सति वृत्तिरहस्यमपि ज्ञातमेव भवति। तेन नैव तासामपि पृथक् सत्ता। रीतय इव शब्दाश्रिता उपनागरिकाद्या अर्थाश्रिताः कैशिक्याद्या वृत्तयश्य रसपर्यवसायिनीत्वेनैव ग्राह्या अन्यथा तु अदृष्टार्थक्रियाणामिव तासामपि नैवानुभवविषयता सिध्येत्। रीतयो हि गुणप-र्यवसायिन्यो गुणाश्च रसपर्यवसायिनः। तथैव वृत्तयस्तु रसपर्यवसायिन्य एव। यथोपनागरिका शृङ्गारादौ विश्राम्यति परुषा रौद्रादिषु कोमला च हास्यादौ। वृत्तिर्नाम रसोचितो हि चेष्टाविशेषस्तेनैव ताः काव्यमातृका इत्युक्ताः। तासाँ रसादौ पर्यवसानत्वं च यथा वैदर्भी-उपनागरिका-कैशिकीनां माधुर्यद्वारेण शृङ्गारे, गौडी-परुषाऽऽरभटीनामोजोमार्गेण रौद्रवीरादिषु, पाञ्चालीकोमलासात्वतीनां तु प्रसाद-मुखेन हास्यादिषु च। तेन वृत्तयोऽपि रीतिमार्गमेवानुसरन्ति।।४७।।

इस प्रकार रीति की अपेक्षा ध्वनि का श्रेष्ठ्य एवं उपादेयत्व का प्रतिपादन कर अब वृत्तियों की भी उसी अवस्था का प्रतिपादन करते हैं—

इस ध्वनिस्वरूप काव्यलक्षण के जान लेने पर जो कोई शब्दतत्व में आश्रित एवं दूसरे जो अर्थतत्व में आश्रित वृत्तियाँ हैं वे भी अनुभव में आ जायेंगे।। ४७।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

वयङ्ग्यव्यञ्जकभाव के विवेचन परक इस काव्यलक्षण के जान लेने पर जो कोई प्रेसिद्ध उपनागरिका आदि शब्दतत्व में आश्रित वृत्तियाँ हैं ये भी ठीक ढङ्ग से रीतियों का ही अनुसरण करती हैं अर्थात् रस में पर्यवसायिनी होती हैं। वैसा न होने पर उन वृत्तियों का भी अदृष्टफलवाली क्रिया की तरह अग्राह्यत्व हो जाएगा न कि अनुभव का विषयत्व।

कहने का आशय यह हे कि वृत्तियाँ भी रीतियों की तरह ही रस में पर्यवसायिनी होती है। रस से पृथक् उनका भी कोई अस्तित्व नहीं है। वैसे गुणमयी पद रचना रीति है और गुण स्वयं रस में पर्यवसायी होते हैं और रस के अनुकूल चेष्टा ही वृत्ति है और उसका भी रस में ही पर्यवसान होता है। इस तरह वैदर्भी उपनागरिका एवं कैशिकी माधुर्यगुण के द्वारा शृङ्गार में विश्रान्त होती है, गौड़ी, परुषा, एवं आरभटी ओजो गुण के द्वारा रौद्र आदि रस में पर्यवसायिनी होती है और पाञ्चाली, कोमला तथा सात्वती प्रसाद के द्वारा हास्यादि में विश्रान्ति लेते हैं। अत: ध्वनि से पृथक् वृत्तियों का भी कोई अस्तित्व नहीं है।

ध्वन्या०— एवं स्फुटतयैव लक्षणीयं स्वरूपमस्य ध्वने:। यत्र शब्दानामर्थानां च केषाञ्चित्प्रतिपत्तृविशेषसंवेद्यं जात्यत्वमिव रत्नविशेषाणां चारुत्वमनाख्येयमवभासते काव्ये तत्र ध्वनिव्यवहार इति यल्लक्षणं ध्वनेरुच्यते केनचित्तदयुक्तमिति नाभिधेयतामर्हति। यत: शब्दानां स्वरूपाश्रयस्ताविदक्लिष्टत्वे सत्यप्रयुक्तप्रयोग:। वाचकाश्रयस्तु प्रसादो व्यञ्जकत्वं चेतिविशेष:। अर्थानां च स्फुटत्वेनावभासनं व्यङ्ग्यपरत्वं व्यङ्ग्यांशविशिष्टत्वं चेति विशेष:। तौ च विशेषौ व्याख्यातु शक्येते व्याख्यातौ च बहुप्रकारम्। तद्व्यतिरिक्तानाख्येयविशेषसम्भावना तु विवेकावसादभावमूलैव। यस्मादनाख्येयत्वं सर्वशब्दागोचरत्वेन न कस्यचित्सम्भवति। अन्ततोऽनाख्येयशब्देन तस्याभिधानसम्भवात्। सामान्यसस्पर्शिविकल्पशब्दागोचरत्वे सति प्रकाशमानत्वं तु यदानाख्येयत्वमुच्यते क्वचित् तदपि काव्यविशेषाणां रत्नविशेषाणामिव न संम्भवति। तेषां लक्षणकारैर्व्याकृतरूपत्वात्। रत्नविशेषाणां च सामान्यसम्भावनयैव मूल्यस्थितिपरिकल्पनादर्शनाच्च। उभयेषामपि तेषां प्रतिपत्तृविशेषसंवेद्यत्वमस्त्येव। बैकटिका एव हि रत्नतत्त्वविद:, सहृदया एव हि काव्यानां रसज्ञा इति कस्यात्र विप्रतिपत्ति: ?

लीला— उद्यमस्य पर्यवसितं निर्दिशति एवमित्यचादिना— एवं= उक्तप्रकारेण, अस्य= काव्यात्मभूतस्य, ध्वनेः, स्वरूपं, स्फुटतया= स्पष्टतया, एव, लक्षणीयं= अवधारणीयं, अस्तीति शेषः। अनेन 'वाचामविषये स्थितं' इतिवादिनः परास्ताः।

निरस्तमपि ध्वनेरनाख्येयत्व पुनर्निरसनाय प्रकरणमारभते यत्रेत्यादिना= यत्र, केषाञ्चित्= कतिपयेषामेव न तु सर्वेषां, शब्दानां, अर्थानां, च रत्नविशेषाणां= विशिष्टरत्नानां, इव, प्रतिपत्तृविशेषसंवेद्यं= ज्ञातृविशेषयं, न तु सर्वैरेवज्ञेयं, जात्यत्वं, इव, काव्ये= काव्यविशेषे, अनाख्येयं= अनिर्वाच्यं, चारुत्वं= सौन्दर्यं, अवभासते= द्योतते, तत्र, ध्वनिव्यवहारः, इति= इत्थं, यत्, ध्वनेः, लक्षणं, केनचित्, उच्यते, तत्, अयुक्तं= असाम्प्रत, इति= हेतोः, अभिधेयतां= विवेचनीयतां, अर्हति। तत्र हेतुं निर्दिशति यतः= यस्मात्, शब्दानां, स्वरूपाश्रयः= स्वरूपः निष्ठो विशेषधर्मः, तावत्-प्रथमं, अक्लिष्टत्वे= क्लिष्टतादोषरहितत्वे, सति, अप्रयुक्तप्रयोगः= अपुनरुक्तत्वेन प्रयोगः। वाचकाश्रयः= वाचकपदाश्रितधर्मः, तु, प्रसादः= झटित्यर्थसमर्पकत्वं, व्यञ्जकत्वं= व्यङ्ग्यार्थावबोधकत्वं, च, इति, विशेषः= वैशिष्ट्यम्। अर्थानां, च, स्फुटत्वेन= स्पष्टरूपेण, अवभासनं= द्योतनं— झटिति प्रतीतिविषयत्वं, व्यङ्ग्यपरत्वं= व्यङ्ग्यार्थबोधनपरायणत्वं, व्यङ्ग्यांशविशिष्टत्वं= व्यङ्ग्यभागतया विशेषतायुक्तत्वंतद्योग्यत्वमिति, च, इति, विशेषः= वैशिष्ट्यम्। तौ= तादृशौ, च, विशेषौ= वाचकार्थगतौ, व्याख्यातुं= विवरीतु, शक्यते पार्येते, बहुप्रकारं= अनेकविधत्वेन, व्याख्यातौ= विवृतौ, च। तद्व्यतिरिक्तानाख्येयविशेषसम्भावना= तद्व्यतिरिक्तस्य तद्भिन्नस्य अनाख्येयविशेषस्य आक्यविवृतिवैशिष्ट्यस्य सम्भावना तु, विवेकावसादभावमूला= विवेकस्य बुद्धेरवसादो ध्वंसोऽत्यन्ताभावो वा तस्य भावोऽस्तित्वं तन्मूलं योनिर्यस्याः सा, एव। यस्मात्= यतः, शब्दार्थगोचरत्वेन= शब्दार्थविषयत्वेन, अनाख्येयत्वं= अव्याख्येयत्वं, कस्यचित्= कस्यापि, न सम्भवति, अनाख्येयशब्देन= अनाख्येयेतिशब्देन, एव, तस्य, अभिधानसम्भवात्= कथनीयत्वसिद्धेः। तथा च, सामान्यसंस्पर्शिविकल्पशब्दगोचरत्वे= सामान्यमविशेषं सम्यक् स्पृशतीति सामान्यसंस्पर्शी तादृशो यो विकल्पो ज्ञानं यस्य तादृशो यः शब्दतस्य अगोचरत्वेऽविषयत्वं— सविकल्पकज्ञानविषयकशब्दाविषयत्वे सति ज्ञानं द्विविधं सविकल्पकं तद्भिन्न निर्विकल्पकम्।) प्रकाशमानत्वं= भासमानत्वं, क्वचित्, अनाख्येयत्वं= अनाख्येयस्य, विवरणं यद्, उच्यते= कथ्यते, तदपि, रत्नविशेषाणां, इव, काव्यविशेषाणां, अपि, न, सम्भवति-तेषां काव्यविशेषाणां, लक्षणकारैः= काव्यशास्त्रविवेचकैः, व्याकृतरूपत्वात्= व्युत्पादितस्वरूपत्वात्। यथा अनाख्येयत्वं रत्नविशेषाणामपि न सम्भवति तेषां धातुरत्नशास्त्रकारैर्व्युत्पादितस्वरूपत्वात्

तथैव तत्काव्यविषयेऽपि न सम्भवि काव्यशास्त्राचार्यैस्तस्य कृतलक्षणत्वादिति। रत्नविशेषाणां, च, सामान्यसम्भावनया= जात्यादिजनितवैशिष्ट्येन, एव, मूल्य-स्थितिपरिकल्पनादर्शनात्= महार्घताविधानकल्पनादर्शनात— जातिसम्बन्धेनैव रत्नानां मूल्यकलपना भवति। तेष्षां, विधानकलपनादर्शनात्—जातिसम्बन्धेनैव रत्नानां मूल्यकेल्पना भवति। तेषां, उभयेषां= रत्नविशेषाणां काव्यविशेषाणाम् अपि= च, प्रतिपतृविशेषसंवेद्यत्वं ज्ञातृविशेषज्ञेयत्वं, तु, अस्त्येव। यथा वैकटिका:= रत्निन:, एव, रत्नतत्वविद:= रत्नरहस्यवेत्तार:, सहृदया:= रसिका: एव काव्यानां रसज्ञा: कस्य, अत्र= अस्मिन् विषये, विप्रतिपत्ति:= विरोध इति।

कथनस्यास्यायमाशय:— अनेन ध्वनिविवेचनेन सिद्धं यद् ध्वनेरपि स्वरूपं लक्षणीयमेव नत्वनाख्येयम्। तेन ये खलु ध्वनिमनिर्वचनीयं मन्यन्ते ते परास्ता एव। यच्च यथा रत्नविशेषाणामेव जात्यत्वं तथैव केषाञ्चिदेव शब्दानामर्थानाञ्च चारुत्वं भवति यज्ज्ञातृविशेषमात्रवेद्यत्वादनाख्येयमिति कैश्चित्कथितं तदसाम्प्रतम्, नास्ति काव्येऽनाख्येयत्वं नाम। यश्च शब्दानां अक्लिष्टत्वे सति अप्रयुक्त-प्रयोग रूपो विशेषो यश्च वाचकानां प्रसादो व्यञ्जकत्वञ्च विशेषो यश्चैवार्थानां स्पष्टरूपेणावभासनं व्यङ्ग्यतत्परत्वं व्यङ्ग्याक्षेपयोग्यता च विशेषस्ते च विशेषा वयाख्येया व्याख्याता एव च। यत्तु तद्भिन्नत्वेनानाख्येयत्वं कलप्येत तत् विवेकध्वस एव न तु मतिविलास:। जगति यदेव वस्तु ज्ञानविषयतां भजते तत्तु शब्दैराख्येयमेव भवति यदि किश्चिदनाख्येयमप्यस्ति तदपि अनाख्येयशब्देनैवोक्तं भवत्येव। यच्च सविकल्पज्ञानविषयकशब्दाविषयत्वेन भासमानत्वमनाख्येय-त्वमुच्यते तदपि रत्नविशेषाणां काव्यविशेषाणाञ्च न सम्भवति यस्तेषामपि लक्षणशास्त्रिभि: रूपं व्याकृतमेव। रत्नविशेषाणामपि जातिसामान्यकलपनयैव महार्घताकल्पना भवति। तेषाञ्चोभयेषामपि ज्ञातृविशेषज्ञेयत्वमप्यस्त्येव यतो बैकटिका रत्नरहस्यज्ञा: सहृदया: काव्यमर्मज्ञा इति। तत्र तु न कस्यापि विमति: सम्भवति।

ध्वनि निरूपण का जो वृहत् प्रयास किया गया उसका फल बताते हुए पुन: ध्वनि की आख्येयता का ही निरूपण करते हैं—

इस प्रकार यह सिद्ध होता है कि ध्वनि स्वरूप स्पष्ट रूप में ही लक्षणीय है न कि अनिर्वचनीय वा अनाख्येय। जहाँ कुछ शब्दों एवं अर्थों का रत्नविशेषों के जात्यत्व के समान विशेषज्ञता से ही संवेद्य चारुत्व अकथनीय ही अवभासित है उस तरह के काव्य में ध्वनि व्यवहार हो सकता है ऐसा जो ध्वनि का लक्षण किसी के द्वारा कहा जाता है वह ठीक नहीं है। अत: वह उल्लेखनीय नहीं है। क्योंकि शब्दों की स्वरूपगत विशेषता यह है कि क्लिष्ट न होने पर अप्रयुक्त का प्रयोग करना, प्रसाद एवं व्यञ्जकत्व वाचक में आश्रित विशेषताएँ हैं और अर्थ में आश्रित विशेषताएँ हैं स्पष्ट रूप में अवभासित होना, व्यङ्ग्य परक होना एवं व्यङ्ग्य के आरोप के लिए

योग्य होना वा व्यङ्ग्यांश विशिष्टता। उन दोनों वाचकगत एवं अर्थगत विशेषताओं की व्याख्या की जा सकती है और अनेक प्रकार से की भी गई है। उससे भिन्न अनाख्येय विशेष की सम्भावना विवेक ध्वंसमूलक ही है न कि रचनात्मक। क्योंकि सर्व शब्द से अगोचर रूप में किसी का भी अनाख्येयत्व सम्भव नहीं है। यदि दूसरे शब्दों से उसकी आख्या असम्भव है तो भी तो स्वयं अनाख्येय शब्द ही तो उसका व्याख्याता है ही। अतः अन्त में अनाख्येय शब्द से उसका अभिधान सम्भव है। सामान्य से सम्बद्ध विकल्प में विषयभूत शब्द के अगोचर होने पर प्रकाशभावत्व जो है यदि कहीं वह ही अनाख्येय माना जाय तो वह रत्न विशेषों के लक्षण किए गए ही हैं। उसमें भी रत्नविशेष का भी जाति सामान्य की सम्भावना से ही मूल्य की स्थिति की परिकल्पना भी देखी गई हैं उन दोनों से ही ज्ञातृविशेष से संवेद्यत्व भी है ही। जौहरी ही रत्न के तत्त्व के ज्ञाता हैं और सहृदय ही काव्य के मर्मज्ञ हैं इसमें किसी की भी विप्रतिपत्ति नहीं होगी।

कहने का आशय यह है कि ध्वनि अनाख्येय तत्व नहीं है। संसार में पाए जाने वाली अन्य वस्तु की तरह यह ही व्याख्येय है और उसका लक्षण एवं स्वरूप का अवधारण किया ही गया है।

ध्वन्या०— यत्त्वनिर्देश्यत्वं सर्वलक्षणविषयं बौद्धानां प्रसिद्धं तत्तन्मत-परीक्षायां ग्रन्थान्तरे निरूपयिष्यामः। इह तु ग्रन्थान्तरश्रवणलवप्रकाशनं सहृदयवैमनस्यप्रदायीति न प्रक्रियते। बौद्धमतेन वा यथा प्रत्यक्षादिलक्षणं तथास्माकं ध्वनिलक्षणं भविष्यति। तस्माल्लक्षणान्तरस्याघटनादशब्दास-र्थत्वाच्च तस्योक्तमेव, ध्वनिलक्षणं साधीयः। तदिदमुक्तम्—

अनाख्येयांशभासित्वं निर्वाच्यार्थतया ध्वनेः।
न लक्षणं लक्षणं तु साधीयोऽस्ति यथोदितम्।

इति श्रीरीजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके तृतीय उद्योतः।।

लीला— ध्वनिस्वरूपस्य बहुधा पुनः-पुनः व्याख्यानेनापि न तथासन्तुष्टो वृत्तिकारः पुनरपि ध्वनितत्त्वस्य व्याख्येयत्वसिद्धये क्षणभङ्गवादेन सह तस्या-सङ्गति— दर्शनायोपक्रमते यदित्यादिना-यत्, तु, बौद्धानां= सौगतमतावलम्बिनां, सर्वलक्षणविषयं= सर्वेषामेव पदार्थानां लक्षणस्य विषयं, अनिर्देश्यत्वं= अनाख्येयत्वं प्रसिद्धं= ख्यातं-सर्वेऽपि पदार्था क्षणभंगुरास्तेन तेषां निर्वचनीयत्वं न सिध्यतीति, यत्प्रसिद्धं बौद्धेषु, तत्, ग्रन्थान्तरे= अन्येष्वेव ग्रन्थेषु, तन्मूत-परीक्षायां= तदीयसिद्धान्तनिरूपणे, निरूपयिष्यामः= निर्द्धारयिष्यामः। इह प्रकरणे-ऽस्मिन्, तु, ग्रन्थान्तरश्रवणलवप्रकाशनं= ग्रन्थान्तरस्य यच्छ्रवणं तस्य लवो लेशस्तस्य प्रकाशनं, सहृदयवैमनस्यप्रदायि= रसिकवैरस्यहेतुः, इति= हेतोः, न, प्रक्रिये इति। वा, बौद्धमतेन सौगतदृष्ट्या, यथा, प्रत्यक्षादिलक्षणं= सर्वेषामेव पदार्थानां क्षणिकत्वेऽपि प्रत्यक्षादिज्ञानानां लक्षणं क्रियते, तथा, अस्माकं,

ध्वनिलक्षणं, भविष्यतीति। तस्मात्= तेन, लक्षणान्तरस्य= अन्यकृतलक्षणस्य, अघटनात्= असमन्वयात्, तस्य, अशब्दार्थत्वात्= शब्दवाच्यत्वाभावात्, च, उक्तं= अस्माभि: प्रतिपादितं, एव, साधीय:= सुतरां साधु इति। तत्= तस्मात्, इदं= वक्ष्यमाणवचनं, उक्तं कथितम्। 'संग्रहश्लोकमवतारयति अनाख्येयेत्यादिना- ध्वने: निर्वाच्यार्थतया अनाख्येयांशभासित्वं लक्षणं न अस्य लक्षणं तु यथोदितं साधीय इति पदव्यवस्था।

ध्वने:= ध्वनितत्त्वस्य, निर्वाच्यार्थतया= आख्येयार्थतया, अनाख्येयांशभासित्वं= अनिर्वाच्यांशप्रकाशित्वं, लक्षणं, न= नैव, अस्य= यथोदितं= यथाकथितं, लक्षणं, तु, साधीय:= साधुतममिति।

तदयमाशय:— यद्बौद्धा: पदार्थानां क्षणिकत्वेनानिर्वचनीयत्वं मन्यन्ते तद् ध्वनिविषये नैव साधीय:। तेन लक्षणान्तरस्याघटनादशब्दार्थत्वाच्च पूर्वप्रतिपादितमेव ध्वनिलक्षणं साधीय इति। ध्वनेर्निर्वाच्यलक्षणतयाऽनाख्ये- यांशप्रकाशितत्वं नैव लक्षणं भवितुमर्हति। तस्य तु यत्समीचीनं लक्षणं तत्प्रतिपादितमेव।

श्रीलोकमणिरचिते ध्वन्यालोकस्य टिप्पणे।
पूर्णस्तुतीय उद्द्योतो व्यङ्ग्यव्यञ्जकलक्षण:।
यथा लीलायते लीला हृदयेऽहर्निशं मम।
पाठकेषु भवेत्तद्वत्तदाख्या विवृति: सदा।।

इति श्रीवत्सगोत्रीयविप्रकुलावतंसपरशुरामात्मजविष्णुमायोद्भवपरमशैवनेपालाभिजनलोकमणिदाहालप्रणीतायां लीलाख्यायां सलोचनध्वन्यालोककाव्यालोकविवृतौ व्यञ्जकलक्षणो नाम तृतीय उद्द्योत:।

ध्वनि के विषय में अनेक जगह अनेक बार विवेचन करने के बाद भी अतृप्त वृत्तिकार फिर ध्वनि की बौद्धों में प्रचलित अनिर्वचनीयवाद से भिन्नता का प्रतिपादन हेतु प्रकरण का आरम्भ करते हैं—

जो बौद्धों का सभी लक्षणों के विषय में अनिर्देश्यत्व प्रसिद्ध है उसका निरूपण हम दूसरे ग्रन्थ में उनके मत की परीक्षा में करेंगे। यहाँ ग्रन्थान्तर के श्रवण के एक अंश का प्रकाशन भी कोमल मन वाले सहृदयों के लिए वैमनस्य देने वाला होगा। अत: उसका विवेचन यहाँ किया नहीं गया। अथवा बौद्ध मत में जैसे प्रत्यक्ष आदि लक्षण हैं उसी तरह हम लोगों का भी ध्वनि का लक्षण होगा अर्थात् बौद्ध लोग पदार्थों का क्षणिक मान कर भी प्रत्यक्षादि प्रमाण मानते हैं उसी तरह हम लोगों का ध्वनि का लक्षण भी है। इस कारण दूसरे लक्षण में घटित न होने से और शब्द से वाच्य न होने से उपर्युक्त ध्वनि लक्षण ही अधिक उपयुक्त है।

यह कहा गया है— ध्वनि के निर्वचनीय अर्थ होने से उसका अनिर्वचनीय अश से भासित्व लक्षण हो नहीं सकता, उसका तो, जैसा ऊपर कहा गया, वही लक्षण उपयुक्त है।

इस प्रकार लोचन एवं ध्वन्यालोक सहित काव्यालोक का लीला व्याख्या में व्यञ्जक लक्षण नामक तृतीय उद्द्योत समाप्त हुआ।

●●●

# अथ: चतुर्थ उद्योत:

ध्वन्या०— एवं ध्वनि सप्रपञ्चं विप्रतिपत्तिनिरासार्थ व्युत्पाद्य तद्व्यु-त्पादने प्रयोजनान्तरमुच्यते—

कारिका— ध्वनेर्य: सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शित:।
अनेनानन्त्यमायाति कवीनां प्रतिभागुण:।। १।।

ध्वन्या०— य एष ध्वनेर्गुणीभूतव्यङ्ग्यस्य च मार्ग: प्रकाशितस्तस्य फलान्तरं कविप्रतिभानन्त्यम्।।

लीला— नत्वा परं महान्तं लोकमणिरितीह पर्शुरामसुत:।
काव्यालोके विवृतिं ध्वन्यालोकाञ्चिते लघुं तनुते।
अथोद्योते तुरीयेऽत्र ध्वन्यालोकस्य विस्तृते।
व्याकुर्वे विषयं सोऽहं लोचनादिमते स्थित:।

अथ तृतीयोद्द्योतेन सह प्रकृतोद्द्योतस्य सङ्गतिं विरचयन् ध्वनेर्विशेषप्रयो-जननिर्देशककारिकावतारणाय वृत्तिकृदुपक्रमते एवमित्यादिना— एवं= इत्थं, ध्वनि= ध्वनितत्वं, विप्रतिपत्तिनिरासार्थं= विप्रतिपत्तीनां ध्वनिविरुद्धविचाराणां निरासार्थं निराकरणाय, सप्रपञ्चं= सविस्तरं, व्युत्पाद्य= विशेषतो निरूप्य, तद्व्युत्पादने= तस्य ध्वने: व्युत्पादनं विशेषेण निरूपणं तस्मिन्, प्रयोजनान्तरं= सहृदयमन: प्रीत्यतिरिक्तप्रयोजनं, उच्यते= कथ्यते इति।

कारिकामवतारयति ध्वनेरित्यादि—सगुणीभूतव्यङ्ग्यस्य ध्वने: य: अध्वा प्रदशित: अनेन कवीनां प्रतिभागुण: आनन्त्यं आयाति इति पदव्यवस्था।

सगुणीभूतव्यङ्ग्यस्य= गुणीभूतं वाच्यार्थपेक्षया तदुपस्कारकत्वेन गुणभावं प्राप्तं व्यङ्ग्य यस्मिन् तादृशं तेन सहितस्य, ध्वने:-- गुणीभूतव्यङ्ग्यस्य ध्वने-श्चेत्याशय:, य:= त्यादृश:, अध्वा= त्मार्ग:, प्रदर्शित:= तनिर्दिष्ट:, अनेन= तेन पथा, कवीनां= काव्याकाराणां, प्रतिभागुण:= प्रतिभा नवनवोन्मेषप्रवर्तिनी प्रज्ञा सा एव गुणो वैशिष्ट्यं, आनन्त्यं= अनन्ततां, निरवधिविस्तृततां, आयाति= प्राप्नोति।

कारिकां विवृणोति वृत्तिकारो 'य' इत्यादिना— य:, एष:= अनन्तरोक्त:, ध्वने:, गुणीभूतव्यङ्ग्यस्य, च, मार्ग:= त्पन्था, प्रकाशित:= प्राकाश्यमानीत: ज्ञातविषयीकृत:, तस्य, फलान्तरं= अन्यमपि प्रयोजनं सहृदयमन:प्रीत्यतिरिक्तं, कविप्रतिभानन्त्यं= कवे: प्रतिभाया आनन्त्यमिति।

ध्वनेर्गुणीभूतव्यङ्ग्यस्य च विवेचनस्य प्रयोजनं न केवलं सहृदयमनः प्रतीय एवापितु कविप्रतिभानिरवधिविस्तारायापि। इति।। १।।

पूर्व उद्द्योत से वर्तमान उद्द्योत की सङ्गति दर्शाते हुए वृत्तिकार ध्वनि के विशेष प्रयोजन का निर्देश करने वाली कारिका के अवतारण के लिए उपक्रम करते हैं—

इस प्रकार विरोधियों की ओर से उठाई जा सकने वाली आपत्तियों के निरास के लिए भेद एवं उपभेदों के सहित ध्वनि का विवचेन कर उसके विवेचन का जो दूसरा भी प्रयोजन है उसका निर्देश किया जाता है—

गुणीभूत व्यङ्ग्य के सहित ध्वनि का जो यह मार्ग दिखाया गया इससे कवियों का प्रतिभा रूप गुण अनन्तता को प्राप्त होता है।। १।।

वृत्तिकार कारिका के आशय का स्पष्टीकरण करते हैं—

ध्वनि एवं गुणीभूत व्यङ्ग्य का जो यह मार्ग प्रकाशित किया गया उसका दूसरा भी प्रयोजन है कवियों की प्रतिभा का निरवधि विस्तार। अर्थात् यह न केवल सहृदयों के मन की प्रसन्नता के लिए है अपितु कवियों की प्रतिभा की अनन्तता के लिए भी है।। १।।

ध्वन्या०— कथमिति चेत्—

कारिका— अतो ह्यन्यतमेनापि प्रकारेण विभूषिता।
वाणी नवत्वमायाति पूर्वान्वयवत्यपि।। २।।

ध्वन्या०— अतो ध्वनेरुक्तप्रभेदमध्यादन्यतमेनापि प्रकारेण विभूषिता सती वाणी पुरातनक विनिबद्धार्थसंस्पर्शवत्यपि नवत्व मायाति।

लीला— कविप्रतिभानन्त्यं ध्वनेः प्रयोजनं यदुक्तं तद्धेतुनिर्देशककारिकाव ताराणाय वृत्तिकृदुपक्रमते कथमित्यादिना— कथं= ध्वनेर्गुणीभूतव्यङ्ग्याच्च कवि-प्रतिभानन्त्यं कथं सम्भवति, इति; चेत्= त्वअकाथ्यते चेत्, उच्यत इति शेषः।

तत्कारिकामवतारयति अत इत्यादिना— अतः अन्यतमेन अपि प्रकारेण विभूषिता वाणी पूर्वार्थान्वयवती अपि नवत्वं हि आयाति इति पदव्यवस्था।

अतः= एभ्यः पूर्वोक्तेभ्यः ध्वनिगुणीभूतव्यङ्ग्यप्रकारेभ्यः, अन्यतमेन= केन-चिदेकेन, अपि, प्रकारेण= भेदेन, विभूषिता= समलंकृता, वाणी= कविभारती, पूर्वार्थान्वयवती= पूर्वः पुरातनः प्राग्वर्तिकविवर्णितो योऽर्थस्तेनान्वयः सम्बन्धोऽ-स्यास्तीति तद्वती, अपि, नवत्वं= नूतनत्वं, आयाति= प्राप्नोनीति। कारिका विवृणोति वृत्तिकारः अत इत्यादिना—अतः= ध्वनेरुक्तप्रभेदमध्यात्, अन्यतमेन= केनचिदेकेन, अपि, प्रकारेण= भेंदने, विभूषिता= समन्विता, सती, वाणी= कविभारती, पुरातनकविनिबद्धार्थसंस्पर्शवती= प्राचीनकविप्रयुक्तार्थ— संसर्गयुक्ता, अपि, नवत्वं= नूतनत्वं, आयातीति।

ध्वनेर्गुणीभतव्यङ्ग्यस्य वा केनापि प्रकारेण समन्वितः पुराणोऽप्यर्थः नवत्व-

मायातीति तदुपस्थित्या कविप्रतिभानन्त्यसिद्धिरिति भावः। यतः केवलं वाच्यवा-चकभावमात्रमाश्रित्य काव्यं क्रियते चेत्तत्तु वृत्तमात्रवर्गनमेव भवति यत्पुरात-नकविभिः कृतमेव। तस्यैव पुनरुक्तौ न कोऽपि चमत्कारः सहृदयहृदयाह्लाद-कस्तत्रोदेति। किन्तु तत्रैवापि व्यङ्ग्यव्यञ्जकभावाश्रये तु तेषां निरवधिकत्वा-द्वर्ण्यस्यापि निरवधित्वं सञ्जायते, पुराणा अप्यर्था नूतनत्वमायान्ति यतः कृतौ चमत्कारितातिशयः समुदेति।

इत्थं ध्वनिसंसर्गेण एकतः कविप्रतिभा नवनवोन्मेषश्लाघिनी भवति यतश्चमत्कृतिविशिष्टकाव्यमुदेति। अपरतश्च तस्मात् पुरातनोऽप्यर्थो नवीनायते। तृतीयतश्च वर्णनीयविषयस्यापि निरवधित्वं सञ्जायते ध्वनिप्रभेदानामानन्त्यात्। यथा केनचिद्गुणीभूतव्यङ्ग्ये निबद्धं विषयं कविषदपरो ध्वनिमाश्रित्य वर्णयति चेत्तत्रावश्यमेव नवीनतोदेति। ध्वनावपि विवक्षितान्यपरवाच्यत्वेन निबद्धस्य विष-यस्य अविवक्षितवाच्यत्वेन कथने निश्चयमेव तत्र चमत्कारान्तरमुदेत्येवेति।।२।।

ध्वनि एवं गुणीभूत व्यङ्ग्य से कवि प्रतिभा का अनन्त विस्तार होने की जो बात कही गई उसका विवेचन करने वाली कारिका के अवतारण हेतु वृत्तिकार उपक्रम करते हैं—

ध्वनि से कविप्रतिभा का आनन्त्य कैसे ? ऐसी जिज्ञासा हो तो कहा जाता है—

कारिका का अवतारण करते हैं—

इन ध्वनि वा गुणीभूत व्यङ्ग्य के प्रकारों में से किसी भी एक प्रकार से भी विभूषित वाणी पुरातन अर्थ से सम्बद्ध होने पर भी नवीनता को प्राप्त होती है।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

ध्वनि के इन उक्त प्रभेद उपभेदों में से किसी एक भी प्रकार से अलंकृत होती हुई कवि की वाणी पुरातन कवियों से निबद्ध अर्थ से सम्बद्ध होने पर भी नवीनता को प्राप्त होती है।।

कहने का आशय यह है कि ध्वनि के संसर्ग से एक तो कवि की प्रतिभा नवीन कल्पनाओं से विकसित होती है। दूसरी बात यह है कि उसके संसर्ग से पुराना भी अर्थ नयां एवं चमत्कारी होता है। तीसरी विशेषता यह भी है कि वर्णनीय विषय एवं उसके प्रकारों में भी विविधता तथा अनन्तता आती है जिससे कवि के लिए एक विशाल, स्वतन्त्र क्षेत्र मिल जाता है। अतः ध्वनि के संसर्ग से कवि प्रतिभा का आनन्त्य बन पाता है।। २।।

ध्वन्या०— तथा ह्यविवक्षितवाच्यस्य ध्वनेः प्रकारद्वयसमाश्रयणेन नवत्वं पूर्वार्थानुगमेऽपि यथा—

स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोर्मिसरसः।
गतानामारम्भः किसलयितलीलापरिमलः
स्पृशन्त्यास्तारुण्यं किमिव नहि रम्यं मृगदृशः।।

इत्यस्य—

सविभ्रमस्मितोद्भेदा लोलाक्ष्य: प्रस्खलद्गिर:।
नितम्बालसमामिन्य: कामिन्य: कस्य न प्रिया:।।

इत्येवमादिषु सत्स्वपि तिरस्कृतवाच्यध्वनिसमाश्रयेणापूर्वत्वमेव प्रतिभासते।

लीला— ध्वनिसम्पर्केण पुरातनस्याऽप्यर्थस्य नवत्वं यदुक्तं तदेवोदाहरति तथेत्यादिना-तथा हि अविवक्षितवाच्यस्य= वाच्यस्य वाक्ये तात्पर्यानुपपत्त्या अविवक्षितत्वेन जातस्य लक्षणामूलस्य, ध्वने:, प्रकारद्वयसमाश्रयणेन= प्रकारद्वयं अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति भेदद्वयं तयोरुभयोर्वा एकतरस्य समाश्रयणेनाधारेण, पूर्वार्थानुगमे= पुरातनार्थानुसरणे, अपि नवत्वं= नूतनत्वं, यथा= इति निदर्शने। तत्र प्रथममत्यन्ततिरस्कृतवाच्यस्योदाहरणं प्रस्तौति स्मितमित्यादि—किञ्चित् स्मितं मुग्ध, दृष्टिविभव: तरलमधुर: वाचां परिस्पन्द: अभिनवविलासोर्मिसरस: गतानां आरम्भ: किसलयितलीलापरिमल: इति तारुण्यं स्पृशन्त्या: मृगदृश: किमिव न रम्यं हि इति पदव्यवस्था।

स्मितं= हसितं, किञ्चित्= मुग्धं= मनोहारि, दृष्टिविभव:= दृष्टिरवलोकनमेव विभव ऐश्वर्यं, तरलमधुर:= तरलश्चञ्चल अत एव मधुरो हृद्य: वाचां= वचसां, परिस्पन्द:= स्फुरणं, अभिनवविलासोर्मिसरस:= अभिनवा नितान्तं नूतना ये विलासास्तेषामूर्मयस्तरङ्गास्ताभि: सरसो मधुर:, गतानां= सञ्चरणानां सविभ्रमाणां, आरम्भ:= उपक्रम:, किसलयितलीलापरिमल:= किसलयित: सद्योविकसितो लीलाया: विभ्रमादे: परिमल: सुवासो यत्र तादृश:, इति, तारुण्यं= यौवनं, स्पृशन्त्या:= प्राप्ताया:, मृगदृश:= हरिणलोचनाया:, किमिव= किम्मात्रं, न, रम्यं= हृद्यं हि, अपितु सर्वमेव हृद्यमिति।

इति, अस्य= काव्यस्य,

तुलनात्मकाध्ययनाय तस्यैवार्थस्य पुरातननिबन्धनमुपस्थापयति सविभ्रमेत्यादिना— सविभ्रमस्मितोद्भेदा:= विभ्रमैर्विलासै: सहितं यत्स्मितमीषद्धसितं तस्य उद्भेदो: विकासो यासां तास्तादृश्य:, लोलाक्ष्य:= तरललोचना:, प्रस्खलद्गिर:= प्रस्खलन्त्यो यौवनमदेन त्रुट्यन्तो गिरो वचांसि यासान्ता:, नितम्बालसगामिन्य:= नितम्बेन कटिपश्चाद्भागेन तद्भरेण अलसं मन्दं गन्तुं चलितु तच्छीलास्ता:, कामिन्य:= प्रमादा:, कस्य, न= नैव, प्रिया:= हृद्या: अपितु सर्वस्येति।

उदाहरणे लक्षणं घटयति इत्येवमित्यादिना— इति, एवामादिषु= इत्यादिषु, श्लोकेषु= काव्येषु, सत्सु= विद्यमानेषु, अपि, तिरस्कृतवाच्याध्वनिसमाश्रयेण= वाच्यस्यात्यन्तमेव तिरस्कृतत्वेन यो ध्वनिस्तस्य समाश्रयेण= संसर्गेण, अपूर्वत्वं= नवीनत्वं, एव, प्रतिभासते= द्योतत इति।

कथनस्यास्यायमाशयः— उक्तश्लोकद्वये समान एव विषयो वर्णितोऽस्ति अंकुरितयौवनप्रमदालावण्यरूपः। किन्तु अपरगतापेक्षया पूर्वगत एव चमत्कारातिशयतामावहति ध्वनिसम्पर्केण। ध्वनिश्चात्रात्यन्ततिरस्कृतवाच्यरूपः। स चेत्थम्— 'स्मित किञ्चिन्मुग्धं' इत्यत्र मुग्धत्वं व्यक्तावेव सम्भवति न तु स्मिते। तेन मुग्धपदस्यार्थबाधेन तत् स्वाभाविकं लक्ष्यार्थं द्योतयत् स्मितस्याकृत्रिमत्व ध्वनयति। तथैव मधुरत्वं खाद्यवस्तुन्येव सम्भवति न तु दृष्टौ। तेन मधुरपदं मुख्यार्थबाधेन सुन्दरमित्यर्थं लक्षयति दृष्टेराकर्षकत्वं ध्वनयति च। विभवो व्यक्तेरेव सम्भवति न तु दृष्टेः। तेन विभवपदं मुख्यार्थबाधेन प्रसारर्थं लक्षयत् दृष्टेरबाधागतित्वं ध्वनयति। सरसप्रवाहोऽपि जलधाराया एव सम्भवति नतु वाण्याः। तच्च मुख्यार्थबाधेन निरन्तररूपं लक्ष्यार्थं गृह्णन् सन्तापशमनरूपमर्थं ध्वनयति। तथैव किसलयस्तु वृक्षे एव भवति न तु गतेः। तेन तदपि पदं मुख्यार्थबाधेन मनोहररूपमर्थं लक्षयत् गतेः सौकुमार्यत्वं ध्वनयति। परिमलस्य कमले एव सम्भवाल्लीलया सह प्रयोगे तस्य मुख्यार्थबाधेन सुन्दरत्वं लक्षयत् लीलायाः सौन्दर्यातिशयं ध्वनयति। स्पर्शस्तु मूर्तस्यैव वस्तुनो भवति न तु तारुण्यस्य। तेन स्पर्शपदं सञ्चारार्थे लक्षितं, सत् तारुण्यस्य निःशेषैरवयवैः' सह सङ्गतत्वं ध्वनप्रति। इत्थं पुरातनोऽप्यर्थो ध्वनिसङ्गत्याऽभिनवतां विधत्त इति।

ध्वनि के सम्पर्क से पुरातन भी अर्थ का नवीनत्व जो कहा गया उसका उदाहरण प्रस्तुत करने का उपक्रम करते हैं—

पुराने ही अर्थ के अनुसरण में भी अविवक्षितवाच्य ध्वनि के दोनों प्रकार के संसर्ग से नवत्व जैसे—

''कुछ कुछ मुग्ध स्मित, चञ्चल एवं मधुर दृष्टि का वैभव, वाणी का अभिनव विलास के तरङ्गो से सरस प्रवाह गति का किसलय का आचरण कर रहा है लीला का परिमल जिसमें ऐसा आरम्भ है, तारुण्य को प्राप्त हो रही हरिणलोचना की कौन ही चीज रमणीय नहीं है अपितु सभी ही रमणीय हैं।

इसका—

विलासों से युक्त मुस्कान का विकास वाली, चञ्चल आँखों वाली, यौवन मद में स्खलित वाणी वाली, नितम्ब के भार से युक्त अलस गमनवाली कामिनियाँ किसके लिए प्रिय न होगी।'

इत्यादि के होते हुए भी तिरस्कृतवाच्य के समाश्रय से नवीनत्व ही प्रतिभासित होता है।

कहने का आशय यह है कि पिछले काव्य में जो अर्थ निबद्ध है पहले में भी वही है लेकिन पहले में ध्वनि के सम्पर्क से पिछले में की अपेक्षा अधिक चारुत्व एवं नवीनत्व है। यहाँ वाच्य के अत्यन्त तिरस्कृत होने से उत्पन्न लक्षणा मूलक ध्वनि है, जो इस प्रकार है—

मुग्धता व्यक्ति में होता है न कि स्मित में। अतः मुग्ध पद का मुख्यार्थ यहां

बाधित होकर 'स्वाभाविक' अर्थ में लक्षित होता हुआ स्मित की आकृत्रिमता के ध्वनित करता है। इसी तरह मधुर खाद्य वस्तु होती है दृष्टि नहीं। अत: उसका भी मुख्यार्थ बाध होने से 'सुन्दर' अर्थ में लक्षित होते हुए आकर्षक अर्थ ध्वनित करता है। वैभव व्यक्ति का होता है दृष्टि का नहीं। अत: वह भी मुख्यार्थ बाध होने के कारण प्रसार अर्थ में लक्षित होकर दृष्टि की अविरत गति को ध्वनित करता है। 'प्रवाह' जलधारा का होता है वाणी का नहीं। अत: प्रवाह पद का मुख्यार्थ बाधित होने से निरन्तर अर्थ में लक्षित होता हुआ वाणी की सन्तापशमकता ध्वनित करता है। गति का विसलय का कार्य करना सम्भव न होने से किसलय पद 'मनोहर' अर्थ में लक्षित होकर सौकुमार्य अर्थ ध्वनित करता है। परिमल पद सुन्दरता अर्थ में लक्षित होकर उसकी अतिशयता को ध्वनित करता है। स्पर्श किसी मूर्त वस्तु का होता है यौवन जैसी अमूर्त वस्तु का नहीं है। अत: स्पर्श पद सञ्चार अर्थ में लक्षित होकर उसका शेष अङ्गो से सङ्गतत्व को ध्वनित करता है। इस तरह यहाँ अत्यन्ततिरस्कृतवाच्य ध्वनि का आश्रय होने के कारण अर्थ में नवीनता एवं प्रबन्ध में चमत्कार भी है।

ध्वन्या०— तथा—

य: प्रथम: प्रथम:, स तु तथाहि हतहस्तिवहलपललाशो।
श्वापदगणेषु सिहं: सिह: केनाधरीक्रियते।।

इत्यस्य—

स्वतेज:क्रीतमहिमा केनान्येनातिशय्यते।
महद्भिरपि मातङ्गै: सिह: किमभिभूयते।।

इत्येवमादिषु श्लोकेषु सत्स्वप्यर्थान्रसङ्क्रमितवाच्यध्वनिसमाश्रयेण नवत्वम्।

लीला— इत्थमत्यन्ततिरस्कृतवाच्यध्वनिसमाश्रयेण पुरातनस्याप्यर्थस्य नवीनत्वं चमत्कारातिशयशालित्वञ्चोदाहृत्य सम्प्रति। क्रमप्राप्तमर्थान्तरसङ्क्रमितवाच्यध्वनिसमाश्रयेण यत्पुरातनस्याप्यर्थस्याभिनवत्वं तदुदाहरणायोपक्रमते तथेत्यादिना—तथा= तथैव—एवमेव। तदुदाहरति 'य' इत्यादिना—य: प्रथम: स तु प्रथम: तथाहि हतहस्तिबहलप्ललाशी सिह: श्वापदगणेषु सिंह केन अधरी क्रियते इति पदव्यवस्था।

य: प्रथम:= प्रधानं, स: तु, प्रथम:= प्रधानं, एव, तथाहि= सिद्धमेवैतद्यत् हतहस्तिबहलपललाशी= हता: स्वयं घातिता ये हस्तिनो गजास्तेषां बहलं विपुलं यत्पललं मांसं तदश्नाति भक्षति तच्छील इति तादृश:, सिंह= केशरी, श्वापदगणेषु= हिंस्रकपशुसमूहे, सिंह:= विक्रमातिशययुक्त एव, स: श्वापदगणेषु, केन, अधरीक्रियते= नीचकै:, क्रियते इति।

इति अस्य= काव्यस्य,

तादृशस्यैवार्थस्य प्रतिपादकं पुरातनश्लोकमुपस्थापयनि स्वतेज इत्यादिना- स्वतेजः क्रीतमहिमा अन्येन केन अतिशय्यते महद्भिः, मातंगैः अपि किं सिंह अभिभूयत इति पदव्यवस्था।

स्वतेजः क्रीतमहिमा= स्वतेजसा स्नेनैव प्रभावेण नत्वन्याश्रितेन क्रीत उपाजितो महिमा महत्वं येन तादृशः, जनः, अन्येन= अपरेण, केन, अतिशय्यते= अभिभाव्यते, अतिक्रम्यते, अर्थान्त केनापि, तथाहि, महद्भिः= स्थूलकायैः, अपि, मातंगैः= मत्तदन्तिभिः कि, सिंहः= शिशुरपि हर्यक्षः, अभिभूयते= तिरस्कर्तुं शक्यते—कदापि नैवेति।

कथनीयमुपस्थापयति इत्येवमादिषु= एतादृशेषु, श्लोकेषु सत्सु= विद्यमाने-ष्वपि, प्रकृतस्य, अर्थान्तरसङ्क्रमितवाच्यध्वनिसमाश्रयेण= वाच्यस्य वाक्ये तथा तात्पर्यानुपपत्तेरर्थान्तरे सङ्क्रमितेन वाच्येन यो ध्वनिर्भवति तस्य समाश्रयेण संसर्मेण, मनवत्वं= नूतनत्वं सम्पन्नमस्तीति।

अस्यायंमाशयः— उपर्युपस्थापितयोरुभयोरपि पद्ययोः समान एव प्रतिपाद्यविषयः किन्तु प्रथमे ध्वनिसंसर्गेण पूर्वग्रथितस्याप्यर्थस्य नूतनत्वेन चमत्कारातिशयोऽपरे तु ध्वनिसम्पर्काभावाद्वाच्यमात्राश्रयेण न तथेति। ध्वनिस्तु वाच्य स्याविवक्षितत्वेनार्थान्तरसङ्क्रमितत्वादुत्पन्नश्च। तच्चेत्थम्—पद्ये द्वितीयं प्रथमदं वाक्ये तात्पर्यानुपपत्या त्यक्तस्वार्थं सत् प्रधानरूपं लक्ष्यार्थ गृहणत अप्रधर्षणीयत्वं ध्वनयति। एवमेव द्वितीयं सिंहपदं बाधितमुख्यार्थ सत् प्रधानरूपमर्थं लक्षयत् पराक्रमातिशययुक्तत्वं ध्वनयति। तैनैतयोरर्धान्तरसङ्-क्रमितवाच्यत्वेनाविवक्षितवाच्यो ध्वनिरिति येन पुरातनोऽप्यर्थो न केवलमभिन-वीकृतोऽपितु चमत्कारातिशययुक्तश्च विहित इति ध्वनेः कविप्रतिभानन्त्यसि-द्धेरुदाहरणमिदम्।

इस प्रकार अत्यन्ततिरस्कृतवाच्य ध्वनि से पुरातन अर्थ का अभिनवीकरण का उदाहरण देकर अब अर्थान्तरसङ!क्रमितवाच्य ध्वनि के संसर्ग से पुरातन अर्थ के नवत्व का उदाहरण प्रस्तुत करते हैं—

उसी तरह—

जो पहला है वह तो पहला ही होता है। इसमें निदर्शन यह है कि अपने बल से मारे गए हाथियों का घना मांस खाने वाला सिंह जो है वह हिंस्रक जन्तुओं में सिंह (प्रधान) ही है, वह किसके नीचा किया जा सकता है।''

इसका—

''अपने ही प्रभाव से उपार्जित महिमा वाले किसी और से पछाड़े नहीं जा सकते। क्या छोटा भी सिंह विशाल काय भी हाथियों से पराजित हो सकता है? अर्थात नहीं।'' इत्यादि श्लोकों के रहते हुए भी प्रथम पद्य में अर्थान्तर सङ्क्रमितवाच्य ध्वनि के आश्रय से नवत्व है।

कहने का आश्रय यह है कि दोनों ही पद्यों में विषय तो एक ही है। फिर भी दूसरे पद्य की अपेक्षा पहले पद्य में अधिक चमत्कारिता एवं अर्थ में नवीनता भी है क्योंकि उसमें ध्वनि का संपर्क है, दूसरे में नहीं। ध्वनि का सम्पर्क इस प्रकार है—

'जो पहला है वह पहला ही होता है' में दूसरा 'पहला' शब्द मुख्यार्थ बाध होने से 'प्रधान अर्थ में लक्षित होता है और उससे' उसको टाले जा न सकने रूप अर्थ ध्वनित होता है। तब इसका पर्यवसित अर्थ होता है— जो पहला है वह पहला अर्थात् प्रधान ही होता है और उसके पहलेपन को कोई नहीं टाल सकता। इसी तरह दूसरा सिंह पद भी 'प्रधान' अर्थ में सङ्क्रमित होकर असाधारण पराक्रम को ध्वनित करता है। तब इसका अर्थ होता है सिंह सब हिंस्रक जन्तुओं में प्रधान (मुख्य) है और वह एक असाधारण पराक्रम से युक्त जीव है।

इस प्रकार पुराने ही अर्थ में भी ध्वनि के कारण नवीनता का समावेश हो पाता है।

ध्वन्या०— विवक्षितान्यपरवाच्यस्याप्युक्तप्रकारसमाश्रयेण नवत्तं यथा—

निद्राकैतविनः प्रियस्य वदनैर्विन्यस्य वक्त्रं वधूः
बोधाभासनिरुद्धचुम्बनरसाप्याभोगलोलं स्थिता।
वैलक्ष्याद्विमुखीभवेदिति पुनस्तस्याप्यनारम्भिणः
साकाङ्क्षप्रतिपत्ति नाम हृदयं यातं तु पारं रतेः।।

इत्यादेः श्लोकस्य।

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता।।

इत्यादिषु श्लोकेषु सत्स्वपि नवत्वम्। यथा वा 'तरङ्गभ्र भङ्गा' इतयादिश्लोकस्य 'नानाभङ्गिभ्रमद्भ्रूः' इत्यादि श्लोकापेक्षयान्यत्वम्।

लीला— इत्थं ध्वनिसम्पर्केण पुरातनस्याऽप्यर्थस्य नवत्योदाहरणप्रसङ्गे अविवक्षितवाच्यध्वनिसम्पर्केणार्थस्य तथात्वमुदाहृत्य सम्प्रति विवक्षितान्यपर वाच्यध्वनिसम्पर्केण पूर्वनिबद्धार्थस्यापि पुनर्निबन्धने नवत्वोदाहरणायोपक्रमते विवंक्षितेत्यादिना—विवक्षितान्यपरवाच्यस्य= अभिधामूलकध्वनेः, अपि, उक्तप्रकारसमाश्रयेण= पूर्वनिर्दिष्टासंलक्ष्यसलक्ष्यक्रमव्यङ्ग्यप्रभेदयोरन्यत— मावलम्बेन, नवत्वं= पुरातनस्याऽप्यर्थस्याभिनवत्वं, यथा—

असंलक्ष्यक्रमव्यङ्ग्यस्यैवापि, उक्तिप्रकारान्तरेण नवत्वस्योदाहरणं प्रस्तौति निद्रेत्यादिना— वधूः निद्राकैतविनः प्रियस्य वदने वक्त्रं विन्यस्य बोधत्रासनि-

रुद्धचुम्बनरसा अपि आभोगलोलं स्थिता वैलक्ष्याद् विमुखीभवेद् इति पुनः अनारम्भिणः तस्य अपि साकाङ्क्षप्रतिपत्तिहृदयं रतेः पारं तु यातं नाम इति पदव्यवस्था।

वधूः= नवपाणिग्रहणा, निद्राकैतविनः= कृतकस्वापस्य, न तु निद्रितस्य, प्रियस्य= पत्युः, वदने= मुखे, वक्त्रं= मुखं, विन्यस्य= आसज्य, बोधत्रासविरुद्ध-चुम्बनरसा= बोधस्य निद्राभङ्गस्य त्रासेन भयेन निरुद्धो नियन्त्रितः कथमपि चुम्बनस्य रसोऽभिलाषो यया सा तादृशी, अपि, आभोगलोलं= आभोगे चुम्बनादिसुरतकर्मणि लोलं साभिलाषत्वाच्चञ्चलं यथा स्यात्तथा स्थिता– न तु चुम्बितुमशकन्नैवापि तस्मान्निवर्तितुं तेनैव भोगार्थं साभिलाषमत एव चञ्चलं मनः कथञ्चिन्नियम्य स्थिता, वैलक्ष्यात्= प्रबोधावगमजह्रिया, विमुखीभवेत्= चुम्बनादितो निवृत्तास्याद्, इति= हेतोः पुनः, अनारम्भिणः= अनुपक्रान्तचुम्बना-दिकर्मणः, अपि, तस्य= प्रियस्य, साकाङ्क्षाप्रतिपत्तिः= साभिलाषप्रवृत्तिः– रुहरुहिकाकदर्थित न तु चरितार्थीकृतमनोरथं, हृदयं, रतेः= आह्लादातिशयस्य, पारं= परिणतत्वं, तु, यातं= प्राप्तं, नाम= इति सम्भाव्ये इति।

इत्यादेः, श्लोकस्य= पद्यस्य,

तादृशस्यैवार्थस्य प्रतिपादकं प्राचीनपद्यमवतारयति शून्यमित्यादि– वासगृहं शून्यं विलोक्य शयनात् शनैः किञ्चित् उत्थाय निद्राव्याजं उपागतस्य पत्युः मुखं सुचिरं निर्वर्ण्य विस्रब्धं परिचुम्ब्य, गण्डस्थलीं जातपुलकां आलोक्य हसता प्रियेण लज्जानम्रमुखी वाला चिरं चुम्बिता इति पदव्यवस्था।

वासगृहं= शयनकक्षं, शून्यं= जनान्तररहितं, विलोक्य= दृष्ट्वा शयनात्= तल्पात्, शनैः= मन्दं, किञ्चित्पूर्वार्द्धेन उत्थाय, निद्राव्याजं= स्वापमिषं, उपाग-तस्य= प्राप्तस्य–निद्रामभिनयतो जाग्रतोऽपि, पत्युः= प्रियस्य, मुखं= वदनं, निर्वर्ण्य= प्रणयातिरेकेण लोचनाभ्यां निपीय, विस्रब्धं= भृशं यथा स्यात्तथा, परिचुम्ब्य– कपोलनेत्रप्रान्तोष्ठादिषु चुम्बनं कृत्वा, गण्डस्थलीं= कपोलप्रदेशं, जातपुलकां= समुत्पन्नरोमाञ्चां, आकोक्य= दृष्ट्वा, हसता= हृष्यता, प्रियेण= बल्लभेन, लज्जानम्रमुखी= ह्रिया नतवदना, बाला= नवोढा, चिरं= बहुकाल-मातृप्तेः, चुम्बितेति।

इत्यादिषु श्लोकेषु= समानार्थप्रकाशककाव्येषु, सत्सु– विद्यमानेषु, अपि, नवत्वं= नूतनत्वमेव।

अत्र शून्यं वासगृहमित्यादावपि सम्भोगशृङ्गारस्यैवाभिव्यञ्जनेति उभयोः को भेद इति नैव चिन्तनीयम्। तत्र परिचुम्बनं सम्पन्नं लज्जाऽपि स्वशब्देनोक्ता, प्रथमपद्ये तु उभयोरेव परस्पराभिलाषप्रसरस्य या निरोधरपरम्परा तस्या यत्पर्य-वसानं तस्यासम्भवने या रतिरुक्ता सोभयोरप्येकस्वरूपचित्तवृत्युनु प्रवेशमा-

चक्षाणा रति सुतरां पोषयति इति वैशिष्ट्यम्। समानेऽपि रसादिध्वनौ भङ्गयन्त-राश्रयेणार्थस्योपस्थापनात्तस्य, नवत्वं सिध्यतीति बोध्यम्।

तस्यैवोदाहरणान्तरं प्रस्तौति दाढर्याय यथेत्यादिना— वा= अथवा, यथा। तदुपस्थापयति तरङ्गेत्यादि— 'तरङ्गभ्रूभङ्गा' इत्यादिश्लोकस्य, 'नानाभङ्गिभ्रमद्भ्रूः' इत्यादिश्लोकापेक्षया, अन्यत्वं= नवत्वमिति।

अत्र 'तरङ्गभ्रूभङ्गा' इत्यादिपद्यं तु व्याख्यातचरमेव द्वितीयं त्वन्वेष्टव्यम्।

इस प्रकार अविवक्षितवाच्यध्वनि के अर्थान्तरसङ्क्रमित वाच्य भेद के सम्पर्क से पुरातन भी अर्थ के नवीनत्व का उदाहरण देकर अब विवक्षितान्यपरवाच्य ध्वनि के असंलक्ष्यक्रमव्यङ्ग्य एवं संलक्ष्यक्रमव्यङ्ग्य प्रभेदों के सम्पर्क से पुरातन भी अर्थ का नवीनत्व उदाहृत करने के प्रसङ्ग में पहले भङ्गयन्तर से असंलक्ष्यक्रमव्यङ्ग्य का सम्पर्क होने पर पुरातन अर्थ में नवत्व का उदाहरण प्रस्तुत करते हैं—

नववधू नींद का बहाना करके सोए हुए प्रिय के मुख पर मुख रखकर जाग जाने के भय से रोका गया है चुम्बन का आस्वाद जिससे ऐसी भी भोग के लिए लालायित होकर रह गई, वैलक्ष्य अर्थात् लक्ष्य से विपरीत हो जाने से उत्पन्न लज्जा आदि के कारण कहीं रति से विमुख न हो जाय, इस हेतु ही (चुम्बन का) आरम्भ न करते हुए उसका भी आकाङ्क्षा से भरपूर प्रवृत्ति वाला हृदय रति के पार पहुंच ही गया।

इत्यादि श्लोक का

"शयन कक्ष को अन्य परिजनों से रहित होने से शून्य, पाकर विस्तर से धीरे से थोड़ा ही उठकर नींद में होने का बहाना करनेवाले पति के मुख को बड़ी देर तक निहार कर दृढ़ता से चुम्बन कर लेने से उत्पन्न रोमाञ्च से युक्त गण्डस्थली को देखकर हंसते हुए प्रिय के द्वारा लज्जा से नतवदनवाली बाला बहुत देर तक चूमी गई।"

इत्यादि श्लोकों के होते हुए भी नवीनता है।

कहने का आश्रय यह है कि दोनों ही उक्त श्लोकों में असलक्ष्यक्रमव्यङ्ग्य का ही आश्रय है फिर भी दूसरे में लज्जा सञ्चारीभाव स्वशब्दवाच्य है और चुम्बन सम्पन्न हो चुका है इसके विपरीत पहले में परस्पर नितान्त साभिलाष है लेकिन पति के जग जाने के भय से नायिका पति के मुख में मुख धर कर भी चुम्बन नहीं कर सकती औश्र वैलक्ष्य (लाज) के कारण नायिका के रति से विमुख हो जाने के भय से पति भी चुम्बन का आरम्भ नहीं कर पा रहा है फिर भी दोनों का हृदय इस तहर आकाङ्क्षा से भरपूर है कि दोनों रति के उस पार पहुँचते हैं। अतः इसमें उाकाङ्क्षित रति सम्पन्न रति से बहुत अधिक पराकाष्ठा में पहुँच गई हैं। अतः नवीनता है।

अथवा जैसे—

'तरङ्गभ्रूभङ्गा' इत्यादि श्लोक का 'नानाभङ्गिभ्रमद्भ्रूः' इत्यादि श्लोक की अपेक्षा नवीनत्व है।

यहाँ यह विचारणीय है कि तरङ्गभ्रूभङ्गा' आदि पद्य तो व्याख्यातचर है लेकिन दूसरे का पूरा रूप अज्ञात होने से उसका विवरण उपलब्ध नहीं है।

ध्वन्या०— तथाहि विवक्षितान्यपरवाच्यस्यैव शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण नवत्वम्— ''धरणीधारणायाधुना त्वं शेष:' इत्यादे:।

शेषो हिमगिरिस्त्वं च महान्तो गुरव: स्थिरा:।
यदलङ्घितमर्यादाश्चलन्ती विभ्रते क्षितिम्।।

इत्यादिषु सत्स्वपि। तस्यैवार्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेणनवत्वम्। यथा— 'एवंवादिनि देवषौ' इत्यादि श्लोकस्य।

कृते वरकथालापे कुमार्य: पुलकोद्गमै:।
सूचयन्ति स्पृहामन्तर्लज्जयावनताननाः।।

इत्यादिषु सत्सु। अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविप्रौढोक्तिनिष्पन्नशरीरत्वेन नवत्वम्। 'यथा सज्जेइ सुरहिमासो' इत्यादे:?

सुरभिसमये प्रवृत्ते सहसा प्रादुर्भवन्ति रमणीया:।
रागवतामुत्कलिका: सहैव सहकारकलिकाभि:।।

इत्यादिषु सत्स्वप्यपूर्वत्वमेव।

अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरत्वेन नवत्वम्। यथा— 'वाणिअअ हत्थिदन्ता' इत्यादिगाथार्थस्य।

करिणीवेहव्वअरो मह पुत्तो एक्ककाण्डविणिवाइ।
हअसोन्हाएं तह कहो जह कण्डकरण्डअं वहइ।।
(करिणिवैधव्यकरो मम पुत्र एककाण्डकरण्डकं वहति।।)

इतिच्छाया।

एवमादिष्वर्थेषु सत्स्वप्यनालीढतैव।

यथा व्यङ्ग्यभेदसमाश्रयेण ध्वने: काव्यार्थानां नवत्वमुत्पद्यते, तथा व्यञ्जकभेदसमाश्रयेणापि। तत्तु ग्रन्थविस्तरभयान्न लिख्यते स्वयमेव सहृदयैरभ्यूह्यम्।

लीला— इत्थं विवक्षितान्यपरवाच्यस्यासंलक्ष्यक्रमव्यङ्ग्यव्यङ्ग्यभेदेन सह समन्वयात्प्राक्त नस्याऽप्यर्थस्य नवत्वमुदाहृत्य सम्प्रति तस्यैव संलक्ष्यक्रम-व्यङ्ग्यभेदेन सह समन्वयेन पुरातनस्याप्यर्थस्यानालीढत्वमुदाहर्तुमुपक्रममाण: प्रथमं शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण प्राक्तनस्यार्थस्य नवत्वोदाहर-

णायोपक्रमते तथेत्यादिना तथा हिं, विवक्षितान्यपरवाच्यस्य, एव, शब्दशक्त्युद्ध-वानुरणनरूपव्यङ्ग्यप्रकारसमाश्रयेण= संलक्ष्यक्रमो यः शब्दशक्त्युत्थोऽनुस्वानो-पमव्यङ्ग्यभेदस्तस्यालम्बनेन, नवत्वं=नूतनत्वं, यथा— ''धरणीधारणायाधुना त्वं शेषः'' धरणीधारणाय= धरण्याः पृथिव्याः राज्यस्य च धारणाय वहनाय रक्षणाय च, त्वं= भवान्, अधुना= सम्प्रति वर्तमानपरिस्थितौ, शेषः= अनन्तो वा अवशिष्ट, इति, इत्यादेः= इत्यादिकथनस्य।

तस्यैवार्थस्य पुरातननिबन्धन प्रस्तौति शेष इत्यादिना— शेषः= अनन्तः, हिमगिरिः= प्रालेयाद्रिः, त्वं= भवान्, मण्डलेश्वरश्च, महान्तः= महिममण्डिताः, स्थिराः= निश्चलाः, गुरवः= गौरवशालिनः, स्थ, यत्, यतः, अलङ्घितमर्यादाः= अनतिक्रमान्तसीमानः, एव, चलन्तीं= कम्पमानां सगतिकां, भुवं= पृथिवीं, विभ्रते= धारयन्ति इति। (अत्र दीधितिकारः 'बिभ्रते' इति पाठं विनिह्नुत्य 'बिभृथ' इति पठति। तदपि समीचीनमेव। विभ्रते इंति पाठे पूर्वार्द्धस्योत्तरार्द्धेन समर्थना-दर्थान्तरन्यासोपस्थित्या वयं तु तदेवानुसरामः) दीपशिखाकारस्तु मूले 'बिभ्रते' इत्येव पठित्वा व्याख्यावसरबिभृथ इति पदं धारयथ पालयथ इति व्याख्याति। तारावतीकारस्तु दीधितिमनुसरत्यत्र।)

इत्यादिषु= इत्थम्प्रभृतिषु, सत्सु= विद्यमानेषु, अपि, नवत्वमिति।

अत्रद्वयोरेव वाक्ययोरर्थसाम्येऽपि प्रथमवाक्ये शेषशब्दशक्तिजन्यानुस्वा-नोपमव्यङ्ग्यध्वनिसमाश्रयेणार्थस्य नवत्वमिति।

एवमेवार्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण नवत्वमुदाहरति तस्येत्या-दिना— तस्य= पुरातनस्याप्यर्थस्य, अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण= अर्थशक्तिजन्यानुस्वानोपमव्यङ्ग— यावलम्बनेन, नवत्वं= नवीनत्वं, यथा 'एवं वादिनि देवर्षौ' इतयादिश्लोकस्य,

''एवंवादिनि देवर्षो पार्श्वे पितुरधोमुखी।
लीलाकमलपत्त्राणि गणयामास पार्वती।।''

इत्यस्य

तत्समानार्थकं प्राक्तनपद्यमुपस्थापयति कृत् इत्यादिना— कुमार्यः वरक-थालापे कृते लज्जया अवनताननाः सत्यः पुलकोद्‌गमैः अन्तःस्पृहां सूचयन्ति इति पदव्यवस्था।

कुमार्यः= अपरिणीता बालाः, वरकथालापे= वरस्य पाणिग्रहीतुः कथालापे वृत्तान्तसंलापे, कृते= विहिते सति, लजजया= ह्रिया, अवनताननाः= नम्रीकृ-तवदनाः, सत्यः, पुलकोगद्मैः= रोमाञ्चोद्भवैः, अन्तः= हृदये, स्पहां= अभिलाषां, सूचयन्ति= जनयन्ति इति।

अत्रापि द्वयोरपि समानार्थकत्वेऽपि द्वितीये लज्जास्पृहयोः शब्दवाच्यत्वेन

न तथा चमत्कारिता यथा प्रथमे मुखनमनलीलाकमलपत्रगणनाव्यापारसंलग्न-कसूचितस्पृहालज्जाभ्यामिति। तेन समानेप्यनुभावे तस्य वाच्यत्वापेक्षया व्यङ्ग्यत्वं नवत्वे हेतुः।

तथैव कविप्रौढोक्तिनिबद्धार्थशक्त्युद्भवानुस्वानोपमव्यङ्ग्यसमाश्रयेण प्राक्त-नस्याप्यर्थस्य नवत्वमुदाहर्तुमुपक्रमते अर्थेत्यादिना— अर्थशक्त्युद्भवानुरणनरूप-व्य ङ्ग्यस्य, कविप्रौढोक्तिनिर्मितश— रीरत्वेन= लोकेऽप्यप्रसिद्धस्यार्थस्य कविप्रो-ढोक्त्यायदवस्थितिस्तेन, नवत्वं, यथा 'सज्जेइ सुरहिमासो' (सज्जयति सुरभि-मासो= इत्यादेः।

तत्समानार्थकं पद्यमुपस्थापयति सुरभीत्यादिना— सुरभिसमये प्रवृत्ते सह-कारकलिकाभिः सह एव रागवतां रमणीयाः उत्कलिकाः सहसा प्रादुर्भवन्ति इति पदव्यवस्था।

सुरभिसमये= वसन्ततौ, प्रवृत्ते= आगते सति, सहकारकलिकाभिः= रसाल-मञ्जरीभिः, सह, एव रागवतां= प्रणयिजनानां, रमणीयाः= हृद्याः, उत्कलिकाः= उत्कण्ठाः, सहसा= अनायासमेव, प्रादुर्भवन्ति= उत्पद्यन्त इति।

इत्यादिषु= तत्समानार्थकद्योतकेषु पद्येषु, सत्सु= विद्यमानेषु, अपि, अपूर्व-त्वं= नवत्वमेवेति।

अत्र हि द्वितीयपद्यगतार्थपिक्षञया प्रथमपद्यगतार्थस्य नवत्वं कविप्रौढोक्तिनि-र्मितशरीरार्थशक्त्युद्भवानुस्वानोपमव्यङ्ग्यसमाश्रयेणेति। अत्र हि वाच्यस्यापि नवत्वं न तु ध्वेनेरेवेति दीधितौ स्पष्टम्।

सम्प्रति कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नशरीरार्थशक्त्युद्भवानुस्वानोपम-व्यङ्ग्यध्वनिसम्पर्केण प्राक्तनस्यार्थस्य नवत्वमुदाहर्तुमुपक्रमते अर्थेत्यादिना स्पष्ट-मेंव। तदुदाहरति यथा— वाणिअअ हत्थिदन्ता ('वाणिजक हस्तिदन्ता') इत्यादि-गाथार्थस्य—

तत्समानार्थनिवद्धां प्राचीनगाथामुपस्थापयति 'करिणी' इत्यादिना— मह (मम) करिणीवेहव्वअरो (करिणीवैधव्यकरः) एक्ककाण्डविणिवाइ (एककाण्ड-विनिपाती) पुत्तो (पुत्रः) हअसोन्हाए (हतस्नुषया) तह (तथा) कहो (कृतः) जह (यथा) कण्डकरण्डअ (काण्डकरण्डकं) वहइ (वहति) इति पदव्यवस्था।

मम= मे, करिणीवैधव्यकरः= हस्तिघातेन क़रिणीनां हस्तिनीनां वैधव्यस्य विध्नवावस्थायाः करो विधायकः, एककाण्डविनिपाती= एकेन नापि द्वाभ्यां, काण्डेम्न शरेण विनिपाती पातनशीलः, पुत्रः= सुतः, हतस्नुषया= विवेकहीनसत-तसुरतरतवध्वा, तथा= तादृशः, कृतः= विहितः, यथा, काण्डकरण्डकं वाण-तूणीरमेव, वहति= धारयति, इति।

एवमादिषु= इत्यादिषु, अर्थेषु, सत्सु= प्रकाशितेष्वपि, अर्थस्य अनालीढता= पूर्वमनास्वाद्यतैवेति।

अत्रोभयोरेव समानोऽर्थः= कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नशरीरश्च तथापि द्वितीयपद्यगतार्थापेक्षया प्रथमपद्यगतार्थस्यानालीढत्वं तु प्रथमे पद्ये 'लुलितालकमुखी इति पदप्रकाशितध्वनिसमाश्रयेणेति।

(अत्रान्तरे दीधितोः, 'साअर'........अस्य गाथार्थस्य 'उदित्तरकआभोआ' एतद्गाथाऽर्थे न पौनरुक्त्यम्' इति पाठो दत्तः। स च लोचने तदनुवर्तिन्यां बालप्रियायां चानुल्लिखित इत्युपेक्षितोऽस्माभिः)

प्रकरणमुपसंहरन् वृत्तिकारो व्यञ्जकेऽपि तद्व्यापकतां निर्दिशति यथेत्यादिना— यथा= येन प्रकारेण, व्यङ्ग्यभेदसमाश्रयेण= प्रतीयमानार्थ प्रभेदावलम्बनेन, ध्वनेः, काव्यार्थानां= काव्यविषयस्य, च, नवत्वं= अनालीढत्वं, उत्पद्यते= उदेति, तथा, व्यञ्जकभेदसमाश्रयेण= व्यञ्जकभेदानां प्रबन्ध—सङ्घटना—वाक्य—पद—पदांश—वर्ण—लिङ्ग—वचनादि—रूपाणां समाश्रयेण, अपि। तत्, तु, ग्रन्थविस्तरभयात्= प्रबन्धगौरवभिया न, लिख्यते= प्रदर्श्यते सहृदयैः, स्वयमेव, अभ्यूह्यं= अन्वेषणीयं ग्रन्थान्तरेष्विति।। २।।

विवक्षितान्यपरवाच्य के ही शब्दशक्ति से उत्पन्न अनुरणनरूप व्यङ्ग्य प्रकार के समाश्रय से नवत्व जैसे—

'धरणी के धारण के लिए अभी आप ही शेष हैं'

इत्यादि का—

शेष, हिमालय एवं आप ये ही महिमाशाली, स्थिर एव गौरवपूर्ण हैं। यह है कि मार्यादा का अतिक्रमण न करनेवाले ही चलायमान पृथ्वी को धारण कर लेते हैं।' इत्यादि के रहते हुए भी।

कहने का आशय यह है कि दूसरे पद्य में सामान्य वाच्य के रूप में जो राजस्तुति है वही पहले पद्य में 'शेष' शब्द से व्यक्त होता है। 'धरणी के धारण के लिए अब आप शेष हैं' का वाच्यार्थ तो आप ही अवशिष्ट हैं, आपके अलावा कोई नहीं है। इसका दूसरा भी अर्थ है कि जैसे धरणी को शेषनाग अपने सर पर धारण किए हुए हैं वैसे आप राज्य के भार वहन करने में। इस तरह शेष शब्द से उत्पन्न अनुरणनरूपव्यङ्ग्य के सम्पर्क से यहाँ पुराना भी अर्थ नया हो गया है।

उसी का ही (स्वतः सम्भवी) अर्थशक्ति से उत्पन्न अनुरणन रूप व्यङ्ग्य के आश्रय से नवत्व जैसे—

'एवं वादिनि देवर्षौ'

इत्यादि श्लोक का

वर सम्बन्धी बातें चलने पर कुमारियाँ लज्जा से सर झुकाती हुई रोमाञ्च के उदगम से भीतर उत्पन्न अभिलाषा को सूचित करती हैं।

इत्यादि के रहने पर भी।

कहने का आशय यह है कि दोनों ही पद्यों में अर्थ तो समान ही है किन्तु दूसरे अभिलाषा, लज्जा आदि स्वशब्दवाच्य हैं, पहले में वे ही व्यङ्ग्य हैं और स्वतः

सम्भवी अर्थ रूप पार्वती के मुखनमन एवं लीलाकमलपत्र की गणना आदि की शक्ति से अनुरणन रूप से आक्षिप्त हैं। अतः दोनों ही भावों में नवत्व है।

अर्थशक्ति से उद्भव अनुरणनरूप व्यङ्ग्य का कविप्रौढोक्तिमात्र से निर्मित शरीर के रूप में नवत्व जैसे–

'सज्जेहि सुरहिमासो'

इत्यादि का

''वसन्त ऋतु के आ जाने पर रसाल वृक्ष में मञ्जरी के साथ–साथ प्रणयी जनों में रमणीय उत्कण्ठाएँ एकाएक उपजते हैं।''

इत्यादि के रहते हुए भी अपूर्वत्व है। यह अपूर्वत्व वसन्त के कामोद्दीपकत्व के अतिशयता के प्रकाशन से है।

अर्थशक्ति से उत्पन्न अनुरणनरूप व्यङ्ग्य कविनिबद्धवक्तृप्रौढोक्तिमात्र–निष्पन्नशरीर के रूप में नवत्व जैसे–

'वाणिअअ हत्थिदन्ता'

इत्यादि गाथा के अर्थ का–

'हथिनियों विधवा बनाने वाले एक ही बाण में गिरा पाने वाले मेरे लड़के को दुष्ट पतोहू ने ऐसा कर दिया जैसे वह बाण की टोकरी ही ढोता है।''

इत्यादि अर्थों के रहने पर भी अनास्वाद्यता ही है।

यहाँ भी दोनों में समान ही अर्थ के रहने पर भी पहले में 'लुलितालकमुखी' शब्द की अर्थशक्ति से आक्षिप्त ध्वनि के कारण वैशिष्ट्य है, अतः अर्थ में नवीनत्व है।

जैसे व्यङ्ग्य भेद के समाश्रय से ध्वनि से काव्यगत अर्थों में नवीनत्व उत्पन्न होता है वैसे ही व्यञ्जक भेद के आश्रय से ही। (वह जो है उसका यहाँ ग्रन्थ के विस्तार के भय से उल्लेख किया नहीं गया और उसका सहृदयों को स्वयं ही अन्वेषण कर लेना चाहिए।

कहने का आशय यह है कि जैसे व्यङ्ग्य के सभी भेदों (ध्वनि के मूल ३५ भेद एवं गुणीभूतव्यङ्ग्य के भी उतने ही भेद एवं उनके संकर एवं संसृष्टि रूप) के ही आश्रय से पुरातने अर्थ भी नवत्व प्राप्त कर लेता है, उसी तरह व्यञ्जक के सभी भेदों (प्रबन्ध, सङ्घटना, वाक्य, पद, पदांश, वर्ण, लिङ्ग, वचन, आदि) के आश्रय से भी प्राक्तन अर्थ नवीन होता है।। २।।

कारिका– युक्त्यानुनयासर्तव्यो रसादिर्बहुविस्तरः।
मितोऽप्यनन्ततां प्राप्तः काव्यमार्गो यदाश्रयात्।। ३।।

ध्वन्या०– बहुविस्तारोऽयं रसभावतदाभासतत्प्रशमलक्षणो मार्गो यथास्वं विभावानुभावभेदकलनया यथोक्तं प्राक्। स सर्व एवानया युक्त्यानुसर्तव्यः।

यस्य रसादेराश्रयादयं काव्यमार्गः पुरातनैः कविभिः सहस्रसङ्–

ख्यैर्वाबहुप्रकारं क्षुण्णत्वान्मितोऽप्यनन्तामेति। रसाभावादीनां हि प्रत्येक विभावानुभावव्यभिचारिसमाश्रयादपरिमितत्वम्। तेषां चैकेकप्रभेदापेक्षयापि तावज्जगद्वृत्तमुपनिबध्यमानं सुकविभिस्तदिच्छावशादन्यथास्थितमप्य-न्यथैव विवर्तते। प्रतिपादितं चैतेच्चित्रविचारावसरे।

गाथा चात्र कृतैव महाकविना—

अतट्ठिए वि तहसण्ठिए व्व हिअअम्मि जा णिवेसेइ।
अत्थविसेसे सा जअइ विकडकइगोअरा वाणी।
(अतथास्थितानपि तथा संस्थितानिव हृदये या निवेशयति।
अर्थविशेषान् सा जयति विकटकविगोचना वाणी।।)

इतिच्छाया।

तदित्थं रसाभावाद्याश्रयेण काव्यार्थानामानन्त्यं सुप्रतिपादितम्।।३।।

लीला— एवं ध्वनेश्चतुर्णामेव मौलभेदानां समाश्रयेण पूर्वनिबद्धार्थस्य नवत्वं सोदाहरणं प्रतिपाद्य सम्प्रति अलक्ष्यक्रमभेदेषु अतिदेशद्वारा सर्वोपभेदविषयं निर्दिशति कारिकाकारः युक्त्येत्यादिना—अनया युक्त्या बहुविस्तरः रसादिः मिथः अपि अनुसर्तव्यः यदाश्रयात् मितः अपि काव्यमार्गः मिथः अपि अनन्ततां प्राप्तः (भवति) इति पदव्यवस्था।

अनया= पूर्वप्रतिपादितया 'ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्येत्यादिकारिकानि-र्दिष्टया, युक्त्या= तन्त्रेण, उपायेन, बहुविस्तरः= प्रकाराणां विविधतयाऽतिप्रपञ्चः, रसादि= रसभावादिध्वनिः, मिथः= परस्परं, गुणीभूतव्यङ्ग्येन, वाच्यालङ्कारेण वा संकरसंसृष्टिः तया च, अपि, अनुसर्तव्यः= काव्ये प्रयोक्तव्यः, यदाश्रयात्= यस्य सभेदोपभेदरसादिध्वनेः आश्रयादालम्बनेन मितः= परिसीमितः, अपि, काव्यमार्गः= काव्यवर्त्म मिथः= परस्परमपि अनन्ता= अपरिच्छिन्नत्वेन निरवधितां, प्राप्तः= परिणतः, भवतीति शेषः।

तेन काव्यकारेण ध्वनिप्रभेदोपभेदानां तेषां परस्परं गुणीभूतव्यङ्ग्यवाच्या लंकारसंकरसंसृष्टिरूपाणाञ्च पूर्वप्रतिपादितरीत्या प्रयोगः कर्तव्यो येन परिमित विषयमपि काव्यमप्यपरिच्छिन्नतां यातीति।

कारिकां विवृणोति वृत्तिकारः बहुविस्तार इत्यादिना— रसभावतदाभा-सतत्प्रशमनलक्षणः= रसाः शृङ्गारादयो भावा रत्यादयो रसाभासो भावाभासश्च भावप्रशमनञ्चेत्यादिस्वरूपः, अयं= पूर्वव्याख्यातः, मार्गः= पन्था, यथास्वं= यथायथं, विभावानुभावप्रभेदकल्पनया= विभावस्य रसालम्बनोद्दीपनलक्षणस्य अनुभावस्य भावोद्बोधनानन्तरचेष्टादेर्ये प्रभेदास्तेषां कल्पनया प्रतिपादनेन बहविस्तारः= नितान्तविस्तृतः, यथा, प्राक्= पूर्वमेव, उक्तं= निर्दिष्टमेव 'तस्याङ्गानां

प्रभेदा ये प्रभेदाः स्वगताश्च ये। तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पना' इत्यत्र।
सः= तादृशो मार्गः, सर्वः= निखिलः, एव, अनया= पूर्वप्रतिपादितया, युक्त्या= उपायेन, अनुसर्तव्यः= प्रयोज्य इति। यस्य, रसादेः, आश्रयात्= आलम्बनेन, अयं, काव्यमार्गः= काव्यवर्त्म सहस्रैः, वा असङ्ख्यैः= परिगणयितुमशक्यैः, पुरातनैः= प्राचीनैः, कविभिः= काव्यकारैः, बहुप्रकारं= अनेकविधत्वेन, क्षुण्णत्वात्= प्रयुक्तत्वात्, मिथः= परस्परं, अपि, अनन्ततां= अपरिच्छिन्नतां, एति= प्राप्नोति। रसभावादीनां, हि= निश्चयेन, प्रत्येकं= एकैकं, विभावानुभावव्यभिचारिसमाश्रयात्= विभाव आलम्बनोद्दीपनलक्षणः अनुभावो भावोद्बोधनानन्तरभाविचेष्टालक्षणः, व्यभिचारिभावः सहकारितया अस्थिरभावाः, तेषां समाश्रयात् आधारत्, अपरिमितत्वं= निरवधित्वम्। तेषां, च, एकैकप्रभेदापेक्षया= प्रत्येकभेदोपभेददष्ट्या, अपि, तावत्= इति साकल्येन, सुकविभिः= सिद्धहस्तकाव्यकारैः, उपनिबध्यमानं= काव्यविषयीकृतं, जगद्वृत्तं= सांसारिकवस्तु, अन्यथास्थितं= अन्येनैव रूपेण वर्तमानं, अपि, तदिच्छावशात्= तस्य कवेरिच्छावशात् कल्पनाबलात्, अन्यथा= इतरथा, एव, विवर्तते= परिणमति। एतत्, चित्रविचारावसरे= चित्रकाव्यविनिर्णयसमये, प्रतिपादितं= निरूपितं, चेति। अत्र= विषयेऽस्मिन्, महाकविना, गाथा, कृता= प्रणीता, एव। तदुपस्थापयति अतहट्ठिए इत्यादिना— जा (या) अतहट्ठिए (अतथास्थितान्) विर (अपि) अत्थविसेसे (अर्थविशेषान्) तहसण्ठिए (तथासंस्थितान्) व्व (इव) हिअअम्मि (हृदये) णिवेसेइ (निवेशयति) सा विकडकइगोअरा (विकटकविगोचरा) वाणी, जअइ (जयति) इति पदव्यवस्था।

या, अतथास्थितान्= अतद्रूपेण वर्तमानान्, अपि, अर्थविशेषान्= वस्तूनि, तथास्थितान्= यथोपवर्णितरास्तेनैव रूपेण वर्तमानान्, इव= यथा, हृदये= हृत्पटले, निवेशयति— स्थापयति, सा= तादृशी, विकटकविगोचरा= विकटाः सकला ये कवयः काव्यकारास्तेषां गोचना विषयभूता, वा विकटो निस्सीमा कविगोचरः काव्यकारविषयो वर्णनीयोऽर्थो यस्याः सा तादृशी, वाणी= भारती, जयति= सर्वोत्कृष्टत्वेन वर्तत इति। उपसंहरति तदित्यादिना—तत्, इत्थं, रसभावाद्याश्रयेण= रसीभवादीनामवलम्बनेन, काव्यार्थानां= काव्यविषयाणां, आनन्त्यं= अपरिमेयत्व, प्रतिपादितं= निरूपितमिति।

प्रकरणस्यास्यायमाशयः= रस—भाव—रसाभास—भावाभास— भावप्रशमनादिरूपोऽयमसंलक्ष्यक्रमध्वनिमार्गः प्रत्येकस्यापि विभावानुभावप्रभेदनेनात्यन्तविसतृतोऽसङ्ख्येयत्वेन। तदाश्रयेण सीमितमपि काव्यवस्तु परस्परमपि अनवधित्वमायाति। रसाद्याश्रयेण काव्यवस्तु न केवलं सुविस्तृतं भवत्यपितु विचित्रमपि रसादितात्पर्यवता कविना स्पृष्टमसम्भवमपि सम्भवत्वेनावभासतें इत्थं रसभावाद्याश्रयेण काव्यार्थानामपरिमितत्वं वैचित्र्यञ्च सिद्ध्यतीति प्रागुक्तं पूर्वार्थान्वययुक्ताऽपि वाणी ध्वन्यावलम्बेन नवत्वमायातीति।।३।।

इस प्रकार ध्वनि के मूल चार भेदों के समाश्रय से पुरातन भी अर्थ का नवीनत्व उदाहृत कर अब रसादि ध्वनि में सभी के विषयत्व का अतिदेश के द्वारा निर्देश करते हैं–

इसी युक्ति के द्वारा अत्यधिक विस्तारवाली एक रसादि ध्वनि का अनुसरण करना चाहिए जिसके आश्रय से परस्पर में भी काव्यमार्ग अतन्तता को प्राप्त होता है।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं–

यह रस, भाव, रसाभास, भावाभास, भावप्रशम आदि लक्षणवाला मार्ग अपने अनुकूल विभाव अनुभाव इत्यादि प्रभेदों की योजना के द्वारा बहुत प्रकार का है जैसा कि पहले कहा जा चुका है। उन सभी का इसी तरीके से अनुसरण किया जाना चाहिए। जिस रस इत्यादि के आश्रय से यह काव्यमार्ग हजारों अथवा असङ्ख्य कवियों के द्वारा अनेक प्रकार से व्यवहृत होने के कारण परिमित भी परस्पर में अनन्तता को प्राप्त हो जाता है। रस, भाव इत्यादि में निस्सन्देह प्रत्येक का विभाव, अनुभाव और व्यभिचारीभाव के आश्रय से अपरिमितत्व है उनमें एक-एक भेद की दृष्टि से भी अच्छे कवियों के द्वारा उपनिबध्यमान जगद्वृत्त (जगत् का चरित्र) जो है वह उनके इच्छावश अन्यथास्थित भी अन्यथा परिवर्तित हो जाता है। यह तथ्य चित्रकाव्य के निरूपण के अवसर पर कहा जा चुका है। इस विषय में महाकवि के द्वारा गाथा भी रची गई है–

''जो उस प्रकार से न भी रहे अर्थ विशेष को भी उसी तरह रहने के ढङ्ग से हृदय में विशिष्ट कर देती है उस सफल कवियों के विषय बनी वा सीमा से रहित है। वर्णनीय अर्थ जिसका ऐसी वाणी का जय हो।''

इस प्रकार रस भाव इत्यादि के आश्रय से काव्यार्थी का आनन्त्य प्रतिपादित हो गया।। ३।।

ध्वन्या०– एतदेवोपपादयितुमुच्यते–

कारिका– दृष्टपूर्वा अपि ह्यर्था काव्ये रसपरिग्रहात्।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः।। ४।।

लीला– सम्प्रति ध्वनिभेदेष्वपि रसादेर्नितान्तोपादेयता प्रतिपादककारिका-वतारणाय वृत्तिकृदुपक्रमते एतदित्यादिना एतत्= पूर्वविकृतं रसादिसम्पर्केण पुरातनस्याप्यर्थस्य नवत्त्वं, उपपादयितुं= उपपत्या निरूपयितुं, उच्चते= कथ्यते। (केचिदिमं वृत्तिकारकृतपरिकरश्लोकं मन्यन्ते वृत्तिग्रन्थेऽस्य व्याख्यानाभावाद् वृत्तिकारेणास्य विषयः पूर्वकारिकावृत्तिप्रसङ्गे एव व्याख्याततत्वाच्च। स्यादप्येतत्। तथापि परम्परावशाद्वयं कारिकारूपेणैव व्याख्यामः)

कारिकामवतारयति वृत्तिकृद् दृष्टपूर्वा इत्यादिना– काव्ये दृष्टपूर्वा अपि सर्वे अर्थाः रसपरिग्रहात् मधुमासे द्रुमाः इव नवा इव आभान्ति हि इति पदव्यस्था।

काव्ये= कविकृतौ, दृष्टपूर्वा= पूर्वमेवानुभूताः बहिः प्रत्यक्षादिभिः प्रमाणैः प्राक्तनैश्च कविभिश्च साधितपूर्वाः, अपि, सर्वेः= निखिलाः, अर्थाः= विषयाः,

रसेपरिग्रहात्= रसादिसमाश्रेण, मधुमासे= वसन्तसमये, द्रुमाः= वृक्षाः, इव, नवाः= नूतनाः, इव, आभान्ति= द्योतन्त इति।

यथा वसन्तसमये तरवस्तद्गौरवगौरविता नूतना इवाभान्ति तथैव रससमाश्रयेण तद्गौरवगौरविताः प्रत्यक्षमेव ज्ञाता वा कविभिर्निबद्धपूर्वा प्राक्तना अप्यर्था नवा इव द्योतन्त इति।

अब ध्वनि के भेदों में भी रस की अत्यधिक उपयोगिता के निर्देशक कारिका का अवतारण करने हेतु उपक्रम करते हैं।

इसी को उपपत्तिपूर्वक निरूपित करने के लिए कहा जाता है— ''काव्य में पहले देखे गए भी अर्थ रस के समाश्रय से वसन्त वृक्षों की तरह सभी नये लगते हैं।।४।।

ध्वन्या०— अत्र च पुनः पुनरुक्तमपि सारतयेदमुच्यते—

कारिका— व्यङ्ग्यव्यञ्जकभावेऽस्मिन्विविधे सम्भवत्यापि।
रसादिमय एकस्मिन् कविः स्यादवधानवान्।।५।।

ध्वन्या०— अस्मिन्नर्थानन्त्यहेतो व्यङ्ग्यव्यञ्जकभावे विचित्रे शब्दाना सम्भवत्यपि कविरपूर्वार्थलाभार्थी रसादिमय एकस्मिन् व्यङ्ग्यव्यञ्जक भावे यत्नादवदधीत। रसभावतदाभासरूपे हि व्यङ्ग्ये तद्व्यञ्जकेषु च यथानिर्दिष्टेषु वर्णपदवाक्यरचना प्रबन्धेष्ववहितमनसः कवेः सर्वमपूर्वं काव्यं सम्पद्यते। तथा च रामायणमहाभारतादिषु सङ्ग्रामादयः पुनः पुनरभिहिता अपि नवनवाः प्रकाशन्ते।

लीला— प्रतिपादितपूर्वस्यापि रसादिध्वनिप्राधान्यस्य दाढ्र्याय पुनर्निर्देशककारिकावतारणाय वृत्तिकृदुपक्रमते अत्रेत्यादिना— अत्र प्रसंगेऽस्मिन् पुनः पुनः= प्रकरणे— प्रकरणे उक्तं= प्रतिपादितं, अपि, सारतया= सारसङ्क्षेपरूपेण, इदम्, उच्चते= कथ्यते—

कारिकामवतारयति व्यङ्ग्येत्यादिना अस्मिन् व्यङ्ग्यव्यञ्जकभावे विविधे सम्भवति अपि कविः रसादिमये एकस्मिन् अवधानवान् स्यात् इति पदव्यवस्था।

अस्मिन्= अर्थानामानन्त्यनवत्वहेतुभूते, व्यङ्ग्यव्यञ्जकभावे= प्रतीयमानत्वप्रत्यायकत्वे, विविधे= नानाविधे, सम्भवति अपि, कविः, रसादिमये= रसाभावरूपे, एकस्मिन्, एव अवधानवान्= प्रयतः स्यादिति।

संभवत्यपि नैकविधे व्यङ्ग्यव्यञ्जकभावे कविः काव्यसिद्धये रसभावरूप एव तस्मिन् सदा प्रयतः स्यादिति। सिद्धे च रसे सर्वमेव सिध्यति सारम्।

कारिकां विवृणोति वृत्तिकार अस्मिन्नित्यादिना शब्दानां अस्मिन्= अर्थानन्त्यहेतौ काव्यार्थस्य निरवधित्वकारणभूते, विचित्रे, व्यङ्ग्यव्यञ्जकभावे, सम्भवति अपि, अपूर्बलाभार्थी= नवार्थेच्छुकः, कविः रसादिमये= रसभावरूपे,

एकस्मिन्= प्रधानभूते, व्यङ्ग्यव्यञ्जकभावे, यत्नात्= उद्यमेनैव, अवदधीत= अवधानयुक्तो भवेत्। हि= यतः रसभावतदाभासरूपे= रस रसाभासभावभा-वाभासरूपे, व्यङ्ग्ये तद्व्यञ्जकेषु= तस्य रसस्य भावस्य च व्यञ्जकेषु प्रकाशकेषु, यथानिर्दिष्टेषु= प्रतिपादितपूर्वेषु, वर्ण-पद-वाक्य-रचना प्रबन्धेषु तेषु तेषु, अवहितमनसः= प्रयतचेतसः, कवेः, सर्वं= निखिलं, एव, काव्यं= कविकर्म, अपूर्वं= नवीनं, एव, सम्पद्यते= सिद्ध्यति। तथा च, रामायणमहाभारतादिषु= तत्तदभिहितग्रन्थेषु, संग्रामादयः= युद्धप्रभृतयः, पुनः पुनः= भूयो भूयः अभिहिताः= कथिताः, अपि नवनवाः= नित्यनूतनाः प्रकाशन्ते= द्योतन्ते।

कथनस्यास्यायमाशयः— सभवत्यपि शब्दानां विविधे व्यङ्ग्यव्यञ्जभावे कविना रसादिपरकेण भाव्यं यत्नतो यतो रसादिव्यङ्ग्ये तद्व्यञ्जकेषु च प्रयतचेतसः कवे सर्वमेव काव्यमभिनवं चतत्कारातिशययुक्तञ्च भवतीति।

अनेक दृष्टि से प्रतिपादित भी रसादिध्वनि का प्राधान्य फिर से सुदृढ करने के लिए उसके शेष ध्वनियों से वैशिष्ट्य का निर्देश करने वाली कारिका के अवतारण हेतु वृत्तिकार उपक्रम करते हैं—

यहाँ भी बार-बार कहे गए भी तथ्य के सार के रूप में यह कहा जाता है—

कारिका का अवतारण करते हैं—

इस अर्थों के आनन्त्य का कारणभूत व्यङ्ग्यव्यञ्जकभाव के विविध प्रकार सम्भव होने पर भी कवि को रसादि रूप एक ही व्यङ्ग्यव्यञ्जकभाव में ज्यादा सावधान होना चाहिए।। ५।।

कहने का आशय यह है कि वस्तु ध्वनि एवं अलङ्कार ध्वनि होते हुए भी रस प्रवण होकर भी काव्य की आत्मा बन पाती है। अतः कवि को चाहिए कि वह उन पकार की ध्वनियों में भी रस ध्वनि पर ही ज्यादा ध्यान रखे क्योंकि वस्तुतः वही काव्य का सार है।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

शब्दों के इस अर्थ के आनन्त्य का कारणभूत विचित्र व्यङ्ग्यव्यञ्जकभाव के सम्भव होते हुए भी नवीन अर्थ की प्राप्ति में इच्छा रखने वाला एक ही रसादि रूप व्यङ्ग्य व्यञ्जक भाव में प्रयत बने। क्योंकि रस, भाव, एव उनके आभास रूप व्यङ्ग्य तथा उनके व्यञ्जक पहले बताए गए वर्ण, पद, वाक्य, रचना, प्रबन्ध आदि में अवहित मन वाले कवि का सम्पूर्ण काव्य ही अपूर्व बन जाता है। जैसे कि रामायण, महाभारत आदि में बार—बार कहे गए भी संग्राम आदि नये रूप में ही प्रकाशित हैं।

ध्वन्या०— प्रबन्धे चाङ्गी रस एक एवोपनिबध्यमानोऽर्थविशेषलाभं छायातिशयं च पुष्णाति। कस्मिन्निवेति चेत्— यथा रामायणे यथा वा महाभारते। रामायणे हि करुणो रसः स्वयमादिकविना सूत्रितः 'शाकः—श्लोकत्वमागतः' इत्येवं वादिना। निर्व्यूढश्च स एव सीतात्यन्त-वियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता।

महाभारतेऽपि शास्त्ररूपे काव्यच्छायान्वयिनि वृष्णिपाण्डवविरसाव-सानींवैमनस्यादयिन सामाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षण: पुरुषार्थ: शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचित:। एतच्चांशेन विवृतमन्यैर्व्याख्यावि-धायिभि:। स्वयमेव चैतदुद्गीर्णं तेनोदीर्णमहामोहमग्नमुज्जिहीर्षता लोकम-तिविमलज्ञानालोकदायिनालोकानाथेन—

यथा यथा विपर्येति लोकतन्त्रमसारवत्।
तथा तथा विरागोऽत्र जायते नात्र संशय:।।

इत्यादि बहुश: कथयता। ततश्च शान्तो रसो रसान्तरैर्मोक्षलक्षण: पुरुषार्थ: पुरुषार्थान्तरैस्तदुपसर्जनत्वेनानुगम्यमानोऽङ्गित्वेन विवक्षाविषय इति महाभारततार्प्यं सुव्यक्तमेवावभासते। अङ्गाङ्गिभावश्च यथा रसानां तथा प्रतिपादितमेव।

पारमार्थिकान्तस्तत्वानपेक्षया शरीरस्येवाङ्गभूतस्य रसस्य पुरुशार्थस्य च स्वप्राधान्येन चारुत्वमप्यविरुद्धम।

लीला— सम्प्रति काव्ये रसावस्थितिप्रकारं निर्दिशति प्रबन्ध इत्यादि-नाप्रबन्धे= महाकाव्यादौ नाटकादौ च, उपनिबध्मान: प्रयुज्यमान:, एक:, एव, अङ्गी= प्राधान्येनावस्थापित:, रस:= प्राधान्येन शृङ्गार-वीर-शान्तेष्वन्यतम:, अर्थविशेषलाभं= अभीष्टप्रयोजनसिद्धि, छायातिशयं= शोभाधिक्यं, च, पुष्णाति= बृहयति। कस्मिन्= कुत्र, इव, इति पृच्छ्यते चेत्, यथा, रामायणे, यथा, वा, महाभारते। कथमिति चेदित्थम्—रामायणे, शोक: श्लोकत्वमागत:'= क्रौञ्चयुग-लान्यतमघातदर्शनजन्यशोक: श्लोकत्वं— मा निषाद प्रतिष्ठां त्वमगम: शाश्वती: समा:। यत्क्रौञ्चमिथुनादेकमवधी: काममोहितम्, इति, आगत:= परिणत इति, (तदेव कालिदासोऽपि स्मरति 'श्लोकत्वमापद्यत यस्य शोक:' इति) इति, स्वयमेव, एवंवादिना, आदिकविना= वाल्मीकिना, करुण:= शोकस्थायिभा-वात्मक:, रस:, अङ्गित्वेन सूत्रित:। 'सीतात्यन्तवियोगपर्यन्त= सीताया: अत्यन्त-वियोगो धरणीप्रवेश: जन्यवियोगस्तत्पर्यन्तमेव, स्वप्रबन्ध= स्वकृतिं, रचयता= प्रणयता, तेन, स:= करुणरस:, अङ्गित्वेन, निर्व्यूढ:= प्रतिपालित: चेति।

(अत्र च 'सीतात्यन्तवियोगपर्यन्तमवे' इत्यत्रत्यमत्यन्तवियोगपदमादाय व्याख्यातृणां विमति:। लोचनकारस्तु अत्यन्तग्रहणेन निरपेक्षभावतया विप्रलम्भा-शङ्कां परिहरति 'इति निर्दिशन् जनापवादात्सीतापरित्यागपर्यन्तं, एव वाल्मी-किप्रबन्ध इत्याशयं व्यनक्ति। तत्रैव निरपेक्षभाववियोग: सम्पद्यते। दीधितिकारस्तु तत्सीतापातालप्रवेशवृत्तान्तेन सह योजयति।

दीपशिखाकारस्तु 'सीतापरित्यागजन्यनिरवधि वियोगावज्ञानं निर्मिमाणेन तेन। लोचनेमेवानुसरति। बालप्रियाकारस्तु मौनमवलम्बते। तारावतीकारो नैव स्पष्टं विवेचयति। वयन्तु प्रसंगेऽस्मिन् दीधितिमेवानुसर्तुमुत्सहामहे। यतोऽत्यन्त-वियोगस्तु मरणानन्तरमेव भवति सति जीविते तु कदाचिन्मिलनसम्भवात्। यदि परित्यागे व रामायणकथा समापिताऽऽदिकविना तदा तेन सीतां प्रति सर्वथाऽनुचितमेवाचरितं भवति यन्नितान्तमेवासम्भवि। तेन सीताधरणी प्रवेशपर्यन्तैव वाल्मीकिप्रणीतरामायणकथा, तदेव च संकेतो वृत्तिकारस्य)।

यच्च दीधितिकृता 'शोकः श्लोकत्वमागमतः' इति ध्वनिकारवचनमुक्तं तत्प्रमाद एव तस्य विपश्चितः। अस्य रामायणघटकत्वमेव बालकाण्डे द्वितीयस-र्गेऽन्तिमश्लोकस्यान्तिमपादे तद्दर्शनादिति तारावतीकारेणापि स्पष्टीकृतमेव।

प्रकरणस्यास्यायमाशयः-प्रबन्धे सत्स्वपि रसान्तरेषु प्रासङ्गिकेषु मुख्यत्वेनैक एव रसः प्रतिपाद्य आद्योपान्तम्। यथा रामायणे। तत्र हि क्रौञ्चमिथुनैकवध-दर्शनापराक्रान्दनश्रवणजशोकादारब्धः प्रबन्धः सीताधरणीप्रवेशवृत्तान्तं निर्वर्ण्य विरमते। तेन मुखसन्धौ निर्वहणे च करुणस्यैव जागरुकतेति सत्स्वपि तत्र प्रासङ्गिकत्वेन शृङ्गार-वीर-अद्भुत-रौद्र-भयानक-शान्त-हास्येषु करुणस्यैवा-ङ्गित्व तत्रैव कवेस्तात्पर्यविश्रान्तेश्चेति।

तस्यैवोदाहरणान्तरं प्रस्तौति महाभारत इत्यादिना—काव्यच्छायान्वयिनि= काव्यव्यवस्थानुसारिणि, शास्त्ररूपे= वाच्यत्वेन कर्तव्याकर्तव्यविवेचक आचार-व्यवहारप्रायश्चित्तादिरूपो ग्रन्थविशेषः शास्त्रंशास्त्यसाविति व्युत्पत्तेस्तद्रूपे, महाभारते= तदाख्ये महाप्रबन्धे कथ्यते च—

जयो नामेतिहासश्च भारताख्यानमुत्तमम्।
तौ संयुज्याञ्चितो ग्रन्थो महाभारतमुच्यते।।

इति। ततत्र, वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं= वृष्णीनां= यादव-समूहानां पाण्डवानां पाण्डुपुत्राणां युधिष्ठिरादीनां च यद्विरसं निर्वेदजनकमव-सानमन्त्यं तेन वैमस्यं वैराग्यं ददाति सूचयति तच्छीला तां, समाप्ति= पर्यवसानं, उपनिबध्नता= ग्रन्थयता, महामुनिना= महर्षिणा द्वैपायनेन, स्वप्रबन्धस्य= स्वप्रणीतग्रन्थस्य, प्राधान्येन= मुख्यतया, वैराग्यजननंतात्पर्यं= निर्वेदोत्पादनप्र-योजनं, दर्शयता= निर्दिशता सता मुख्यतया= नितान्ताभीष्टत्वेन, मोक्षलक्षणः= मोक्षरूपः, पुरुषार्थः— चत्वारो वै साध्यविषया धर्मोऽर्थश्च कामश्च मोक्षश्चेति यत्र प्रशस्ताचरणं धर्मः स च बुद्धेर्विषयः, द्रव्यसिद्धिरर्थः स च शरीरस्य विषयः, इन्द्रियतृप्तिः कामः स च मनसो विषयः, मनसो निर्विषयत्वं मोक्षः स चात्मनो विषयः। एष्वेकं काव्यस्य मुख्यफलं (प्रयोजनं) भवति। तत्र मोक्षश्चास्य साध्य इत्याशयः, शान्तः= शमस्थायिभावात्मकः रसः, च, विवक्षितविषयत्वेन=

वक्तुमभीष्टलक्ष्यरूपेण, सूचितः= निर्दिष्टः। महाभारते मुख्यत्वेन शान्ताख्यो रसो निबद्ध इति, च अन्यैः= अपरैः, व्याख्याविधायिभिः= विवृतिकारैः, अंशेन= आंशिकरूपेण; विकृतं= व्याख्यातम्। एतत्= अत्र शान्तो रसो मुख्यत्वेन विवक्षित इति, स्वयमेव, तेन= प्रसिद्धेन, उदीर्णमहामोहमग्नं= उदीर्णः सर्वातिशायित्वेन स्थितो विहितसत्वरजोऽभिभवो यो महामोहस्तमस्तस्मिन् निमग्नं जगत्, उज्जिहीर्षता= उद्धर्तुमिच्छता, लोकं= जगत् अतिविमलज्ञानालोकदायिना= निता-न्तस्वच्छज्ञानप्रकाशसमर्थकेन लोकनाथेन= जगन्मान्येन व्यासेन स्वयमेव, उद्गीर्णः= व्यक्तं तदुपस्थापयति यथेत्यादि—यथा—यथा, लोकतन्त्रं= जागतिकव-स्तुजातं, असारवत्= तुच्छवत्= विपर्येति= विपरीतं सम्पद्यते तथा—तथा, अत्र= सांसारिकवस्तुनि यत्नेन सञ्चितेऽपि, विरागः= अनासक्तिरूपो निर्वेदः, जायते— उत्पद्यते, अत्र= अस्मिन् विषये, न= नैव, संशयः= शंकेति।

यत्नेन सम्पाद्यमानेऽपि जागतिकधर्मार्थकामसाधने यथा-यथा निःसारता-ऽनुभूयते तथा-तथा तस्मिन्नपि वैराग्य सञ्जायत इति भावः।

इत्यादि बहुशः= अनेकवारं, प्रतिपादयता= निर्दिशता सतेति। ततः= तस्माद्, च= अपि, रसान्तरैः= इबररसैः, शान्तः= शमात्मा, रसः, पुरुषार्थान्तरैः= अन्यपुरुषार्थैः, मोक्षलक्षणः= मोक्षस्वरूपः पुरुषार्थः, तदुपसर्जनत्वेन= तस्य तस्योपस्कारकत्वेन, अनुगम्यमानः= अनुसर्यमाणः, अङ्गित्वेन= प्राधान्येन, विव-क्षाविषयः= अभीष्टलक्ष्यं, इति, महाभारततात्पर्यं, सुव्यक्तं= सुस्पष्टं, एव, अवभासते= द्योतत इति। रसानां= इतररसानां, यथा येन प्रकारेण, अङ्गाङ्गिभावः= उपस्कारकोपस्कार्यभावः तथाप्रतिपादितः= निरूपितः, एवेति कथामिति चेदित्थम्—

पारमार्थिकान्तस्तत्कापेक्षया= पारमार्थिकं जीवनतात्पर्यभूतं यदन्तस्तत्वं आत्मा तस्य अनपेक्षया निरपेक्षत्वेन, शरीरस्य= वपुषः, इव, अङ्गभूतस्य= अङ्गत्वमाप्तस्य, रसस्य, पुरुषार्थस्य, च, स्वप्राधान्येन= स्वामुख्यभावेन, चारुत्वं= शोभातिशययुक्तत्वं, अपि, न= नैवविरुद्धमिति। अन्तस्तत्त्वापेक्षायां तु तन्नैव सिध्यति। यथा महाभारते एव अन्तस्तत्वत्वेन विवक्षितो रसः शान्त; पुरुषार्थो मोक्षश्च। तयोरनपेक्षया अङ्गभूता वीराद्याः रसाश्च धर्माद्याः पुरुषार्थाश्च स्वस्वप्राधान्येन, चारुत्वमावहन्ति तदा तन्नैव विरुद्धं यतस्ते मुख्यमङ्गिनं प्रति गुणीभूता अपि स्वस्ववर्चसि तु प्राधान्यमपि भजन्त एवेति।

प्रबन्ध में रस के सन्निवेश के प्रकार का निर्देश करते हैं।

प्रबन्ध में अङ्गी रस के रूप में एक ही रस उपनिबध्यमान होने पर अर्थ विशेष अर्थात् अभीष्ट अर्थ का लाभ हो सकता है और शोभा के अतिशय का भी पोषण करता है। किसमें ? यदि ऐसी आकाङ्क्षा हो तो कहा जाता है, जैसे रामायण में अथवा जैसे महाभारत में। रामायण में करुण रस 'शोक ही श्लोक के

रूप में परिणत होता है' ऐसा कहने वाले स्वयं आदिकवि ने ही (अङ्गी रस के रूप में) आबद्ध किया है। अपने प्रबन्ध को सीता के अत्यंन्त वियोग (धरणी-प्रवेश) पर्यन्त ही रचने वाले आदि कतिव ने उसका निर्वाह भी किया है।

काव्य की छाया का अनुसरण करने वाले शास्त्र के रूप में रहे महाभारत में भी यादवों एवं पाण्डवों के उजाड़ अवसान से वैराग्य उत्पन्न करने वाली समाप्ति का उपनिबन्धन करने वाले, अपने प्रबन्ध को वैराग्य का उत्पादन रूप तात्पर्य वाला दिखाने वाले महामुनि ने मुख्य रूप से मोक्षलक्षण वाला पुरुषार्थ एवं शान्त रस विवक्षित विषय के रूप में सूचित किया है। दूसरे व्याख्याकारों ने भी इस तथ्य का आंशिक रूप से व्याख्या की है। स्वयं भी उन प्रबल अज्ञान में निमग्न लोक का उद्धार चाहने वाले, अतिविमल ज्ञान रूप प्रकाश को देने वाले—

ज्यों-ज्यों लोक का यह तन्त्र असार के समान विपरीत होता जाता है त्यों-त्यों उसमें विराग होता जाता है, इसमें कोई सन्देह नहीं।' इत्यादि अनेक जगह कहने वाले लोकमान्य मुनि ने स्वयं भी इस तथ्य का उजागर किया है। इससे भी दूसरे रसों से उसके उपसर्जन के रूप में अनुगम्यमान शान्त रस एवं दूसरे पुरुषार्थों से अनुगम्यमान मोक्षलक्षण पुरुषार्थ अङ्गी के रूप में विवक्षा के विषय होने का महाभारत का तात्पर्य स्पष्ट रूप में ही अवभासित होता है। पारमार्थिक अन्तस्तव की अनपेक्षा से शरीर के समान अङ्गभत रस का एवं पुरुषार्थ का अपने प्राधान्य के द्वारा चारुत्व भी विरुद्ध नहीं होता। (लेकिन वह यथार्थ नहीं होता)।

ध्वन्या०— ननु महाभारते यावान् विवक्षाविषयः सोऽनुक्रमण्यां सर्व एवानुक्रान्तो न चेतत्तत्र दृश्यते, प्रत्युत सव 'पुरुषार्थप्रबोधहेतुत्वं सर्वरसगर्भत्वं च महाभारतस्य तस्मिन्नुदेशे स्वशब्दनिवेदितत्वेन प्रतीयते- सत्यं शान्तस्यैव रसस्याङ्गित्वं महाभारते मोक्षस्य च सर्वपुरुषार्थेभ्यः प्राधान्यमित्येतन्न स्वशब्दाभिधेयत्वेनानुक्रमण्यां दर्शितम्, दर्शितं तु व्यङ्ग्यत्वेन—

'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः'

इत्यस्मिन् वाक्ये। अनेन ह्ययमर्थो व्यङ्ग्यत्वेन विवक्षितो यदत्र महाभारते पाण्डवादिचरितं यत्कीर्त्यते तत्सर्वमवसानविरसमविद्यान- प्रपञ्चरूपञ्च परमार्थसत्यस्वरूपस्तु भगवान् वासुदेवोऽत्र कीर्त्यते। तस्मा- त्तस्मिन्नेव परमेश्वरे भगवति भवत भावितचेतसो,मा भूत विभतिषु निस्सारासु रागिणो गुणेषु वा नयविनयपराक्रमादिष्वमोषु केवलेषु केषुचि- त्सर्वात्मना प्रतिनिविष्टधियः। तथा चाग्रे पश्चत निस्सारतां संसारस्येत्य- मुमेवार्थं द्योतयन् स्फुटमेवावभासते व्यञ्जकशक्त्यनुगृहीतश्च शब्दः। एवंविधमेवार्थं गर्भीकृतं सन्दर्शयन्तोऽनन्तरश्लोकाः लक्ष्यन्ते— 'स हि सत्यम्' इत्यादयः।

अयं च निगूढरमणीयोऽर्थो महाभारतावसाने हरिवंशवर्णनेन समाप्तिं विदधता तेनैव कविवेधसा कृष्णद्वैपायनेन सम्यक् स्फुटीकृतः। अनेन चार्थेन संसारातोते तत्वान्तरे भक्त्यतिशयं प्रवर्तयता सकल एव सांसारिको व्यवहारः पूर्वपक्षीकृतो न्यक्षेण प्रकाशते। देवतातीर्थतपः प्रभृतीनां च प्रभावातिशयवर्णनं तस्यैव परब्रह्मणः प्राप्त्युपायत्वेन तद्विभूतित्वेनैव देवताविशेषाणामन्येषां च पाण्डवादिचरितवर्णनस्यापि वैराग्यजननतात्पर्याद्वैराग्यस्य च मोक्षमूलत्वान्मोक्षस्य च भगवत्प्राप्त्युपायत्वेन मुख्तया गीतादिषु प्रदर्शितत्वात् परब्रह्मप्राप्त्युपायत्वमेव। परम्परया वासुदेवादिसंज्ञाभिधेयत्वेन चापरिमितिशक्त्यास्पदं परंब्रह्मप्राप्त्युपायत्वमेव। परम्परया वासुदेवादिसंज्ञाभिधेयत्वे चापरिमितशक्त्यास्पदं परं ब्रह्म गीतादिप्रदेशान्तरेषु तदभिधानत्वेन लब्धप्रसिद्धिमाथुरप्रादुर्भावा- नुकृतसकस्वरूपं विवक्षितं न तु माथुरप्रादुर्भावांश एव, सनातनशब्दविशेषित्वात्। रामायणादिषु चानया संज्ञया भगवन्मूर्त्यन्तरे व्यवहारदर्शनात्। निर्णीतश्चायमर्थः शब्दतत्वविद्भिरेव।

तदेवमनुक्रमणीनिर्दिष्टेन वाक्येन भगवद्व्यतिरेकिणः सर्वस्यान्यस्यानित्यतां प्रकाशयता मोक्षलक्षण एवैकः परः पुरुषार्थः शास्त्रनये, काव्यनये च तृष्णाक्षयपरिपोषलक्षणः शान्तो रसो महाभारतस्याङ्गित्वेन विवक्षित इति सुप्रतिपादितम्। अत्यन्तसारभूतत्वाच्चायमर्थो व्यङ्ग्यत्वेनैव दशितो न तु वाच्यत्वेन। सारभूतो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशिताः सुतरामेव शोभामावहित। प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न साक्षाच्छब्दवाच्यत्वेन।

लीला– महभारते शान्तरसस्य मोक्षपुरुषार्थस्य च अङ्गित्वे शङ्कामुन्नीय समादधाति नन्वित्यादिना–ननु= इति प्रश्ने, महाभारते, यावान्= यत्सङ्ख्याकः, विवक्षाविषयः= वक्तुमभीष्टलक्ष्यं, सः, सर्वः= निखिलः, एव, अनुक्रमण्यां= विषयनिर्देशिकायां– "इह सर्वमनुक्रान्तमुक्तं ग्रन्थस्य लक्षणम्" इत्यादिना, अनुक्रान्तः= संसूचितः क्रमानुसारेण, तत्र= अनुक्रमण्यां, एतत्= शान्तस्य मोक्षस्य चाङ्गित्वं, न, दृश्यते, पत्युत= तद्विपरीतं, महाभारतस्य सर्वपुरुषार्थप्रबोधहेतुत्वं= सर्वविधपुरुषार्थज्ञानकारणत्वं– 'वेदयोगं सविज्ञानं धर्मोऽर्थः काम एव च' इति सर्वरसगर्भत्वं= सर्वविधरसान्तःस्थत्वे, तस्मिन्, उद्देशे= अनुक्रमणिकायां, स्वशब्दनिवेदितत्वेन= स्ववाचकशब्दसूचितत्वेन, प्रतीयते= ज्ञायते। इति।

अत्र= प्रकरणेऽस्मिन्,= उच्चते= कथ्यते, सत्यं, महाभारते, शान्तस्य, एव, रसस्य, अङ्गित्वं= प्रधानभावः, सर्वपुरुषार्थेभ्यः, मोक्षस्य, एव, प्राधान्यं=

मुख्यत्वं, इति, एतत्, स्वशब्दाभिधेयत्वेन= स्ववाचकशब्दवाच्यत्वेन, अनुक्रम-ण्यां= विषयसूच्यां, न= नैव दर्शितं= संसूचितं, दर्शितं= निर्दिष्टं, तु,= इति व्यवच्छेदे, व्यङ्ग्यत्वेन= प्रतीयमानरूपेण-कुत्रेति विवक्षायामाह भगवानित्यादि— अत्र= इति महाभारते, सनातन;= शाश्वतः, भगवान, वासुदेवः= परमात्मा, कीर्त्यते= गीयते इति, अस्मिन् वाक्ये। अनेन= उपस्थापितपद्येन, हि, अयमं, अर्थः= आशयः, विवक्षितः, यद्, अत्र= महाभारते, यत्, पाण्डवादिचरित= पाण्डवादीनां युधिष्ठिरादीनां चरितं, कीर्त्यते= वर्ण्यते, तत्, सर्व, अवसानविरसं= अवसान अन्त्ये विरस निर्वेदकारक, अविद्याप्रपञ्चरूपं= लौकिकज्ञानमयञ्च, अन्तस्तत्वं तु, पारमार्थिकसत्यस्वरूपः= परमयथार्थरूपः, भगवान्= परमेश्वरः वासुदेवः= परमात्मा, अत्र, कीर्त्यत इति। तस्मात्= तद्धेतोः तस्मिन्= तादृशे, एव, परमेश्वरे= सर्वशक्तिमति, भगवति, भावितचेतसः= प्रयतमनस्काः, भवत,-सदापरायणा भवत, निःसारासु= सारतत्वरहितासु, विभूतिषु= ऐश्वर्येषु, रागिणः= तत्पराः, मा भूत, वा, अमीषु= प्रत्यक्षविषयेषु, केवलेषु, केषुचित्= कतिपयेषु, नयविनयपराक्रमादिषु, गुणेषु, सर्वात्मना= सर्वतोभावेनायमेव परमार्थ इति, प्रतिनिविष्टधियः= संसक्तमतयः, मा भूत इति। तथा च, अग्रे, संसारस्य= जगतः, निस्सारतां= तत्वहीनतां, पश्यत= विलोकयत, इति, अमुं, एव, अर्थ= रहस्यं, द्योतयन्= प्रकाशयन्, व्यञ्जकशक्त्यनुगृहीतः= व्यञ्जकसामर्थ्यानुगतः, शब्दः, स्फुटं= स्पष्टं, एव, अवभासते= द्योतत इति। एवंविधं= ईदृशं, एव, अर्थं, गर्भीकृतं= अन्तर्गतं, सन्दर्शयन्तः= प्रत्याययन्तः, 'स हि सत्यं' सः= वासुदेवः, एव, सत्यं तदिरत् सर्वं मिथ्या, इत्यादयः, अनन्तरश्लोकाः— अनुगतपद्यानि, लक्ष्यन्ते= दृश्यन्ते। ते च यथा—

> ''स हि सत्यमृतं चैव पवित्रं पुण्यमेव च।
> शाश्वतं परमं ब्रह्म ध्रुवं ज्योतिः सनातनम्।
> यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः।''

इति।

अयं= एतादृशः, निगूढरमणीयः= निगूढः प्रच्छन्नः रमणीयः हृद्यः अर्थः आशयः, महाभारतावसाने, हरिवंशवर्णनेन, समाप्तिं= अवसान ग्रन्थस्य, विदधता= कुर्वता, तेन, कविवेधसा= कविप्रजापतिना, कृष्णद्वैपायनेन, एव, सम्यक्, स्फुटीकृतः= स्पष्टीकृतः। संसारतीते= अलौकिके, भवति= शाश्वते, तत्वान्तरे= परमतत्वे, अतिशयं= नितान्तयोगं, प्रवर्तयता= प्रतिपादयता, अनेन, अर्थेन, च, पूर्वपक्षीकृतः= खण्डनाय पूर्वमुपस्थापितः, सकलः, एव, सांसारिकः= जागतिकः, व्यवहारः व्यापारस्तद्विषयाश्च, न्यक्षेण= प्रत्यक्षेण, प्रकाशते= अवभासत इति। देवतातीर्थतपः प्रभृतीनां= देवतानां, तीर्थानां, तपसाञ्च,

प्रभावातिशयवर्णनं= प्रभावाधिक्यकथनं तस्य= परमयथार्थस्य, एव, परब्रह्मणः= परमात्मनः, प्राप्त्युपायत्वेन= प्राप्तेः साधनरूपेण, एव (न तु तेषामेव पर्यवसायित्वेन) देवताविशेषाणां, अन्येषां= तीर्थादीनां, च, तद्विभूतित्वेन= तदैश्वर्यत्वने, एवेति। पाण्डवादिचरितवर्णनस्य, अपि, वैराग्यजननतात्पर्यात्= वैराग्योत्पादनप्रयोजनाद्, वैराग्यस्य= निर्विषयत्वस्य, मोक्षमूलत्वात्, मोक्षस्य, च, भगवत्प्राप्त्युपायत्वेन, मुख्यतया= प्राधान्येन, गीतादिषु, प्रदर्शितत्वात् परब्रह्मप्रात्युपायत्वं= परब्रह्मणः परमात्मनः प्राप्तेः सायुज्यसान्निध्यादेः उपायत्वं, एव। परम्परया,= रूढ्या, वासुदेवसंज्ञाभिधेयत्वेन= वासुदेवशब्दवाच्यत्वेन च, अपरिमितशक्त्यचास्पदं= अनन्तसामर्थ्यस्थानं, गीतादिप्रदेशान्तरेषु= गीतादिप्रबन्धभागेषु, तदभिधानत्वेन= तत्संज्ञकत्वेन-वासुदेवः सुदुर्लभ इत्यादिरूपेण, लब्धप्रसिद्धिं= ख्यातं, माथुरप्रदुर्भावानुकृतसकलस्वरूपं= माथुरो मथुरायां भवो यः प्रादुर्भावोऽवतारस्तेनानुकृतसम्पूर्णरूपं, परं= परात्परतरं, ब्रह्म विवक्षितं, न तु, माथुरप्रादुर्भावांशः= माथुरो यः प्रादुर्भावोऽवतारः कृष्णरूपस्तस्यांश एव स च सनातनशब्दविशेषितत्वात्= सनातनशब्देनाबबोधितवैशिष्ट्यात्, कीर्त्यतेऽत्र सनातन इत्यत्र। माथुरप्रादुर्भावांशस्य तु जन्ममरणादिकथनान्न तथा सनातनत्वं सिध्यति। अनया= एतयैव संज्ञया= अभिधानेन, रामायणादिषु, भगवन्मूर्त्यन्तरे= भगवतोऽन्यस्वरूपेऽपि, व्यवहारदर्शनात्= प्रयोगोपलब्धेः। अयं, अर्थः, शब्दतत्वविद्भिः= शब्दरहस्यज्ञैः, एव, निर्णीतः, चेति। तत्= तस्मात्, एवं, अनुक्रमणीनिर्दिष्टेन= विषयसूचिसङ्केतितेन, भगवद्व्यतिरेकिणः= भगवद्भिन्नस्य, अन्यस्य= अपरस्य, सर्वस्य, वस्तुनः, अनित्यतां= असारतां, प्रकाशयता, वाक्येन, शास्त्रनये, मोक्षलक्षणः, एकः एव, परः= परमः पुरुषार्थः, काव्यनये= काव्यपक्षे, च, तृष्णाक्षयसुखपरिपोषलक्षणः= तृष्णायाः लालसाया क्षयो नाशस्तेन यत्सुखं प्रीतिस्तस्य परिपोषो बृंहण तल्लक्षणः, शान्तः, रसः, महाभारतस्य, अङ्गित्वेन= प्राधान्येन, विवक्षितः, इति, सुप्रतिपादितं= साधु निर्णीतम्। अत्यन्तसारभूतत्वात्= नितान्तपरमतत्वत्वेन, च, अयं= पूर्वनिर्दिष्टो व्यङ्ग्यरूपः अर्थः, व्यङ्ग्यत्वेन= प्रतीयमानत्वेन, दर्शितः= निर्दिष्टः, न, तु वाच्यत्वेनेति। यतः, सारभूतः= तत्वरूपः, अर्थः, हि, स्वशब्दानभिधेयत्वेन= स्ववाचकशब्दावाच्यत्वेन, प्रकाशितः= प्रकटितः, सुतरां, एव, शोभां= विच्छित्तिं, आवहति इति। विदग्धविद्वत्परिषत्सु= प्रपन्नविचक्षणसभासु, इयं, प्रसिद्धिः= प्रचलनं, अस्त्येव, यत्, अभिमततर= नितान्ताभीष्टं, वस्तु= तत्वं, व्यङ्ग्यत्वेन= प्रतीयमानत्वेन, प्रकाश्यते= प्रकट्यते, न, साक्षाच्छब्दवाच्येन= प्रत्यक्षमेव वाचकशब्दाभिधेयत्वेनेति।

प्रकरणस्यास्यायमाशयः-महाभारते तु सर्वोऽपि विवक्षितो विषयोऽनुक्रमण्यां निर्दिष्ट एव। तत्र तु सर्वेषामेव रसानां पुरुषार्थनाञ्चान्तःस्थत्वं वर्णितं न तु

शान्तमात्रस्य वा मोक्षमात्रस्येति कथमेतत्सिध्यति यच्छान्तो मोक्षो वा अस्य प्राधान्येन विवक्षित इत्यनुयोगः। अत्रोच्यते—

वाच्यत्वेन तु तत्र तथैव निर्दिष्टं किन्तु व्यङ्ग्यत्वेन च शान्तमोक्षयोर्विवक्षितत्वप्राधान्ये न प्रतीतिः। केनेति चेत्— 'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः' इत्यनेन। कथमिति चेदित्थम्। पाण्डवादीनां चरितं तु लोकेषणावैरस्योत्पादनायैव तस्य च वासुदेव कीर्तने एव विश्रान्तिरिति। वासुदेवश्च सकलकारणभूतं पर ब्रह्मेति परम्परया न तु केवलं माथुर एव। सोऽपि तस्यैवांशभूत एव। तेन भागवद्व्यतिरिक्तविषयस्यानित्यताप्रतिपादेन मोक्ष एवैकः पुरुषार्थः साध्यः शास्त्रपक्षे तृष्णाक्षयप्रीतिपरिपोषलक्षणः शान्तो रसश्च काव्यपक्षे महाभारतस्याङ्गी यश्च व्यङ्ग्यत्वेनोपदर्शितोऽस्ति। अभिमततरस्य वस्तुनो व्यङ्ग्यत्वेन प्रकाशनं तु विद्वत्सु सर्वसम्मतमेवेति।

महाभारत में अङ्गी के रूप में शान्त रस एवं पुरुषार्थों में मोक्ष का अङ्गित्व जो कहा गया उसकी सत्यता में शङ्का उठाकर उसका समाधान करते हैं—

महाभारत में जो भी विवक्षा का विषय है, वह सभी ही अनुक्रमणिका में दिया गया है, वहाँ यह तो कहा नहीं गया है, उसके विपरीत महाभारत का सभी पुरुषार्थों का प्रबोध हेतुत्व एवं सभी रसों का गर्भत्व भी उस उद्देश्य में स्वशब्द (वाचक शब्द) से सूचित रूप में प्रतीत होता है।

इसमें कहा जाता है— यह ठीक है कि महाभारत में शान्त ही रस का अङ्गित्व और मोक्ष का ही सभी पुरुषार्थों में प्राधान्य जो है वह अनुक्रमणी में स्वशब्दवाच्य के रूप में दिखाया नहीं गया है, दिखाया गया है तो व्यङ्ग्य के रूप में ही।

"यहाँ सनातन भगवान् वासुदेव का कीर्तन किया जाता है" इस वाक्य में। इसके द्वारा व्यङ्ग्य के रूप में यह अर्थ विवक्षित है कि "यहाँ, महाभारत जो पाण्डव आदि का चरित्र कीर्तित है। वह सब अन्त्य में नीरस एवं अविद्या का प्रपञ्च स्वरूप है, परमार्थ तो यह है कि यहाँ परमार्थ सत्यस्वरूप भगवान् वासुदेव का कीर्तन किया जाता है। इस कारण उन ही परमेश्वर भगवान् वासुदेव में प्रसक्तचित्त बन जाओ, इन निःसार विभूतियों में अनुरक्त मत बनो इन केवल नय विनय, पराक्रम आदि कुछ गुणों में सर्वतोभावेन बुद्धि का निवेश मत करो, और आगे संसार की निस्सारता भी देखो,' इस तरह का अर्थ द्योतित करते हुए व्यञ्जक शक्ति से अनुगृहीत शब्द स्पष्ट रूप में ही अवभासित होता है। इसी प्रकार के आशय को गर्भीकृत किया हुआ अर्थ व्यक्त करते हुए वह ही सत्य है आदि अनन्तर श्लोक दिखाई पड़ते हैं वह इस प्रकार है—

"वही सत्य है, ऋतु है, पवित्र है, पुण्य भी है,
शाश्वत है, परम ब्रह्म है, सनातन है, ध्रुव ज्योति है,
जिसके दिव्य कर्म विद्वान् सब बखानते हैं।"

यह जो निगूढ रमणीय अर्थ वह महाभारत के अन्त्य में हरिवंश के वर्णन से समाप्ति करते हुए उन ही कवियों के प्रजापति कृष्ण द्वैपायन ने अच्छी तरह स्पष्ट किया है। संसार से विलक्षण, शाश्वत, दूसरे तत्व में अतिशय रूप से प्रवर्तन कराने वाला यह अर्थ संसार के सभी प्रकार के व्हार को पूर्वपक्ष के रूप में (खण्डन के लिए) उपस्थापित कर उसमें असारता एवं अनित्यता दिखाते हुए प्रत्यक्ष रूप से प्रकाशित करता है। देवता, तीर्थ, तपस्या आदि का प्रभावातिशय का वर्णन उसी पर ब्रह्म की प्राप्ति के उपाय के रूप में ही है क्योंकि देवता विशेष एवं अन्य भी उसी परमात्मा की विभूति के रूप में हैं। पाण्डवादि के चरित्र के वर्णन का भी वैराग्य जगाने के तात्पर्य से निबद्ध होने से एवं वैराग्य का प्रयोजन भी मोक्ष का भी भगवत्प्राप्ति उपाय के रूप में मुख्य रूप से गीता आदि में प्रदर्शित होने से ये सब परब्रह्म की प्राप्ति के उपाय के रूप में ही हैं।

परम्परा से 'वासुदेव' संज्ञा से अभिधेय के रूप में अपरिमित शक्ति का स्थान गीता आदि जगह—जगह पर नाम से ही प्रख्यात मथुरा में प्रादुर्भूत वासुदेव से सकल स्वरूप का अनुकरण किया गया पर ब्रह्म ही है, न कि माथुर प्रादुर्भाव का अश मात्र ही उसके 'सनातन' शब्द से विशेषित होने से ही, और रामायण आदि में इसी 'वासुदेव' की संज्ञा से भगवान् की दूसरी मूर्तियों में भी व्यवहार देखे जाने से भी यह तथ्य प्रमाणित होता है। यह तथ्य शब्द के तत्वज्ञाताओं से ही निर्णीत है।

इस प्रकार अनुक्रमणिका में निर्दिष्ट भगवान् से अतिरिक्त अन्य सभी की अनित्यता को प्रकाशित करने वाले वाक्य से शास्त्रपक्ष में मोक्ष लक्षण ही एक परम पुरुषार्थ एवं काव्यपक्ष में तृष्णा के क्षय से उत्पन्न सुख का परिपोष लक्षण वाला शान्त रस महाभारत के अङ्गी रस के रूप में विवक्षित होने की बात प्रतिपादित है। अत्यन्त सार के रूप में होने से यह अर्थ व्यङ्ग्य के रूप में प्रकाशित है न कि वाच्य के रूप में। सारभूत जो अर्थ है वह अपने वाचक शब्द से अभिहित न होकर प्रकाशित होने से अत्यन्त शोभाधायक होता है। विद्वानों की परिषद् में यह प्रसिद्धि भी है कि जो अन्य वस्तुओं की अपेक्षा ज्यादा ही अभिमत वस्तु है वह व्यङ्ग्य के रूप में प्रकाशित होता है न कि साक्षात् वाचक शब्द से ही वाच्य के रूप में ।

कहने का आशय यह है कि महाभारत में भी शास्त्रपक्ष में मोक्ष पुरुषार्थ एवं काव्यपक्ष में शान्त रस अङ्गी के रूप में विवक्षित है और यह वाच्य न होकर प्रतीयमान है। इसकी प्रतीयमानता 'सनातन वासुदेव' की भक्ति के रूप में है। अर्थात् स्वशब्दवाच्य जो पाण्डव आदि के चरित्र हैं वे सब अन्त्यत: संसार की असारता को दिखा कर वैराग्य उत्पादन कराने के लिए हैं और उस वैराग्य का उद्देश्य मोक्ष है जो स्वयं भगवत्प्राप्ति में विश्रान्त हो जाता है। अत: महाभारत के सारे के सारे विषय मोक्ष के प्रति गुणीभूत हैं और सभी रस शान्त के प्रति। अत: और सब विषय के रहते हुए भी प्रधान रूप से मोक्ष एवं शान्त रस महाभारत में मुख्य प्रतिपाद्य हैं।

ध्वन्या०— तस्मात्स्थितमेतत्-अङ्गिभूतरसाद्याश्रयेण काव्ये क्रियमाणे नावार्थलाभो भवति बन्धच्छाया च महती सम्पद्यत इति। अत एव च रसानुगुणार्थविशेषोपनिबन्धनमलङ्कारान्तरविरहेऽपि छायातिशाययोगि लक्ष्ये दृश्यते। यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ तो दिव्यौ मत्स्यकच्छपौ।।

इत्यादौ। अत्र ह्यद्भुतरसानुगुणमेकचुलुके मत्स्यकच्छपदर्शनं छायातिशयं पुष्णाति। तत्र ह्ये कचुलुके सकलजलनिधिसन्निधानादपि दिव्यमत्स्यकच्छपदर्शनमक्षुण्णत्वादद्भुतरसानुगुणतरम्। क्षुण्णं हि वस्तु लोकप्रसिद्ध्याद्भुतमपि नाश्चर्यकारि भवति।

न चाक्षुण्णं वस्तूपनिबध्यमानमद्भुतरसस्यैवानुगुणं यावद्रसान्तरस्यापि तद्यथा—

सिज्जइ रोमञ्चिज्जइ वेवइ रत्थातुलग्गपडिलग्गा।
सोपासो अज्ज वि सुहअ जेणासि वोलीणो।।
स्विद्यति रोमाञ्चते वेपते रथ्यातुलाग्रप्रतिलग्नः।
स पार्श्वोऽद्यापि सुभग तस्या येनास्यतिकान्तः।। (छाया)

एतद् गाथार्थाद्भाव्यमानाद्या रसप्रतीतिर्भवति, सा त्वां स्पृष्ट्वा स्विद्यति रोमाञ्चते वेपते इत्येवं विधार्थात्प्रतीयमानान्मनागपि नो जायते।

तदेवं ध्वनिप्रभेदसमाश्रयेण यथा काव्यार्थानां नवत्वं जायते तथा प्रतिपादितम्। गुणीभूतव्यङ्ग्यस्यापि त्रिभेदव्यङ्ग्यापेक्षया ये प्रकारास्तत्समाश्रयेणापि काव्यवस्तूनां नवत्वं भवत्येव। तत्त्वतिविस्तारकारीति नोदाहृतं, सहृदयैः स्वयमुत्प्रेक्षणीयम्।

लीला— तदेवं प्रकरणमुपसञ्जिहीषुर्वृत्तिकारो रसाद्याश्रयताया एव व्याख्यानेनोदाहरणमुखेन च काव्ये उपादेयत्वं प्रतिपादपति तस्मादित्यादिना- तस्मात्= तद्धेतोः, एतत् स्थितं= सिद्धं= सिद्धं यत्, अङ्गिभूतरसाद्याश्रयेण= अङ्गिभूतः प्राधान्येन विवक्षितो यो रसादिस्तस्याश्रयेणावलम्बनेन, काव्ये, क्रियमाणे= विधीयमाने, नवार्थलाभः= नूतनार्थसिद्धिः भवति= सम्पद्यते बन्धच्छाया= प्रबन्धविच्छित्तिः च महती= समृद्धा च सम्पद्यते= सञ्जायत इति। अत एव= अनेनैव कारणेन, च रसानुगुणार्थविशेषोपनिबन्धं= रसस्य अनुगुणः अनुकूलो योऽर्थविशेषो वस्तुजातं तस्य उपनिबन्धन प्रचना, अलङ्कारान्तरविरहे= अलङ्कारविशेषरहितत्वे अपि, लक्ष्ये= विषये, छायातिशययोगि= विच्छित्याधिक्यमण्डितं, दृश्यते= परिलक्ष्यते इति। यथा= इति निदर्शने। तदुदाहरति मुनिरित्यादिना—योगीन्द्रः

महात्मा कुम्भसम्भवः मुनिः येन एकचुलुके तौ दिव्यौ मत्स्यकच्छपौ दृष्टौ जयति इति पदव्यवस्था।

योगीन्द्रः= योगिश्रेष्ठः, महात्मा= महिममण्डितः कुम्भसम्भवः= घटोद्भुतः मुनिः= ऋषिः, येन= मुनिना, एकचुलुके= एकस्यामेव प्रसृतौ, तौ= सर्वविदितौ, दिव्यौ= अलौकिकौ, मत्स्यकच्छपौ मीनकूर्मौ, दृष्टौ= अवलोकितौ, जयति= सर्वातिशायित्वेन वर्तते इति।

इत्यादौ—

उदाहरणे लक्षणं योजयति अत्रेत्यादिना— अत्र= अस्मिन् काव्ये, हि, अद्भुतरसानुगुणं= विस्मयस्थायिभावात्मकाद्भुतरसानुकूलं, एकचुलुके एकप्रसृतौ, मत्स्यकच्छपदर्शनं= मीनकूर्मविलोकनं, छायातिशयं= विच्छित्याधिक्यं, पुष्णाति= बृंहयति इति। तत्र, हि, एकचुलुके= एकप्रसृतावेव, सकलजलधिसन्निधानात्= समग्रसमुद्रसंन्यसनात् अपि, दिव्यमत्स्यकच्छपदर्शनं, अलौकिकमीनकूर्मावलोकनं अक्षुण्णत्वात्= अपूर्वत्वात्, रसानुगुणतरं= इतराद्यपेक्षया रसानुकूलनमिति। क्षुण्णं= अतिनिर्भिन्नस्वरूप पुनः पुनर्वर्णननिरूपणादिना, हि, वस्तु= अर्थजातं, लोकप्रसिद्ध्या सांसारिकख्यात्या, अद्भुतं= विचित्रमपि न, आश्चर्यकारि= चमत्कारस्पदं, भवति= सम्पद्यते। न च= नैव च, अक्षुण्णं= अनिर्भिन्नं, वस्तु= अर्थजातं उपनिबध्यमानं= वर्ण्यमानं, अद्भुतरसस्य= विस्मयस्थायिभावात्मकरसस्य, एव, अनुगुणं= अनुकूलं, यावात्= अपितु, रसान्तरस्य= अन्यविधरसस्य, अपि। तद् यथा—

तदुदाहरति 'सिज्जइ' इत्यादिना—सुहल (सुभग) जेण (येन) रत्थातुलग्गपडिलग्गो (रथ्यातुलाग्रप्रतिलग्नः) वोलीणो (अवलीनः—अतिक्रान्तः) असि, तस्याः, सो (सः) पासो (पार्श्वः) अज्ज (अद्य) वि (अपि) सिज्जइ (स्विद्यति) रोमञ्चिज्जइ (रोमाञ्चते) वेवइ (वेपते) इति पदव्यवस्था।

हे सुभग ! हे सौम्य, तस्याः= त्वत्प्रेयस्याः, येन रथ्यातुलाग्रप्रतिलग्नः= रथ्यायां प्रतोल्यां तुलाग्रेण काकतालीयेन प्रतिलग्नः संस्पृष्टः, अतिक्रान्तः= अतिगतः, असि सः पार्श्वः, अद्यापि= न केवलं तदैव, स्विद्यति= स्वेदाञ्चितो भवति, रोमाञ्चति= पुलकायते, वेपते= कम्पते चेति।

तत्र पर्यवसितमभीष्टमाह एतदित्यादिना= भाव्यमानात्= विचार्यमाणात्, एतद्गार्थात्= एतद्गाथासङ्कलितार्थात्, या, रसप्रतीतिः= शृङ्गाररसविबोधनं, भवति सा= तादृशी रसप्रतीतिः सा त्वां स्पृष्ट्वा स्विद्यति रोमाञ्चते वेपते, इति, एवं विधार्थात्= सा भवतः स्पर्शं प्राप्य स्वेदाञ्चितो भवति, पुलकायते, कम्पते इत्याद्यर्थात् प्रतीयमानात्, अपि, मनाक्= स्वल्पं, अपि, नो जायते, इति क्षुण्णत्वादिति।

प्रकरणमुपसंहरति तदेवमित्यादिना—तत्= तस्मात्, एवं= इत्थं, ध्वनिप्रभेद-समाश्रयेण= ध्वनिभेदान्यतमावलम्बनेन यथा, काव्यार्थानां, नवत्वं, जायते= सम्पद्यते, तथा, प्रतिपादितं= निरूपितम्। न केपलं ध्वनेरेवापितुं, गणीभतव्यङ्ग्यस्य अपि त्रिभेदव्यङ्ग्यापेक्षया= त्रिभेदं वस्त्वलङ्कारसेति त्रिविधप्रभेदं यद् व्यङ्ग्य तस्यापेक्षया, ये, प्रकाराः, तत्समाश्रयेण= तदवलम्बनेन, अपि, काव्यवस्तूनां= काव्यार्थानां नवत्वं, भवत्येव। तत्तु= गुणीभूतव्यङ्ग्यभेदावलम्बनेनापि काव्यार्थानां नवत्वं, तु अतिविस्तारकारि= नितान्तविस्तृतं, इति, न उदाहृतं, सहृदयैः, स्वयम्, उत्प्रेक्षणीयम्= उन्नेयमिति।

सुदीर्घस्य प्रकरणस्यास्यायमाशयः-अङ्गिभूतो यो रसादिस्तदानुकूल्येन प्रणीयमाने काव्येऽर्थस्य नवत्वं बन्धस्य विच्छित्याधिक्यमुभयमेव सिध्यति। यत्र च रसानुकूलार्थविशेषोपनिबन्धनं तत्रालङ्कारविशेषविरहेऽपि विच्छित्यति-शयता सम्पद्यत एव। यथा मुनिर्जयति इत्यादौ नैव कश्चित्स्फुटोऽलङ्कार-विशेषस्तथापि वाक्यविकसिताद्भुतरसानुगुण दिव्यमीनकूर्मदर्शनमेकचुलुके विच्छित्तिप्राशस्त्यं तनुते। तत्र चैकप्रसृतावुदधिसन्निधानादपि दिव्यमत्स्यकूर्म-दर्शनमेव रसानुगुण्यं धत्ते पूर्वस्य क्षुण्णत्वादपरस्याक्षुण्णत्वात्।

एवं यथा ध्वनि प्रभेदसमाश्रयेण काव्यार्थानां नवत्वं तथैव गुणीभूतव्यङ्ग्य-प्रभेदावलम्बनेनापि। तच्च ग्रन्थविस्तरभयान्नोंदाहृतमिति। तच्च स्वयं सहृदयैरू-हनीयमिति।

अत्र लोचनदीधितिकारौ कानिचिदुदाहरणानि प्रस्तुतः। तत्र गुणीभूतवस्तु-व्यङ्ग्यसमाश्रयेण पुरातनस्याऽप्यर्थस्य नवत्वं यथा—

भयविह्वलरक्षणैकमल्लशरणागतानामर्थानाम्।
क्षणमात्रमपि न दत्ता विश्रामकथेति युक्तमिदम्।

(अत्र काक्वा इदं न युक्तमित्याशयः) इत्येतस्य—

त्यागिजनपरम्परासञ्चारणखेदनिस्सहशरीराः।
अर्थाः कृपणगृहस्थाः स्वस्थावस्थाः स्वपन्तीव।

इत्येदपेक्षया नवत्वं गुणीभूतस्यापि औदार्यलक्षणस्य वस्तुव्यङ्ग्यस्य समाश्रयात्। एवमेव—

''क्षुत्तृष्णाकाममात्सर्यं मरणाच्च महद्भयम्।
पञ्चैतानि विवर्धन्ते वार्धके विदुषामपि।''

इत्येतदपेक्षया—

वसन्तमत्तालिपरम्परोपमाः कचास्तवासन् किल रागवृद्धये।
श्मशानभूभागपरागभासुराः कथन्तदेते न मनाग्विरक्तये।।

इत्येतस्याक्षेपेण विभावनया च ध्वन्यमानाभ्यामुपस्कृतपवाच्त्वेन यो व्यङ्ग्यस्य गुणीभावस्तत्सम्पर्केण नवत्वमित्ति।

तथैव—

'जराजीर्णशरीरस्य वैराग्य यन्न जायते।
तन्नूनं ह्रदये मृत्युर्दृढं नास्तीति निश्चयः।।'

इत्येतदपेक्षया—

जरा नेयं मूर्ध्नि ध्रुवमयमसौ कालभुजगः।
क्रुधान्धः फूत्कारैः स्फुटगरलफेनान् प्रकिरति।।
तदेनं सम्पश्यत्यथ च सुखितम्मन्यह्रदयः।
शिवोपायन्नेच्छन् बत बत सुधीरः खलु जनः।।

इत्येतस्थ गुणीभूतेनापि व्यङ्ग्येनाद्भुतरसेनोपस्कृतस्य वाच्यस्य समाश्रया-दर्थस्य नवत्वमिति। एवमन्येषामप्यभ्यूह्यम्।। ५।।

प्रकरण का उपसंहार करते हुए वृत्तिकर रसाद्याश्रयता की काव्य में उपयोगिता का निर्देष करते हैं—

इससे यह निश्चित हुआ-अङ्गिभूत रस इत्यादि के आश्रय से काव्य किए जाने पर नवीन अर्थ का लाभ होता है और प्रबनध की शोभा भी अधिक हो जाती है। अतएव कावय में अलङ्कार विशेष के अभाव भी रस के अनुकूल अर्थविशेष का उपनिबन्धन लक्ष्य में छाया की अतिशयता से युक्त हुआ देखा जाता है। जैसे—

योगियों में श्रेष्ठ ये महात्मा कुम्भ—सम्भव अर्थात् घट से उत्पन्न हुए अगस्त्य मुनि, जिन्होंने एक ही चुल्लू में उन दो दिव्य मत्स्य और कूर्म को देखा, सबसे उत्कृष्ट हैं। इत्यादि में।

यहाँ अद्भुत रस के अनुगुण एक चुल्लू में मतस्य एवं कूर्म का दर्शन शोभातिशता की पुष्टि करता है। वहाँ एक ही चुल्लू में समुद्र के सन्निधान से भी दिव्य मत्स्य एवं कच्छप का दर्शन अक्षुण्ण अर्थात् दूसरे से अनिर्भिन्न होने से अद्भूत रस के ज्यादा अनुगुण है। दूसरे से निर्भिन्न वस्तु लोक में प्रसिद्ध हो जाने से अद्भुत होकर भी आश्चर्यकारी नहीं होती।

न तो उपनिबध्यमान अक्षुण्ण वस्तु अद्भुत रस के लिए ही अनुगुण होती है अपितु दूसरे रसों का भी अनुगुण होती है। वह जैसे—

'हे सुभग' सकरी गली में संयोगवश उसके जिस पार्श्व स टकराए हुए आप आगे बढ़े थे वह पार्श्व आज भी पसीजता है, रोमाञ्चित होता है और काँपता है।

इस गाथा के भाव्यमान अर्थ से जो रस की प्रतीति होती है, वह आपको छू लेने पर पसीजती हैं, रोमाञ्चित होती है और काँपती है, इत्यादि इस प्रकार के प्रतीयमान अर्थ से बिलकुल नहीं होती है।

इस प्रकार ध्वनि के प्रभेदों के आश्रय से जैसे काव्यार्थों में नवीनत्व आ जाता है, उसका प्रतिपादन किया गया।

इसी तरह गुणीभूतव्यङ्ग्य के तीन भेद वाले वस्तु अलङ्कार, इस व्यङ्ग्य की अपेक्षा से जो भी प्रकार हो सकते है उनके आश्रय से भी काव्यवस्तुओं का नवत्व हो जाता है। वह जो है अत्यन्त विस्तार वाला होने से यहाँ उदाहृत नहीं है, सहृदयों को स्वयं अन्वेषण कर लेना चाहिए।

प्रकरण का निष्कर्ष यह है कि अङ्गी बने रसादि के आश्रय से उपनिबद्ध होने पर काव्य में एक तो नये अर्थ का'लाभ होता है और दूसरा तो प्रबन्ध की शोभा भी अधिक होती है। रस के अनुगुण की वस्तु होने पर उसमें खाश अलङ्कार न रहने पर भी काव्य की शोभा बनी रहती है। जैसे– 'मुनिर्जयति' आदि में। इसमें खाश अलङ्कार के न होने पर भी एक ही चुल्लू में दिव्य मत्स्य एवं कच्छप का दर्शन रूप वस्तु अद्भूत रस का इतना अनुगुण है कि उससे काव्य की शोभा अधिक बनी हुई है। वस्तुत: दूसरे से अनिर्भिन्न वस्तु ही रस के अनुगुण मानी जाती है और यह न केवल अद्भुत रस में ही अपितु सभी रसों में यह शोभादायक होता है। जैसे– 'सिज्जइ, इत्यादि में भाव्यमान अर्थ से जो शृंगार की प्रतीति होती है वह आपको छूकर पसीजती हैं आदि प्रतीयमान अर्थ से भी नहीं।

जैसे ध्वनि के प्रभेदों के आश्रय से अर्थ में नवीनत्व आ जाता है वैसे ही गुणीभूतव्यङ्ग्य के भी तीनों प्रकारों के व्यङ्ग्य की अपेक्षा से बनने वाले भेदों के आश्रय से भी अर्थ में नवीनत्व आ जाता है।। ५।।

कारिका– ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात्।
न काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभागुण:।। ६ ।।

ध्वन्या०– सत्स्वपि पुरातनकविप्रबन्धेषु यदि स्यात्प्रतिभागुण:, तस्मिस्त्वसति न किञ्चिदेव कवेर्वस्त्वस्ति। बन्धच्छायाप्यर्थद्वयानुरूप-शब्दसन्निवेशोऽर्थतिभानाभावे प्रकथमुपपद्यते? अनपेक्षितार्थविशेषा-क्षररचनैव बन्धछायेति नेदं नेदीय: सहृदयानाम्। एवं हि सत्यर्थान-पेक्षचतुरमधुरवचनरचनायामपि काव्यव्यपदेश: प्रवर्तेत। शब्दार्थयो: साहित्येन काव्यत्वे कथं तथाविधे विषये काव्यव्यवस्थेति चेत्-परोप-निबद्धार्थविरचने यथा तत्काव्यत्वव्यवहारस्तथा तथाविधानां काव्य-सन्दर्भाणाम्।। ६ ।।

लीला– ध्वनिवर्णप्रकरणमुपसंहरति कारिकाकारो ध्वनेरित्यादिना इत्थध्वने-र्गुणीभूतव्यङ्ग्यस्य च समाश्रयात् काव्यार्थविराम: न अस्ति यदि प्रतिभागुण: स्यात् इति पदव्यवस्था।

इत्थं= अनेकपूर्वप्रतिपादितेन प्रकारेण, ध्वने:, गुणीभूतव्यङ्ग्यस्य, च= अपि, समाश्रयात्=.अबलम्बनात्, काव्यार्थविराम:= काव्यवस्तुसमवसानं, न, अस्ति= भवति, यदि, प्रतिभागुण:= प्रतिभानवनवोन्मेषशालिनी प्रज्ञा सा एव गुण:, स्यादिति।

इत्थं ध्वनेः प्रभेदनाः गुणीभूतव्यङ्ग्यस्य चावलम्बनेन प्रतिभासम्पन्नस्य कवेः काव्यवस्त्ववसानं नैव भवतीत्याशयः।

वृत्तिकारः कारिकायास्तुरीयपादं व्याख्याति सत्स्वपीत्यादिना- पुरातनकविप्रबन्धेषु= प्राचीनकविनिबद्धप्रबन्धेषु, सत्सु= विद्यमानेषु, अपि यदि प्रतिभागुणः= प्रज्ञारूपगुणः स्यात् तदा तस्य काव्यमानन्त्याय कल्पते, तस्मिन्= प्रतिभागुणे, असति= अविद्यामाने, तु कवेः, किञ्चित् किमपि, एव, वस्तु= विषयः, न अस्ति। अर्थद्वयानुरूपशब्दसन्निवेशः= अर्थद्वयस्य व्यङ्ग्येऽपि ध्वनिगुणीभूतव्यङ्ग्यरूपो योऽर्थस्तस्य ध्वनिगुणीभूतव्यङ्ग्यरूपस्यानुरूपोऽनुगुणो व्यञ्जकत्वेन यः शब्दानां सन्निवेशो घटनं स एवार्थः प्रयोजनं यस्य तादृशं यत्प्रतिभानं प्रज्ञा तस्याभावेऽविद्यमानत्वे, सति बन्छच्छायाः प्रबन्धविच्छित्तिः, अपि, कथम् उपपद्यते अपितु कदापि 'नैवेति। अनपेक्षितार्थविशेषाक्षररचना= अनपेक्षितोऽसम्बद्धोऽननुगुणोऽर्थविशेषो यस्य तादृशी या अक्षराणां वर्णानां रचना सङ्घटना, एव बन्धच्छाया= काव्यविच्छित्तिः, इति= इत्थं, इदं, सहृदयानां= रसिकानां, न= नैव, नेदीयः= अनुमतमिति। एवं= इत्थं, हि, सति, अर्थानपेक्षचतुरमधुररचनायां= अर्थानपेक्षिणां व्यङ्ग्यार्थाननुगुणानां चतुराणां विचित्रसंघटनात्मकानां मधुराणां कोमलवर्णाकलितानां वचनानां या रचनायां, अपि, काव्यव्यपदेशः= काव्यसंज्ञा, प्रवर्तेतेति। शब्दार्थयोः= शब्दस्य अर्थस्य च, साहित्येन चमत्कारपूर्णतया यः समन्वयस्तेन, काव्यत्वे, तथाविधे= तादृशे शब्दमात्रस्य चमत्कारित्वे विषये, काव्यव्यवस्था, इति चेत्, यथा, परोपनिबद्धार्थविरचने= अन्यसंगृहीतार्थसङ्ग्रहे, तत्= तत्र, काव्यत्वव्यवहार= काव्यव्यपदेशः, तथा, तथाविधानां= शब्दचमत्कृतिमात्रयुमानां, काव्यसन्दर्भाणां= काव्यप्रबन्धानामिति।

कथनस्यास्यायमाशयः— प्रतिभावान् कविर्व्यङ्ग्यद्वयसमाश्रयेण काव्यं विच्छितिमण्डितं कर्तुं प्रभवति। तस्य कृते विषयानामानन्तयमपि सम्भवति प्रतिभाभावे न कथमपि काव्यं सुन्दरं भवति। व्यङ्ग्यार्थानुकूलशब्दसन्निवेशने एव काव्यविच्छित्तिराधिक्याय कल्पतें अर्थविशेषानयेक्षिवर्णमात्रसङ्घटना न सुकाव्याय भवति तथा सति तु निरर्थककोमलवर्णविन्यासोऽपि काव्यत्वाय कल्पेत। ननु काव्यं तु शब्दार्थयोः सहभावेन भवति तेन शब्दमात्र कथं काव्यत्वमुक्तमिति चेत् परसम्पादितार्थनिबन्धने यथा काव्यत्वव्यवहारो भाक्तत्वेन तथैव तत्रापि न तु वास्तविक इति। अत्र काव्यत्वशब्दुस्तु कवनीयं काव्यं तस्य भाव इति निष्पन्नो न तु कवेर्भाव इतीत्थम्।। ६।।

कारिकाकार ध्वनि के वर्णन का उपसंहार करते हैं—

इस प्रकार ध्वनि एवं गुणीभूतव्यङ्ग्य के आश्रय से, यदि कवि में प्रतिभा गुण हो तो काव्य के अर्थ का विराम नहीं होता।। ६।।

वृत्तिकार कारिका के चतुर्थपाद की व्याख्यचा करते हैं—

पुराने कवियों के प्रबन्धों के रहने पर भी यदि कवि में प्रतिभा गुण हो तो काव्य के अर्थ का विराम नहीं होता, उसके प्रतिभा गुण के न रहने पर तो कवि के लिए कोई वस्तु ही नहीं रह जाती। दोनों अर्थ ध्वनि एवं गुणीभूतव्यङ्ग्य के अनुरूप शब्द के सन्निवेश वाले अर्थ के प्रतिमान के अभाव में काव्यबन्ध की शोभा कैसे हो सकती है? अर्थ से निरपेक्ष अक्षरों की रचना ही काव्य की शोभा होती है ऐसी बात सहृदयों भी अभिमत नहीं है। इस प्रकार मानने पर तो अर्थ निंरपेक्ष चतुर एवं मधुर वचनों की रचनामें में काव्य का व्यपदेश होने लगेगा। काव्यत्व तो शब्द एवं अर्थ के विचित्र सहभाव में होता है तो वैसे विषय में कैसे काव्य व्यवस्था होती है– ऐसी आशङ्का है तो ऐसा– दूसरे के द्वारा निबद्ध अर्थ की रचना में जैसे भक्तिरूप में काव्यत्व का व्यवहार होता है न कि वास्तविक रूप में उसी तरह उस प्रकार के काव्य सन्दर्भों का काव्यत्व मान लेना चाहिए।। ६।।

ध्वन्या०– न चार्थानन्त्यं व्यङ्ग्यार्थपेक्षयैव यावद्वाच्यार्थपेक्षयापीति प्रतिपादयितुमुच्यते–

कारिका– अवस्थादेशकालादिविशेषैरपि जायते।
आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः।। ७।।

ध्वन्या०– शुद्धस्यानपेक्षितव्यङ्ग्यस्यापि वाच्यस्यानन्त्यमेव जायते स्वभावतः। स्वभावो ह्ययं वाच्यानां चेतनानामचेतनानां च यदवस्था-भेदाद्देश– भेदात्कालभेदात्स्वालक्षण्यभेदाच्चानन्तना भवति। तैश्च तथा-व्यवस्थितैः सद्भिः प्रसिद्धानेकस्वभावानुसरणरूपयां स्वभावोक्त्यापि तावदुपनिबध्यमानैर्निरवधिः काव्यर्थः सम्पद्यते।

लीला– इत्थं व्यङ्ग्यापेक्षया काव्यार्थस्यानन्त्यं प्रतिपाद्य सम्प्रति वाच्यार्था-पेक्षयापि काव्यार्थस्य तथात्वनिर्देशककारिकावतारणाय वृत्तिकृदुपक्रमते नेत्या-दिना– न= नैव, च, व्यङ्ग्यार्थपेक्षया= ध्वनिगुणीभूतान्यतमरूपप्रतीय- मानार्था-पेक्षया, एव अर्थानन्त्यं= काव्यवस्तुनो निरवधित्वं, यावत्= तदतिरिक्तमपि, वाच्यार्थपेक्षया= अभिधेयवस्त्वपेक्षया, अपि, इति, प्रतिपादयितुं= निरूपयितुं, उच्यते= कथ्यत इति।

सम्बद्धकारिकामवतारयति अवस्थेत्यादिना शुद्धस्य वाच्यस्य अपि अवस्थादेशकालादिविशेषैः स्वभावतः, अपि आनन्त्यम् एव जायत इति पदव्यवस्था।

शुद्धस्य= केवलस्यानपेक्षितव्यञ्जनाव्यापारस्य, वाच्यस्य= अभिधेयस्य, अपि, अवस्थादेशकालादिवेशेषैः= अवस्था= स्थिति देशः स्थानं कालः समयस्त-दादिगता ये विशेषास्तैः, स्वभावतः= स्वप्रकृत्या, अपि, आनन्त्वं= निरवधित्वं, एव, जायते= सम्पद्यत इति।

न केवलं व्यङ्ग्यापेक्षयैवापितु तदनपेक्षत्वेऽपि वाच्यमपि अवस्था- देश—कालस्वरूपादिविशेषैरानन्त्यं भजत इति।

कारिकां विवृणोति वृत्तिकारः शुद्धेस्येत्यादिना-शुद्धस्य= अनपेक्षित-व्यङ्ग्यस्य—वस्तुतस्तु वाच्यस्य नितान्तमेव व्यङ्ग्यानपेक्षत्वे काव्यत्मेव तस्य न सिध्यति निरात्मत्वात्तेनात्र शुद्धपदं व्यञ्जनाविषयीभवनात्प्रागवस्थाबोधकं ज्ञेयम्, अपि, वाच्यस्य= अभिधेयस्य, स्वभावतः= स्वप्रकृत्या, आनन्त्यं= निरवधित्वं, जायते= सम्पद्यते, एवेति। वाच्यस्यानन्त्यमेव व्यङ्ग्यस्यानन्त्ये योनिरिति वाच्यस्यानन्त्यस्यापि प्रकृतमेव। अयं= एषः, स्वभावः, हि चेतनानां= चैतन्ययुक्तानाम्, अचेतनानां चैतन्यरहितानां, च, वाच्यानां= वाच्यार्थानां, यत्, अवस्थाभेदात्= स्थितिवैविध्येन, देशभेदात्= स्थानवैविध्येन, कालभेदात्= समय-वैविध्येन, स्वालक्षण्यभेदात्= स्वरूपलक्षणवैविध्याच्य, अनन्तता= निरवधिता, भवतीति। तथाव्यवस्थितैः= तत्प्रकारनिर्द्धारितैः, सद्भिः, तैः= अवस्थादिभिः, प्रसिद्धानेकस्वभावानुसरणरूपया= प्रसिद्धा, ख्याता येऽनेके विविधाः, स्वभावाः, स्वरूपाणि तेषामनुसरणमनुगमनं तद्रूपया, स्वभावोक्त्याः स्वरूपवर्णनया, अपि, तावत्= सकल्येन, उपनिबध्यमानैः= ग्रथ्यमानैः, काव्यार्थः= काव्यसम्बद्धवस्तु, निरवधिः= अनन्तः, सम्पद्यते= कल्पत इति।

अस्यायमाशयः= न केवलं व्यङ्ग्यसङ्गत्यैवापितु तत्पूर्वावस्थस्यापि वाच्य स्यावस्थादेशकालस्वरूपादिविशेषैरानन्त्यं सम्भवति यतस्तदाक्षिप्तत्वेन व्यङ्ग्य-स्याप्यानन्त्यं सम्भवति। कथनेनानेन निर्व्यङ्ग्यस्यापि वाच्यस्य काव्यत्वं नैव चिन्तनीयम् अपितु तत्प्रागवस्थागतस्यैव वाच्यस्येति बोध्यम्। वाच्यानन्त्येन च व्यङ्ग्यानन्त्यसिद्धिरिति प्रकरणारम्भस्य प्रकृतत्वमिति।

इस प्रकार व्यङ्ग्य के आनन्त्य से काव्यार्थ का आनन्त्य बताकर अब स्वयं वाच्यार्थ की अनन्तता का निर्देश करनेवाली कारिका का अवतारण करते हैं—

अर्थ का आनन्त्य न केवल व्यङ्ग्य अर्थ की अपेक्षा से ही होता है अपितु वाच्य अर्थ की अपेक्षा से भी, इसे प्रतिपादित करने के लिए कहा जाता है—

कारिका का अवतारण करते हैं—

शुद्ध वाच्य का भी स्वभावतः अवस्था, देश, काल, आदि विशेषों से भी आनन्त्य हो जाता हैं।

वृत्तिकार कारिका की व्याख्यचा करते हैं—

शुद्ध अर्थात् व्यङ्ग्य की अपेक्षा न रखे हुए भी वाच्य की भी स्वभाव के अनुसार अनन्तता होती है। यह स्वभाव जो है वह चेतना एवं अचेतन वाच्य का होता है जिसकी अवस्थाभेद से, देशभेद से, कालभेद से एवं स्वालक्षण्य-स्वरूपभेद से भी अनन्तता होती है उस तरह व्यवस्थित बने उन भेदों से तथा प्रसिद्ध अनेक उपनिबध्यमान स्वभाव के अनुसरणरूप स्वरूप कथन से भी काव्य का अर्थ अनन्त हो जाता है।। ७।।

ध्वन्या०— यथा ह्यवस्थाभेदान्नवत्वं यथा—भगवती पार्वतो कुमार सम्भवे 'सर्वोपदाद्रव्यसमुच्येन' इत्यादिभिरुक्तिभिः प्रथममेव परिसमापित-रूपवर्णनापि पुनर्भगवतः शम्भोर्लोचनगोचरमायान्ती 'वसन्तपुष्पा भरणं वहन्ती' मन्मथोपकरणभूतेन भङ्ग्यन्तरेणोपवर्णिता। सैव च पुनर्नवोद्वा-हसमये प्रसाध्यमाना 'तां प्राङ्मुखीं तत्र निवेश्य तन्वीम्' इत्याद्युक्ति-भिर्नवनैव प्रकारेण निरूपितरूपसौष्ठवा। न च ते तस्य कवेरेकत्रैवास-कृत्कृता वर्णनप्रकारा पुनरुक्तत्वेन वाऽनवनवार्थनिर्भरत्वेन वा प्रतिभासन्ते। दर्शितमेव चैताद्विषमबाणलीलायाम्—

ण अ ताण घडइ ओही ण अ ते दीसन्ति कह वि पुनरुत्ता।
जे बिब्भमा पिआणां अत्था वा सुकइ वाणीणम्।।

न च तेषां घटतेऽवधिः, न च ते दृश्यन्ते कथमपि पुनरुक्ताः।
ये विभ्रमाः प्रियाणामर्था वा सुकविवाणीनाम्।। इतिच्छाया।

अयमपरश्चावस्थाभेदप्रकारो यदचेतनानां सर्वेषां चेतनं द्वितीयं रूपमभिमानित्वप्रसिद्धं हिमवद्गङ्गादीनाम्। तच्चोचितविषयस्वरूपयोज नयोपनिबध्यमानमन्यदेव सम्पद्यते। यथा कुमारसम्भव एव पर्वतस्वरूपस्य हिमवतो वर्णनं, पुनः सप्तर्षिप्रियोक्तिषु चेतनतत्स्वरूपापेक्षया प्रदर्शितं तदपूर्वमेव प्रतिभाति। प्रसिद्धश्याचं सत्कवीनां मार्गः। इदञ्च प्रस्थानं विषमबाणलीलायां सप्रपञ्चं दर्शितम्। चेतनानां च बाल्याद्यवस्था-भिरन्यत्वं सत्कवीनां प्रसिद्धमेव। चेतनानामवस्थाभेदेऽप्यवान्तरावस्था-भेदान्नानात्वम्। यथा कुमारीणां। कुसुमशरभिन्नहृदयानामन्यासां च। तत्रापि विनीतानामविनीतानाञ्च। अचेतनानाञ्च भावानामारम्भाद्यवस्थाभे-दभिन्नानामेकैकशः स्वरूपमुपनिबध्यमानमानन्त्यमेवोपयाति। यथा—

हंसानां निनदेषु यैः कवलितैराषज्यते कूजता—
मन्यः कोऽपि कषायकण्ठलुठनादाघर्घरो विभ्रमः।
ते सम्प्रत्यकठोरबारणवधूदन्ताङ्कुरस्पर्धिनो
निर्याताः कमलाकरेषु विसीनीकम्दाग्रिमग्रन्थयः।।
एवमन्यत्रापि दिशानयानुसर्तव्यम्।

लीला— कारिकायामवस्थादेशकारणस्वरूपभेदाद्वाच्यस्यानन्त्यं यदुक्तं तदेवोदाहर्तुमुपक्रमते वृत्तिकृत् यथेत्यादिना—यथा, हि= इति निदर्शने, अवस्था-भेदात्, नवत्वं= नूतनत्वं, यथा, कुमारसम्भवे= महाकविकालिदासकृतौ तदाख्ये काव्ये, भगवती पार्वती, 'सर्वोपमाद्रव्यसमुच्चयेन' इत्यादिभिः, उक्तिभिः=

कथनैः, प्रथमं= पूर्वम्, एव, परिसमातिरूपपवर्णना= सम्पादिताकृतिव्याख्याना, अपि, पुनः, भगवतः, शम्भोः, लोचनगोचरं= नयनपंथम्, आयान्ती, 'वसन्त-पुष्पाभरणं वहन्ती' इति मन्मथोपकरणभूतेन= कामसाधनरूपेण, भङ्गचन्तरेण= अन्ययैव युक्त्या, उपवर्णिता= निरूपिता। सा, एव, च, पुनः नवोद्वाहसमये= परिणयकाले, प्रसाध्यमाना अलङ्कार्यमाणा 'तां प्राङ्मुखीं तत्र निवेश्य तन्वी' 'इत्याद्युक्तिभिः= कथनान्तरैः नवेन= नूततेन प्राग्भिन्नेन, एव, प्रकारेण, निरूपि-तरूपसौष्ठवा= वर्णिताकृतिकमनीयताऽस्ति। न= नैव, च, तस्य= प्रसिद्धस्य, कवेः= कालिदासस्य, एकत्र= एकस्मिन् काव्ये, एव, असकृत्कृताः= एकाधिके-बारविहिताः, ते= तादृशाः, वर्णनप्रकाराः, पुनरुक्तत्वेन= तदेव पुनः पुनरावृत्य कथनत्वेन, वा, अनवनवार्थनिर्भरत्वेन= अनवनवः पुराणो नूतनताशून्योऽर्थस्त-स्मिन्निर्भरत्वेन, वा प्रतिभासन्ते= द्योतन्त इति। एतत्= पूर्वोक्तमसकृदेकत्र वर्णनेऽप्यपुनरुक्तत्वं नवनवत्वञ्च, विषयबाणलीलायां= तदाख्य आनन्दवर्धन-प्रणीते काव्ये। तदेवोपस्थापयिति ण अ' इत्यादि—

जे (ये) पिआणं ( प्रियाणां) विब्भमा ( विभ्रमाः) वा सुकइ वाणीणं (सुकविवाणीनां) अत्था (अर्थाः) ताण (तेषां) ण (न) अ (च) ओही (अवधिः) घडइ (घटते) ते, ण (न) अ (च) कहवि ( कथमपि) पुनरुत्ताः (पुनरुक्ताः) दीसन्ति (दृश्यन्ते) इति पदव्यवस्था।

ये खलु, प्रियाणां= बल्लभानां, विभ्रमाः= लीलाद्याः शृङ्गारचेष्टाः, वा, सुकविवाणीनां= सिद्धकविवचसां, अर्थाः च तेषां, न, च, अवधिः= समयः, घटते, ते, न, च, कथमपि= केनापि प्रकारेण, पुनरुक्ताः= असकृत्कथिता, च, दृश्यन्ते इति।

दयितानां विभ्रमाः सुकविभारतीनामर्थाश्च निरवधयो नित्यं नवनवाश्च भवन्तीत्याशयः।

अयं= वक्ष्यमाणः, अपरः= अन्यतमः, च= अपि, भेदप्रकारः= प्रभेदविशेषः, यद्, सर्वेषां= निखिलानां, अचेतनानां= चैतन्यरहितानां, अभिमानित्वप्रसिद्धं= अभिमानित्वेनारोपितत्वेन प्रसिद्धं ख्यातं कविकल्पितं, द्वितीयं= अपरं, चेतनं= चैतन्ययुक्तं, रूपं यथा, हिमवद्गङ्गादीनां= हिमवतः गङ्गायाश्च आदिपदादन्ये-षामपि येषां प्रथमं जडस्वरूपं निर्वण्य पश्चाच्चेतनस्वरूपं निर्वण्यते वा चेतनयुक्तवदुपस्थाप्यन्ते तेषां, तत्= अचेतनं वस्तु उचितचेतनविषयस्वरूपयो-जनया= उचितं योग्यं यच्चेतनं तस्य विषयस्तस्य स्वरूपस्य योजनयाऽऽरोपेण, उपनिबध्यमानं, अन्यत्= अपरं, एव, सम्पद्यते इति। यथा— कुमारसम्भवे, एव, (प्रथमम् ''अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः' इत्यादिना। हिमवतः= हिमालयस्य, पर्वतस्वरूपस्य= भूभृद्रूपस्य, वर्णनं=

उपस्थापनं, पुनः= तत्रैवापरप्रसङ्गे, सप्तर्षिप्रियोक्तिषु= सप्तर्षीणां जमदग्निप्रभृतीनां प्रियोक्तिषु पार्वतीपरिणयसम्बन्धप्रीत्यालापेषु, चेतनतत्स्व रूपापेक्षया= प्रत्युत्थानादिभिश्चेतनवद्व्यवहारापेक्षत्वेन, प्रदर्शितं= विवर्णितं, तद्, अपूर्वं= नवीनं, एव, प्रतिभाति= द्योतते। अयं= एषः अचेतनानामपि चेतनव्यवहार-वर्णनरूपः, मार्गः= पन्था, सत्कवीनां, प्रसिद्धः= ख्यातः, एवेति। इदं= एतत्, प्रस्थानं= सम्प्रदायः, कविव्युत्पत्तये= कविविशिष्टज्ञानहेतवे, विषमबाणलीलायां,= तदाख्ये ग्रन्थे, सप्रपञ्चं= सविस्तरं दर्शितं= निर्दिष्टमेवेति। चेतनानां= चैक्तन्ययुक्तानां, च= अपि, बाल्याद्यवस्थाभिः= बाल्ययौवनवार्धक्यप्रभृतिभिः अवस्थाभिः, अन्यत्वं= अपरत्वं, सत्कवीनां, प्रसिद्धं, एवेति। (यथा कुमारसम्भवे एव पार्वत्योः बाल्ययौवनावस्थावर्णने।) चेतननानां, अवस्थाभेदे= अवस्थाज-न्यबाल्यादिप्रभेदे, अपि, अवान्तरावस्थाभेदात् नानात्वं= वैविध्यं भवत्येव। यथा, कुमारीणां= अनूढानां, कुसुमशरभिन्नहृदयानां= पुष्पवाणनिर्भिन्नचेतसां-कामातुराणां, अन्यासां= अनुनुभूतमदनावस्थानां, च। तत्र= तयोः, अपि, विनीतानां= उद्धतानां, च। अचेतनानां= चैतन्यरहितानां, आरम्भाद्यवस्थाभेद-भिन्नानां= प्रारम्भप्रभृतिस्थितिभेदपृथक्कृतानां, भावानां, एकैकशः= प्रत्येकं, उपनिबध्यमानं, स्वरूपं, आनन्त्यं= निरवधितां, एव, उपयातीति। यथा= इति, निदर्शने— हंसानामित्यादि—यैः कबलितैः कूजतां हंसानां कषायकण्ठलुठनात्, निनदेषु अन्यः कः अपि आघर्घरः विभ्रमः आसज्यते, अकठोरवारणवधूद-न्ताङ्कुरस्पर्धिनः ते विसिनीकन्दाग्रिमग्रन्थयः कमलाकरेषु निर्याता इति पदव्यवस्था।

यैः, कबलितैः= भक्षितैः, कूजतां—शब्दायमानानां, हसानां, कषायकण्ठ-लुठनात्= कषाये मधुरशब्दयुते कण्ठे गले लुठनात् संयोगात्, अन्यः= अपर एव, कोऽपि= अपूर्वः, आघर्घरः= सान्द्रः, विभ्रमः= विलासः, आसज्यते= संयोज्यते, सम्प्रति= वसन्तोदये, अकठोरवारणवधूदन्ताङ्कुरस्पर्धिनः= अकठोरो नवत्वात्कोमलो यो वारणवधूदन्ताङ्कुरः हस्तिनीदशनं तस्य स्पर्धिनस्तुल्य-स्वरूपाः, ते= तादृशाः, विसिनीकन्दाग्रिमग्रन्थयः= विसिन्याः कमलिन्याः कन्दस्य अग्रिमाः प्रथमा गन्थयः प्ररोहाः, कमलाकरेषु, निर्याताः= प्रकटिता इति।

एवं= इत्थं, अन्यत्र= एतदतिरिक्तस्थानेषु, अपि, अनया, दिशा, अनुसर्तव्यमिति।

कथनस्यास्यायमाशयः— न केवलं व्यङ्ग्यापेक्षयैवापितु शुद्धस्यापि वाच्यस्य अवस्थादेश-काल-स्वरूपभेदादानन्त्यं वा नवत्वं यदुक्तं तत्र चेतनानां बाल्याद्यवस्थाभेदैस्तेषामप्यवान्तरावस्थाभेदैरचेतनानां प्रारम्भाद्यवस्थाभेदैर्वा तेषु चेतनत्वारोपेण वाऽऽनन्त्यं सञ्जायते। तत्र बाल्याद्यवस्थाभेदै र्नवत्वं यथा

कुमारसम्भवे पार्वतीरूपसौष्ठववर्णनम्। सा च बाल्ये यौवने हरसाम्मुख्ये परिणयावसरे तथैव वर्णिता किन्तु न तत्र पुनरुक्तत्वप्रतीतिर्न च प्राक्तनत्वमर्थस्य। उक्तमेव विषमबाणलीलायां यद्दयितानां विभ्रमाणां कविवचसामर्थानाञ्च नैव कदाप्यवधिर्घटते न च तेषां पुनरुक्तत्वप्रतीतिरपितु ते सदैव नवनवा: परिभासन्त इति। अचेतनेषु चेतनत्वारोपोऽपि प्रकारो यन्नवत्वमर्थेषूत्पादयति यथा नगाधिराजत्वेन वर्वितस्यापि हिमवत: सप्तर्षिसंलापावसरे चेतनवत्प्रत्युत्थानादिकथने। तथैवाचेतनानामारम्भाद्यवस्थाभेदैरर्थस्य नानात्व सञ्जायते यथा ''हंसाना'' मित्यादिपद्ये। अत्र विसरूपस्याचेतनवस्तुनोऽङ्कुरण- रूपप्रारम्भावस्थावर्णनेऽपूर्वत्वमिति। चेतनानामवस्थाभेदानाञ्चावान्तरभेदैर्नानात्वं सम्भवति यथाऽनूढानां कामातुरत्वमज्ञाततत्सारत्वं तत्रापि शिष्टत्वमौद्धत्यञ्चेति।

वाच्य का भी अवस्था, देश, काल एवं स्वरूप भेद से जो अनन्तता कही गई उनमें से अवस्थाभेद से अर्थ का नवत्व जैसे 'कुमार सम्भव' में भगवती पार्वती पहले ही 'सभी उपमा के योग्य द्रव्यों के समुदाय से' इत्यादि उक्ति से रूप का वर्णन की गई भी फिर भगवान् शङ्कार के सामने आती हुई 'वासन्ती फूल के गहने पहनी हुई' इत्यादि कथन से कामदेव के उपकरण रूप दूसरी भङ्गी से वर्णित हैं। वे ही फिर विवाह के समय सजाई गई 'उन पतली कमरवाली को पूर्वमुख करके बिठाकर' इत्यादि उक्तियो से नये प्रकार से उनके रूप का सौष्ठव निरूपित किया गया है। न तो उन कवि के अनेक बार किए गए वे वर्णन प्रकार पुनरुक्त के रूप में वा पुराने अर्थ में भी निर्भर रहने के रूप में ही प्रतिभासित होते हैं। 'विषमबाणलीला' में यह दिखलाया ही गया है—

''जो प्रेयसी के विभ्रम और सफलकवि के वचनों के अर्थ हैं उनकी न तो कभी अवधि घटित होती है और न वे कभी किसी भी प्रकार से पुनरुक्त ही प्रतीत होते हैं।''

यह दूसरा भी अवस्था भेद का प्रकार है जो सभी अचेतन हिमालय गङ्गा आदि का आरोपित के रूप में प्रसिद्ध दूसरा चेतनरूप है। वह जड़ वस्तु उचित चेतन के विषय के स्वरूप की योजना से उपनिबध्यमान होकर दूसरा ही बन जाता है। जैसे कुमारसम्भव में ही पर्वत स्वरूप हिमालय का वर्णन, फिर सप्तर्षियों के साथ प्रियालापों में चेतनस्वरूप की अपेखा से प्रदर्शित जो है वह अपूर्व ही लगता है। अच्छे कवियों का यह प्रस्थान प्रसिद्ध ही है। कवियों की व्युत्पत्ति के लिए यह प्रस्थान 'विषमबाणलीला' में सविस्तार दिखलाया गया है। चेतनों का भी बाल्य आदि अवस्थाओं से अन्यत्व अच्छे कवियों में प्रसिद्ध ही है। चेतनों के अवस्था भेद में भी अवान्तर अवस्था भेदों से नानात्व होता है। जैसे काम बाण से भिन्न हृदयों वाली और अन्य कुमारियों का। उसमें विनीतों एवं अविनीतों का भी। आरम्भ आदि अवस्था भेद से भिन्न अचेतनभावों का भी उपनिबध्यमान एक एक स्वरूप अनन्तता को प्राप्त होता है। जैसे—

खाए गए जिनसे शब्द करते हुए हंसों के मधुर कण्ठ के संयोग से आवाजों में दूसरा ही अलौकिक घर्घर रूप का विलास जुट ताता है, हथिनी के कोमल दन्ताङ्कुर से स्पर्धा करनेवाली वे कमलिनी के कन्द की अग्रिम ग्रन्थियाँ अभी (वसन्त के प्रारम्भ में) निकल आई है।'

इस तरह अन्यत्र भी इसी प्रकार से अनुसरण करना चाहिए।

कहने का आशय यह है कि शुद्ध वाच्य का भी अवस्था आदि भेद से आनन्त्य होता है। उनमें से अवस्था चेतनों में बाल्य आदि होती है और अचेतनों में आरम्भ आदि तथा चेतनत्व का आरोप आदि। उन अवस्थाओं के भी अनेक अवान्तर भेद हैं जिसे वाच्य का आनन्त्य बन जाता है। कुमारसम्भव में बाल्यावस्था में यौवन में पदार्पण करने पर, शङ्कर के सम्मुख उपस्थित होते समय, विवाह के अवसार पर भी पार्वती का रूप सौष्ठव वर्णित है किन्तु उनमें न तो पुनरुक्ति है और न ही पुरानेपन का आभास है। इसी तरह पहले पर्वत के रूप में वणित हिमालय सप्तर्षियों के साथ आलाप के अवसर पर चेतन के रूप में जो वर्णित है उसमें भी नवत्व है। अचेतन भावों का भी अवस्था विशेष का पृथक्-पृथक् वर्णन वाच्यार्थ को अनन्तना प्रदान करता है।

ध्वन्या०— देशभेदान्नानात्वमचेतनानां तावत्। यथा वायूनां नानादिग्देशचारिणामन्येषामपि सलिलकुसुमादीना प्रसिद्धमेव। चेमनानामपि मानुषपशुपक्षिप्रभृतीनां ग्रामारण्यसलिलादिसमेधितानां परस्परं महान् विशेषः समुपलक्ष्यत एव। स च विविच्य यथायथमुपनिबध्यमानस्तथैवानन्त्यमायाति। तथा हि मानुषाणामेव तावाद्दिग्देशादिभिन्नानां ये व्यवहारव्यापारादिषु विचित्रा विशेषास्तेषां केनान्तः शक्यते गन्तुम्, विशेषतो योषिताम्। उपनिबध्यते च तत्सर्वमेव सुकविभिर्यथाप्रतिभम्।

लीला— इत्थमवस्थाभेदाद्वाच्यस्यानन्त्यं निरूप्य सम्प्रति देशभेदाद्वाच्यस्यापूर्वत्वं निरूपयति देशेत्यादिना–तावत्= प्रथमम्, अचेतनानां= जडवस्तूनां, देशभेदात्= स्थानानुसारेण, नानात्वं= वैविध्यं, यथा, नानादिग्देशचारिणां= पृथक्पृथक्स्थानस्थितानां, वायूनां=अनिलानां, अन्येषां= इतरेषां, सलिलकुसुमादीनां= जलपुष्पादीनां, नानात्वं, प्रसिद्धमेव। यथा श्रावणे प्राच्यो वायुर्वर्षाहरः। मजयजो वायुः कामोद्दीपकः। तप्ताः शीत्तलाश्चापः। मानुषपशुपक्षिप्रभृतीनां= नर-पशु-खगादीनां, ग्रामारण्यसलिलादिसमेधितानां= ग्रामे जनपदे अरण्ये कान्तारे सलिले जल च समेधितानां प्राप्तवृद्धिकाणां, चेतनानापं, अपि, परस्परं, महान्= स्पष्टः, विशेषः= अन्तरं, समुपलक्ष्यते= दृश्यते, एव। सः= विशेषः, च, यथायथं= यथास्वं, विविच्य= निरूप्य, उपनिबध्यमानः, तथैव= तेनेव प्रकारेण, आनन्त्यं= अनन्ततां, आयाति= प्राप्नोति। तथा हि— दिग्देशादिभिन्नानां= पृथक्स्थानगतानां, मानुषाणां= नराणां, एव, व्यवहारव्यापारदिषु= क्रियाकलापादौ प्रयोगचेष्टादौ

च, विशेषाः, विचित्राः= विभिन्नाः, तेषां, अन्तः= आभ्यन्तरं, गन्तुं= प्रवेष्टुं केन, शक्यते अपितु न केनाऽपि, विशेषतः= तत्रापि विशेषेण, योषितां= स्त्रीणाम्। तत्, सर्वं= निखिलं, एव सुकविभिः, यथाप्रतिभं= प्रतिभानुसारं उपनिबध्यते चेति।

यथाऽवस्थाभेदेन तथैव स्थानभेदेनाऽपि चेतनानामचेतनानाञ्च विशेषा भवन्ति। ते चानन्ता एव यैर्वाच्यार्थोऽपि निरवधित्वं प्राप्नोति।

इस प्रकार अवस्था भेद में वाच्य का नवत्व प्रतिपादित कर अब देशभेद से भी होने वाले वाच्य के नानात्व का प्रतिपादन करते हैं—

पहले देशभेद से अचेतनों के नानात्व को ही ले लें। जैसे नाना दिशाओं एव स्थानों में विचरण करने वाले वायु एवं जल, पुष्प आदि दूसरी वस्तुओं का भी नानात्व प्रसिद्ध ही है। चेतनों में भी गाँव, जङ्गल, जल आदि में आश्रय लिए मनुष्य, पशु, पक्षी आदियों का भी परस्पर में बड़ा ही अन्तर दिखलाई पड़ता ही है। उसी यथार्थ रूप में विवेचना का उपनिबध्यमान अन्तर ही उसी तरह अनन्तता को प्राप्त होता है। स्पश्ट है कि नाना दिग्देश आदि में रहने वाले मनुष्यों के हो व्यवहार एवं व्यापार आदि में विचित्र विशेष हैं और उनका पार पाना किसी के लिए भी सम्भव नहीं है, उनमें भी खाश कर स्त्रियों का वह सभी कवियों के द्वारा अपनी प्रतिभा के अनुसार उपनिबद्ध है भी।

ध्वन्या०— कालभेदाच्च नानात्व यथर्तुभेदाद्दिग्व्योमसलिलादीनामचेतनानां चेतनानां चौत्सुक्यादयः कालविशेषाश्रयिणः प्रसिद्धा एव।

लीला— इत्थं दिग्देशभेदाद्वाच्यस्यानन्त्यमुदाहृत्य सम्प्रति कालभेदात्तन्निरूपयति कालेत्यादिना— कालभेदात् समयभेदेन च, वाच्यस्य, नानात्वं= अनेकत्वं, सञ्जायत इति। यथा, ऋतुभेदात्=ऋतुभेदेन, दिग्व्योमसलिलादीनां= काष्ठागगनजलादीनां, अचेतनानां नानाविधत्वं सञ्जायते। यथा वर्षासु दिशो मेघाच्छन्ना गगनं मेघलिप्तं जलञ्चास्वच्छं भवति किन्तु शरदि सर्वमपि विमलमेवेति। चेननानां= चेतनधर्मिणां मनुष्यादीनां च, औत्सुक्यादयः= उत्कण्ठाप्रभृतयः, कालविशेषाश्रयिणः= समयविशेषसापेक्षाः, इति प्रसिद्धा एवेति।

इस प्रकार दिग्देशभेद से वाच्य के आनन्त्य का निरूपित कर अब कालभेद से उनकी अपूर्वता का निरूपण करते हैं—

कालभेद से ही वाच्य का नानात्व होता है, जैसे ऋतुभेद से दिशाए, आकाश, ज़ल आदि अचेतनों का चेतनधर्मियों का भी उत्कण्ठा आदि काल विशेष के ही आश्रयी होने की बात प्रसिद्ध ही है।

ध्वन्या०— स्वालक्षण्यप्रभेदाच्च सकलजगद्गतानां वस्तूनां विनिबन्धनं प्रसिद्धमेव। तच्च यथावस्थितमपि तदुपनिबध्यमानमन्ततामेव काव्यार्थस्यापादयति।

लीला— इत्थं कालभेदाद्वाच्यस्यानन्त्यं निरूप्य सम्प्रति स्वरूपभेदात्तन्नि-

रूपयति स्वालक्षण्येत्यादिना—स्वालक्षण्यप्रभेदात् स्वरूपभेदात् सकलजगद्-गतानां= समस्तविश्वस्थानां, वस्तूनां= अर्थानां, विनिबन्धनं, प्रसिद्धमेव। तत्= स्वालक्षण्यं, यथावस्थितं= यथा विद्यते तथैव, अपि, तावत्= साकल्येन, उपनिबध्यमानं, काव्यार्थस्य, अनन्ततां= निरवधितां, एव आपादयति= साधयति इति।

इस प्रकार कालभेद से वाच्य की अनन्तता का प्रतिपादन कर अब स्वरूप भेद से होने वाली वाच्य की अनन्तता का प्रतिपादन करते हैं—

स्वरूपगत भेदों से भी सभी जागतिक वस्तुओं का निबन्धन प्रसिद्ध ही है। वह यथास्थित भी रूप में उपनिबध्यमान भी काव्यर्थ की अनन्तता का प्रतिपादन करता है।

ध्वन्या०— अत्र केचिदाचक्षीरन्-यथा सामान्यात्मना वस्तूनि वाच्यतां प्रतिपद्यन्ते न विशेषात्मनाः, तानि हि स्वयमनुभूतानां सुखादीनां तन्निमित्तानां च स्वरूपमन्यत्रारोपयद्भिः स्वपरानुभूतरूपसामान्यमात्रा- श्रयेणोपनिबध्यन्ते कविभिः। नहि तैरतीतमनागतं वर्तमानञ्चापरिचितादिस्वलक्षणं योगिभिरिव प्रत्यक्षीक्रियते, तच्चानुभाव्यानुभवसामान्यं सर्वप्रतिपत्तृसाधारणं परिमितत्वात्पुरातनानामेव गोचरीभूतम्, तस्याविषयत्वानुपपत्तेः। अतएव स प्रकारविशेषो यैरद्यतनैरभिनवत्वेन प्रतीयते तेषामपि मानमात्रमेव भणितिकृतवैचित्र्यमत्रास्तीति।

तत्रोच्यते-यत्तूक्तं सामान्यमात्राश्रयेण काव्यप्रवृत्तिस्तस्य च परिमितत्वेन प्रागेव गोचरीकृतत्वान्नास्ति नवत्वं काव्यवस्तूनामिति तदयुक्तम्-यतो यदि सामान्यमात्रमाश्रित्य काव्यं प्रवर्तते किंकृतस्तर्हि महाकविनिबध्यमानानां काव्यार्थानामतिशयः ? सामान्यव्यतिरिक्तस्यान्यस्य काव्यार्थस्यान्यस्य कविव्यपदेश एव वा? सामान्यव्यतिरिक्तस्यान्यस्य काव्यार्थस्याभावात्, सामान्यस्य चादिकविनैव प्रदर्शितत्वात्। उक्तिवैचित्र्यान्नैष दोष इति चेत्-किमिदमुक्तिवैचित्र्यम्? वाच्यवाचकयोरविनाभावेन प्रवृत्तेः। वाच्यचानां च काव्ये प्रतिभासमानानां यद्रूपं तत्तु ग्राह्यविशेषाभेदेनैव प्रतीयते। तनोक्तिवैचित्र्यवादिना वाच्यवैचित्र्यमनिच्छताप्यवश्यमेवाभ्युपगन्तव्यम्। तदयमत्र सङ्क्षेपः—

वाल्मीकिव्यतिरिक्तस्य यद्येकस्यापि कस्यचित्।
इष्यते प्रतिभार्थेषु तत्तदानन्त्यमक्षयम्।।

किञ्च उक्तिवैचित्र्यं यत्काव्यनवत्वे निबन्धनमुच्यते तदस्मत्पक्षानुगुणमेव। यतो यावानयं काव्यार्थानन्त्यभेदहेतुः प्रकारः प्रदर्शितः स सर्व एव पुनरुक्तिवैचित्र्याद्द्विगुणतामापद्यते। यश्चायमु— पमाश्लेषादिर-

लङ्कारवर्गः प्रसिद्धः स भणितिवैचित्र्यादुपनिबध्यमानः स्वयमेवानवधिर्ध त्ते पुनः शतशाखताम्। भणितिश्च स्वभाषाभेदेन व्यवस्थिता सती प्रतिनियतभाषागोचरार्थवैचित्र्यनिबन्धनं पुनरपरं काव्यार्थानामानन्त्यमापादयति। यथा ममैव—

महमह इत्ति भणन्तउ वज्जादि कालो जणस्स।
तोई ण देउजणद्दण गोअरो भोदि मणसो।।
मम मम इति भणतो व्रजति कालो जनस्य।
तथापि न देवो जनार्दनो गोचरो भवति मनसः।। इतिच्छाया।

इत्थं यथा निरूप्यते तथा तथा न लभ्यतेऽन्तः काव्यार्थानाम्।।७।।

लीला— अवस्थादिविशेषभेदाद्वाच्यार्थस्य शुद्धस्याप्यानन्त्यं यदुक्तं तत्रासहमतानां सम्भाव्यशङ्कासमाधानाय प्रकरणमारभते वृत्तिकृद् अत्रेत्यादिना- अत्र= विषयेऽस्मिन् केचित्= केचन तदसहमताः, आचक्षीरन्= कथयेयुः सम्भावनार्थे लिङ् बहुत्वञ्च तादृशानां यथार्थविमुखानां बाहुल्यद्योतनाय, यथा, वस्तूनि= अर्थाः, सामान्यात्मना= साधारणस्वरूपेण, वाच्यतां= अभिधेयत्वं, प्रतिपद्यन्ते= प्राप्नुवन्ति न= नैव, विशेषात्मना= विशेषस्वरूपेण। तानि= वस्तूनि, हि स्वयं= आत्मना, अनुभूतानां= अनुभवविषयीकृतानां, सुखादीनां= सुखं प्रीतिः, आदिपदाद् दुःखानाञ्च, तन्निमित्तानां= तेषां सुखदुःखानां निमित्तानां जनककारणानां, स्वरूपं, अन्यत्र= परस्मिन्। आरोपयद्भिः= कल्पयद्भिः, कविभिः= काव्यकारैः, स्वपरानुभूतसामान्यमात्राश्रयेण= स्वपरानुभूतानां स्वानुभूतपरानुभूतानां यत्सामान्यं जातित्वं न तु व्यक्तित्वं तदेव विशेषान्तररहितं तन्मात्रं तस्य आश्रयेणाधारेण= विशेषशून्यसामान्याश्रयेण, उपनिबध्यन्त इति। न= नैव, हि, तैः= कविभिः योगिभिः= योगसिद्धैः, इव, अपरिचितादिस्वलक्षणं= अज्ञातवस्तुस्वरूपं, अतीतं- भूतकालिकं, अनागतं= भविष्यत्कालिकं, वर्तमानं= तात्कालिकं, च= इति चतुर्णामेव समुच्चये, प्रत्यक्षीक्रियते= प्रत्यक्षमेव नयनगोचरीक्रियते। तत्= तादृशं, च अनुभाव्यानुमात्रसामान्यं= अनुभाव्यमनुभववस्तु सुखादि अनुभावस्तत्साधनं तयोः सामान्यं साधारणं सर्वप्रतिपत्तृसाधारणं= निखिलमतिविषयं, परिमितत्वात्= नियतत्वात् पुरातनानां प्राचीनानां कवीनाम्, एव गोचरीभूतं= बुद्धिविषयीभूतमेव तस्य= अनुभाव्यानुभावसामान्यस्य, अविषयत्वानुपपत्तेः= अविषयत्वं पुरातनानामगोचरीभवनं तस्य अनुपपत्तेरसिद्धेः। अत एव= अनेन हेतुना, सः= तादृशः पुरातनकविविषयीभूतः प्रकारविशेषः= वाच्यानन्त्यरूपः, यैः, अद्यतनैः साम्प्रतिकैः कविभिः, अभिनवत्वेन= नूतनत्वेन, प्रतीयते= प्रकट्यते तेषां= साम्प्रतिककवीनां, अभिमानमात्रं= गर्वमात्रमपुनरुक्तेः, अत्र= एतादृशे काव्ये तु भणीतिकृतं उक्तिजनितं, वैचित्र्यमात्रं= चमत्कारित्वमेव अस्ति इति।

अत्रेदमाशङ्क्यते= अवस्थादिभेदने शुद्धस्यापि वाच्यस्य नवत्वमानन्त्यं वेति यदुक्तं तत्कथं सम्भवति। किञ्च पदार्थास्तु सामान्यरूपेणैव वाच्यतां भजन्ते येन सर्वस्यापि गोचरीभवनं सिध्येत्। विशेषात्मना प्रतिपादिताश्चार्थास्तु नैव सर्वविषया भवन्ति येन काव्यस्य सर्वविषयत्वं सम्भवेत्। कविस्तु स्वानुभूत-सुखादितद्धेतुस्वरूपमपरस्मिन्नारोपयन् स्वपरानुभूतरूपसामान्यमात्रा- श्रयेणार्थान् वर्णयति न च व योगीव सार्वकालिकार्थान् परगतभावाँश्च करतलामलकव-त्प्रत्यक्षमेव ग्रहीतुं प्रभवति विशेशरूपेण। शब्दानां संकेतग्रहणमपि सामान्य-दृष्ट्यैब भवति। तादृशश्च विषयोऽनुभाव्यानुभावसामान्येन सर्वविधज्ञातृसामान्येन च सीमितत्वादपि प्राचीनामेव कवीनां गोचरीभूत एव अतथाभवने तस्य विषयत्वस्यासिद्धेः। तेन यदुच्यते साम्प्रतिकैरभिनवो विषयो निबद्ध इति तद्-वृथाभिमान एव तेषां काव्यत्वं, तु उक्तिवैचित्र्यमात्रेणेति। तत्समादधाति तत्रेत्यादिना तत्र= प्रश्नेऽस्मिन्, उच्यते= कथ्यते यत्= यादृशं, तु सामान्याश्रयेण= विषयसाधारणत्वमात्राधारेण न तु विशेषाधारेण तथा सति काव्यस्य सर्वग्राह्यताभावात्, काव्यप्रवृत्तिः= काव्यस्य निर्वृत्तिः, तस्य= सामान्यमात्राश्र-यत्वस्य, परिमितत्वेन= परिच्छिन्नत्वेन, प्राचीनैः कविभिः प्राक्= पूर्वमेव, गोचरीकृतत्वात्= प्रत्यक्षविषयीकृतत्वात्, काव्यवस्तूनां= काव्यार्थानां नवत्वं= नूतनत्वं, नास्ति= नैव सम्भवतीति, तत् अयुक्तं= असाम्प्रतम्। तत्र हेतुं निर्दिशति यतः= यस्मात् यदि, सामान्यमात्रं= विषयसामान्यत्वं, एव आश्रित्य आधृत्य, काव्यं, प्रवर्तते= प्रवृत्तं भवति, तर्हि= तदा महाकविनिबध्यमानानां= सिद्धकाव्य-कारसम्पाद्यमानानां, काव्यार्थानां= काव्यवस्तूनां, किकृतः= किंजनितः, अतिशयः= उत्कर्षः, वा वाल्मीकिव्यतिरिक्तस्य= वाल्मीकिभिन्नस्य, अन्यस्य= अपरस्य, काव्यकारस्य, कविव्यपदेशः= कविसंज्ञाः यतः सामान्यव्यतिरिक्तस्य= साधारणेतरस्य, अन्यस्य= अपरस्य काव्यार्थस्य= काव्यविषयस्य, अभावात्= अनस्तित्वात्, सामान्यस्य= साधारणस्य, च, आदिकविना= वाल्मीकिना, एव प्रदर्शितत्वात्= प्रकटितत्वात्। तत्र उक्तिवैचित्र्यात्= भणितिवैशिष्ट्यात् न, एषः= पूर्वोक्तः दोषः इति चेत्? किं, इदं, उक्तिवैचित्र्यं= भणितिवैशिष्ट्यम् नाम? हि= यतः, उक्तिः= भणितिः वाच्यविशेषप्रतिपादिवचनं= अभिधेकार्थविशेष—साधकवागेव, तद्वैचित्र्ये= तस्या वाच्यविशेषप्रतिपादिकाया उक्तेः वैचित्र्ये= वैलक्षण्ये, कथं= केन हेतुना, वाच्यवैचित्र्य= वाच्यार्थवैशिष्ट्यं न, भवतीति, यतः वाच्यवाचकयोः, अविनाभावेन= एकं विनाऽपरस्याप्यभावतया, प्रवृत्तेः= प्रवर्तनस्वभावात्। काव्ये= कविकृतौ, प्रतिभासमानानां= द्योतमानानां वाच्यानां= वाच्यार्थानां यद्= यदेव, रूपं= स्वरूपं तत्, तु ग्राह्यविशेषाभेदेन= ग्राह्यविशेषस्य= ग्रहीतव्यवस्तुविशेषस्य अभेदेन तादात्म्येन, एव, प्रेतीयते= प्रतीतिविष-

यतामायाति। तेन= तद्धेतुना, उक्तिवैचित्र्यवादिना= भाणितिवैशि– ष्ट्यसमर्थकेन, वाच्यवैचित्र्यं= वाच्यगतवैशिष्ट्यं, अनिच्छता= अतत्परेण, अपि, अवश्यं= अपरिहार्यरूपेण, एव, अभ्युपगन्तव्यं= स्वीकर्तव्यमिति तद्= तस्मात् अत्र= प्रसगेऽस्मिन्, अयं= एषः, सङ्क्षेपः= सारवचनम्। तदुपस्थापयति वाल्मीकि-त्यादिना– यदि वाल्मीकिव्यतिरिक्तस्य कस्यचिद् एकस्य अपि अर्थेषु प्रतिभा इष्यते तत् अक्षयं तदानन्त्यम् इति पदव्यवस्था। यदि वाल्मीकिव्यतिरिक्तस्य= वाल्मीकिभिन्नस्य, कस्यचित् कस्यापि, एकस्य अपि, अर्थेषु= वस्तुषु काव्यगतेषु, प्रतिभा= वाग्वैभवं, इष्यते= स्वीक्रियते, तत्, अक्षयं= चिरस्थायि, तदानन्त्यं= तस्य काव्यर्थस्य आनन्त्यं निरवधित्वमेवेति।

किञ्च, यत्, काव्यनवत्वे= काव्यनूतनत्वं, उक्तिवैचित्र्यं= कथनवैशिष्ट्यं, निबन्धनं= निमित्तं, उच्यते= स्वीक्रियते, तत्, अस्मत्पक्षानुगुणं= अस्मत्कथना-नुकूलं, एवेति। यतः= यस्मात्, यावान्= अयं= पूर्वोक्तः, काव्यार्थानन्त्यभेदहेतुः= काव्यार्थानाम् आनन्त्यभेदे हेतुः, प्रकारः= प्रभेदः प्राक्= पूर्वं, प्रदर्शितः= निर्दिष्ट, सः, सर्वः= निखिलः, एव, पुनः, उक्तिवैचित्र्यात्= प्रतिपादनवैशिष्ट्यात्, द्विगुणतां= वैपुल्यम्, आपद्यते= प्राप्नोति, यः, च, अयं= प्रसिद्धः, उपमाश्लेषादि= उपमाश्लेषप्रभृतिः, अलङ्कारवर्गः वाच्यालङ्कारसमूहः प्रसिद्धः= प्रचलितः, सः, भणितिवैचित्र्यात्= कथनवैशिष्ट्यात्, उपनिबध्यमानः सन् स्वयमेव, अनवधिः= अनन्तः पुनः, शतशाखतां= बहुप्रकाण्डतां, धत्ते, च। भणितिः= उक्तिः च, स्वभाषाभेदेन= स्वभारतीस्वरूपेण, व्यवस्थिता= नियमिता, सती, पुनः, काव्यार्थानां= काव्यवस्तूनां अपरं= अन्यं, प्रतिनियतभाषागोचरार्थवैचित्र्यनिबन्धनं= प्रत्येकनिश्चितभाषाविषयवस्तुवैशिष्ट–च्यनिमित्तादिरूपम् आनन्त्यं= निरवधित्वं, आपाददति= विदधाति इति। यथा मम (आनन्द वर्धनस्य। एव महमह इति जणस्य (जनस्य) मह मह ( मम मम) इत्ति (इति) भणन्त उ (भणतः) कालो (कालः) वज्जदि (व्रजति) तोइ (तथापि) देउ (देवः) जणद्दण) जनार्दनः मणसो (मनसः) ण (न) गोअरीमोदि (गोचरीभवति) इति पदव्यवस्था।

जनस्य, मम मम इति= इदं ममैवेतीत्थं, भणतः= जल्पतः, कालः= समयः, व्रजति= गच्छति, तथापि देवः= परमात्मा, जनार्दनः= नारायणः, मनसः न गोचरीभवति= नयनपथमायातीति।

प्रकरणमुपसंहरति इत्थमित्यादिना– इत्थं= अनेन प्रकारेण, यथा, यथा, निरूप्यते= विविच्यते, तथा, तथा, काव्यार्थानां= काव्यवस्तूनां, अन्तः, न, लभ्यत इति।

अत्रेदमुच्यते–सामान्यमात्राश्रयेणैव काव्यप्रवृत्तेः सामान्यस्य च परिच्छि-न्नत्वेन दृष्टपूर्वत्वान्नास्ति काव्यार्थानां नवत्वमिति नितान्तमेवासाम्प्रतम् यदि

तथा स्यात्तदा महाकविकृतावतिशय एव न सिध्येत् यतः सामान्येतरका-व्यार्थाभावात्तस्य चादिकविनैव प्रयुक्तपूर्वत्वाच्च। यदि उक्तिवैचित्र्येण तेषामपि काव्यत्वं भवतीत्युच्यते तदप्यशोभनमेव। वाच्यविशेषप्रतिपादकवचनमेवो-क्तिस्तस्या वैचित्र्ये वाच्यस्य स्वत एव वैचित्र्यं भवत्येव। वाच्यवाचकयोर-विनाभावेन स्थितेः। काव्यवाच्यार्थस्तु ग्रहीतव्यविषयतादात्म्येनैव प्रतीतिमायाति। यदि वाल्मीकिभिन्नः कोऽप्येकः कविगणनायां पतति तदा वाच्यार्थस्यानन्त्यं स्वतः सिध्यतीति। पूर्वनिर्दिष्टश्च वाच्यानन्तभेद उक्तिवैचित्र्येण पुनरसङ्ख्यभेदो भवति। भणीतिवैचित्र्येण निबद्धोऽलङ्कारसमूह उपमादिः स्वयमेवानन्तो भवति बहुप्रकारातां भजते च। आनन्त्यं भाषागतप्रभेदेनाऽपि भवति यथा 'मह मह, 'इत्यादौ। 'मह मह, इत्येतस्य 'मम मम' वा 'मधुमथन' इत्यपिच्छाया सैन्धव भाषाबलात्। इत्थं काव्यार्थानामानन्त्यं सुदुर्लभमिति।। ७।।

अवस्था आदि के भेद के कारण जो वाच्य का आनन्त्य कहा गया उस पर सम्भावित उापत्ति को उठाकर उसका समाधान करते हैं।

इस पर कुछ लोग कह सकते हैं– जैसे सामान्य आत्मा से ही वस्तुएं वाच्यत्व को प्राप्त करती हैं न कि विशेष आत्मा के रूप में। वे वस्तुएं अपने से अनुभव किए गए सुख आदि भाव तथा उनके निमित्तों का दूसरे में आरोपित करने वाले कवियों के द्वारा अपने तथा दूसरों के द्वारा अनुभूत रूप सामान्य के आश्रय से ही उपनिबद्ध की जाती है। वे अर्थात् कवि अपरिचित स्वभाव वाले भूत, भविष्यद् एवं वर्तमान का योगियों के समान प्रत्यक्ष नहीं कर सकते। वह अनुभव किए जाने वाले विषय एवं उनका अनुभव करने वालों में सामान्य, सभी प्रतिपत्ताओं में साधारण्या एवं परिमित होने से पुरातन कवियों का ही गोचरीभूत हुआ होता है क्योंकि उसके विषय न होने की बात सिद्ध नहीं हो सकती। अतएव वह प्रकार विशेष जिन आधुनिकों के द्वारा नये रूप में प्रतीत किया जाता है, वह केवल अभिमान मात्र है, यहाँ पर केवल उक्ति के द्वारा साधित वैचित्र्य मात्र है।

प्रश्नकर्ता का आशय यह है कि कवि जिस भी भाव का गुम्फन करता है वह उसके अपने वा दूसरे के अनुभव का ही विषय होता है और उसका निबन्धन भी सामान्य रूप से ही होता है न कि विशेष रूप से। कवि कोई योगी तो नहीं जो अनुभूत भूत, भविष्यत् एवं वर्तमान का भी प्रत्यक्षीकरण कर सके वे अनुभव सामान्य के विषय पुराने कवियों के द्वारा दृष्टिगत किए गए ही होते हैं। अतः आधुनिक कवियों की अभिनवता की दाबी तो अभिमान मात्र है, केवल उसमें उक्ति वैचित्र्य मात्र होता है।

उस विषय में कहा जाता है– जो यहा कहा गया कि ''काव्य की प्रवृत्ति सामान्य मात्र के आश्रय से होती है और उसके परिमित होने से पहले ही गोचरीकृत हो जोन से काव्यार्थों की नवीनता नहीं होती'' वह ठीक नहीं है। क्योंकि यदि सामान्य मात्र के आश्रय से काव्य की प्रवृत्ति होती है तो महाकवियों द्वारा निबध्यमान

काव्यार्थों का उत्कर्ष किसके द्वारा होता है? अथवा वाल्मीकि के अतिरिक्त अन्य का कवि नाम ही कैसे होता है? सामान्य से अतिरिक्त और किसी के काव्यार्थ न होने से और सामान्य के आदिकवि के द्वारा ही प्रदर्शित होने से।

यदि उक्ति के वैचित्र्य से उसमें दोष न होने की बात मानी जाती है तो यह उक्ति वैचित्र्य है ही क्या? वाच्यविशेष का प्रतिपादक वचन ही तो उक्ति है और उसका वैचित्र्य कैसे वाच्य का वैचित्र्य नहीं होता क्योंकि वाच्यवाचकभाव की अविनाभाव (एक के बिना दूसरे का न होना) से प्रवृत्ति होती है। काव्य में प्रतिभा समान वाच्यों का जो रूप है वह तो ग्राह्यविशेष के अभेद से ही प्रतीत होता है। इस कारण उक्ति वैचित्र्यवादी को वाच्य का वैचित्र्य न चाहते हुए भी अवश्य ही स्वीकार करना पड़ेगा इस हेतु यहाँ यह सारवचन है।

"यदि वाल्मीकि से भिन्न किसी एक का भी अर्थों में प्रतिभा अभीष्ट हो तो वह वाच्य का अक्षय आनन्त्य हो जाता है।"

इसका आशय यहा हो जाता है कि काव्य में सामान्य के साथ साथ विशेष का भी उतना ही स्थान होता है यदि सामान्य मात्र का काव्य में स्थान होता तो वाल्मीकि के अतिरिक्त न कोई दूसरा कवि होता और न तो रामायण (वाल्मीकि रामायण) के अलावा कोई दूसरा काव्य ही। अवस्था, देश, काल आदि इस विशेष के भेदक तत्व होते हैं।

यह भी कि उक्ति वैचित्र्य को काव्य के नवत्व में निबन्धन अर्थात् निमित्त कहा जाता है वह हमारे ही पक्ष के अनुकूल है, क्योंकि यह काव्यार्थों के अनन्तभेद के हेतु जितना भी प्रकार दिखाया गया है, वह सब ही फिर उक्ति वैचित्र्य से द्विगुणित हो जाता है। जो यह उपमा, श्लेष आदि प्रसिद्ध अलङ्कार समूह है वह उक्ति वैचित्र्य से उपनिबन्ध्यमान होकर स्वयं भी अनन्त हो जाता है और अनेक भेदों में बट जाता है। और उक्ति अपने भाषाभेद से व्यवस्थित होकर प्रत्येक नियतभाषा में पाए जाने वाले अर्थ वैचित्र्य के कारण फिर दूसरा ही काव्यर्थों का आनन्त्य सम्पादित करती है। जैसे मेरा ही—

लोगों का यह यह (मेरा मेरा) कहते कहते समय गुजर जाता है, फिर भी भगवान् जनार्दन मन के गोचर नहीं होते।

इस प्रकार जैसे-जैसे निरूपित किया जाता है, वैसे वैसे काव्यार्थो का अन्त नहीं मिलता।

कहने का आश्रय यह  है कि उक्ति वैचित्र्य को काव्य के नवत्व में हेतु मानना हमको भी अभीष्ट है। उक्ति वैचित्र्य से ही तो काव्यार्थों के नवत्व हेतु प्रकार जो हैं वे सब दुगुने हो जाते हैं। उक्त वैचित्र्य से उपनिबध्यमान उपमा, श्लेष आदि स्वयं ही अनन्त होकर अनेक भेद बताते हैं। एक भाषा में व्यवस्थित उक्ति दूसरी भाषा में निबध्य अर्थ वैचित्र्य का हेतु होकर फिर काव्यार्थों का आनन्त्य बनाती है। जैसे 'मह मह' आदि में। 'मह मह' यह भूतभाषा क्षेत्र की सैन्धवभाषा का शब्द है और उसकी संस्कृतच्छाया होती है 'मम मम' एवं मधुमथन भी जिससे दो अर्थ बन जाते है।

इस तरह वाच्यार्थ का आनन्त्य सिद्ध हो जाता है जिससे काव्य में नवत्व बना रहता है।। ७।।

ध्वन्या०— इदं तूच्यते

कारिका— अवस्थादिविभिन्नानां वाच्यानां विनिबन्धनम्।

ध्वन्या०— यत्प्रदर्शितं प्राक्

कारिका— भूम्नैव दृश्यते लक्ष्ये

ध्वन्या०— न तच्छक्यमपोहितुम्

कारिका— तत्त भाति रसाश्रयात्।। ८।।

लीला— वाच्यस्यानन्त्यनिदर्शकप्रकरणोपसंहारपूर्वकतदुपादेयत्वप्रतिपादककारिकावतारणाय वृत्तिकृदुपक्रमते इदमित्यादिना— इदं= वक्ष्यमाणवचनं तु= इति व्यवच्छेदे— यद्यपि काव्यार्थानामन्तो न लभ्यते तथापि, उच्यते= कथ्यते।

कारिकामवतारयति अवस्थेत्यादिना— (कारिकेयं कारिकावृत्योर्भेदस्य दुर्ग्रहतया वृत्या सहैव व्याख्यायते) अवस्थादिविभिन्नानां वाच्यानां विनिबन्धनं (यत् प्राक् प्रदर्शितं) लक्ष्ये भूम्ना एव दृश्यते। तत् अपोहितुं न शक्यं) तत् तु रसाश्रयात् भाति इति पदव्यवस्था।

अवस्थादिविभिन्नानां= अवस्थादिभिः अवस्था-देश-काल-स्वरूपैः विभिन्नानां विभिन्नरूपाणां, वाच्यानां= वाच्यार्थानां शुद्धानामपि, विनिबन्धनं= ग्रथनं (यत्, प्राक्= पूर्वं, प्रदर्शितं निर्दिष्टं,) लक्ष्ये= विषये, भूम्ना= बाहुल्येन, एव, दृश्यते= लक्ष्यते (तत्, अपोहितुं= अपलपितुं, न= नैव, शक्यं) तत्= तादृशं विनिबन्धनं, रसाश्रयात्= रसाभावाद्यालम्बनेन, भाति शोभते इति।

अवस्थादिविशेषभिन्नस्वरूपाणां वाच्यार्थानां प्राक्प्रदर्शितं यद् विनिबन्धनं लक्ष्ये बाहुल्येन दृश्यते, तदपलितुं न शक्यम्। किन्तु तद्रसभावाद्याश्रयेणैव शोभते न तु शुद्धमात्रम्। अर्थाच्छुद्धस्यापि वाच्यस्य ये प्रभेदास्ते कामं भेदत्वमाप्नुयुः किन्तु तेषामुपादेयत्वं तु उत्तरकालं रसादिसंस्पर्शनेन भवति न तु स्वरूपमात्रेणेति।। ८।।

वाच्य के आनन्त्य के निर्देशक प्रकरण का उपसंहार करते हुए उसकी उपादेयता के प्रतिपादक कारिका के अवतारण के लिए वृत्तिकार उपक्रम करते हैं—

यह तो कहा जाता है—

कारिका का अवतारण करते हैं—

अवस्था-देश-काल-स्वरूप आदि से विभिन्न वाच्यों का विनिबन्धन (जो पहले बताया गया है) लक्ष्य में बहुतायत से देखा जाता है (जिसका अपलपन सम्भव नहीं है) और वह रसादि के आश्रय से ही उपादेय होता है, केवल वही नहीं।

अवस्था आदि विशेश के चलते वाच्यों का जो विनिबन्धन है वह उत्तरकाल में रसादि के आश्रय से ही उपादेय होता है।। ८।।

ध्वन्या०— तदिदमत्र संक्षेपेणाभिधीयते सत्कवीनामुपदेशाय—

कारिका— रसभावादिसंबद्धा यद्यौचित्यानुसारिणी।
अन्वीयते वस्तुगतिर्देशकालादिभेदिनी।। ९।।

ध्वन्या०— तत्का गणना कवीनामन्येषां परिमितशक्तीनाम्।

कारिका— वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः।
निबद्धा सा क्षयं नैति प्रकृतिर्जगतामिव।।१०।।

ध्वन्या०— तथा हि जगत्प्रकृतिरतीतकल्पपरम्पराविर्भूतविचित्र-वस्तुप्रपञ्चा सती पुनरिदानीं परिक्षीणाऽपरपदार्थनिर्माणशक्तिरिति न शक्यतेऽभिधातुम्। तद्वदेवेयं काव्यस्थितिरनन्ताभिः कविमतिभिरुपभुक्तापि नेदानीं परिहीयते प्रत्युत नवनवाभिर्व्युत्पत्तिभिः परिवर्धते।।१०।।

लीला— प्रकरणोपसंहारपूर्वकं पूर्वप्रतिपादितार्थद्रढनप्रयोजककारिकावव-तारणायोपक्रमते वृत्तिकारस्तदित्यादिना-तत्= तादृशं, इदं= वक्ष्यमाणवचनं, अत्र= प्रकरणेऽस्मिन्, सत्कवीनां= सिद्धहस्तकाव्यकाराणां, उपदेशाय= शिक्षार्थं, सङ्क्षेपेण= साररूपेण, अभिधीयते= कथ्यते—

कारिकामवतारयति रसेत्यादि— (कारिकेयमपि सवृत्तिकैव व्याख्यायते) यदि रसभावादिसम्बद्धा औचित्यानुसारिणी देशकालादिभेदिनी वस्तुगतिः, अन्वीयते (तत् अन्येषां परिमितशक्तीनां कवीनां का गणना) वाचस्पतिसहस्राणां सहस्रैः यत्नतः निबद्धा अपि सा जगतां प्रकृतिः, इव क्षयं नैति इति पदव्यवस्था।

यदि, रसभावादिसम्बद्धा= रस-रसाभास-भाव-भावाभास-भावप्रशम-नादिभिः सह सम्बद्धा, औचित्यानुसारिणी= विविधौचित्यानुगामिनी, देशकाला-दिभेदिनी= देशकालावस्थास्वरूपादिप्रभेदैर्भिन्ना, वस्तुगतिः= वाच्यपरम्परा, अन्वीयते= अनुस्रियते ( तत्= तदा, अन्येषां= अपरेषां, परिमितशक्तीनां= सीमित-सामर्थ्यानां, कवीनां= काव्यकाराणां, का, गणना= कथा?) वाचस्पतिसहस्राणां= वाचस्पतीनां बृहस्पतीनां सहस्राणि तेषां सहस्रैः यत्नतः= सोद्यमं, निबद्धा= योजिता, अपि, सा वाच्यपरम्परा, जगतां= भुवनानां, प्रकृतिः, इव, क्षयं= नाशं, न, एति= गच्छति इति।

(यथाहि, जगत्प्रकृतिः= भुवनप्रकृतिः, अतीतकल्पपरम्पराविर्भूतविचित्र-वस्तुप्रपञ्चा= अतीतानां विगतानां कल्पानां प्राजापत्यादियुगानां याः परम्परा ताभिराविर्भूतः प्रकटितः वस्तूनां पदार्थानां प्रपञ्चो यया सा, तादृशी सती, पुनः, इदानीं, अपरपदार्थनिर्माणशक्तिः= इतरवस्तुरचनासामर्थ्यं, परिक्षीणा=

विनष्टा, इति, अभिधातुं= कथयितुं, न= नैव, शक्यते, तद्वत= तथा एव, इयं= ईदृशी, काव्यस्थिति:, अनन्ताभि:= असीमिताभि:, कविमतिभि:= कविबुद्धिभि:, उपयुक्ता= नितान्तप्रयुक्ता, अपि, इदानीं= अधुना, न= नैव, परिहीयते= क्षीयते, प्रत्युत= तद्विपरीतं, नवनवाभि:= अभिनवाभि:, व्युत्पत्तिभि:= शब्दार्थावबोधनशक्तिभि:, परिवर्धते= वृद्धिमाप्नोति इति।

प्रकरणस्यास्यायमाशय:— पूर्व यदेव प्रतिपादितं विस्तृतत्वेन द्वित्रैर्वाक्यै: सङ्क्षिप्य कथ्यते रसादिलिप्तं विविधौचित्यानुकूलं देशकालावस्थास्वरूपादिभेदितं वस्तु चानुस्रियते तदा गीष्पतिसंहस्रैरपि नितान्तप्रयत्नान्निबद्धमपि भुवनानां प्रकृतिरिव विनाशं नोपैति प्रत्युत वृद्धिमायातीति। यथा कल्पात्कल्पान्तरं प्राप्ताऽपि प्रकृतिर्नैव क्षीणा भवति तथैवानन्तकविप्रतिभोपभुक्तमपि वस्तु नैव क्षीयतेऽपितु नवनवप्रतिभाप्रयोगविषयत्वेन वृद्धिमेवायातीति।

प्रकरण को संक्षेप में समझाने वाली कारिका के अवतारण हेतु वृत्तिकार उपक्रम करते हैं—

अच्छे कवियों के उपदेश के लिए यहाँ यह संक्षेप से कहा जाता है—

कारिका का अवतारण करते हैं—

यदि रस, भाव आदि से सम्बद्ध, औचित्य का अनुसरण करने वाली देश, काल, अवस्था, स्वरूप आदि के विशेष से अनेक प्रभेद वाली वस्तु का अनुसरण किया जाता है तो—

(सीमित शक्ति वाले अन्य कवियों की तो क्या बात)

हजारौं हजार बृहस्पतियों से बड़े ही प्रयत्न से निबद्ध होने पर भी काव्य वस्तु भुवनों की प्रकृति की तरह नश्ट नहीं होती।।

जैसे कि जगत् की प्रकृति विगत कल्पों की परम्परा से आविर्भूत किया है विचित्र ही वस्तु का प्रपञ्च जिसने ऐसी होकर भी फिर अभी उसकी पदार्थों की निर्माणशक्ति नष्ट होने की बात कही नहीं जा सकती उसी तरह यह काव्य स्थिति अनन्त कविबुद्धियों से प्रयुक्त होकर भी अभी क्षीण नहीं होती बल्कि नयी-नयी व्युत्पत्तियों से बढ़ती ही है।। ९, १०।।

ध्वन्या०— इत्थं स्थितेऽपि—

कारिका— संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम्।

ध्वन्या०— स्थितं ह्येतत् संवादिन्य एव मेधाविनां बुद्धय:। किन्तु—

कारिका— नैकरूपतया सर्वे ते मन्तव्या विपश्चिता।। ११ ।।

*लीला*— कारिकेयमपि सवृत्तिकैव व्याख्याते तथास्थितत्वात् खण्डीकृत्य व्याख्याततत्वाच्च वृत्तौ। तदेव प्रकारान्तरेणापि विवेचककारिकावतारणाय वृत्तिकृदुपक्रमते। इत्थमित्यादिना-इत्थ= एवं, अवस्थादिविशेषविहितानन्त्येऽपि वाच्ये, स्थिते नियते, अपि,—

कारिकामवतारयति वृत्तिकारः संवादा इत्यादिना-सुमेधसां सवादाः तु बाहुल्येन भवन्ति एव (एतत् स्थितं हि मेधाविनां बुद्धयः संवादिन्य एव किन्तु) विपश्चिता ते सर्वे नैकरूपतया मन्तव्याः, इति पदव्यवस्था।

सुमेधसां= विदुषां, संवादाः= समानरूपकथनानि, बाहुल्येन= भयिष्ठं, भवन्ति एव, (एतत्, स्थित= नियतं, हि, यद्, मेधाविनां= सुमेधसां, बुद्धयः= प्रतिभाः, संवादिन्यः= समानरूपाः एव, किन्तु= तथापि) विपश्चिता= काव्यमर्मज्ञेन, सर्वे= निखिलाः, ते= संवादाः, नैकरूपतया= विविधस्वरूपत्वेन, मन्तव्याः= ज्ञेया इति।

कथनस्यास्यायमाशयः— वाच्ये देशादिविशेषभेदेन भिन्नेऽपि यत्र तत्र सादृश्यमपि भूयिष्ठं दृश्यत एव तथापि तदनेकरूपमेव ज्ञातव्यं काव्यमर्मज्ञैरिति। तथाविधे सादृश्ये बुद्धीनां संवादिस्वभाव एव हेतुर्न तु विषयस्यैक्यम्।।११।।

ऐसा होने पर भी— अर्थात् वाच्य के देश आदि विशेष के चलते भेद होने पर भी,

बुद्धिमानों के वचनों में संवाद अर्थात् मेल तो बहुतायत से होता ही है— (यह तो नियत है कि मेधावियों की बुद्धियाँ परस्पर संवादिनी= मेल जोल वाली होती हैं। किन्तु—

विद्वानों को उन सबकी एक रूप नहीं समझने चाहिए।

कहने का आशय यह है कि इस तरह देश विशेष के चलते वाच्य के वैविध्य होने पर भी विद्वानों के वचनों में बहुतायत से मेल भी हो जाता है किन्तु वे सब एक रूप के नहीं होते। उनमें सूक्ष्म ही सही, भेद अवश्य होता है।।११।।

ध्वन्या०— कथमिति चेत्—

कारिका— संवादो ह्यन्यसादृश्यं तत्पुनः प्रतिबिम्बवत्।
आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम्।।१२।।

ध्वन्या०— संवादो हि काव्यार्थस्योच्यते यदन्येन काव्यवस्तुना सादृश्यम्। यत्पुनः शरीरिणां प्रतिबिम्बवदालेख्याकारवत्तुल्यदेहिवच्च त्रिधाव्यवस्थितम्। किञ्चिद्धि वस्तु वस्त्वन्तरस्य शरीरिणः प्रतिबिम्बकल्पम्, अन्यदालेख्यप्रख्यम्, अन्यत्तुल्येन शरीरिणा सदृशम्।

लीला— सत्यपि वाच्ये देशादिविशेषेण भिन्ने तत्र संवादस्यापि भवनं यदुक्तं तस्य स्वरूपावधारककारिकावतारणाय वृत्तिकृदुपक्रमते कथमित्यादिना— कथं= केन प्रकारेण, तादृशः संवादः सम्भवति, इति, चेत्, कारिकामवतारयति संवाद इत्यादिना— अन्यसादृश्यं संवादः हि पुनः तत् शारीरिणां प्रतिबिम्बवत् आलेख्याकारवत् तुल्यदेहिवत् च, (त्रेधा) भवतीति पदव्यवस्था।

संवादः= संवादो नाम, अन्यसादृश्यं= इतरसामान्यं, हि, पुनः तत्=

अन्यसादृश्यं, च, शरीरिणां= देहिनां, प्रतिविम्बबत्= प्रतिच्छायेव, दर्पणादिगता, आलेख्याकारवत्= मित्यादिचित्रितप्रतिकृतिवत् तुल्यदेहिवत्= स्वसदृशशरीरगतात्मवत् चेति त्रिधा व्यवस्थितमिति।

कारिकां विवृणोति वृत्तिकृत्संवाद इत्यादिना— काव्यार्थस्य= काव्यवस्तुनः सवादः हि, यद, एकस्य, अन्येन= अपरेण, काव्यवस्तुना= काव्यगतार्थेन, सादृश्यं= समानत्वं, तदेव, उच्यते= कथ्यत इति। तत्= सादृश्यं पुनः शरीरिणां= देहिनां, प्रतिविम्बवत्= प्रतिच्छायेव, आलेख्याकारवत्= भित्तिगतचित्राकृतिवत्, तुल्यदेहिवत्= सदृशशरीरगतात्मवत्, च, त्रिधा= त्रिप्रकारेण, व्यवस्थितं= नियतमिति। तदेव व्याख्याति किञ्चिदित्यादिना—किञ्चित्= कतिपयं, काव्यवस्तु काव्यार्थः, शरीरिणः= देहिनः, वस्त्वन्तरस्य= अन्यस्यैवार्थस्य, प्रतिविम्बकल्पं= दर्पणादिगतप्रतिच्छायातुल्यं, अन्यत्= अपरं, आलेख्यप्रख्यं= भित्तिचित्रतुल्यं, अन्यत्= अपरं, तुल्येन= समानेन, शरीरिणा= देहिना, सदृशं= तुल्यमिति।

अत्रेदमुच्यते= संवादस्तु इतरसमानभाव एव स च पुनः देहिनां प्रतिच्छायेव, भित्तिगतचित्रार्पिताकृतिरिव सदृशकायिवत् चेति त्रिविधो भवति। भावसाम्यं मेधाविषु स्वाभाविकमेव। कस्मिंश्चित्पर्यावरणे यद्येकः केनचित्प्रकारेण प्रतिक्रियां व्यनक्ति तत्रैवापरोऽपि तथैव कर्तुं प्रभवत्येव। तेन तथाविधे विषये बुद्धिमिता नैव भावानुकरणं कल्पनीयम्। भावसाम्यं च त्रिविधं भवति। तत्र यदैकत्र नियतो भावोऽन्यत्र शब्दान्तरेण व्यज्यते तच्छरीरस्य दर्पणादिगतप्रतिविम्बवद्भवति। यथोक्तं काव्यमीमांसायां तत्स्वरूपम्।

अर्थः स एव सर्वो वाक्यान्तर विरचनापर यत्र।
तंदपरमार्थविभेदं काव्यं प्रतिविम्बकल्पं स्यात्।' इति।
यथा वसन्तवर्णनप्रसङ्गो रघुवंशशिशुपालवधयोः।

तथैव यदा तु समानोऽप्यर्थः केनापि संस्कारकर्मणा भिन्नवद्भाति यथा मूर्तवस्तुतच्चित्रे तदालेख्याकारवद्भवति। तथैव यत्र विषयभेदेऽपि नितान्तसादृश्यादभेदबुद्धिः सञ्जायते तत्तुल्यदेहिवद्भवति। इति।

अब दो भावों में संवाद (सादृश्य) के भी आस्तित्व की जो बात कहीं गई उसी प्रसङ्ग में संवाद के स्वरूप का निर्द्धारण करने वाली कारिका का अवतारण करने का उपक्रम करते हैं—

किस प्रकार ? यदि ऐसी आकाङ्क्षा हो तो ऐसे—

दूसरे के साथ साम्य ही संवाद है और फिर वह सादृश्य शरीरी के प्रतिविम्ब के तुल्य, चित्र के आकार के समान और तुलय देही के समान होता है।। १२।।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

वह काव्यार्थ का संवाद कहा जाता है जो कि दूसरी काव्य वस्तु से सादृश्य होता है जो, फिर, शरीरियों के प्रतिविम्ब जैसे, चित्र में अङ्कित आकार जैसे

तुल्यदेही जैसे तीन प्रकार से व्यवस्थित है। कोई वस्तु दूसरी वस्तु के शरीरी के प्रतिविम्ब तुलय होती है, दूसरी आलेख्य (चित्र) के समान होती है और कुछ तो तुल्यशरीरी के समांन होती है।

कहने का आशय यह है कि एक अर्थ या भाव का दूसरे अर्थ का भाव से साम्य ही संवाद है और वैसा साम्य कहीं तो प्रतिविम्ब के समान होता है, कहीं चित्र में अङ्कित आकृति के सामन होता है और कहीं तो तुल्य आकृति के शरीरी के समान होता है। अर्थात् कहीं तो ऐसा लगता है कि एक का दूसरा एकदम प्रतिविम्ब है। ऐसा तब होता है जब उसी भाव को वाक्यान्तर से व्यक्त किया जाता है। कहीं तो ऐसा भी होता है कि एक का दूसरा चित्र ही है। ऐसा तब होता है जब उसमें कुछ संस्कार विशेष अलग से डाल दिया जाता है। कुछ तो तुल्य आकृति के दो शरीर के समान होता है।

कारिका— तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम्।
तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत्कविः।।१३।।

ध्वन्या०— तत्र पूर्वं प्रतिबिम्बकल्पं काव्यवस्तु परिहर्तव्यं सुमतिना। यतस्तदनन्यात्म तात्त्विकशरीरशून्यम्। तदनन्तरमालेख्यप्रख्यमन्यसाम्यं शरीरान्तरयुक्तमपि तच्छात्मत्वेन त्यक्तव्यम्। तृतीयं तु विभिन्नकमनीय शरीरसद्भावे सति ससंवादमपि काव्यवस्तु न त्यक्तव्यं कविना। न हि शरीरी शरीरिणान्येन सदृशोऽप्येक एवेति शक्यते वक्तुम्।

लीला— इत्थं भावसाम्यस्य त्रैविध्यमुक्त्वा सम्प्रति तत्सम्बद्धं कविकर्तव्यं निर्दिशति कारिकाकारस्तत्रेत्यादिना— तत्र पूर्वम् अन्यसाम्यं, अनन्यात्म तदनन्तरं अन्यसाम्यं तुच्छात्म तृतीयं तु अन्यसाम्यं प्रसिद्धात्म कविः तत् न त्यजेत् इति पदव्यवस्था।

तत्र= तेषु त्रिविधेषु भावसाम्येषु, पूर्वं प्रथमं, अन्यसाम्यं, प्रतिविम्बतुल्यं, अनन्यात्म= अनन्यः पूर्वोपनिबन्धकाव्यादभिन्नः आत्मा स्वभावो यस्य तत्तादृशं, तत्त्याज्यमित्याशयः, तदनन्तरं= तत्पश्चाद्वर्ति आलेख्यप्रख्यं, तुच्छात्म= शून्यात्म, तदपि त्याज्यमेव, तृतीयं= तुल्यदेहिवत्, तु, प्रसिद्धात्म= ख्यातस्वरूपं, तत्, कविः न, त्यजेत्= परिहरेदिति।

कारिकां विवृणोति वृत्तिकारस्तत्रेत्यादिना—तत्र तेषु त्रिविधेषु भावसाम्येषु, सुमतिना= सुमेधसा, पूर्वं= प्रथमं, प्रतिविम्बकल्पं= प्रतिच्छायारूपं, काव्यवस्तु= काव्यार्थः, परिहर्तव्यं= त्यक्तव्यं, यतः= यस्मात्, तत्= प्रतिविम्बकल्पं, अनन्यात्म= अन्येनाभिन्नस्वरूपं, तात्विकशरीरशून्यं= अपूर्वोत्प्रेक्षाशून्यत्वात्त-त्वहींन प्रतिविम्बमात्रम्। तदनन्तरं= तत्पश्चाद्वर्ति, आलेख्यप्रख्यं= चित्र तुल्यं, अन्यसाम्यं, शरीरान्तरयुक्तं= पृथग्देहसमन्वितं, अपि, तुच्छात्मत्वेन= शून्यत-त्वतया, त्यक्तव्यं= परिहर्तव्यम्। तृतीयं= तुल्यदेहिवत्, तु= पूर्वोक्तभेदद्वय-

व्यतिरिक्तं, विभिन्नकमनीयशरीरसद्भावे= पृथग्वाञ्छनीयदेहास्तित्वे, सति, ससंवादं= अन्यसदृशं, अपि, काव्यवस्तु= काव्यार्थ:, कविना, न, त्यक्तव्यं= परिहार्यम्। अन्येन= अपरेण, शरीरिणा= देहिना, सदृश:= तुल्य: शरीरी= देही, एक:, एव, इति, वक्तुं= कथयितुं, न, शक्यते, हि, इति।

अस्यायमाशय:— त्रिवेधेषु भावसाम्येषु प्रथमं प्रतिविम्बतुल्यमपराभिन्नात्वत्वात्त्याज्यमेव। प्रतिविम्बं हि प्रतिच्छायामात्रमेव शरीरिणो नहि तत्र किञ्चिदप्युत्प्रेक्षणीयमपूर्वम्। द्वितीयमालेख्यप्रख्यं भिन्नशरीरमपि शून्यात्मत्त्वात्परिहार्यमेव। आलेख्ये हि शरीरिण एव सस्कारान्तरमण्डितं चित्रमयरूपम्। न हि तत्रापि किञ्चिदपूर्वम्, तृतीयं तुल्यदेहिप्रख्यं तद्धि प्रसिद्धात्मत्वेन ग्राह्यं यतस्तुल्याकृती अपि द्वे शरीरे एकत्वं नैव भजेते इति।। १३।।

इस प्रकार संवाद के स्वरूप का निर्धारण कर अब उसके विषय में कवि के कर्तव्य का निर्देश करते हैं—

उनमें से पहला अन्यसाम्य जो है वह अनन्यात्म अर्थात् दूसरे से अभिन्न आत्मा वाला होता है अत: हेय है, उसके बाद का जो अन्य साम्य है वह शून्य आत्मा वाला होता है, अत: त्याज्य ही हैं, तीसरा जो तुल्य देहिवत् अन्य साम्य है वह प्रसिद्ध आत्मा वाला होता है, अत: वैसे साम्य को कवि न छोड़े।।

कारिका के आशय का वृत्तिकार विस्तार करते हैं—

उनमें से पहला प्रतिबिम्बतुल्य काव्यवस्तु जो है वह अच्छी बुद्धिवालों के लिए त्याज्य है क्योंकि वह दूसरे से अभिन्न आत्मा वाला तथा तात्विक शरीर से शून्य होता है। उसके बाद का जो आलेख्य के तुल्य अन्य साम्य है वह दूसरे शरीर से युक्त होकर भी शून्यात्मा होने के कारण त्याज्य है, तीसरा जो है वह पहले से भिन्न ही शरीर के होने से संवाद से युक्त काव्यवस्तु कवि को छोड़ना नहीं चाहिए। दूसरे शरीरी से तुल्य भी शरीरी को एक ही कह कर कोई नहीं कह सकता।

कहने का आशय यह है कि प्रतिविम्बतुल्य अन्यसाम्य जो है वह दूसरे से एकदम अभिन्न होने से त्याज्य है। प्रतिविम्ब को केवल छाया ही होता है और उसमें अपूर्वत्य कहाँ। आलेख्यप्रख्य अन्यसाम्य में शरीर तो अलग होता है विशेष के रहने से शरीर तो अलग जैसा लगता है किन्तु आत्मा बिल्कुल नहीं रहती। तीसरा जो अन्यसाम्य है वह ग्राह्य ही है। उसमें साम्य का आभास मात्र होता है, वस्तुत: साम्य नहीं।। १३।।

ध्वन्या०— एतदेवोपपादयितुमुच्यते—

कारिका— आत्मनो (तत्वस्या) न्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि।
वस्तु भातितरां तन्व्या: शशिच्छायमिवाननम्।। ४।।

ध्वन्या०— तत्त्वस्य सारभूतस्यात्मन: सद्भावेऽन्यस्य पूर्वस्थित्यनुयाय्यपि वस्तु भातितराम्। पुराणरमणीयच्छायानुगृहीतं हि वस्तु

शरीरवत्परां शोभां पुष्णाति। न तु पुनरुक्तत्वेनावभासते। तन्व्याः शशिच्छायमिवाननम्।

लीला— इत्थमन्यसाम्यभेदानां ग्राह्याग्राह्यत्वं निरूप्य सम्प्रति तुल्यदेहिवद्भेदस्य ग्राह्यत्वप्रतिपादककारिकावतारणाय वृत्तिकृदुपक्रमते एतदित्यादिना— एतत्= तृतीयस्यान्यसाम्यस्य ग्राह्यत्वं, एव, उपपादयितुं= निरूपयितुं, उच्यते= कथ्यते—

कारिकामवतारयति आत्मनः (तत्वस्य) इत्यादि—अन्यस्य आत्मनः (तत्वस्य) सद्भावे पूर्वस्थित्यनुयापि अपि वस्तु तन्व्याः शशिच्छायं आननं इव भातितराम् इति पदव्यवस्था।

अन्यस्य= पूर्वविलक्षणस्य, आत्मनः= स्वरूपस्य, तत्वस्येति पाठे साररूपात्मनः, सद्भावे= अस्तित्वे, सति, पूर्वस्थिततत्यनुयायि= प्राचीनावस्थानु सारि पुरातनार्थसंवादि, अपि, वस्तु= अर्थः, तन्व्याः= कृशाङ्ग्याः, शशिच्छायं= इन्दुशोभं, वदनं= आननं, इव—यथा, भातितरां= नितान्तमेव शोभत इति।

कारिकां विवृणोति वृत्तिकारः तत्त्वस्येत्यादिना— अन्यस्य= पूर्वविलक्षणस्य, तत्वस्य= सारभूतस्य आत्मनः, सद्भावे= अस्तित्वे पूर्वस्थित्यनयापि= पुरातनार्थानुसारि, अपि, वस्तु, भातितराम्= शोभत एव। हि= यतः, पुराणरमणीयच्छायानुगृहीतं= पुराणा प्राङ्निबद्धा या रमणीया हृद्या छाया विच्छित्तिस्तया अनुगृहीतं मण्डितं, वस्तु= अर्थः, शरीरवत्= काय इव, परां= उत्कृष्टां, शोभां= विच्छिर्ति, पुष्यति= बृंहयति। न, तु पुनरुक्तत्वेन= पिष्टपेषणवत्पुनः प्रतिपादितरूपेण, अवभासते= द्योतत इति, तन्व्याः= कृशाङ्ग्याः शाशिच्छायं= इन्दुशोभं आननं= मुखं, इवेति।

इदमुच्यते पुरातनार्थानुसारित्वमात्रेण वस्तु त्याज्यं न भवति। यदि तथाविधेऽप्यर्थे पूर्वविलक्षणस्य तत्वस्य सद्भावस्तदा तद्विच्छित्याधिक्यायैव भवति। यथा कृशाङ्ग्याः शशिशोभं मुखं नैव निन्दितं तथैवेदमपि।। १४।।

इस प्रकार अन्यसाम्य के भेदों के ग्राह्यत्वाग्राह्यत्व का विवेचन कर अब उसके तुल्येहिवत् भेद के ग्राह्यत्व का निर्देशन करने वाली कारिका के अवतारण हेतु. वृत्तिकार उपक्रम करते हैं—

इसी को प्रतिपादित करने के लिए कहा जाता हैं—

कारिका का अवतारण करते हैं—

पहले से विलक्षण, दूसरे ही तत्व वा दूसरी ही आत्मा का सद्भाव होने पर तो पुरातन अर्थ का अनुगामी भी वस्तु कृशाङ्गी के शशी की शोभा जैसे शोभा वाले वदन की तरह अत्यन्त सुशोभित होती है।।

वृत्तिकर कारिका के आशय का विस्तार करते हैं—

दूसरे ही तत्व के अर्थात् सारभूप आत्मा के सद्भाव में तो पुरानी स्थिति का

अनुयायी भी वस्तु सुशोभित होती है। पुरानी भी रमणीय शोभा से अनुगृहीत वस्तु शरीर की तरह उत्कृष्ट शोभा को बढ़ाती है। वह पुनरुक्त के रूप में अवभासित नहीं होता। कृशाङ्गी के शशी की तरह शोभा वाले वदन की तरह।

इसका आशय यह है कि जैसे चन्द्रमा की शोभा जैसी शोभा वाला कृशाङ्गी का वदन कमनीय होता है, उसी तरह अपने पृथक् तत्त्व के रहने पर पुराने भी अर्थ के अनुसारी भी वस्तु शोभातिशय की पुष्टि करती ही है।। १४।।

ध्वन्या०— एवं तावत्ससंवादानां समुदायरूपाणां वाक्यार्थानां विभक्ताः सीमानः।

लीला— प्रकरणमुपसंहरति एवमित्यादिना— एवं= इत्थं, तावत्= साकल्येन, ससंवादानां= संवाद (सादृश्य) सहितानां, समुदायरूपाणां= समुदायत्वेन प्रबन्धयागतानां वाक्यार्थानां, सीमानः— मर्यादाः, विभक्ताः पृथग्विविच्य स्थापिता इति। अनेन वाक्यार्थसादृश्ये ग्राह्यत्वाग्राह्यत्वविवकः कृत इत्याशयः।

प्रकरण का उपसहार करते हैं—

इस प्रकार संवादों से युक्त समुदाय रूप वाक्यार्थों की अर्थात् वाक्यार्थ से से सम्बद्ध सादृश्यों की सीमायें विभक्त की गई। अर्थात् वाक्यार्थसादृश्य में ग्राह्यत्वाग्राह्यत्व का विचार किया गया।

ध्वन्या०— पदार्थरूपाणां च वस्त्वन्तरसदृशानां काव्यवस्तूनां नास्त्येव दोषा इति प्रतिपादयितुमुच्यते—

कारिका— अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी।
नूतने स्फुरति काव्यवस्तुनि व्यक्तमेव खलु सा न दुष्यति।।१५।।

ध्वन्या०— न हि वाचस्पतिनाप्यक्षराणि पदानि वा कानि चिदपूर्वाणिघटयितुं शक्यन्ते। तानि तु तान्येवोपनिबद्धानि न काव्यादिषु नवतां विरुध्यन्ति। तथैव पदार्थरूपाणि श्लेषादिमयान्यर्थतत्वानि।

लीला— इत्थं वाच्यार्थसादृश्ये ग्राह्यत्वाग्राह्यत्वं विविच्य सम्प्रति पदार्थसादृश्ये तद्विवेचककारिकावतारणाय वृत्तिकृदुपक्रमते पदार्थेत्यादिनापदार्थरूपाणां= पदार्थस्तराणां, वस्त्वन्तरसदृशानां= अन्यार्थतुल्यानां काव्यवस्तूनां= काव्यार्थानां दोषः, नास्त्येव इति= इत्थं, प्रतिपादयितुं निरूपयितुं उच्यते= कथ्यत इति।

कारिकामवतारयति अक्षरेत्यादिना— यत्र नूतने काव्यवस्तुनि स्फुरति अक्षरादिरचना इव पुरातनी वस्तुरचना योज्यते सा व्यक्तं एव न दुष्यति खलु इति पदव्यवस्था।

यत्त= यस्मिन् काव्ये, नूतने= नवार्थमण्डिते, काव्यवस्तुनि= काव्यार्थे, स्फुरति=चमत्कारावहे सति, अक्षरादिरचना= वर्णपदसङ्घटना, इव, पुरातनी=

पुराणी, वस्तुरचना= अर्थविन्यासः, योज्यते= निबध्यते, सा= तादृशी संयोजना, व्यक्तं= स्पष्टम्, एव, न, दुष्यति= दोषाय भवतीति।

कारिकां विवृणोति वृत्तिकारः न हि इत्यादिना— वाचस्पतिना= बृहस्पतिना, अपि= किमुतान्यैः, अपूर्वाणि= अनुरातनानि, कानिचित्= कतिपयान्यपि किमुत सर्वाणि तु, अक्षराणि= वर्णाः, पदानि, च घटयितुं= योजयितुं, न= नैव, शक्यन्ते= पार्यन्ते, हि। तानि= अक्षराणि पदानि तु, तानि= पूर्वप्रयुक्तानि, एव, काव्यादिषु= प्रबन्धादौ, उपनिबद्धानि= संयोजितानि; नवतां= नूतनत्वं, न= नैव, विरुध्यन्ति,। तथैव= एवमेव पदार्थरुपाणि= पदार्थस्वरूपत्वेन गृहीतानि, श्लेषादिमयानि= श्लेषादिधर्मयुतानि, अर्थतत्वानि= वस्तुजातानि न विरुध्यन्तीति।

अस्यायमाशयः— अभिनवत्वेन स्फुरद्वस्तुनि काव्ये पुरातन्यपि वस्तुसंयोजना वर्णा इव, न दोषाय भवन्ति। यथा पुरातनान्येवाक्षराणि प्रयुक्तनि न दुष्यन्ति तथैव श्लेषाद्यलङ्कारधर्मयुतान्यर्थजातानि पदार्थपाण्यपि। श्लेषघटनाया मुपमादौ च पुरातना अपि शब्दा अभिनवत्वमावहन्ति यथा हरिद्विजप्रभृतिशब्दा श्लेषे चन्द्रकमलादिशब्दा उपमायामिति।। १५।।

इस प्रकार वाक्यार्थसादृश्य में ग्राह्यत्वाग्राह्यत्व का विवेचन कर अब पदार्थसादृश्य में भी उसका विवेचन करने वाली कारिका के अवतारण हेतु वृत्तिकार उपक्रम करते हैं—

पदार्थ रूप दूसरी वस्तु के सदृश काव्यवस्तुओं का दोष न होने का प्रतिपादन करने के लिए कहा जाता है—

कारिका का अवतारण करते हैं—

जिस काव्य में अभिनव काव्यार्थ के स्फुरित होता है वहाँ अक्षरादि की रचना की तरह पुरानी वस्तुरचना भी स्पष्ट रूप से दूषित नहीं होती।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

वृहस्पति के द्वारा भी अपूर्व थोड़े भी अक्षर वा पद घटित किए नहीं जा सकते। वे तो वे ही उपनिबद्ध भी काव्य में नवत्व के विरुद्ध नहीं होते। उसी तरह पदार्थ रूप श्लेष आदि के रूप अर्थतत्त्व भी पुराने ही प्रयुक्त भी दूषित नहीं होते।। १५।।

ध्वन्या०— तस्मात्—

कारिका— यदपि तदपि रम्यं यत्र लोकस्य किञ्चित्—
स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते।
अनुगतमपि पूर्वच्छायया वस्तु तादृक्
सुकविरूपनिबध्यन् निन्द्यतां नोपयाति।।१६।।

ध्वन्या०— स्फुरणेयं काचिदिति सहृदयानां चमत्कृतिरुत्पद्यते। तदनुगतमपि पूर्वच्छायया वस्तु तादृक्तादृक्षं सुकविर्विक्षितव्य— ह्नवा-

च्यार्थसमर्पणसमर्थशब्दरचनारूपया बन्धच्छाययोपनिबध्नन् निन्द्यतां नैव याति।

लीला— अन्यसाम्यस्य ग्राह्यत्वाग्राह्यत्वविवेचनसारभूतकारिकावतारणाय वृत्तिकृदुपक्रमते तस्मादित्यादिना—तस्मात्= तद्धेतोः,

कारिकामवतारयति वृत्तिकारो यदपीत्यादिना—यत्र लोकस्य इदं किञ्चित्, स्फुरितम् इति इयं बुद्धिः लोकस्य उज्जिहीते तादृग् यदपि तदपि रम्यं पूर्वच्छायया अनुगत अपि वस्तु उपनिबध्यन् सुकविः निन्द्यतां न उपयाति इति पदव्यवस्था।

यत्र= यस्मिन् काव्यार्थे, लोकस्य= सहृदयजनस्य, इदं= वस्तु, किञ्चित्= मनागपि, स्फुरितं= चमत्कारकारि, इति= इत्थं, इयं= एतादृशी, बुद्धिः= मतिः, अभ्युज्जिहीते= उदेति, तादृक्= तादृशं, यदपि तदपि= यत्किञ्चिदपि, पूर्वच्छायया= पुरातनशोभया, अनुगतं= अनुसृतं, अपि, रम्यं= कमनीयं, वस्तु= अर्थजातं, उपनिबध्नन्= संयोजनयन्, सुकविः, निन्द्यतां= भावहारकत्वेनोपहास्यतां, न नैव, उपयाति= प्राप्नोति इति।

कारिकां विवृणोति वृत्तिकारः स्फुरणेत्यादिना— इयं= एषा, काचित् स्फुरणा, इति, सहृदयानां हृदये, चमत्कृतिः, उत्पद्यत इति।

तत्= तादृशं पूर्वच्छायया= पुरातनशोभया, अनुगतं= अनुसृतं, अपि तादृक्= तादृश, तादृक्षं= तथाविधं वस्तु= अर्थजातं विविक्षितव्यङ्ग्यवाच्यार्थसमर्पणसमर्थशब्दरचनारूपया= विवक्षितो वक्तुमभीष्टो व्यङ्ग्यः प्रतीयमानरूपोऽर्थो यस्य तादृशो यो वाच्योऽभिधेयरूपश्चार्थो वस्तु तस्य समर्पणे प्रतिपादने समर्थस्य शक्तस्य शब्दस्य रचना गुम्फन सैव रूपं यस्याः सा तया, तादृश्या, बन्धच्छामया= रचनासौष्ठवेन, उपनिबध्नन्= संयोजयन्, सुकविः, निन्द्यतां= वाच्यतां, नैव, यातीति।

अत्रेदमुच्यते— यत्र हि वस्तुजाते सहृदयचतत्कारकारित्वेन किञ्चिदपि स्फुरितं प्रतीयते तादृशं कमनीयं यत्किञ्चिदपि पुरातनमपि वस्तु विवक्षितप्रतीयमानार्थव्यञ्जनपरवाच्यार्थप्रतिपादनशक्तशब्दसंरचनारूपेण बन्धसौष्ठवेन संयोजयन् कविर्नैव वाच्यो भवतीति।।१६।।

अन्यसाम्य के ग्राह्यत्वाग्राह्यत्व की विवेचना के सारभूत कारिका के अवतारण हेतु वृत्तिकार उपक्रम करते है—

उस हेतु—

कारिका का अवातरण करते हैं—

''जहाँ सहृदय की यह कुछ स्फुरित है'' इस प्रकार की ऐसी बुद्धि उत्पन्न होती है वैसी जो कुछ भी रमणीय, पूर्वशोभा से ही अनुगत भी वस्तु का संयोजन करता हुआ कवि निन्दा का विषय नहीं होता।

वृत्तिकार कारिका के आशय का विस्तार करते हैं—

'यह कोई स्फुरण है अतः सहृदयों में चमत्कार उत्पन्न होता है।

पूर्व शोभा से अनुगत भी उस प्रकार की वस्तु विवक्षित है व्यङ्ग्य अर्थ जिसका ऐसा जो वाच्यार्थ है उसके प्रतिपादन में समर्थ शब्द के रचना रूप बन्ध की शोभा से संयोजित करता हुआ कवि निन्दनीय नहीं होता।। १६।।

ध्वन्या०— तदित्थं स्थितम्—

प्रतायन्तां वाचो निमितविविधार्थामृतरसा।
न सादः कर्तव्यः कविभिरनवद्ये स्वविषये।।
परस्वादानेच्छाविरतमनसो वस्तु सुकवेः।
सरस्वत्येवैषा घटयति यथेष्टं भगवती।।

सन्ति नवाः काव्यार्थाः परोपनिबद्धार्थविरचनेन कश्चित्कवेर्गुण इति भावयित्वा। परस्वादानेच्छाविरतमनसः सुकवेः सरस्वत्येषा भगवती यथेष्टं घटयति वस्तु। येषां सुकवीनां प्राक्तनपुण्याभ्यासपरिपाकवशेन प्रवृत्तिस्तेषां परोपरचितार्थपरिग्रहनिस्पृहाणां स्वव्यापारो न क्वचिदुपयुज्यते ! सैव भगवती सरस्वती स्वयमभिमतमर्थमाविर्भावयति। एतदेव हि महाकवित्वं महाकवीनामित्योम्।। १७।।

लीला— सम्प्रति प्रबन्धोसंहाररूपकारिकावतारणाय वृत्तिकृदुपक्रमते तदित्यादिना— तत्= तस्मात्, इत्थं= वक्ष्यमाणवचनं, स्थितं= नियतम्।

कारिकामवतारयति प्रतायन्तामित्यादिना—कविभिः निमितविविधार्थामृतरसा वाचः प्रतान्तां, अनवद्ये स्वविषये सादः न कर्तव्यः परस्वादानेच्छाविरतमनसः सुकवेः यथेष्टं वस्तु एषा भगवती सरस्वती एव घटयति इति पदव्यवस्था।

कविभिः, निमितविविधार्थामृतरसा= निमितास्तुलिता विविधानामनेकेषामर्थानाममृतमिव रसा याभिस्ताः तथाविधाः, वाचः= वचांसि काव्यमित्याशयः प्रतायन्तां= सविस्तारं निबध्यन्तां, अनवद्ये= निर्दोषे, स्वविषये= स्वसंयोज्यमानकाव्यवस्तुनि, सादः= इदं तदा नैव स्फुरितमिति विषादः= नैव कर्तव्यः, यतः परास्वादानेच्छाविरतमनसः= परस्वस्य परकीयकाव्यार्थस्य यदादानं ग्रहणं तस्य या इच्छा स्पृहा तस्याः विरतं निवृत्तं मनश्चेतो यस्य तस्य सुकवेः, यथेष्टं= यथाभिवाञ्छितं, वस्तु एषा= सर्ववन्द्या भगवती, सरस्वती= भारती= वाग्देवता, एव घटयति= आविर्भावयतीति।

कारिकाया उत्तरभागं विवृणोति वृत्तिकारः सन्तोत्यादिना नवाः= नूतनाः काव्यार्थाः= काव्यविषयाः सन्ति= विद्यन्ते, परोपनिबद्धार्थविरचने= परेण उपनिबद्धो योऽर्थस्तस्य विरचने, कवेः, न कश्चिद् गुणः, इति, भावयित्वा= सम्यग् विचिन्त्य परस्वादानेच्छा विरतमनसः= परधनग्रहणस्पृहानिवृत्तचेतससुकवेः, एषा, सरस्वती, भगवती, वस्तु, यथेष्टं, घटयति= संयोजयति इति।

येषां, सुकवीनां, प्राक्तनपुण्याभ्यासपरिपाकवशेन= प्राक्तनं पौर्वदैहिकं यत्पुण्यं सुकृतं तस्याभ्यासस्य पौनः पुन्येन प्रवृत्तेः परिपाकस्य परिणामस्य वशेन, काव्ये, प्रवृत्तिः परोपरचितार्थपरिग्रहनिःस्पृहाणां= परैः स्वेतरैरुपरचिता निबद्धायेऽर्थास्तेषां परिग्रहे स्वीकरणे निःस्पृहाणां निरुत्सुकानां तेषां, स्वव्यापारः= निजप्रयासः, क्वचित्, न, उपयुज्यते= प्रयुक्तो भवति। सा= बुद्धिरूपा भगवती, सरस्वती, स्वयमेव अभिमतं= समभिलषितं, अर्थं, आविर्भावयति= प्रकटयति। एतद्= स्वतो विषयस्फुरणं, एव, हि महाकवीनां, महाकवित्वम्। इति इति कारिकासमाप्तौ। ओमिति ग्रन्थान्ते मङ्गलनिमित्तकः।। १७।।

इतीत्थं कारिकाभागो ध्वन्यालोकस्य विस्तृतः।
व्याख्यातो लोकमणिना काव्यतत्वविवेचकः।।

ग्रन्थ के उपसंहार का निर्देश करनेवाली कारिका के अवतारण के लिए वृत्तिकार उपक्रम करते हैं— यह इस प्रकार नियत है।

कवि सामा लिया है अमृतरस के तुल्य विविध अर्थ जिन्होंने वा निरूपित किया है विविध अर्थरूप अमृत जैसे रस जिन्होंने ऐसी वाणियाँ बेधड़क विस्तारित करें। उनहें अपने निर्दोष विषय में कोई भी विषाद नहीं करना चाहिए। दूसरे के द्वारा उपनिबद्ध अर्थ को लेने से विरत है मन जिसका ऐसे कवि के लिए यथेष्ट वस्तु स्वयं यह भगवती सरस्वती ही जुटा देती हैं।

वृत्तिकार कारिका के उत्तरभाग की व्याख्या करते हैं—

नये नये काव्यार्थ हैं ही, दूसरों के द्वारा उपनिबद्ध अर्थ की रचना में कवि का कोई गुण नहीं है, ऐसा सोचकर दूसरे के अर्थ का आदान करने की इच्छा से विरत मन वाले कवि को यह भगवती सरस्वती ही यथेष्ट वस्तु जुटा देती हैं।

जिन कवियों को प्राक्तन के पुण्य के अभ्यास के परिणामवश काव्य में प्रवृत्ति है, दूसरों के द्वारा उपरचित अर्थ को लेने में रुचि न रखने वाले उनका काव्य के लिए अपना व्यापार कहीं भी आवश्यक नहीं हे। स्वयं यह भगवती सरस्वती ही अभिमत अर्थों का आविर्भाव कर देती हैं यही ही महाकवियों का महाकवित्व है। यह ग्रन्थ यहीं समाप्त होता है। यह ग्रन्थ सबके लिए मङ्गलयम हो।

इसका मुख्य आशय यह है कि कवि को बेधड़क काव्य रचना में लगना चाहिए और अपने दोषहीन विषय में कभी कहीं कुछ छूट भी जाय या अन्यथा हो भी जाय तो भी उसमें अवसाद नहीं करना चाहिए क्योंकि दूसरों के द्वारा संगृहीत अर्थ को लेने से कतराने वाले कवि के लिए स्वयं भगवती सरस्वती ही यथेष्ट वस्तु जुटा देती है।। १७।।

ध्वन्या०— इत्यक्लिष्टरसाश्रयोचितगुणालङ्कारशोभाभृतो,
यस्माद्वस्तु समीहितं सुकृतिभिः सर्वं समासाद्यते।
काव्याख्येऽखिलसौख्याधाम्नि विबुधोद्याने ध्वनिर्दर्शितः
सोऽयं कल्पतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम्।

सत्काव्यतत्वनयवर्त्म चिरप्रसुप्तकल्पं मनस्सु परिपक्वधियां यदासीत्।

तद्व्याकरोत्सहृदयोदयलाभहेतोरानन्दवर्धन इति प्रथिताभिधानः।

इति राजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके चतुर्थ उद्योतः।

समाप्तोऽयं ग्रन्थः।

लीला– स्वप्रणीतं वृत्तिग्रन्थमुपसंजिहीर्षुर्वृत्तिकारस्तदन्ते चाशीर्वादात्मकमङ्गलनिबन्धनपुरःसरं स्वनामकीर्तनञ्च करोति इत्यक्लिष्टेत्यादि पद्यद्वयन।

इत्यक्लिष्टेत्यादि– इति अक्लिष्टरसाश्रयोचितगुणालङ्कारशोभाभृतः यस्मात् सुकृतिभिः समीहितं सर्वं वस्तु समासाद्यते तस्मिन् काव्याऽऽख्ये अखिलसौख्यधाम्नि विबुधोद्याने कल्पतरूपमानमहिमा ध्वनिः दर्शितः सः अयं भव्यात्मनां भोग्यः अस्तु इति पदव्यवस्था।

इति= इत्थं, अक्लिष्टरसाश्रयोचितगुणालङ्कारशोभाभृतः= अक्लिष्टा हृद्याः रसानां शृङ्गारादीनामाश्रयेणालम्बनेनोचिता ग्राह्या ये गुणा माधुर्यादयोऽलङ्कारा उपमादयस्तेषां शोभा विच्छितिं बिभर्ति धारयति इति तस्मात्, तादृशात्, यस्मात्= काव्योद्यानात्, सुकृतिभिः= सुधीभिः पुण्यात्मभिः, समीहित= काङ्क्षितं, सर्वं= निखिलं, एव, वस्तु= अर्थजातं, सामासाद्यते= प्राप्यते, तादृशे, काव्याऽऽख्ये= काव्यसञ्ज्ञिते, अखिलसौख्धाम्नि= निःशेषप्रीत्याश्रयभूते, विबुधोद्याने= विबुधा एव विबुधास्तेषामुद्याने वाटिकायां, कल्पतरूपमानमहिमा= कल्पवृक्षतुल्यप्रभावः, ध्वनिः, दर्शितः, सः= तादृशः, अयं= ध्वनिः, भव्यात्मानां उदारचेतसां, भोग्यः= समास्वाद्यः, अस्तु= कल्पतामिति। सत्काव्येत्यादि परिपक्यधियां मनःसु यत् सत्काव्यतत्वनयवर्त्म चिरप्रसुप्तकल्पं आसीत् तत् सहृदयोदयलाभहेतोः, आनन्दवर्धन इति प्रथिताभिधानः व्याकरोत् इति पदव्यवस्था।

परिपक्वधियां= पौढबुद्धीना सहृदयानां, मनःसु= चेतःसु, यत् सत्काव्यतत्वनयवर्त्म= सत्काव्यस्य यत् तत्वं परमरहस्यं ध्वनिस्तस्य नयवर्त्म न्यायमार्गो युक्तिजातः चिरप्रसुप्तकल्पं= 'चिरं चिरकालादरभ्य प्रसुप्तकल्पं निद्रिततुल्यं स्फुटत्वेनाप्रकाशितम्, आसीत्, तत्= तदेव ध्वनितत्वं, सहृदयोदयलाभहेतोः= सहृदयानां रसिकानामुदय उत्कर्षो लाभो हितं च तद्धेतोः सहृदयानामुदयस्य प्रीतेर्लभस्य हेतोः, आनन्दवर्धनः, इति= तदाख्यः, प्रथिताभिधानं= प्रख्यातनामा, विपश्चित्–व्याकरोत्= विशदं कृतवान् इति सम्बन्धाभिधेयप्रयोजनोपसंहारः।।

अथात्राचार्यत्वाच्चन्द्रिकाकारो वन्द्यते लोचनकारः स्मर्यते भावक्लिन्नहृदा–

आनन्दवर्धनविवेकविकासि–काव्यालोकार्थतत्वघटनादनुमेयसारम्।

यत्प्रोन्मिषत्सकलसद्विषयप्रकाशि व्यापार्यताभिनवगुप्तविलोचनं तत्।।

इति। बदरीनाथश्च—

'कालेन चन्द्रिकायामस्तमितायां च लोचने शीर्णे।
आकलयितुमालोकं दीधितिमुदीक्षतुतद् विततान्।'

इति। एवञ्च—

ध्वन्यालोकस्य सिद्धान्ता दुर्व्याख्यानतमोवृताः।
प्राप्य दीपशिखालोकं पुनरद्य प्रकाशिताः।।
इति चण्डिकाप्रसादश्च,
प्रौढं क्व लोचनं क्वाहं मन्दधीर्बहुधाऽत्र तत्।
इति श्रीरामपारकोऽपि।

ततश्च—

सर्वेषां साररूपेण ललाव्याख्या विराजते।
प्रणीता लोकमणिना जैनराकेशसंस्तुतेः।
यदुनुक्तं दुरुक्तं वा कारिकायामुपेक्षितम्।
उदाहरणवृत्तिभ्यां ध्वन्यालोके तदीरितम्।।
ध्वन्यालोके यदस्पष्टं यन्न चन्द्रिकयाऽऽदृतम्।
तत्सर्वं प्रतिपात्याऽथो लोचनेन प्रकाशितम्।
कालक्रमेण तच्चाभूत्कठिनं ज्ञानवैक्लवात्।
व्यधाद्बालप्रियाकारः सरलीकरणे श्रमः।
दीधित्या तत्सरलितं तारावत्याऽतितानितम्।
आलोकदीपिका चाथो ध्वन्यालोकप्रकाशिका।
भाति दीपशिखा चात्र रात्रौ दीपशिखा यथा।
सर्वेषां साररूपेण लीला लीलायते कृतौ।
यथा लीलायते लीला हृदयेऽहर्निशं मम।
पाठकेषु भवेत्तद्वत्तदाख्या विवृतिः सदा।
श्रीलोकमणिरचिते ध्वन्यालोकस्य टिप्पने।
पूर्णोऽभूदन्तिमोद्द्योतोः वाच्यरूपविवेचकः।

इति श्रीवत्सगोत्रीयविप्रकुलावतंसपरशुरामात्मज—
विष्णुमायोद्भवपरमशैवनेपालाभिजनलोकमणिदाहाल—
विरचितायां लीलाऽऽख्यायां सलोचनध्वन्यालोककाव्या—
लोकविवृतौ वाच्यस्वरूपनिरूपणो नामश्चतुर्थ
उद्योतः।
समाप्तोऽयं ग्रन्थः।

अब अपने द्वारा प्रणीत वृत्तिग्रन्थ का उपसंहार करते हुए वृत्तिकार अन्त्य में

आशीर्वादरूप मङ्गले के उपनिबन्धन के साथ साथ अपने नाम का भी कीर्तन करते हैं—

इस प्रकार अक्लिष्ट रस के आश्रय से उचित गुण और अलङ्कार की शोभा को धारण करने वाले जिससे सुकृतियों के द्वारा वाञ्छित सभी वस्तु प्राप्त कर ली जा सकती है, उस काव्य नामक समस्त सौख्य का एकायतन विद्वानों के उद्यान में कल्पवृक्ष के साथ उपमा देने लायक है महिमा जिसकी ऐसी जो ध्वनि दिखलाई गई वह भव्य आत्मा वालों के उपभोग के लिए योग्य बने।

सत्काव्य के तत्व का यह नीतिमार्ग, जो कि परिपक्व बुद्धिवालों के मन में बहुत दिनों से सोया हुआ जैसा था उसकी 'आनन्दवर्धन' से प्रसिद्ध नाम वाले ने सहृदयों की प्रीति के लाभ हेतु व्याख्या की।

इस तरह राजानक आनन्दवर्धनाचार्य के द्वारा विरचित ध्वन्यालोक के चतुर्थ उद्योत समाप्त हुआ।

इस तरह यह ग्रन्थ समाप्त हुआ।

....

# ध्वन्यालोकस्य

## मूलकारिकाः

### काव्यालोकाख्याः

#### प्रथम उद्योतः

'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।
केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्।। १।।
अर्थः सहृदयः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ।। २।।
तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः।
बहुधा व्याकृतः सोऽन्यैः काव्यलक्ष्मविधायिभिः।। ३।।
प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।४।।
काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः।। ५।।
सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति प्रतिस्फुरन्तं प्रतिभाविशेषम्।।६।।
शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम्।। ७।।
सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः।। ८।।

आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः।। ९।।
यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।
वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्यवस्तुनः।
स्वसामर्थ्यवशेनैव वाक्यार्थः प्रथयन्नपि
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते।। ११।।
तद्वत्सचेतसा सोऽर्थो वाच्यार्थविमुखात्मनाम्।
बुद्धौ तत्त्वार्थदर्शिन्या त्रुटित्येवावभासते।। १२।।
यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।१३।।
व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः।
समासोक्त्यादयस्तत्र वाच्यालङ्कृतयः स्फुटाः।। १४।।
व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते।। १५।।
तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रति स्थितौ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः।। १६।।
भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।
अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया।। १७।।
उक्त्यन्तरेणाशक्यं यत्तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयो भवेत्।।१८।।
रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः।। १९।।
मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम्।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः।। २०।।
वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्।। २१।।
कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम्।
लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः।। २२।।

## द्वितीय उद्योतः

अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम्।। १।।

असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितः परः।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः।। २।।
रसभावतदाभासतत्प्रशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः।। ३।।
वाच्यवाचकचारुत्वहेतुनां विविधात्मनाम्।
रसादिपरता यत्र स ध्वनेर्विषयो मतः।। ४।।
प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः।। ५।।
रसभावादितात्पर्यमाक्षिप्य विनिवेशनम्।
अलङ्कृतीनां सर्वासामालङ्करत्वसाधनम्।। ६।।
तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्।। ७।।
शृङ्गार एव मधुरः परः प्रह्लादनो रसः।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति।। ८।।
शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्।
माधुर्याद्रता याति यतस्तत्राधिकं मनः।। ९।।
रौद्रदयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः।
तद्व्यक्तिहेतु शब्दार्थावाश्रित्योजो व्यवस्थितम्।। १०।।
समर्पकत्वं काव्यस्य यत्तु सर्वरसान्प्रति।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः।। ११।।
श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः।। १२।।
तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये।
तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने।।१३।।
दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम्।
बुद्धिरसादितालोका सर्वत्रैव भविष्यति।। १४।।
शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धनात्।
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः।। १५।।
ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धम्।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः।। १६।।
रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत्।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः।। १७।।

ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलङ्कारवर्ग एति यथार्थताम्।। १८।।
विवक्षातत्परत्वेन नाङ्गित्वेन कथञ्चन।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता।। १९।।
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणत्।
रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम्।।२०।।
क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः।
शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः।। २१।।
आक्षिप्त एवालङ्कार शब्दशक्त्या प्रकाशते।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः।। २२।।
अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः सम्प्रकाशते।
यस्तात्पर्येण वस्त्वन्यद्व्यनक्त्युक्तिं विना स्वतः।। २३।।
शब्दार्थशक्त्या वाक्षिप्तो व्यङ्ग्योऽर्थः कविना पुनः।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः।। २४।।
प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः।। २५।।
अर्थशक्तेरलङ्कारो यत्राप्यन्यः प्रतीयते।
अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः।। २६।।
रूपकादिरलङ्कारवर्गो यो वाच्यतां श्रितः।
स सर्वो गम्यमानत्वं बिभ्रद् भूम्ना प्रदर्शितः।। २७।।
अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते।
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः।। २८।।
शरीरीकरणं येषां वाच्यत्वेन व्यवस्थितम्।
तेऽलङ्कारा परां छायां यान्ति ध्वन्यङ्गतां गताः।। २९।।
व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा।
ध्रुवं ध्वन्यङ्गतां तासां काव्यवृत्तेस्दाश्रयात्।। ३०।।
अलङ्कारान्तरव्यङ्ग्यभावे ध्वन्यङ्गता भवेत्।
चारुत्वोत्कर्षता व्यङ्ग्याप्राधान्यं यदि लक्ष्यते।। ३१।।
यत्र प्रतीयमानोऽर्थः प्रक्लिष्टत्वेन भासते।
वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः।। ३२।।
अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः।
शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः।। ३३।।

सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम्।
यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम्।। ३४।।

## तृतीय उद्योत:

अविवक्षितवाच्यस्य पदवाक्यप्रकाशता।
तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वने।। १।।
यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु।
वाक्ये सङ्घटनायां च स प्रबन्धेऽपि दीप्यते।। २।।
शषौ सरेफसंयोगौ ढकारश्चापि भूयसा।
विरोधिन: स्यु: शृङ्गारे तेन वर्णा रसच्युत:।। ३।।
त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा।
तदा तं दीपयन्त्येव तेन वर्णा रसच्युत:।। ४।।
असमासा समासेव मध्यमेव च भूषिता।
तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता।। ५।।
गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन्व्यनक्ति सा।
रसस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययो:।। ६।।
विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति।
काव्यप्रभेदाश्रयत: स्थिता भेदवती हि सा।। ७।।
एतद्यथोक्तमौचित्यमेव तस्यां नियामकम्।
सर्वत्र गद्यबन्धेऽपि च्छन्दोनियमवर्जिते।। ८।।
रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।
रचना विषयापेक्षं तत्तु किञ्चिद्विभेदवत्।। ९।।
विभावभावानुभावसञ्चार्यौचित्यचारुण:।
विधि: कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा।।१०।।
इति वृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम्।
उत्प्रेक्ष्योऽप्यन्तराभीष्टरसोचितकथोन्नय:।।११।।
सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया।। १२।।
उद्दीपनप्रशमने यथावसरमन्तरा।
रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिन:।। १३।।

अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम्।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम्।। १४।।
अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः।
ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित्।। १५।।
सुप्तिङ्वचनसम्बन्धैस्तथा कारकशक्तिभिः।
कृत्तद्धितसमासैश्चो द्योत्योऽलक्ष्यक्रमः क्वचित्।। १६।।
प्रबन्धेमुक्तके वापि रसादीन्बन्द्धुमिच्छता।
यत्नः कार्यः सुमतिना परिहारे विरोधिनाम्।। १७।।
विरोधिरससम्बन्धिविभावादिपरिग्रहः।
विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम्।। १८।।
अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्।
परिपोषं गतस्यापि पौनः पुन्येन दीपनम्।
रसस्य स्याद्विरोधाय वृत्त्यनौचित्यमेव च।। १९।।
विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम्।
बाच्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला।। २०।।
प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने।
एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता।। २१।।
रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः।
नोपहन्त्याङ्गितां सोऽस्य स्थायित्वेनावभासिनः।। २२।।
कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते।
तथा रसस्यापि विधौ विरोधी नैव विद्यते।। २३।।
अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे।
परिपोषं न नेतव्यस्तथा स्यादविरोधिता।। २४।।
विरोधैकाश्रयो यस्तु विरोधी स्थानिनो भवेत्।
स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता।। २५।।
एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान्।
रसान्तरव्यवधिना रसो व्यङ्ग्यः (न्यस्यः) सुमेधसा।। २६।।
रसान्तरान्तरितयोरेकवाक्यस्थयोरपि।
निवर्तते हि रसयोः समावेशे विरोधिता।। २७।।
विरोधमविरोधं च सर्वत्रेत्थं निरूपयेत्।
विशेषतस्तु शृङ्गारे सुकुमारतरो ह्यसौ।। २८।।

अवधानातिशयवान् रसे तत्रैव सत्कविः।
भवेत् तस्मिन्प्रभेदो हि झगित्येवोपलक्ष्यते।। २९।।
विनेयानुन्मुखीकर्तुं हि झगित्येवोपलक्ष्यते।
तद्विरुद्धरसस्पर्शस्तरङ्गानां न दुष्यति।। ३०।।
विज्ञायेत्थं रसादीनामविरोधविरोधयोः।
विषयं सुकविः काव्यं कुर्वनमुह्यति न क्वचित्।। ३१।।
वाच्यानां वाचकानां न यदौचित्येन योजनम्।
रसादिविषयेणैतत्कर्म मुख्यं महाकवेः।। ३२।।
रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।
औचित्यवान्यस्ता एता वृत्तयो विविधाः स्मृताः।। ३३।।
बिमतिविषयो य आसीन्मनीषिणां सततमविदितसतत्त्वः।
ध्वनिसंज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम्।। ३४।।
प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवत्।। ३५।।
प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः।
ये च तेषु प्रकारोऽयमेव योजः सुमेधसा।। ३६।।
वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशानुगमे सति।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते।। ३७।।
मुख्या महाकविगिरामलङ्कृतिभृतामपि।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्।। ३८।।
अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता।। ३९।।
प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते।
विधातव्या सहृदयैर्न तत्र ध्वनियोजना।। ४०।।
प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः।। ४१।।
प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैव व्यवस्थिते।
काव्ये उभे ततोऽन्यद्यत्तच्चित्रमभिधीयते।। ४२।।
चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्।। ४३।।
सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदै स्वैः।
सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा।। ४४।।

एवं ध्वनेः प्रभेदाः प्रभेदभेदाश्च केन शक्यन्ते।
संख्यातुं दिङ्मात्रं तेषाभिदमुक्तमस्माभिः।। ४५।।
इत्युक्तलक्षणो यो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः।
सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः।। ४६।।
अस्फुटस्फुरितं काव्यतत्त्वमेतद्यथोदितम्।
अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः।। ४७।।
शब्दतत्त्वश्च याः काश्चिदर्थतत्त्वयुजोऽपराः।
वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन्काव्यलक्षणे।। ४८।।

## चतुर्थ उद्योत

ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः।
अनेनानन्त्यमायाति कवीनां प्रतिभागुणः।। १।।
अतो ह्यन्यतमेनापि प्रकारेण विभूषिता।
वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि।। २।।
दिशानयानुसर्तव्यो रसादिबहुविस्तरः।
मितोऽप्यनन्ततां प्राप्तः काव्यमार्गो यदाश्रयात्।। ३।।
दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः।। ४।।
व्यङ्ग्यव्यञ्जकभावेऽस्मान्विविधे सम्भवत्यपि।
रसादिमय एकस्मिन्कविः स्यादवधानवान्।। ५।।
ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात्।
न काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभागुणः।। ६।।
अवस्थादेशकालादिविशेषैरपि जायते।
आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः।। ७।।
अवस्थादिविभिन्नानां वाच्यानां विनिबन्धनम्।
भूम्नैव दृश्यते लक्ष्ये न तच्छक्यमपोहितुम्।। ८।।
रसभावादिसम्बद्धा यद्यौचित्यानुसारिणी।
अन्वीयते वस्तुगतिर्देशकालादिभेदिनी।। ९।।
वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः।
निबद्धापि क्षयं नैति प्रकृतिर्जगतामिव।। १०।।
संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम्।
नैकरूपतया सर्वे ते मन्तव्या विपश्चिता।। ११।।

संवादो ह्यन्यसादृश्यं तत्पुनः प्रतिबिम्बवत्।
आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम्।। १२।।
तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम्।
तृतीयं तु प्रसिद्धात्म नान्यसाम्यं व्यजेत्कविः।। १३।।
तत्त्वस्यान्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि।
वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम्।। १४।।
अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी।
नूतने स्फुरति का यवस्तुति व्यक्तमेव खलु सा न दुष्यति।।१५।।
यदपि तदपि रम्यं यत्र लोकस्य किञ्चित्
स्फुरितमिदमितीयं बुद्धिप्युज्जिहीते।
अनुगतमपि पूर्वच्छायया वस्तु तादृक्
सुकविरुपनिबध्नन्निन्द्यतां नोपयाति।। १६।।
प्रतायन्तां वाचो निमितविविधार्थामृतरसा
न वादः कर्तव्यः कविभिरनवद्ये स्वविषये
परस्वादानेच्छाविरतमनसो वस्तु सुकवेः
सरस्वत्येवैषा घटयति यथेष्टं भगवती।। १७।।

समाप्त



# (१) लीलामण्डितस्य सध्वन्यालोकस्य काव्यालोकस्य कारिकानुक्रमणिका

## (२) लीलानुगतध्वन्यालोकस्थपरिकरश्लोकानुक्रमणिका



❑

## (३) लीलानुगतध्वन्यालोकस्थोदाहरणानुक्रमणिका

